ननु जीवानां लक्ष्म्याश्च सत्वात् कथमेक आसीत् इत्युक्तमित्यत आह— **संशान्तेति** ।। संशान्ता विलीना संवित् ज्ञानं यस्य तत् सुप्तं जगज्जठरे निधायेति । अनेन 'नान्यत्किञ्चन मिषत्' इति श्रुतिर्व्याख्याता भवति । मिषच्छब्दार्थः ऐतरेयभाष्ये—[1]"तदेव मिषणं नाम सद्रूपं मिनुते यत' इति । मिनुते सद्येन मीयते सत् येन वा तन्मिषदन्यदमिषत् । तेन सज्जगदादिज्ञानाभावात् सुप्तं जगदिति भावः। मुक्तानां लक्ष्म्याः सुप्त्यभावात् कथमुक्तं संशान्तेत्यत आह— **लक्ष्मीभुजान्तरगता यस्येति** ।। तेन लक्ष्म्याः पराधीनत्वेन विद्यमानमपि ज्ञानमविद्यमानमेवेति बोध्यम् । लक्ष्म्याः पराधीनत्वोक्त्या सुतरां मुक्तानां पराधीनत्वमिति भावः। हरेरप्यन्याधीनत्वं किमित्यत आह— **स्वरतोऽपीति** ।। स्वत एव स्वयमेव वा रतो रतिमान् न परत इत्यर्थः। तदुक्तमैतरेयभाष्ये–

[2]"एको नारायणस्त्वासीत् प्रलये रमया सह ।
नित्याततगुणत्वात् स आत्मेति श्रुतिषूदितः ।।
इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा ।।
अग्र्य एव समस्तेशस्तद्वशत्वाद्रमापि सा ।
विद्यमानापि नाग्रस्था गुणैरूना ततो यतः ।।
न ब्रह्मा न शिवस्त्वासीन्नैवान्यच्च मिषत्क्वचित् ।
सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।।
नारायणो न चान्योऽस्ति पूर्णोन्मीलगुणात्मकः।
पराधीनेन वित्तेन भुञ्जन्नपि हि भिक्षुकः ।।
वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि ।
मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।।
सर्वदाप्येक एवायं स्वतन्त्रो नापरः क्वचित् ।
कालाग्र्यत्वं वक्तुमस्य प्रलये स्थितिरुच्यत ।।' इति ।।

तथा—

[3]"प्रलयेऽप्यखिलं देवी रमा विष्णुप्रसादतः।
जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये ।।' इति सत्तत्वे ।

अत्र मुक्तब्रह्मणः 'प्रलयेऽपि प्रतिभातपरावर' इत्यनेन प्रलयेऽपि ब्रह्ममनोवृत्तेः सत्वाद्बाह्यव्यापाराभावाच्च । स्वप्नतुल्यावस्थायाः सुप्तिशब्देन गृहीतत्वात् अविरोधः। सुप्तिशब्दस्य स्वप्ने वृत्तिः। [4]"स्वापो द्विविधः। स्वप्नः सुषुप्तिश्च' इति षट्प्रश्नटीकोक्तेर्ज्ञेया ।। २ ।।

**ताम्र**— कालाग्र्यत्वं च वक्तुं प्रलयस्थितिमाह— **आसीदिति** ।। तदुक्तं 'प्राधान्यज्ञापनार्थमेव 'सदेव सोम्य' इत्यादि सृष्टिकथनम् । कालाग्र्यत्वं वक्तुमस्य प्रलयस्थितिरुच्यत' इति च । चोऽवधारणे । अग्रे

१. ऐ.भा. २-३-१ । २. ऐ.भा. २-३-१ । ३. ऐ.भा. २-३-१ । ४. ष.उ.टी. ४-१ ।

नारायण एक एवासीदित्यन्वयः। एतेन 'एको नारायण आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतिमुपादत्ते । अत एव स इति श्रुतिसिद्धतामाह । [१]"हिरण्यगर्भः समवर्तताग्रे' [२]"एको रुद्रो न द्वितीयाय तस्थे' इति हिरण्यगर्भादेरपि प्रलयेऽवस्थानोक्तेः कथं हरेरेकस्यैवावस्थानमित्यतः तत्तच्छब्दप्रवृत्तिनिमित्तगुणानां अत्रैव मुख्यतो भावात्स एव तत्तच्छब्दवाच्य इति भावेनाह— **उदारेति** ।। तदुक्तं भागवते [३]"भवानेकः शिष्यतेऽशेषसंज्ञः' इति । [४]"त्वयि त इमे ततो विबुधनामगुणाः परमेऽमृत इवार्णवे मधुनि लिल्युरशेषरसा' इति च । बुद्ध्यारोहाय समुद्रदृष्टान्तोक्त्या प्राप्तमितत्वशङ्कां वारयति— **अप्रमेय इति** ।। यद्वा 'असद्वा इदमग्र आसीत्' इत्यादिश्रुतेः कथं नारायणस्याप्यवस्थानमित्यतो असच्छब्दार्थमाह— **अप्रमेय इति** ।। तदुक्तं 'अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम्' इति । रमादावन्यत्रासम्भावितगुणपूर्तिः कथमत्र युक्ता इत्यत उक्तम्— **परतमः परमादिति** ।। यस्मादग्र एक एवासीत् तस्मात् परतम इति साध्यनिर्देशो वा ।

ननु प्रलये ब्रह्मादीनां विद्यमानत्वात्कथमेकस्यैवावस्थानम् । न हि चेतनानां स्वरूपमनित्यमित्यत आह— **संशान्तसंविदिति** ।। संशान्ता परिलुप्ता संविद् ज्ञानं यस्य तदखिलमित्यर्थः। संशान्ता संवित् ज्ञानं तदखिलं जठरे निधायेत्यर्थः। यद्वा संशान्ता निर्विकारा संविज्ज्ञानं यस्य स नारायणः संशान्तसंविदित्यर्थः। तदुक्तं [५]तत्त्वप्रकाशिकायां 'शान्तं निर्विकारम्' इति । ब्रह्मादिचेतनस्वरूपस्य नित्यत्वेऽपि ज्ञानपरिलोपात् तदपेक्षयाऽभाव-वचनमित्यर्थः। तथा च श्रुतिः'नान्यत्किञ्चनमिषत्' इति । तद्भाष्ये च—

[६]"सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।।' इति ।

नन्वभाववचनं श्रुत्यभिप्रायकमिति कुतः स्वरूपनिषेधपरं किं न स्यादित्यत उक्तम्— **जठरे निधायेति** ।। यद्वा अन्यत् किमपि नास्तीति वचनं बहिर्निषेधपरमित्यभिप्रेत्योक्तम्— **जठर इति** ।। अखिलमित्युक्त्या प्राप्तं श्रियोऽपि कुक्षिप्रवेशं वारयति— **लक्ष्मीति** ।। रमाया अतीवभगवद्रतेरेव सुप्तिपदार्थत्वात् लयत्वेन विवक्षितत्वाच्च नैकावस्थानोक्तिविरोध इत्यर्थः। तदुक्तं तृतीयस्कन्धतात्पर्ये—

[७]"सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः।
अनास्थाऽन्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनम् ।।' इति ।
[८]"हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः ।।' इति च ।

यद्वा ननु श्रियः सुप्त्यभावाज्जठरानवस्थानाच्च तस्या अपि भावात्कथमेकस्यैवावस्थानमित्यतस्तस्या अपि सुप्तिलयावुपपादयति— **लक्ष्मीति** ।। तदुक्तं तृतीयस्कन्धतात्पर्ये—

'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः।
अनास्थाऽन्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनम् ।।' इति ।
'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः ।।'

इति च लक्ष्म्याश्लिष्टत्वोक्त्या प्राप्तमन्यनिमित्तकरतित्वं वारयति— **स्वरतोऽपीति** ।। ननु 'वासुदेवो वा इदमग्र

१. ऋ.सं. १०-१२१-१ । २. श्वेताश्वतर. ३-२ । ३. भा. १०-४-२५ । ४. भा. १०-९४-३२ । ५. त.प्र. १-४-९ । ६. ऐ.भा. २-३-१ । ७. भा.ता. ३-६-२ । ८. भा.ता. ११-२४-२६ ।

आसीत्' इति प्रलये वासुदेवरूपावस्थानश्रवणात् कथं नारायणरूपस्य तदिति चेत् । परिहृतोऽयं विरोधः '*कृष्णलीलामृतप्रकाशिकायां नरहरितीर्थभट्टारकैः* 'तद्वाक्यस्य नारायणैक्याभिप्रायेण वा शक्तिरूपाभिप्रायेण वा ईश्वरसर्गप्रस्तावे वासुदेवस्य प्रथमं व्यक्त्यभिप्रायेण वा प्रवृत्तेरविरोधः' इति ।। २ ।।

**जम्बु—** सृष्टिप्रलयाभ्यां हि सर्वस्वरूपनिर्णयस्तदर्थं हि सृष्ट्यादिकं निरूपणीयमित्यभिप्रेत्य सृष्टिं वक्तुं कारणस्य पूर्वभावित्वात् सृष्टिकर्तुः सृष्टेः प्रागवस्थानमाह— **आसीदिति** ।। अग्रे जगदग्रे प्रलये सः प्रसिद्धः नारायण एक एव चोवधारणे आसीत् । ननु जीवानां सत्त्वात् कथमेक एवेत्युक्तमित्यत उक्तम्— **संशान्तेति** ।। संशान्ता विनष्टा रहिता संवित् ज्ञानं यस्य तत् अखिलं जगत् । जठरे उदरे निधाय । अनेन 'आत्मा वा इदमेक एवग्र आसीत् । नान्यत् किञ्चन मिषत्' इति सुस्पष्टमिति सूचयति । अग्र आसीदित्येतत् नारायणशब्दार्थविवरण-रूपमित्यभिप्रेत्य नारायण इत्युक्तम् । आत्मशब्दार्थमाह— **उदारेति** ।। उदारा उत्कृष्टा गुणास्तेषां वारिधिरिव वारिधिः । समुद्रदृष्टान्तेन प्राप्तं परिमितत्वं निवारयति— **अप्रमेय इति** ।। जठर इत्यनेन प्राकृतनाशकाले विद्यमानस्य देहस्याप्राकृतत्वं प्राप्तं तत्कथमित्यत उक्तम्— **परमादव्यक्तात्परतम इति** ।। ब्रह्मणस्सकाशाल्लक्ष्म्या आधिक्यमिव नेत्युक्तस्तमप् प्रत्ययः तेन प्रकृतिनियामकलक्ष्म्या अत्युत्तमत्वात्परतमात्परम इत्युक्तम् । अखिलमेक एवेत्युक्त्या लक्ष्म्या अप्युदरप्रवेशः प्राप्त इत्यत उक्तम्— **लक्ष्मीति** ।। लक्ष्मी भुजान्तरगा यस्येति । सुखार्थं तस्यानुसरणमित्यत उक्तम्— **स्वरतोऽपीति** ।। स्वरमणोऽपि स्वरतस्यापि लक्ष्म्या अनुग्रहार्थमेतदिति ज्ञेयमिति *जनार्दनभट्टीये* । संशान्ता निर्विकारा संविद्यस्यासौ तथोक्तः । अन्येषां संविदो विकारसद्भावादस्य संविदस्तदभावात् एतन्नारायणविशेषणमिति *वरदराजीये* । लक्ष्म्यालिङ्गनेन तस्या आनन्दव्यक्तिरूपप्रयोजनसद्भावेऽपि भगवतः सदाभिव्यक्तानन्तरूपत्वेन तदपि नास्तीति सूचनाय— **स्वरत इत्युक्तम्** ।। तस्मात्सुष्ठु अरतः स्वस्मिन्नेव रतः आनन्दमनुभवन्नित्यर्थः इति *वरदराजीये* । प्रलये एक एवासीदित्यत्र बृहद्भाष्योक्तमनुसन्धेयम् ।

[2]'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ।
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ।।'
[3]'नित्यानि तानि सूक्ष्माणि हीन्द्रियाणि च सर्वशः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयत ।।' इति ।

।। **स्वरत इति** ।। तदुक्तमैतरेयभाष्ये—

[4]'रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना ।
रमते नान्यतः क्वापि रतिर्विष्णोस्सुखात्मनः ।।
रमाया रमणं तस्मात् रमाया रतिपात्रता ।
नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः ।।' इति ।

स्वरतश्चेत्किमर्थं लक्ष्मीभुजान्तरगत इत्यत आह— **अपीति** ।। स्वरतोऽपि तदनुग्रहाय श्रीभुजान्तरगत इति भाव इति *नारायणाध्वरीये* ।

---

१. य.भा.टि. २श्लोके । २. बृ.भा. अश्वमेधब्राह्मणम् ३-२ । ३. सू.भा. २-४-२ । ४. ऐ.भा. २-२-६ ।

।। **अप्रमेय इति** ।। गुणानामनन्तत्वात् अप्रमेय ज्ञातुमशक्यः। परमात् यतो हरेः सकाशात् गुणैरूना अतोऽपि नाग्र्य इति भावः। ननु जीवानां लक्ष्म्याश्च सत्त्वात् कथमेक आसीदित्युक्तमित्यत आह— **संशान्तेति** ।। संशान्ता विहीना संवित् यस्मिन् तत् सुप्तं जगज्जठरे निधायेति। अनेन 'नान्यत्किञ्चन मिषत्' इति श्रुतिर्व्याख्याता भवति। मिषच्छब्दार्थं ऐतरेयभाष्ये 'तदेव मिषणं नाम सद्रूपं मिनुते यत' इति । मिनुते सद्येन मीयते सत् येन वा तन्मिषत् अन्यदमिषत् । तेन सज्जगदादि ज्ञानाभावात् सुप्तं जगदिति भावः । मुक्तानां लक्ष्म्याः सुप्त्यभावात् कथमुक्तं संशान्तेत्यत आह— **लक्ष्मीति** ।। लक्ष्मीः भुजान्तरगता यस्येति। तेन लक्ष्म्याः पराधीनत्वेन विद्यमानमपि ज्ञानं अविद्यमानमेवेति बोध्यम् । लक्ष्म्याः पराधीनत्वोक्त्या सुतरां मुक्तानां पराधीनत्वमिति भावः । हरेरप्यधीनत्वं किमित्यत आह— **स्वरतोऽपीति** ।। स्वत एव स्वयमेव वा रतो रतिमान् न परत इत्यर्थः । तदुक्तमैतरेयभाष्ये—

'एको नारायणश्चात्र प्रलये रमया सह ।
नित्याततगुणत्वात् स आत्मेति श्रुतिषूदितः ।।
इदं सर्वमपेक्ष्याऽसौ कालतो गुणतस्तथा ।
अग्र एव समस्तेशस्तद्वशत्वाद्रमापि सा ।।
विद्यमानाऽपि नाग्रस्था गुणैरूना यतो ततः ।
न ब्रह्मा न शिवश्चासन् नैवान्यच्च मिषत् क्वचित् ।।
सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।।
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।
नारायणो न चान्योऽस्ति पूर्णोन्मेषगुणात्मकः ।।
पराधीनेन वित्तेन भुञ्जन्नपि हि भिक्षुकः ।
वित्तवानिति नैवोक्तः तथा श्रीर्मुक्तिगा अपि ।।
मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।
सर्वदाप्येक एवाऽयं स्वतन्त्रो नापरः क्वचित् ।।
कालाग्र्यत्वं वक्तुमस्य प्रलये स्थितिरुच्यत ।।' इति ।

तथा—

'प्रलयेऽप्यखिलं देवी रमा विष्णुप्रसादतः।
जानाति नित्यज्ञानेन मुक्ता ज्ञानस्थिता लये ।।' इति सत्तत्त्वे ।

अत्र अमुक्तब्रह्मणः 'प्रलयेऽपि प्रतिभातपरावरः' इत्यनेन प्रलयेऽपि ब्रह्ममनोवृत्तेः सत्त्वात् बाह्यव्यापाराभावाच्च स्वप्नतुल्यावस्थायाः सुप्तिशब्देन गृहीतत्वात् न विरोधः। सुप्तिशब्दस्य स्वप्ने वृत्तिः 'स्वापोऽपि द्विविधः। स्वप्नसुषुप्तिभेदात्' इति षट्प्रश्नटीकोक्तो ज्ञेयः । तत्वप्रकाशिकायामपि [1]''स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण' इति ।। २ ।।

---

१. त.प्र. २-३-८ ।

**भारतश्री**— नारायणस्य कारणत्वं विशदयन् तस्मात् जगत्सृष्ट्यादि वक्ति— **आसीदित्यादिना** ।। संशान्तसंवित् निर्विकारज्ञानः । संशान्ता संवित् अखिलं जगदिति वा । मुक्तमुच्यमानजगदतिरिक्तजगदपेक्षया इयमुक्तिः ।। २-३ ।।

## रामाचार्यविरचिता भावविवृतिः

भैष्मीसत्यासमाश्लिष्टं निर्दोषाशेषसद्गुणम् ।
कृष्णं विद्यापतिं वन्दे श्रीब्रह्मनुतपद्द्वयम् ।। १ ।।
हनुमद्भीममध्वादीन् जयार्यान् व्यासयोगिनः ।
रघुनाथमुनीन् वन्दे पूर्णबोधान् गुरूनहम् ।। २ ।।
तात्पर्यनिर्णयपूर्वटीकास्पष्टार्थसङ्ग्रहम् ।
करिष्यामि यथाबोधं तत्र सत्येशतुष्टये ।। ३ ।।

अत्राद्यपद्ये विश्वोदयस्थितिलयेत्यादिना नारायणस्य जगत्सृष्ट्यादिकर्तृत्वं प्रस्तावितम् । तद्विशदयितुं आदौ नारायणस्य प्रलयावस्थितिप्रकारमाह— **आसीदुदारगुणवारिधिरित्यादिना** ।। अत्रेदमाकूतम् । स प्रलयवर्ती नारायण एक एव शतसंवत्सरात्मकब्रह्मायुषि सार्धद्वादशवत्सरे उर्वरिते पातालस्थसङ्कर्षणमुखाग्निना पातालादिलोकनाशक्रमेण नवावरणसहितब्रह्माण्डनाशे सति सावरणब्रह्माण्डावस्थितेः यावान् प्रदेशः तावत्पर्यन्तं दुर्गा [१]प्रलयोदकरूपेण आस्ते । तदा वैकुण्ठसमानसूत्रे तदुपरिभागे लक्ष्म्यात्मकवटपत्रपुटे शेते । तदा विरजास्नानेन त्यक्तलिङ्गानन्यांश्च जीवसङ्घान् चतुर्धा व्यभजत् । तथा तेषां स्थलानि च व्यभजत् । पूर्णसाधनसम्पन्नान् तदा त्यक्तलिङ्गान् वासुदेवोदरे अकरोत् । ये च प्रारब्धशेषिणः साधनैः किञ्चिदूनाः सलिङ्गाः वायुभारतीरुद्रोमाः तान् सङ्कर्षणोदरं चक्रे । एतत्कल्पीयवायोः भविष्यद्ब्रह्मत्वात् तेन सह येषां मुक्तिः तान् सर्वान् अनिरुद्धोदरे चक्रे । शिष्टान् दीर्घसंसारिणः प्रद्युम्नोदरे चक्रे । वटपत्रशायी नारायणस्तु पूर्वकल्पीयमुक्तसङ्घान् स्वकुक्षौ चक्रे । नित्यसंसारिण-स्तदधोभागे चक्रे । पूर्वकल्पीयान् प्राप्ततमसः नाभेरधोभागे चक्रे । एवं मुक्ताः अमुक्ताश्च सर्वजीवसङ्घाः वासुदेवादिषु प्रविष्टाः तत्तत्कुक्षौ तिष्ठन्ति । तदा प्रकृतिनाम्नी रमा श्रीरूपा सती नारायणमालिङ्गति । भूरूपा सती परिचरति । दुर्गारूपा सती कालसृष्टिं कुर्वाणा सुप्तजनान्परिपालयति । तदानीं अदृष्टातिरिक्तकार्यमात्रस्य लयः। तेषां प्रवाहतोऽनादित्वात् । प्रलयेऽपि सूक्ष्मत्वेनावस्थानात् । क्षणलवादिकालसृष्टेः कदाप्युपरतिर्नास्ति । प्रलये विष्णुं रमां जीवांश्च कालं समस्ततत्त्वसूक्ष्मभूतां प्रकृतिं सर्वप्राण्यदृष्टानि वेदान् अव्याकृताकाशं च विना न किञ्चिदवगम्यते । एवं प्रलयेऽवस्थितिः। सङ्कर्षणमुखाग्निना पातालादिआवरणब्रह्माण्डनाशप्रकारस्तु द्वादशस्कन्धे स्पष्टः। प्रलयोदकस्य परिमितत्वे प्रमाणम् [२]"तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्' इति श्रुतिः। [३]"तमस्तदासीद्गहनं गभीरं यस्तस्य पारेभि विराजते विभुः' इति च । प्रलयवर्तिनो नारायणनामत्वे—

[४]"यश्शेते प्रलये विष्णुः शून्यनामा महाकृतिः।
स तु नारायणो नाम नराणामयनत्वत ।।' इति द्वितीयतात्पर्यं मानम् ।

---

१. तमोरूपेण च । २. ऋ.सं. १०-१२९-३ । ३. ऋ.सं. १०-१२९-३ । ४. भा.ता. २-६-४१

एवमुक्तार्थे क्रमात्प्रमाणानि पठ्यन्ते ।

'जाते ब्रह्मलये ब्रह्मन् भगवान् हरिरीश्वरः ।
चतुर्धा व्यभजज्जीवांस्तथा तेषां स्थलानि च ।।
पूर्णसाधनसम्पन्नान् विलिङ्गान् दृष्टबिम्बकान् ।
कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेऽकरोत् ।।
प्रारब्धशेषिणो ये च किञ्चिदूनाश्च साधनैः ।
सलिङ्गान् दृष्टबिम्बांश्च चक्रे सङ्कर्षणोदरे ।।
भविष्यद्ब्रह्मणा साकं एषां मुक्तिपदं भवेत् ।
तान् सर्वान् अनिरुद्धस्य कुक्षिगानकरोद्विभुः।।
दीर्घसंसारिणश्शिष्टान् प्रद्युम्नस्योदरेऽकरोत् ।
वटपत्रपुटे यस्तु संशेते पुरुषोत्तमः।।
केवलं तदुदरस्था हि पूर्वमुक्तियुता जनाः।
चतुर्व्यूहात्मको विष्णुः वटपत्रशयं हरिम् ।
विशत्यमन्दसान्द्रोत्थचिदानन्दघनो हरिः ।।' इति नारदीये ।

ब्रह्माण्डपुराणे च—

'धामत्रयस्थिता मुक्ता वटपत्रस्थशौरिणः।
कुक्षिङ्गता ध्यानपरा यावत्सृष्टिः पुनर्भवेत् ।।
लिङ्गभङ्गमनुप्राप्ताः पूर्णद्वेषात्मकास्सदा ।
नाभेरधश्च तिष्ठन्ति दुःखमात्रस्वरूपिणः ।।
नाभेरुपरि भागे तु सृतिस्थास्सुप्तिमागता ।।' इति ।
[1]''श्रीभूमिरिति या भिन्ना (रूपाभ्यां)प्रकृतिर्विष्णुना सह ।
शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम् ।' इति ।

तृतीयतात्पर्ये च—

[2]''तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गाऽपि तस्य तु ।
सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी ।।' इति ।

बृहद्भाष्ये च—

[3]'सर्वसंहारकं विष्णुं देवीं जीवांस्तथैव च ।
कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् ।
संस्कारं चैव वेदांश्च नर्ते किञ्चिल्लये त्वभूत् ।।' इति ।। २ ।।

---

१. भा.ता. १०-९४-१२ । २. भा.ता. ३-१३-३८ । ३. बृ.भा. अश्वमेधब्राह्मणम् ३-२ ।

**तस्योदरस्थजगतः सदमन्दसान्द्र-**
**स्वानन्दतुष्टवपुषोऽपि रमारमस्य ।**
**भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टौ**
**[1]ईक्षा बभूव परनामनिमेषकान्ते ।। ३ ।।**

**व्यास**— निखिलजडकार्यविलये जठरनिहितचेतनवर्गस्थितस्य लयावसाने समजनीत्याह— **तस्येति** ।। सर्वस्यापि सृज्यत्वपक्षं निवारयति— **सृज्येति** ।। ननु प्रयोजनवती प्रेक्षावतां प्रवृत्तिः ऐश्वार्या अपि तत्सद्भावे अपरिपूर्णः स्यादित्यत उक्तम्— **स्वानन्देति** ।। तुष्टं निराकाङ्क्षं प्रयोजनमननुसन्दधत् वपुः यस्य स तथोक्तः । परप्रयोजनेन घटयते— **भूत्या इति** ।। क्वचित् सृष्टिप्रलययोरहोरात्रावित्युक्त्या तद्गुणतया भगवतः परिमितायुष्ट्वप्रतीतिं निवारयितुमुक्तम्— **निमेषक इति** ।। निमेषणनयापि परिमितायुष्ट्वप्रतीतिं निवारयितुं कुत्सनार्थः क प्रत्ययः प्रयुक्तः ।। ३ ।।

**वादि**— अधुना सृष्ट्या स्वस्य प्रयोजनाभावेऽपि परेषां प्रयोजनमस्तीति सूचयन् प्रेक्षापूर्वकं स्रष्टुरेव कर्तृत्वात् सृष्ट्यनुकूलेक्षा जातेत्याह— **तस्येति** ।। प्राक् हृद्येव निगूढा संवित् इदानीं सृज्यसर्जनाय बहिरपि व्यापारवती बभूवेति भावः। स्वानन्देन तुष्टिर्नामालम्बुद्धिः। निजाश्रितजनस्य निजाश्रितानां रमाब्रह्मादीनां जनस्य समूहस्य भूत्यै ऐश्वर्याय । रमायाः 'मम भर्ता एतादृशैश्वर्यवान्' इति हर्षोद्रिक एव भूतिः। अन्येषां सत्यलोकादिप्राप्तिरेव भूतिरिति ज्ञेयम् । परनामनिमेषः प्रलयकालीनं भगवतश्चक्षुर्निमीलनं तस्यान्ते । अस्मदादिवत् निमेषपरिसङ्ख्यया आयुःपरिगणने भगवतोऽपि सावधिकमायुः स्यात् अतः सोऽयं निमेषः हरेरुपचारादेव न तु स्वभावादिति तमिमं निमेषं कुत्सयितुं कशब्दः। अत एव [2]'निमेष उपचर्यते' इत्याह भगवान् बादरायणः । ब्रह्मणः संवत्सरशतकस्य पर इति नाम । तच्च सृष्टिकाल इव प्रलयकालेऽपि समम् ।। ३ ।।

**सङ्क**— अग्रे नारायण आसीदित्युक्तम् । तदनन्तरं नारायणस्य को व्यापारः समजनीत्यतो जगत्सर्जनादौ न तस्य क्लेशलेशोऽपीति ज्ञापनाय उक्तमनुवदन् सप्रयोजनं तं व्यापारमाह— **तस्येति** ।। चतुर्मुखब्रह्मणो वर्षशतं परमित्युच्यते । तन्नारायणस्य निमेषकालत्वेनोपचर्यते । न मुख्यतः ।

[3]'नित्यस्यापि हरेः कालः द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ।।'

इति वचनात् विष्णौ कालकृतविकाराभावात् । अत एव कप्रत्ययेन मुख्यार्थं कुत्सयामास भगवान् निमेषक इति ।। ३ ।।

**वरद**— एवं प्रलये श्रीसहायस्य हरेः को व्यापारः सञ्जात इत्यत आह— **तस्येति** ।। उदरस्थं जगत् यस्यासौ तथोक्तः । तस्य नारायणस्य सृज्यसृष्टौ ईक्षा इच्छा बभूवेति सम्बन्धः । सर्वस्यापि सृष्टिं निवारयति—

---

१. 'सृष्टिकालं प्रवक्ष्यामि मुक्तिकालं तथैव च। ब्रह्मादीनां च देवानां समाहितमना भव। निमेषो देवदेवस्य ब्रह्मकल्पसमो मतः। तस्यावसाने चोन्मेषो देवदेवशिखामणेः। निमेषान्ते भवेदिच्छा स्रष्टुं लोकांश्च कुक्षिगान्।' इति स्कान्दे-वैष्णवखण्डे-वैशाखमासमाहात्म्ये २०अ, ३८-४०) । २. भा. ३-११-३७ । ३. गी.ता. ८-१२ ।

**सृज्यसृष्टाविति** ।। ननु नारायणस्य सृष्ट्यादौ प्रवृत्तिः किं फलवत्युत न । आद्येऽपूर्णत्वं स्यात् । द्वितीये प्रवृत्तिरेव न स्यात् इत्यतो द्वितीयपक्षं अङ्गीकृत्याह— **सदमन्द इति** ।। सन् निर्दुष्टः अमन्दः पूर्णः सान्द्रः निरन्तरः स्वः स्वरूपभूतः आनन्दः तेन तुष्टं फलानपेक्षं वपुः स्वरूपं यस्य सः तथा । तस्य स्वप्रयोजनाभावेऽपि केवलमानन्दोद्रेकादेव प्रवृत्तिरिति भावः । आद्यं पक्षं अङ्गीकृत्यापि प्रवृत्तिं समर्थयते— **निजाश्रितजनस्य भूत्या इति** ।। सृष्टौ सत्यां निजाश्रितस्य जनस्य स्थूलदेहयोगेन ज्ञानादिदानेन स्वरूपानन्दाविर्भावलक्षणैश्वर्यप्राप्त्यर्थं तत्र प्रवृत्तिरिति भावः । रमारमस्येति प्रयोजनान्तरोक्तिः । तथा च वक्ष्यति 'मायां श्रियं सृष्टिविधित्सयार' इति । कदा ईक्षा बभूवेत्यत आह— **परनामनिमेषकान्त इति** ।। ब्रह्मणो वर्षशतं परमित्युच्यत इति । तन्नाम स्वस्य निमेषः ब्रह्मणो वर्षशतं हरेर्निमिषायते तदप्युपचरितमात्रं मुख्यतः तदपि नास्तीति दर्शयितुं कुत्सनार्थः क प्रत्ययः। तथाचोक्तम्—

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ।।'

इति स्वनिमेषत्वेनोपचर्यमाणचतुर्मुखायुर्वर्षशतान्ते सृष्टिं कर्तुमीक्षा बभूवेति भावः। ईक्षाग्रहणेन हरेर्निमित्त—कारणत्वमुक्तम् । तेन परोदीरितमुपादानत्वं निराकृतं भवति । इच्छापूर्वकं स्रष्टरि कुलालादौ तद्दर्शनात् । मृत्पिण्डादावुपादाने तददर्शनादिति भावः। हिशब्देन 'स ईक्षत । लोकानसृजत' इत्यादि श्रुतिप्रसिद्धिं सूचयति ।। ३ ।।

**जना**— ततः किमित्यत आह— **तस्येति** ।। तस्योदरस्थजगत इत्यनुवादः ।। **परनामनिमेषकान्ते** ।। ब्रह्मणो वर्षशतं परमित्युच्यते तन्नाम यस्य परनामा स चासौ निमेषकश्च तस्यान्ते । परस्य निमेषत्वे तेनायुर्गणना स्यादतः कप्रत्ययेन निमेषत्वं कुत्सयति ।

'[1]"कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः।।'

इति तृतीयस्कन्धवचनात् । सृज्यसृष्टावीक्षा इच्छा बभूव । उदरस्थजगन्मात्रप्राप्तिव्यावृत्त्यर्थं सृज्येत्यक्तम् । 'ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मनः।' इति प्रमाणात् । प्राग्विद्यमानस्यैव कदाचिदचिन्त्यशक्त्या भवनव्यवहारविषयत्वं ईक्षा बभूवेत्यनेनोच्यते । तथोक्तं गीताभाष्ये [2]"न चेश्वरज्ञानवत् भूत्वा भविता । तद्धि तदैक्षत' इति । ईक्षावतः कुलालादेर्निमित्तत्वदर्शनात् अस्यापि निमित्तत्वं वक्तुमीक्षा बभूवेति प्रयोगः। तेन विवर्तपरिणामवादा निरस्ता भवन्ति । एतेन स ऐक्षत लोकानसृजत इति श्रुतिर्विवृता । सृज्येक्षाप्रवृत्त्योः प्रयोजन—पूर्वकत्वात्तदाह— **भूत्या इति** ।। स्वप्रयोजनं विहाय परप्रयोजनकथनं कथमित्यत आह— **रमारमेति** ।। रमां रमयतीति रमारमः तस्येति— **सदिति च** ।। सन् निर्दुष्टः। अनित्यत्वदुःखयुतत्वाल्पत्वादिदोषात्यन्ताभाववान्। अमन्द्रः पूर्णः सान्द्रः निबिडः स्वानन्दः स्वरूपभूतानन्दस्तेन तुष्टं निराकाङ्क्षं प्रयोजनमननुसन्दधत् वपुर्यस्य स तथोक्तः। तस्मात् श्रीपतित्वेन स्वानन्दतुष्टत्वेन चास्य प्राप्यप्रयोजनाभावात् परप्रयोजनेन प्रवृत्तिरिति भावः ।। ३ ।।

---

१. भा.ता. ३-१२-३७ । २. गी.भा. २-२० ।

**ताम्र—** केचित् भगवतो जगत्कारणत्वमुपादानत्वमिति । अपरे तु विवर्तकारणत्वमिति । तदुभयमयुक्तम् । सोऽकामयत तदैक्षत इति ईक्षापूर्वकस्रष्टृत्वोक्तेः । न ह्युपादानकारणस्य मृदो ईक्षणमस्ति । नापि विवर्तकारणस्य शुक्तेः उपादानादीच्छापूर्वं स्रष्टृत्वमतो निमित्तत्वमेवेत्याशयेनाह— **तस्येति** ।। सर्वसृष्टाविति वक्तव्ये सृज्येत्युक्तिस्तु 'पराधीनविशेषाप्त्या जनिमत्सर्वमेव च' इति वियदधिकरणन्यायेन सर्वस्य सृज्यत्वात् सर्वसृष्टौ ईक्षा युक्ता इति हेतुसूचनार्था । ईक्षा अपेक्षा प्रेक्षा च । उपसर्गस्य धात्वर्थव्यञ्जकत्वमात्रत्वात् ईक्षतेरिच्छाज्ञानपरत्वं युक्तम् । ज्ञानेच्छयोर्नित्यव्यक्तत्वात् कथं बभूवेत्युक्तिरित्यत आह— **परेति** ।। इदानीं स्रक्ष्येत्येवमाकारिकाया ईश्वरेच्छाया अनादितो व्यक्तत्वेऽपि सृष्टिकाले तस्यामेवेच्छायां इदानीं स्रक्ष्य इत्येवमाकारस्य व्यक्त्यङ्गीकारात् तद्विवक्षया बभूवेत्युक्तिर्युज्यते । एवमुपादानाद्यपरोक्षज्ञानस्य नित्यसिद्धत्वेऽपि उपादानादेः सृष्टिकाले सृष्ट्यौन्मुख्यप्राप्ते पूर्वज्ञानस्यैव इदानीं सृष्ट्युन्मुखत्वमित्येवमाकारस्य व्यक्त्या बभूवेत्युपपत्तिः। तदुक्तं स्वत एव काले विशेषाङ्गीकृतेश्चेति । अथवा 'न चेश्वरज्ञानवद्भूत्वा भविता' इति गीताभाष्ये । 'यथेश्वरज्ञानं वृद्धिह्रासादिवर्जितं कयाचिदचिन्त्यशक्त्या जातमिति व्यवहारालम्बनम् ।' इति प्रमेयदीपोक्तरीत्या समाधानं ज्ञेयम् । विस्तरस्य नायमवसर इत्युपरम्यते ।

ननु चतुर्मुखायुस्समतया परसंज्ञितलयकालस्य—

> "अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
> रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ।।'[1]

इति गीतायां भगवद्रात्र्यात्मकत्वमुच्यते। तथा च तद्गणनया भगवतः परिमितायुष्ट्वं प्राप्तमित्यत उक्तम्— **परनामनिमेषकेति** ।। निमेषगणनयापि तन्निवारयितुं कुत्सनार्थः कप्रत्ययः। परसंज्ञकः कालः हरेर्निमेष इत्येतदप्युपचारमात्रम्। मुख्यतस्तदपि नास्तीत्यर्थः। तदुक्तं गीतातात्पर्ये—

> 'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम्।
> अहश्चासौ निमेषश्चेत्यप्रवृत्योपचर्यते' इति

।। **अन्त इति** ।। प्रलयाष्टमभाग इत्यर्थः। 'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृत' इति वचनात् । ननु यदि भगवतो जगत्कारणत्वं कर्तृत्वरूपं तर्हि कर्तुः कुलालादेरिव फलाभिसन्धिरस्ति न वा । नाद्यः। यत्प्रयोजनार्थं सृष्ट्यादि तदूनत्वादपूर्णताप्राप्तेः। द्वितीये प्रेक्षावत्वायोग इत्यतो द्वितीयपक्षमङ्गीकृत्य फलाभिसन्ध्यभावे हेतुमाह— **सदिति** ।। सन्निर्दुष्टः अमन्दः सङ्ख्यापरिमाणस्फुटतावैचित्र्यैरनवधिकः। सान्द्रतो देशतोऽनन्तः। स्वरूपभूतो य आनन्दस्तेन तुष्टं अलम्बुद्धियुक्तं वपुर्यस्य सः तस्येत्यर्थः। हेत्वन्तरमाह— **रमारमस्येति** ।। रमां रमयतीति रमारमस्तस्य । अयं भावः। रमारमणमपि न फलेच्छया। अपि तु रमां सुखयितुमेव तदुक्तम्—

> 'रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना ।
> रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः।।
> रमाया रमणं तस्मात् रमाया रतिपात्रता ।
> नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः।।'[2] इति ।

---

१. गी. ८.१८ । २. भा.ता. १०-९४-१५ ।

**सृज्यसृष्टाविति** ।। ननु नारायणस्य सृष्ट्यादौ प्रवृत्तिः किं फलवत्युत न । आद्येऽपूर्णत्वं स्यात् । द्वितीये प्रवृत्तिरेव न स्यात् इत्यतो द्वितीयपक्षं अङ्गीकृत्याह— **सदमन्द इति** ।। सन् निर्दुष्टः अमन्दः पूर्णः सान्द्रः निरन्तरः स्वः स्वरूपभूतः आनन्दः तेन तुष्टं फलानपेक्षं वपुः स्वरूपं यस्य सः तथा । तस्य स्वप्रयोजनाभावेऽपि केवलमानन्दोद्रेकादेव प्रवृत्तिरिति भावः । आद्यं पक्षं अङ्गीकृत्यापि प्रवृत्तिं समर्थयते— **निजाश्रितजनस्य भूत्या इति** ।। सृष्टौ सत्यां निजाश्रितस्य जनस्य स्थूलदेहयोगेन ज्ञानादिदानेन स्वरूपानन्दाविर्भावलक्षणैश्वर्यप्राप्त्यर्थं तत्र प्रवृत्तिरिति भावः । रमारमस्येति प्रयोजनान्तरोक्तिः । तथा च वक्ष्यति 'मायां श्रियं सृष्टिविधित्सयार' इति । कदा ईक्षा बभूवेत्यत आह— **परनामनिमेषकान्त इति** ।। ब्रह्मणो वर्षशतं परमित्युच्यत इति । तन्नाम स्वस्य निमेषः ब्रह्मणो वर्षशतं हरेर्निमिषायते तदप्युपचरितमात्रं मुख्यतः तदपि नास्तीति दर्शयितुं कुत्सनार्थः क प्रत्ययः। तथाचोक्तम्—

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ।।'

इति स्वनिमेषत्वेनोपचर्यमाणचतुर्मुखायुर्वर्षशतान्ते सृष्टिं कर्तुमीक्षा बभूवेति भावः। ईक्षाग्रहणेन हरेर्निमित्त—कारणत्वमुक्तम् । तेन परोदीरितमुपादानत्वं निराकृतं भवति । इच्छापूर्वकं स्रष्टरि कुलालादौ तद्दर्शनात् । मृत्पिण्डादावुपादाने तददर्शनादिति भावः। हिशब्देन 'स ईक्षत । लोकानसृजत' इत्यादि श्रुतिप्रसिद्धिं सूचयति ।। ३ ।।

**जना**— ततः किमित्यत आह— **तस्येति** ।। तस्योदरस्थजगत इत्यनुवादः ।। **परनामनिमेषकान्ते** ।। ब्रह्मणो वर्षशतं परमित्युच्यते तन्नाम यस्य परनामा स चासौ निमेषकश्च तस्यान्ते । परस्य निमेषत्वे तेनायुर्गणना स्यादतः कप्रत्ययेन निमेषत्वं कुत्सयति ।

[1]"कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः।।'

इति तृतीयस्कन्धवचनात् । सृज्यसृष्टावीक्षा इच्छा बभूव । उदरस्थजगन्मात्रप्राप्तिव्यावृत्त्यर्थं सृज्येत्यक्तम् । 'ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मनः।' इति प्रमाणात् । प्राग्विद्यमानस्यैव कदाचिदचिन्त्यशक्त्या भवनव्यवहारविषयत्वं ईक्षा बभूवेत्यनेनोच्यते । तथोक्तं गीताभाष्ये [2]"न चेश्वरज्ञानवत् भूत्वा भविता । तद्धि तदैक्षत' इति । ईक्षावतः कुलालादेर्निमित्तत्वदर्शनात् अस्यापि निमित्तत्वं वक्तुमीक्षा बभूवेति प्रयोगः। तेन विवर्तपरिणामवादा निरस्ता भवन्ति । एतेन स ऐक्षत लोकानसृजत इति श्रुतिर्विवृता । सुज्ञेक्षाप्रवृत्त्योः प्रयोजन—पूर्वकत्वात्तदाह— **भूत्या इति** ।। स्वप्रयोजनं विहाय परप्रयोजनकथनं कथमित्यत आह— **रमारमेति** ।। रमां रमयतीति रमारमः तस्येति— **सदिति च** ।। सन् निर्दुष्टः। अनित्यत्वदुःखयुतत्वाल्पत्वादिदोषात्यन्ताभाववान्। अमन्द्रः पूर्णः सान्द्रः निबिडः स्वानन्दः स्वरूपभूतानन्दस्तेन तुष्टं निराकाङ्क्षं प्रयोजनमननुसन्दधत् वपुर्यस्य स तथोक्तः। तस्मात् श्रीपतित्वेन स्वानन्दतुष्टत्वेन चास्य प्राप्यप्रयोजनाभावात् परप्रयोजनेन प्रवृत्तिरिति भावः ।। ३ ।।

१. भा.ता. ३-१२-३७ । २. गी.भा. २-२० ।

**ताम्र**— केचित् भगवतो जगत्कारणत्वमुपादानत्वमिति । अपरे तु विवर्तकारणत्वमिति । तदुभयमयुक्तम् । सोऽकामयत तदैक्षत इति ईक्षापूर्वकस्रष्टृत्वोक्तेः । न ह्युपादानकारणस्य मृदो ईक्षणमस्ति । नापि विवर्तकारणस्य शुक्तेः उपादानादीच्छापूर्वं स्रष्टृत्वमतो निमित्तत्वमेवेत्याशयेनाह— **तस्येति** ।। सर्वसृष्टाविति वक्तव्ये सृज्येत्युक्तिस्तु 'पराधीनविशेषाप्त्या जनिमत्सर्वमेव च' इति वियदधिकरणन्यायेन सर्वस्य सृज्यत्वात् सर्वसृष्टौ ईक्षा युक्ता इति हेतुसूचनार्था । ईक्षा अपेक्षा प्रेक्षा च । उपसर्गस्य धात्वर्थव्यञ्जकत्वमात्रत्वात् ईक्षतेरिच्छाज्ञानपरत्वं युक्तम् । ज्ञानेच्छयोर्नित्यव्यक्तत्वात् कथं बभूवेत्युक्तिरित्यत आह— **परेति** ।। इदानीं स्रक्ष्येत्येवमाकारिकाया ईश्वरेच्छाया अनादितो व्यक्तत्वेऽपि सृष्टिकाले तस्यामेवेच्छायां इदानीं स्रक्ष्य इत्येवमाकारस्य व्यक्त्यङ्गीकारात् तद्विवक्षया बभूवेत्युक्तिर्युज्यते । एवमुपादानाद्यपरोक्षज्ञानस्य नित्यसिद्धत्वेऽपि उपादानादेः सृष्टिकाले सृष्ट्यौन्मुख्यप्राप्ते पूर्वज्ञानस्यैव इदानीं सृष्ट्युन्मुखत्वमित्येवमाकारस्य व्यक्त्या बभूवेत्युपपत्तिः। तदुक्तं स्वत एव काले विशेषाङ्गीकृतेश्चेति । अथवा 'न चेश्वरज्ञानवद्भूत्वा भविता' इति गीताभाष्ये । 'यथेश्वरज्ञानं वृद्धिह्रासादिवर्जितं कयाचिदचिन्त्यशक्त्या जातमिति व्यवहारालम्बनम् ।' इति प्रमेयदीपोक्तरीत्या समाधानं ज्ञेयम् । विस्तरस्य नायमवसर इत्युपरम्यते ।

ननु चतुर्मुखायुस्समतया परसंज्ञितलयकालस्य—

> "[1]अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
> रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ।।'

इति गीतायां भगवद्रात्र्यात्मकत्वमुच्यते। तथा च तद्गणनया भगवतः परिमितायुष्ट्वं प्राप्तमित्यत उक्तम्— **परनामनिमेषकेति** ।। निमेषगणनयापि तन्निवारयितुं कुत्सनार्थः कप्रत्ययः। परसंज्ञकः कालः हरेर्निमेष इत्येतदप्युपचारमात्रम्। मुख्यतस्तदपि नास्तीत्यर्थः। तदुक्तं गीतातात्पर्ये—

> 'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम्।
> अहश्चासौ निमेषश्चेत्यप्रवृत्योपचर्यते' इति

।। **अन्त इति** ।। प्रलयाष्टमभाग इत्यर्थः। 'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृत' इति वचनात् । ननु यदि भगवतो जगत्कारणत्वं कर्तृत्वरूपं तर्हि कर्तुः कुलालादेरिव फलाभिसन्धिरस्ति न वा । नाद्यः। यत्प्रयोजनार्थं सृष्ट्यादि तदूनत्वादपूर्णताप्राप्तेः। द्वितीये प्रेक्षावत्वायोग इत्यतो द्वितीयपक्षमङ्गीकृत्य फलाभिसन्ध्यभावे हेतुमाह— **सदिति** ।। सन्निर्दुष्टः अमन्दः सङ्ख्यापरिमाणस्फुटतावैचित्र्यैरनवधिकः। सान्द्रतो देशतोऽनन्तः। स्वरूपभूतो य आनन्दस्तेन तुष्टं अलम्बुद्धियुक्तं वपुर्यस्य सः तस्येत्यर्थः। हेत्वन्तरमाह— **रमारमस्येति** ।। रमां रमयतीति रमारमस्तस्य । अयं भावः। रमारमणमपि न फलेच्छया। अपि तु रमां सुखयितुमेव तदुक्तम्—

> '[2]रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना ।
> रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः।।
> रमाया रमणं तस्मात् रमाया रतिपात्रता ।
> नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः।।' इति ।

---

१. गी. ८.१८ । २. भा.ता. १०-९४-१५ ।

द्वितीयपक्षाङ्गीकारे तत्पक्षदोषं अप्रेक्षावत्वं निराह— **भूत्या इति** ।। स्वप्रयोजनाभावेऽपि परप्रयोजनार्थं प्रवृत्त्युपपत्तेर्नाप्रेक्षावत्वं शङ्क्यम्। न च परभूतिदानेनापि किं प्रयोजनमिति वाच्यम्। प्रयोजनाभावेऽपि स्वाश्रयप्रीत्यतिशयवशात् मातुरपत्यपालनवत् प्रवृत्त्युपपत्तेरिति भावः। तदिदमुक्तम्— **निजाश्रितेति** ।। हिशब्देन '[1]न प्रयोजनवत्त्वात्' इति प्रमाणप्रसिद्धिं सूचयति ।। ३ ।।[2]

**जम्बु**— अधुना स्वस्य प्रयोजनाभावेऽपि परेषां प्रयोजनमस्तीति सूचयन् प्रेक्षापूर्वकं स्रष्टुरेव कर्तृत्वात् सृष्ट्यनुकूलेच्छा जायते इत्याह— **तस्येति** ।। प्राक् हृद्येव निगूढा संविदिदानीं सृज्यसर्जनाय बहिरपि व्यापारवती बभूवेति भावः। स्वानन्दतुष्टिर्नाम अलम्बुद्धिः। निजाश्रितजनस्य निजाश्रितानां रमाब्रह्मादीनां जनस्य जनसमूहस्य भूत्यै ऐश्वर्याय । रमायाः मम भर्ता एतादृशैर्यवानिति हर्षोद्रिक एव भूतिः अन्येषां च सत्यलोकादिप्राप्तिरेव भूतिः इति ज्ञेयम् । परनामनिमेषः प्रलयकालीनभगवच्चक्षुर्मीलनम् । तस्यान्ते अस्मदादिवन्निमेषपरिसङ्ख्यया मासगणने भगवतोऽपि सावधिकमायुः स्यात् । अतः सोऽयं निमेषः हरेरुपचारादेव । न तु स्वभावादेवेति । तमिमं निमेषं कुत्सयितुं कशब्दः। अत एव निमेषवदुपचर्यते इत्याह भगवान् बादरायणः। संवत्सरशतकस्य पर इति नाम । तस्य सृष्टिकाल इव प्रलयकालेऽपि सम इति ***वादिराजीये*** । तस्य उदरस्थजगतः इत्यनुवादः। परनामनिमेषकान्ते ब्रह्मणो वर्षशतं परमित्युच्यते । तन्नाम यस्य स परनाम स चासौ निमेषकश्च तस्यान्ते । परस्य निमेषत्वेन आयुर्गणना स्यात् अतः कप्रत्ययेन निमेषत्वं कुत्सयति ।

'कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः ।।'

---

१. ब्र.सू. २-१-३३ । २. "केचित् भगवतो जगत्कारणत्वमङ्गीकृत्याप्युपादानत्वं मन्यन्ते। तदयुक्तम्। तदैक्षतेत्यादावीक्षापूर्वं स्रष्टृत्वोक्तेरिति भावेन निखिलकार्यविलये जठरनिहितचेतनवर्गस्य तस्य क्षणसमभागे ईक्षा समजनीत्याहुः ।। **तस्येति** ।। सर्वस्यापि सृज्यत्वपक्षं वारयति–**सृज्येति** ।। यद्वा 'पराधीनविशेषाभ्यां जनिमत्सर्वमेव च' इत्युक्तदिशा यावत्सृज्यं तावत्सृज्यं सृष्टौ सृष्ट्यर्थमीक्षा बभूव। न तु महदादिसृष्टिमात्र इत्यर्थः। नन्वीक्षापूर्वं स्रष्टृत्वेन कुलालादिवद्भगवतो निमित्तकारणत्वे तस्य फलाभिसन्धिरस्ति न वा। नाद्यः। प्राक्तदभावेनापूर्णत्वप्राप्तेः। द्वितीये प्रेक्षावत्वायोग इत्यत आह–**सदिति** ।। सन्निर्दुष्टः अमन्दः सङ्ख्यापरिमाणाभ्यामनवधिकः। सान्द्रो निबिडः। अग्रतोऽनन्त इति यावत्। स्वरूपभूतो य आनन्दस्तेन तुष्टमलम्बुद्धियुक्तं वपुर्यस्य सः तस्येत्यर्थः। रमां रमयतीति रमारमस्तस्य। अयं भावः। न भगवतः सृष्ट्या प्रयोजनं परिपूर्णानन्दानुभवस्वरूपत्वेन नित्यतृप्तत्वात्। किञ्च रमयापीश्वरस्य रतिर्नास्ति, कथमेवं अत्यल्पजगन्निर्माणेन प्रयोजनं स्यात्। न चैवं सति रमारमणत्वप्रसिद्धिरयुक्तेति वाच्यम्। रमाया रतिदातृत्वस्यैव तत्र विवक्षितत्वात्। तदुक्तं 'रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना। रमते नान्यतःक्वापि रतिर्विष्णोः सुखात्मनः। रमया रमणं नाम रमाया रतिपात्रता। नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः' इति। न चैवं तत्प्रवृत्तेः प्रयोजनविधुरत्वेन तस्याप्रेक्षावत्वं स्यादिति वाच्यम्। स्वप्रयोजनरहितत्वेऽपि परभूत्यर्थं प्रवृत्युपपत्तेः। न च परभूतिदानेनापि किं प्रयोजनमिति वाच्यम्। प्रयोजनाभावेऽपि श्रितप्रीत्यतिशयवशात् मातुरपत्यपालनवत् भूतिदानोपपत्तेः तदिदमुक्तम्–**निजाश्रितेति** ।। ईक्षाकालमाह– **परेति** ।। ननु चतुर्मुखायुस्समतया परसंज्ञितलयकालस्य 'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञित' इति गीतायां (८/१८) भगवद्रात्र्यात्मकत्वमुच्यते। तथा च तद्गणनया भगवतः परिमितायुष्ट्वं प्राप्तमित्यत उक्तम्–**परनामनिमेषकेति** ।। निमेषगणनयापि तन्निवारयितुं कुत्सनार्थः कप्रत्ययः। तदुक्तं गीततात्पर्ये 'नित्यस्यापि हरेःकालो द्विपरार्धात्मकः स्वयम् ।अहश्चासौ निमेषश्चेत्य–प्रवृत्योपचर्यत' इति। ननु नित्यत्वाद्भगवज्ज्ञानस्य कथमीक्षा बभूवेत्युक्तिरिति चेत् नित्यव्यक्तज्ञानस्याप्यचिन्त्यशक्त्या भवनोपपत्तेः। तदुक्तं 'न चेश्वरज्ञानवद्भूत्वा भविता' इति गीताभाष्ये। प्रमेयदीपिकायां च- यथेश्वरज्ञानं वृद्धिह्रासादिवर्जितं भूत्वैव कयाचिदचिन्त्यशक्त्या जातमिति व्यवहारालम्बनमेवमिति ।। ३ ।।" इत्यधिकः पाठः हो. पुस्तके दृश्यते ।

इति प्रमाणात् सृज्यसृष्टावीक्षा बभूव । 'ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मनः' इति प्रमाणात् । प्राग्विद्यमानस्यैव ज्ञानस्य कदाचिदीशशक्त्या भवनव्यवहारविषयत्वमीक्षा बभूव इत्यनेन उच्यते । तथोक्तं गीताभाष्ये 'न च ईश्वरज्ञानवत् भूत्वाभविता तद्धि तदैक्षत' इति । ईक्षावतः कुलालादेः निमित्तत्वदर्शनादस्यापि निमित्तत्वं वक्तुं ईक्षाबभूवेति प्रयोगः। स्वप्रयोजनं विहाय परप्रयोजनकथनं कथमित्यत आह रमया रमयतीति रमारमस्तस्येति । कथम्भूतस्य— **सदिति** ।। सन् निर्दुष्टः अनित्यत्वदुःखनिर्वृत्त्यादिदोषरहितः। अमन्दः पूर्णः। सान्द्रः निबिडः। स्वानन्दः स्वरूपभूतानन्दः तेन तुष्टं निराकाङ्क्षं प्रयोजनमननुसन्दधत् वपुः यस्य तथोक्तः तस्मात् । श्रीपतित्वेन स्वानन्दतुष्टत्वेन चास्य प्राप्यप्रयोजनाभावात्परप्रयोजनेन प्रवृत्तिरिति भावः इति *जनार्दनभट्टीये* । उदरस्थं जगद्यस्याऽऽसौ तथोक्तः तस्य । यद्वा ननु नारायणस्य सृष्ट्यादौ प्रवृत्तिः फलवत्युत न । आद्ये अपूर्णत्वं स्यात् । द्वितीये प्रवृत्तिरेव न स्यादित्यतो द्वितीयपक्षमङ्गीकृत्याह— **सदमन्दति** ।। स्वप्रयोजनाभावेऽपि केवलमानन्दोद्रेकादेव प्रवृत्तिरिति भावः। आद्यपक्षमङ्गीकृत्यापि प्रवृत्तिं समर्थयति— **निजाश्रितेति** ।। निजाश्रितजनस्य स्थूलदेहयोगेन ज्ञानादिदानेन स्वरूपानन्दाविर्भावलक्षणैश्वर्यप्राप्त्यर्थं तत्र प्रवृत्तिरिति भावः ।। **रमारमस्येति** ।। प्रयोजनान्तरोक्तिः। तथा च वक्ष्यति 'मायां श्रियं सृष्टिविधित्सयार ' इति । कदेच्छा बभूवेत्यत आह— **परनामेति** ।।

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचार्यते ।।' इति ।

स्वनिमेषत्वेनोपचर्यमाणचतुर्मुखायुर्वर्षशतान्ते सृष्टिं कर्तुं ईक्षा बभूवेत्यर्थः। हिशब्देन 'तदैक्षत लोकानसृजत्' इति श्रुतिप्रसिद्धिं च सूचयतीति *वरदराजीये*। मुक्तप्राप्ततमस्कव्यावृत्त्यर्थम्— **सृज्येति** ।। ननु संसारिणामपि केषाञ्चित् व्यावृत्त्यर्थं संसारस्य तन्मूलकस्याप्यात्मकर्मादेरनादित्वात्प्रतिकल्पं सर्वजीवानां सृष्टेर्वक्तव्यत्वात् । तदुक्तमनुव्याख्याने—

[1]'अनादिकर्मणा बद्धः जीवस्संसारमण्डले ।
वासुदेवेच्छया नित्यं भ्रमतीह सुखेतरम् ।।' इति ।

अत्र मध्यमाधमानां सृष्टिरपि देवानां सुखप्राप्त्यर्थमिति ध्येयम् । 'असुराणां तमःप्राप्त्या तेषां सुखमपीष्यते' इत्युक्तेः। तदुक्तं भागवते—

[2]'यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः।।' इति ।

तात्पर्ये [3]'लयस्य त्वष्टमो भागस्सृष्टिकाल उदाहृतः' इति *नारायणाध्वरीये* ।। ३ ।।

**राम**—यद्वक्तुं भगवतः प्रलयेऽवस्थानमुक्तं तदुपोद्घातमाह— **तस्योदरस्थेति** ।। तस्य प्रलयवर्तिनो नारायणस्य शतसंवत्सरात्मकप्रलयकाले सार्धसप्ताशीतिवत्सरे गते सार्धद्वादशवत्सरे उर्वरिते तदा सृष्टिविषयिणी इच्छा बभूवेत्यर्थः। तदुक्तं श्रुतितात्पर्ये-'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृतः' इति । ततः स नारायणः

१. अनु. २-२-८५४, उत्पत्त्यधिकरणम् । २. भा. १०-९४-१३ । ३. भा. १०-९४-१४ ।

श्रुत्यभिमानिन्या प्रकृत्या सृष्ट्यर्थमर्थितः सन् स्रक्ष्य इति विचिन्त्य वासुदेवनामा बभूव । तस्यैव पुरुष इति नामान्तरम् । तृतीयतात्पर्ये च—

[1]"आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः ।
तदेव वासुदेवाख्यं महत्तत्वनियामकम् ।।' इति ।

स नारायणः पुनः सङ्कर्षणप्रद्युम्नानिरुद्धरूपेण अभिव्यक्तः। पुनश्शब्दात् वासुदेवादिचतुर्णामपि नारायणादेवाभिव्यक्तिरिति ज्ञायते । क्वचित्सङ्कर्षणादित्रयाणां वासुदेवादभिव्यक्तिः। पुनर्लयकाले वासुदेव एव संश्लेष इत्युच्यते । तदप्यविरुद्धम् । प्रामाणिकत्वात् व्यूहभेदेनेति ज्ञेयम् । तस्याज्ञया प्रकृतिनाम्नी रमा मायादिरूपचतुष्टयवती बभूव । यद्यप्यस्ति वासुदेवादिचतुर्णां सृष्टिकर्तृत्वं तथापि वासुदेवस्य मुक्तिदातृत्वं मुख्यम् । अतो निजमुक्तिपदप्रदातेति । निजानां स्वस्मिन् प्रविष्टानां मुक्तेः स्वरूपानन्दानुभवस्य पदस्य स्थानस्य च प्रदाता । सङ्कर्षणादीनामपि संहारादिकं प्राचुर्येण इति भावः। तथाहि 'वासुदेवः सङ्कर्षणोदरप्रविष्टं वायुं स्वोदरे कृत्वा मायायां वीर्याधानपूर्वकमसृजत् । स एव सूक्ष्ममहत्तत्वाभिमानी ब्रह्मा' । तदुक्तम्—

[2]"स रमायां द्वितीये तु रूपे प्रकृतिसञ्ज्ञिते ।
वीर्यमाधत्त पुरुषो महांस्तस्मादजायत ।।' इति द्वितीयतात्पर्ये ।

सङ्कर्षणश्चानिरुद्धोदरप्रविष्टं वायुपदप्राप्तियोग्यं जीवं स्वोदरे कृत्वा स्वभार्यायां वीर्याधानपूर्वकमसृजत् । स सूत्रनामा वायुरित्युच्यते । अथ प्रद्युम्नः सङ्कर्षणप्रविष्टां वायुपत्नीं रुद्रोमे च स्वोदरे कृत्वा स्वभार्यायां वीर्याधानपूर्वकमसृजत् । सा भारतीनाम वायुपत्नी बभूव । उभे सरस्वतीभारती यमले प्रजज्ञतुः। अथ प्रद्युम्नो वासुदेवादिभिस्सह सहस्रवत्सरं स्थित्वा ततः स्वोदरे प्रविष्टान् जीवसङ्घान् कृतिद्वारा बहिर्निस्सार्य लिङ्गदेहानामेव पञ्चभूतसूक्ष्मभागैः किञ्चिदुपचयं कृत्वा अनिरुद्धाय ददौ । तदा गुणत्रयादीनां सृष्ट्यभावात् । तदुक्तम्— [3]"तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति । सोऽनिरुद्धः प्रद्युम्नदत्तान् स्वोदरे कृत्वा तदा तेषु कांश्चन तत्त्वाभिमानिनः किञ्चित् स्थूलदेहयुक्तान् चकार । कथम्भूतान्— **निर्देहकान्** ।। ईश्वरेच्छया ईश्वरेच्छया अनादितोऽनुबद्धषोडशकलात्मककवचादि[4]देहातिरिक्तदेहरहितान् पुनः कथम्भूतान् स्वकर्मसहितान् अनादितो अनुत्थितस्वस्वकर्मनिमित्तकाशेषसंस्काराः तथा अनादितोऽनुभूताशेषवस्तुविषयकाशेषसंस्कारा जडमनोगताः तदुपादानका येषां ते तथा तैश्च सहितानित्यर्थः। तदुक्तं भागवते [5]"ऊतयः कर्मवासनाः' इति । अनुव्याख्याने च—

[6]"कर्माणि तानि च पृथक्चेतनान्येव सर्वशः।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च ।।' इति ।।
[7]"वासनास्सर्ववस्तूनां अनाद्यनुभवागताः ।
सन्त्येवाशेषजीवानां अनादिमनसि स्थिताः ।।
त्रिगुणात्मकं मनोऽस्त्येव यावन्मुक्तिः सदातनम् ।
तत्रैवाशेषसंस्कारा सञ्चीयन्ते सदैव च ।।
सूक्ष्मत्वेन लये सच्च प्राकृतैरुपचीयते ।

१. भा.ता. ३-७-८ । २. भा.ता. २-६-४४ । ३. सू.भा.२-४-३ । ४. 'कवचातिरिक्त' इत्यपि पाठः दृश्यते । ५. भा. २-१०-४ । ६. अनु. ३-२-११८९ । ७. अनु. ३-२- ९७८-९८१ ।

सृष्टिकाले यदा तत्र कुत संसारसंस्थितिः ।।
संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् ।
स्वप्नकाले दर्शयति भ्रान्तिर्जाग्रत्त्वमेव हि ।।' इति च ।

वटपत्रशायी नारायणस्तु स्वोदरप्रविष्टान् पूर्वकल्पीयमुक्तसङ्घान् तथा नित्यसंसारिणश्च ब्रह्माण्डसृष्ट्यनन्तरं बहिर्निस्सार्य ये ये पूर्वं यत्र यत्र स्थिताः ते ते तत्र तत्रैव गच्छन्त्विति आज्ञापयति । तथैव वासुदेवोऽपि स्वोदरस्थान् विलिङ्गान् आविष्कृतस्वस्थलान् गच्छथ इति आज्ञापयति । तदेतदुक्तं नारदीये—

'सृष्टिकाल उपावृत्ते पुनः सर्वेश्वरो हरिः।
सृष्ट्वा ब्रह्माण्डमतुलं यद्विराड्रूपमुत्तमम् ।।
चतुर्व्यूहात्मको भूत्वा तदन्तः सर्वकारणः।
चतुर्धा व्यभजत् जीवान् यथापूर्वं व्यवस्थितान् ।।
तत्र साधनसम्पन्नान् विशिष्टान् अपरोक्षिणः।
वासुदेवः स्वोदरगान् बहिर्निस्सार्य तान् विभुः ।।
श्वेतद्वीपं शिंशुमारं दृष्ट्वा स्वेच्छाविहारिणः।
सन्तो गच्छन्त्विति प्राज्ञान् यदा चाज्ञापयत्यजः ।।
तदा मुक्ता इति प्रोक्ताः नपुराज्ञाविहीनतः ।। ' इति ।

पाञ्चरात्रे जयद्रथयामिले च—

'विरजायां कृतस्नानाः ब्रह्मणा सह सर्वशः।
त्यक्तलिङ्गास्ततः सर्वे स्वरूपेण व्यवस्थिताः ।।
ततो दृष्ट्वा शिंशुमारं श्वेतद्वीपं निरीक्ष्य च ।
विशन्ति वासुदेवाख्यं हरेः रूपं चतुर्थकम् ।।
साकं च वासुदेवेन वैकुण्ठे हरिमेधसः।
विशन्त्युपरमे वास्य यावत्सृष्टिः पुनर्भवेत् ।।
अनिरुद्धगतास्सर्वे सृज्या एवं विशन्ति हि ।।' इति ।
'त्यक्तलिङ्गाश्च ये मुक्ताः वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारादेरभावतः ।।
विनिर्गत्य पुनस्सृष्टौ वासुदेवशरीरगाः।
तदा मुक्ता इति प्रोक्तास्सञ्चारादेश्च सम्भवात् ।।' इति ।

ब्रह्माण्डपुराणे च—

'धामत्रयस्थिता मुक्ताः वटपत्रस्थशौरिणः।
कुक्षिङ्गता ध्यानपरा यावत्सर्गः पुनर्भवेत् ।।
लिङ्गभङ्गमनुप्राप्ताः पूर्णद्विषात्मकास्तथा ।
नाभेरधश्च तिष्ठन्ति दुःखमात्रस्वरूपिणः ।।

नाभेरुपरि भागे तु सृतिस्थाः सुप्तिमास्थिताः।
त्रिवर्गा अपि तिष्ठन्ति यावत्सृष्टिः पुनर्भवेत् ।। ' इति ।
'सृष्टिकाल उपावृत्ते प्रद्युम्नः पुरुषोत्तमः।
सङ्कर्षणोदरगतान् स्वोदरस्थांश्च सर्वशः ।।
अनिरुद्धोदरे चक्रे स सर्वान् चरमात्मकः।
निर्देहकान् सूक्ष्मतरदेहयुक्तान् विधाय च ।।
यथा भागं विभज्याथ तत्र तत्र न्यधाद्धरिः।
तत्र सङ्कर्षणगतं वायुं पूर्वतनं हरिः ।।
वासुदेवः स्वोदरगं कृत्वा मायामवाप्य च ।
तदा ससर्ज तनयं विरिञ्चं मायया विभुः ।।
ततः सङ्कर्षणाज्जातो जयायां सूत्रनामकः।
वायुर्बलज्ञाननेता भविष्यद्ब्रह्मनामकः ।।
सरस्वती भारती च कृतौ प्रद्युम्नतः स्त्रियौ ।
प्रजज्ञतुस्तत्र पूर्वा प्रधाना प्रकृतिर्मता ।।
श्रद्धा द्वितीयाथ तयोस्ते भार्ये सम्बभूवतुः।
विरिञ्चस्य तु सूत्रस्य यमले देवमातरौ ।।
तयोः शिवाद्यास्सञ्जाताः प्रत्येकं सूक्ष्मदेहगाः ।।
एतान् सङ्कर्षणो देवो विरिञ्चादीन् समस्तशः।
व्यूहे तृतीये व्यदधात् सूक्ष्मदेहेन संयुतान् ।।
तस्मात्सङ्ख्यानिरुद्धो चक्रे शान्त्युदरेऽथ तान् ।
सा ससर्ज गुणान् देवी सत्वादीन् हरिचोदिता ।।
तेभ्यो महत्तत्वतनुं विरिञ्चं स्थूलदेहगम् ।
ससृजेऽथ पुनर्देवांस्तत्र देवाः प्रजज्ञिरे ।।'

इत्येतानि वचनानि प्रकाशिकाकारैः [1]*भावचन्द्रिकायाम्* उदाहृतानीति ज्ञेयम् । ।। ३-९ ।।

**[2]दृष्ट्वा स चेतनगणान् जठरे शयाना-**
**नानन्दमात्रवपुषः सृतिविप्रमुक्तान् ।**
**ध्यानं गतान्सृतिगतांश्च सुषुप्तिसंस्थान्**
**ब्रह्मादिकान्कलिपरान्मनुजांस्तथैक्षत् ।। ४ ।।**

---

१. कर्णाटककृष्णाचार्यविरचिततात्पर्यनिर्णयटिप्पणी । २. सोऽपश्यत्स्वोदरे सर्वान् जीवसङ्घाननेकशः । सृज्यान्मुक्तानमून्सर्वान् लिङ्गभङ्गमुपागतान् । सुप्तासृतिस्थाः सर्वेऽपि तमोगा अपि सर्वशः । पूर्वकल्पे लिङ्गभङ्गमापन्ना विधिपूर्वकाः । मानवान्ताः जीवकोशा जीवन्मुक्ताश्च मुक्तिगाः । पूर्वकल्पे विमुक्ताश्च ब्रह्माद्या मानवान्तकाः । ध्यानसंस्था हि तिष्ठन्ति विष्णुकुक्षिगता अपि ।। इति (स्कान्दे, वैष्णवखण्डे, वैशाखमाहात्म्ये २०-४१-४४)

**व्यास— ईक्षा बभूवेति** भगवतो जगत्सृष्टौ निमित्तकारणत्व सूचितम् । तेन च परिणामिकारणत्वं चेतनस्यायुक्तं निवारयति । कुलालादेः परिणामिकारणत्वस्यादर्शनात् । विवर्तकारणत्वं तु ब्रह्मणोऽविद्याऽयोगादेवायुक्तम् । सृज्यासृज्यं विवेचयन्नीक्षायां निमित्तमाह— **सः जठरे शयानान् दृष्ट्वेति** ।। द्विविधान् चेतनगणान् दृष्ट्वैव ऐक्षदिति सम्बन्धः। द्विविधाः क इत्यत उक्तम्— **सृतिविप्रमुक्तान् सृतिगतांश्चेति** ।। सृतिविप्रमुक्तान् द्विविधान् आनन्दमात्रवपुषो ब्रह्मादिकान् दुःखमात्रवपुषः कलिपरानिति। सृतिगतांश्च त्रिविधान् ब्रह्मादिकान् कलिपरान् तथा मनुजानिति । मनुजान् नित्यसंसारिणः। तत्र ब्रह्मादीन् विशिनष्टि— **ध्यानं गतानिति** ।। इतरेषां विशेषणं **सुषुप्तीति** ।। ४ ।।

**वादि**— इदानीं भगवदुदरस्थचेतनानामवस्थादर्शनप्रकारं वर्णयति— **दृष्ट्वेति** ।। मुक्ताः संसारिण इति द्विविधाश्चेतनगणाः। तत्र लिङ्गदेहान्मुक्ता एव मुक्ता इत्युच्यन्ते । तेऽपि उत्तममध्यमाधमभेदेन त्रिविधाः। तत्र स्वरूपभूतसुखदुःखमिश्रमध्यमानां स्वरूपभूतदुःखमात्रभरिताधमानां चावस्थाद्वयं दुरवस्थारूपतया हीनत्वेन भगवताऽप्युपेक्षयैव दृष्टमिति सूचनाय तथेति सामान्यतो वक्ष्यन् तदतिरिक्तमुक्तानां अमुक्तोत्तममध्यमाधमजीवानां चावस्थाद्वयं विविच्य दर्शयति— **आनन्दमात्रवपुष इत्यादिना** ।। ब्रह्मादिकान् इत्यत्र ब्रह्मपदेन चतुर्मुखब्रह्मा नोच्यते । तस्य परान्तकाले मुक्तत्वेन मुक्तगणेष्वेवान्तर्भावात् । अतो भाविब्रह्मा वायुरेवात्रोच्यते । तस्यापि प्रलये 'वायुर्वाव नित्यः' इति श्रुतौ नित्यानित्येभ्य आकाशादिभ्यो विशिष्य नित्यत्वघटनाय '[1]स्वरूपातिरिक्त- ज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यतोच्यत' इति टीकाकृतैव बाह्यज्ञानस्यापि नित्यत्वकथनात् न सुप्तिरुचिता । अतोऽतद्गुणसंविज्ञानबहुव्रीहिणा ब्रह्मादिपदेन रुद्राद्युत्तमजीवा एव गृह्यन्ते । योजना तु, स जठरे शयानान् चेतनगणान् दृष्ट्वा सामान्यतो दृष्ट्वा पुनः सृतेर्विप्रमुक्तान् विशेषेण प्रमुक्तान् उत्तममुक्तान् । अधममध्यममुक्तानां लिङ्गदेहरूपसंसृतेर्मुक्तत्वमात्रसद्भावेऽपि स्वरूपदुःखव्यञ्जकभर्जनतर्जनादिभ्यो मोक्षाभावान्न विप्रमुक्तत्वमिति भावः। आनन्दमात्रवपुषः ध्यानं गतानैक्षत् । सृतिगतान् ब्रह्मादिकान् सज्जीवान् कलिपरान् अधममनुष्यमारभ्य कलिपरान् कल्यवसानान् अधमजीवान् मनुजान् मध्यमजीवांश्च सुषुप्तिसंस्थानैक्षत् । इतोऽतिरिक्तान् मध्यममुक्तानधममुक्तांश्च तथा यथा सन्ति तथैक्षदिति ।। ४ ।।

**स्रङ्क**— सृज्यसृष्टौ नारायणस्य ईक्षा बभूवेत्युक्तम् । तस्य कथमीक्षा बभूवेत्याह— **दृष्ट्वेति** ।। चेतनगणान् दृष्ट्वा तानेव चेतनगणान् स्रक्ष्ये हीत्यैक्षत् अचिन्तयदिति सार्धश्लोकस्यैकान्वयः। मुक्तामुक्तभेदेन चेतनगणान् द्विधा विभज्य दर्शयति— **आनन्देत्यादिना** ।। आनन्दमात्रवपुषः सृतिविप्रमुक्तान् ध्यानङ्गतानित्यनेन मुक्तगणाः। सृतिगतांश्च सुषुप्तिसंस्थानित्यनेनाऽमुक्तगणा दर्शिता इत्यर्थः ।। ४ ।।

**वरद**— सृज्यासृज्ये विवेचयन् ईक्षाजनने इत्थंभावमाह— **दृष्ट्वेति** ।। स नारायणो जठरे स्वोदरे शयानान् स्थितान् चेतनगणान् चेतनानां जीवानां गणान् दृष्ट्वा सृज्यान् स्रक्ष्ये इत्यैक्षदिति सम्बन्धः। तत्र मुक्तामुक्तप्रभेदेन द्विधा विद्यमानांश्चेतनगणान्दर्शयति— **आनन्दमात्रवपुष इत्यादिना** ।। तत्र सृतेः संसाराद्विशेषेण प्रमुक्ताः मुक्ता इति यावत्, तान् । तेषां विशेषणं आनन्दमात्रवपुषः। आनन्दमात्रं आनन्द एव वपुः देहः येषां ते तथा

---

१. तत्त्वप्रकाशिका २-३-८ ।

तान् । पुनः कथम्भूतान् **ध्यानं गतान्** स्वस्वयोग्यभगवद्रूपविशेषध्याने रतानित्यर्थः। ब्रह्मादिकानित्येतदत्रापि सम्बध्यते । एवं दुःखमात्रवपुषः आविर्भूतस्वरूपद्वेषैकरतमनस्कान् कलिपरानित्यपि द्रष्टव्यम् । अनेन द्विविधेषु सृतिमुक्ताः प्रदर्शिताः। सृतिगतान् संसारयोग्यान् अमुक्तानिति यावत्। तेषां विशेषणं सुषुप्तिसंस्थानिति सुप्तानिति यावत् । तत्रापि ब्रह्मादिकान् कलिपरान् मनुजानिति सम्बध्यते । मनुजशब्देन नित्यसंसारिणो विवक्षिताः। मनुष्योत्तमानां ब्रह्मादिकानित्यादिशब्देन गृहीतत्वात् तथा मनुष्याधमानां कलिपरानित्यनेन गृहीतत्वात् । कलिः परो दुःखाधिको येषां द्वेषिणां मनुष्याधमानां ते तथा तानित्यर्थः। ननु सृतिगतानां कल्यादीनां सुषुप्तिसंस्थत्वेऽपि ब्रह्मादीनां तथात्वे किं प्रमाणमिति चेत् न ।

[१]'न ब्रह्मा न शिवश्चासीत् नैवान्यच्च मिषत् क्वचित् ।
सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।।'

इत्याचार्यैरन्यत्र प्रमाणस्योदाहृतत्वात् । तर्ह्यनेनैव प्रमाणेन मुक्तब्रह्मादिकानां रमायाश्च सुप्तत्वं प्राप्तमिति नाशङ्कनीयम् ।

[२]'असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात्।
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।।
नारायणो न चान्योऽस्ति पूर्णोन्मीलगुणात्मकः ।।'

इत्यादिप्रमाणोदाहरणेन भगवत्पादैरन्यत्र तच्छङ्कायाः परिहृतत्वादित्यलं विस्तरेण ।। ४ ।।

**जना**—उक्तामीक्षां विवरणपूर्वकं श्लोकद्वयेन आह— **दृष्ट्वेति** ।। स नारायणः जठरे शयानान् विद्यमानान् । द्विविधान् चेतनगणान् मुक्तान् संसारिणश्च दृष्ट्वा । चेतनगणेषु संसारिणः चेतनगणान् स्रक्ष्ये इति ऐक्षदिति सम्बन्धः। तत्र मुक्तान् विशिनष्टि— **आनन्देति** ।। ते द्विविधाः विलिङ्गाः आनन्दानुभविनः अन्ये विलिङ्गमात्राः। उभयेऽपि आनन्दमात्रवपुषः ध्यानंगताश्च । द्विविधेभ्यो मुक्तेभ्योऽन्ये मुक्ता विलिङ्गा दुःखमात्रवपुषोऽपि ज्ञेयाः। अमुक्तान् विशिनष्टि— **सृतिगतान् सुषुप्तिसंस्थानिति** ।। ते त्रिविधाः । तिस्रो विधाः दर्शयति— **ब्रह्मादिकान् कलिपरान् मनुजानिति** ।। ब्रह्मा आदिः एषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः। भाविब्रह्मत्वेन ब्रह्मशब्देन वायुरपि ग्राह्यः।

'....................यदा चाज्ञापयेद्धरिः।
तदा मुक्ता इति प्रोक्ता न पुराज्ञा विहीनतः ।।' इति ।

तथा

'त्यक्तलिङ्गाश्च ये मुक्ता वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारादेरभावतः ।।'

इति वचनाद् अमुक्तब्रह्मणः सत्वं ज्ञेयम् । यद्वा भाविब्रह्मत्वेन ब्रह्मशब्देन वायुरेव ग्राह्यः रुद्राद्या नेत्यर्थः। ब्रह्मा आदिरुत्पादको एषामिति । वायुजत्वं रुद्रादीनामप्यस्ति। [३]'ब्रह्मादयो ब्रह्मपुत्राः' इति चतुर्थस्कन्धतात्पर्यात् । यद्वा ब्रह्मशब्देन भाविब्रह्माणो ऋजवो ग्राह्याः। तत्र ब्रह्माण ऋजव आदयो येषामित्यर्थः। तथा 'त्वदाज्ञयैवाखिल–

१. ऐ.भा. २प्र.-३अ. । २. ऐ.भा. २प्र.-३अ. । ३. भा.ता. ४-४-१६ ।

मम्बुजोद्भवः वितेनिरेऽग्र्याश्च रमा च येऽन्ये' इति तेषु ब्रह्मशब्दापरपर्यायाम्बुजोद्भवशब्दप्रयोगात् । 'शतं परानभिपश्यैव दैवं ब्रह्मा चरदुश्चरं यत्तपोऽग्र्यं' इति ब्रह्मशब्दप्रयोगाच्च । अथवा ब्रह्मशब्देन बृहस्पतिरपि ग्राह्यः। आदिपदेन तदुत्तमाः केचिदवराः सर्वे ग्राह्याः । नामतः तद्ग्रहणं तु देवपुरोहितत्वात् । इदमपि तृतीयतात्पर्य उक्तम् । तथाहि। 'यस्मिन् ब्रह्मा राजनि पूर्व एति' इति श्रुतेः। [1]''बृहस्पतिः पुरोगाश्च ब्रह्मा च ब्रह्मणस्पतिः' इत्यभिधानात्' इति । [2]''ब्रह्मापि तत्र जानाति ईषत्सर्वोऽपि जानति' इत्यत्र जयतीर्थैः तथा व्याख्याततत्वाच्च । यत्त्वैतरेयभाष्ये उक्तं 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिका' इति । तथा 'अंशेन सुप्तो ब्रह्मा तु' इति तात्पर्यं च तत् 'सुप्ते देवे जनार्दने' इतिवत् मुद्रितनेत्रत्वं ग्राह्यम् । [3]''तावत्त्वे च निशा तात यत्र मील्यति विश्वदृक्' इति तृतीयस्कन्धात्।

[4]''सुप्तिस्तु प्रकृतेः प्रोक्ता अतीवभगवद्रतिः।
अनास्थान्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनम् ।।' इति ।

व्योमसंहितावाक्यात् विष्णोश्चक्षुर्निमीलने विशेषो ज्ञेयः। अथवा स्वप्नतुल्यावस्थावत्त्वं सुप्तिरिति व्याख्येयम् । स्वप्नावस्थासाम्यं च मनोवृत्तेः सत्त्वात् । बाह्यव्यापाराभावाच्च । कथमन्यथा मनोवृत्तेरनादिनित्यत्वम् । उक्तं च 'प्रलयेऽपि प्रतिभातपरावर' इति । तत्वप्रकाशिकायामपि 'स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण' इति । ननु प्रलये ब्रह्ममनोवृत्तेः कथं सृष्टिः लयकालादित्वादिति चेन्न । [5]''य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति श्रुतेः सृष्टेः सत्त्वात् । न चेयं स्वप्नपरा न प्रलयपरेति वाच्यम् । एतद्भाष्ये च प्रलयादिष्विति व्याख्यतत्त्वात् । प्रलयेऽपि केषाञ्चित्सुप्तिशब्दोक्तस्वप्नावस्थासमानावस्थायाः विद्यमानत्वात् । 'अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्यय' इति तात्पर्यम् । अथवा ब्रह्मादिराद्यो एषामिति तद्गुणसंविज्ञानः। ब्रह्मणि सुप्तिशब्देन स्वप्नो ग्राह्यः। सकृत्प्रयुक्तस्यानेकार्थता तु बाधकस्य सत्त्वात् सोढव्या । उदराजस्थितिः स्थानविशेषकथनपूर्वकमुक्ता ब्रह्माण्डपुराणे

'धामत्रयस्थिता मुक्ता वटपत्रस्थशौरिणः।
कुक्षिङ्गता ध्यानयुता यावत्सृष्टिर्भवेत्पुनः।।
तावत्तिष्ठन्ति चानन्दाः सृष्टौ यान्ति स्वकं स्थलम् ।
तमःप्राप्तास्तामसाश्च स्वरूपेण व्यवस्थिताः।।
लिङ्गभङ्गमनुप्राप्ताः पूर्णद्वेषात्मकाः सदा ।
नाभेरधश्च तिष्ठन्ति दुःखमात्रस्वरूपिणः।।
नाभेरुपरिभागे तु सृतिस्थाः सुप्तिमागताः।
त्रिवर्गा अपि तिष्ठन्ति यावत्सर्गः पुनर्भवेत् ।।
नित्यसंसारिणः सर्वे सृष्टौ सृष्टौ भवन्ति च ।
न तेषां संसृतेर्नाशः क्वचित् क्वापि भविष्यति ।।' इति ।। ४ ।।

**ताप्र**— ईक्षाविषयं विवृण्वन् ईक्षानन्तरभाविव्यापारमाह— **दृष्ट्वेति** ।। द्विविधान् चेतनगणान् दृष्ट्वा प्रेक्ष्य ऐक्षत इत्थं करिष्य इत्यचिन्तयदित्यर्थः। द्विविधाः क इत्यत उक्तम्— **सृतिविप्रमुक्तान् सृतिगतांश्चेति** ।।

१. भा.ता. ३-२७-७ । २. गी.भा. उपोद्घातः । ३. भा. ३-१२-२२ । ४. भा. ३-६-२ । ५. का.उ. २अ.-२ब्रा.-८मं. ।

सृतिविप्रमुक्तान् द्विविधान् आनन्दामात्रवपुषो ध्यानंगतान् ब्रह्मादिकान् दुःखमात्रवपुषः कलिपरानिति। सृतिगतांश्च त्रिविधान् सुषुप्तिसंस्थान् ब्रह्मादिकान् कलिपरान् नित्यसंसारिणश्चेति । सुषुप्तिसंस्थान् ब्रह्मादिकानित्यत्र ब्रह्मपदेन भाविगत्या वायुरुच्यते । ब्रह्मणो मुक्तत्वात् । ननु वायोरपि कथं सुप्तिः।

[१]"एवं प्रलयकालेऽपि प्रतिभातपरावरः।
मुख्यवायुर्नित्यसमः................ ।।'

इत्यनुव्याख्याने स्वरूपातिरिक्तप्रातिभज्ञानस्याप्यानुपप्लवादाकाशदेवतातो विशेषो युज्यते' इति सुधायां च सुप्त्यभावोक्तेरिति चेत् । अत्र ***व्यासतीर्थीये***—'सृतिगतांश्च त्रिविधान् ब्रह्मादिकान् कलिपरान् मनुजानिति । तत्र ब्रह्मादीन् विशिनष्टि— ध्यानं गतानिति ।। इतरेषां विशेषणं सुषुप्तिसंस्थानिति' इति सुषुप्तिसंस्थत्वविशेषणं ब्रह्माद्यन्यसंसारिविशेषणमित्युक्तम् । ***वादिराजतीर्थीये तु*** - 'ब्रह्मादिकानित्यत्रातद्गुणसंविज्ञानबहुव्रीहिः। तथा च रुद्रादिजीवानित्यर्थ' इत्युक्तम् । ***काठकवेदेशीये तु***-[२]"ब्रह्मादीनां सुप्तिरित्युक्तावस्था अस्मत्स्वप्नावस्थासदृशी, मनोवृत्तेः सद्भावात्, बहिर्व्यापाराभावाच्च । एवञ्च स्वप्नसुषुप्त्युभयसाधारणसुप्तिशब्दस्य गौण्या वृत्त्या प्रयोगः। उक्तं च बृहदारण्यकभाष्ये— 'स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तम्' इति । प्रकाशिकायां तु- 'निद्रामुद्राविलासितत्वमेव सुप्तिपदार्थ इत्युक्तम्' इति । अपरे तु-'अपरोक्षरहिता ऋजवोऽत्र ब्रह्मपदेन विवक्षिता' इत्याहुः। गुरवस्तु 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः' इत्यादिबहुप्रमाणबलाद्वायोरपि भगवदीक्षणक्षणे सुप्तिरुपपद्यते । प्रलये प्रतिभातपरावरत्वमप्येवं सत्यविरुद्धम् । सुप्तिस्तु केवलं भगवदिच्छयैवेति वर्णयन्ति ।। ४ ।।

**जम्बु**— उक्तामीक्षां विवरणपूर्वकं श्लोकद्वयेनाह— **दृष्ट्वेति** ।। स नारायणः जठरे स्वोदरे शयानान् विद्यमानान् द्विविधान् चेतनगणान् चेतनानां जीवानां गणान् समूहान् मुक्तान्संसारिणश्च दृष्ट्वा चेतनगणान् इत्यैक्षदिति सम्बन्धः। तत्र मुक्तान्विशिनष्टि— **आनन्देति** ।। ते द्विविधाः। विलिङ्गाः आनन्दानुभविनः अन्ये विलिङ्गमात्राः। उभयेऽपि आनन्दमात्रवपुषः ध्यानंगतांश्च द्विविधेभ्ये मुक्तेभ्यो अन्ये मुक्ता विलिङ्गाः। दुःखमात्रवपुषोऽपि ज्ञेयाः। अमुक्तान् विशिनष्टि— **सृतिगतान्सुषुप्तिसंस्थानिति** ।। ते त्रिविधाः। त्रिस्रो विधाः दर्शयति— **ब्रह्मादिकान् कलिपरान् मनुजानिति** ।। ब्रह्मा आदिः येषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः। भाविब्रह्मत्वेन ब्रह्मशब्देन वायुरपि ग्राह्यः।

'.....................यदा चाज्ञापयद्धरिः।
तदा मुक्ताः इति प्रोक्ता नपुराज्ञा विहीनतः ।।' इति ।

तथा

'एकलिङ्गाश्च ये प्रोक्ता वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारादेरभावातः ।।'

इति वचनादमुक्तब्रह्मणस्सत्त्वं ज्ञेयम् । यद्वा भाविब्रह्मत्वेन ब्रह्मशब्देन वायुरेव ग्राह्यः रुद्राद्याः नेत्यर्थः। ब्रह्मा आदिरुत्पादको येषामिति । वायुजत्वं रुद्रस्याप्यस्ति । 'ब्रह्मादयो ब्रह्मपुत्रा' इति चतुर्थस्कन्धतात्पर्यात् । यद्वा

---

१. अनु. २-३-८८२ । २. का.भा.वे. (२-४-१) । ३. बृ.भा. ६-३-१४, ज्योतिर्ब्राह्मणम् ।

ब्रह्मशब्देन भाविब्रह्माणो ऋजवो ग्राह्याः। तेन ब्रह्माण ऋजव आदयो येषामित्यर्थः। 'त्वदाज्ञयैवाखिलं अम्भोजोद्भवः वितेनिरेऽग्र्याश्च रमा च येऽन्ये' इति ब्रह्मशब्दपर्यायाम्बुजोद्भवशब्दप्रयोगात् 'शतं परान् अभिपश्यैव दैवं ब्रह्माचरद्दुश्चरं यत्तपोऽग्र्यम्' इति ब्रह्मशब्दप्रयोगाच्च । अथवा ब्रह्मशब्देन बृहस्पतिर्ग्राह्यः। आदिपदेन उत्तमाः केचित् तदवराः सर्वे ग्राह्याः। नामतः तद्ग्रहणं तु देवपुरोहितत्वात् । इदमपि तृतीयतात्पर्येऽप्युक्तम् । तथा हि 'बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिः' इति अभिधानाच्च । 'ब्रह्मापि तत्र जानाति ईषत्सर्वोऽपि जानते' इत्यत्र जयतीर्थाचार्यैः तथा व्याख्यातत्वाच्च । यद्वा ऐतरेयभाष्येक्तं 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः' इति । तथा 'अंशेन सुप्तो ब्रह्मा तु' इति तात्पर्यं च । 'सुप्ते देवे जनार्दने' इतिवत् मुद्रितनेत्रत्वं ग्राह्यम् ।

'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीवभगवद्रतिः।
अनास्थान्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनम् ।।'

इति व्योमसंहितावाक्यात् विष्णोश्चक्षुर्निमीलनविशेषो ज्ञेयः। [1]'अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्ययः' इति तात्पर्यम् । अथवा ब्रह्मा आदिः आद्यो येषामिति तद्गुणसंविज्ञानम् । ब्रह्मणि सुप्तिशब्देन स्वप्नो ग्राह्यः। सकृत्प्रयुक्तस्यानेकार्थता तु बाधकस्य सत्त्वात् सोढव्या । उदरावस्थितिः स्थानविशेषकथनपूर्वकमुक्ता ब्रह्माण्डपुराणे–

'धामत्रयस्थिता मुक्ता वटपत्रस्य शौरिणः ।
कुक्षिस्थिता ध्यानयुता यावत् सृष्टिर्भवेत् पुनः।।
तावत्तिष्ठन्ति चानन्दाः सृष्टौ यान्ति स्वकं स्थलम् ।
तमःप्राप्तास्तामसाश्च स्वरूपेण व्यवस्थिताः।।
लिङ्गभङ्गमनुप्राप्ताः पूर्णद्वेषात्मकाः सदा ।
नाभेरधस्तात्तिष्ठन्ति दुःखमात्रस्वरूपिणः।।
नाभेरुपरि भागे तु सृतिस्थाः सुप्तिमागताः।
त्रिवर्गा अपि तिष्ठन्ति यावत् सर्गः पुनर्भवेत् ।।
नित्यसंसारिणः सर्वे सृष्टौ सृष्टौ भवन्ति च ।
न तेषां संसृतेर्नाशः क्वचित् क्वापि भविष्यति ।।' इति **जनार्दनभट्टीये** ।

सृज्यासृज्यौ विवेचयन् ईक्षाजनने इत्थम्भावमाह— **दृष्ट्वेति** ।। सृतिविप्रमुक्तान् सृतेः संसारात् विशेषेण प्रमुक्तान् मुक्तानिति । ध्यानं गतान् । स्वस्वयोग्यभगवद्रूपविशेषध्यानरतानित्यर्थः। ब्रह्मादिकानित्येतदत्रापि सम्बद्ध्यते । दुःखमात्रवपुषः आविर्भूतस्वरूपद्वैषैकतरमनस्कान् कलिपरान् इत्यपि द्रष्टव्यम् । कलिः परः दुःखाधिको येषां ते तथा मनुष्याधमाः तानित्यर्थः। भगवदुदरस्थजनानां अवस्थानदर्शनप्रकारं वर्णयति— **दृष्ट्वेति** ।। मुक्ताः संसारिण इति द्विविधान् चेतनगणान् । तत्र लिङ्गदेहमुक्ता एव मुक्ता इत्युच्यन्ते । तेऽपि उत्तममध्यमाधमभेदेन त्रिविधाः। तत्र स्वरूपभूतसुखदुःखमिश्रं मध्यमानां स्वरूपभूतदुःखमात्रभरिताधमानां चावस्थाद्वयं दुरवस्थारूपतया हीनत्वेन भगवताप्युपेक्षयैव दृष्टमिति सूचनायाह— **तथा इति** ।। सामान्यतो वक्ष्यन् तदतिरिक्तमुक्तानां अमुक्तोत्तममध्यमाधमजीवानां च अवस्थाद्वयं विविच्य दर्शयति— **आनन्दमात्रवपुष इत्यादिना** ।। ब्रह्मादिकानित्यत्र ब्रह्मपदेन चतुर्मुखब्रह्मा नोच्यते । तस्य परान्तकाले मुक्तगणेष्वेवान्तर्भावात् । अतः भाविब्रह्मा

१. भा.ता. ३-२८-५ ।

वायुरेवात्रोच्यते । तस्यापि प्रलये 'वायुर्वा व नित्य' इति श्रुतौ नित्यानित्येभ्यः आकाशादिभ्यः विशिष्य द्योतनाय 'स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यत्वमुच्यत' इति टीकाकृतैव बाह्यज्ञानस्यापि नित्यत्वकथनात्र सुप्तिरुचिता । अतोऽतद्गुणसंविज्ञानबहुव्रीहिणा ब्रह्मादिपदेन रुद्राद्युत्तमजीवा एव गृह्यन्ते । योजना तु जठरे शयानान् चेतनगणान् दृष्ट्वा सामान्यतो दृष्ट्वा पुनः सृतेः विप्रमुक्तान् उत्तममुक्तान् अधममध्यममुक्तानां लिङ्गदेहरूपसृतेः मुक्तत्वमात्रसद्भावेऽपि स्वरूपदुःखव्यञ्जकभर्जनतर्जनादिभ्यो मोक्षाभावात् न विप्रमुक्तत्वमिति भावः। आनन्दामात्रवपुषः ध्यानंगतानैक्षत । सृतिगतान् ब्रह्मादिकान् सज्जीवान् कलिपरान् अधममनुष्यमारभ्य कलिपरान् कल्यवसानान् अधमजीवान् मनुजान् मध्यमजीवांश्च सुषुप्तिसंस्थानैक्षत् । इतोऽतिरिक्तान् मध्यममुक्तानधममुक्तांश्च तथा यथा सन्ति तथैक्षदिति । इति **वादिराजीये** । ब्रह्मादिकानित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः। अत्र ब्रह्मशब्देन सरस्वतीभारत्यौ ग्राह्ये । तयोरपि वृत्तिज्ञानविलोपाभावात् 'सुप्ते देवे जनार्दने' इतिवत् निद्रामुद्रितत्वं सुप्तिरित्युपपत्तेः' इति **भावचन्द्रिकायाम्** । अपरोक्षरहिता ऋजवो ब्रह्मपदेन विवक्षिताः। अन्ये तु 'सुप्तास्तत्र' इत्यादिबहुप्रमाणबलात् द्वयोरपि भगवदीक्षणक्षणे सुप्तिरुपपद्यते। प्रलये प्रतिभातपरावरत्वमपि एवं सत्यविरुद्धम्। सुप्तिस्तु केवलं भगवदिच्छया इति गुरवः' इति **श्रीनिवासभट्टीये** ।। ४ ।।

**भारतश्री**— मनुजा नित्यसंसारिणः ।। ४ ।।

**स्रक्ष्ये हि चेतनगणान् सुखदुःखमध्य-**
**सम्प्राप्तये तनुभृतां विहृतिं ममेच्छन् ।**
**[1]सोऽयं विहार इह मे तनुभृत्स्वभाव-**
**सम्भूतये भवति भूतिकृदेव भूत्याः ।। ५ ।।**

**व्यास**— ईक्षाप्रकारं विशदयन् 'भूत्यै निज' इत्युक्तं प्रयोजनं विशदमाह— **स्रक्ष्ये इति** ।। स्रक्ष्ये देहाद्युपेतान् करिष्ये । मध्यं सुखदुःखसम्भेदः। तथा चोत्तमनीचमध्यमेभ्यो विभागः सुगमः। अत्र सुखादीति मोक्षसमस्वर्गादीनि। कथं देहादिसृष्ट्या सुखादिप्राप्तिरित्यत उक्तम्— **सोऽयमिति** ।। इह सृष्टौ स्वभावः साधुत्वादिः। सम्भूतिराविर्भावः। प्रयोजनान्तरमुक्तम्— **भूतिकृदिति** ।। भूत्याः श्रियः पुत्रपौत्रसम्पादकत्वेन भूतिकृत् ।। ५ ।।

**वादि**— अधुना सृष्ट्यनुकूलं भगवतः सङ्कल्पमाह— **स्रक्ष्य इति** ।। सुखं केवलस्वरूपभूतसुखं दुःखं केवलस्वरूपभूतदुःखं मध्यं स्वरूपभूतदुःखमिश्रसुखं तेषां सम्प्राप्तये निरोधकलिङ्गदेहभङ्गेन सम्यक् प्राप्तये । गत्यर्थानां ज्ञानार्थत्वात् अनुभवाय । तनुभृत्स्वभावसम्भूतये तनुभृतां स्वभावः त्रिविधस्वभावः तस्य सम्भूतये

१. सोऽयं विहारेति श्लोकार्धं विशमपदवाक्यार्थविवृतौ टिप्पणीकारैरेवं विवृतम्। शे-अनेन तनुभृच्छब्दो योग्यजनपरः। स्वभावशब्दश्च स्वस्य भावो धर्म इति स्वगुणपरः, सम्भूतिशब्दश्च ज्ञानार्थ इति आचार्यवाक्ययोजना। परि-तनुभृतां साधूनां स्वस्य भगवतः भावानां गुणानां सम्भूतये ज्ञानाय। श्री- तनुभृतां योग्यानां पुंसां स्वस्य स्वतन्त्रस्य मम ये भावाः गुणास्तेषां सम्भूतये ज्ञानायेति यावत् ।

सम्यग्भूतिरनुभूतिस्तस्यै । एवं चोत्तमाधमजीवयोरिव मध्यमानामपि सांसारिकानित्यसुखदुःखयोः स्वभावत्वायोगात् स्वभावभूतस्वरूपसुखदुःखाभिव्यक्तिरपि कथं न वाच्येति ।। ५ ।।

**सङ्क**— मे सोऽयं विहारः भूत्याः लक्ष्म्याः भूतिकृदैश्वर्यकृदित्यर्थः ।। ५ ।।

**वरद**— कथमैक्षत इत्यतः तत्प्रकारमाह— **स्रक्ष्ये हीति** ।। मम विहृतिं मदीयां क्रीडां इच्छन् अहं चेतनगणान् स्रक्ष्ये । कस्मै प्रयोजनायेत्यतो— **भूत्यै निजेत्युक्तम्** ।। परप्रयोजनं विशदयति— **तनुभृतां सुखदुःखमध्यसम्प्राप्तय इति** ।। सृष्टौ सत्यां स्थूलदेहप्राप्त्या त्रिविधानां जीवानां सुखप्राप्तये दुःखप्राप्तये सुखदुःखसम्भेदरूपमध्यप्राप्तये चेत्यर्थः। तस्मात् सोऽयं विहार इह म इति इह सृष्ट्यादिविषये मम सेऽयं क्रीडा तनुभृत्स्वभावसम्भूतये तनुभृतां जीवानां स्वभावः साधुत्वादिः सुखदुःखमध्यसम्प्राप्तिहेतुभूतः तस्य सम्भूतये प्रादुर्भावाय भवतीत्यर्थः। न केवलमेतावत् । भूत्याः लक्ष्म्याः भूतिकृत् पुत्रपौत्रसम्पादकत्वे न ऐश्वर्यकृद्भवतीत्यर्थः ।। ५ ।।

**जना**— प्रयोजनमाह— **सुखेति** ।। तनुभृतां ब्रह्मादीनां सुखं दुःखं मध्यं सुखदुःखं तत्प्राप्तये । यद्वा सुखदुःखमध्येति तज्जनकं स्थानं लक्ष्यते । स्वर्गनरकभूसम्प्राप्तये संसारप्राप्तय इत्यर्थः। स्थानप्राप्तेः संसारत्वमुक्तं अनुव्याख्याने

[१]"चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च ।
संसारस्त्रिविधस्तत्र स्वर्गो मध्यस्तथाधमः ।।
मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथापरम् ।
नित्यमुक्तमिति ज्ञेयं साधनं संसृतावपि ।।
काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चयः।
द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम् ।।' इति पैङ्गिश्रुतेः' इति ।

किं कुर्वन्मे मम रूपाणां विहृतिं विहरणमग्निविहरणवत् । सिद्धस्य स्थानविशेषे स्थापनमिच्छन्प्रवेशं कुर्वन्नित्यर्थः।

[२]"ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ।
एवं सृष्ट्वा स्वभूतानि स्थविष्ठैः पञ्चधातुभिः ।
एकधा दशधात्मानं विभजन् जुषते गुणान् ।।'

इत्येकादशस्कन्धवाक्यात् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेश्च।

[३]"सृष्ट्वा जगदिदं सर्वं नियामकतयास्य तु ।
बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत्'

इति तैत्तिरीयभाष्ये च । यद्वा विहृतिं क्रीडामिच्छन्

[४]'.........................क्रीडार्थं तु विपश्चितः।
सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः ।।'

---

१. अनु. ३-४-१६२४-१६२७ । २. भा. ११-३-३ । ३. तै.भा. ब्रह्मवल्ली ११ । ४. मां.भा.-१अ.-१खं.-१५ ।

इति माण्डूकभाष्ये । तत्प्रयोजनमाह— **स इति** ।। सोऽयं मे विहार इह संसारे तनुभृतां स्वभावस्य सम्भूतये योग्यानां स्वगुणज्ञानार्थं भवति । अयोग्यानां द्वेषादिजननाय भवति । नित्यसंसारिणां तूदासीनत्वाय भवति । नैतावन्मात्रमपि तु भूत्याः भूतिनियम्यप्रकृतेः नियामकलक्ष्म्या अपि भूतिकृत् । महदादिरूपेण बहुत्वकृत् । नियामकानेकरूपकृदेव च भवति । तदुक्तं सुधायां [1]"तदनेन पारमेश्वरी सृष्टिः योग्यानां स्वगुणज्ञानार्था इत्युक्तं भवति' इति । [2]"आत्मकृतेः परिणामात्' इति सूत्रे भाष्ये च 'प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामाकत्वेन तत्र स्थित्वाऽऽत्मनो बहुधा करणात्' इति । यद्वा तनुभृतां स्वभावसम्भूतये सात्त्विकत्वादिप्राकट्याय लक्ष्म्याः पुत्रपौत्रादिभूतिकृदेव भवतीति ।। ५ ।।

**ताम्र**— चिन्ताप्रकारं वदन् भूत्यै निजाश्रितजनस्येतद्विवृणोति— **स्रक्ष्य इति** ।। अचेतनसृष्टेरपि चेतनसृष्ट्याद्युपयोगित्वाच्चेतनगणानित्युक्तम् । कस्मै प्रयोजनाय सृजतीत्यत उक्तम्— **मम विहृतिमिति** ।। वासुदेवादिरूपैः रामकृष्णादिरूपैश्च जगत्सर्जनादिरावणहननादिक्रीडामिच्छन् स्रक्ष्य इत्यर्थः। इयं च क्रीडा न आलस्यपरिहारार्थतयापेक्ष्यते । किन्तु स्वस्य केवलं स्वभावभूतत्वेन प्रयोजनानापादिकाऽपि परप्रयोजनायेत्याह— **सुखेति** ।। तनुभृतां सुखादिप्राप्तये मम क्रीडामिच्छन् स्रक्ष्य इत्यर्थः। क्रीडायाः सुखादिप्रापकत्वे तदर्थमपेक्ष्यत्वं स्यात् तदेव कुत इत्यतस्तन्निर्धारयन् स्वक्रीडायाः सुखादिप्रापकत्वेनैव वैषम्यादिकं स्यादित्याशङ्कां परिहरन् तवालस्यपरिहारार्थापि किं न स्यादित्यतः तद्व्यावर्तयन् परप्रयोजनान्तरमप्याह— **सोऽयमिति** ।। सोऽयमिह जगद्विषये सर्जनादिरूपो विहारस्तु तनुभृतां जीवानामेव स्वभावसम्भूतयेऽभिव्यक्तये भवति । न मम तेन यत्किञ्चित्प्रयोजनम् । न च वैषम्याद्यापत्तिः। सुखादेस्तत्तत्स्वभावत्वेन योग्यतानुसारेण तदभिव्यञ्जनस्य वैषम्याद्यहेतुत्वात् । तथा भूत्या महालक्ष्म्या एव भूतिकृत् प्रकृत्यादिप्रपञ्चान्तरानन्तानन्तरूपैर्नियामकत्वं सर्वत उत्कृष्टत्वं सर्वभोक्तृत्वं ब्रह्मरुद्रादिपुत्रपौत्रादिमहैश्वर्यकृत् भवति इत्यर्थः। ननु सृष्टेः कथं तनुभृत्स्वभावसम्भूति-हेतुत्वमिति चेदित्थम् । तत्र तावद्योग्याः खलु जीवाः स्वेषां शरीरेन्द्रियाभावादुपदेशकानां च शरीरेन्द्रियवतामभावात् श्रवणस्मरणार्हजगत्सर्जनरावणहननादिक्रियाणामव्यक्तत्वात् ज्ञानकारणीभूतवेदस्य स्तुतिमात्रतया जीवं प्रति विधिनिषेधबोधकत्वशक्त्याविर्भावाभावात् पौरुषेयागमानामचीर्णत्वात् अप्रतीतब्रह्मगुणकत्वात् मोक्षमार्गविधुराः सृष्टौ तु जगत्सर्जनादिक्रीडाज्ञानद्वारा स्वरूपाभिव्यक्तिभाजो भवन्तीति भावः। तदुक्तं सुधायां 'सच्च त्यच्चाभवत्' इति श्रुतिव्याख्यानावसरे । ततश्चायमर्थः सम्पद्यते 'तद् ब्रह्म मूर्तामूर्तात्मकं विश्वं सृष्ट्वा तत्प्रेरकत्वेन नानारूपैस्तदनुप्रविश्य तदेव विश्वं प्रविश्य प्राक् सृष्टेरुपदेष्टॄणां उपदेश्यानां शरीरेन्द्रियवतामभावादप्रतीतगुणकं सदथेदानीं उपदेष्टॄणामुपदेश्यानाञ्च शरीरेन्द्रियवत्वे सति प्रतीतसत्त्वादिगुणकमभवत् । तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञानार्थेत्युक्तं भवति । तदुक्तम्- 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्या' इति । एवमन्यत्स्वभावसम्भूतिहेतुत्वमप्युपपादनीयम् । अत्र सुखदुःखमध्यसम्प्राप्तये इति मोक्षयोग्यानां सुखस्य तमोयोग्यानां दुःखस्य नित्यसंसारिणां तदुभयस्य च प्राप्तेः । तत्स्वभावाभिव्यक्तिरूपत्वकथनात् ।

[3]".......... मानुषास्तूभयात्मकाः।
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।।

---

१. प्रकृत्यधिकरणम् २०४८ । २. ब्र.सू. १-४-२७ । ३. सू.भा. २-३-३२ ।

विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थिति:।
सम्यज्ज्ञानन्तु देवानां मनुष्याणां विमिश्रितम् ।।'

इत्यादिवचनात् । मध्यमानां लिङ्गभङ्गोऽस्त्येव नित्यसंसारित्वोक्तिस्तु सुखदु:खभाक्तादिति **वादिराजतीर्थानां पक्ष:**। नास्तीत्यस्मद्गुरुपरम्पराचार्याणां **श्रीमन्नृसिंहाचार्याणां पक्ष:**। 'चोष्कूयते विश इन्द्रो मनुष्यान्'। 'पुन: पुनर्मनुष्यांस्तु सृतावावर्तयत्यज:' । 'त्रिदिवनिरयभूगोचरान्नित्यबद्धान्'। 'नित्यावर्तास्तु मध्यमा:। सृतियोग्या: सदैव हि' इत्यादिवचनसमुदायात् । मध्यसम्प्राप्तय इत्यत्र एतत्कल्पे मुक्त्ययोग्यानां मोक्षतमोयोग्यानामपि विवक्षितत्वेन मध्यममात्रस्याविवक्षितत्वात् । तेषां स्वभावसम्भूतिर्नाम स्वस्वरूपानुसारेण संसारे प्राचुर्येण सुखादिप्राप्तिरिति विवक्षितत्वात् न कश्चिद्दोष इति । ननु जगत्सृष्ट्या रमाया आनन्दविशेषप्राप्तिरस्ति न वा । नाद्य:। नित्यव्यक्तत्वात् । द्वितीये भूतिकृदित्युक्तम् । आनन्दं विना केवलपुत्रपौत्रादिभूतिरीश्वरेऽपि तुल्यत्वादिति चेत् । रमानन्दविशेषे शक्तिव्यक्त्यङ्गीकारात् । उक्तं च **नरहरितीर्थश्रीमच्चरणै: यमकभारतटीकायां** 'ननु लक्ष्म्यानन्दस्य नित्यव्यक्तत्वात् कथं तत्प्राप्ति: । उच्यते । नित्यव्यक्तस्यापि लक्ष्म्यानन्दस्य परमात्मानन्दमुख्य-प्रतिबिम्बत्वेन तद्व्यक्तेरपि तदधीनत्वं युज्यते' इति (य.भा. ५टी.)।। ५ ।।[१]

**जम्बू**— कथमैक्षत इत्यत: तत्प्रकारमाह— **स्रक्ष्य इति** ।। मम विहृतिं मदीयां क्रीडां इच्छन् अहं चेतनगणान् चेतनानां गणान् समूहान् स्रक्ष्ये सृजामि । कस्मै प्रयोजनायेत्यतो भूत्यै निजेत्युक्तम् । परप्रयोजनं विशदयति— **तनुभृतां प्राणिनां सुखदु:खमध्यसम्प्राप्तय इति** ।। सृष्टौ सत्यां स्थूलदेहप्राप्त्या त्रिविधानां जीवानां सुखदु:खप्राप्तये दु:खप्राप्तये सुखदु:खसम्भेदरूपमध्यप्राप्तये चेत्यर्थ:। तस्मात् सोऽयं विहार इह मे इह सृष्ट्यादिविषये मम क्रीडा तनुभृत्स्वभावसम्भूतये तनुभृतां जीवानां स्वभाव: साधुत्वादि: सुखदु:खसम्प्राप्तिहेतुभूत: तस्य सम्भूतये प्रादुर्भावाय भवतीत्यर्थ:। न केवलमेतावत् भूत्या: लक्ष्म्या: भूतिकृत् पुत्रसम्पादकत्वेनैश्वर्यकृत् भवतीत्यर्थ:' इति **वरदराजीये** । **जनार्दनभट्टीये** तु तनुभृतां ब्रह्मादीनां सुखं दु:खं मध्यं सुखदु:खं तत्प्राप्तये । यद्वा सुखदु:खमध्येति तज्जनकं स्थानं लक्ष्यते । स्वर्गनरकसम्प्राप्तये संसारप्राप्तये इत्यर्थ:। स्थानप्राप्ते: संसारत्वमुक्तमनुव्याख्याने—

'चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव ।
संसारस्त्रिविधस्तत्र स्वर्गो मध्यस्तथाऽधम:।।
मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथाऽपरम् ।
नित्यदु:खमिति ज्ञेयं साधनं संसृतावपि ।।
काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चय:।
द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम् ।। इति पैङ्गिश्रुते:' इति ।

किं कुर्वन् मे मम रूपाणां विहृतिं विहरणं अग्निविहरणवत् सिद्धस्य स्थानविशेषे स्थापनमिच्छन् प्रवेशं कुर्वन्नित्यर्थ:।

---

१. ननु तनुभृत्स्वभावेत्यत्र द्वयोरेव विवक्षितत्वात् मध्यमविवक्षायामपि तेषां नित्यबद्धतया मिश्रानुभवस्यैव स्वभावत्वेन सृष्ट्यभावे तदभावत्वेन तदाविर्भावस्यैव विवक्षितत्वान्नानुपपत्तिरिति दिक् । विस्तरस्तु अन्यत्र कृतो द्रष्टव्य: ।। ५ ।। इत्यधिक: पाठ: हो. पुस्तके दृश्यते ।

[1]'ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ।
एवं सृष्ट्वा स्वभूतानि स्थविष्ठैः पञ्चधातुभिः।
एकधा दशधाऽत्मानं विभजन् जुषते गुणान् ।।'

इत्येकादशस्कन्धवाक्यात् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेश्च ।

'सृष्ट्वा जगदिदं सर्वं नियमाकतयाऽस्य तु ।
बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत् ।।' इति तैत्तिरीयभाष्ये च ।

यद्वा विहृतिं क्रीडामिच्छन्

'..........................क्रीडार्थं तु विपश्चितः ।
सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः ।।'

इति माण्डूकभाष्ये । तत्प्रयोजनमाह— **स इति** ।। सोऽयं मे विहारः इह संसारे तनुभृतां स्वभावस्य सम्भूतये योग्यानां स्वगुणज्ञानार्थं भवति । अयोग्यानां द्वेषादिजननाय भवति । नित्यसंसारिणां तूदासीनत्वाय भवति । नैतावन्मात्रम् । अपि तु भूत्याः भूतिनियम्यप्रकृतेः नियामकलक्ष्म्या अपि भूतिकृत् । महदादिरूपेण बहुत्वकृत् । तन्नियामकानेकरूपकृदेव च भवति । तदुक्तं सुधायाम्-'तदनेन पारमेश्वरी सृष्टिः स्वगुणज्ञानार्थेत्युक्तं भवति' इति । 'आत्मकृतेः परिणामात्' इति सूत्रे भाष्ये च 'प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामकत्वेन तत्र स्थित्वात्मनो बहुधाकरणात्' इति । ***वादिराजीये*** तु 'सुखं केवलस्वरूपभूतं दुःखं केवलस्वरूपभूतदुःखं मध्यं स्वरूपभूतदुःखमिश्रसुखं तेषां सम्प्राप्तये । लिङ्गदेहभङ्गेन सम्यक्प्राप्तये । गत्यर्थानां ज्ञानाद्यर्थत्वात् अनुभवाय । तनुभृत्स्वभावसम्भूतये सम्यग्भूतिः अनुभूतिः तस्यै । एवं च उत्तमाधमजीवयोरिव मध्यमानामपि सांसारिकानित्यसुखदुःखयोः स्वभावत्वायोगात् 'सम्प्राप्तये' इत्यत्र मोक्षयोग्यानां सुखस्य तमोयोग्यानां दुःखस्य नित्यसंसारिणां तदुभयस्य प्राप्तेस्तत्स्वभावाभिव्यक्तिरूपकत्वकथनात् ।

'.................मानुषास्तूभयात्मकाः।
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।।
विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः।
सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।।'

इत्यादिवचनात् ,'मध्यमानामपि लिङ्गभङ्गोऽस्त्येव । नित्यसंसारित्वोक्तिस्तु सुखदुःखभाक्त्वात्' इति ***वादिराजतीर्थानां पक्षः***। नास्तीति ***अस्मद्गुरुपरम्पराचार्याणां श्रीमन्नृसिंहाचार्यवर्याणां पक्षः***। ननु जगत्सृष्ट्या रमायाः आनन्दप्राप्तिरस्ति न वा । नाद्यः नित्यव्यक्तत्वात्। द्वितीये भूतिकृदित्युक्तम् । आनन्दं विना केवलं पुत्रपौत्रादिभूतेरीश्वरेऽपि तुल्यत्वात् इति चेत् रमानन्दविशेषे शक्तिव्यक्त्यङ्गीकारात् ।। ५ ।।

**भारतश्री—** विहृतिं विहारम् । तनुभृतां यस्स्वभावः सात्त्विकादिः तस्य सम्भूतये प्रादुर्भावाय । भूत्याः श्रियः ब्रह्मादिपुत्रपौत्रसम्पादकत्वेन ऐश्वर्यकृत् ।। ५-८ ।।

---

१. भा. ११-३- ३-४ ।

**[1]इत्थं विचिन्त्य परमस्स तु वासुदे-**
**नामा बभूव निजमुक्तिपदप्रदाता ।**
**तस्याज्ञयैव नियताऽथ रमाऽपि रूपं**
**बभ्रे द्वितीयमपि यत्प्रवदन्ति मायाम् ।। ६ ।।**

**व्यास—** सृष्टिस्त्रिविधा । शुद्धमिश्रजडविषयभेदात् । तत्र सप्रयोजनां शुद्धसृष्टिं निरूपयति— **इत्थमित्यादिना** ।। **तस्याज्ञयेति** ।। तस्याः मतान्तरप्राप्तं स्वातन्त्र्यं निवारयति ।। ६ ।।

**वादि—** सृष्टिश्चतुर्विधा । शुद्धसृष्टिः, पराधीनविशेषावाप्तिरूपा सृष्टिः, मिश्रसृष्टिः, केवलसृष्टिश्चेति । तत्र शुद्धसृष्टिर्नाम देहेन्द्रियान्तःकरणादेरीषद्विकाराभावेऽपि केवलं लीलयैव जगदुपकाराय मूलरूपात् बहिरागमनम् । उत्तरा तु लक्ष्म्यादीनां सृष्ट्यादौ भगवदाज्ञया प्रकृतिस्वामित्वादिविशेषावाप्तिः। मिश्रसृष्टिर्नाम अनुत्पन्नानामेव जीवचेतनानां केवलं बाह्यदेहेनैवोत्पत्तिः। केवलसृष्टिर्नाम प्रागविद्यमानानामेव घटपटादीनां स्वरूपेणैवोत्पत्तिः। तत्रादौ तावत् शुद्धसृष्टिमाह— **इत्थं विचिन्त्येति** ।। द्वितीयां सृष्टिमाह— **तस्याज्ञयैवेति** ।। न तु भगवानिव स्वातन्त्र्येण । नियता नित्या नित्यावियोगिनी । 'यत्प्रवदन्ति मायाम्' इत्यनेन लक्ष्मीरूपमायालिङ्गितत्वेन मायी भगवान् न तु पराभिमतभ्रामकमाययेति सूचयति ।। ६ ।।

**सङ्क—** नन्वेवं प्रलयावसाने विचार्यानन्तरं नारायणः किमकरोदित्याह— **इत्थं विचिन्त्येति** ।। तदवतार-प्रयोजनमाह— **निजेति** ।। निजमुक्तिपदप्रदाता निजानां स्वभक्तानां मुक्तिस्वरूपप्रदाता मुक्तिस्थानप्रदाता चेत्यर्थः। अत्र मोक्षसंहारकारणत्वप्राथम्यकथनं प्रथमावतारप्रसङ्गप्राप्तम् । न तु सृष्टिस्थितिकारणत्वात्पूर्वभावित्वापेक्षया । कुत एतत् । तनुभृतां सुखदुःखमध्यसम्प्राप्तये चेतनगणान् स्रक्ष्ये हीत्युक्तत्वात् । 'व्यूढश्चतुर्धा' इत्यादिना प्रथमावतारात् सृष्टिप्राथम्यकथनाच्चायमर्थोऽवसीयते । अपि च सङ्कर्षणादिभ्योऽप्युत्पत्त्युक्तेरयमर्थोऽवसीयत इत्याद्यूहनीयम् ।। ६ ।।

**वरद—** इत्थं विचार्य ततः किमकरोदित्यत आह— **इत्थं इत्यादिना** ।। परम उत्कृष्टः स नारायण इत्थं उक्तप्रकारेण विचिन्त्य विचार्य वासुदेवनामा बभूव वासुदेवत्वेन अवततारेत्यर्थः। तदवतारासाधारणप्रयोजनमाह— **निजमुक्तिपदप्रदातेति** ।। निजानां स्वभक्तानां मुक्त्याख्यपदप्रदातेत्यर्थः। तद्भार्यात्वेन देव्या अपि अवतारमाह

---

१. भा. ११-३- ३-४ । १. 'उन्मेषस्यादिमे भागे चतुर्व्यूहात्मको विभुः। भूत्वा तु पूर्वसाड्गुण्यात् वासुदेवाच्च वीर्यगात्। दत्वा तु ब्रह्मणो मुक्तिं सायुज्याख्यां महाविभुः। दत्वा तदनु सायुज्यं तत्वज्ञानं महात्मनाम्। सारूप्यं चैव केषाञ्चित् सामीप्यं च तथा विभुः। सालोक्यं च तथाऽन्येषां दत्वा देवो जनार्दनः। अनिरुद्धवशे सर्वान् स्थितान् लोकानलोकयत्। प्रद्युम्नस्य वशे दत्वा सृष्टिं कर्तुं मनो दधे। मायां जयां कृतिं शान्तिमुपयेमे स्वयं हरिः। चतुर्व्यूहैः पूर्णगुणैर्वासुदेवादिकैः क्रमात्। ताभिर्युक्तो महाविष्णुश्चतुर्व्यूहात्मको विभुः। भिन्नकर्माशयं लोकं पूर्णकामो व्यजीजनत्। उन्मेषान्ते पुनर्विष्णुर्योगमायां समाश्रितः। सङ्कर्षणाद्व्यूहगाच्च हरत्येतच्चराचरम्। तदेतत्सर्वमाख्यातं कार्यं चिन्त्यं महात्मनः' इति (स्कान्दे. वैष्णवखण्ड/ वैशाखमासमाहात्म्य/२०अ/४४-५० ।। अत्रोदाहृतप्रमाणश्लोकेषु आचार्योक्तप्रमेयविशेषेषु किञ्चित् वैलक्षण्यं दृश्यते । तथापि सम्भूय एतानि प्रमाणानि भवेयुरित्यभिप्रायेण अत्र निवेशितानि ।।

— **तस्येति** ।। अथ वासुदेवावतारानन्तरं तस्य हरेराज्ञया नियता तदधीनेत्यर्थः। एवम्भूता रमा स्वमूलरूपापेक्षया द्वितीयमपि रूपं बभ्रे । तस्य रूपस्य नामधेयमाह— **यदिति** ।। यत् द्वितीयं रूपं तन्मायां प्रवदन्ति विद्वांस इत्यर्थः ।। ६ ।।

**जना**— तत्र सृष्टिः चतुर्धा । शुद्धसृष्टिः, पराधीनविशेषावाप्तिरूपा सृष्टिः, मिश्रसृष्टिः, केवलसृष्टिरिति । तत्र शुद्धसृष्टिर्नाम देहेन्द्रियान्तःकरणादेरीषदपि विकाराभावेऽपि केवलं लीलयैव जगदुपकाराय मूलरूपाद्बहिरागमनम् । उत्तरा पराधीनप्रकृतिस्वामित्वादिविशेषावाप्तिः। तृतीया नित्यानामेव बाह्यदेहयोगेन । चतुर्थी प्रागविद्यमानानां देहादीनां सृष्टिः। तत्र सप्रयोजनां प्रथमां सृष्टिं वक्ति— **इत्थमिति** ।। परा मा मतिर्यस्येति । [1]"तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशत' इति वचनात् नारायणः पुरुषो वासुदेव इति विवक्षाभेदेन तृतीयत्वं तत्कृत्यमाह । निजानामात्मीयानाम् । यद्वा निजमात्मीयं नित्यं वा मुक्त्याख्यं स्थानं तस्य प्रदाता । 'निजमात्मीयनित्ययोः' इत्यभिधानात्। द्वितीयसृष्टिमाह— **तस्येति** ।। यद्रूपमपि तस्य नारायणस्यैवाज्ञया नियता । अनेन लक्ष्म्याः पराधीनता केवलं नारायणेनेति सूचयति ।। ६ ।।

**ताम्र**— सृष्टिस्तावच्छुद्धसृष्टिमिश्रसृष्टिभेदेन द्वेधा । मिश्रसृष्टिरपि द्वेधा सूक्ष्मस्थूलभेदात् । तत्र सृष्ट्या भगवत्परप्रयोजनं विवदितुं शुद्धसृष्टिमाह— **इत्थमित्यादिना** ।। वासुदेवो बभूवेति वाच्ये नामग्रहणं इन्द्रार्जुनस्येव नांशविश्लेषः किन्तु यावत्तावतोऽभिव्यक्तिरचिन्त्यशक्तित्वादिति सूचयितुम् । अत एव स तु स एव । वासुदेवनामा बभूवेत्यर्थः। तस्याज्ञयैव नियता न तु कर्मादिनियता । नापि स्वतन्त्रेत्यर्थः। मतान्तरप्राप्तशक्तिस्वातन्त्र्यनिरासाय वा तस्याज्ञयेत्युक्तम् ।। ६ ।।

**जम्बु**— सृष्टिश्चतुर्विधा । शुद्धसृष्टिः, पराधीनविशेषावाप्तिरूपा सृष्टिः, मिश्रसृष्टिः, केवलसृष्टिश्चेति । तत्र शुद्धसृष्टिर्नाम देहन्द्रियान्तःकरणादेरीषदपि विकाराभावेऽपि केवलं लीलयैव जगदुपकाराय मूलरूपाद् बहिरागमनम् । उत्तरा तु लक्ष्म्यादीनां सृष्ट्यादौ भगवदीक्षया प्रकृतिस्वामित्वादिविशेषावाप्तिः। मिश्रसृष्टिर्नाम अनुत्पन्नानामेव जीवचैतन्यानां केवलं बाह्यदेहेनैवोत्पत्तिः। केवलसृष्टिर्नाम प्रागविद्यमानानामेव घटपटादीनां स्वरूपेणैवोत्पत्तिः। तत्रादौ तावत् सप्रयोजनां शुद्धसृष्टिमाह— **इत्थमिति** ।। परम उत्कृष्टः स नारायणः इत्थं उक्तप्रकारेण विचिन्त्य विचार्य वासुदेवनामा बभूव । वासुदेवत्वेनावततारेत्यर्थः। तदवतारासाधराणप्रयोजनमाह— **निजेति** ।। निजानां स्वभक्तानां मुक्त्याख्यस्य पदस्य स्थानस्य प्रदाता इत्यर्थः' इति **वरदराजीये** । परा मा मतिः यस्य स तथा । 'तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशतः' इति वचनात् । नारायणः पुरुषो वासुदेव इति विवक्षाभेदेन तृतीयत्वम् । तत्कृत्यमाह निजानामात्मीयानां निजमात्मीयं नित्यं वा मुक्त्याख्यं स्थानं तस्य प्रदाता 'निजमात्मीयनित्ययोः' इत्यभिधानात् इति **जनार्दनभट्टीये** । 'स वासुदेवनामा बभूव' इत्यत्र दीपाद्दीपान्तरवत् ईश्वरादीश्वरसृष्टिः। तदुक्तं महातात्पर्ये—

[2]"दीपाद् दीपान्तरं यद्वत् सृष्टिरीशस्य कीर्त्यते ।
एतावत्कालमाशिष्ये मानुषेष्विति चिन्तनम् ।।

---

१. भा.ता. ३-१२-२ । २. भा.ता. ११-२८-६ ।

विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैत्र तु ।
दीपाद्दीपान्तरस्यैव ह्येकीभावश्च संसृतिः ।।' इति ।

ननु सृष्ट्यादिकार्यक्रमेणावतारस्य भावत्वात् कुतो वासुदेवादिक्रमेणावतार इति चेन्न । उत्तरत्र वासुदेवाद् विरिञ्चस्य सङ्कर्षणाद् वायोः प्रद्युम्नात् सरस्वतीभारत्योः अनिरुद्धात् महदादेः उत्पत्तेर्वक्ष्यमाणत्वात् तत्क्रमेणावतारक्रमः। मुक्तिस्रष्टृत्वादिकं तु अवतारस्य प्रयोजनान्तरमिति । यद्वा पूर्वकल्पान्ते मुक्तलिङ्गानां प्रथमतः मुक्तिदानस्यावश्यकत्वात् मुक्तिदानार्थं वासुदेवावतारः। तदनन्तरं तमआदिसृष्टिप्रतिबन्धकनिवृत्तेः कर्तव्यत्वात् सृष्टिप्रतिबन्धकतमःपानादिलक्षणसंहारार्थं सङ्कर्षणावतारः। सृष्ट्युपयुक्तसकलकारण-सम्मेलनलक्षणस्थित्यर्थं प्रद्युम्नावतारः। ततः स्थित्यर्थमनिरुद्धावतार इति क्रमावतारः इति ***नारायणाध्वरीये***। वासुदेवो बभूवेति वाच्ये नामग्रहणमिन्द्रादर्जुनस्येव नांशविश्लेषः। किन्तु यावत्तावतोऽभिव्यक्तिरचिन्त्यशक्तित्वात् इति सूचयितुम् । अत एव स तु स एव वासुदेवनामा बभूवेत्यर्थः' इति ***श्रीनिवासभट्टीये*** ।। ६ ।।

**[1]सङ्कर्षणश्च स बभूव पुनस्सुनित्यः**
**संहारकारणवपुस्तदनुज्ञयैव ।**
**देवी जयेत्यनुबभूव स सृष्टिहेतोः**
**प्रद्युम्नतामुपगतः कृतितां च देवी ।। ७ ।।**

**व्यास**— 'बभूव'इत्युत्तया प्रागसत्वमनित्यत्वं च नाशङ्क्यमित्यत उक्तम्— **सुनित्य इति** ।। अनादिश्चेति ग्राह्यम् ।। ७ ।।

**वादि**— पुनः शुद्धसृष्टिमाह— **सङ्कर्षण इति** ।। एवमुत्तरत्राप्यूह्यम् । सुनित्यः जीववत् देहनाशादि-रूपनाशरहित इत्यर्थः ।। ७ ।।

**सङ्क**— [2]'अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।।'

इति चतुर्विधनाशोऽप्यस्य नास्तीति 'सुनित्य' इत्युक्तम् ।। ७ ।।

**वरद**— वासुदेवावतारानन्तरं हरेः सङ्कर्षणावतारप्रयोजनमाह— **सङ्कर्षणश्चेति** ।। पुनर्वासुदेवावतारानन्तरं स नारायणः सङ्कर्षणश्च बभूव सङ्कर्षणत्वेन अवततार । कथम्भूतः संहारकारणं वपुः स्वरूपं यस्यासौ तथोक्तः। ननु बभूवेत्युभयत्रावतारे प्रागसतः सत्ता सम्बन्धः प्रतीयत इत्यत आह— **सुनित्य इति** ।। ननु नित्यत्वं ध्वंसाप्रतियोगित्वम्। न चात्र तारतम्यमस्ति । अतः सुनित्य इति कथमुक्तं इति चेत् न । नित्य इत्युक्ते स्वरूपनाशाभावमात्रप्रतीतेः तस्य चेतनाचेतनसाधारणत्वात् चतुर्विधोऽपि नाशो नास्तीति दर्शयितुं सुनित्य इत्युक्तम् । तथा चोक्तम्—

१. 'सङ्कर्षणः स च बभूव' इति पाठान्तरम् । २. गी.ता. २-१७ ।

'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।।' इति ।

सङ्कर्षणभार्यात्वेन रमाया अपि द्वितीयावतारमाह— **तदनुज्ञयेति** ।। तस्य हरेरनुज्ञया देवी रमा अनु अन्वेव तदनन्तरमेव जयेति बभूव जयेतिनामकमवतारं कृतवतीत्यर्थः। सङ्कर्षणावतारानन्तरं तृतीयत्वेन हरेः प्रद्युम्ना-वतारमाह— **स इति** ।। स नारायणः सृष्टिहेतोः प्रद्युम्नतां प्रद्युम्नत्वमुपगतः प्राप्तवान् प्रद्युम्नावतारं कृतवानिति यावत् । तदवतारप्रयोजनमुक्तं सृष्टिहेतोः सृष्टिं कर्तुमित्यर्थः। प्रद्युम्नभार्यात्वेन देव्या अप्यवतारमाह— **कृतितां च देवीति** ।। देवी रमा कृतितां कृतिनामकं रूपं धृतवतीत्यर्थः ।। ७ ।।

**जना**— पुनः शुद्धां सृष्टिमाह— **सङ्कर्षण इति** ।। स नारायणः पुनः वासुदेवावतारानन्तरम् । संहारे कारणभूतं वपुर्यस्येति । तेनेश्वरलक्षणस्य देहे कथनात् देहदेहिनोरभेद इति ज्ञापितं भवति । बभूवेत्युक्त्या चतुर्ष्वपि प्राप्तां सादित्वानित्यत्वशङ्कां परिहरति— **सुनित्य इति** ।। सुशब्देन—

'अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता।
नाशश्चतुर्विधो ज्ञेयः तदभावो हरेः सदा ।।'

इति चतुर्विधनाशाभावं सूचयति । तेन सुनित्यपदेन सनातनतोच्यते । ध्वंसाप्रतियोगितामात्रं नोच्यते । तेनेदं चतुर्ष्वप्यन्वेतव्दम् । देवी लक्ष्मीः तदनुज्ञयैव तस्याज्ञया । तदुक्तं [1]सुधायाम्— 'आदिकाले हि भगवान्नारायणो निजमुक्तिपदप्रदानाद्यर्थं वासुदेवादिचतुर्व्यूहो बभूव । ततः कालान्तरे प्रयोजनार्थं दशद्वादशादिव्यूहो जात'इति । कालशब्दवाच्यः सर्वगतः। तदुक्तं तृतीयतात्पर्ये—

[2]'पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः।
अथवा रुद्रदेहस्थो हरिः काल इतीरित ।।' इति ।

यत्तु—

[3]'अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः।
स आसाद्यश्च सन्नामा वासुदेवोऽभवत्प्रभुः।
स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणादिकम् ।।'

तत् आदिवासुदेवादिव्यूहव्यतिरिक्तवासुदेवव्यूहपरं ज्ञेयम्। देवी लक्ष्मीः तदनुज्ञयैव तस्याज्ञामात्रेण । पुनः शुद्धां सृष्टिमाह— **स इति** ।। सृष्टीति प्रयोजनकथनम् । चशब्दात्तदनुज्ञयैवानुबभूवेत्यावर्तनीयम् ।। ७ ।।

**ताम्र**— ।। **सुनित्य इति** ।। ननु नित्यत्वं प्रध्वंसाभावः। न चाभावस्तारतम्यवान् । तत्कथं सुनित्य इत्युक्तिरिति चेत्

'अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदा ।।'

इत्युक्तचतुर्विधनाशाभावस्य विवक्षितत्वात् । ननु सुनित्यत्वे बभूवेत्यागन्तुकत्वोक्तिः कथमिति चेत् यावद्द्रव्यस्य (क्रियावद्द्रव्यस्य) शक्तिव्यक्तिभ्यामुपपत्तेः। ननु 'सङ्कर्षणश्च स बभूव पुनः सुनित्य' इत्यादौ पूर्वपूर्वस्मा-

१. न्यायसुधा ४०९२ । २. भा.ता. ३-२७-१७ । ३. (तै.भा-ब्रह्मवल्ली.१२) ।

दुत्तरोत्तरव्यक्तिरुत वासुदेवादिचतुर्णामपि नारायणादेव व्यक्ति:। नाद्य:। 'सङ्कर्षणश्च स बभूव पुन' इत्यादौ पुनश्शब्दास्वारस्यात् ।

[1]"नारायणाख्य उद्गीथ उद्गेय: प्रणवेन यत् ।
उद्गच्छन्ति यतो ह्यस्मात् वासुदेवादिमूर्तय ।।'

इति छान्दोग्यभाष्यवचनात् । 'स्वयं नारायण:प्रभु: चतुर्धा ह्यभवत्' इति **विष्णुरहस्यवचन**विरोधात् ।

[2]"रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय स:।
वाराहं नारसिंहं च वामनं मानुषं तथा ।।'

इति तत्रैव प्रथमसर्गकाल एवावतारविभक्त्युक्ते:' इति गीताभाष्यविरोधाच्च । 'प्रादुर्भावभवायोत्तरत्र स नारायण:। .....प्रथमसर्गकाल एव । मानुषादिजात्युत्पत्ते: प्रागेवेत्यर्थ:।' इति प्रमेयदीपिकाव्याख्यानात् । नापि द्वितीय:। प्रमेयदीपिकायां चोक्तरीत्या मूलरूपादेव सङ्कर्षणादीनां विश्लेषे

'वासुदेवात् सङ्कर्षणो नाम जीवो जायते ।
सङ्कर्षणात्प्रद्युम्नसञ्ज्ञकं मनो जायते ।
प्रद्युम्नादनिरुद्धसञ्ज्ञकोऽहङ्कारो जायते ।।'

इति पञ्चरात्रविरोधात् ।

'अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिध:।
स आसाद्यश्च सन्नामा वासुदेवोऽभवत्प्रभु:।
स वासुदेव: स्वात्मानं चक्रे सङ्कर्षणाभिधम् ।।'

इति तैत्तिरीयभाष्यविरोधात् । न च तत्र कालान्तरभाविव्यूहमुच्यते इति वाच्यम् ।

[3]'....................साक्षाद्धरे: क्वचित् ।
सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तित: ।
व्यूह उक्त:...................... ।।'

इति पठितपञ्चरात्रविवरणपरानुव्याख्यानसुधायां प्रथमभाविव्यूहत्वप्रतीते: । तथा हि तद्वाक्यं 'यदप्युक्तं नैते भगवद्व्यूहाश्चतु:सङ्ख्यायामेव परिनिष्ठिता अनन्तत्वादिति । तस्योत्तरं क्वचिदिति । कालविशेषे प्रयोजनविशेषे चेत्यर्थ:। अनभिज्ञो हि भवान् भागवतसम्प्रदायस्य । आदिकालेऽपि भगवान् नारायण: निजमुक्तिपदप्रदानार्थं वासुदेवादिचतुर्मूर्तयो बभूव । तत: कालान्तरे परप्रयोजनान्तरार्थं द्वादशादिव्यूहो जात:। सेयं शुद्धसृष्टिरिति पाञ्चरात्रिकैरभिधीयते' इत्यादि इति चेत् । **अत्र केचित्** स्पष्टं सुधानुव्याख्यानबलात् पञ्चरात्रोक्तक्रमेणैवात्र वासुदेवादिव्यक्ति: 'सङ्कर्षणश्च स बभूव पुन: सुनित्य:' इत्यादौ तच्छब्देन वासुदेवादिपरामर्श:। पुनश्शब्दस्तु रूपान्तरत्वाभिप्रायेणाविरुद्ध:। ***विष्णुरहस्य***वचनेऽपि नारायण एव क्रमेण चतुर्धाऽभवदिति विवक्षितम् । गीताभाष्यवचनं तु दशद्वादशावतारपरं न तु चतुर्व्यूहपरमित्याहु:। **अन्ये तु** 'सङ्कर्षणश्च स बभूव' इत्यादिग्रन्थस्य पुरस्फूर्तिकतया नारायणादेव वासुदेवादिव्यक्त्यर्थत्वप्रतीते: युक्ता नारायणाच्चतूरूपव्यक्ति:। पञ्चरात्रवचनं प्रथमसर्गकालीनव्यूहान्तरपरमिति वर्णयन्ति । वस्तुतस्तु कृष्णावतारन्यायेन अविरोध इति रहस्यम् ।। ७ ।।

---

१. छा.भा. २अ.-१खं.-२मं. । २. गी.भा. ९-११ । ३. अनु. २-२-८५६ ।

**जम्बु**— द्वितीयां सृष्टिमाह— **तस्याज्ञयैवेति** ।। तस्य वासुदेवस्यैवाज्ञया नियता प्रेषिता रमाऽपि लक्ष्मीरपि द्वितीयं मूलरूपापेक्षया द्वितीयं रूपं अवतारं बभ्रे धृतवती। तन्मायां प्रवदन्ति । ज्ञानिन इति शेषः। नियतेत्यनेन लक्ष्म्याः पराधीनता केवलं नारायणेनेति सूचयति' इति **जनार्दनभट्टीये** । पुनः शुद्धसृष्टिमाह— **सङ्कर्षण इति**।। स नारायणः पुनः वासुदेवावतारानन्तरं कथम्भूतः संहारकारणवपुः। संहारे कारणभूतं वपुः स्वरूपं यस्य सः तथा । ननु 'बभूव' इत्युभयत्रावतारे प्रागसतः सत्तासम्बन्धः प्रतीयते इत्यत आह— **सुनित्य इति** ।। ननु नित्यत्वं ध्वंसाप्रतियोगित्वम् । न च तत्र तारतम्यमस्ति । अतः सुनित्य इति कथमुक्तमिति चेन्न, नित्य इत्युक्ते नाशाभावमात्रप्रतीतेः तस्य चेतनाचेतनसाधारणत्वात् चतुर्विधोऽपि नाशो नास्तीति दर्शयितुं सुनित्य इत्युक्तम् । तच्चोक्तम्—

'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेस्सदा ।।'

इति ***वरदराजीये*** । ननु सुनित्यत्वे बभूवेत्यागन्तुकत्वं कथं इति चेत् क्रियावद्द्रव्यस्य शक्तिव्यक्तिभ्यामुपपत्तेः । 'सङ्कर्षणश्च स बभूव पुनः सुनित्य' इत्यादौ किं पूर्वपूर्वस्मादुत्तरोत्तरव्यक्तिः उत वासुदेवादिचतुर्णां अपि नारायणादेव व्यक्तिः। नाद्यः सङ्कर्षणश्च स बभूव पुनः सुनित्य इत्यादौ पुनःशब्दास्वारस्यात् ।

'नारायणस्स उद्गीथ उद्गेयः प्रणवेन तु ।
उद्गच्छन्ति यतस्तस्माद्वासुदेवादिमूर्तयः ।।'

इति छान्दोग्यभाष्यवचनात् । 'स्वयं नारायणः प्रभुः चतुर्धा ह्यभवत्' इति विष्णुरहस्यवचनविरोधात् ।

[1]'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः।
वाराहं नारसिंहं च वामनं मानुषं तथा ।।' इति ।

'तत्रैव प्रथमसर्गकाल एवावतारविभक्त्युक्तेः' इति गीताभाष्यवचनविरोधाच्च । 'प्रादुर्भावभवाय उत्तरत्र स नारायणः प्रथमसर्गकाल एव मानुषादिजात्युत्पत्तेः प्रागेव' इति प्रमेयदीपे व्याख्यानात् । नापि द्वितीयः।

'वासुदेवात्सङ्कर्षणो नाम जीवो जायते ।
सङ्कर्षणात्प्रद्युम्नसञ्ज्ञकं मनो जायते ।
प्रद्युम्नात् अनिरुद्धसञ्ज्ञकोऽहङ्कारो जायते ।।' इति पञ्चरात्रविरोधात् ।
'अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः।
स आसीद्यश्च सन्नामा वासुदेवोऽभवत्प्रभुः।
स वासुदेवस्स्वात्मानं चक्रे सङ्कर्षणादिकम्'।।

इति तैत्तिरीयभाष्यविरोधाच्च । न च तत्र कालान्तरभाविव्यूहान्तरमुच्यत इति वाच्यम् ।

'...................साक्षाद्धरेः क्वचित् ।
सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः।
व्यूह उक्ता.............................।।'

इति पञ्चरात्रवाक्यविवरणपरानुव्याख्यासुधायां[2] प्रथमभाविव्यूहत्वप्रतीतेः। तथाहि तद्वाक्यानि— 'यदप्युक्तं

१. गी.भा. ९-११ । २. न्यायसुधा २-२-उत्पत्त्यधिकरणम् ।

नैते भगवद्व्यूहाः चतुस्सङ्ख्यायामेव परिनिष्ठिताः अनन्तत्वादिति तस्योत्तरं क्वचिदिति । कालविशेषे प्रयोजनविशेषे चेत्यर्थः। अनभिज्ञो हि भवान् भागवतसम्प्रदायस्य । आदिकालेऽपि हि भगवान् नारायणो निजमुक्तिप्रदानाद्यर्थं वासुदेवादिचतुर्मूर्तयो बभूव । ततः कालान्तरे परप्रयोजनान्तरार्थं द्वादशादिव्यूहो जातः । सेऽयं शुद्धसृष्टिरिति पाञ्चरात्रिकैरभिधीयत इत्यादि' इति चेत् अत्र केचित् स्पष्टं सुधानुव्याख्यानबलात् पञ्चरात्रोक्तक्रमेणैव वासुदेवादिव्यक्तिः 'सङ्कर्षणश्च स बभूव' इत्यादौ तच्छब्देन वासदेवादिपरामर्शः । पुनश्शब्दस्तु रूपान्तराभिप्रायेणा-विरुद्धः। विष्णुरहस्यवचनेऽपि नारायणादेव क्रमेण वासुदेवादिव्यक्तिः। सङ्कर्षणवचनं तु दशद्वादशावतारपरं न चतुर्व्यूहपरमित्याहुः । अन्ये तु 'सङ्कर्षणश्च स बभूव' इत्यादिग्रन्थस्य पुरस्फूर्तिकतया नारायणादेव वासुदेवादिव्यत्त्यर्थकत्वप्रतीतेर्युक्ता नारायणाच्चतूरूपव्यक्तिः। पञ्चरात्रवचनं तु प्रथमसर्गकालीनमेव व्यूहान्तरतपरमिति वर्णयन्ति । वस्तुतस्तु कृष्णावतारन्यायेनाविरोध इति रहस्यं इति ***श्रीनिवासभट्टीये*** । स्रक्ष्य इति प्रतिज्ञानुसारेण सृष्टिस्थितिसंहारमोक्षाणां क्रमानुसारेण कर्तव्ये व्यत्यासः कुत इति चेत् उच्यते । वासु-देवादिरूपाणामाविर्भावक्रमात् । यद्वा ईक्षाप्रदर्शनेन मुक्तामुक्तप्रसक्तौ मुक्तनिरूपणस्याल्पत्वात्सूचीकटाहन्यायेन मुक्तामुक्तयोर्मुक्तस्य प्राधान्याद्वा मुक्ताश्रयनिरूपणं पश्चात्तदनन्तरफलाधिकार्याश्रयस्य सङ्कर्षणस्य ततस्तदनन्तर-फलाधिकार्याश्रयस्य प्रद्युम्नस्य ततोऽनिरुद्धस्येति ज्ञेयम् । सङ्कर्षणभार्यात्वेन रमाया अपि द्वितीयावतारमाह— **तदनुज्ञयेति** ।। तस्य हरेरनुज्ञया देवी रमा अनु तदनन्तरमेव जयेति बभूव । जयेति नामावतारं कृतवतीत्यर्थः। सङ्कर्षणावतारानन्तरं तृतीयत्वेन हरेः प्रद्युम्नावतारमाह— **स इति** ।। स नारायणः सृष्टिहेतोः सृष्ट्यर्थं प्रद्युम्नतां प्रद्युम्नत्वमुपगतः प्राप्तवान् । प्रद्युम्नावतारं कृतवानिति यावत् । प्रद्युम्नभार्यात्वेन देव्या अप्यवतारमाह— **कृतितामिति** ।। देवी रमा कृतितामुपगता कृतिनामकं रूपं कृतवतीत्यर्थः ।। ७ ।।

**स्थित्यै पुनस्स भगवाननिरुद्धनामा**
**देवी च शान्तिरभवच्छरदां सहस्रम् ।**
**स्थित्वा स्वमूर्तिभिरमूभिरचिन्त्यशक्तिः**
**प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात् ।। ८ ।।**

**व्यास**— अभिन्नत्वात् कथं स्थित्वा स्वमूर्तिभिरिति सहावस्थानं स्यादित्यत उक्तम्— **अचिन्त्यशक्तिरिति** ।। भेदाभावेऽपि बहुत्वसम्पादकशक्तिसद्भावादिति भावः। चरमात्मनेऽनिरुद्धाय ।। ८ ।।

**वादि**— शरदां सहस्रमित्यनेन मानुषशरत्सहस्रं सङ्गृह्यते । इमान् स्वोदरस्थजीवान् । चरमात्मने अनिरूद्धाय प्रद्युम्नः प्रलये मूलरूपोदरस्थजीवान् स्वोदरे समाकृष्य तानेव सृजेति अनिरूद्धाय ददाविति भावः ।। ८ ।।

**सङ्क**— चरमात्मने अवसानमूर्तयेऽनिरुद्धायेत्यर्थः ।। ८-९ ।।

**वरद**— प्रद्युम्नावतारानन्तरं चतुर्थत्वेनानिरुद्धावतारं सप्रयोजनमाह— **स्थित्या इति** ।। पुनस्तदनन्तरं स भगवान् नारायणोऽनिरुद्धनामाभवदित्यर्थः। कस्मै प्रयोजनाय स्थित्यै उत्पादितस्य जगतो रक्षां कर्तुमित्यर्थः। तद्भार्यात्वेन देव्या अपि चतुर्थमवतारमाह— **देवी च शान्तिरभवदिति** ।। देवी रमा शान्तिनामकरूपत्वेन

अवततारेत्यर्थः। शरदां दिव्यवर्षाणां सहस्रं अमूभिर्वासुदेवादिमूर्तिभिः स्थित्वाऽचिन्त्यशक्तिः प्रद्युम्नरूपको नारायण इमांश्चेतनगणान् चरमात्मने चतुर्थावताररूपाय अनिरुद्धायादादित्यर्थः। अचिन्त्यशक्तिरिति हेतुगर्भविशेषणं असम्भावनानिरासार्थम् ।। ८ ।।

**जना—** अमूभिः स्वमूर्तिभिः वासुदेवादिभिः मानुषेण मानेन शरदां वर्षाणां सहस्रं स्थित्वा । प्रद्युम्नरूपकश्चरमात्मने अनिरुद्धायेमान् स्वोदरस्थदीर्घसंसारिणो जीवान् तमोयोग्यांश्चादात् । अचिन्त्यशक्तिरित्यनेन एकत्वेऽपि तत्तद्रूपविशेषे तत्तत्स्थापनशक्तिं सूचयति । तेन वटपत्रशायिस्थजीवानां कथं वासुदेवादिषु स्थितिरिति चोद्यं निरस्तं भवति । तदुक्तं नारदीये—

जाते ब्रह्मलये ब्रह्मन् भगवान्हरिरीश्वरः।
चतुर्धा व्यभजज्जीवान् तथा तेषां स्थलानि च ।।
पूर्णसाधनसम्पन्नान् विलिङ्गान् दृष्टबिम्बकान् ।
कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेऽकरोत् ।।
प्रारब्धशेषिणो ये च किञ्चिदूनाश्च साधनैः ।
सलिङ्गान् दृष्टबिम्बांश्च चक्रे सङ्कर्षणोदरे ।।
भविष्यद्ब्रह्मणा सार्धं येषां मुक्तिपदं भवेत् ।
तान् सर्वाननिरुद्धस्य कुक्षिगानकरोद्विभुः ।।
दीर्घसंसारिणः शिष्टान् प्रद्युम्नस्योदरेऽकरोत् ।
वटपत्रपुटे यस्तु संशेते हरिरीश्वरः ।।
केवलं तूदरस्था हि पूर्वमुक्तियुता जनाः।
चतुर्व्यूहात्मको विष्णुर्वटपत्रशयं हरिम् ।।
विशत्यमन्दसान्द्रौघचिदानन्दघनो हरिः ।
सृष्टिकाल उपावृत्ते पुनः सर्वेश्वरो हरिः ।।
चतुर्व्यूहात्मको भूत्वा प्रददौ सर्वकारणः।
चतुर्धा व्यभजज्जीवान् यथापूर्वं व्यवस्थितान् ।।
सृष्ट्वा ब्रह्माण्डमतुलं यद्विराड्रूपमुत्तमम् ।
ततः साधनसम्पन्नान् विलिङ्गानपरोक्षिणः ।।
वासुदेवः स्वोदरगान् बहिर्निःसृत्य तान्विभुः ।
श्वेतद्वीपं शिंशुमारं दृष्ट्वा स्वेच्छाविहारिणः ।।
सन्तो गच्छन्त्विति प्राज्ञान् यदा चाज्ञापयद्धरिः ।
तदा मुक्ता इति प्रोक्ताः न पुराज्ञाविहीनतः ।।' इति ।

पञ्चरात्रे प्रलयकालेऽपि श्वेतद्वीपशिंशुमारदर्शनस्योक्तत्वात् द्विवारं श्वेतद्वीपशिंशुमारदर्शनं ज्ञेयम् । तथा हि—

'विरजायां कृतस्नाना ब्रह्मणा सह सर्वशः।
त्यक्तलिङ्गास्ततः सर्वे स्वरूपेण व्यवस्थिताः ।।
ततो दृष्ट्वा शिंशुमारं श्वेतद्वीपं निरीक्ष्य च ।
विशन्ति वासुदेवाख्यं हरे रूपं चतुर्थकम् ।।
साकं च वासुदेवेन वैकुण्ठे हरिमेधसः।
विशन्त्युदरमेवास्य यावत्सर्गः पुनर्भवेत् ।।
त्यक्तलिङ्गाश्च ये मुक्ता वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारदेरभावतः ।।
विनिर्गत्य पुनः सृष्टौ वासुदेवशरीरतः।
तदा मुक्ता इति प्रोक्ताः सञ्चारादेश्च सम्भवात् ।।' इति ।। ८ ।।

**ताम्र**— शरदां दिव्यवर्षाणाम् । निर्विशेषस्य बहुत्वं सहावस्थानं दातृस्वीकर्तृभावः कथमित्यत आह— **अचिन्त्यशक्तिरिति** ।। सृष्टिहेतोरित्युक्तप्रद्युम्नव्यापारं वदन् अनिरुद्धकर्तृकसृष्टिमाह— **प्रद्युम्नरूपक इति** ।। अत्र प्रद्युम्नस्य स्रष्टृत्वं नाम पितृवद्बीजरूपेणैषां प्रदानं देहारम्भककर्मोद्बोधः । तेन सृष्ट्युन्मुखीकरणं विवक्षितम् । अत एव तस्य पित्रन्तर्गततया [1]"आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम्' इत्यवान्तरसृष्टावपि बीजावापनकर्तृत्वमुक्तम् छान्दोग्यभाष्य इति ज्ञेयम् ।। ८ ।।[2]

**जम्बु**— प्रद्युम्नावतारानन्तरं चतुर्थत्वेनानिरुद्धावतारं सप्रयोजनमाह— **स्थित्या इति** ।। पुनः प्रद्युम्नावतारानन्तरं स भगवान् नारायणो स्थित्यै उत्पत्त्यादिना तस्य जगतो रक्षां कर्तुं अनिरुद्धनामा । न विद्यते निरुद्धः नाशः यस्य सः अनिरुद्धः अभवत् । तद्भार्यात्वेन देव्या अपि चतुर्थावतारमाह— **देवीति** ।। देवी रमापि शान्तिः पत्यनुसारात् संहारक्रोधाभावेन शान्तत्वात् शान्तिरिति । शान्तिनामकरूपत्वेनावततारेत्यर्थः। शरदां दिव्यवर्षाणां मानुषशरत्सहस्रमिति ***वादिराजीये*** । स्वमूर्तिभिः वासुदेवादिमूर्तिभिः सह स्थित्वा अचिन्त्या शक्तिर्यस्य सोऽचिन्त्यशक्तिः। पद्युम्नरूपकः नारायणः इमान् चरमात्मने चतुर्थावताराय अनिरुद्धाय अदात् । अचिन्त्यशक्तिरिति हेतुगर्भविशेषणं असम्भावनानिरासार्थं इति ***वरदराजीये*** । इमान् स्वोदरस्थान् दीर्घसंसारिणः जीवान् तमोयोग्यांश्चादात् । अचिन्त्यशक्तिरित्यनेन वटपत्रशायिस्थजीवानां कथं वासुदेवादिषु स्थितिः इति चोद्यं परिहृतं भवति। तदुक्तं नारदीये —

'जाते ब्रह्मलये ब्रह्मन् भगवान् हरिरीश्वरः।
चतुर्धा व्यभजत् जीवांस्तथा तेषां स्थलानि च ।।

---

१. छा.भा. अ२-खं२ । १. तथा चोक्तम्— 'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः। बहुसङ्ख्यागोचरं च विशेषादेव केवलम्' इति। (गी.ता ११- १-१४)प्रद्युम्नकर्तृकसूक्ष्मसृष्टिं सूचयन् अनिरुद्धकर्तृकं स्थूलसृष्टिमाह – **प्रद्युम्नरूपक इति** ।। प्रद्युम्नः स्वयं जीवत्वावच्छिन्न–सर्वजीवान् सृष्ट्वा स्थूलशरीरप्राप्त्यै अनिरुद्धायादादित्यर्थः। तत्र प्रद्युम्नतः सकलदेवानां सूक्ष्मरूपेण जनिः तदितरेषां तत्कल्पे जनियोग्यानामयोग्यानां च जीवानां लिङ्गशरीरे उपचयविशेषजनिरिति ध्येयम्। 'स सृष्टिहेतोः प्रद्युम्नतामुपगत' इत्युक्तत्वात् । 'स इद सर्वमसृजत' इत्युक्तदिशा जीवमात्रसृष्टेरप्यावश्यकत्वाच्च ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

पूर्णसाधनसम्पन्नान् विलिङ्गान् दृष्टबिम्बकान् ।
कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेऽकरोत् ।।
प्रारब्धशेषिणो ये च किञ्चिदूनाश्च साधनैः।
सलिङ्गान् दृष्टबिम्बांश्च चक्रे सङ्कर्षणोदरे ।।
भविष्यद्ब्रह्मणा सार्धं येषां मुक्तिपदं भवेत् ।
तान्सर्वाननिरुद्धस्य कुक्षिगानकरोद्विभुः ।।
दीर्घसंसारिणः शिष्टान्प्रद्युम्नस्योदरेऽकरोत् ।
वटपत्रपुटे यस्तु संशेते हरिरीश्वरः ।।
केवलं तूदरस्था हि पूर्वं मुक्तियुता जनाः।
चतुर्व्यूहात्मको विष्णुर्वटपत्रशयं हरिम् ।।
विशत्यमन्दसान्द्रौघचिदानन्दघनो हरिः ।
सृष्टिकाल उपावृत्ते पुनस्सर्वेश्वरो हरिः ।।
चतुर्व्यूहात्मको भूत्वा तदासौ सर्वकारणः ।
चतुर्धा व्यभजज्जीवान्यथा पूर्वं व्यवस्थितान् ।।
सृष्ट्वा ब्रह्माण्डमतुलं यद्विराड्रूपमुत्तमम् ।
ततस्साधनसम्पन्नान्विलिङ्गानपरोक्षिणः ।।
वासुदेवस्योदरगान्बहिर्निस्सृत्य तान्विभुः ।
श्वेतद्वीपं शिंशुमारं दृष्ट्वा स्वेच्छाविहारिणः ।।
सन्तो गच्छन्त्विति प्राज्ञान्यदा चाज्ञापयद्धरिः।
तदा मुक्ता इति प्रोक्ता न पुराज्ञाविहीनतः ।।' इति ।

पञ्चरात्रे प्रलयकालेऽपि श्वेतद्वीपे शिंशुमारदर्शनस्योक्तत्वात् । द्विवारं श्वेतद्वीपशिंशुमारदर्शनं ज्ञेयम् । तथाहि—

'विरजायां कृतस्नानाः ब्रह्मणा सह सर्वशः।
त्यक्तलिङ्गास्ततस्सर्वे स्वरूपेण व्यवस्थिताः ।।
ततो दृष्ट्वा शिंशुमारं श्वेतद्वीपं निरीक्ष्य च ।
विशन्ति वासुदेवाख्यं हरे रूपं चतुर्थकम् ।।
साकं च वासुदेवेन वैकुण्ठं हरिमेधसः ।
विशन्त्युदरमेवास्य यावत्सर्गः पुनर्भवेत् ।।
त्यक्तलिङ्गाश्च ये मुक्ता वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारादेरभावतः ।।
विनिर्गत्य पुनस्सृष्टौ वासुदेवशरीरतः।
तदा मुक्ता इति प्रोक्तास्सञ्चारादेश्च सम्भवात् ।।' इति *जनार्दनभट्टीये* ।। ८ ।।

**निर्देहकान्स भगवाननिरुद्धनामा**
**जीवान्स्वकर्मसहितानुदरे निवेश्य ।**
**चक्रेऽथ देहसहितान्क्रमशः स्वयम्भू-**
**प्राणात्मशेषगरुडेशमुखान्समग्रान् ।। ९ ।।**

**व्यास**— मिश्रसृष्टिं लेशतो दर्शयन्नाह— **निर्देहकानिति** ।। क्रमशः कालक्रमेण आधिक्यक्रमेण च । आधिक्यक्रमे निमित्तं सूचयति— **स्वकर्मेति** ।। प्राणात्मा मुख्यवायुः। समग्रान् सर्वान् ।। ९ ।।

**वादि**— ननु निर्देहकानित्यनेनानिरुद्धस्य सृष्टिकर्तृत्वमेवोच्यते, स्थितिकर्तृत्वं च प्राक् प्रतिज्ञातम् । अतः पूर्वोत्तरविरोध इति चेन्न । ब्रह्माण्डान्तः स्त्रीपुरुषसापेक्षा सृष्टिः प्रद्युम्नात् । कामान्तर्यामी स भगवान् मिथः रागं जनयित्वा पुम्भ्यः स्त्रीषु सन्तानपरम्परां सृजति । तदाऽनिरुद्धस्तु तां पालयति । सङ्कर्षणश्च स्वमुखानलेन अन्ते सर्वान् संहरति । अतः कार्यत्रयं त्रयाणां प्रथममुक्तम् । अनिरुद्धस्त्विदानीमनन्तानन्तजीवानां स्वशक्त्यैव स्त्रीनिरपेक्षां शुद्धप्रकृत्यंशनिर्मितलिङ्गदेहमात्रावरकसूक्ष्मसूक्ष्मदेहरूपां सृष्टिं स्वदेहान्तरेव करोति । ते च परमाणुप्रदेशेष्वप्यनन्तानन्ताः सन्ति । तैरेव देहैः स्वपोषकवाय्वाहारादिना तृप्ताः पूर्वपूर्वकर्मानुसारेण स्वस्वयोग्यकर्माणि च कुर्वते । तत्र केचित् कर्मपरिपाकवशादधुनैव स्थूलदेहांश्च प्राप्नुवन्ति । अन्ये तु यथायोग्यं कल्पे कल्पे प्राप्नुवन्ति । अत एव जीवानामनाद्यनन्तकालेष्वप्यपर्यवसानम् । इयं चानिरूद्धेन क्रियमाणा सृष्टिरतिसूक्ष्मत्वात्प्राक् न गणिता । अतो न पूर्वोत्तरविरोध इति समाधानसम्भवात् । अत एव 'जीवान् स्वकर्मसहितानुदरे निवेश्य' इत्युक्तम् । **निर्देहकान्** लिङ्गदेहानां प्रलयेऽपि विद्यमानत्वाल्लिङ्गदेहातिरिक्तदेहरहितान् । देहसहितान् लिङ्गदेहावरकसूक्ष्मदेहान्तरसहितान् । इयमप्येका सूक्ष्मतरा मिश्रसृष्टिरिति ज्ञेयम् । प्राणात्मा मुख्यप्राणः ।। ९ ।।

**वरद**— चेतनगणान् गृहीत्वाऽनिरुद्धः किं कृतवानित्यत आह— **निर्देहकानिति** ।। अनिरुद्धनामा स भगवान् हरिः निर्देहकान् लिङ्गदेहातिरिक्तदेहशून्यान् स्वकर्मसहितान् देहप्रापकादृष्टयुक्तान् जीवान् स्वोदरे निवेश्य अथ देहसहितान् [१]सूक्ष्मदेहसंयुतांश्चक्रे देहयोगेनोत्पादयामास । तत्रोत्पन्नानां नामान्याह— **स्वयम्भ्वित्यादिना** ।। प्राणानां आत्मा स्वामी मुख्यप्राणः ।। ९ ।।

**जना**— इदानीं मिश्रसृष्टिकेवलसृष्टिमेकीकृत्याह— **निर्देहकानिति** ।। निर्देहकान् लिङ्गदेहातिरिक्तदेहरहितान् । जीवान् जन्यजीवान् उदरे स्वोदरे निवेश्य संस्थाप्य । क्रमशः कालक्रमेणाधिक्यक्रमेण वा । देहसहितान् सूक्ष्मदेहसहितान् चक्रे । अनेन स्थितिसर्जनोभयकर्तृत्वं विवृतं भवति । आधिक्यक्रममेवाह— **स्वयम्भ्विति** ।। प्राणात्मा वायुः। जनने हेतुमाह— **स्वेति** ।। अनेनैव जन्यजीवानां ग्रहणमिति ज्ञापितम् । तेन सङ्कर्षणोदर-स्थस्वोदरस्थानामपि सूक्ष्मदेहकरणं ज्ञातव्यम् । तेषां सर्वेषां पालनार्थं प्रद्युम्नाय दानं च ज्ञातव्यम् । व्यूहात् तृतीयात् पुनरेवेति तृतीयाध्याये कथनात् । अत्र ब्रह्मादीनां जीवानां देहयोगेन जननकथनान्मिश्रसृष्टिः। देहजननकथनात्केवलसृष्टिरुक्ता भवति । कालक्रमस्तत्त्वविवेके ।

---

१. 'स्थूलदेह' इति पाठान्तरम् ।

पूर्णसाधनसम्पन्नान् विलिङ्गान् दृष्टबिम्बकान् ।
कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेऽकरोत् ।।
प्रारब्धशेषिणो ये च किञ्चिदूनाश्च साधनैः।
सलिङ्गान् दृष्टबिम्बांश्च चक्रे सङ्कर्षणोदरे ।।
भविष्यद्ब्रह्मणा सार्धं येषां मुक्तिपदं भवेत् ।
तान्सर्वाननिरुद्धस्य कुक्षिगानकरोद्विभुः ।।
दीर्घसंसारिणः शिष्टान्प्रद्युम्नस्योदरेऽकरोत् ।
वटपत्रपुटे यस्तु संशेते हरिरीश्वरः ।।
केवलं तूदरस्था हि पूर्वं मुक्तियुता जनाः।
चतुर्व्यूहात्मको विष्णुर्वटपत्रशयं हरिम् ।।
विशत्यमन्दसान्द्रौघचिदानन्दघनो हरिः ।
सृष्टिकाल उपावृत्ते पुनस्सर्वेश्वरो हरिः ।।
चतुर्व्यूहात्मको भूत्वा तदासौ सर्वकारणः ।
चतुर्धा व्यभजज्जीवान्यथा पूर्वं व्यवस्थितान् ।।
सृष्ट्वा ब्रह्माण्डमतुलं यद्विराड्रूपमुत्तमम् ।
ततस्साधनसम्पन्नान्विलिङ्गानपरोक्षिणः ।।
वासुदेवस्योदरगान्बहिर्निस्सृत्य तान्विभुः ।
श्वेतद्वीपं शिंशुमारं दृष्ट्वा स्वेच्छाविहारिणः ।।
सन्तो गच्छन्त्विति प्राज्ञान्यदा चाज्ञापयद्धरिः।
तदा मुक्ता इति प्रोक्ता न पुराज्ञाविहीनतः ।।' इति ।

पञ्चरात्रे प्रलयकालेऽपि श्वेतद्वीपे शिंशुमारदर्शनस्योक्तत्वात् । द्विवारं श्वेतद्वीपशिंशुमारदर्शनं ज्ञेयम् । तथाहि—

'विरजायां कृतस्नानाः ब्रह्मणा सह सर्वशः।
त्यक्तलिङ्गास्ततस्सर्वे स्वरूपेण व्यवस्थिताः ।।
ततो दृष्ट्वा शिंशुमारं श्वेतद्वीपं निरीक्ष्य च ।
विशन्ति वासुदेवाख्यं हरे रूपं चतुर्थकम् ।।
साकं च वासुदेवेन वैकुण्ठं हरिमेधसः ।
विशन्त्युदरमेवास्य यावत्सर्गः पुनर्भवेत् ।।
त्यक्तलिङ्गाश्च ये मुक्ता वासुदेवशरीरगाः।
अमुक्ता इति चोच्यन्ते सञ्चारादेरभावतः ।।
विनिर्गत्य पुनस्सृष्टौ वासुदेवशरीरतः।
तदा मुक्ता इति प्रोक्तास्सञ्चारादेश्च सम्भवात् ।।' इति *जनार्दनभट्टीये* ।। ८ ।।

**निर्देहकान्स भगवाननिरुद्धनामा**
**जीवान्स्वकर्मसहितानुदरे निवेश्य ।**
**चक्रेऽथ देहसहितान्क्रमशः स्वयम्भू-**
**प्राणात्मशेषगरुडेशमुखान्समग्रान् ।। ९ ।।**

**व्यास**— मिश्रसृष्टिं लेशतो दर्शयन्नाह— **निर्देहकानिति** ।। क्रमशः कालक्रमेण आधिक्यक्रमेण च । आधिक्यक्रमे निमित्तं सूचयति— **स्वकर्मेति** ।। प्राणात्मा मुख्यवायुः। समग्रान् सर्वान् ।। ९ ।।

**वादि**— ननु निर्देहकानित्यनेनानिरुद्धस्य सृष्टिकर्तृत्वमेवोच्यते, स्थितिकर्तृत्वं च प्राक् प्रतिज्ञातम् । अतः पूर्वोत्तरविरोध इति चेन्न । ब्रह्माण्डान्तः स्त्रीपुरुषसापेक्षा सृष्टिः प्रद्युम्नात् । कामान्तर्यामी स भगवान् मिथः रागं जनयित्वा पुम्भ्यः स्त्रीषु सन्तानपरम्परां सृजति । तदाऽनिरुद्धस्तु तां पालयति । सङ्कर्षणश्च स्वमुखानलेन अन्ते सर्वान् संहरति । अतः कार्यत्रयं त्रयाणां प्रथममुक्तम् । अनिरुद्धस्त्विदानीमनन्तानन्तजीवानां स्वशक्त्यैव स्त्रीनिरपेक्षां शुद्धप्रकृत्यंशनिर्मितलिङ्गदेहमात्रावरकसूक्ष्मसूक्ष्मदेहरूपां सृष्टिं स्वदेहान्तरेव करोति । ते च परमाणुप्रदेशेष्वप्यनन्तानन्ताः सन्ति । तैरेव देहैः स्वपोषकवाय्वाहारादिना तृप्ताः पूर्वपूर्वकर्मानुसारेण स्वस्वयोग्यकर्माणि च कुर्वते । तत्र केचित् कर्मपरिपाकवशादद्युनैव स्थूलदेहांश्च प्राप्नुवन्ति । अन्ये तु यथायोग्यं कल्पे कल्पे प्राप्नुवन्ति । अत एव जीवानामनाद्यनन्तकालेष्वप्यपर्यवसानम् । इयं चानिरूद्धेन क्रियमाणा सृष्टिरतिसूक्ष्मत्वात्प्राक् न गणिता । अतो न पूर्वोत्तरविरोध इति समाधानसम्भवात् । अत एव 'जीवान् स्वकर्मसहितानुदरे निवेश्य' इत्युक्तम् । **निर्देहकान्** लिङ्गदेहानां प्रलयेऽपि विद्यमानत्वाल्लिङ्गदेहातिरिक्तदेहरहितान् । देहसहितान् लिङ्गदेहावरकसूक्ष्मदेहान्तरसहितान् । इयमप्येका सूक्ष्मतरा मिश्रसृष्टिरिति ज्ञेयम् । प्राणात्मा मुख्यप्राणः ।। ९ ।।

**वरद**— चेतनगणान् गृहीत्वाऽनिरुद्धः किं कृतवानित्यत आह— **निर्देहकानिति** ।। अनिरुद्धनामा स भगवान् हरिः निर्देहकान् लिङ्गदेहातिरिक्तदेहशून्यान् स्वकर्मसहितान् देहप्रापकादृष्टयुक्तान् जीवान् स्वोदरे निवेश्य अथ देहसहितान् [1]सूक्ष्मदेहसंयुतांश्चक्रे देहयोगेनोत्पादयामास । तत्रोत्पन्नानां नामान्याह— **स्वयम्भ्वित्यादिना** ।। प्राणानां आत्मा स्वामी मुख्यप्राणः ।। ९ ।।

**जना**— इदानीं मिश्रसृष्टिकेवलसृष्टिमेकीकृत्याह— **निर्देहकानिति** ।। निर्देहकान् लिङ्गदेहातिरिक्तदेहरहितान् । जीवान् जन्यजीवान् उदरे स्वोदरे निवेश्य संस्थाप्य । क्रमशः कालक्रमेणाधिक्यक्रमेण वा । देहसहितान् सूक्ष्मदेहसहितान् चक्रे । अनेन स्थितिसर्जनोभयकर्तृत्वं विवृतं भवति । आधिक्यक्रममेवाह— **स्वयम्भ्विति** ।। प्राणात्मा वायुः। जनने हेतुमाह— **स्वेति** ।। अनेनैव जन्यजीवानां ग्रहणमिति ज्ञापितम् । तेन सङ्कर्षणोदर-स्थस्वोदरस्थानामपि सूक्ष्मदेहकरणं ज्ञातव्यम् । तेषां सर्वेषां पालनार्थं प्रद्युम्नाय दानं च ज्ञातव्यम् । व्यूहात् तृतीयात् पुनरेवेति तृतीयाध्याये कथनात् । अत्र ब्रह्मादीनां जीवानां देहयोगेन जननकथनान्मिश्रसृष्टिः। देहजननकथनात्केवलसृष्टिरुक्ता भवति । कालक्रमस्तत्त्वविवेके ।

---

१. 'स्थूलदेह' इति पाठान्तरम् ।

[1]"कालतो बलतश्चैव ज्ञानानन्दादिकैरपि ।
गुणैः सर्वैर्विष्णुरेव श्रेष्ठस्तदवमा रमा ।।
अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः।
अवरो बहुलांशेन तत्समो वायुरुच्यते ।।
नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः।
तस्मात्समानता मुक्तौ वायुत्वे किञ्चिदूनता ।।
दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः ।।'

वायूत्पत्यनन्तरं संवत्सरात्मकः कालो ज्ञेयः ।

'यावत्पश्चाज्जनिस्तावत्पूर्वं देहक्षयो भवेत् ।
ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखाधिकः ।।
शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः।
शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ।।
तद्देव्यस्तद्दशांशास्स्युः ततस्त्विन्द्रादयो मताः।
एवं मुक्तौ च पूर्वं च नान्यथा क्वचिदिष्यते ।।' इति ।

नन्वत्र प्रद्युम्नस्य सृष्टिकर्तृत्त्वमनिरुद्धस्य स्थितिकर्तृत्वमुक्तमत्रैव निर्देहकानित्यनेन । तथा तृतीयाध्याये 'व्यूहात्तृतीयात्' इत्यनेन। तथा षड्विंशाध्याये —

[2]"न मादृशोऽन्योऽस्ति कुतः परो यत् सोऽहं चतुर्धा जगतो हिताय ।
स्थितोऽस्मि मोक्षप्रलयस्थितीनां सृष्टेश्च कर्ता क्रमशः स्वमूर्तिभिः।
स वासुदेवादिचतुःस्वरूपः स्थितोऽनिरुद्धो हृदि चाखिलस्य ।।'

इत्यनेन प्रद्युम्नस्य स्थितिकर्तृत्वमनिरुद्धस्य सृष्टिकर्तृत्वमुच्यते । अतो विरोध इति चेत्सत्यम् । सूक्ष्मसृष्टिकारण–स्त्रीयुग्मजननात् बीजरूपजीवदानात् ।

[3]"स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः।
ससर्ज मातापितृवत् ऊर्णनाभिवदेव च'।।

इति वचनात् तस्यापि स्रष्टृत्वात् सृष्टिकर्तृत्वम् । बहिःस्थित्वा स्थूलसृष्टेः पालनात् स्थितिकर्तृत्वं च प्रद्युम्नस्योपपद्यते। तथाऽनिरूद्धस्य सूक्ष्मसृष्टिपालनात् पश्चादपि [4]"जीव इति भगवतोऽनिरुद्धस्याऽख्या' इति श्रुतेः । [5]"स जीवनामा भगवान् प्राणधारणहेतुत' इति स्मृतेश्च । 'अनेन जीवेनात्मना' इति श्रुतेश्च स्थितिकर्तृत्वं स्थूलसृष्टिकारणाच्च सृष्टिकर्तृत्वं सिद्धम् । अत उभयोरुभयस्यापि सत्त्वान्न विरोधः। प्रद्युम्नस्य सर्जनं प्रथमं प्राप्तमिति सृष्टिहेतुत्वं प्रथमत उक्तम् । एवमनिरुद्धस्य सूक्ष्मसृष्टिपालनस्य प्रथमप्राप्तत्वात् स्थित्यै इति प्रथमतः

---

१. भा.ता ३-१३-३ । २. म.ता.नि. २६-२७ । ३. अनु. १-४-३७१, प्रकृत्यधिकरणम् । ४. छा.भा. ६अ-२खं । ५. गी.ता. २-१८ ।

पालनमुक्तमिति भावः। यद्वाऽल्पमिति तत्र तत्र बहुस्थानेषु च न कथितम् । यथाऽल्पत्वेन वासुदेवसङ्कर्षणयोश्च सृष्टिकर्तृत्वं न कथितम् ।। ९ ।।

**ताम्र**— ।। **निर्देहकानिति** ।। अनिरुद्धो निर्देहकान् स्वकर्मसहितान् देहारम्भकसहितान् समग्रान् जीवानुदरे निवेश्य स्वयम्भू ब्रह्मा प्राणानामात्मा स्वामी वायुतत्प्रभृतीन् समग्रान् देवान् शान्त्यां गर्भाधानद्वारा स्थूलदेह-सहितांश्चक्रे । वक्ष्यति च—

'व्यूहात्तृतीयात्पुनरेव विष्णोः देवांश्चतुर्वर्णगतान् समस्तान् ।
सङ्गृह्य बीजात्मतयानिरुद्धो न्यधत्त शान्त्यां त्रिगुणात्मिकायाम् ।।'

इति प्राग्देवानां सृष्टत्वेऽपि तच्छरीरस्य सूक्ष्मत्वेन शरीरत्वविवक्षाभावात् । सूक्ष्मशरीरविशिष्टानां पृथगवस्थान-मङ्गीकृत्य तेषामेवांशतः स्थूलदेहाङ्गीकारेण स्थूलतया सृज्यांशानां प्राग्देहाभावाच्च निर्देहकानिति युक्तम् । देवताव्यतिरिक्ततत्कल्पे जनियोग्यसमस्तजीवास्तु तृतीये वक्ष्यमाणरीत्या अण्डान्तः ब्रह्मादिद्वारा स्थूलदेहसहितांश्च इत्यर्थः। तेषां निर्देहत्वं नाम लिङ्गशरीरव्यतिरिक्तदेहरहितत्वमिति ध्येयम् । तेषामण्डान्तर्बहिःशरीरवत्वाभावात् । इह समग्रान् जीवानिति जीवपदप्रयोगात् । अण्डान्तर्ब्रह्मादिद्वारा स्थूलदेहसहितांश्चक्र इत्येवार्थो युक्तः। ***वादिराजतीर्थीये तु*** - इदानीं अनन्तानन्तजीवानां स्त्रीनिरपेक्षयैव स्वशक्त्यैव शुद्धप्रकृत्यंशनिर्मितलिङ्गदेहमात्रावरकं सूक्ष्मदेहरूपां सृष्टिं स्वदेहान्तरेव करोति । 'ते च परमाणुप्रदेशेऽप्यनन्ताः सन्तः तैरेव देहैःस्वपोषकवाय्वाहारादिना तृप्ताः पूर्वपूर्वकर्मानुसारेण स्वयोग्यकर्माणि च कुर्वते । तत्र केचित्कर्मपरिपाकवशादधुनैव स्थूलदेहांश्च प्राप्नुवन्ति । अन्ये तु यथायोग्यं कल्पे कल्पे प्राप्नुवन्तीति सर्वजीवानामपि सूक्ष्मदेहसत्वमुक्तम् । स्थित्यर्थमवतीर्णस्यानिरूद्धस्य स्त्रष्टृत्वं कथमिति चेत् मुक्तिसंहारार्थमवतीर्णयोर्वासुदेवसङ्कर्षणयोर्यथा स्त्रष्टृत्वं क्वचित्तथेत्यवैहि ।। ९ ।।

**जम्बु**— चेतनगणान्गृहीत्वानिरुद्धः किं कृतवानित्यत मिश्रसृष्टिकेवलसृष्टिमेकीकृत्याह— **निर्देहकानिति**।। अनिरुद्ध इति नाम यस्य स अनिरुद्धनामा भगवान् षड्गुणैश्वर्यवान् स नारायण निर्देहकान् लिङ्गदेहानां प्राक्कल्पे विद्यमानत्वात् लिङ्गदेहातिरिक्तरहितान् स्वकर्मसहितान् स्वेषां कर्माणि तैस्सहितान् युक्तान् । देहप्रापकादृष्टसहितानिति यावत् । जीवान् जन्यजीवान् उदरे स्वोदरे शान्त्युदरे च निवेश्य संस्थाप्य कम्रशः कालक्रमेणाधिक्यक्रमेण च देहसहितान् लिङ्गदेहावरकसूक्ष्मदेहान्तरैः सहितान् चक्रे देहयोगेनोत्पादयामास । अनेन स्थितिसर्जनोभयकर्तृत्वं विवृतं भवति । अथवा स्वकर्मसहितान् देहप्रापककर्मयुक्तान् । अत्रेदं ध्येयम् ।

---

१. निर्देहकान् लिङ्गव्यतिरिक्तदेहशून्यान्। लिङ्गदेहेऽपि उपचयशून्यानिति वा। स्वकर्मसहितान् उद्बुद्धदेहापादककर्मसहितान् कर्माभिमानिसहितान् वा। उदरे स्त्रीनिरपेक्षेण स्वोदरे निवेश्य देहसहितांश्चक्रे। अत्रायं विवेकः। तत्कल्पे जन्ययोग्यान् जनियोग्यांश्च समस्तजीवान् लिङ्गशरीरोपचयलक्षणदेहसहितांश्चक्रे। उपचयाभावे स्थूलशरीरे सुखदुःखादिसंसारानुपपत्तेः । स्थूलशरीरविरहिणां कर्माभिमानिनां अभिमानोत्पत्त्यनुपपत्तेः। अन्यथा प्रलयेऽपि प्रसङ्गात्। उपचयाल्पत्वाभ्यां तयोर्भेदः । तत्रापि कांश्चित् स्वयम्भूः ब्रह्मा प्राणानामात्मा स्वामी वायुः। शेष गरुडेशमुख्यान् देवान् स्थूलदेहसहितांश्चक्रे इति । तदुक्तं सत्तर्कदीपावल्याम् (१-४-२८) 'भूतानामाकाशादीनां ब्रह्मादीनां च केषाञ्चित् स्त्र्यव्यवधानेनोत्पादनाद्भूतयोनिः' इति। 'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः। ससर्ज मातापितृवदूर्णनाभिवदेव च' इति । पुनःस्वयम्भुमुखान् चतुर्वर्णगतान् समस्तान् देवान् शान्त्युदरे निवेश्य क्रमेण देहसहितांश्चक्रे इति तृतीयाध्याये वक्ष्यति ।। ९ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

'कर्माणि तानि च पृथक्चेतनान्येव सर्वशः।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च ।।'

इति ***नारायणाध्वरीये*** । आधिक्यक्रममाह— **स्वयम्भ्विति** ।। स्वयमव्ययं भगवतस्सकाशाद्भवतीति स्वयम्भूः ब्रह्मा च प्राणात्मा मुख्यप्राणश्च शेषश्च गरुडश्च ईशो रुद्रश्च स्वयम्भुप्राणात्मशेषगरुडेशाः त एव मुखं येषां ते तथा तान् समग्रान् समस्तान् जीवानित्यनेनान्वयः इति **वरदराजीये** । जनने हेतुमाह— **स्वेति** ।। अनेनैव जन्यजीवानां ग्रहणमिति ज्ञापितम् । तेन सङ्कर्षणोदरस्थस्वोदरस्थानामपि सूक्ष्मदेहकरणं ज्ञातव्यम् । तेषां सर्वेषां पालनार्थं प्रद्युम्नाय दानं च ज्ञातव्यम् । 'व्यूहात्तृतीयात्पुनरेव' इति तृतीयाध्यायकथनात् । ब्रह्मादीनां जीवानां देहयोगेन जननकथनान्मिश्रसृष्टिः देहजननकथनात्केवलसृष्टिरुक्ता भवति । कालक्रमः तत्वविवेके —

'कालतो बलतश्चैव ज्ञानानन्दादिकैरपि ।
गुणैः सर्वैर्विष्णुरेव श्रेष्ठस्तदवमा रमा ।।
अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः।
अवरो बहुलांशेन तत्समो वायुरुच्यते ।।
नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः।
तस्मात्समानता मुक्तौ वायुत्वे किञ्चिदूनता ।।
दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः ।।'

वायूत्पत्त्यनन्तरं संवत्सरात्मकः कालो ज्ञेयः।

'यावत्पश्चाज्जनिस्तावत् पूर्वं देहक्षयो भवेत् ।
ब्रह्मवायुस्तयोर्देव्यौ तद्दशांशाः सुखाधिकाः ।।
शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः।
शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ।।
तद्देव्यस्तद्दशांशास्स्युस्ततस्त्विन्द्रादयो मताः।
एवमुक्ताश्च पूर्वं च नान्यथा क्वचिदिष्यते ।।' इति ।

नन्वत्र प्रद्युम्नस्य सृष्टिकर्तृत्वमनिरुद्धस्य स्थितिकर्तृत्वमात्रेस्यैव निर्देहकानित्यनेन तथा तृतीयाध्याये 'व्यूहात्तृतीयात्' इत्यनेन तथा षड्विंशोऽध्याये

'न मादृशोऽन्योस्ति कुतः परो यत्सोऽहं चतुर्धा जगतो हिताय ।
स्थितोऽस्मि मोक्षप्रलयस्थितीनां सृष्टेश्च कर्ता क्रमशस्स्वमूर्तिभिः।।
सवासुदेवादिचतुस्स्वरूपस्थितोऽनिरुद्धो हृदि चाखिलस्य ।।'

इत्यनेन प्रद्युम्नस्य स्थितिकर्तृत्वमनिरुद्धस्य सृष्टिकर्तृत्वमुच्यते । अतो विरोधः इति चेत् सत्यम् । सूक्ष्मसृष्टि-कारणस्त्रीपुंजननात् । बीजरूपजीवदानात् ।

'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः।
ससर्ज मातापितृवदूर्णनाभिवदेव च ।।'

इति वचनात् तस्यापि स्रष्टृत्वात् सृष्टिकर्तृत्वं बहिस्थित्वा स्थूलसृष्टेः पालनात्स्थितिकर्तृत्वं च प्रद्युम्नस्योपपद्यते। तथानिरूद्धस्य सूक्ष्मसृष्टिपालनात् पश्चादपि 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति श्रुतेः। 'स जीवनामा भगवान् प्राणधारणहेतुत' इति स्मृतेश्च 'अनेन जीवेनात्मना' इति श्रुतेश्च स्थितिकर्तृत्वं स्थूलसृष्टिकारणाच्च सृष्टिकर्तृत्वं सिद्धम्। अतस्तयोरुभयस्यापि सत्वान्न विरोधः ।। ९ ।।

**भारतश्री**— निर्देहकान् लिङ्गदेहातिरिक्तदेहशून्यान् ।। ९ ।।

**पञ्चात्मकस्स भगवान्द्विषडात्मकोऽभू-**
**त्पञ्चद्वयी शतसहस्रपरोऽमितश्च ।**
**एकस्समोऽप्यखिलदोषसमुज्झितोऽपि**
**सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत् ।। १० ।।**

**व्यास**— जडसृष्टिर्महत्तत्वादिविषया वक्ष्यते । प्रकृतां शुद्धसृष्टिमेवाह— **पञ्चात्मक इति** ।। केशवादिरूपेण द्विषडात्मकः मत्स्यादिरूपेण पञ्चद्वयात्मकः नारायणादिरूपेण शतात्मकः विश्वादिरूपेण सहस्रात्मकः परादिरूपेण बह्वात्मकः अजितादिरूपेण अमितात्मकः। यद्वा परोऽमितश्चेति बृहतीसहस्रऋचां स्वरसमसङ्ख्यः परः व्यञ्जनसमसङ्ख्योऽमितः। ननु भगवतः स्वनिष्ठबहुत्वसङ्ख्यावत्वे भेदप्रसक्त्या तत्प्रयुक्तं गुणतारतम्यं दोषाः स्युरित्यत आह— **एको भेदरहित इति** ।। समत्वमेव विशदयति— **सर्वत्रेति** ।। उत्तरं किमुक्तमित्यत उक्तं बहूनि उपमा यस्य स तथोक्तः। बहुत्वमेवास्ति नान्यत्वं मानबाधादित्यर्थः।। १० ।।

**वादि**— लेशेनोक्तां शुद्धसृष्टिं विस्तरेणाह— **पञ्चात्मक इति** ।। मूलरूपनारायणेन उक्तचतुर्भिश्च सह पञ्चात्मकः। केशवादिरूपेण द्विषडात्मकः द्वादशात्मक इत्यर्थः। मत्स्यादिरूपेण पञ्चद्वयी दशरूप इत्यर्थः। 'अर्श आदिभ्योऽच्' इति सूत्रात् नारायणादिशतरूपवान् शतः। विश्वादिसहस्ररूपवान् सहस्रः। परादिबहुरूपवान् परः। अजहत्स्वार्थलक्षणया परपदं परादिबहुरूपोपलक्षकम् । द्वन्द्वादुपरि एकवद्भावः। बहुत्वं च सहस्रादुपरि अयुतनियुतादिरूपा काचन सङ्ख्या । अजितादिरूपेणामितः अनन्तः। प्रागुक्तं शुद्धत्वं विवेचयति— **एक इत्यादिना** ।। बहूपमोऽभूत् बहूनां स्वभावतो बहूनां जीवादीनामुपमा यस्य सः तथोक्तः। विशेषशक्तिप्रसाधितमेव बहुत्वं भगवतः न तु जीवानामिव स्वाभाविकं बहुत्वम् । अतो न भेदशङ्केति भावः ।। १०-११ ।।

**अभिनव**— तत्रैव '**पञ्चात्मकस्सः भगवान्**' इति श्लोके शतसहस्रपर इत्यत्र परशब्देन सहस्रसङ्ख्यापेक्षयोत्कृष्टा या दशसहस्रादिसङ्ख्या, तत्परत्वमुच्यते । एतेन दशसहस्रादिसङ्ख्यावान् इति वक्तव्यं परनामकरूपवानिति कथनमयुक्तमिति दूषणं परास्तम् । परशब्देन भगवतः दशसहस्रादिसङ्ख्यावत्वमेवोच्यते न तु परनामकरूपवत्त्वमित्यभ्युपगमात् ।। १० ।।

**सङ्क**— न केवलं पञ्चमूर्तिरिव नारायणः किन्तु द्वादशादिप्रभेदेनानन्तमूर्तिः सोऽभवदित्याह— **पञ्चात्मक इति** ।। केशवादिरूपेण द्विषडात्मकः। मत्स्यादिरूपेण पञ्चद्वयात्मकः। नारायणादिरूपेण शतात्मकः। विश्वादिरूपेण सहस्रात्मकः । परादिरूपेण बह्वात्मकः। अजितादिरूपेणाऽमितात्मकः सोऽभवदित्यर्थः। ननु बहुत्वे

नारायणस्य भेदासमत्वसदोषत्वापूर्णत्वादि जीवजडवत् स्यात् इत्यत आह— **एक इति** ।। जीवजडबहुत्वमुपमा दृष्टान्तः स्वबहुत्वे यस्यासौ बहूपम इत्यर्थः ।। १० ।।

**वरद**— इतः परं जातां सृष्टिं तृतीयाध्याये वक्ष्यन् प्रसङ्गसङ्गत्या अध्यायद्वये भगवतो महन्माहात्म्यं ब्रह्मादीनां तारतम्यं च सप्रमाणकं निरूपयितुं आह— **पञ्चात्मक इत्यादिना** ।। न केवलं पूर्वोक्तरीत्या नारायणवासुदेव–सङ्कर्षणप्रद्युम्नानिरुद्धभेदेन पञ्चात्मकः पञ्चस्वरूप एव स भगवान् अपि तु केशवादिभेदेन द्विषडात्मकः द्वादशा–त्मकोऽभूत् । तथा पञ्चद्वयी मत्स्यादिभेदेन पञ्चद्वयी दशात्मकोऽप्यभूत्। तथा नारायणादिभेदेन शतात्मकः विश्वादिभेदेन सहस्रात्मकः परादिभेदेन बह्वात्मकः अजितादिभेदेन अमितात्मकश्चेत्यर्थः। चशब्देन—

[1]"स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः।
परादिरूपो बहुधा सोऽनन्तात्माजितादिकः ।।'

इत्यादि प्रमाणमुक्तार्थे समुच्चिनोति । ननु बहुत्वसङ्ख्यावत्वे नारायणस्य भेदवत्वासमत्वसदोषत्वापूर्णगुणत्वादि जीवजडवत् स्यात् इत्यतः आह— **एक इति** ।। एकः स्वगतभेदविवर्जितः। समो गुणतारतम्यरहितः। सर्वरूपेषु अखिलैर्दोषैः पारतन्त्र्यादिभिः समुज्झितः रहितः । सर्वत्र पूर्णगुणकोऽपीति समशब्दार्थकथनम् । तर्ह्येतादृशे कथं जीवजडवद्बहुत्वमित्यत उक्तम्— **बहूपम इति** ।। जीवजडवद्बहुत्वं उपमा दृष्टान्तः स्वबहुत्वे यस्यासौ तथोक्तः विशेषबलाद्बहुत्वमेवास्ति न तु तत्प्रयुक्तं भेदादि प्रमाणबाधादित्यर्थः ।। **१०** ।।

**जना**— पुनः शुद्धां सृष्टिमाह— **पञ्चेति** ।। पञ्चात्मकः वासुदेवादिमूर्तिभिः सह पञ्चस्वरूपः नारायणः। केशवादिरूपैः द्विषडात्मकः द्वादशात्माभूत् । यद्वा उक्तानुक्तसृष्टिमेकीकृत्याह— **पञ्चेति** ।। स भगवान् नारायणः पञ्चात्मकः पुरुषवासुदेवादिरूपेण पञ्चात्मकोऽभवत् । ननु—

[2]"विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यतो विदुः।
प्रथमं महतःस्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते ।।'

इत्युक्तत्वात् सप्तात्मक इति भाव्यं कथं पञ्चेति चेत्सत्यम् । तेषां रूपाणामेकत्वात् पञ्चेत्युक्तम् । तदुक्तम्—

[3]'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः।
असृजत्स महत्तत्त्वं स एवाण्डं समाविशत् ।
स ब्रह्मणो हृदि स्थित्वा हृदयं चेति कीर्त्यते ।।' इति ।

अत्र ब्रह्मण इत्युपलक्षणम् । सर्वेषामिति ज्ञेयम् । उभयत्र स्वरूपवाचकात्मनेपदप्रयोगात् सर्वावताराणां अभेदं सूचयति । पञ्चद्वयी मत्स्यादिदशरूपवान् । नारायणादिरूपेण शतरूपवान् । विश्वादिसहस्ररूपवान् । परशब्देन अष्टादशस्थानगतसङ्ख्या चोच्यते । तदुक्तं वायुपुराणे—

[4]"स्थानं दशगुणं विद्यादेकं दशशतं ततः।
सहस्रमयुतं तस्मान्नियुतं प्रयुतं ततः ।।

---

१. बृ.भा. ४-६ । २. भा.ता. ११-४-३ । ३. भा.ता. ३-७-८ । ४. उत्तरार्द्ध अ. ३९- ९३-१०५ उपलभ्यमानवायुपुराणे तु आनुपूर्व्याः किञ्चिद् व्यत्यासो दृश्यते ।

अर्बुदं न्यर्बुदं चैव वृन्दं चैव ततः परम् ।
खर्वं चैव निखर्वं च शङ्खं पद्मं तथैव च ।।
समुद्रो मध्यमन्तश्च परार्धं परमेव च ।
एवमष्टादशैतानि पदानि गणना विधौ ।।
कल्पसङ्ख्या प्रवृत्तिस्तु परार्धो ब्रह्मणः स्मृतः।
तावच्छेषोऽस्य कालोऽन्यस्तदन्ते प्रतिसृज्यते ।।
परार्धं द्विगुणं चापि परमाहुर्मनीषिणः ।।' इति ।

परादिरूपेण परसङ्ख्याकरूपवान् । शतं च सहस्रं च परं च शतसहस्रपराणि रूपाणि यस्य स इति समासः। अजितादिरूपेणामितरूपवान् । तथोक्तं ब्रह्मपुराणे—

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ।।' इति ।

ननु भगवतः बहुसङ्ख्यात्वेन बहुता न्यूनाधिकगुणवत्तादिबहुदोषाः स्युः एकत्वे पञ्चद्वयीत्यादिसङ्ख्याकथनं कथमित्यत आह— **एक इति** ।। एकत्वसङ्ख्यावानभिन्नः इत्यर्थः। सर्वत्र सर्वरूपेषु देशकालाभ्यां समोऽपि । अखिलदोष-समुज्झितोऽपि । पूर्णगुणकोऽपि । बहूपमः बहुना स्वाभाविकबहुना जीवेनोपमा यस्य स तथोक्तः। विशेषशक्ति-प्रसाधितमेव बहुत्वं भगवतः न तु जीवानामिव स्वाभाविकं बहुत्त्वम् । अतो न भेदशङ्का इति भावः। सृष्टिकाल एवावताराणां पृथग्भावः न तु तत्तत्काले । तदुक्तं गीताभाष्ये—

[१]"रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः।
वाराहं नारसिंह च वामनं मानुषं तथा ।।' इति ।

'तत्रैव प्रथमसर्गकाल एवावताररूपाविभत्त्युक्तेः' इति । संहारकाले च रूपाणां संश्लेष एव न त्वैक्यम् । तदुक्तम्—

[२]"हरेरपि स्वरूपाणां एकीभावो यदोच्यते ।
संश्लेष एव सिद्धत्वात् स्वरूपैकस्य नो भवः ।।' इति ।

रूपाणां द्वितीयतृतीयत्वादिकं ब्रह्मबुद्धौ व्यक्तिक्रममपेक्ष्य। तदुक्तं तन्त्रसारे—

[३]"वर्णानां देवतानां च नित्यत्वात् न क्रमः स्वतः।'
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ।।' इति ।

यद्वा विश्लेषमनुसृत्य । अत एवोक्तं बृहद्भाष्ये—

[४]"परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ।
न देशकालसामर्थ्यैः पारावर्यं कथञ्चन ।।
लौकिकव्यवहारो यो भूभारक्षपणादिकः।
तददृष्टिं विना नान्यो लयः कृष्णादिनां क्वचित् ।।' इति ।

---

१. गी.भा. ९-११, मोक्षधर्मेऽपि अ. ३५९-३७ । २. आथर्व.भा. ४-१-६ । ३. तं.सा. १-२७ । ४. बृ.भा. ७-१-१ ।

प्रथमतात्पर्ये वाराहे च–

[1]"तत्स्वीकारादिशब्दस्तु हस्तस्वीकारवत्स्मृतः।
वैलक्षण्यं न वा तत्र ज्ञानमात्रार्थमीरितम् ।।
केवलैश्वर्यसंयोगादीश्वरः प्रकृतेः परः ।
जातो गतस्त्विदं रूपं तदित्यादि च वर्तते ।।' इति ।

ननु पद्मनाभात् विश्लेषसंश्लेषौ श्रूयते । तथा हि प्रथमस्कन्धे—

[2]"एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ।।' इति ।

'अत्रैकीभवन्ति अन्त' इति तात्पर्यं चेति चेत्सत्यम् । अण्डाद्बहिर्मूलरूपात् विश्लेषस्तस्मिन्नेव संश्लेषः। अण्डान्तस्थपद्मनाभात् विश्लेषस्तस्मिन् संश्लेष इति विवेकः ।। १० ।।

**ताम्र**— आदिकालीनसृष्टिं तत्प्रयोजनं चोक्त्वा कालान्तरभाविनीं शुद्धसृष्टिमाह— **पञ्चेति** ।। वासुदेवादि– सृष्ट्यपेक्षया कालान्तरभाविनीयं सृष्टिरिति कुत इति चेन्न । व्यवधानेनोक्तत्वात् । अन्यथा तत्रैव किमिति नावादीत् । 'प्रथमसर्गकाल एवावतारविभक्त्युक्तेः' इति गीताभाष्यवाक्यस्य मानुषादिजात्युत्पत्तेः प्रागेवेति व्याख्यातत्वाच्च । आदिकाले हि भगवान्नारायणो निजमुक्तिपदप्रदानार्थं चतुर्मूर्तिः बभूव । ततः कालान्तरपर– प्रयोजनान्तरार्थं द्वादशादिव्यूहो जात इति सुधायामुक्तत्वाच्च । 'पञ्चात्मक' इत्यत्र मूलरूपेण सह पञ्चात्मकत्वमुक्तम् ।

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिक ।।' इति ।

वचनात्तदनुसारेण च विशेषो ज्ञेयः। [3]"शतधा नामाष्टशतवाच्यत्वेन । शतर्चिनः इतिवत् सामीप्यादविरोधः' इति ***तत्त्वप्रदीपे*** विरोधपरिहारो द्रष्टव्यः। ननु ब्रह्मणः गुणपूर्णत्वव्युत्पादनाय सृष्टिकर्तृत्वस्य तन्नियामकतया बहुभावस्य चोक्तौ बहवो दोषा आपतन्ति । बहुभावे भेदप्रसक्त्या तत्प्रयुक्तगुणाल्पत्व–तारतम्यप्राकृतविग्रहवत्वादिप्राप्तेरित्यत आह— **एकेति** ।। एको भेदरहित इति । एकत्वमिन्द्रार्जुनादावपि वर्तत इत्यत उक्तम्— **सम इति** ।। 'इत्थमेव निहितम्' इत्युक्तेः समत्वं मुख्यप्राणरूपेष्वस्तीत्यत अखिलेत्युक्तम् । उक्तविशेषणं श्रीरूपेषु वर्तत इत्यत उक्तम्— **सर्वत्रेति** ।। सर्वरूपावयवगुणक्रियादिषु च । पूर्णगुणक इत्युपलक्षणम् । द्रव्यतः पूर्ण इति च ज्ञेयम् । तादृशस्य कथं बहुभाव इत्यत एकस्यैवाचिन्त्यशक्तिघटितविशेषबलाद्बहुसङ्ख्या–गोचरत्वमेव वस्तुतो न देवदत्तादिवद्बहुत्वमित्याह— **बहूपम इति** ।। वस्तुतो बहुत्ववतां यथा बहुसङ्ख्यागोचरत्वं तथा निर्भेदस्यैव बहुसङ्ख्यागोचरत्वमभवदित्यर्थः।। **१०** ।।

**जम्बु**— इतः परं जातां सृष्टिं तृतीयाध्यायेन वर्णयिष्यन् प्रसङ्गसङ्गत्याध्यायद्वयेन भगवतो माहात्म्यं ब्रह्मादीनां तारतम्यं च सप्रमाणकं निरूपयितुं पुनः शुद्धां सृष्टिमाह— **पञ्चात्मक इत्यादिना** ।। वासुदेवादि– मूर्तिभिस्सह पञ्चात्मकः पञ्चस्वरूपः स भगवान्नारायणः केशवादिरूपैः द्विषडात्मकः द्वादशात्माभूत्। यद्वा

१. भा.ता. १-३-१ । २. भा. १-३-५ । ३. तत्त्वप्रदीपः २-३-४८ ।

उक्तानुक्तसृष्टिमेकीकृत्याह— **पञ्चेति** ।। स: भगवान्नारायण: पञ्चात्मक: पुरुषवासुदेवादिरूपेण पञ्चात्मक: अभवत्। ननु—

'विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाणि ये विदु:।
प्रथमं महतस्स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यत ।।' इति

वचनात् सप्तात्मक इति भाव्यम् । कथं पञ्चेति चेत्सत्यम् । तेषां रूपाणामेकत्वात् पञ्चेत्युक्तम् । तदुक्तम्—

'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तित:।
असृजत्स महत्तत्वं स एवाण्डं समाविशत् ।
स ब्रह्मणो हृदि स्थित्वा हृदयं चेति कीर्त्यते ।।' इति ।

अत्र ब्रह्मण इत्युपलक्षणं सर्वेषामिति ज्ञेयम्। उभयत्र स्वरूपवाचकात्मनेपदप्रयोगात् सर्वावताराणामभेदं सूचयति । पञ्चद्वयी मत्स्यादिदशरूपवान् । नारायणादिशतरूपवान् । विश्वादिसहस्ररूपवान् । परशब्देन अष्टादशस्थान-गतसङ्ख्या उच्यते । तदुक्तं वायुपुराणे—

'स्थाने दशगुणं विद्याद् एकं दशशतं तत:।
सहस्रमयुतं तस्मात् नियुतं प्रयुतं तत: ।।
अर्बुदं निर्बुदं चैव बृन्दं चैव तत: परम् ।
खर्वं चैव निखर्वं च शङ्खं पद्मं तथैव च ।।
समुद्रो मध्यमं तच्च परार्धं परमेव च ।
एवमष्टादशैतानि पदानि गणना विधौ ।।
कल्पसङ्ख्याप्रवृत्तिस्तु परार्धो ब्रह्मणस्स्मृत:।
तावत् शेषोऽस्य कालोऽन्य: तदन्ते प्रतिसृज्यते ।।
परार्धं द्विगुणं चापि परमाहुर्मनीषिण: ।।'

इति परादिरूपेण परसङ्ख्याकरूपवान् । शतं च सहस्रं च परं च शतसहस्रपराणि रूपाणि यस्य स इति समास:। अजितादिरूपेण अमितादिरूपवान्। तथा चोक्तं ब्रह्मपुराणे—

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपक:।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रक: ।।
परादिरूपो बहुधा सोऽनन्तात्माजितादिक: ।।' इति ।

ननु भगवत: बहुसङ्ख्यावत्त्वेन बहुतरन्यूनाधिकगुणवत्तादिगुणदोषा: स्यु: एकत्वे च पञ्चद्वयीत्यादिसङ्ख्याकथनं कथं इत्यत आह— **एक इति** ।। एकत्वसङ्ख्यावान् अभिन्न इत्यर्थ:। सर्वत्र सर्वरूपेषु देशकालाभ्यां समोऽपि सम: गुणतारतम्यरहित इति वा। अखिलदोषसमुज्झितोऽपि पूर्णगुणकोऽपि बहूपम: बहुना स्वाभाविकबहुना जीवेनोपमा यस्य स तथोक्त:। विशेषशक्तिप्रसाधितमेव बहुत्वं भगवत: न तु जीवानामिव स्वाभाविकं बहुत्वम्। अतो न भेदशङ्केति भाव:। सृष्टिकाल एवावताराणां पृथग्भाव: न तु तत्तत्काले। तदुक्तं गीताभाष्ये मोक्षधर्मे—

'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय स:।
वाराहं नारसिंहं च वामनं मानुषं तथा ।।' इति ।

मूलरूपिनारायणेन उक्तचतुर्भिश्च सह पञ्चात्मकः। अर्शादिभ्योऽजिति सूत्रान्नारायणादिशतरूपवान् शतः। विश्वादिसहस्ररूपवान् सहस्रः। परादिबहुरूपवान् परः। अत्राजहत्स्वार्थलक्षणया परपदं परादिबहुरूपोपलक्षकम् । द्वन्द्वादुपरि एकवद्भावः। बहुत्वं च सहस्रादुपरि अयुतनियुतादिरूपा काचन सङ्ख्या । पञ्चात्मक इति तदुक्तं तैत्तिरीयभाष्ये—

'अनिरुद्धश्च प्रद्युम्नस्तथा सङ्कर्षणः प्रभुः ।
वासुदेवो नारायणः पञ्चरूप इति क्रमात् ।।

केशवादिरूपेण द्विषडात्मकः मत्स्यादिरूपेण पञ्चद्वयात्मकः। तदुक्तमैतरेयभाष्ये—

'[1]"मत्स्यः कूर्मः क्रोडसिंहौ वटुरामौ च भार्गवः ।
कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः ।।' इति ।

नारायणो नरश्शौरिरित्यादिरूपेण शतात्मकः विश्वादिरूपेण सहस्रात्मकः। परादिरूपेण बह्वात्मकः। अजितादि-रूपेणानन्तात्मकः। बृहतीसहस्रऋचा स्वरसमसङ्ख्याकः परः । वनसमसङ्ख्यमित्यन्ये । 'आदिकाले हि भगवन् नारायणो निजमुक्तिपदप्रदानार्थं वासुदेवादिचतूरूपो बभूव ततः कालान्तरे परप्रयोजनार्थं द्वादशादिव्यूहो जातः' इति सुधायामुक्तत्वाच्चेति ।। १० ।।

**भारतश्री—** इतः परं जातां सृष्टिं तृतीयाध्याये वक्ष्यन् स्मृतभगवन्माहात्म्यं ब्रह्मादितारतम्यकथनपूर्वकं सप्रमाणकं निरूपयति— पञ्चात्मकः नारायणानिरुद्धसङ्कर्षणवासुदेवरूपेण । द्विषडात्मकः-केशवादिदामोदरान्तं द्वादशात्मा । पञ्चद्वयी मत्स्यादिरूपः । शतं नारायणादि । सहस्रं विश्वादि । परो बहुरूपः । अमितः अजादिरूपः ।

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।।
परादिरूपो बहुधा सोऽनन्तात्मा अजितादिकः ।।'

इति प्रमाणानुसारेण इदमुक्तम् । यद्वा परोऽमितश्चेति बृहतीसहस्रऋचां स्वरसमसङ्ख्यो परः व्यञ्जनसमसङ्ख्यो अमित इति । जीवजडबहुत्वं उपमादृष्टान्तः स्वबहुत्वे यस्यासौ तथोक्तः । विशेषबलात् बहुत्वं न तु तत्प्रयुक्तं भेदादि । प्रमाणबाधादिति । अथवा बिम्बोऽभूदिति ।। १०-१४ ।।

**राम—** एवं वासुदेवादिचतुर्णां प्राचुर्येण मोक्षादिदातृत्वमप्राचुर्येण सृष्ट्यादिकर्तृत्वं चाभिधाय वासुदेवादिव्यूहा-भिव्यक्त्यनन्तरं ब्रह्माण्डोत्पत्तेः प्रागेव प्रलयवर्तिनो नारायणादेव व्यूहभेदेनाभिव्यक्तानि अध्यात्मादिषु स्थितस्य हरेः बहुधा आवरणतया स्थितानि शक्तिरूपाण्याह— **पञ्चात्मक इत्यादिना** ।। स प्रलयवर्ती नारायणः अनिरुद्धः प्रद्युम्नः सङ्कर्षणः वासुदेवः नारायण इति पञ्चात्मकोऽभूत् । स नारायण इति सर्वत्रानुषङ्गः। द्विषडात्मकः केशवादिद्वादशात्मकः। पञ्चद्वयी मत्स्यादिः। शतं नारायणादिः। सहस्रं विश्वादिः। परो बहुरूपः। अमितः अजादिरूपः इति ।

'स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः।।' इत्युक्तेः।

---

१. ऐ.भा. २-२-४ ।

यद्वा अध्यात्मस्थभगवद्रूपाण्याह— **पञ्चात्मक इत्यादिना** ।। द्विषडात्मकः अनन्तविश्वरूपसहितमत्स्यादिदशात्मक इत्यर्थः । [१]''अनन्तं विश्वरूपं च तद्बहिः पूजयेत् क्रमात्' इति तन्त्रसारोक्तेः। अन्नमयादिकृद्धोल्कादिपञ्चकद्वयी। शतमजादिकलशनामकम् ।

[२]''एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः।
आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ।।
क्रोडो नृसिंहस्सवटुर्जामदग्न्यरघूद्वहौ।
वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।।
शिंशुमारश्चेति शतं कला कलशनामकाः ।।' इति

सहस्रं बृहतीसहस्रऋक्प्रतिपाद्यम् । परादिरूपः तद्गतवर्णप्रतिपाद्यः। अजादिः तद्गतस्वरप्रतिपाद्योऽमितरूपश्च बभूवेति । चशब्दात् 'विश्वाद्याः मोचकाद्याश्च अणिमाद्याश्च शक्तयः' इत्यादिप्रमाणान्तरोक्तव्यूहान्तराणि च बभूव इति ज्ञातव्यम् ।। ननु पञ्चात्मक इत्यादिनोक्तव्यूहानां अण्डोत्पत्तेः प्रागेवाभिव्यक्तिरित्येतत् कुतोऽवगम्यत इति चेदुच्यते । 'जगृहे पौरुषं रूपं भगवन्महदादिभिः' इत्यारभ्य

'एतन्नानावताराणां निदानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः।
स एवः प्रथमं देवः कौमारं सर्गमास्थितः ।।'

इत्यादिना प्रथमस्कन्धे तृतीयाध्याये अण्डान्तरेव अवताराणामभिव्यक्त्युक्ते तेषां तत्र तदैव अभिव्यक्तिरिति ज्ञायते। शक्तिरूपाणामध्यात्मस्थत्वं चोक्तं काठकभाष्ये—

[३]''उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना ।
मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत् ।
भूतैस्सह महाविष्णुः परमात्मा युगे युगे' इति ।

एवं पञ्चात्मक इत्यादिना भगवच्छक्तिरूपाणामभिव्यक्तिमभिधाय तेषां भेदादिदोषराहित्यकथनपूर्वं बिम्बरूपाभिव्यक्तिमाह— **एकः समोऽपीत्यादिना** ।। स भगवानेकोऽपि बहूपमः जीवजडबहुत्वं उपमा दृष्टान्तः स्वबहुत्वे यस्यासौ तथोक्तः। विशेषबलाद्बहुत्वम् ।। १० ।।

**[४]निर्दोषपूर्णगुणविग्रह [५]आत्मतन्त्रो**
**[६]निश्चेतनात्मकशरीरगुणैश्च हीनः ।**

---

१. तं.सा. १-५७ । २. तं. सा.२-७ । ३. का.भा. २-१ ।

४. 'समस्तकल्याणगुणात्मकोऽसौ..... । तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे' इति विष्णुपुराणे (६अं.- ८४-८५) ।

५. 'क्षराक्षरेभ्यश्च परं स्वतन्त्रम्।'(स्कन्द.२ वैष्णव. वैशाखमासमाहात्म्यम् – १७ अध्याय - १३ श्लोकः) ।

६. ''योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः। प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते' इति पाद्मे (उ.खं.२२७अ/४०-४१) ।

**आनन्दमात्रकरपादमुखोदरादिः**
**[1]सर्वत्र च स्वगतभेदविवर्जितात्मा ।। ११ ।।**

**व्यास**— सुनित्य इति नोत्पत्तिनाशौ भगवत इत्युक्तं तत्कुत इत्यतो सदानन्दादिगुणात्मकत्वादित्याह— **निर्दोषेति** ।। तत्र हेतुः— **आत्मतन्त्र इति** ।। वादिनः प्रभाषन्ते ज्ञानाद्येव न वपुरिति तथा किमिति जिज्ञासायामाह— **आनन्दमात्रेति** ।। करचरणादावपि भेदो न मन्तव्य इत्याह— **सर्वत्रेति** ।। ११ ।।

**सङ्क**— ननु विष्णोर्बहुत्वं भेदादिरहितत्वं च कुत इत्याशङ्क्यां परिहरन् पूर्वश्लोकार्थं विवृणोति— **निर्दोषेति** ।। निर्दोषपूर्णगुणविग्रहेत्यादिलक्षणलक्षितत्वात् सर्वावताराणां न भेदादिकमस्तीत्यभिप्रायः। निर्दोषेत्यादेः विवरणम् आनन्दमात्रेत्यादि । आनन्दशब्दो ज्ञानादिगुणानामुपलक्षणार्थः।। ११ ।।

**वरद**— पुनः सर्वस्वरूपेषु कथम्भूतो भगवानित्यत आह— **निर्दोषेति** ।। निर्दोषाः दोषरहिताः पूर्णाः प्रत्येकं निरवधिकाः गुणा एव विग्रहो यस्य स तथोक्तः। आत्मतन्त्रः स्वतन्त्रः निश्चेतनात्मकैः जडभूतैः शरीरैः गुणैश्च हीनो रहितः। उक्तमेव विवृणोति— **आनन्देति** ।। आनन्दमात्राणि केवलानन्दात्मकानि करपादमुखोदरादीनि यस्यासौ तथोक्तः। सर्वत्र रूपेषु स्वगतभेदेन विवर्जितो रहित आत्मा स्वरूपं यस्य तथोक्तः।। ११ ।।

**जना**— इदानीं सर्वसदागमार्थं प्रमाणैरुपपादयितुं 'निर्दोषपूर्ण' इत्यारभ्य 'अर्थोऽयं' इत्यन्तेन ग्रन्थेन वक्ति । अत एव नात्र परस्परसङ्गतिः— **निर्दोषेति** ।। निर्दोषाः पूर्णाः गुणा एव विग्रहो यस्येति। आत्मतन्त्रः स्वतन्त्रो निश्चेतनात्मकं जडशरीरम् । जडाः गुणाश्च तैर्हीनः। गुणविग्रहत्त्वमेव विवृणोति— **आनन्द इति** ।। आनन्द इत्युपलक्षणम् । ज्ञानाद्यपि ग्राह्यम् । मात्रशब्दोऽयोगव्यवच्छेदार्थः। अनानन्दादिव्यावर्तको वा । ईश्वरगुणानामभेदसूचको वा । सर्वत्र सर्वावतारेषु स्वगतभेदविवर्जितः आत्मा देहो यस्य स तथेति ।। ११ ।।

**ताम्र**— ननु हरेःशरीराभावे स्रष्टृत्वायोगः। प्राकृतशरीरवत्वे जनिमृत्यादिदोषः सर्वदा सर्वसद्गुणव्यक्त्यभावश्च। तथा चोक्तमयुक्तमित्यत आह— **निर्दोष इति** ।। तत्र हेतुः— **आत्मतन्त्र इति** ।। वक्ष्यति च 'स्वतन्त्रत्वात्सुख-सज्ज्ञानशक्तिगुणैः पूर्णो सर्वदोषोज्झितश्च' इति । ननु [2]"साक्षी चेता केवलो निर्गुणश्च' इति गुणनिषेधाद् [3]"अशरीरः सदा विष्णुः' इति [4]"अशरीरो वायुरभ्रं विद्युस्तनयित्नुः' इति देहनिषेधात्कथं गुणास्तदात्मकदेहो वेत्यतः श्रुतिगतिमाह— **निश्चेतनात्मकेति** ।। गुणा एव विग्रहोऽस्येत्युक्ते करचरणादिमान् विग्रहो नास्तीति प्रतीतिः स्यादत आह— **आनन्दमात्रेति** ।। न गुणानामेव विग्रहशब्दवाच्यत्वमुच्यते । किन्तु गुणा एव करचरणाद्यात्मना

---

१. 'गोलोके यः स वैकुण्ठे श्वेतद्वीपे स एव च। अंशांशिनोर्न भेदश्च ब्रह्मन्वह्निस्फुलिङ्गवत्।' इति ब्रह्मवैवर्ते (ब्रह्मखण्ड/१७अ/३७) 'सृजते ह्यनिरुद्धोऽत्र प्रद्युम्नः पाति तत्कृतम्। सृष्टं तद्रक्षितं चात्ति स च सङ्कर्षणः प्रभुः। ....यद्यप्येकगुणोन्मेषस्तथाप्येते हि षड्गुणाः। अन्यूनानधिकास्सर्वे वासुदेवात्सनातनात्। ...नैवेषां वास्तवो भेदश्चिन्तनीयो दिवस्पते। तत्तत्कार्यप्रसिद्ध्यर्थं कृतोऽसौ कल्पनावशात्। ज्ञानान्नान्यत्तथैश्वर्यं तस्मान्नान्या च शक्तिका। मयैताः कल्पिताः शक्र ध्यानविश्रामभूतयः।' इति लक्ष्मीतन्त्रे (४अ/१९-२४)। अत्र यद्यपि सर्वेषां रूपाणां 'तथाप्येते हि षड्गुणाः' इति षाड्गुण्यमेवोच्यते । तथापि षड्गुणेष्वेव अनन्तगुणानामन्तर्भावो इति ज्ञेयम् । 'षाड्गुण्ये सर्वगुणान्तर्भावो वा' इति प्रमेयदीपिकोक्तेः ।

२. श्वेताश्वतरोपनिषत् । ३. भा.ता. ११-७-१७ । ४. भा.ता. ११-७-१७ ।

वर्तन्त इति भाव:। अत एव [1]"पूर्णशक्तिचिदानन्दश्रीतेजस्पष्टमूर्तय' इति याज्ञीयोपनिषद्भाष्यटीकायां स्पष्टपदमेवं अवतार्य व्याख्यातम् । मात्रशब्दोऽनानन्दादिव्यावर्तक:। आनन्दशब्दो गुणान्तरोपलक्षक:। स्वपदेनाग्रहणं तु सर्वगुणानामानन्दप्रयोजकत्वेन आनन्दस्यैव फलरूपत्वज्ञापनाय । यद्वा अवयवानां सर्वगुणात्मकत्वेऽपि ज्ञानादिगुणानामपि मौक्तभक्तेरनुकूलवेदनीयत्ववत् अनुकूलवेदनीयतया आनन्दरूपत्वं तदात्मकदेहस्यापि तथात्वं तस्यैवोच्चताहेतुत्वादिति द्योतयितुं आनन्दमात्रेत्युक्तम् । अथवा 'माङ् माने' इत्यस्माद्धातो: कर्तरि त्रप्रत्ययोऽयम् । तथा च आनन्दानुभवितृकरादिमानित्यर्थ:। शरीरशरीरिभावेन अवयवबहुत्वेन च प्राप्तभेदं निवारयन् गुणात्मक-देहवत्वे युक्तिमपि सूचयति-- **सर्वत्रेति** ।। वीत्युपसर्गाद् भेदाभेदनिषेध:। अयं भाव:-'आनन्दो ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादौ भगवत: कल्याणानन्तगुणात्मकत्वावगते:, शरीरशरीरिणोश्च भेदाभावात् , शरीरस्याप्यगणितगुणरूपत्वं सिद्धयति । तथा च श्रुति: [2]"यदात्मको भगवांस्तदात्मिका व्यक्ति: किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक: शक्त्यात्मक' इति ।। ११ ।।[3]

**जम्बु**— ननु शरीराभावे स्रष्टृत्वायोग: प्राकृतशरीरत्वे जनिमृत्यादिदोष: सर्वदा सर्वसद्गुणव्यक्त्यभावश्च तथाच उक्तमयुक्तमित्यत आह— **निर्दोषेति** ।। निर्गता: दोषा: येभ्यस्ते निर्दोषा: ते च ते पूर्णाश्च ते गुणाश्च निर्दोषपूर्णगुणा: त एव विग्रहो देहो यस्य स तथा। अत्र ऐतरेयभाष्योक्तमनुसन्धेयम्।

> 'निर्दोषगुणपूर्णश्च विष्णुरेको न चापर:।
> अपूर्णदोषरहिता मायैका तद्वशैव हि।
> अशेष: प्रायशो ब्रह्मा शेषवन्त: क्रमात्परे ।।' इति।

तत्र हेतु:— **आत्मतन्त्र इति** ।। स्वतन्त्र:। वक्ष्यति च 'स्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिपूर्वैर्गुणैर्विष्णुरेवाभिपूर्ण' इति। ननु 'साक्षी चेता केवलो निर्गुण' इति गुणनिषेधात् 'अशरीरस्सदा विष्णु:' इति शरीरनिषेधात् कथं गुणा: तदात्मकदेहश्चेत्यत: श्रुतिगतिमाह— **निश्चेतनेति** ।। निश्चेतनात्मकशरीरगुणै: । चेतनं चेतनत्वं भावप्रधानो निर्देश: । निर्गतं चेतनं यस्मात् तत् निश्चेतनं जडं तदेव आत्मस्वरूपं येषां ते निश्चेतनात्मान:। स्वार्थे क:। निश्चेतनात्मका: शरीराणि च गुणास्सत्वादयश्च निश्चेतनात्मकाश्च ते शरीरगुणाश्च निश्चेतनात्मकशरीरगुणास्तैश्च हीन: रहित: । गुणविग्रहश्चेत् करचरणादिविग्रहो नास्तीति प्रतीति: स्यात्। अत आह— **आनन्दमात्रेति** ।। मात्रशब्द: केवलपर: । आनन्द एव आनन्दमात्राणि केवलानन्दाद्यात्मकानि करौ हस्तौ च पादौ चरणौ च मुखं च उदरं च करपादमुखोदराणि तान्येवादयो येषां तानि करपादमुखोदरादीनि आनन्दमात्राणि करपादमुखोदरादीनि यस्य स तथोक्त:। न गुणानामेव विग्रहशब्दवाच्यत्वमुच्यते किन्तु गुणा एव करचरणाद्यात्मना वर्तन्त इति भाव:। अत एव 'पूर्णशक्तिचिदानन्दश्रीतेजस्पष्टमूर्तय' इति याज्ञीयोपनिषद्भाष्यटीकायां स्पष्टपदमेवावतार्य व्याख्यातम्। मात्रशब्दो अनानन्दादिव्यावर्तक:। आनन्दशब्दो गुणान्तरोपलक्षक:। स्वपदेनाग्रहणं तु

---

१. ई.भा. । २. सू.भा.२-२-४१ । ३. यद्वा केचित् 'आनन्दो ब्रह्म सयश्चायमशरीर: प्रज्ञात्मा' इति श्रुते: सच्चिदानन्दस्वरूपं ब्रह्म न ततोऽतिरिक्तकरचरणाद्याकृति:' इत्याहु: तद्दूषयितुमाह-**आनन्दमात्रेति** गुणान्तरोपलक्षक:। स्वपदेनाग्रहणन्तु सर्वगुणानामानन्दप्रयोजकत्वेन आनन्दस्यैव फलरूपत्वज्ञापनाय। यद्वा भक्तेरनुकूलवेदनीयत्ववत् ब्रह्मावयवानाञ्च अनुकूलवेदनीयतयाऽऽनन्दरूपत्वं तस्यैवोच्चता हेतुत्वादिति द्योतयितुं आनन्दमात्रेत्युक्तम् ।। ११ ।। इति हो. पुस्तके अधिक: पाठ: दृश्यते ।

सर्वगुणानामानन्दप्रयोजकत्वेन फलरूपत्वज्ञापनाय। अथवा 'माङ् माने' इत्यस्माद्धातोः कर्तरि अप्प्रत्ययः। तथा चानन्दानुभवितृकरचरणादिमानित्यर्थः। शरीरभावेनावयवबहुत्वेन च प्राप्तभेदं निवारयन् गुणात्मकदेहवत्वे युक्तिमपि सूचयति। सर्वत्र रूपगुणधर्मादिषु स्वगतभेदविवर्जितात्मा स्वस्मिन् गतः स्वगतः स चासौ भेदश्च तेन विवर्जितः रहितः आत्मा स्वरूपं यस्य स तथा। वीत्युपसर्गात् भेदाभेदनिषेधः। अयं भावः। 'आनन्दो ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादौ भगवतः कल्याणाद्यनन्तगुणात्मकत्वावगतेः शरीरशरीरिणोश्च भेदाभावात् शरीरस्याप्यगणितगुणपूर्णत्वं सिद्ध्यति। तथा च श्रुतिः 'यदात्मको भगवान् तदात्मिका व्यक्तिः। किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक' इति ।। ११ ।।

**[१]कालाच्च देशगुणतोऽस्य न चादिरन्तो**
**वृद्धिक्षयौ न तु परस्य सदातनस्य।**
**नैतादृशः क्व च बभूव न चैव भाव्यो**
**नास्त्युत्तरः किमु परात्परमस्य विष्णोः ।। १२ ।।**

**व्यास**— स्वरूपत एवं विधस्यापि भगवतो निमित्तान्तरैरुत्पत्त्यादिकमस्ति किमिति जिज्ञासायामाह— **कालादिति** ।। गुणतः सत्त्वादेः। एवं विधोऽन्यो जातो जायमानो जनिष्यन् वै तत्समोऽधिको वास्ति किमिति जिज्ञासायामाह नेत्याह— **नैतादृश इति** ।। नास्तीति वर्तमानस्य निषेधः। उत्तरः उत्तमः। ननु समरहितायाः श्रियोऽधिकस्य भगवतो दर्शनात् भग्नं कैमुत्यमिति चेन्न । तद्गुणवत्वे सति तदधिकगुणो ह्यधिक उच्यते श्रियश्च तद्गुणवान् समो भगवानस्ति अतस्तद्गुणवतो अभावे तदधिकगुणः सुतरां नास्तीति न कैमुत्यभङ्गः ।। १२ ।।

**वादि— 'आदिरन्त'** इत्यत्र आदिः पूर्वावधिः अन्तः उत्तरावधिः ।। १२ ।।

**अभिनव**— तत्रैव 'कालाच्च' इत्यस्ति । तस्यार्थः-परस्य सर्वोत्तमस्य सदातनस्य सदा विद्यमानस्य नारायणस्य आदिः उत्पत्तिः अन्तः विनाशश्च । तुशब्द एवार्थे । न तु नैव अस्ति । कालात् वृद्धिक्षयौ वृद्धिह्रासौ नैव स्तः । देशगुणतः देशात् गुणतश्च परिच्छेदो नैवास्तीति । एतेन देशगुणतः इत्येतदनन्वितमिति दूषणं परास्तम् । परिच्छेद इत्यस्य शेषमङ्गीकृत्य परिच्छेदो नैवास्तीत्यन्वयस्योक्तत्वात् । एतेनैव सदातनस्येत्यनेन कालात् परिच्छेदो नास्तीत्यर्थस्य लाभात् कालात् परिच्छेदो नास्तीत्येतत् पुनरुक्तमिति दूषणं निराकृतम् । कालादित्यस्य वृद्धिक्षयावित्यनेनैवान्वयः । न तु परिच्छेद इत्यनेनेत्यभ्युपगमात् ।। १२ ।।

---

१. 'गुणास्तस्य परिच्छेत्तुमैश्वर्यं भूतिवैभवम्। नैवं वस्तु परं येन परिच्छेदोऽस्य जायते। यत्र नायमसौ देवो न देशस्तादृशः क्वचित्। अतो देशपरिच्छेदः पुरुषस्य न विद्यते। यत्र नायमसौ देवो न कालस्तादृशः क्वचित्। अतः कालपरिच्छेदः पुरुषस्य न विद्यते। आश्रयान्तरसंशून्यो नाऽश्रयो विद्यते क्वचित्। निराश्रयाश्रयश्चैव परमात्माऽद्वयो मतः।' इति बृहद्ब्रह्मसंहितायां (४अ/२८-३१) 'नान्तोऽस्ति यस्य न च यस्य समुद्भवोऽस्ति वृद्धिर्न यस्य परिणामविवर्जितस्य। नापक्षयं च समुपैत्य विकारि वस्तु यस्तं नतोऽस्मि पुरुषोत्तममीशमीड्यम्।' विष्णुपुराण.६अं/८अ/६० ।

**सङ्क—** इतोऽपि विष्णोर्बहुत्वे भेदादिकं नास्तीत्याह— **कालादिति** ।। नन्वेतादृशोऽधिकोऽस्यास्तीति चेत् विष्णोः को विशेषः इत्यत आह— **नैतादृश इति** ।। १२ ।।

**वरद—** अस्य भगवतः कालाच्च देशगुणत देशतो गुणतश्च आदिरन्तश्च नास्तीत्यर्थः। सदातनस्य शश्वदेकप्रकारस्य परस्य सर्वोत्कृष्टस्य वृद्धिक्षयौ वृद्धिह्रासौ न स्त इत्यर्थः। एतादृश एतत्सदृशः क्वच देशे काले च पूर्वं न बभूव। भाव्यो भविष्योऽपि न । इदानीं च नास्ति । एवं च सति परात्परमस्य उत्कृष्टादुत्कृष्टस्य विष्णोरुत्तरः उत्कृष्टो नास्तीति किमु वक्तव्यमित्यर्थः।। १२ ।।

**जना—** स्वगतभेदाभावेऽपि कालाद्युपाधिना स्यादित्यत आह— **कालादिति** ।। देशाद्गुणतः सत्त्वादिगुणेभ्यः। आदिः पूर्वावधिः । अन्तः उत्तरावधिः। तत्र हेतुगर्भविशेषणद्वयम् । सदातनस्य सर्वदैकप्रकारेण वर्तमानस्येति । तदुपपादकम्— **परस्येति** ।। एतादृशः एतत्समानः क्वच कस्मिंश्चिदतीते काले न बभूव । भाव्य उत्पत्स्यमानो न चैव । इदानीन्तनो नास्तीत्यपि योज्यम् । यदा समो नास्ति तदोत्तमो नास्तीति किमु वक्तव्यम् । तत्र हेतुः पराल्लक्ष्म्याः परतमस्योत्कृष्टस्य विष्णोः देशकालगुणैर्व्याप्तस्येति । नन्वस्य कैमुत्यन्यायस्य भङ्गः लक्ष्म्यामिति चेन्न । तद्गुणवत्वे सति तदधिकगुणो ह्यधिक उच्यते । तथा सति य एव यदधिकः स एव तत्सम इति । तदेतत्सूचितमाचार्येण "बलेन विद्यया वाऽपि न समस्तत्पतिं विना' इति तत्त्वनिर्णयवाक्यमुद्धरता ।। १२ ।।

**ताम्र—** ननु यदि भगवतोऽन्यदुत्तमं स्यात्तर्हि तदधीनसत्ताकस्य हरेः कथमुक्तविधातिशयः स्यादित्यतो भगवल्लक्षणमाह— **कालादिति** ।। **देशगुणत इति** ।। देशतः आनन्दादिगुणतश्चेत्यर्थः। आदिः पूर्वावधिः। अन्तः उत्तरावधिः। सदातनस्य शश्वदेकविधस्य । अस्त्वेवं देशतः कालतो गुणतश्च निरवधिकत्वं वृद्धिक्षयरहितत्वं च भगवल्लक्षणम् । ततः किमित्यतस्तदुत्तमाभावं कैमुत्येनाह— **नेति** ।। ननु समरहितायाः श्रियोऽधिकस्य दर्शनाद्भग्नं कैमुत्यमिति चेत् तद्गुणवत्वे सति तदधिकगुणो ह्यधिक उच्यते । श्रियश्च तद्गुणवान् भगवानस्ति अतस्तद्गुणवत अभावे तदधिकगुणः सुतरां नास्तीति न कैमुत्यभङ्गः।। १२ ।।

**जम्बु—** ननु भगवतोऽन्यो यद्युत्तमस्स्यात् तर्हि तदधीनसत्ताकस्य हरेः कथमुक्तविधातिशयः स्यादित्यतो भगवल्लक्षणमाह— **कालादिति** ।। कालात् कालतः । देशगुणतः देशतः गुणतः सत्त्वादिगुणेभ्यः । अस्य भगवतः आदिः पूर्वावधिः अन्तश्च उत्तरावधिश्च नास्ति । तत्र हेतुगर्भविशेषणम्— **सदातनस्येति** ।। सदातनस्य सर्वदैकप्रकारेण वर्तमानस्य इति । तदुपपादकम्— **परस्येति** ।। सर्वोत्कृष्टस्य वृद्धिक्षयौ वृद्धिह्रासौ न स्तः। अस्त्वेवं देशतः कालतो गुणतश्चानवधिकत्वं वृद्धिक्षयरहितत्वं च भगवल्लक्षणं ततः किमित्यतः उत्तमत्वाभावं कैमुत्येनाह— **नेति** ।। एतादृशः एतत्समानः क्वच कस्मिंश्चिदतीते काले देशे च न बभूव । भाव्यः उत्पद्यमानः न चैव । इदानीं नास्तीत्यपि योज्यम् । यदा समो नास्ति तदुत्तरः उत्तमो नास्तीति किमु वक्तव्यम् । तत्र हेतुः— **परात्परमस्येति** ।। परात् उत्कृष्टात् लक्ष्म्याः परमस्य उत्कृष्टस्य विष्णोः देशकालगुणैर्व्याप्तस्य । ननु समरहितायाः श्रियः अधिकस्य दर्शनादस्य कैमुत्यस्य भङ्ग इति चेत् तद्गुणवत्वे सति तदधिकगुणो ह्यधिक उच्यते । श्रियश्च तद्गुणवान् भगवानस्ति । अतस्तद्गुणवतः अभावे तदधिकगुणः सुतरां नास्तीति न कैमुत्यभङ्गः। तदुक्तमाचार्यैः'विद्यया

---

१. भा.ता. ३-१८-२१ ।

वापि न समस्तत्पतिं विना' इति । कालाच्चेत्यनेन विष्णोस्त्रिविधानन्त्यमुक्तम् । तदुक्तम्—

[1]"देशतः कालतश्चैव गुणतश्च त्रिधा ततिः।
सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः ।।'

इति परमश्रुतौ । तथा 'देशतः कालतश्चैव वस्तुतस्तु त्रिधा परैः' इति । एतच्च सम्यग्व्यवस्थितम् ।

[2]"कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः।
देशकोटिविहीनत्वं देशानन्त्यं तथैव च ।।
गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ।।
तस्य सर्वेषु रूपेषु आनन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्य परिच्छेदोऽपि दृश्यते ।।
परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते ।
तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च ।।
गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि ।।
न च भेदः क्वचित्तेषामणुमात्रोऽपि विद्यते ।
तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः ।।
तस्माद्बुद्ध्यवरोहार्थमव्याप्तत्वं च भण्यते ।।' इति ब्रह्मतर्के ।

[3]'अणुरूपोऽपि भगवान्वासुदेवः परो विभुः' इति । हृदयस्य प्रादेशः स्यात् हृदयस्याकाशस्याङ्गुष्ठमात्रत्वात् । तृतीयतात्पर्ये । 'प्रादेशमात्रं पुरुषं वसन्तं अङ्गुष्ठमात्रः पुरुष' इति हृदयव्यवहारस्तु औपचारिकः। भगवन्मूर्तिविशेषस्य तत्रैवाभिव्यक्तत्वादिति बृहद्भाष्यटीकायाम् । 'वृद्धिक्षयौ न तु' इति । तच्चादिमयं रूपं अवर्धत इत्यादौ । 'नित्यप्रवृद्धस्य च तस्य वृद्धिरपेक्ष्य लोकस्य हि मन्ददृष्टिम्' इति वक्ष्यमाणमनुसन्धातव्यमिति ***नारायणाध्वरीये*** ।। १२ ।।

**सर्वज्ञ ईश्वरतमः स च सर्वशक्तिः**
**पूर्णाव्ययात्मबलचित्सुखवीर्यसारः।**
**यस्याज्ञया रहितमिन्दिरया समेतं**
**ब्रह्मेशपूर्वकमिदं न तु कस्य चेशम् ।। १३ ।।**

**व्यास**— तत्समोऽधिको नास्तीत्येतत्प्रदर्शनार्थमीदृशेश्वरस्वरूपं तदितरस्वरूपं च निरूपयति— **सर्वज्ञ इति** ।। जगत्सर्वज्ञत्वादिरहितमिति वाक्यशेषः। न केवलं सर्वज्ञत्वादिरहितं किं तर्हीत्यत आह— **यस्येति** ।। [4]तस्याज्ञयेशमिति.....शेषः ।। तस्याज्ञयेशं च ।। १३ ।।

---

१. गी.ता.२.१७ । २. भा.ता. ३-१२-२ । ३. छा.भा. ७-२ । ४. 'तस्याज्ञयेशमिति.....शेषः' इत्यत्र अन्तरितो भागः त्रुटितः ।

**सङ्क**— नन्वेतादृशो अधिको वा नास्तीत्युक्तम् । तत्कुत इत्यत आह— **सर्वज्ञ इति** ।। सर्वज्ञत्वादिगुणविशिष्टत्वात् विष्णोः रमया सहितस्यास्य जगतो विष्ण्वधीनत्वात् च एतादृशो अधिको वा नास्तीत्यभिप्रायः ।। १३ ।।

**वरद**— कुत एतदित्यतोऽन्येष्वसम्भाव्यमानमहन्माहात्म्यादित्याह— **सर्वज्ञ इति** ।। सर्वं जानातीति सर्वज्ञः ईश्वरतमोऽतिशयितस्वामी सर्वशक्तिः परिपूर्णशक्तिः पूर्णानि अव्ययानि नाशरहितानि आत्मभूतानि बलचित्सुखवीर्याणि तेषां सारस्तदात्मकः स्वरूपः। इतोऽपि तत्सदृशः कोऽपि नास्तीत्याह— **यस्येति** ।। यस्य हरेराज्ञया प्रेरणया रहितं ब्रह्मेशपूर्वकं ब्रह्मेशौ पूर्वौ आद्यौ यस्य तत्तथा । इन्दिरया लक्ष्म्या समेतमिदं विश्वं कस्य च कस्याप्यर्थ ईशं समर्थं नेत्यर्थः ।। १३ ।।

**जना**— समो नास्तीत्युपपादयितुं ईश्वरस्वरूपं तदन्यस्वरूपं च आह— **सर्वज्ञ इति** ।। पूर्वार्धेन ईश्वरस्वरूपकथनम् । उत्तरार्धेन अन्याधीनत्वरूपं अन्यस्वरूपकथनम् । सः विष्णुः ईश्वरतमः ईश्वराणां अधिपतिः सर्वविषये सर्वः पूर्णशक्तिर्यस्येति । पूर्णानि अव्ययानि आत्मनः स्वस्य बलचित्सुखवीर्याणि तैः श्रेष्ठः। आत्मनः स्वरूपभूतानि इति वा । यस्य विष्णोः कस्य च कस्याप्यर्थे विषये न तु समर्थं नैव ।। १३ ।।

**ताम्र**— ननु निरवधिकानन्तगुणपूर्णत्वरूपो महिमा अन्यत्रासम्भाव्यमानः तस्यापि कुत इति चेत् किमयं प्रमाणप्रश्न उत कारणप्रश्नः। आद्ये प्रमाणानि वक्ष्यामः । द्वितीये आह— **सर्वज्ञ इति** ।। सर्वज्ञत्वेन प्रेक्षावत्वात्। ईशेभ्यो शक्तेभ्यः ब्रह्मरुद्रशेषादिभ्यो वरतमत्वेन स्वतन्त्रत्वात् । सर्वविषयविचित्रानन्तशक्तित्वाच्च पूर्णाव्ययागणितचित्सुखवीर्याद्यनन्तगुणसारत्वं सकारणकमेव । न खलु कः प्रेक्षावान् अतिसमर्थश्च स्वस्मिन्नतिशयं नापादयतीति भावः। ननु सर्वज्ञत्वेन कथं चित्सुखेत्यत्र चित्सिद्धिः आत्माश्रयापत्तेरिति चेत् । चिच्छब्देन अनुभव उच्यते । तथा च अनुभवविषयसुखवीर्यसार इति विवक्षितत्वाददोषः । ईश्वरतमत्वमुपपादयति— **यस्येति** ।। तथा चोक्तं चन्द्रिकायाम्—

[1]"नित्यनिर्मुक्तदोषं च सदा सम्प्राप्तसद्गुणम् ।
परं ब्रह्म भवेत्तत्र प्रेप्साशक्तियुतत्वतः ।।' इति ।। १३ ।।

**जम्बु**— सर्वज्ञ इति स विष्णुः सर्वं जानातीति सर्वज्ञः । सार्वज्ञ्यं विवृतमनुव्याख्याने—

[2]"नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ।
स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम् ।।' इति ।

ईश्वरतमः अतिशयितस्वामी सर्वशक्तिः सर्वा पूर्णा शक्तिः यस्य स तथा सर्वाशेषशक्तिमानिति । तदुक्तं भाष्ये—

[3]"अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ।
तदेव नाणुमात्रोऽपि भेदःस्वांशांशिनोः क्वचित् ।।' इति ।

पूर्णाव्ययात्मबलचित्सुखवीर्यसारः बलं च चित् ज्ञानं च सुखं च वीर्यं च बलचित्सुखवीर्याणि आत्मानि स्वरूपाणीति वा पूर्णानि च तानि बलचित्सुखवीर्याणि च तैः सारः श्रेष्ठः तेषां सारस्तदात्मक इति वा । सर्वज्ञ–

---

१. चन्द्रिका २-१, सर्वधर्मोपपत्त्यधिकरणम् । २. अनु. १-३- ३०२-३०३ । ३. सू.भा. २-३-४६ ।

त्वेन प्रेक्षावत्वात् ईशेभ्यो ब्रह्मरुद्रशेषेभ्यो वरतमत्वेन स्वतन्त्रत्वात् । सर्वविषयविचित्रशक्त्यनन्तत्वाच्च पूर्णाव्ययात्मबलचित्सुखवीर्याद्यनन्तगुणसारत्वं सकारणकमेव । न खलु कः प्रेक्षावान् अतिसमर्थश्च स्वस्मिन्नतिशयं नापादयतीति भावः। ईश्वरतमत्वमुपपादयति— **यस्येति** ।। यस्य हरेराज्ञया प्रेरणया रक्षितं ब्रह्मेशपूर्वकं ब्रह्मा चतुर्मुखश्च ईशो रुद्रश्च ब्रह्मेशौ तावेव पूर्वौ आद्यौ यस्य तत्तथा इन्दिरया लक्ष्म्या समेतमिदं विश्वं कस्य च कस्याप्यर्थे ईशं समर्थं नेत्यर्थः ।। १३ ।।

**आभासकोऽस्य पवनः पवनस्य रुद्रः**
**शेषात्मको गरुड एव च शक्रकामौ ।**
**वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषा-**
**मृष्यादयः क्रमश ऊनगुणाः [१]शतांशात् ।। १४ ।।**

**व्यास**— इतरत्रैकप्रकारेणेत्याह— **आभासक इति** ।। शेषात्मकः शेषः। जन्मान्तरे शेषात्मक इति वा । तदपरे देवाः। आभासत्वं नाम तदधीनत्वे सति तत्सदृशत्वम् । आभासत्वे निमित्तमाह— **क्रमश इति** ।। १४ ।।

**वादि**— **आभासकोऽस्य** इत्यत्र आ ईषत्स्वनिष्ठसादृश्येन भासकः स्वबिम्बरूपानुमापकः। अत एव हि दर्पणस्थप्रतिमुखदर्शनेन स्वमुखमवलोकयन्ति ।। १४ ।।

**सङ्क**— एवं तावद्भगवतो नारायणस्य सर्वोत्तमत्वादिलक्षणविशिष्टत्वमुक्तम् । रमाब्रह्मादिजगतः तदाज्ञारहितस्याशक्तत्वात् तद्वशत्वं चोक्तम् । इदानीं रमाब्रह्मादीनां आभासकत्वेनापि तद्वशत्वप्रकारं दर्शयन् तेषां तारतम्यमाह— **आभासक इत्यादिना** ।। आभासकत्वं नाम प्रतिबिम्बत्वम् । अतस्तद्वशत्वं तेषां युक्तम्। प्रतिबिम्बस्य बिम्बाधीनत्वदर्शनादित्यर्थः ।। १४ ।।

**वरद**— किञ्च बिम्बभूतस्य हरेः स्वस्वोत्तमप्रतिबिम्बभूतस्य अशेषचेतनजातस्य मूलबिम्बभूतपरमात्मवशत्वं सिद्धं इत्याशयेनाह— **आभासक इत्यादिना** ।। अस्य हरेराभासकः प्रतिबिम्बभूतः पवनः पवनस्य रुद्रः आभासकः। रुद्रेण शेषोऽपि व्याख्यात इत्यभिप्रायेण रुद्रविशेषणं शेषात्मक इति । न केवलं रुद्रशेषावेव प्रतिबिम्बौ पवनस्य किन्तु गरुडश्चेत्याह— **गरुड एव चेति** ।। एवशब्देन शेषरुद्रगरुडपङ्क्तिनिविष्टः तत्समश्चतुर्थो नास्तीति दर्शयति । तथा वीन्द्रेशयोः गरुडरुद्रयोः शक्रकामावाभासकौ । आभाका इत्यर्थः। सर्वत्र बिम्बप्रतिबिम्बभावे निमित्तमाह— **ऊनेति** ।। शतशब्दो बहुत्ववाची । बहुलांशेन ऊनगुणाः हीनगुणाः यत इत्यर्थः।। १४ ।।

**जना**— तदाज्ञारहितस्याशक्तत्वात् तदधीनमिदमित्युक्त्वा प्रकारान्तरेणापि तदधीनत्वमाह— **अभासकेति**।। आ ईशद्भासते प्रकाशते इत्याभासः प्रतिबिम्बः। स च तदधीनः तत्सदृशश्च दृष्टः। अतः अस्य हरेः पवनः मुख्यवायुः आभासः तदधीनः किञ्चित्तत्सदृशः। शेषात्मकः भाविशेषो रुद्रः। गरुड एव नत्वन्यात्मक इत्यर्थः। चः समुच्चये । अथवा शेषात्मक एव शेषोऽपि गरुडश्चेत्यन्वयः। अनयोः शक्रकामयोः। तदपरे तेभ्यः अपरे ।

१. 'शतांशाः' इति पाठान्तरम् ।

आहङ्कारिकप्राणानिरुद्धादिचन्द्रसूर्यादयः । तेषां सूर्यादीनां आभासत्वे निमित्तमाह— **क्रमश इति** ।। शतांशात् । ऊनशब्दस्य नित्यसापेक्षत्वात्समासः। ऊनाः गुणाः एषामिति ।। १४ ।।

**ताम्र**— भगवत्प्रेरणाभावादेवाशक्तत्वं कुत इत्यतस्तेषां भगवत्प्रतिबिम्बत्वात् तत्प्रतिबिम्बस्य बिम्बाधीनचेष्टत्वादित्यभिप्रेत्य प्रतिबिम्बत्वं च सर्वेषां न साक्षादित्याह— **आभासक इति** ।। लौकिक-बिम्बाद्यावत्प्रतिबिम्बवैलक्षण्यं न तावदेवात्रेति कुत्सनार्थः कप्रत्ययः। शेषात्मकः शेषः। जन्मान्तरे शेषात्मको रुद्र इति वा । गरुड एवेत्येवशब्देन शेषगरुडरुद्रपङ्क्तिनिविष्टश्चतुर्थोऽन्यो नास्तीत्यवधारयति । तदपरे आहङ्कारिकप्राणाद्याः। आभासकत्वं नाम तदधीनसारूप्यम् । तत्राधीनत्वे हेतुमाह— **क्रमश इति** ।। यद्यपि [1]"आभास एव च' [2]"रूपं रूपं प्रतिरूपो बभूव' इत्यादौ सर्वजीवानामपि स्वस्वहृदिस्थितभगवत्साक्षा-त्प्रतिबिम्बत्वमुक्तम् । तथाप्येतद्वचनबलादेवमप्यङ्गीकार्यम् । तत्र विशेषः सर्वजीवानां साक्षाद्भगवत्प्रतिबिम्बत्वं नाम स्वस्वाभिमुख्येन स्वस्वान्तर्गतविचित्रभगवदाकाराधीनसत्ताकं सदृशाकारत्वम् । अन्यप्रतिबिम्बत्वं नाम तदधीनज्ञानानन्दादिपुंस्त्वादिसादृश्यमात्रमिति । सर्वेषां साक्षात् प्रतिबिम्बत्वे तारतम्यायोग इति चेदुपाधितारतम्यात्तदुपपत्तेः।। १४ ।।

**जम्बु**— तदाज्ञारहितस्याशक्तत्वात्तदधीनमिदमित्युक्त्वा प्रकारान्तरेणापि तदधीनत्वमाह— **आभासक इति** ।। अस्य हरेः पवनः मुख्यवायुः आभासकः ईषद्भासत इत्याभासः प्रतिबिम्बः। स च तदधीनः तत्सदृशः दृष्टः । प्रतिबिम्बेष्वल्पमेव सादृश्यमिति भाति इति भावेन कुत्सनार्थे कप्रत्ययः। तदुक्तं भाष्ये [3]"विभिन्नांशोऽप्यल्पशक्तिः किञ्चित्सादृश्यमात्रतः' इति । पवनस्य शेषात्मको रुद्रः भाविशेषः रुद्रः । गरुड एव न त्वन्यात्मकः। चः समुच्चये । अथवा शेषात्मक एव शेषोऽपि गरुडश्चेत्यन्वयः । आभासक इति प्रत्येकमन्वयः। एवशब्देन शेषगरुडरुद्रनिविष्टश्चतुर्थो नास्तीति दर्शयतीति *वरदराजीये* । शक्रकामौ शक्रश्च इन्द्रश्च कामश्च तौ वीन्द्रेशयोर्गरुडरुद्रयोः आभासकौ तदपरे ताभ्यां शक्रकामाभ्यामपरे अहङ्कारिकप्राणानिरुद्धादिचन्द्रसूर्याद्याः अनयोः शक्रकामयोः आभासकाः तेषां प्राणादीनां ऋष्यादयः आभासका इत्यर्थः। सर्वत्र बिम्बप्रतिबिम्बभावे निमित्तमाह— **ऊनेति** ।। शतांशात् । ऊनशब्दस्य नित्यसापेक्षत्वात्समासः। अत्र शतशब्दो बहुत्ववाची । बहुलांशेन ऊनाः हीनाः गुणा येषां ते तथा । यद्यपि 'आभास एव च' 'रूपं रूपं प्रतिरूपो बभूव' इत्यादौ सर्वजीवानामपि स्वस्वहृदिस्थितभगवत्साक्षात्प्रतिबिम्बत्वमुक्तं तथाप्येतद्वचनबलादेवमङ्गीकार्यम् । तत्र विशेषः साक्षाद्भगवत्प्रतिबिम्बत्वं नाम स्वस्वाभिमुख्येन स्वस्वान्तगर्तविचित्रभगवद्दशकराधीनसत्ताकं सदृशाकारत्वम् । अन्यप्रतिबिम्बत्वं नाम तदधीनज्ञानानन्दादिपुंस्त्वादिसादृश्यमात्रमिति । सर्वेषां साक्षाद्भगवत्प्रतिबिम्बत्वे तारतम्यायोग इति चेत् उपाधितारतम्यात् तदुपपत्तेः इति *नारायणाध्वरीये* ।। १४ ।।

**राम**— तदेवोपपादयति— **निर्दोषपूर्णगुणविग्रह इत्यादिना** ।। अनेन जीवानां साक्षाद्भगवत्प्रतिबिम्बत्वं सिद्धम् । प्रतिबिम्बत्वं च तदधीनत्वे सति किञ्चिद्धर्ममात्रेण तस्य किञ्चित्सादृश्यं विवक्षितम् । [4]"अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदाहृतम्' इति सप्तमतात्पर्योक्तेः ।

---

१. ब्र.सू. २-३-५० । २. का.उ. २-२-१० । ३. सू.भा. २-३-४६ । ४. भा.ता. ७-४-३५ ।

त्वेन प्रेक्षावत्वात् ईशेभ्यो ब्रह्मरुद्रशेषेभ्यो वरतमत्वेन स्वतन्त्रत्वात् । सर्वविषयविचित्रशक्त्यनन्तत्वाच्च पूर्णाव्ययात्मबलचित्सुखवीर्याद्यनन्तगुणसारत्वं सकारणकमेव । न खलु कः प्रेक्षावान् अतिसमर्थश्च स्वस्मिन्नतिशयं नापादयतीति भावः। ईश्वरतमत्वमुपपादयति— **यस्येति** ।। यस्य हरेराज्ञया प्रेरणया रक्षितं ब्रह्मेशपूर्वकं ब्रह्मा चतुर्मुखश्च ईशो रुद्रश्च ब्रह्मेशौ तावेव पूर्वौ आद्यौ यस्य तत्तथा इन्दिरया लक्ष्म्या समेतमिदं विश्वं कस्य च कस्याप्यर्थे ईशं समर्थं नेत्यर्थः ।। १३ ।।

**आभासकोऽस्य पवनः पवनस्य रुद्रः**
**शेषात्मको गरुड एव च शक्रकामौ ।**
**वीन्द्रेशयोस्तदपरे त्वनयोश्च तेषा-**
**मृष्यादयः क्रमश ऊनगुणाः [१]शतांशात् ।। १४ ।।**

**व्यास**— इतरत्रैकप्रकारेणेत्याह— **आभासक इति** ।। शेषात्मकः शेषः। जन्मान्तरे शेषात्मक इति वा । तदपरे देवाः। आभासत्वं नाम तदधीनत्वे सति तत्सदृशत्वम् । आभासत्वे निमित्तमाह— **क्रमश इति** ।। १४ ।।

**वादि**— **आभासकोऽस्य** इत्यत्र आ ईषत्स्वनिष्ठसादृश्येन भासकः स्वबिम्बरूपानुमापकः। अत एव हि दर्पणस्थप्रतिमुखदर्शनेन स्वमुखमवलोकयन्ति ।। १४ ।।

**सङ्क**— एवं तावद्भगवतो नारायणस्य सर्वोत्तमत्वादिलक्षणविशिष्टत्वमुक्तम् । रमाब्रह्मादिजगतः तदाज्ञारहितस्याशक्तत्वात् तद्वशत्वं चोक्तम् । इदानीं रमाब्रह्मादीनां आभासकत्वेनापि तद्वशत्वप्रकारं दर्शयन् तेषां तारतम्यमाह— **आभासक इत्यादिना** ।। आभासकत्वं नाम प्रतिबिम्बत्वम् । अतस्तद्वशत्वं तेषां युक्तम्। प्रतिबिम्बस्य बिम्बाधीनत्वदर्शनादित्यर्थः ।। १४ ।।

**वरद**— किञ्च बिम्बभूतस्य हरेः स्वस्वोत्तमप्रतिबिम्बभूतस्य अशेषचेतनजातस्य मूलबिम्बभूतपरमात्मवशत्वं सिद्धं इत्याशयेनाह— **आभासक इत्यादिना** ।। अस्य हरेराभासकः प्रतिबिम्बभूतः पवनः पवनस्य रुद्रः आभासकः। रुद्रेण शेषोऽपि व्याख्यात इत्यभिप्रायेण रुद्रविशेषणं शेषात्मक इति । न केवलं रुद्रशेषावेव प्रतिबिम्बौ पवनस्य किन्तु गरुडश्चेत्याह— **गरुड एव चेति** ।। एवशब्देन शेषरुद्रगरुडपङ्क्तिनिविष्टः तत्समश्चतुर्थो नास्तीति दर्शयति । तथा वीन्द्रेशयोः गरुडरुद्रयोः शक्रकामावाभासकौ । आभाका इत्यर्थः। सर्वत्र बिम्बप्रतिबिम्बभावे निमित्तमाह— **ऊनेति** ।। शतशब्दो बहुत्ववाची । बहुलांशेन ऊनगुणाः हीनगुणाः यत इत्यर्थः।। १४ ।।

**जना**— तदाज्ञारहितस्याशक्तत्वात् तदधीनमिदमित्युक्त्वा प्रकारान्तरेणापि तदधीनत्वमाह— **अभासकेति**।। आ ईशद्भासते प्रकाशते इत्याभासः प्रतिबिम्बः। स च तदधीनः तत्सदृशश्च दृष्टः। अतः अस्य हरेः पवनः मुख्यवायुः आभासः तदधीनः किञ्चित्सदृशः। शेषात्मकः भाविशेषो रुद्रः। गरुड एव नत्वन्यात्मक इत्यर्थः। चः समुच्चये । अथवा शेषात्मक एव शेषोऽपि गरुडश्चेत्यन्वयः। अनयोः शक्रकामयोः। तदपरे तेभ्यः अपरे ।

---

१. 'शतांशाः' इति पाठान्तरम् ।

आहङ्कारिकप्राणानिरुद्धादिचन्द्रसूर्यादयः। तेषां सूर्यादीनां आभासत्वे निमित्तमाह— **क्रमश इति** ।। शतांशात्। ऊनशब्दस्य नित्यसापेक्षत्वात्समासः। ऊनाः गुणाः एषामिति ।। १४ ।।

**ताम्र**— भगवत्प्रेरणाभावादेवाशक्तत्वं कुत इत्यतस्तेषां भगवत्प्रतिबिम्बत्वात् तत्प्रतिबिम्बस्य बिम्बाधीनचेष्टत्वादित्यभिप्रेत्य प्रतिबिम्बत्वं च सर्वेषां न साक्षादित्याह— **आभासक इति** ।। लौकिक-बिम्बाद्यावत्प्रतिबिम्बवैलक्षण्यं न तावदेवात्रेति कुत्सनार्थः कप्रत्ययः। शेषात्मकः शेषः। जन्मान्तरे शेषात्मको रुद्र इति वा । गरुड एवेत्येवशब्देन शेषगरुडरुद्रपङ्क्तिनिविष्टश्चतुर्थोऽन्यो नास्तीत्यवधारयति । तदपरे आहङ्कारिकप्राणाद्याः। आभासकत्वं नाम तदधीनसारूप्यम् । तत्राधीनत्वे हेतुमाह— **क्रमश इति** ।। यद्यपि [1]"आभास एव च' [2]"रूपं रूपं प्रतिरूपो बभूव' इत्यादौ सर्वजीवानामपि स्वस्वहृदिस्थितभगवत्साक्षा-त्प्रतिबिम्बत्वमुक्तम् । तथाप्येतद्वचनबलादेवमप्यङ्गीकार्यम् । तत्र विशेषः सर्वजीवानां साक्षाद्भगवत्प्रतिबिम्बत्वं नाम स्वस्वाभिमुख्येन स्वस्वान्तर्गतविचित्रभगवदाकाराधीनसत्ताकं सदृशाकारत्वम् । अन्यप्रतिबिम्बत्वं नाम तदधीनज्ञानानन्दादिपुंस्त्वादिसादृश्यमात्रमिति । सर्वेषां साक्षात् प्रतिबिम्बत्वे तारतम्यायोग इति चेदुपाधितारतम्यात्तदुपपत्तेः।। १४ ।।

**जम्बु**— तदाज्ञारहितस्याशक्तत्वात्तदधीनमिदमित्युक्त्वा प्रकारान्तरेणापि तदधीनत्वमाह— **आभासक इति** ।। अस्य हरेः पवनः मुख्यवायुः आभासकः ईषद्भासत इत्याभासः प्रतिबिम्बः। स च तदधीनः तत्सदृशः दृष्टः । प्रतिबिम्बेष्वल्पमेव सादृश्यमिति भाति इति भावेन कुत्सनार्थे कप्रत्ययः। तदुक्तं भाष्ये [3]"विभिन्नांशोऽप्यल्पशक्तिः किञ्चित्सादृश्यमात्रतः' इति । पवनस्य शेषात्मको रुद्रः भाविशेषः रुद्रः । गरुड एव न त्वन्यात्मकः। चः समुच्चये । अथवा शेषात्मक एव शेषोऽपि गरुडश्चेत्यन्वयः । आभासक इति प्रत्येकमन्वयः। एवशब्देन शेषगरुडरुद्रनिविष्टश्चतुर्थो नास्तीति दर्शयतीति *वरदराजीये* । शक्रकामौ शक्रश्च इन्द्रश्च कामश्च तौ वीन्द्रेशयोर्गरुडरुद्रयोः आभासकौ तदपरे ताभ्यां शक्रकामाभ्यामपरे अहङ्कारिकप्राणानिरुद्धादिचन्द्रसूर्याद्याः अनयोः शक्रकामयोः आभासकाः तेषां प्राणादीनां ऋष्यादयः आभासका इत्यर्थः। सर्वत्र बिम्बप्रतिबिम्बभावे निमित्तमाह— **ऊनेति** ।। शतांशात् । ऊनशब्दस्य नित्यसापेक्षत्वात्समासः। अत्र शतशब्दो बहुत्ववाची । बहुलांशेन ऊनाः हीनाः गुणा येषां ते तथा । यद्यपि 'आभास एव च' 'रूपं रूपं प्रतिरूपो बभूव' इत्यादौ सर्वजीवानामपि स्वस्वहृदिस्थितभगवत्साक्षात्प्रतिबिम्बत्वमुक्तं तथाप्येतद्वचनबलादेवमङ्गीकार्यम् । तत्र विशेषः साक्षाद्भगवत्प्रतिबिम्बत्वं नाम स्वस्वाभिमुख्येन स्वस्वान्तगर्तविचित्रभगवद्दशकराधीनसत्ताकं सदृशकारत्वम् । अन्यप्रतिबिम्बत्वं नाम तदधीनज्ञानानन्दादिपुंस्त्वादिसादृश्यमात्रमिति । सर्वेषां साक्षाद्भगवत्प्रतिबिम्बत्वे तारतम्यायोग इति चेत् उपाधितारतम्यात् तदुपपत्तेः इति *नारायणाध्वरीये* ।। १४ ।।

**राम**— तदेवोपपादयति— **निर्दोषपूर्णगुणविग्रह इत्यादिना** ।। अनेन जीवानां साक्षाद्भगवत्प्रतिबिम्बत्वं सिद्धम् । प्रतिबिम्बत्वं च तदधीनत्वे सति किञ्चिद्धर्ममात्रेण तस्य किञ्चित्सादृश्यं विवक्षितम् । [4]"अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदाहृतम्' इति सप्तमतात्पर्योक्तेः ।

---

१. ब्र.सू. २-३-५० । २. का.उ. २-२-१० । ३. सू.भा. २-३-४६ । ४. भा.ता. ७-४-३५ ।

[१]"यदुक्तं तदधीनत्वं च सर्वावस्थास्वशेषतः।
जीवस्य सदृशत्वं च चित्त्वमात्रं न चापरम् ॥
तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम् ।
किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते ॥' इत्यनुव्याख्यानोक्तेश्च ।

तथा च श्रीब्रह्मादीनां भगवदधीनत्वं भगवद्गुणैः स्वयोग्यकिञ्चित्सादृश्यात् किञ्चिद्गुणवत्त्वमासीत् तर्हि जीवानां प्रतिबिम्बवत्वाविशेषात् भगवदधीनत्वेनानन्याधीनत्वं स्यात् । किञ्च परस्परसाम्येन तारतम्याभावप्रसङ्गश्च स्यादित्यतो नीचानां मोक्षप्राप्तावुत्तमप्रसादस्यापि सहकारित्वात्स्वोत्तमाधीनत्वं सम्भवति । किञ्च विशेषाभावेऽपि बिम्बसन्निधानविशेषात् प्रतिफलनाधिकरणजीवान्तःकरणवैचित्र्याच्च तारतम्यं च सम्भवतीत्यभिप्रेत्याह— **आभासक इति** ॥ तदेतदुक्तम्—

[२]'नान्यैर्देवैर्हरिं पश्येद् ज्ञानरूपेण वायुना ।
ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ॥
प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिन ॥' इति आथर्वणभाष्ये ।

तृतीये तात्पर्ये च—

[३]'............ ते स्वबिम्बप्रदर्शकाः।
ततः स्वबिम्बद्वारेण परमात्मप्रदर्शिनः ॥' इति ।

उक्तं च भक्तिपादे [४]'स्थानविशेषात्प्रकाशादिवत्' इति सूत्रे [५]'यथादित्यस्य स्थानविशेषात् प्रतिबिम्बविशेषः । एवं आनन्दादेरपि ।

ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।
प्रतिबिम्बत्वमायाति मध्योच्चादिविभेदतः ॥' इति भाष्ये ।

[५]तत्वप्रकाशिकायां च 'सूर्यकान्तादिगतसूर्यकादिवैचित्र्येऽपि बिम्बसामर्थ्यस्याप्युपयोगदर्शनात् स्थानगुणस्यैव निमित्तत्वे मुखप्रतिबिम्बस्यापि तद्गतस्याग्निजनकत्वप्रसङ्गात् । न च तर्हि बिम्बसामर्थ्यमेवोपयोगीति वाच्यम् । तस्य सर्वत्रापि साम्यात्' इति । दशमस्कन्धतात्पर्ये च—

[६]'नित्यान्तःकरणं चैव प्रतिबिम्बस्तु तद्गतः ।
द्वयमेव विमुक्तस्य न किञ्चिज्जडमिष्यते ॥
सूर्यकान्तादिवत्तस्य स्वरूपद्वयमप्युत ॥' इति ।

उक्तं च—

[७]'ब्रह्मादिस्थावरान्तेषु अविशेषो हरेः क्वचित् ।
व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति च ॥' इति ॥ १४ ॥

---

१. अनु. ३-२-११०६-११०७ । २. आ.भा. ३-१-८ । ३. भा.ता. ३-२८-१४ । ४. ब्र.सू. ३-२-३५ । ५. त.प्र. ३-२-३६ । ६. भा.ता. १०-२-१८ । ७. भा.ता. ७-१४-३९ ।

**आभासका त्वथ रमास्य मरुत्स्वरूपा-**
**च्छ्रेष्ठाप्यजात्तदनु गीः शिवतो वरिष्ठा ।**
**तस्या उमा विपतिनी च गिरस्तयोस्तु**
**शच्यादिका क्रमश एव यथा पुमांसः।। १५ ।।**

**व्यास**— आभासत्वेऽपि प्रसिद्धाभासवदैकविध्यमिति वाह । स्त्रीणां पुंस्त्वं कदापि नेत्यभिप्रायः। तासां चाभासत्वक्रममाह— **आभासकेति** ।। भगवतः आभासको ब्रह्मा इत्युक्तम् । रमाद्या अपि आभासत्वे तौ समौ इत्युक[1]...— **मरुदिति** ।। तदनु तदनन्तरं तस्याः रमायाः आभासका गीः गिरः आभासक उमासुपर्णी च क्रमेण । स्वपतिभ्यः कियदवरा इति जिज्ञासायामाह— **तावतदिति** ।। दशतो दशगुणैः पञ्चोत्तरैः पञ्चदशगुणैः। रुद्रादयः पवनादिभ्यः शतांशादिति शतगुणतोऽवरा इत्युक्तं तत्कुत इत्यत आह— **यथेति** ।। १५ ।।

**वादि**— 'यथा पुमांस' इत्यत्र पुंसां यथाऽन्योन्यं बिम्बप्रतिबिम्बभावः तथा नारीणामपि स्वस्वयोग्यतानुसारेण मिथः बिम्बप्रतिबिम्बभावोऽस्तीति बिम्बप्रतिबिम्बमात्रे दृष्टान्तः। न तु पुरुषक्रम इव नारीणामप्येकप्रकारक्रमः। वाणीप्रतिबिम्बाया उमायाः रुद्रादधमेन्द्रादितोऽपि उत्तमत्ववत् उमाप्रतिबिम्बायाः शच्याः इन्द्रादवरप्राणादप्युत्तम-त्वाभावात् । अतः पुरुषस्य यस्मादुत्तमत्वं स्वस्या अपि तस्मादुत्तमत्वमिति न नियमः इन्द्रादवरप्राणादप्यवरायां शच्यां मनोरप्यवरप्रवहादप्यवरायां मानव्यां गुरोरप्यवरबहुपुरुषान्तरितायां तारायां वरुणादप्यवरबहुपुरुषा-न्तरितगङ्गादौ च तदभावात् । अतः स्वस्वयोग्यतानुसारेण बिम्बप्रतिबिम्बत्वमात्रे दृष्टान्तः। अत एव मनुपत्नीतः तत्समानदक्षपत्न्याः प्रसूतेरतिनीचत्वम् ।। १५ ।।

**अभिनव**— तत्रैव 'आभासका त्वथ' इति श्लोके विपतिनीत्यस्य पक्षिपतिगरुडभार्या सौपर्णी । विपतिशब्दात् व्रीह्यादेराकृतिगणत्वात् मत्वर्थे इनि प्रत्यये विपतिनीति हि रूपम् ।। १५ ।।

**सङ्क**— यथा पुंसां आभासत्वेन तद्वशत्वमुक्तं तथा रमादिस्त्रीणामप्याभासत्वेन तद्वशत्वमस्तीत्याह— **आभासकेति** ।। अथशब्देन विष्णोरनन्तरं सैवेति दर्शयति। तद्व्यनक्ति— **मरुदिति** ।। तदनन्तरं तस्या रमाया आभासका गीः। गिरः आभासके उमा सुपर्णी चेत्यर्थः।। १५ ।।

**वरद**— नन्वेवं पवनादीनां तदाभासत्वेन तदधीनत्वेऽपि रमादीनां तत्कथमित्यतः तासामपि तदाभासत्वं साक्षात्परम्परया वाऽस्तीत्याह— **आभासकात्विति** ।। अथेत्यनेन हरेरनन्तरं सैवेति दर्शयति। अस्य हरेः रमा आभासका प्रतिबिम्बभूता । तर्हि साक्षात्प्रतिबिम्बभूताभ्यां ब्रह्मवायुभ्यां तस्याः साम्यमेव प्राप्तमित्यत आह — **मरुत्स्वरूपादजाच्छ्रेष्ठापीति** ।। ब्रह्मवाय्वोरपि रमाद्वारैव प्रतिबिम्बत्वं न तु रमावत्साक्षादिति न ताभ्यां तस्याः साम्यप्राप्तिरिति भावः। तदनु तदनन्तरं गीर्भारती रमायाः प्रतिबिम्बभूतेत्यर्थः। नैतावता शिवस्य भारतीसाम्यं मन्तव्यं इत्याह— **शिवतो वरिष्ठेति** ।। शिवस्यापि भारतीद्वारा रमाभासत्वमिति न भारतीसाम्यमित्यर्थः। तस्याः गिरः उमा पार्वती विपतिनी गरुडस्य भार्या सौपर्णी च आभासकेत्यर्थः। तयोस्तु उमाविपतिन्योः

---

१. अन्तरितोऽयं भागः त्रुटितः, 'स्यादित्यत उक्तम्' इत्युचितमिति भाति ।

शच्यादिका: शची इन्द्रभार्या आदि: यासां ता आभासका इत्यर्थ:। यथा पुमांस: स्वस्वोत्तमेभ्य: शतांशोनगुणा: तथा क्रमश एव क्रमेणैव स्वस्वोत्तमेभ्य: शतांशोनगुणा इत्यर्थ: ।। १५ ।।

**जना**— यथा पुरुषाणां आभासत्वेन तद्वशत्वं तथा स्त्रीणामपीत्याह— **आभासकेति** ।। तुशब्द आभासत्वे पूर्वोक्तादपि विशेषोऽस्तीति सूचयति । अथ मङ्गलरूपा । अथानन्तरत्वात् नीचत्वाद्वा रमा हरेराभासका । श्रीपवनयो: हरेराभासत्वे साम्यं स्यात् ब्रह्मणश्चामुक्तत्वात् । कस्याभास: कस्मादानन्तर्यं चेत्यत आह— **मरुदिति** ।। मरुत्स्वरूपादजादपि श्रेष्ठा । तेन ब्रह्मणोऽपि तदाभासत्वं लक्ष्म्यानन्तर्यं चोक्तं भवति । तस्या: गिर:। तयो: उमासौपर्ण्यो: । यथा पुमांस: आभासा: तथा स्त्रिय: क्रमश एव गुणक्रमादेव आभासा:। पुरुषानन्तरं स्त्रीति नियमो नास्ति । उमाप्रतिबिम्बाया: शच्या: प्राणावरत्वदर्शनात् । एवमन्यासु ।। १५ ।।

**ताम्र**— स्त्रीणां चाभासकत्वक्रममाह— **आभासकेति** ।। अथेत्यारम्भद्योतक:। अस्यानन्तरमेवाभासको न तु व्यवधानेनेति वा ।। **यथा पुमांस इति** ।। बिम्बप्रतिबिम्बभावो यथा पुंसामस्ति तथा नारीणामपि स्वस्वयोग्यतानुसारेण बिम्बप्रतिबिम्बभावोऽस्तीत्यर्थ:। यद्यपि [1]'उक्तश्च बिम्बप्रतिबिम्बभाव: पैङ्गिश्रुतावुक्तलयानुसारत' इत्यनुव्याख्यानोक्ते: लयानुसारेण बिम्बप्रतिबिम्बभावो वक्तव्य:। तथा सति स्त्रीणां पुरुषाणां च बिम्बप्रतिबिम्बपरम्परा उक्तविधा न युक्ता । तथाप्यत्र पुंसां पुंसादृश्यं स्त्रीणां स्त्रीसादृश्यमित्यान्तिकसादृश्यस्फोरणायेयं परम्परा द्विधोक्तेति ध्येयम् ।। १५ ।।

**जम्बु**— नन्वत्र प्रतिबिम्बत्वं च तद्भिन्नत्वे सति तदधीनत्वे सति तत्सदृशत्वम् । पुरुषसादृश्यं पुरुषाणामेव स्त्रीसादृश्यं स्त्रीणामेव अतो लक्ष्मीसादृश्यं वायोर्नास्ति वायुसादृश्यं न भारत्या: भारतीसादृश्यं न रुद्रस्य अत: पुरुषाणां बिम्बप्रतिबिम्बभावं पृथगुक्त्वा स्त्रीणामपि बिम्बप्रतिबिम्बभावं पृथगाह— **आभासकात्वथ रमेति** ।। अथेत्यारम्भद्योतक:। तुशब्द: आभासत्वे पूर्वोक्तादपि विशेषद्योतक:। अस्यानन्तरमेवाभासका न तु व्यवधानेनेति वा । रमाऽस्य हरेराभासका प्रतिबिम्बभूता । भगवत: स्त्रीत्वपुरुषत्वयो: विद्यमानत्वात् भगवत्प्रतिबिम्बत्वं वाय्वादीनां रमादीनां च सम्भवतीति भाव:। ननु प्रथमाऽभासत्वं रमाया: वायोश्चोक्तं द्वितीयाभासत्वं सरस्वत्या: रुद्रस्य अत: साम्यं स्यात् ब्रह्मणश्चानुक्तत्वात् कस्याभास: कस्मादानन्तर्यं चेत्यत आह— **मरुत्स्वरूपा-दित्यादिना** ।। मरुत्स्वरूपात् वायुस्वरूपादजादपि ब्रह्मणोऽपि श्रेष्ठा । तेन ब्रह्मणोऽपि लक्ष्म्याभासत्वं तदानन्तर्यं चोक्तम् । ब्रह्मवाय्वोरपि रमाद्वारैव प्रतिबिम्बत्वं न तु रमावत् न साक्षादिति न ताभ्यां तस्या: साम्यप्राप्तिरिति भाव:। तदनु तदनन्तरं गीर्भारती रमाया: प्रतिबिम्बभूतेत्यर्थ:। नैतावता शिवस्य भारतीसाम्यमवगन्तव्यमित्याह— **शिवतो वरिष्ठेति** ।। शिवत: रुद्राद्वरिष्ठा श्रेष्ठा । शिवस्यापि भारतीद्वारा रमाभासत्वमिति न भारतीसाम्यमित्यर्थ:। तस्या: गिर: उमापार्वतीविपत्नीगरुडभार्यासौपर्णी आभासकेत्यर्थ:। तयो: उमासौपर्ण्यो: यथा पुमांस: पुरुषा: आभासका: तथा स्त्रिय: क्रमश एव गुणक्रमादेव आभासा:। पुरुषानन्तरं स्त्रीति नियमो नास्ति उमाप्रतिबिम्बाया: शच्या: प्राणावरत्वदर्शनात् । एवमन्यासु ।। **यथा पुमांस इति** ।। यथा बिम्बप्रतिबिम्बभाव: पुंसामस्ति तथा नारीणामपि स्वस्वयोग्यतानुसारेण बिम्बप्रतिबिम्बभावोऽस्तीत्यर्थ:। यद्यपि 'उक्तश्चबिम्बप्रतिबिम्बभाव:

---

१. अनु. ४-२-१८९७ पराधिकरणम् ।

पैङ्गिश्रुतावुक्तलयानुसारत' इत्युक्तेः लयानुसारेण बिम्बप्रतिबिम्बभावो वक्तव्यः। तथा सति स्त्रीणां पुरुषाणां च बिम्बप्रतिबिम्बपरम्परा उक्तविधा न युक्ता । तथाप्यत्र पुंसां पुंसादृश्यं स्त्रीणां स्त्रीसादृश्यं इति आत्यन्तिक-सादृश्यस्फोरणाय इयं परम्परा द्विधा उक्तेति ज्ञेयमिति *श्रीनिवासभट्टीये* ।। १५ ।।

**भारतश्री—** स्त्रीणां पुंस्त्वं सर्वात्मना नास्तीत्याह— **आभासका इत्यादिना** ।। सरस्वत्यादिभ्यः शतगुणैः वरिष्ठा इति विवेकः।पञ्चोत्तरैः गुणैः वराः षण्महिषीभ्यो रुद्राद्याः तस्मादुत्तमा विपतिनी च। गिरस्तयोस्तु इत्यत्र तुशब्दात् तस्या गिरः जाम्बुवत्याद्याः षण्महिष्यः तासां उमा विपतिनीचेति विशेषो बोद्धव्यः । अत एव पञ्चोत्तरैरित्युक्तम् । तासां रुद्राद्यपेक्षया पञ्चाधमत्वात् । तेषां रुद्रशेषगरुडानां जाम्बुवत्याद्यपेक्षया पञ्चोत्तरत्वं युक्तम् । जाम्बवत्याद्यपेक्षया पार्वत्याद्या द्विगुणोनाः । एवं च पार्वत्याद्यपेक्षया रुद्रादीनां दशोत्तरत्वं च युक्तमिति ।। १५ ।।

**राम—** यत्किञ्चिद्धर्ममात्रेण किञ्चित्सादृश्यवत्वं न विवक्षितम् । किन्त्वनेकविषयत्किञ्चिद्धर्ममात्रेण किञ्चित्सादृश्यवत्वं विवक्षितम् इत्यभिप्रेत्योपलक्षणतयाऽऽह— **आभासकात्वथेति ।। यथा पुमांस इति** ।। स्त्रियो भगवदधीना अपि यथा पुरुषास्तथा स्वस्वोत्तमस्त्रीपुरुषाधीनास्तारतम्योपेताश्चेत्यर्थः ।। १५-१७ ।।

**ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः**
**पञ्चोत्तरैरपि यथा [१]क्रमशः श्रुतिस्थाः।**
**शब्दो बहुत्ववचनः शतमित्यतश्च**
**श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न ।। १६ ।।**

**व्यास—** यथा क्रमशः क्रमेण । क्रमेण 'आथात आनन्दस्य मीमांसा भवति' इत्यादि श्रुतिस्थाः। ननु श्रुत्यन्तरे स्वावरेभ्य उत्तरेषां शतगुणाधिक्याद्युच्यते । एवं सति गणनश्रुतेस्तद्विरोधस्यादित्यत आह— **शब्द इति** ।। यतः श्रुत्यन्तरे शतमित्यादि शब्दः द्विशतादिबहुत्ववाची अतो बहुधोक्तिविरुद्धता न गणनश्रुतेरिति शेषः ।। १६ ।।

**वादि— ताभ्यश्च ते शतगुणैः** इत्यत्र शतगुणत्वं न शतसङ्ख्याकैः यैः कैश्चिद् गुणैराधिक्यं तदितरसर्व-साधारणज्ञानादिगुणेषु साम्यप्रसङ्गात् । किन्तु रुद्रस्य यज्ज्ञानं तत् तावत्प्राक् द्विगुणीकर्तव्यम् । अयमेको गुणो नाम । एवं द्विगुणीकरणेनाधिकं यज्ज्ञानं तदेव ज्ञानं पुनर्द्विगुणीकर्तव्यम् । इदं गुणद्वयं नाम । एवं द्विगुणीकरणे सति पूर्वस्मादप्यधिकं यत् ज्ञानं तदपि पुनर्द्विगुणीकर्तव्यम् । इदं गुणत्रयं नाम । एवं द्विगुणीकरणे पूर्वस्मादप्यधिकतरं यज्ज्ञानं तदपि पुनर्द्विगुणीकर्तव्यम् । इदं गुणचतुष्टयं नाम । एवमुत्तरोत्तराधिकाधिकज्ञानानां शतपर्यन्तं द्विगुणीकरणे स्थूलस्थूलज्ञानसमूहात् अन्ते यन्महत्तरं ज्ञानं तच्छतगुणाधिकमित्युच्यते । प्राचीनं तु यद्रुद्रज्ञानं तदुक्तविधया स्वापेक्षया शतगुणाधिकसरस्वतीज्ञानात् शतगुणादूनमित्युच्यते । एवं सुखशक्त्यादावपीति विवेको ज्ञेयः ।। १६ ।।

---

१. 'क्रमतः' इति पाठान्तरम् ।

न्यायेन दशैकदेशभूतानां एकपञ्चादीनामपि वाचको भवति । एवं शतं सहस्रं च भवति । दशशतात्मकसहस्रमध्ये शतस्यापि प्रविष्टत्वात् [१]"....दश दशतः तच्छतं दश शतानि तत्सहस्रं तत्सर्वम्' इति शब्दः ऐतरेयोपनिषदात्मकः शब्दः यस्मादस्ति तस्मात् शतशब्दः हीनवचनो न । येषु येषु यावन्तः गुणाः सन्ति ततो हीनवचनो न । दशगुणाः सन्ति चेत् तावत एव वदति । पञ्चदशगुणाः सन्ति चेत् तावत एव वदति । शतगुणाः सन्ति चेत तावतां वाचकः। द्विशतं सहस्रं वा गुणाश्चेत् तावतां वाचक इति भावः। 'तत्सर्वं'इति श्रुतिशेषस्य तत्सहस्रं सर्वमनन्तं च भवति । आनन्त्यमध्ये सहस्रस्यापि प्रविष्टत्वादित्यर्थः।।१७ ।।

**सङ्क**— नन्वेतेषां तारतम्यं नित्यमनित्यं वा । न तावदाद्यः। मुक्त्यनन्तरं तेषां तारतम्याभावात् । न द्वितीयः। अपसिद्धान्तप्रसङ्गात् । अत एव एतत् तारतम्यकथनमप्रयोजकमित्यत आह— **तेषां स्वरूपमिति**।। यतः कारणादिदं तारतम्यं तेषां स्वरूपमेव न त्वौपाधिकमतस्तस्मादेव कारणात् मुक्तावप्येवमेव भविष्यन्तीत्यर्थः। ननु शतशब्दो बहुत्ववाचीत्युक्तम् । किमत्र प्रमाणमित्यत आह— **शब्द शतमिति** ।। 'शब्दः शतं दशसहस्रं' इत्यनेन सूचिता 'दश दशत तच्छतं दशशतानि तत्सहस्रं तत्सर्वम्' इति श्रुतिः। इति शब्दो वेदो यस्मात् तस्मत् शतमितिशब्दो हीनवचनो नेत्यन्वयः। अथ तस्मात् ततः शतादेरग्र्यरूपा अधिकरूपा इत्यर्थः। शतं इति शब्दः तस्माच्छताद्धीनवचनो न। किन्तु शतादप्यधिकवचनो यस्माद्दशेतिशब्दः तस्मात् दशतो हीनवचनो नेति यस्मात् सहस्रमितिशब्दः। तस्मात्सहस्राद्धीनवचनो नेति तस्मात् सहस्रमितिशब्दः तस्मात्सहस्राद्धीनवचनो नेति तस्मात् दशतः शतादेरग्र्यरूपाः यस्मादथ तस्मात् ततः शतादेरप्यग्र्यरूपा अधिकरूपा वा इत्यर्थः।। १७ ।।

**वरद**— ननु जीवानां स्वरूपेषु तारतम्यं नास्त्येव । यदिदानीं प्रतीयते तल्लिङ्गदेहोपाधिकमेव । मुक्तौ सत्यां लिङ्गदेहापगमे तन्निमित्तकं तारतम्यमपि नश्यति । ततः साम्यापन्नस्वरूपेणैव जीवानामवस्थानमिति रामानुजीयाः। तन्मतं अनेकश्रुतिविरुद्धमित्याशयेन जीवस्वभाव एव तारतम्यं न त्वौपाधिकमित्याह— **तेषामिति**।। यतस्तेषां जीवानां इदं पूर्वोक्ततारतम्यस्वरूपमेव इत्येवकारान्वयः। अथ तस्मान्मुक्तौ सत्यामप्येवमेव इदानीं यथा नीचोच्चतया प्रतीयन्ते तथैव सततं उच्चनीचस्वरूपास्तिष्ठन्तीत्यर्थः। ननु शतमिति शब्दो बहुत्ववाचीत्युक्तं तत्र किं प्रमाणमिति तत्राह— **शब्दः शतमिति** ।। शतं दशसहस्रमित्यनेन 'दश दशतस्तच्छतं दशशतानि तत्सहस्रं तत्सर्वं' इति श्रुतिमर्थत उपादत्ते । इति शब्दो वेदरूपो यस्मात्प्रमाणं शतशब्दस्य बहुत्ववाचित्वे तस्माच्छतमिति शब्दो न हीनवचनः किन्तु उत्कृष्टवचनः तस्माज्जीवाः ततः शतादेरग्र्यरूपाः उत्कृष्टरूपा इत्यर्थः।। १७ ।।

**जना**— ननु संसारावस्थायां उपाधिवैचित्र्यात्तारतम्यमस्तु उपाधिनाशे मुक्तौ तन्नास्तीति प्राप्तमत आह— **तेषामिति** ।। इदं तारतम्यं तेषां जीवानां स्वरूपमेव यतः अथ तस्मात् मुक्तावप्येवमेव यथा संसारे उच्चनीचाः तथा सततं निरन्तरं उच्चनीचरूपाः सन्ति । स्वरूपस्यैवोपाधित्वात् तस्य चानाशात् । तस्योच्चनीचत्वाच्च मुक्तावपि तारतम्योपेता इति भावः। तदुक्तं स्कान्दे—

[२]"जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।।' इति ।

---

१. ऐ.भा. २-२-४ । २. १. भा.ता. ४-२१-२६ ।

शतशब्दस्य बहुत्ववाचित्वे किं प्रमाणमित्यत आह— **शब्द इति** ।। श्रुत्यर्थानुवादपूर्वकं प्रतीकग्रहणं शतमिति । तेन 'दशशतं सहस्रमित्यपरिमितनामानि' इति शब्दः श्रुतिस्मृतिप्रसिद्धः यस्मात्तस्माच्छतशब्दो हीनवचनोऽल्पवाची न ।

यद्वा—

[1]"शतं दश सहस्रं च पदमानन्त्यवाचकम् ।
यन्मयोक्तं तु वचनं न तदानन्त्यवाचकम् ।।' इति ।

शब्द आगमस्येति । उपसंहरति— **अथेति** ।। अथ शतादिशब्दानामधिकार्थवाचित्वात्तत उक्ता दशशतादेरग्र्यरूपाः। तच्च द्वेधा ।

'सङ्ख्यान्यथात्वं यत्र स्यात् तत्रावेशविशेषतः ।
अवराणां गुणस्यापि परमाङ्गत्वतस्तथा ।।' इति छान्दोग्यभाष्योक्तप्रकारेण ।

अथवा तैत्तिरीयभाष्योक्तप्रकारेण । तथाहि—

[2]"सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः।
अथवा सहस्रगुणिता अनन्तगुणितास्तथा ।।
परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।
तथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत् ।।
स्फुटीभवेद्यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।
यथैव सूर्याद् द्विगुणश्चन्द्रो नैव स्फुटीभवेत् ।।
उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः।
प्रतिबिम्बा यतः सर्वे ब्रह्मान्तानां नरादयः।
अतोऽस्फुटस्वरूपास्ते स्फुटरूपास्तथोत्तरा ।।' इति ।

अनुव्याख्यानेऽपि ज्ञानस्य अतिस्फुटत्वमुक्तम् ।

[3]"बहुला चातिविशदा स्फुटा चैव श्रियो मतिः।
महाशुद्धचितित्वेन ततोऽप्यतिमहाचितिः।।
अशेषोरुविशेषाणामतिस्पष्टतया दृशिः।
नित्यमेकप्रकारा च नारायणमतिः परा ।।
सूर्यप्रभावदखिलं भासयन्ती निरन्तरा।
निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ।।
विशेषांस्तत्तांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रियः।
तथैव स्पष्टताभावात् तत्तन्त्रत्वाच्च केवलम् ।।
न तादृशी ब्रह्मणस्तु प्राय एव श्रियो यथा ।

---

१. शतं शतसहस्रं तु सर्वमक्षय्यवाचकम्। परिमाणं शतं त्वेतन्नेदमक्षय्यवाचकम् । महाभारत /आदि/२३८-८ । २. ब्रह्मानन्दवल्ली ।
३. अनु. ४-२-१७६९-१७७४ ।

**सङ्क**— ननु यथा पुरुषाणां स्वावरेभ्यः शतगुणितत्वेनाधिक्यमुक्तं तथैव स्वभार्याभ्यः शतगुणितत्वेन आधिक्यं किमित्यतो वरिष्ठत्वं न नियतमित्याह— **ताभ्यश्चेति** ।। केषाञ्चित् स्वभार्याभ्यः शतगुणतो वरिष्ठत्वम् । केषाञ्चित् स्वभार्याभ्यः दशगुणतो वरिष्ठत्वमित्यर्थः। कुत इयं व्यवस्थेत्यत आह— **यथेति** ।। क्रमेण यथा विशेषश्रुतिस्थाः तथाङ्गीकर्तव्यमित्यर्थः। ननु सरस्वत्याः शतावरस्य रुद्रस्य पवमानाच्छतावरत्वं विरुद्धम् । तथा उमाया शतावरस्य इन्द्रस्य रुद्राच्छतावरत्वं इत्यादिकं च विरुद्धम् । तथाविधश्रुत्यन्तरसद्भावादित्यत आह— **शब्दो बहुत्ववचन इति** ।। शतमितिशब्दो द्विशतादिबहुत्ववाची । न तावन्मात्रवाची यस्मादतः श्रुत्यन्तरेषु द्विशतत्वादिबहुत्वोक्तेः विरुद्धता नास्तीत्यर्थः ।। १६ ।।

**वरद**— ननु यथा पुरुषाणां स्त्रीणां च स्वस्वावरापेक्षया शतांशाधिकगुणवत्वमुक्तम् । तथा तेषामेव पुरुषाणां स्वभार्याभ्यः शतांशाधिकगुणवत्वं किमित्यतो न तत्रायं नियम इत्याह— **ताभ्यश्चेति** ।। ताभ्यः स्वस्वभार्याभ्यः ते पुरुषाः केचित् शतगुणैः शतांशैर्वरिष्ठाः ज्ञेयाः। केचिद्दशतो दशांशेन वरिष्ठाः। केचित्तु पञ्चोत्तरैः दशतः पञ्चाधिकदशांशेन वरिष्ठा इत्यर्थः । अयं च विशेषो यथा श्रुत्युक्तः तथा द्रष्टव्य इत्याह— **यथा क्रमशः श्रुतिस्था इति** ।। ननु तथापि पुरुषेषु शतांशोनगुणत्वं स्वस्वोत्तमापेक्षयेत्यनुपपन्नम् । शतादप्यधिकांशोनत्वस्य श्रुतिषु उच्यमानत्वादित्यत आह— **शब्दो बहुत्ववचन** इति ।। शतमिति शब्दो बहुत्ववचनो बहुत्ववाची यतोऽतः श्रुत्यन्तरेषु बहुधोक्त्या विरुद्धता विरोधो नेत्यर्थः ।। १६ ।।

**जना**— पुरुषेभ्यः स्त्रीणामपि शतगुणन्यूनत्वं किमित्यत आह— **ताभ्य इति** ।। ते पुरुषाः ताभ्यः स्त्रीभ्यः। शतगुणैर्दशगुणैः पञ्चोत्तरैः पञ्चगुणैरधिकाः। कथमेतज्ज्ञेयमित्यत आह— **यथेति** ।। यथा येन क्रमशः क्रमेण श्रुतिस्थाः श्रुतौ उक्तास्तेन क्रमेण ज्ञेयाः। ननु प्रजापतिशब्दवाच्यरुद्राच्छतगुणाधिक्यमुक्तं ब्रह्मणः तैत्तिरीयश्रुतौ । छान्दोग्ये सप्तमाध्याये तु स्मरशब्दवाच्यरुद्राच्छताधिकाशाशब्दवाच्यायाः सरस्वत्याः तस्याः प्राणस्य शतगुणा-धिक्यमुक्तमतः श्रुतीनां विरोधात्कथं ज्ञेयमित्यत आह— **शब्द इति** ।। शतमिति शब्दः बहुत्ववचनः बहुत्वं दशसहस्रादि तद्वाची । अतः श्रुत्यन्तरेषु बहुधाऽनेकधोक्तेः विरुद्धता विरोधो नहि ।। १६ ।।

**ताम्र**— ननु स्त्रीभ्यस्तत्पतयः कियतोत्तमा इत्यत आह— **ताभ्य इति** ।। वाय्वादयः शतगुणैः रुद्रादयो दशगुणैः केचित्पञ्चोत्तरैर्दशगुणै क्रमशः क्रमेण यथा श्रुतिस्थाः श्रुतिभिरुक्ताः तथा वरिष्ठा इत्यर्थः। ननु [1]"ते ये शतं विरिञ्चा एतावती श्रीर्भक्त्या भवति' इति क्वचिच्छ्रियो ब्रह्मणः शताधिक्यमुच्यते । क्वचित् 'श्रीस्तथा वायोःसहस्रगुणिता गुणैः' इति सहस्राधिक्यमुच्यते । [2]क्वचित्कोटिगुणत्वमुच्यते । तथा [3]"तद्भार्या तच्छतावरा' इति रुद्रादिस्त्रीणां तदपेक्षया शतावरत्वम् । अन्यत्र '[4]तद्देव्यस्तद्दशांशाः स्युः ततस्त्विन्द्रादयो मता' इति दशा-वरत्वमुच्यते । ततश्च विरोधाच्छ्रुत्यप्रामाण्यप्राप्तेर्न व्यवस्थेत्यत आह— **शब्द इति** ।। शतमितिशब्दो बहुवचनः। कोटिसङ्ख्यावचनः। अत एव एकस्याः श्रुतेः श्रुत्यन्तरेषु बहुधोक्त्या विरोधो नेत्यर्थः। तथा शतमिति शब्दो बहुत्ववचनः। दशवाचीत्यर्थः। [5]"विशेषास्तेऽप्यनन्ताश्च' इत्यत्र सुधायां अनन्तशब्दस्य अनेकोपलक्षकत्व-स्वीकारात् । अतः श्रुत्यन्तरेषु बहुधोक्त्या रुद्राद्यपेक्षया स्त्रीणां प्रति तद्दशावरत्वविरोधो नेत्यर्थः ।। १६ ।।

---

१. भा.ता. १०-८२-५० । २. बृ.भा. ३-५ 'एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा' । ३. बृ.भा. ३-५ । ४. 'तच्छतांशाः' इति हो. पुस्तके पाठान्तरम् । ५. अनु. १-१-२-११० ।

मुक्तानां तु तदन्येषां समुद्रतरलोपमा ।।
अग्निज्वालावदेव स्यात् सृतिगानां दृशो भवः ।।' इति ।। १७ ।।

**ताम्र**— संसारदशायां तारतम्यं मुक्तौ त्वेकप्रकारता विचित्रोपाध्यपगमादित्यत आह— **तेषामिति** ।। आद्य एवशब्दः स्वरूपशब्देन सम्बध्यते । यत इदं तारतम्यं तेषां स्वरूपमेव । अथ तस्मात् । ननु मुक्तावपि लीलाविग्रहग्रहणदशायां भूरिभोगभावात्तारतम्यं भवतु स्वरूपेणैवावस्थानदशायां मास्तु । श्रुतिस्तु कालविशेषपरेत्यत उक्तम्— **सततेति** ।। शतादिशब्दो बहुत्ववाचीत्यत्रागमसम्मतिमाह— **शब्द इति** ।। दश शतं भवति दशवारं दशात्मकत्वाच्छतस्य । शतं दश च भवति । दशवारं दशात्मकशतमध्ये प्रविष्टत्वात् । अतो दशशब्दः शतवाचकः दशवाचकः। शतशब्दश्च तदेकदेशभूतानां दशानामपि वाचको भवति । एवं शतं सहस्रं च भवति दशशतात्मकत्वात् सहस्रस्य । सहस्रं कोटिश्च भवतीत्यर्थप्रतिपादकः 'दश दशतः तच्छतं दशशतानि तत्सहस्रं तत्सर्वम्' इति शब्दः महैतरेयश्रुतिरस्ति यस्मात् । तच्छतशब्दो ततो हीनवचनो न । येषु यावन्तो गुणाः सन्ति ततो हीनवचनो न । कोटिगुणाः सन्ति चेत्तावतोऽपि वक्ति । दशगुणत उत्तमतास्ति चेत्तावदेव वदतीत्यर्थः।। १७ ।।

**जम्बु**— ननु संसारावस्थायां उपाधिवैचित्र्यात्तारतम्यमस्तु मुक्तौ तन्नास्तीति प्राप्तमत आह— **तेषामिति** ।। यतः कारणात् इदं तारतम्यं तेषां जीवानां स्वरूपमेव । अथ तस्मात् । ननु मुक्तावपि लीलाविग्रहग्रहणदशायां भूरिभोगभावात्तारतम्यं भवतु स्वरूपेणैवावस्थानदशायां मास्तु । श्रुतिस्तु कालविशेषपरेत्यत उक्तम्— **सततेति** ।। इति ***श्रीनिवासभट्टीये*** । यथा सततोच्चविनीचरूपाः सततं निरन्तरं उच्चविनीचरूपाः सन्ति स्वरूपस्योपाधित्वात् तस्य चानाशात्तस्योच्चनीचत्वाच्च मुक्तावपि तारतम्योपेता इति भावः। तदुक्तं स्कान्दे—

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः।।'

इति **जनार्दनभट्टीये । सततोच्चविनीचरूपा** इत्यत्र ।। तदुक्तमनुव्याख्याने—

[1]"तस्मादमुक्तिसुखगं तारतम्यं पृथक्पृथक् ।
उक्ता यश्चेति मुक्तानां तारतम्यमुखे श्रुतिः ।।
आहेति पेशलं तच्च चशब्दादेव गम्यत ।।' इति ।

इदं चात्र तैत्तिरीयभाष्योक्तमनुसन्धेयम् ।

[2]"यथानन्दे तथा ज्ञाने विष्णुभक्तौ बलाधिके ।
सर्वैर्गुणैश्शतगुणाः क्रमेणोक्ते न तेऽखिलाः ।।
अथवा सहस्रगुणिता अनन्तगुणितास्तथा ।
परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात् ।।
यथा दीपाच्छतगुणाप्यग्निज्वाला न दीपवत् ।
स्फुटीभवेद्यथैवाग्निर्बहुलोऽपि न सूर्यवत् ।।
यथैव सूर्याद्विगुणः चन्द्रो नैवं स्फुटीभवेत् ।

१. अनु. ३-४- १४३५-१४३७ । २. ब्रह्मवल्ली ।

उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः ।।
प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः ।
अतोऽस्फुटस्वरूपास्ते स्फुटरूपास्तथोत्तराः ।।' इति ***नारायणाध्वरीये***।

ननु शतमितिशब्दो बहुत्ववाचीत्युक्तं तत्र किं प्रमाणमिति तत्राह— **शब्द इति** ।। श्रुत्यर्थानुवादपूर्वकं प्रतीकग्रहणं **शतमिति**। तेन 'दशशतं सहस्रमित्यपरिमितनामानि' इति शब्दः श्रुतिस्मृतिप्रसिद्धः यस्मात्तस्माच्छतशब्दो हीनवचनोऽल्पवाची न । यद्वा—

"[1]शतं दश सहस्रं च पदमानन्त्यवाचकम् ।
यन्मयोक्तं तु वचनं न तदानन्त्यवाचकम् ।।'

इतिशब्द आगमस्येति । उपसंहरति— **अथेति** ।। अथ उक्तशतादिशब्दानामधिकार्थवाचित्वात् ततः दशशतादेरग्र्य-रूपाः।। १७ ।।

**भारतश्री**— शतादिशब्दो बहुत्ववाचीति कुत इति शङ्कां आगमवाक्येन परिहरति— **शब्दश्शतमिति** ।। शब्दः दशसहस्रमितिशब्दः बहुत्ववाचीत्यागमो यतः अतस्तस्मात् न हीनवचनः । तन्मात्रवाची ततश्शतादेरग्र्यरूपाः अधिकरूपाः।। १७ ।।

**एवं नरोत्तमपरास्तु विमुक्तियोग्या**
**अन्ये च संसृतिपरा असुरास्तमोगाः।**
**एवं सदैव नियमः क्वचिदन्यथा न**
**यावन्न पूर्तिरुत संसृतिगाः समस्ताः।। १८ ।।**

**व्यास**— नीचोच्चतायाः देशकालफलव्यवस्थया अन्यथात्वदर्शनादियमपि तथेत्यत एवं नियमः । ये क्वचित् अन्यथा अभावि किन्तु सदैव नित्य एव तस्यास्तेषां स्वरूपत्वादिति । यदि नरोत्तमत्वादयो मुक्तियोग्याः असुरास्तमोयोग्यास्तर्हि त इदानीं सृतौ नोपलभ्येरन् मुक्त्यादिप्राप्तेरित्यत आह— **यावदिति** ।। पूर्तिः साधनस्येति शेषः ।। १८ ।।

**वादि**— **अन्ये च संसृतिपरा** इत्यत्र संसृतिरेव परा परमफलं येषां ते संसृतिपराः। यावन्न पूर्तिरित्यत्र पूर्तिः स्वयोग्यसाधनसम्पूर्तिः। उत तावत्। समस्तास्त्रिविधजीवा अपि संसृतिगा इत्यर्थः ।। १८ ।।

**सङ्क**— ननु वाय्वादीनां संसारिचेतनानां पूर्ववन्मुक्त्यनन्तरमपि तारतम्यमस्तीत्युक्तम् । तन्नोपपद्यते । मुक्तेरेवासम्भवात् । तथा हि संसारिणो यदा मुक्ता भवन्ति तदा संसारिचेतनानां समाप्तेः तेषां सृष्टिस्थिति-विलयमोक्षाद्यभिधायकानां वाक्यानां निर्विषयत्वेनाप्रामाण्यप्रसङ्गः स्यात् इत्यत आह— **एवमिति** ।। एवं केषाञ्चित् मुक्तौ सत्यामपि वाय्वाद्याः नरोत्तमावसाना मुक्तियोग्याः सन्ति । तथा नित्यसंसृतियोग्यः सन्ति ।

---

१. म.भा. आदिपर्व २३७-८ ।

**जम्बु**— ननु यथा पुरुषाणां स्वावरेभ्यः शतांशाधिकगुणत्वं तथा तेषां स्वस्वभार्यापेक्षया शताधिकगुणत्वं किमित्यतो न तत्रायं नियम इत्याह— **ताभ्यश्चेति** ।। ताभ्यः स्वस्वभार्याभ्यः भारत्यादिभ्यः ते वाय्वादयः शतगुणैः शतांशैर्गुणैः वरिष्ठाः श्रेष्ठाः ज्ञेयाः। केचिद्रुद्रादयः दशतः दशगुणैर्वरिष्ठाः। केचित्तु पञ्चोत्तरैर्गुणैः पञ्चाधिक-दशगुणैः वरिष्ठाः ज्ञेयाः। अत्र बृहद्भाष्योक्तं चानुसन्धेयम् ।

[1]"देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथा पराः।
अष्टांशोनाः प्रविज्ञेया यासां मुक्तौ सहस्थितिः ।।' इति ।

अयं च विशेषः यथाश्रुतिस्तथा द्रष्टव्य इत्याह— **यथाक्रमशः श्रुतिस्था इति** ।। यथा येन क्रमशः क्रमेण श्रुतिस्थाः श्रुतौ उक्ताः विशेषाः तेन क्रमेण ज्ञेयाः। ननु 'ते ये शतं विरिञ्चा एतावती श्रीर्भर्त्त्या भवति' इति । क्वचित् श्रियो ब्रह्मणः शताधिक्यमुच्यते। क्वचित् 'श्रीस्तथा वायोः सहस्रगुणिता गुणैः' इति सहस्राधिक्यमुच्यते । क्वचित् कोटिगुणत्वमुच्यते । तथा 'तद्भार्याः तच्छतावरा' इति रुद्रादिस्त्रीणां तदपेक्षया शतावरत्वम् । अन्यत्र 'तद्देव्यस्तच्छतांशाः स्युः ततस्त्विन्द्रादयो मता' इति दशावरत्वमुच्यते । ततश्च विरोधात् श्रुत्यप्रामाण्यप्राप्तेः न व्यवस्थेत्यत आह— **शब्द इति** ।। शतमिति शब्दो बहुत्ववचनः। कोटिसङ्ख्यावचनः। अत एव एकस्याः श्रुतेः श्रुत्यन्तरेषु बहुधोक्त्या विरुद्धता विरोधो नेत्यर्थः इति ***श्रीनिवासभट्टीये*** ।। १६ ।।

**भारतश्री**— क्वचित् पार्वत्यादिभ्योऽपि शतोत्तरत्वं तद्भर्तॄणां श्रूयत इत्यत आह— **शब्दो बहुत्ववचन इति** ।। १६ ।।

**तेषां स्वरूपमिदमेव यतोऽथ [2]मुक्ता-**
**वप्येवमेव सततोच्चविनीचरूपाः।**
**[3]शब्दः शतं दशसहस्रमिति स्म यस्मा-**
**त्तस्मान्न हीनवचनोऽथ ततोऽग्र्यरूपाः ।। १७ ।।**

**व्यास**— संसारदशायां तारतम्यवन्तः मुक्तौ एकप्रकाराः उपाधिवैचित्र्यापगमादित्यत आह— **तेषामिति** ।। आद्य एव शब्दः स्वरूपशब्देन सम्बध्यते । इदं तारतम्यं तेषां स्वरूपमेवेति। अथ तस्मात् शतादिशब्दो बहुत्ववाचीति कुत इति शङ्कामागमेन परिहरति— **शब्द इति** ।। 'दश शतं सहस्रमित्यपरिमितनामानि' इति शब्द आगमोऽस्ति यस्मात् तस्माच्छतमित्यादिशब्दो न हीनवचनः न दशशतमात्रादिवाचकः अथ तस्मात्ततः शतगणनेन ततः शतादेरग्र्यरूपा अधिकरूपाः। सुरेषूक्तं तारतम्यमन्यत्राप्यतिदिशति— **तेषामिति** ।। १७ ।।

**वादि**— **शब्दः शतं दशसहस्रमिति स्म यस्मात्** इत्यत्र शतं दश च भवति । दशवारं दशात्मकशतमध्ये दशानां प्रविष्टत्वात् । अतः दशदशवाचकशतशब्दः तदेकदेशभूतानां दशानामपि वाचको भवति । अनेनैव

---

१. बृ.भा. ३-५ । २. 'मुक्ता अप्येवमेव' इति पाठान्तरम् । ३. 'यच्च "शतायुर्वै पुरुषः" इति श्रुतौ शतपदं तदानन्त्यमाह 'आनन्त्यार्थाः स्मृतास्सर्वे प्रायःशब्दाश्शतादयः। इतिहासपुराणेषु वाच्यार्थं ब्रुवते क्वचित्।' इत्युक्तेः श्रौतं शतपदं कृतादित्रिष्वानन्त्यपरं कलौ वाच्यार्थपरमिति न किञ्चिदसमञ्जसम् ।' इति भाग-९स्कं-११अ-१८ वंशीधरः शतशब्दस्य आनन्त्यवाचकत्वं सप्रमाणं व्याचष्टे ।

तथा केषाञ्चिदसुराणां अन्धन्तमः प्राप्तावपि तद्योग्या अन्येऽप्यसुराः सन्ति । अतः सृष्ट्याद्यभिधायकवाक्यानां अप्रामाण्यं नास्तीत्यभिप्रायः। ननु यदा कदाचिदुक्तनियमस्यान्यथात्वं किं न स्यादित्यत आह— **एवं सदेति** ।। ननु प्रवाहाविच्छेदेन मुक्त्यन्धतमसोः प्रत्येकं योग्याः सन्तीत्युक्तम् । ते सर्वे स्वरूपप्राप्तिपर्यन्तं कस्यामवस्थायां तिष्ठन्ति । तावत्पर्यन्तं विलम्बे किं कारणमित्यत आह— **यावन्नपूर्तिरिति** ।। साधनसम्पूर्णाभाव एव विलम्बे कारणमित्यर्थः।।१८ ।।

**वरद**— न केवलं उक्तरीत्या मुक्तियोग्येष्वेव अवान्तरतारतम्यं स्वरूपभूतं किन्त्वशेषजीवेषु त्रित्वेन क्रोडीकृतेषु मुक्तियोग्यत्वनित्यसंसारित्वतमोयोग्यत्वरूपमपि तारतम्यं तत्तत्स्वरूपमित्याह— **एवमिति** ।। नरोत्तमाः परे अवसाने वर्तमानाः येषां ब्रह्मादीनां ते तथा । ते मुक्तियोग्या एवेत्यर्थः। तदन्ये मनुष्यमध्यमाः संसृतिपराः नित्यसंसारिण इति यावत् । तथा मनुष्याधमान्ताः कल्याद्याः असुरास्तमोगास्तमोयोग्या इत्यर्थः। एतस्यापि कदाप्यन्यथात्वं नास्तीत्याह— **एवमिति** ।। एवमुक्तरीत्या सदाऽनन्तकालेषु नियम एव । न तु क्वचिद्देशे काले वाऽन्यथा मुक्तियोग्यत्वादिवैपरीत्यमित्यर्थः। नन्वेते सर्वे मुक्तेः प्राक् कस्यां अवस्थायां तिष्ठन्ति मुक्त्यादि प्राप्तौ च कुतो विलम्ब इत्यत आह— **यावदिति** ।। कस्यामवस्थायामित्यस्योत्तरं समस्ताः संसृतिगा इति । मुक्त्यादिप्राप्तौ कुतो विलम्ब इत्यस्योत्तरं— **यावन्न पूर्तिरिति** ।। स्वस्वगतिप्राप्तिसाधनस्य भक्तिद्वेषादेर्याव-त्कालपर्यन्तं पूर्णता नास्ति उत तावत्पर्यन्तं मुक्त्यादिप्राप्तिर्नास्तीत्यर्थः।। १८ ।।

**जना**— ननु यदा मुक्तास्तदा न संसारिणः यदा संसारिणस्तदा न मुक्ताः संसारिषु मुक्तेषु च सदा तारतम्यकथनं सृष्ट्यादिकथनं कथं इत्यत आह— **एवमिति** ।। एवं केषाञ्चिन्मुक्तौ सत्यामपि अन्ये नरोत्तमपराः। नरोत्तमो वायुः परः मुख्यः एषां ते नरोत्तमा मनुष्योत्तमा एव परे अवरे येषु ते नरोत्तमपराः इति पदमावृत्य योज्यम् । 'परावरे तथैवारादुभयार्थाभिधायिन' इति तात्पर्यम् । विमुक्तियोग्याः सन्ति अन्ये च मनुष्योत्तमेभ्यः अन्येऽपि मनुष्यमध्यमाः संसृतिपराः संसृतावेव पराः आसक्ताः सन्ति । तमोगाः अन्धन्तमो गन्तुं योग्याः असुराः अन्ये प्राप्ततमोभ्यः अन्ये च सन्ति । अत उक्तमुपपद्यत इति भावः। ननु उक्तनियमस्य अन्यथात्वं यदा कदाचिदपि स्यात्किमित्यत आह— **एवं सदेति** ।। एवं नियमः सदैवास्ति । क्वचिदन्यथा न भविता । यदि नरोत्तमान्ताः मुक्तियोग्याः असुराः तमोगाः तर्हि ते इदानीं नोपलभेरन् मुक्त्यादिप्राप्तेरित्यत आह— **यावदिति**।। यावत्पूर्तिः साधनस्येति शेषः। न भविता उत तावत्समस्ताः मोक्षतमोयोग्याः समस्ताः नित्यसंसारिणश्च संसृतिगाः भवन्ति ।। १८ ।।

**ताम्र**— न केवलं मुक्तियोग्येष्वेव तारतम्यं किन्तु त्रिधाक्रोडीकृताशेषजीवेष्वपि फलतारतम्यक्रमेण तारतम्यं मन्तव्यमित्याह— **एवमिति** ।। एवमुक्ततारतम्यविशिष्टा नरोत्तमाः परे अवसाने वर्तमाना येषां ब्रह्मादीनां ते नरोत्तमपरा इत्यर्थः। त्रिविधजीवविवक्षया एकगुणोपासका नरोत्तमशब्देन नराधमाश्चासुरशब्देन विवक्षिताः। तदुक्तं प्रमेयदीपिकायां 'जीवत्रैविध्यविवक्षायां नराधमानामसुरेष्वन्तर्भावस्य प्रसिद्धत्वात्' इति । संसृतिरेव परा चरमफलं एषां ते संसृतिपराः। नित्यसंसारिण इति यावत् । ननु राजाद्युत्तमताया अमात्यादौ नीचताया देशकाल–व्यवस्थयाऽन्यथात्वदर्शनादियमपि तथा किं न स्यादित्यत आह— **एवमिति** ।। एवं नियमः क्वचित्काले देशे

वा अन्यथा न । किन्तु सदैव । तत्तन्नीचोच्चतायाः स्वरूपत्वादिति भावः। ननु यदि नरोत्तमादयो ये मुक्तियोग्या असुरास्तमोयोग्यास्तर्हीदानीं संसृतौ नोपलभ्येरन् । मुक्त्यादिप्राप्तेः। सति योग्यतारूपकारणे कार्यप्राप्तेर्नियतत्वादित्यत आह— **यावदिति** ।। पूर्तिः स्वयोग्यसाधनसम्पूर्तिः। उत तावत् । समस्ताः मुक्तितमोयोग्याः समस्ताः। ***वादिराजीये*** तु 'नित्यसंसारिणामपि लिङ्गभङ्गमङ्गीकृत्य समस्तास्त्रिविधजीवा अपि' इत्युक्तम् । न केवलं योग्यताया मोक्षहेतुत्वम् । किन्तु साधनसामग्रीसचिवाया एव । तथा च यावत्साधनपूर्तिर्न तावत्संसृतिगा इति तदुपलब्धिर्युक्तेति भावः।। १८ ।।

**जम्बु**— न केवलमुक्तरीत्या मुक्तियोग्येष्वेवं तारतम्यं स्वरूपभूतं किन्त्वशेषजीवेषु त्रित्वेन क्रोडीकृत्य तेषु मुक्तियोग्यत्वनित्यसंसारित्वतमोयोग्यत्वरूपेषु तारतम्यं स्वरूपमित्याह— **एवमिति** ।। एवमुक्ततारतम्यविशिष्टाः नरोत्तमपराः नरोत्तमाः मनुष्योत्तमाः परे अवसाने वर्तमानाः येषां ब्रह्मादीनां ते तथा ते विमुक्तियोग्याः एवेत्यर्थः। त्रिविधजीवविवक्षया एकैकगुणोपासकाः नरोत्तमशब्देन, नराधमाश्च असुरशब्देन विवक्षिताः। तदुक्तं प्रमेयदीपिकायां 'जीवत्रैविध्यविवक्षायां नराधमानामसुरेष्वन्तर्भावस्य प्रसिद्धत्वात्' इति । अन्ये विमुक्तियोग्येभ्य इति शेषः। मनुष्यमध्यमास्संसृतिपराः संसृतौ संसारे परा आसक्ताः सन्ति । नित्यसंसारिण इति यावत् । तथा मनुष्याधमान्ताः कल्याद्या असुराः तमोगाः तमः गच्छन्तीति तथा तमोयोग्या इत्यर्थः इति ***वरदराजीये*** । ननु यदा मुक्तास्तदा न संसारिणः यदा संसारिणस्तदा न मुक्ताः। अतः संसारिषु मुक्तेषु च तारतम्यकथनं सृष्ट्यादिकथनं च कथमित्यत आह— **एवमिति** ।। एवं केषाञ्चिन्मुक्तौ सत्यामपि अन्ये नरोत्तमपराः नरोत्तमो वायुः परः मुख्यः येषां ते नरोत्तमाः मनुष्योत्तमा एव परे अवरे येषु ते नरोत्तमपरा इति पदमावृत्य योज्यम् । 'परावरे तथैवारादुभयार्थाभिधायिनि' इति तात्पर्यम् । विमुक्तियोग्यास्सन्ति अन्ये च मनुष्योत्तमेभ्यः अन्येऽपि मनुष्यमध्यमाः संसृतिपराः संसृतावेव पराः आसक्ताः सन्ति । तमोगाः अन्धन्तमो गन्तुं योग्या असुराः अन्ये प्राप्ततमोभ्यः अन्ये च सन्ति अत उक्तमुपपद्यत इति भावः इति ***जनार्दनभट्टीये*** । संसृतिरेव परा परमफलं येषां ते संसृतिपरा इति ***वादिराजीये*** । ननु राजाद्युत्तमतायाः अमात्यादिनीचताया देशकालव्यवस्थयान्यथात्वदर्शनात् अयमपि किं न स्यादित्यत आह— **एवमिति** ।। एवं नियमः क्वचित्काले देशे वा किन्तु सदैव तत्तन्नीचतायाः स्वरूपत्वादिति भावः। ननु यदि नरोत्तमादयो मुक्तियोग्याः असुराः तमोयोग्याः तर्हीदानीं संसृतौ नोपलभ्येरन् । सति योग्यतारूपकारणे मुक्तेरवर्जनीयत्वादित्यत आह— **यावदिति** ।। पूर्तिः स्वयोग्यसाधनपूर्तिः यावन्न भवति न भविता तावत्समस्ताः मुक्तियोग्याः तमोयोग्याश्च नित्यसंसारिणश्च सृतिगाः भवन्ति । न केवलं योग्यताया मोक्षहेतुत्वं किन्तु साधन-सामग्रीसचिवाया एव । तथा च यावन्न साधनसम्पूर्तिस्तावत्संसृतिगा इति तदुपलब्धिर्युक्तैवेति भाव इति ***श्रीनिवासतीर्थीये*** ।। १८ ।।

**भारतश्री**— मुक्तियोग्या अपि यावन्न साधनपूर्तिस्तावत् संसृतिगाः संसारिणः ।। १८ ।।

**राम**— **'एवं नरोत्तमपरास्तु विमुक्तियोग्या'** इत्यत्र तुशब्दः स्थावरजङ्गमा अपीत्यर्थसूचकः। तथा च नरोत्तमाः पराः उत्तमाः साक्षात्तारतम्यत्वेन येषां ते तथा नरोत्तमेभ्यः पराः क्षितिपब्रह्मान्ता इति च ।। १८-७१ ।।

**पूर्तिश्च नैव नियमाद्भविता हि यस्मा-**
**त्तस्मात्समाप्तिमपि यान्ति न जीवसङ्घाः।**
**आनन्त्यमेव गणशोऽस्ति यतो हि तेषा-**
**मित्थं ततः सकलकालगता प्रवृत्तिः।। १९ ।।**

**व्यास**— [1]उक्ततार......स्तुमुक्त्यादेः साधनपूर्त्यधीनत्वं साप्यनादौ [1]काले.....नेत्यतः प्रतिजानीते— **पूर्तिरिति** ।। तत्र हेतुमाह— **आनन्त्यमिति** ।। तेषां ब्रह्मादिपदयोग्यानां गणशः आनन्त्यात् ब्रह्मादिपदस्य क्रमेण प्राप्यत्वाच्च साधनपूर्तिश्च नियमाद्युपपन्नैव भविता ।। १९ ।।

**वादि— 'पूर्तिश्च नैव नियमाद्भविता'** इत्यत्र नियमादेकस्य पूर्तिकाले सर्वेषामपि पूर्तिः स्यादेवेति नियमात् । 'आनन्त्यमेव गणश' इत्यत्र ब्रह्मपदयोग्यजीवगणाः रुद्रपदयोग्यजीवगणाः इन्द्रपदयोग्यजीवगणाः इत्यादिना गणैरानन्त्यमस्ति । अनेन प्रकारेण गणानामप्यानन्त्यमस्ति । गणान्तर्गतजीवानामपि प्रत्येकमानन्त्यमस्तीति भावः ।। १९ ।।

**सङ्क—** ननु सर्वेषां एकदैव साधनसम्पूर्तौ सत्यां सर्वेषां जीवानां समाप्तेः पुनः सृष्ट्याद्यभावात् तदभिधायकवाक्याना-मप्रामाण्येन पूर्वोक्तदोष एव भवतीत्यत आह— **पूर्तिश्चेति** ।। पूर्तिश्च नियमात् एकदैव न भवितेत्यर्थः। ननु पूर्तिश्च नियमात् कथं न भवितेत्यत आह— **आनन्त्यमेवेति** ।। कालक्रमेणैवं स्वरूपप्राप्तियोग्यानां जीवानां गणशः आनन्त्यमस्ति यतः ततस्तेषां इत्थं प्रवाहाऽविच्छेदेन सकलकालगता प्रवृत्तिर्युक्ता ।

'यथैव कालनियमः सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति ।।'
[2]'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः ।।'

इत्यादि श्रुतिप्रामाण्यादित्यर्थः। अनन्ताः प्राणिराशय इत्यत्रापि कालक्रमेण तत्तत्स्वरूपप्राप्तियोग्याः प्राणिराशयः विवक्षिताः। अन्यथा एकजीववादिचोद्यं अपरिहृतं स्यादित्याद्यूहनीयम् ।। १९ ।।

**वरद—** ननु युगपदेव सर्वेषां साधनसम्पत्तौ युगपदेव मुक्त्यादिप्राप्तौ जीवानां परिसमाप्त्यापत्या पुनः सृष्ट्यादि-प्रतिपादकप्रमाणविरोध इत्यत आह— **पूर्तिश्चेति** ।। यस्माद्युगपदेव सर्वेषां जीवानां पूर्तिः साधनसम्पत्तिः नैव भविता न भवत्येव । कुतः। नियमात् ईश्वरनियमात् । अस्मिन्नेव काले एनं जीवं मुक्तं करिष्यामीति ईश्वर-सङ्कल्पान्निमित्तादित्यर्थः। तस्माज्जीवसङ्घाः समाप्तिं न यान्त्यपि । अतः पुनः सृष्ट्यादिसम्भवान्न तत्प्रतिपादक-वाक्याप्रामाण्यमिति भावः। नन्वेवमनेकब्रह्मकल्पेषु क्रमेणानेकजीवमुक्त्यादौ कालक्रमेणापि सर्वजीवसमाप्तेः सम्भवात् पुनः स एव दोषः स्यादित्यत आह— **आनन्त्यमेवेति** ।। यतः कारणात्तेषां जीवानां गणशः गणानां

---

१. उक्ततार......स्तुमुक्त्यादेः, काले.....नेत्यतः – एतयोः अन्तरितो भागः त्रुटितः। २. वि.त.नि. प्रथमपरिच्छेदः ।

आनन्त्यमस्त्येव। हि शब्देन

'यथैव कालनियमः सुरादिनियमस्तथा।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति।।'
'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिता।।'

इत्यादि प्रमाणप्रसिद्धम्। ततः कारणात्तेषां जीवानामित्थमेव सकलकालगता भूतभविष्यद्वर्तमानकालेषु विद्यमाना प्रवृत्तिः युक्तेत्यर्थः।। १९ ।।

**जना**— ननु अनन्तकाले एकैकस्य मुक्तितमःप्राप्तावपि समस्तानां परिसमाप्तेः पुनः मुक्तियोग्य–तमोयोग्यानामभावः प्राप्त इत्यत आह— **पूर्तिश्चेति** ।। नियमाद्धरिसङ्कल्पात् पूर्तिः साधनसमाप्तिर्यस्मान्न भविता तस्माज्जीवसङ्घाः समाप्तिमपि न यान्ति। पूर्त्यभावे निमित्तमाह— **आनन्त्यमिति** ।। तेषां ब्रह्मादिपदयोग्यानां गणशश्चानन्त्यमस्त्येव। यतस्तत इत्थं प्रवाहाविच्छेदेन सकलकालगता प्रवृत्तिर्युक्ता।

'यथैव कालनियमः सुरादिनियमस्तथा।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति।।'

इति प्रमाणं हिशब्दाभ्यां सूचयति।। १९ ।।

**ताम्र**— ननु युगपदेव सर्वेषां साधनसम्पूर्तौ युगपदेव मुक्तिप्राप्त्या 'यथापूर्वमकल्पयत्' इत्यादिश्रुतिविरोध इत्यत आह— **पूर्तिश्चेति** ।। एकस्य पूर्तिकाले सर्वेषामपि पूर्तिः न स्यादिति नियमात् पूर्तिश्च नेत्यर्थः। कुतः। नियमात् 'अस्मिन् काले एनमनेन साधनेन मोचयिष्य' इतीश्वरनियमात्। यद्वा नित्यकाले संसारोऽनुवर्तता–मितीश्वरेच्छया नियमात्। तदुक्तम् '[1]नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया' इति गीतातात्पर्ये। नन्वेवं अनेकब्रह्मकल्पेषु क्रमेणानेकजीवमुक्तौ एकैकेषामपचये माषराश्यपचयवत् कालक्रमेण सर्वजीवसमाप्तेः पुनः स एव दोष इत्यत आह— **तेषां** जीवानां **गणश एवानन्त्यमिति** ।। ननु ब्रह्मादीनां गणश आनन्त्येऽपि एकैकस्मिन्कल्पेऽनेकेषां तत्तद्गणीयानां मुक्तौ पुनः स एव दोष इति चेत्। तैः ब्रह्मादिपदं प्राप्यैव मोक्षस्य लाभात् पदस्य च क्रमेणैव तैः प्राप्यत्वात्।

'यथैव कालनियमः सुरादिनियमस्तथा।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति'।
'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।।' इत्यादिवचनादिति हीत्युक्तम्।

नन्वेकैकस्मिन् कल्पे एकैकस्य मुक्त्यङ्गीकारे ब्रह्मादिगणानामनन्तत्वेन तेषां नित्यसंसारिता स्यात्। अपर्यवसिता–नन्तकल्पेष्वपि मुक्त्यभावादिति चेत्। उच्यते। तेषां गणीयानां आनन्त्यं क्रमेण च मोक्षमङ्गीकृत्य मितकाल एव मुक्त्यङ्गीकारात्। ईशशक्त्योपपत्तेः। विस्तृतं चैतदस्मदाचार्यैरन्यत्रेति नेहोच्यते।। १९ ।।

**जम्बु**— ननु युगपदेव सर्वेषां साधनपूर्तौ युगपदेव मुक्त्यादिप्राप्तौ जीवानां परिसमाप्त्या पुनः सृष्ट्यादिप्रतिपादक 'यथा पूर्वमकल्पयत्' इति श्रुतिविरोध इत्यत आह— **पूर्तिश्चेति** ।। नियमात्। 'अस्मिन्नेव काले एनं जीवं मुक्तं

---

१. गी.ता. ३-२७।

करिष्यामि' इति ईश्वरसङ्कल्पान्निमित्तात्। सर्वेषां जीवानां पूर्तिः साधनसम्पूर्तिर्न भवितैव यस्मात्तस्माज्जीवसङ्घाः जीवानां सङ्घाः राशयः समाप्तिं न यान्त्यपि अतः सृष्ट्यादिसम्भावनतत्प्रतिपादकवाक्यं प्रमाणमिति भावः। तदुक्तम्—

[1]'उत्तमा मुक्तियोग्यास्तु सृतियोग्यास्तु मध्यमाः ।
अपरेऽन्धंतमोयोग्याः प्राप्तिस्साधनपूर्तितः ।।
पूर्त्यभावेन सर्वेषां त्वनादिस्संसृतिर्मता ।
नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया ।
अतोऽनुवर्तते नित्यं संसारोऽयमनादिमान् ।।' इति ।

यद्वा नित्यकाले संसारोऽनुवर्ततामितीश्वरेच्छायाः नियमात् । तदुक्तम् । 'नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया' इति गीतातात्पर्यनिर्णये । नन्वेकब्रह्मकल्पेषूक्तक्रमेणानेकजीवकालक्रमेणापि सर्वजीवसमाप्तिसम्भवात् जगत्प्रवाहविच्छेदः स्यादित्यत आह— **आनन्त्यमेवेति** ।। यतः कारणात्तेषां ब्रह्मादिपदयोग्यानां गणशः गणानामामनन्त्यमस्त्येव । हिशब्देन

'यथैव कालनियमः सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति ।।' इति सूचयति ।
'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिता ।।' इत्यादिप्रमाणप्रसिद्धिं दर्शयति ।

ततः कारणात् । तेषां जीवानाम् । इत्थमेव सकलकालगता सकलाश्च ते कालाश्च सकलकालास्तेषु भूतभविष्यद्वर्तमानकालेषु विद्यमाना प्रवृत्तिर्युक्तेत्यर्थः। नन्वेकस्मिन्कल्पे एकैकस्य मुक्त्यङ्गीकारे ब्रह्मादिगणानामनन्तत्वेन तेषां नित्यसंसारित्वं स्यात् । अपर्यवसितानन्तकल्पेष्वपि मुक्त्यभावादिति चेत् तेषां क्रमश आनन्त्यक्रमेण च मोक्षमङ्गीकृत्य नियतकाल एव मुक्त्यङ्गीकारात् ईशशक्त्योपपत्तिरिति ***श्रीनिवासभट्टीये*** ।। १९ ।।

**भारतश्री**— एतेषां जीवानां मोक्षेण वा तमसा वा पूर्तिर्नैव भविता । तत्र हेतुमाह— **आनन्त्यमेवेति** ।। १९ ।।

**एतैः सुरादिभिरतिप्रतिभादियुक्तै-**
**र्युक्तैस्सहैव सततं प्रविचिन्तयद्भिः**
**पूर्तेरचिन्त्यमहिमः परमः परात्मा**
**नारायणोऽस्य गुणविस्तृतिरन्यगा क्व ।। २० ।।**

**व्यास**— नैतादृशः क्वचेति भगवतः समो नेत्युक्तं ब्रह्मादिष्वेकैकस्य समत्वाभावेऽपि मिलितानां तत्स्यादित्यतो निमित्तकथनपूर्वं नेत्याह— **एतैरिति** ।। युक्तैरुद्युक्तैः एतैः अचिन्त्यमहिम इति सम्बन्धः। तत्र हेतुः— **पूर्तेरिति** ।। तस्मात्कथमस्य गुणपूर्तिः अन्यगा क्व । न भवति ।। २० ।।

---

१. गी.ता. ३–२७ ।

**वादि**— निर्दोषपूर्णगुणविग्रह इत्यादिना प्राक् प्रस्तावितं भगवतः सर्वोत्तमत्वं 'आभासकोऽस्य पवन' इत्यादिना मध्ये प्रसाध्य इदानीमुपसंहरति— **एतैः सुरादिभिरित्यादिना नित्यस्वतन्त्रवपुषः परमात्परस्येत्यन्तेन ग्रन्थेन** ।। प्रतिभादियुक्तैः सकलवेदशास्त्रादिपर्यालोचनायुक्तैः। युक्तैः पुञ्जीभूतैः। पूर्तेरपरिमितैः गुणगणैः पूर्णत्वात्। **परमेण च** परमेणापि जीवगणादुत्तमेनापि केनचित् ब्रह्मादिनेत्यर्थः। मुक्तेन च मुक्तेनापीत्यर्थः ।। २०–२१ ।।

**अभिनव**— तत्रैव 'एतैस्सुरादिभिः' इति श्लोके 'युक्तैः' इत्यस्य युक्तिभिरित्यर्थः । एतेन 'युक्तैः' इत्येतद् व्यर्थमिति दूषणं परास्तम् । युक्तशब्दस्य भावे क्तप्रत्ययान्तत्वे युक्तिवाचित्वमित्यङ्गीकृत्य युक्तिभिः प्रविचिन्तयद्भिरित्यर्थलाभार्थं युक्तैरित्युक्तमित्यङ्गीकारात् ।। २० ।।

**सङ्क**— विष्णोः सर्वोत्तमत्वसर्वततत्वसर्वेश्वरत्वादिलक्षणवैशिष्ट्यं तत्सदृशस्य तदुत्तमस्य वाभावश्च रमादीनां तदधीनत्वं च यदुक्तं 'नैतादृशः क्व च बभूव' इत्यादिना तदेवोपसंहारमुखेन प्रकटयति— **एतैस्सुरादिभिरित्यादि श्लोकद्वयेन** ।। एतैः सुरादिभिः परमः परमात्मा नारायणो अचिन्त्यमहिमो यस्मात्तस्मात् अस्य नारायणस्य गुणविस्तृतिः गुणपूर्तिः अन्यगा क्व? न गतेत्यर्थः। कुतोऽचिन्त्यमहिमो विष्णुरित्यत आह— **पूर्तेरिति** ।। देशतः कालतः गुणतः पूर्तेः युक्तमचिन्त्यमहिमत्वं विष्णोरित्यर्थः ।। २० ।।

**वरद**— एवं तारतम्ययुक्तानामशेषजीवानां स्वस्वोत्तमद्वारा भगवत्प्रतिबिम्बत्वेन तदधीनत्वात् भगवत एव सर्वोत्तमत्वादिकं युक्तमिति उपपाद्योपसंहरति श्लोकद्वयेन— **एतैरित्यादिना** ।। एतैरतिप्रतिभादिगुणयुक्तैः युक्तैः उद्युक्तैः। सहैव मिलितैः। सततं प्रविचिन्तयद्भिः विचारयद्भिः। सुरादिभिः ब्रह्मादिदेवैः। अचिन्त्यमहिमः अचिन्त्यो महिमा यस्य स तथोक्तः। अत एव परमः उत्कृष्टः। परमात्मा परेषां ब्रह्मादीनां आत्मा स्वामी तदादानादिकर्ता वा । एतादृशस्य नारायणस्य गुणविस्तृतिः गुणैः पूर्णता अन्यगा अन्यजीवगता क्व। एतादृशी गुणपूर्णता अन्यगता न भवत्येवेत्यर्थः। अचिन्त्यमहिमत्वे हेतुः— **पूर्तेरिति** ।। पूर्णत्वादित्यर्थः ।। २० ।।

**जना**— विष्णोः सर्वोत्तमत्वसर्वज्ञत्वसर्वेश्वरत्वादिलक्षणवैशिष्ट्यं तत्सदृशस्याधिकस्य चाभावं रमादीनां तदधीनत्वं 'नैतादृशः क्वच बभूव' इत्यादिनोक्तमुपसंहारन्यायेनोपपादयति— **एतैः सुरादिभिरिति श्लोकद्वयेन** ।। परमः श्रेष्ठः उत्तमज्ञानवान् वा । परात्मा स्वामी उत्तमस्वामीति वा । नारायणोऽतिप्रतिभादियुक्तैः युक्तैः उद्युक्तैः सहैव मिलितैः सततं प्रविचिन्तयद्भिः। एतैः प्रसिद्धैः सुरादिभिरचिन्त्यमहिमः यस्मात्तस्मादस्य नारायणस्य गुणविस्तृतिरन्यगा क्व । अचिन्त्यमहिमत्त्वे हेतुः— **पूर्तेरिति** ।। देशतः कालतः गुणतश्च पूर्णत्वात् ।। २० ।।

**ताम्र**— ननु यदुक्तं 'नैतादृशः क्व च बभूव' इति भगवतः समाभाव इति तदयुक्तम् । एकैकस्य साम्याभावेऽपि मिलितानां तदुपपत्तेरिति चोद्यं कैमुत्येन परिहरन् तारतम्यविशिष्टानन्तजीवनिरूपणं यथोत्कर्षज्ञानोपयोगि भवति तथा निरूपयति— **एतैः** ।। पूर्वोक्तैरिति । आदिशब्देन तृणान्ता योग्या गृह्यन्ते । यज्ज्ञानं वेदादिनिरपेक्षं ऊहापरनामकं प्रत्युत वेद एव तदनुसरेत तस्य **प्रतिभेति** नाम । आदिपदेन तदितरज्ञानभक्त्यादिकमुच्यते । युक्तैरुद्युक्तैः। सहैव प्रविचिन्तयद्भिः तत्र तत्रोक्तगुणैः सह तदुपसंहृत्य चिन्तयद्भिरित्यर्थः। यद्वा एतैः पूर्वोक्तैः सुरादिभिर्देवमानवदानवैः अतिप्रतिभादियुक्तैः अनन्तप्रतिभाज्ञानोपयुक्तानन्तदेहेन्द्रियादिभिर्युक्तैः सहैव युक्तैर्मिलितैरेकमनस्कैः सततं प्रकर्षेण लक्ष्म्यादितोऽप्यतिशयेनानन्तप्रकारैः चिन्तयद्भिः पूर्तेरमितगुणगणैः पूर्णत्वादचिन्त्यमहिमः। न च पूर्तिरसिद्धेत्याह— **परम इति** ।। उत्तमः परात्मा परेषां लक्ष्म्यादीनां अन्तर्नियामकः।

करिष्यामि' इति ईश्वरसङ्कल्पान्निमित्तात्। सर्वेषां जीवानां पूर्तिः साधनसम्पूर्तिर्न भवितैव यस्मात्तस्माज्जीवसङ्घाः जीवानां सङ्घाः राशयः समाप्तिं न यान्त्यपि अतः सृष्ट्यादिसम्भावनतत्प्रतिपादकवाक्यं प्रमाणमिति भावः। तदुक्तम्—

'[1]'उत्तमा मुक्तियोग्यास्तु सृतियोग्यास्तु मध्यमाः ।
अपरेऽन्धंतमोयोग्याः प्राप्तिस्साधनपूर्तितः ।।
पूर्त्यभावेन सर्वेषां त्वनादिस्संसृतिर्मता ।
नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया ।
अतोऽनुवर्तते नित्यं संसारोऽयमनादिमान् ।।' इति ।

यद्वा नित्यकाले संसारोऽनुवर्ततामितीश्वरेच्छायाः नियमात् । तदुक्तम् । 'नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया' इति गीतातात्पर्यनिर्णये । नन्वेकब्रह्मकल्पेषूक्तक्रमेणानेकजीवकालक्रमेणापि सर्वजीवसमाप्तिसम्भवात् जगत्प्रवाहविच्छेदः स्यादित्यत आह— **आनन्त्यमेवेति** ।। यतः कारणात्तेषां ब्रह्मादिपदयोग्यानां गणशः गणानामानन्त्यमस्त्येव । हिशब्देन

'यथैव कालनियमः सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति ।।' इति सूचयति ।
'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिता ।।' इत्यादिप्रमाणप्रसिद्धिं दर्शयति ।

ततः कारणात् । तेषां जीवानाम् । इत्थमेव सकलकालगता सकलाश्च ते कालाश्च सकलकालास्तेषु भूतभविष्यद्वर्तमानकालेषु विद्यमाना प्रवृत्तिर्युक्तेत्यर्थः। नन्वेकस्मिन्कल्पे एकैकस्य मुक्त्यङ्गीकारे ब्रह्मादिगणानामनन्तत्वेन तेषां नित्यसंसारित्वं स्यात् । अपर्यवसितानन्तकल्पेष्वपि मुक्त्यभावादिति चेत् तेषां क्रमश आनन्त्यक्रमेण च मोक्षमङ्गीकृत्य नियतकाल एव मुक्त्यङ्गीकारात् ईशशक्त्योपपत्तिरिति ***श्रीनिवासभट्टीये*** ।। १९ ।।

**भारतश्री**— एतेषां जीवानां मोक्षेण वा तमसा वा पूर्तिर्नैव भविता । तत्र हेतुमाह— **आनन्त्यमेवेति** ।। १९ ।।

**एतैः सुरादिभिरतिप्रतिभादियुक्तै-**
**र्युक्तैस्सहैव सततं प्रविचिन्तयद्भिः**
**पूर्तेरचिन्त्यमहिमः परमः परात्मा**
**नारायणोऽस्य गुणविस्तृतिरन्यगा क्व ।। २० ।।**

**व्यास**— नैतादृशः क्वचेति भगवतः समो नेत्युक्तं ब्रह्मादिष्वेकैकस्य समत्वाभावेऽपि मिलितानां तत्स्यादित्यतो निमित्तकथनपूर्वं नेत्याह— **एतैरिति** ।। युक्तैरुद्युक्तैः एतैः अचिन्त्यमहिम इति सम्बन्धः। तत्र हेतुः— **पूर्तेरिति** ।। तस्मात्कथमस्य गुणपूर्तिः अन्यगा क्व । न भवति ।। २० ।।

१. गी.ता. ३-२७ ।

**वादि—** निर्दोषपूर्णगुणविग्रह इत्यादिना प्राक् प्रस्तावितं भगवतः सर्वोत्तमत्वं 'आभासकोऽस्य पवन' इत्यादिना मध्ये प्रसाध्य इदानीमुपसंहरति— **एतैः सुरादिभिरित्यादिना नित्यस्वतन्त्रवपुषः परमात्परस्येत्यन्तेन ग्रन्थेन** ।। प्रतिभादियुक्तैः सकलवेदशास्त्रादिपर्यालोचनायुक्तैः। युक्तैः पुञ्जीभूतैः। पूर्तेरपरिमितैः गुणगणैः पूर्णत्वात्। **परमेण च** परमेणापि जीवगणादुत्तमेनापि केनचित् ब्रह्मादिनेत्यर्थः। मुक्तेन च मुक्तेनापीत्यर्थः ।। २०–२१ ।।

**अभिनव—** तत्रैव 'एतैस्सुरादिभिः' इति श्लोके 'युक्तैः' इत्यस्य युक्तिभिरित्यर्थः । एतेन 'युक्तैः' इत्येतद् व्यर्थमिति दूषणं परास्तम् । युक्तशब्दस्य भावे क्तप्रत्ययान्तत्वे युक्तिवाचित्वमित्यङ्गीकृत्य युक्तिभिः प्रविचिन्तयद्भिरित्यर्थलाभार्थं युक्तैरित्युक्तमित्यङ्गीकारात् ।। २० ।।

**सङ्क—** विष्णोः सर्वोत्तमत्वसर्वतततत्वसर्वेश्वरत्वादिलक्षणवैशिष्ट्यं तत्सदृशस्य तदुत्तमस्य वाभावश्च रमादीनां तदधीनत्वं च यदुक्तं 'नैतादृशः क्व च बभूव' इत्यादिना तदेवोपसंहारमुखेन प्रकटयति— **एतैस्सुरादिभिरित्यादि श्लोकद्वयेन** ।। एतैः सुरादिभिः परमः परमात्मा नारायणो अचिन्त्यमहिमो यस्मात्तस्मात् अस्य नारायणस्य गुणविस्तृतिः गुणपूर्तिः अन्यगा क्व? न गतेत्यर्थः। कुतोऽचिन्त्यमहिमो विष्णुरित्यत आह— **पूर्तेरिति** ।। देशतः कालतः गुणतः पूर्तेः युक्तमचिन्त्यमहिमत्वं विष्णोरित्यर्थः ।। २० ।।

**वरद—** एवं तारतम्ययुक्तानामशेषजीवानां स्वस्वोत्तमद्वारा भगवत्प्रतिबिम्बत्वेन तदधीनत्वात् भगवत एव सर्वोत्तमत्वादिकं युक्तमिति उपपाद्योपसंहरति श्लोकद्वयेन— **एतैरित्यादिना** ।। एतैरतिप्रतिभादिगुणयुक्तैः युक्तैः उद्युक्तैः। सहैव मिलितैः। सततं प्रविचिन्तयद्भिः विचारयद्भिः। सुरादिभिः ब्रह्मादिदेवैः। अचिन्त्यमहिमः अचिन्त्यो महिमा यस्य स तथोक्तः। अत एव परमः उत्कृष्टः। परमात्मा परेषां ब्रह्मादीनां आत्मा स्वामी तदादानादिकर्ता वा । एतादृशस्य नारायणस्य गुणविस्तृतिः गुणैः पूर्णता अन्यगा अन्यजीवगता क्व। एतादृशी गुणपूर्णता अन्यगता न भवत्येवेत्यर्थः। अचिन्त्यमहिमत्वे हेतुः— **पूर्तेरिति** ।। पूर्णत्वादित्यर्थः ।। २० ।।

**जना—** विष्णोः सर्वोत्तमत्वसर्वज्ञत्वसर्वेश्वरत्वादिलक्षणवैशिष्ट्यं तत्सदृशस्याधिकस्य चाभावं रमादीनां तदधीनत्वं 'नैतादृशः क्वच बभूव' इत्यादिनोक्तमुपसंहारन्यायेनोपपादयति— **एतैः सुरादिभिरिति श्लोकद्वयेन** ।। परमः श्रेष्ठः उत्तमज्ञानवान् वा । परात्मा स्वामी उत्तमस्वामीति वा । नारायणोऽतिप्रतिभादियुक्तैः युक्तैः उद्युक्तैः सहैव मिलितैः सततं प्रविचिन्तयद्भिः। एतैः प्रसिद्धैः सुरादिभिरचिन्त्यमहिमः यस्मात्तस्मादस्य नारायणस्य गुणविस्तृतिरन्यगा क्व । अचिन्त्यमहिमत्त्वे हेतुः— **पूर्तेरिति** ।। देशतः कालतः गुणतश्च पूर्णत्वात् ।। २० ।।

**ताम्र—** ननु यदुक्तं 'नैतादृशः क्व च बभूव' इति भगवतः समाभाव इति तदयुक्तम् । एकैकस्य साम्याभावेऽपि मिलितानां तदुपपत्तेरिति चोद्यं कैमुत्येन परिहरन् तारतम्यविशिष्टानन्तजीवनिरूपणं यथोत्कर्षज्ञानोपयोगि भवति तथा निरूपयति— **एतैः** ।। पूर्वोक्तैरिति । आदिशब्देन तृणान्ता योग्या गृह्यन्ते । यज्ज्ञानं वेदादिनिरपेक्षं ऊहापरनामकं प्रत्युत वेद एव तदनुसरेत तस्य **प्रतिभेति** नाम । आदिपदेन तदितरज्ञानभक्त्यादिकमुच्यते । युक्तैरुद्युक्तैः। सहैव प्रविचिन्तयद्भिः तत्र तत्रोक्तगुणैः सह तदुपसंहृत्य चिन्तयद्भिरित्यर्थः। यद्वा एतैः पूर्वोक्तैः सुरादिभिर्देवमानवदानवैः अतिप्रतिभादियुक्तैः अनन्तप्रतिभाज्ञानोपयुक्तानन्तदेहेन्द्रियादिभिर्युक्तैः सहैव युक्तैर्मिलितैरेकमनस्कैः सततं प्रकर्षेण लक्ष्म्यादितोऽप्यतिशयेनानन्तप्रकारैः चिन्तयद्भिः पूर्तेरमितगुणगणैः पूर्णत्वादचिन्त्यमहिमः। न च पूर्तिरसिद्धेत्याह— **परम इति** ।। उत्तमः परात्मा परेषां लक्ष्म्यादीनां अन्तर्नियामकः।

न च स्वयं गुणरहितस्य इतरसमस्तनियामकत्वमिति भावः। पूर्तौ युक्तिमुक्त्वा नारायणशब्दश्च प्रमाणयति— **नारायण इति** ।। इयं च 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता' इतिवदभूतोपमेति न विरोधः ।। २० ।।

**जम्बु**— ननु 'नैतादृशः क्वच बभूव' इति भगवतः साम्याभाव इति तदयुक्तम्। एकस्य साम्याभावेऽपि मिलितानां तदुपपत्तेरिति चोद्यं कैमुत्येन परिहरन् तारतम्यविशिष्टानन्तजीवनिरूपणं यथोत्कृष्टज्ञानोपयोगि तथा निरूपयति— **एतैरिति श्लोकद्वयेन** ।। अतिप्रतिभादियुक्तं यज्ज्ञानं वेदादिनिरपेक्षं ऊहापरनामकं प्रत्युत वेद एव तदनुसरेत् तस्यातिप्रतिभेति नाम । आदिपदेन तदितरज्ञानभक्त्यादिकमुच्यते । अतिप्रतिभा आदिर्येषां तानि अतिप्रतिभादीनि तैर्युक्तैः सहितैः युक्तैरुद्युक्तैः सततं निरन्तरं प्रविचिन्तयद्भिः तत्र तत्रोक्तगुणैस्सहैव उपसंहृत्य चिन्तयद्भिरित्यर्थः। यद्वा एतैः पूर्वोक्तैः प्रसिद्धैरिति वा । सुरादिभिः देवमानवदानवादिभिः। अतिप्रतिभादियुक्तैः अनन्तप्रतिभाज्ञानतदुपयुक्तानन्तदेहेन्द्रियादिभिर्युक्तैः सहैव युक्तैः मिलितैः एकमनस्कैश्च । सततं प्रकर्षेण लक्ष्म्यादितोऽप्यतिशयेनानन्तप्रकारैः चिन्तयद्भिः पूर्तेः अपरिमितगुणैः पूर्णत्वादचिन्त्यमहिमः न चिन्त्यः अचिन्त्यः महिमा यस्य स तथा । न च पूर्तिरसिद्धेति वाच्यमित्याह— **परम** इति ।। परा उत्तमा मा ज्ञानं यस्य स तथेति वा, परात्मा परेषां लक्ष्म्यादीनामन्तर्नियामकः स्वामीति वा, उत्तमस्वामीति वा, सुरादिभिरचिन्त्यमहिमेति योजना । नारायणो यतस्तस्मादस्य नारायणस्य गुणविस्तृतिः गुणपूर्णता अन्यगता अन्येषु विद्यमाना क्व एतादृशगुणपूर्णता अन्यगता न भवत्येवेत्यर्थः। सुरादिभिः अतिप्रतिभादीत्यादिपदद्वयार्थोऽनुव्याख्यानोक्तोऽनुसन्धेयः। तदुक्तं—

[1]'दैवतैर्मुनिभिस्सिद्धैर्महायोगिभिरेव च ।
नित्यमुक्तैर्महाभागैर्विमोहक्लेशसाध्वसैः।
महोत्साहैर्महाधैर्यैः सत्त्वस्थैर्व्यवसायिभिः।
अतीतानागतज्ञानप्रभवाप्ययवेदिभिः।
शौचस्वाध्यायसन्तोषतपस्सत्यदयान्वितैः ।।'
दुर्ज्ञेयं नरसिंहस्य रूपमिति सम्बन्धः ।। २० ।।

**भारतश्री**— एतैः 'आभासकोऽस्य पवनः' इत्यादिना प्रकृतैः । ल्यब्लोपनिमित्ता पञ्चमी वा । पूर्तिं अन्तं प्राप्य अचिन्त्यमहिमः चिन्त्यमहिमो न भवति[2] ... पूर्तिमप्राप्यैव चिन्त्यमहिमः ।। २० ।।

**साम्यं न चास्य परमेण च केन चाप्यं**
**मुक्तेन च क्वचिदतस्त्वभिधा कुतोऽस्य ।**
**प्राप्येत चेतनगणैः सततास्वतन्त्रैः**
**नित्यस्वतन्त्रवपुषः परमात्परस्य ।। २१ ।।**

**व्यास**— ननु माभूत् तत्संसार्येतादृशः कश्चित्परो मुक्तोऽस्त्वित्यत आह— **साम्यमिति** ।। अस्य हरेः परमेण परमतेन प्रसिद्धचेतनेन मुक्तेनापि युक्तेनापि साम्यं नाप्यं क्वचित् कदाचित् । एतेन मुक्तावभेदवादो गर्भस्रावगत इत्याह— **अत इति** ।। कुतो न प्राप्येतेत्यतः उभयेषां स्वरूपं निरूपयति ।। २१ ।।

---

१. अनु. ३-४-१४५७-१४५९ कामचाराधिकरणम् । २. 'भवति.....पूर्तिमप्राप्यैव' इत्यत्र अन्तरितो भागः त्रुटितः ।

**सङ्क**— ननु विष्णुना चेतनगणानां श्रुत्यादिष्वैक्योक्तेः तल्लक्षणं तेषामपि भवतीति विष्णगुणविस्तृतिः अन्यगा कथं न भवतीत्याशङ्कां कैमुत्यन्यायेन सयुक्तिकं परिहरति— **साम्यमिति** ।। यः कश्चन लोके परमत्वेन प्रसिद्धः तेनापि मुमुक्षुणा मुक्तेनापि वा येन केनापि वा अस्य विष्णोः साम्यं नाप्यम् । यस्मादतः अस्य विष्णोः चेतनगणैः अभिदा कुतः प्राप्येतेति कैमुत्यन्यायः। तत्र युक्तिमाह— **सततास्वतन्त्रैरित्यादिना** ।। सततास्वतन्त्रैः नित्यस्वतन्त्रमूर्तेः परमस्यान्धकारेण सूर्यस्येव कदाचिदैक्यं न सम्भवतीत्यर्थः ।। २१ ।।

**वरद**— ननु विष्णुना चेतनगणानां श्रुत्यादिषु ऐक्योक्तेः तल्लक्षणं तेषामपि भवतीति विष्णुगुणविस्तृतिः अन्यगा कथं न भवति इत्याशङ्कायां कैमुत्यन्यायेन सयुक्तिकं परिहरति— **साम्यमित्यादिना** ।। अस्य भगवतः साम्यं परमेण उत्कृष्टेनापि केनापि नाप्यं न प्राप्यम् । न केवलं संसारिणा किन्तु मुक्तेनापि न प्राप्यमित्यर्थः। अथवा परेण शिवाद्युत्कृष्टेन केन चतुर्मुखेनापि न प्राप्यम् । न केवलं अमुक्तेन तेन किन्तु मुक्तेनापि न प्राप्यमित्यर्थः। अतः कारणादस्य भगवतोऽभिदा अनेन भगवता सहैक्यं चेतनगणैः कुतः प्राप्यत इत्यर्थः। कुत इत्यतो विरुद्धधर्माधिकरणत्वादित्याह— **सततास्वतन्त्रैः नित्यस्वतन्त्रवपुष इति** ।। सततं संसारे मुक्तौ च अस्वतन्त्रैः पराधीनैः नित्यं स्वतन्त्रं वपुः स्वरूपं यस्यासौ तथा । परमाद् अव्याक्तात् परमस्योत्तमस्य भगवतः कथमैक्यं प्राप्तुं शक्यत इत्यर्थः ।। २१ ।।

**जना**— अस्य हरेः साम्यं केनापि मुक्तेन परमेणोत्तमेन ब्रह्मणापि न चाप्यम् । न केवलमविमुक्तेन तेन किन्तु मुक्तेनापि न प्राप्यमित्यर्थः। यतोऽत अस्याभिदाऽभेदः क्वचित्काले चेतनगणैः कुतः प्राप्येत न कुतोऽपि इत्यर्थः । कुतो न प्राप्येतेत्यतः उभयेषां स्वरूपं निरूपयति विशेषणैः। सततं नित्यमस्वतन्त्रैः नित्यस्वतन्त्रवपुषः परमादव्यक्तात् परस्येति । तेन विरुद्धधर्मयोः नाभेद इति भावः ।। २१ ।।

**ताम्र**— नन्वस्तु सुरादीनां भगवत्साम्यमप्राप्यं सुरोत्तमेन ब्रह्मणा प्राप्यं भवत्वित्यत आह— **साम्यमिति** ।। परमेण चोत्तमेनापि । केन च ब्रह्मणापि । मा भूत्संसारी तादृशो मुक्तस्तु भविष्यतीत्यतो मुक्तेन चेत्युक्तम् । ननु जीवब्रह्मणोरेकत्वेन जीवस्यापि तल्लक्षणलक्षितत्वात् 'गुणविस्तृतिरन्यगा क्व' इति कथमुक्तमित्यतोऽभेदवादः कैमुत्येन निरस्त इत्याह— **अत इति** ।। अतः साम्यस्यैवाभावादस्य जीवस्य कुतः प्रमाणादभिदा प्राप्येतेत्यर्थः। प्रत्युत विरुद्धधर्मत्वात् 'अहं ब्रह्मास्मि' इत्यादेर्योग्यताविरहात् नाभेद इत्याह— **सततेति** ।। स्वातन्त्र्यं मुक्तिरिति केचित् । तथा च मुक्तौ स्वातन्त्र्यादैक्यमित्यत उक्तम्— **सततेति** ।। परमात्परस्येत्यस्य प्रतियोगित्वेनात्यल्पकैरिति ग्राह्यम् ।। २१ ।।

**जम्बु**— नन्वस्तु सुरादीनां भगवत्साम्यमप्राप्यं सुरोत्तमेन ब्रह्मणा प्राप्यं भवत्वित्यत आह— **साम्यमिति** ।। अस्य हरेस्साम्यं परमेण च उत्तमेनापि केन च ब्रह्मणापि न चाप्यं नैव प्राप्यम् । मा भूत्संसारी तादृशः मुक्तस्तु भविष्यतीत्यतो— **मुक्तेन चेत्युक्तम्** ।। मुक्तेन ब्रह्मणापि क्वचिद्देशे वा न चाप्यम् । ननु जीवब्रह्मणोरभेदेन जीवस्यापि तल्लक्षणलक्षितत्वात् 'गुणविस्तृतिरन्यगा क्व' इति कथमित्यतः कैमुत्येन निरस्त इत्याह— **अत इति** ।। अतः साम्यस्यैवाभावात् अस्य जीवस्य कुतः प्रमाणादभिदा अभेदः प्राप्यत इत्यर्थः। अथवास्य भगवतः अभिधा अभेदः चेतनगणैः कुतः प्राप्येत न कुतोऽपीत्यर्थः। प्रत्युत विरुद्धधर्मत्वात् 'अहं ब्रह्मास्मि'

इत्यादियोग्यताविरहान्नाभेद इत्याह— **सततेति** ।। स्वातन्त्र्यं मुक्तिरिति केचित् । तथा च मुक्तौ स्वातन्त्र्यादैक्यमित्यत उक्तम्— **सततेति** ।। सततं नित्यं संसारे मुक्तौ च अस्वतन्त्रैः नित्यस्वतन्त्रवपुषः नित्यस्वतन्त्रं वपुः स्वरूपं यस्य स तथा तस्य । परमादव्यक्तात् परमस्योत्तमस्य परमात्परस्येत्येतस्य प्रतियोगित्वेनात्यल्पकैरिति ग्राह्यम्। तेन विरुद्धधर्मयोर्नाभेद इति भावः ।। २१ ।।

**भारतश्री**— अभिदा अभेदः। तत्र हेतुमाह— **सततास्वतन्त्रैरिति** ।। २१ ।।

**अर्थोऽयमेव निखिलैरपि वेदवाक्यैः**
**रामायणैः सहितभारतपञ्चरात्रैः।**
**अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रै-**
**र्निर्णीयते सहृदयं हरिणा सदैव ।। २२ ।।**

**व्यास**— एवं सदागमप्रतिपाद्यं निरूप्य अस्य सदागमप्रतिपाद्यत्वं कुत इत्यतः तानि वाक्यान्युदाहृत्य प्रसाधयितुं प्रतिजानीते— **अर्थ इति** ।। उक्तो यो भगवतः स्रष्टृत्वादिः अयमन्यैः शास्त्रवचनैः विष्णुपुराणादिवचनैः तत्त्वसूत्रैः तत्त्वनिर्णायकैः ब्रह्मसूत्रैः। न च निर्णेतुः तेषां वा तत्र तात्पर्याभावे उक्तोऽर्थः सिद्ध्येदित्यत उक्तम्— **सहृदयम्** ।। साभिप्रायमिति ।। २२ ।।

**वादि**— इदानीं प्रमाणगणानाह— **अर्थोऽयमित्यादिना** ।। शास्त्रवचनैः सर्वोत्तमत्वानुकूलपुराणस्मृत्यादि-शास्त्रवचनैः। सहतत्त्वसूत्रैः ब्रह्मसूत्रसहितैः सहृदयं साभिप्रायम् ।। २२ ।।

**अभिनव**— तत्रैव 'अर्थोऽयमेव' इति श्लोके 'सहितभारतपञ्चरात्रैः' इत्यस्य मिलितभारतपञ्चरात्रैरित्यर्थः। पूर्णभारतपञ्चरात्रैरिति भावः । एतेन भारतपञ्चरात्रैः सहितैरिति वक्तव्यम्, सहितभारतपञ्चरात्रैरिति कथनमनुपपन्नमिति दूषणं पराकृतम् । भारतपञ्चरात्रैरित्येवोक्ते भारतपञ्चरात्रैकदेशप्रतिपाद्यत्वं विवक्षितमिति शङ्का स्यात् । तन्निरासार्थं सम्पूर्णभारतपञ्चरात्रप्रतिपाद्यत्वं वक्तुं सहितेत्युक्तमित्यभ्युपगमात् । भारतपञ्चरात्रैरिति बहुवचनं अतीता-नागतभारतपञ्चरात्राभिप्रायेण । एवं सर्वत्रापि द्रष्टव्यम् ।। २२ ।।

**सङ्क**— 'नैतादृशः' इत्यादिना उक्तार्थे, 'नारायणाय' इत्यादिना उक्तार्थे प्रमाणाभावात् उपेक्षणीयोऽयमर्थः इत्यत आह— **अर्थोऽयमेवेत्यादिना** ।। 'अन्यैश्च शास्त्रवचनैः' इति वैष्णवपुराणादिशास्त्रवचनैः सहृदयं सतात्पर्यमित्यर्थः ।। २२ ।।

**वरद**— 'पञ्चात्मकः स भगवान्' इत्यादिनोपवर्णितं भगवन्माहात्म्यं न स्वकपोलकल्पितमिति भावेनाह— **अर्थोऽयमिति** ।। अयं पूर्वोक्तार्थ एव निखिलैर्वेदवाक्यैः तथा रामायणैः मूलरामायणवाक्यैः सहितभारतपञ्चरात्रैः रामायणसहितैः भारतपञ्चरात्रवाक्यैरित्यर्थः। नित्यसापेक्षितत्वात् सहितशब्दस्य रामायणपदेन साकाङ्क्षस्यापि भारतेत्यनेन समासः। अन्यैश्च शास्त्रवचनैः वैष्णवपुराणादिरूपशास्त्रगतवाक्यैश्च सहृदयं सतात्पर्यं हरिणा श्रीवेदव्यासेन सदैव निर्णीयत इत्यर्थः। अतो न स्वकपोलकल्पितत्वशङ्का कार्येति भावः ।। २२ ।।

**जना**— एवं सदागमार्थमभिधाय अस्य सदागमप्रतिपाद्यत्वं कुत इत्यतः तद्गतानि वाक्यानि उदाहृत्य साधयितुं प्रतिजानीते— **अर्थोऽयमिति** ।। अयमर्थः निर्दोषपूर्णगुणविग्रहत्वादिरूपः। भारतपञ्चरात्राभ्यां सहितैः निखिलैः वेदवाक्यैर्निखिलैः रामायणैः रामायणगतवाक्यैः। यद्वा प्रकारान्तरेण बहूनां रामायणानां सत्त्वाद्बहुवचनम् । अन्यैश्च शास्त्रवचनैर्पुराणवचनैः तत्त्वसूत्रैः तत्त्वनिर्णायकब्रह्मसूत्रैः सह सहैवैकार्थप्रतिपादकत्वेन मिलितैः। ननु निर्णेतुस्तेषां वा तत्र तात्पर्याभावे उक्तार्थो न सिद्ध्येदित्यत उक्तम्— **सहृदयम्** ।। साभिप्रायमिति ।। २२ ।।

**ताम्र**— एवं सदागमप्रतिपाद्यत्वं निरूप्य अस्य सदागमप्रतिपाद्यत्वं कुत इत्यतस्तद्गतानि वाक्यान्युदाहृत्य प्रसाधयितुं प्रतिजानीते— **अर्थ इति** ।। भारतपञ्चरात्रसहितै रामायणैरिति बहुवचनं अतीतानेकरामायणविवक्षया प्रकरणभेदविवक्षया वा । सहृदयं सतात्पर्यम् । सदैव निर्णीयते प्रतिकल्पं निर्णीयते ।। २२ ।।

**जम्बु**— एवं सदागमार्थमभिधाय अस्य सदागमप्रतिपाद्यत्वं कुत इत्यतस्तद्गतानि वाक्यान्युद्धृत्य प्रसाधयितुं प्रतिजानीते— **अर्थोऽयमिति** ।। अयं निर्दोषपूर्णगुणविग्रह इत्याद्युक्तोऽर्थ एव निखिलैस्समस्तैः वेदवाक्यैः रामायणैः मूलरामायणवाक्यैः सहितभारतपञ्चरात्रैः रामायणसहितैः भारतपञ्चरात्रवाक्यैरित्यर्थः। नित्यसापेक्षितत्वात् सहितशब्दस्य रामायणपदेन साकाङ्क्षस्यापि भारतेत्यनेन समासः इति ***वरदराजीये*** । भारतपञ्चरात्राभ्यां सहितैर्वेदवाक्यैरिति ***जनार्दनभट्टीये*** । निखिलैः रामायणैः रामायणगतवाक्यैः। अतीतानेकरामायणविवक्षया वा बहूनां रामायणानां सत्वाद्वा बहुवचनम् । अन्यैश्च शास्त्रवचनैः वैष्णवपुराणादिरूपशास्त्रगतवाक्यैश्च तत्त्वसूत्रैः तत्त्वनिर्णायकैर्ब्रह्मसूत्रैः सह सहैवार्थप्रतिपादकत्वेन मिलितैः । ननु निर्णेतुस्तेषां चात्र तात्पर्याभावे उक्तोऽर्थो न सिद्ध्येदित्यत उक्तं **सहृदयं** साभिप्रायं हरिणा वेदव्यासेन सदैवेति पाठान्तरं निर्णीयते ।। २२ ।।

**भारतश्री**— यदर्थमुपोद्घातः उक्तः तदाह— **अर्थ इति** ।। यद्वा उक्तार्थे प्रमाणानि दर्शयितुमाह— **तत्त्वसूत्रैः** ब्रह्मसूत्रैः । हरिणा व्यासादिरूपेण ।। २२ ।।

**'नारायणस्य न समः' 'पुरुषोत्तमोऽहं**
**जीवाक्षरे [1]ह्यधिगतोऽस्मि' 'ततोऽन्यदार्तम्' ।**
**'मुक्तोपसृप्य' 'इह नास्ति कुतश्च कश्चित्'**
**'नानेव' 'धर्मपृथगात्मदृगेत्यधो हि' ।। २३ ।।**

**व्यास**— वाक्यान्युदाहरति— **नारायणस्येत्यदिना** ।। 'नारायणस्य न सम' इति [2]'नास्ति नारायणसमं न भूतं न भविष्यति' इत्युपादत्ते तन्नैतादृश क्वचेत्यत्र मानम् । पुरुषोत्तमोऽहमिति [3]'यस्मात् क्षरम्' इत्यादि तत् परतमः परमादित्यत्र, [4]'ततोऽन्यदार्तम्' इति 'कुतश्च कश्चित्' इति [5]'नेह नानास्ति किञ्चन' इति एतत् एक इत्यत्र, 'नानेव' इति [6]'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति, धर्मपृथगात्मदृक् धर्मेभ्यः पृथगात्मानं पश्यन् अध एतीति,

---

१. 'ह्यतिगतोऽस्मि' इति पाठान्तरम् । २. म.भा. आदिपर्व १-३६ । ३. भ.गी. १५-१८ । ४. बृ.उ. ५-२३, अन्तर्यामिब्राह्मणे कहोलब्राह्मणे च । ५. का.उ. २-१-११, बृ.उ. ६-१९ शारीरब्राह्मणे । ६. का.उ. २-१-१० ।

[1]'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति ।।'

इति वाक्यद्वयं, सर्वत्र चेत्यत्र । मृत्योर्मृत्युं अतिशयितं संसारम् । पर्वते दुर्गे उच्चस्थले । ताननुभवतः पृथक्त्वेन दृष्टान् गुणान् अन्वेव गुणभेददर्शनानन्तरमेव अधो नरकं विधावतीत्यर्थः ।। २३ ।।

**वादि**— अधुनोक्तप्रमाणगणस्थानि कानिचिद् वचनानि अर्थतः सङ्गृह्णाति— **नारायणस्य न सम इत्यादिना**।। अनेन

'नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ।।'

इति भारतवाक्यं अर्थतः सङ्गृह्णाति । इदं च 'नैतादृशः क्व च बभूव' इत्यत्र प्रमाणम् । 'पुरुषोत्तमोऽहं जीवाक्षरे ह्यधिगतोऽस्मि' इत्यस्य हि यस्मात् जीवाक्षरे जीवमहालक्ष्म्यौ अधि अधिकतया गतः प्राप्तः उत्तमत्वमविहायैव तद्धृदिस्थितः अतः पुरुषोत्तमोऽस्मीति योजना । अनेन

[2]'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।'

इति वाक्यं सङ्गृह्णाति । इदं च 'परतमः परमात्' इति, परमात्परस्येति, ईश्वरतम इति स्थानत्रयोक्तसर्वोत्तमत्वे प्रमाणम् । 'ततोऽन्यदार्तम्' इति श्रुतिः। ततोऽन्यत् ततः परमात्मनः सकाशादन्यत् ब्रह्मादिजीवजातं आर्तं आ समन्तादरतिरार्तिः तद्वदार्तम् । परितः पर्यटनेऽपि क्लेशयुक्तमित्यर्थः। इदं च संसृतिगाः समस्ता इत्यत्र प्रमाणम् । संसृतिर्हि ईषत्सुखभरितदुःखाय परितः संसरणम् । मुक्तोपसृप्य इत्यनेन [3]'मुक्तोपसृप्यव्यपदेशात्' इति सूत्रं सङ्गृह्णाति । मुक्तैरुपसृप्यः प्राप्यः। इदं च निजमुक्तिपदप्रदातेत्यत्र प्रमाणम् । 'इह नास्ति कुतश्च कश्चित्' इत्यनेन 'नेह नानास्ति किञ्चन' इति श्रुतिमर्थतःसङ्गृह्णाति । 'नानेव' इत्येकदेशोत्कीर्तनेन 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतिं सङ्गृह्णाति । 'धर्मपृथगात्मदृक्' इत्यनेन

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ।।' इति श्रुतिं सङ्गृह्णाति ।

इह ब्रह्मणि श्रौतनानापदोक्तभेदः कश्चित् कश्चिदप्यवतारभेदो वा, गुणगुणिभेदो वा, अवयवभेदो वा, अन्योन्यं विरोधरूपभेदो वा, वैलक्षण्यरूपभेदो वा, विनाशरूपभेदो वा, व्याप्तत्वात् स्थानभेदो वा नास्तीति सूचकवाक्यस्यार्थः। इदं च किञ्चन काचन नाना नास्तीत्यस्यार्थकथनम् । अत एव श्रुतिःभेद इत्यनुक्त्वा नानाविधभेदं सूचयितुं 'नाना न' इत्याह । एकसत्वेऽप्यपरनाशाख्यकारणान्तरवशात् अभिन्नयोरेव मृद्घटयोर्भेद इव कुतश्चित् कारणादपि भगवति स्वगतभेदो नास्तीत्याह— **कुतश्चेति** ।। मृद्घटादाविव भगवदवतारादिषु एकसत्वेऽप्यपरनाशाख्य-कारणस्यैवाभावादिति भावः। इदमपि किञ्चन काचनेत्यनेनैव सूचितम् । य इह ब्रह्मणि नाना नानात्वं केवलभेदं इव [4]'इवोभये च सादृश्ये' इति वचनात् भेदाभेदं च पश्यति । सः मृत्योः मारकात्संसारादपि मृत्युं मारकं नित्यनरकमाप्नोति । दुर्गे दुर्गम्यपर्वतोत्तुङ्गशृङ्गे वृष्टमुदकं यथा पर्वतेषु पर्वतार्वाग्भागेषु विधावति विशेषेण

१. का.उ. २-१-१५ । २. भ.गी. १५-१८ । ३. ब्र.सू. १-३-२ । ४. अनु. २-३-९४३, पृथगधिकरणम् ।

धावति वेगेनाधः पतति । एवं धर्मान् सर्वोत्तमत्वादिभगवद्धर्मान् पृथक् भगवतः पृथक् मिथः पृथक् च पश्यन् तान्पृथक्त्वेन दृष्टधर्मान् अन्वेव अनन्तरमेव धर्मभेददर्शनानन्तरमेव विधावति विशेषेणाधः पतति । यद्वा तान् धर्मभेदाननुभवन् अन्वेव अनुसृत्यैव विधावति अधः पतति । यथा यथा मिथ्याज्ञानेषु तारतम्यं तथा तथाऽधः पततीत्यर्थः। स्वधर्माणां भेददर्शनात्कुपितः परमात्मैव तमो ददातीति सूचनाय धर्मपृथगात्मदृगिति पर्यवसितार्थ-कथनम् । धर्मेभ्यः पृथगात्मानं पश्यतीति स तथोक्तः। इदं वाक्यत्रयं 'सर्वत्र च स्वगतभेदविवर्जितात्मा' इत्यत्र प्रमाणम् ।। २३ ।।

**सङ्क**— तानि प्रमाणवाक्यानि सूचयति— **नारायणस्य न सम इत्यादिना** ।। नारायणस्य न सम इत्यनेन 'नास्ति नारायणसमं न भूतं न भविष्यति' इति भारतवाक्यं सूचितम् । ततोऽन्यदार्तमित्येतद्वेदवाक्यम् । पुरुषोत्तमोऽहं जीवाक्षरे अधिगतोऽस्मि इत्यनेन 'यस्मात्क्षरमतीतोऽहम्' इत्येतच्च भारतवचनं सूचितम् । मुक्तोपसृत्य इत्यनेन 'मुक्तोपसृप्यव्यपदेशात्' इत्यादि ब्रह्मसूत्रं दर्शितम् । इह नास्तीत्यादिना 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ।

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति ।।' इति श्रुतिवाक्यं सूचितम् ।

आभास एवेत्यादिना [1]'आभास एव च' [2]'पृथगुपदेशात्' [3]'जगद्व्यापारवर्जम्' इत्येतानि ब्रह्मसूत्राणि सूचितानि । मात्रा परोऽसीत्यादिना [4]'परो मात्रया तन्वा वृधान न ते महित्वं अन्वश्नुवन्ति' इत्येषा श्रुतिः सूचिता भवति । नारायणस्य समो नास्तीति शेषः। ब्रह्मादिजीवलक्ष्म्याख्याक्षरोत्तमत्वेन अधिगतोऽस्मि हीति यस्मात्तस्मादहं पुरुषोत्तमः। ततो विष्णोः अन्यत् जगत् आर्तं क्लेशितम् । मुक्तोपसृप्यः समीपप्राप्यो नारायणः। इह पूर्वप्रकृते ब्रह्मणि गुणक्रियादिभिः नाना भेदः कश्चित् कुतश्चित् नास्ति । इव भेदाभेदौ न स्तः। 'इवोभये च सादृश्ये इति शब्दनिर्णये' इति श्रीमदाचार्यैरुक्तत्वात् इवशब्दास्यायमेवार्थः। धर्मादिगुणादिभ्यः पृथक्त्वेनात्मदृक् अध एति हि । विष्णोराभास एव प्रतिबिम्बभूतो जीवः ईशतः पृथक् । मुक्तस्य जगतो विषये जगन्निर्माणविषये शक्तिर्नास्ति । मात्रायाः परिमाणतः परोऽतिक्रान्तोऽसि । हे विष्णो महित्वं महत्वं नाश्नुवते न प्राप्नुवन्ति इति 'नारायणस्य न सम' इत्यादेः 'न तु तेऽश्नुवते महित्वं' इत्यन्तस्य पादन्यूनश्लोकद्वयस्यार्थ उक्तो भवति । 'षाड्गुण्यविग्रह' इति 'सुपूर्णगुणैकदेह' इति 'माहात्म्यदेह' इति 'सृतिमुक्तिगत' इति पृथक्पृथग्वाक्यानि पुराणादिषु स्थितानि द्रष्टव्यानि । एतेषामर्थः प्रसिद्धत्वान्नोच्यते । शिवश्चेत्यादिपुराणवाक्यस्यायमर्थः शिवब्रह्माणौ तस्य विष्णोः गुणानां गतौ अवगतौ प्राप्तौ च ज्ञातुं कथञ्चन नेशौ न समर्थौ । श्रीश्च नेशा तदपरे कुतः ईशाः। न कुतोऽपीति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्यादि श्रुतिं सूचयन् अस्याभिप्रायार्थमाह— **अस्य सुखस्येत्यादिना** ।। विष्णोरस्य सुखस्य प्रतिबिम्बभूतानन्दमात्रं अंशाख्यविप्लुषं शतावरेणाश्नन्ति भुञ्जत इत्यर्थः ।। २३-२५ ।।

**वरद**— ननु यैर्वाक्यैः हरिणाऽयमर्थो निर्णीयते तानि कानीत्यतस्तानि वाक्यानि सङ्गृह्णाति— **नारायणस्येत्यादिना** ।। नारायणस्य न सम इत्यनेन 'नास्ति नारायणसमम्' इत्यादि भारतवाक्यं नैतादृश

१. ब्र.सू. २-३-५० । २. ब्र.सू. २-३-२८ । ३. ब्र.सू. ४-४-१७ । ४. ऋ.सं. ७-९९-१ ।

इत्यादिस्वोक्तार्थनिर्णायकं सूचितम् । 'पुरुषोत्तमोऽहं जीवाक्षरे ह्यधिगतोऽस्मि' इत्यनेन

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति

भारतवाक्यं 'नास्त्युत्तर' इत्यादिस्वोक्तार्थप्रतिपादकं सूचितम् । हि यस्मात् जीवाक्षरे क्षराक्षरे अधिगतोऽस्मि अतोऽहं पुरुषोत्तम इत्यक्षरार्थः। शीघ्रं तद्वाक्यप्रतिभासार्थं उत्तमपुरुषप्रयोगेण अर्थतस्तदुपादानं कृतम् । 'ततोऽन्यदार्तम्' इत्येतदुपनिषद्वाक्यं संसृतिगाः समस्ता इति स्वोक्तार्थप्रतिपादकमुपात्तम् । ततः परमात्मनः अन्यत् विश्वं आर्त्तं क्लेशितमित्यर्थः। मुक्तोपसृप्य इत्यनेन 'मुक्तोपसृप्यव्यपदेशात्' इति ब्रह्मसूत्रं मुक्तेन च क्वचिदत इति स्वोक्तार्थनिर्णायकं अर्थत उपात्तम् । मुक्तैरुपसृप्यः न तु मुक्तानां तदैक्यमिति भावः। इह नास्ति कुतश्च कश्चिदित्यनेन 'एकमेवाद्वितीयं' 'नेह नानास्ति किञ्चन' इति श्रुतिरानन्दमात्रकरपादमुखोदरादिरित्यादिनोक्ते स्वगतभेदवर्जितत्वे प्रमाणं सूचितम् । इह सगुणे नानावतारे ब्रह्मणि कुतश्चन गुणाद्वा रूपाद्वा देहाद्वा कश्चिन्नानेव भेदो भेदाभेदो वा नास्तीत्यर्थः। नानाशब्दो भेदार्थ इवशब्दश्च भेदाभेदरूपोभयार्थः। 'इवोभये च सादृश्य' इति वचनात् । धर्मपृथगात्मदृगेत्यधो हीत्यनेन

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति ।।'

इत्युक्तार्थविपरीतदर्शने बाधकप्रतिपादकवाक्यमुदाहृतम् । धर्मशब्दवाच्येभ्यो गुणरूपादिभ्यः पृथगात्मानं परमात्मानं पश्यतीति तादृशः पुरुषो अधोऽधःपातमेतीत्यर्थः ।। २३ ।।

**जना—** अधुना तद्वाक्यप्रतीकमर्थतः गृह्णाति— **नारायणस्येति** ।। नारायणस्य न सम इति 'नास्ति नारायणसमं न भूतं न भविष्यति ' इति वाक्यं 'नैतादृशः क्वच बभूव' इत्यत्र मानम् । 'पुरुषोत्तमोऽहं' 'जीवाक्षरे ह्यधिगतोऽस्मि' इति ।

'यस्मात्क्षरमतीतोऽहं अक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम ।।' इति वाक्यं सङ्गृह्णाति ।

जीवं ब्रह्मादिजीवजातं अक्षरां लक्ष्मीमधिकत्वेन गत अतीतोऽहं यतः अतः पुरुषोत्तम इत्यर्थः। इदं च 'परात्परतमस्य' इत्यत्र मानम् । 'ततोऽन्यदार्तम्' ततः विष्णोरन्यद् ब्रह्मादि आर्तं क्लेशयुक्तम्। इयं च श्रुतिः 'ब्रह्मेशपूर्वकमिदं न तु कस्य चेशम्' इत्यत्र प्रमाणम् । 'मुक्तोपसृप्यः' मुक्तैरुपसृप्यः प्राप्य इति 'मुक्तोपसृप्यव्यपदेशात्' इति सूत्रं 'साम्यं न चास्य परमेण' इत्यत्र मानम् । तत्प्राप्यत्वोक्तेस्तदभेदो नास्ति इति भावः। 'इह नास्ति कुतश्च कश्चित्' इति नेह नानास्ति किञ्चन' इति श्रुतिर्गृहीता । किञ्चनेत्यनेन कुतश्च कश्चिदिति व्याख्यातम् । इह ब्रह्मणि किञ्चिदवयवावयविनोर्भेदः गुणगुणिनोर्भेदः कुतश्च अवतारादिनिमित्तादपि नास्ति इति । नानेत्यनेन 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'। तथा 'धर्मपृथगात्मदृगेत्यधो हि' इति धर्माणां पृथगात्मत्वं भिन्नत्वं भावप्रधानो निर्देशः। हरेर्धर्माणामेव वा परस्परं भिन्नत्वं दृक् पश्यति इति स अधः नरकमेतीत्यनेन

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ।।' इति श्रुतिं गृह्णाति ।

अस्यार्थः इह ब्रह्मणि नाना भेदं इव भेदाभेदं च यः पश्यति सः मृत्योः संसारात् मृत्युं नरकं पश्यतीति ।

'इवोभये च सादृश्ये' इति वचनात् । यथा दुर्गे पर्वतोच्चप्रदेशे वृष्टमुदकं पर्वतेषु पर्वताधोदेशेषु विधावति गच्छति एवं धर्मान् ज्ञानादीन् पृथक् भगवतः मिथश्च पृथक् भिन्नान्पश्यन् तान् पृथक् दृष्ट्वा अनु एव अनन्तरमेव धर्मभेददर्शनानन्तरमेव विधावति विशेषेणाधः पतति । इदं वाक्यत्रयं 'सर्वत्र च स्वगतभेदविवर्जितात्मा' इत्यत्र मानम् ।। २३ ।।

**ताम्र**— तत्र 'नैतादृशः क्व च बभूव' इत्युक्तार्थे 'नास्ति नारायणसमम्' इति भारतवाक्यं प्रमाणयति— **नारायणस्येति** ।। परतमः परमादीश्वरतम इत्यादौ 'द्वाविमौ पुरुषौ लोके' इत्यारभ्य 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इत्यन्तगीतावाक्यं प्रमाणयति— **पुरुषोत्तम इति** ।। हि यस्मादहं जीवाक्षरे क्षराक्षरे अधिकतया प्राप्तोऽस्मि अतः पुरुषोत्तम इति योजना । ततो भगवतोऽन्यदार्तं दुःखीति बृहदारण्यकोपनिषदं 'संसृतिगाः समस्ताः' इत्यत्रोपादत्ते— **तत इति** ।। 'निजमुक्तिपदप्रदाता' इत्यत्र 'मुक्तेन च' इत्युक्तमुक्तेश्वरभेदे वा 'मुक्तोपसृप्य–व्यपदेशात्' इति सूत्रमुपादत्ते— **मुक्तोपसृप्य इति** ।। इह ब्रह्मणि कुतश्च स्थानभेदादिनिमित्तात् कश्चिदपि नाना अवतारभेदोऽवयवभेदो धर्मभेदो वा नास्तीत्यनेन च 'सर्वत्र स्वगतभेदविवर्जितात्मा' इत्यत्र 'नेह नानास्ति किञ्चन' इति श्रुतिमुपादत्ते । 'विवर्जितात्मा' इत्यत्र वीत्युपसर्गाद्भेदाभेदौ च न स्त इत्युक्तम् । तत्र 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतिमुपादत्ते— **नानेवेति** ।। इहेति वर्तते । भगवति नाना भेदम् । इव तद्विरुद्धमभेदं च दृक् पश्यन्नध एतीत्यर्थः।

'भवेदेकत्र संयोगे इवशब्दो विरुद्धयोः।
धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षितः।।' इति काठकभाष्यवचनात् ।

'इवोभये च सादृश्ये' इति वचनात् । भेदाभेदञ्च पश्यन्नधः एतीत्यर्थः । धर्मेभ्यः पृथक्त्वेन आत्मानं पश्यन्नधः एतीत्युक्तार्थ एव

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानु विधावति ।।' इति श्रुतिमुपादत्ते ।। २३ ।।

**जम्बु**— अधुना उक्तप्रमाणस्थानि कानिचिद्वचनानि अर्थतस्सङ्गृह्णाति— **नारायणस्येत्यादिना** ।। नारायणस्य समः पुरुषो नास्ति 'नास्ति नारायणसमं न भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्' इति भारतवाक्यमर्थतस्सङ्गृह्णाति । इदं च 'नैतादृशः क्वच बभूव' इत्यत्र प्रमाणम् । 'पुरुषोत्तमोऽहं जीवाक्षरे ह्यधिगतोऽस्मि' इत्यस्य हि यस्मात् जीवाक्षरे जीवं ब्रह्मादिजीवजातं अक्षरं लक्ष्मीं अधि अधिकतया गतः प्राप्तः उत्तमत्वमविहायैव हृदि स्थितः अतः पुरुषोत्तमोऽस्मीति योजना । अनेनैव 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' इति गीतावाक्यं सङ्गृह्णाति । इदं च 'परतमः परमात्' इति 'परमात्परस्य' इति 'ईश्वरतम' इति स्थानत्रयोक्तसर्वोत्तमत्वे प्रमाणम् । ततः भगवतः सकाशादन्यत् ब्रह्मादिजीवजातं आर्तं आ समन्तादरतिः आर्तिः तद्वदार्तम् । परितः पर्यटनेऽपि क्लेशयुक्तमित्यर्थः। इदं च 'संसृतिगाः समस्ता' इत्यत्र प्रमाणम् । संसृतिर्हि ईषत्सुखभरितदुःखाय परितः संसरणम् । 'मुक्तोपसृप्य' इत्यनेन 'मुक्तोपसृप्यव्यपदेशात्' इति सूत्रं सङ्गृह्णाति । मुक्तैरुपसृप्यः प्राप्यः। इदं च 'निजमुक्तिपदप्रदाता' इत्यत्र 'साम्यं न चास्य परमेण' इत्यत्र च मानम् । तत्प्राप्यत्वोक्तेस्तदभेदो नास्तीति भावः। 'इह नास्ति कुतश्च कश्चित्' इत्यनेन 'नेहा नानास्ति किञ्चन'

इति श्रुतिमर्थतः सङ्गृह्णाति । किञ्चनेत्यत्र कुतश्च कश्चिदिति द्वेधा व्याख्यानम् । इह ब्रह्मणि किञ्चन किञ्चित् अवयवावयविनोर्भेदः गुणगुणिनोर्भेदः अन्योन्यं विरोधरूपभेदो वा वैलक्षण्यरूपभेदो वा विनाशरूपभेदो वा व्याप्तत्वात्स्थाने भेदो नास्तीति सूचकवाक्यस्यार्थः। इदं च किञ्चन काचन नाना नास्तीत्यस्यार्थकथनं अत एव श्रुतिर्भेद इत्यनुक्तनानाविधभेदं सूचयितुं नाना नेत्याह । एकसत्वेऽप्यपरनाशाख्यकारणान्तरवशादभिन्नयोरेव मृद्घटयोर्भेदक इव कुतश्चित्कारणादपि भगवति स्वगतभेदो नास्तीत्याह— **कुतश्चेति** ।। मृद्घटाविव भगवदवतारादिषु एकसत्वेऽप्यपरनाशाख्यकारणस्यैवाभावादिति भावः। यः इह नानात्वं केवलं भेदं 'इवोभये च सादृश्ये' इति वचनात् भेदाभेदं च पश्यति सः मृत्योः मारकात् संसारादपि मारकं नित्यनरकमाप्नोति प्राप्नोति । दुर्गे पर्वतप्रदेशे वृष्टं उदकं पर्वताधोदेशेषु विधावति गच्छति एवं धर्मान् सर्वोत्तमत्वादिभगवद्धर्मान् पृथक्पृथक्भगवतः पृथक्मिथः पृथक्सङ्ख्यान् तान् पृथक्त्वेन दृष्ट्वा धर्मान् अन्वेव अनन्तरमेव धर्मभेददर्शनानन्तरं विधावति विशेषेणाधः पतति । यद्वा तान् धर्मभेदान् अनु अनुभवन्नेव अनुसृत्यैव विधावति विशेषेणाधः पतति यथा यथा मिथ्याज्ञानेषु तारतम्यं तथा तथाऽधः पततीत्यर्थः । स्वधर्माणां भेददर्शनात् कुपितः परमात्मैव तमो ददातीति सूचनाय धर्मपृथगात्मदृगिति पर्यवसितार्थकथनम् । धर्मेभ्यः पृथगात्मानं पश्यतीति स तथोक्तः। 'सर्वत्र च स्वगतभेदविवर्जितात्मा' इत्यत्र 'नेह नानास्ति किञ्चन' 'मृत्योस्स मृत्युमाप्नोति'

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति ।।' इति वाक्यत्रयं प्रमाणम् ।। २३ ।।

**भारतश्री**— 'निखिलैः वेदवाक्यैः' इत्युक्तं तानि वाक्यानि कानिचिद्दर्शयति— **नारायणास्य न सम इत्यादिना** ।। अनेन 'नास्ति नारायणासमं न भूतं न भविष्यति' इत्युपादत्ते । 'पुरुषोत्तमोऽहं जीवाक्षरे ह्यधिगतोऽस्मि' इत्यनेन द्वाविमाविति गीतावाक्यमुपादत्ते । 'ततोऽन्यदार्तं' इत्येवं श्रुतिः । 'मुक्तोपसृप्य इह नास्ति कुतश्च कश्चित्' इत्यनेन 'मुक्तोपसृप्य व्यपदेशात्' इति तत्त्वसूत्रमुपादत्ते । 'धर्मपृथगात्मदृगेत्यथो हि' इत्यनेन 'एवं धर्मान् पृथक्पश्यन्' इति । इह जीवराशौ नारयणादन्यः मुक्तोपसृप्यः नास्तीत्यन्वयः । अथवा 'मुक्तोपसृप्य' इत्यनेन सूत्रम् 'इह नास्ति कुतश्च कश्चित्' इत्यनेन 'नेह नानास्ति किञ्चन' इत्येतद्वाक्यं 'नानेव' इत्यनेन 'मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति' इत्येतदाह । धर्मपृथगात्मदृगेत्यथो हीत्यनेन । 'एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति' इत्येतदुपादत्ते इति ।। २३ ।।

**[1]'आभास एव' [2]'पृथगीशत एष जीवो'**
**'मुक्तस्य नास्ति जगतो विषये तु शक्तिः'**
**'मात्रा परोऽसि न तु तेऽश्नुवते महित्वं'**
**'षाड्गुण्यविग्रह' 'सुपूर्णगुणैकदेहः' ।। २४ ।।**

---

१. 'जीवस्तत्प्रतिबिम्बश्च मनो ज्ञानं च चेतना। प्राणश्चेन्द्रियवर्गाश्च बुद्धिर्मेधा धृतिः स्मृतिः।' इति ब्रह्मवैवर्ते (१ब्रह्मखण्ड/१७अ/२६-२७) । २. 'जीवः कर्मफलं भुङ्क्ते आत्मा निर्लिप्त एव च। आत्मनः प्रतिबिम्बं च देही जीवः स एव च।... कर्ता भोक्ता च देही च स्वात्मा भोजयिता सदा। इति तत्रैव २प्रकृतिखण्ड/२४अ/१३-१६) ।

**व्यास**— 'आभास एव' इति आभासकोऽस्येत्यत्र ,पृथगीशत इति 'पृथगुपदेशात्' इति तदभिदा कुतोऽस्येत्यत्र, मुक्तस्येति 'जगद्व्यापारवर्जम्' इत्येतत् 'साम्यं न चास्य' इत्यत्र, 'मात्रा परोऽसि' इति , 'परो मात्रया तन्वा वृधान न ते महित्वं अन्वश्नुवन्ति' मात्राया इयत्तायाः परः। अश्नुवन्ति प्राप्नुवन्ति। अशू व्याप्तौ। एतदपि तत्र। षाड्गुण्यविग्रहेति [1]'पूर्णषाड्गुण्यविग्रह' इति, 'सुपूर्णगुणैकदेह' इति [2]'महाविभूते माहात्म्यशरीर' इति, इति त्रयं पूर्णगुणविग्रह इत्यत्र, शिवश्चेत्यादिना भागवतवाक्यमर्थतो गृह्णाति तत् 'गुणविस्तृतिरन्यगा क्व' इत्यत्र, अस्य सुखस्येत्यादिना 'एतस्यैवानन्दस्यन्यानि भूतानि मात्रामुजीवन्ति' इत्येतत् मुक्तेनेत्यत्र भवति ।। २४-२५ ।।

**वादि**— 'आभास एव' इत्यनेन 'आभास एव च' इति ब्रह्मसूत्रं गृह्णाति । जीवः परमात्मन आभास एव प्रतिबिम्ब एव । चशब्देन अत एव सूर्यसूर्यकवत् भिन्नश्चेति भेदं समुच्चिनोति । इदं च 'आभासकोऽस्य पवनः पवनस्य रुद्रः' इत्यादिनोक्तार्थे प्रमाणम् । पृथगीशत इत्यनेन 'पृथगुपदेशात्' इति ब्रह्मसूत्रं गृह्णाति । सूत्रे अपेक्षितशेषपूरणार्थं 'ईशत एष जीव' इत्युक्तम् । इदं च 'अभिदा कुतोऽस्य' इत्यत्र प्रमाणम् । 'मुक्तस्य नास्ति जगतो विषये तु शक्तिः' इत्यनेन 'जगद्व्यापारवर्जम्' इति ब्रह्मसूत्रं गृह्णाति । अत्राऽप्यपेक्षितशेषपूरणाय मुक्तस्येत्युक्तम्। मुक्तावपि स्वावरपरिपालनं उत्तरोत्तरमुक्ताः कुर्वन्त्येव । 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतेः। अतस्तं व्यवच्छेत्तुं सांसारिकजगद्व्यापारविशेषं सूचयितुं च तुशब्दः। इदं च 'साम्यं न चास्य परमस्य च केन चाप्यं मुक्तेन च' इत्यत्र प्रमाणम् । विष्णुना सृष्ट्यादिजगद्व्यापारस्य प्रतिकल्पं क्रियमाणत्वात् मुक्तानां तदभावात् सावधिकभाग्यानां मुक्तानां निरवधिकनित्यभाग्येन परमात्मना कथं साम्यं स्यादिति भावः। 'मात्रा परोऽसि न तु तेऽश्नुवते महित्वम्' इत्यनेन 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इति श्रुतिं सङ्गृह्णाति । मात्रया मात्रायाः इयत्ताया परः अतिक्रान्तोऽसि । मात्रापदेन गुणैरियत्तां, देशत इयत्तां, कालतश्चेयत्तां सङ्गृह्णाति । सूर्यादिवदालोकतो व्याप्तिर्नेत्याह— **तन्वा वृधानेति** ।। तन्वा विस्तृतदेहेन वृधान वृद्धः 'वृधु वर्धने' इति धातोः कर्त्रर्थे शानच्प्रत्यये कृते दधान इतिवत् वृधानेति शब्दनिष्पत्तिः। अत एव तनोर्निरवधिकविस्तारं सूचयितुं स्वरितस्वरेण तां तनुं स्तौति । ते तव महित्वं महिमानं नान्वश्नुवन्ति नानुभवन्ति न प्राप्नुवन्ति । ब्रह्मादीनां संसारे महदादितत्त्वप्रवर्तकदेहसद्भावेन तस्य तत्प्रमाणमात्रदेहवत्वेऽपि मात्रापरत्वाभावात् मुक्तौ बाह्यदेहाभावेन सूर्यादिवत् प्रकाशमात्रतः स्थौल्येऽपि वपुषा अणुत्वात् संसारे मुक्तौ वा ते महिमानं नान्वश्नुवन्तीति भावः। अनुसृत्यापि नाश्नुवन्तीति सूचनायान्वित्युक्तम् । आचार्यस्तु छन्दोभङ्गभिया तदेव पदमनुपादाय तमेवार्थं तुशब्देनाकथयत् । इदमपि 'साम्यं न चास्य परमस्य च' इत्यत्र प्रमाणम् । षाड्गुण्यविग्रहेत्यनेन 'जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह' इति पञ्चरात्रवाक्यं सङ्गृह्णाति । सुपूर्णगुणैकदेह इत्यनेन 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मवल्लीस्थश्रुतिं, 'आनन्दो ब्रह्मेति व्यजानात्' इति भृगुवल्लीस्थश्रुतिं,

[3]'विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ।।' इति भागवतोक्तवसुदेववाक्यम् ।
[4]'ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ।।' इति तत्रैवोक्ताक्रूरवाक्यम् ।

---

१. जितन्ते स्तोत्रम् । २. म.भा. ३४६-४ शान्तिपर्वणि, गी.भा. ९-५ । ३. भा. १०-४-१३ । ४. भा. १०-३८-७ ।

[1]"आनन्दमूर्तिमुपगुह्य जहुस्तदाधिम्' इति श्रुतिसमाख्यया मुन्नामकसुखं प्रकर्षेण तिष्ठत्यनेनेति व्युत्पत्त्या प्रतिष्ठा पादः। उत्तमाङ्गापेक्षया चरमाङ्गत्वात् पादस्य पुच्छत्वोक्तिः। कैश्चिदवान्तरविशेषैर्भगवतः शिरःपाणि-द्वयपादमध्याख्यावयवपञ्चकरूपं सुखं ब्रह्म पूर्णम् । अत एवानन्दमयो भगवानिति श्रुतेरर्थः। पादयोर्द्वित्वेऽप्यति-समीपस्थत्वात् भेदाभावसूचनाय च एकत्वोक्तिः। अन्यत्स्पष्टम् । अत्रेयं श्रुतिः 'आनन्दमात्रकरपादमुखोदरादिः' इत्यत्र प्रमाणम् । आदिपदेन शिरो गृह्यते । स्मृतयस्तु पूर्णगुणविग्रहेत्यत्र प्रमाणम् ।। २४ ।।

**वरद**— 'आभास एव' इत्यनेन 'आभास एव' इति सूत्रं आभासकोऽस्य पवन इत्याद्युक्तार्थनिर्णायकं अर्थत उपात्तम् । 'पृथगीशत एष जीव' इत्यनेन 'पृथगुपदेशात्' इत्यादि ब्रह्मसूत्रं अभिदा कुतोऽस्येत्युक्तार्थ-प्रतिपादकमुपात्तम् । एष जीवः । जात्यपेक्षया एकवचनम् । ईशत ईशात् पृथग्भिन्न इत्यर्थः। 'मुक्तस्य नास्ति जगतो विषये तु शक्तिः' इत्यनेन साम्यं न चास्येत्युक्तार्थप्रतिपादकं 'जगद्व्यापारवर्जम्' इत्यादिब्रह्मसूत्रमर्थत उपात्तम् । मुक्तस्य जगतो विषये जगत्सृष्ट्यादौ शक्तिर्नास्तीत्यर्थः। 'मात्रा परोऽसि न तु तेऽश्नुवते महित्वम्' इत्यनेन 'परो मात्रया' इति श्रुतिः 'गुणविस्तृतिरन्यगा क्व' इत्युक्तार्थप्रतिपादिका उपात्ता । मात्रायाः मितेः परोऽसि ते महित्वं गुणमाहात्म्यं नाश्नुवते न प्राप्नुवन्तीत्यर्थः। षाड्गुण्यविग्रहेत्यनेन 'पूर्णषाड्गुण्यविग्रह' इत्येतत्पञ्चरात्रगतं 'निर्दोषगुणपूर्णविग्रह' इत्याद्युक्तार्थप्रतिपादकं वाक्यमुपात्तम् । षण्णामैश्वर्यादीनां गुणानां समाहारः षाड्गुण्यं तदेव विग्रहो देहो यस्यासौ तथोक्तस्तस्य सम्बोधनम्— **षाड्गुण्यविग्रहेति** ।। सुपूर्णगुणैकदेहेत्यनेन [2]"मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इत्यादि भागवतस्थं आनन्दमात्रेत्याद्युक्तार्थप्रतिपादकं वाक्यमुपात्तम् । शोभनाः पूर्णाः गुणा एव देहो यस्य सः तस्य सम्बोधनं सुपूर्णगुणैकदेहेति ।। २४ ।।

**जना**— ।। **आभास एवेति** ।। 'आभास एव च' जीवः परमात्मन आभास एव प्रतिबिम्ब एव च भिन्नश्चेति सूत्रमाभासकोऽस्य पवन इत्यादौ मानम् । पृथगीशत एष जीव इति । पृथगुपदेशात् ईशत इति विशेषकथनम् । ईशतः मुक्तः पृथक् भिन्नः उपदेशात् [3]"भिन्नोऽचिन्त्यः परमो जीवसङ्घात्' इति कौशिकश्रुतेरिति सूत्रं अभिदा कुतोऽस्येत्यत्र मानम् । मुक्तस्येति मुक्तस्य जगतः विषये जगन्निर्माणविषये शक्तिर्नास्ति इत्यादिना 'जगद्व्यापारवर्जम्' इति । जगत्सर्जनादिव्यापारवर्जं तद्भिनान्यान् कामान् प्राप्नोतीति सूत्रं साम्यं न चास्य परमेण चेत्यत्र मानम् । मात्रा पर इत्यादिना 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इति श्रुतिर्गृहीता । मात्रया मात्राया मितेः पर उत्कृष्ट असि परशब्दस्यावधिसापेक्षत्वात् सन्निहितमात्रापदमवधिवाचकमिति ज्ञापयितुं मात्रापरोऽसीत्यनुवादः कृतः। सूर्यवदंशतो लोकव्याप्तिर्नेत्याह— **तन्वेति** ।। तन्वा देहेनैव वृधान अपरिच्छिन्न ते महित्वं गुणमहिमानं नाश्नुवन्ति नाप्नुवन्तीति श्रुत्यर्थः। इदमपि 'साम्यं न चास्य' इत्यत्र मानम् । षाड्गुण्यविग्रहेत्यनेन 'जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह' इति पञ्चरात्रवाक्यम् । 'सुपूर्णगुणैकदेह' इत्यनेन 'सच्चिदानन्दरूपाय वरेण्याय नमो नम' इति पञ्चरात्रवाक्यम् ।। २४ ।।

**ताम्र**— 'आभासकोऽस्य पवन' इत्यादौ 'आभास एव च' इति सूत्रम् । अभिदा कुतोऽस्येत्यत्र 'पृथगुपदेशात्' इति सूत्रम् । 'साम्यं न चास्य परमेण च केन चाप्यं मुक्तेन च' इत्यत्र 'जगद्व्यापारवर्जम्' इति सूत्रं च क्रमेण

---

१. आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् । भा.१०/३९/२८) 'दोर्भ्यां स्तनान्तरगतं परिरभ्य गाढ-मानन्दमूर्तिमजहादतिदीर्घतापम्' (१०/४७/८)इति शुकवाक्यं च सङ्गृह्णाति । २. भा. ६-४-४८ । ३. ब्र.सू.भा. २-३-२७ ।

प्रमाणयति— **आभास एवेत्यादिना** ।। ईशत एष जीव इति 'पृथगुपदेशात्' इति सूत्रापेक्षितपूरणम् । मुक्तावपि "[1]स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता' इति मुक्तजगद्व्यापारसद्भावात् संसारिजगद्व्यापाराभावं दर्शयितुं तुशब्दः। 'पूर्तेरचिन्त्यमहिमः परमः परात्मा नारायणोऽस्य गुणविस्तृतिरन्यगा क्व' इत्यत्र 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इति श्रुतिं प्रमाणयति— **मात्रेति** ।। मात्रया मीयन्ते एभिरिति मात्रा इन्द्रियाणि तेभ्यः परः अतिक्रान्तोऽसि । तदपि कुतः मात्रया इयत्तया परोऽसि । एवं अचिन्त्यस्य ते महित्वं गुणविस्तृतिं केऽपि नाश्नुवते न प्राप्नुवन्तीत्यर्थः। षाड्गुण्यविग्रहेत्यनेन 'जितन्ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह' इति पञ्चरात्रवाक्यम्। सुपूर्णगुणैकदेहेति ग्रन्थान्तरगतं वाक्यान्तरम् ।। २४ ।।

जम्बु— आभास एवेत्यनेन 'आभास एव च' इति ब्रह्मसूत्रं सङ्गृह्णाति । जीवः परमात्मनः आभास एव प्रतिबिम्ब एव । चशब्देन अत एव सूर्यसूर्यकवत् भिन्नश्चेति भेदं समुच्चिनोति । इदं च 'आभासकोऽस्य पवनः पवनस्य रुद्र' इत्यादिवाक्यार्थे प्रमाणम् । पृथगीशत इत्यनेन 'पृथगुपदेशात्' इति ब्रह्मसूत्रं सङ्गृह्णाति । सूत्रे अपेक्षितशेषपूरणार्थं 'ईशत एव जीव' इत्युक्तम् । इदं च 'अभिदा कुतोऽस्य' इत्यत्र प्रमाणम् । 'मुक्तस्य नास्ति जगतो विषये तु शक्तिः' इत्यनेन 'जगद्व्यापारवर्जम्' इति ब्रह्मसूत्रं गृह्णाति । मुक्तस्य जगतः विषये जगन्निर्माणविषये शक्तिर्नास्तीत्यादिना 'जगद्व्यापारवर्जं' इति जगत्सर्जनादिव्यापारवर्जं तद्भिनान्यान्कामानाप्नोति । तदुक्तम्—

"[2]स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुञ्जते ।।'

इत्यादिभाष्यात् सूत्रार्थो ज्ञेय इति ***जनार्दनभट्टीये।*** 'मात्रा परोऽसि न तु तेऽश्नुवते महित्वं' इत्यनेन 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इति श्रुतिं गृह्णाति । मीयन्त इति मात्राः इन्द्रियाणि मनआदीनि तेभ्यः परः अतिक्रान्तोऽसि अचिन्त्य इति यावत्। तदपि कुतः मात्रायाः परिमितेः इयत्तायाः परः अतिक्रान्तोऽसि मात्रापदेन गुणैरियत्तां कालत इयत्तां देशत इयत्तां सङ्गृह्णाति । सूर्यादिवदालोकतो व्याप्तिर्नेत्याह— **तन्वा वृधानेति** ।। तन्वा विस्तृतदेहेन वृधान वृद्धः 'वृधु वर्धन' इति धातोः कर्त्रर्थे शानच्प्रत्यये कृते दधान इतिवत् वृधानेति शब्दनिष्पत्तिः। अत एव तनोर्निरवधिकविस्तारं सूचयितुं स्वरितस्वरेण तां तनुं स्तौति । ते तव महित्वं महिमानं नान्वश्नुवन्ति नानुभवन्ति न प्राप्नुवन्ति । ब्रह्मादीनां संसारे महदादितत्त्वप्रवर्तकदेहसद्भावेन तस्य तत्प्रमाणमात्रदेहवत्वेऽपि मात्रापरत्वाभावात्। मुक्तौ बाह्यदेहाभावेन सूर्यादिवत् प्रकाशमात्रतः स्थौल्येऽपि वपुषा अणुत्वात् संसारे मुक्तौ वा ते महिमानं नान्वश्नुवन्तीति भावः। अनुसृत्यापि नाश्नुवन्तीति सूचनायान्वित्युक्तम् । आचार्यस्तु छन्दोभङ्गभिया तदेव पदमनुपादाय तमेवार्थं तुशब्देनाकथयत् । इदमपि 'साम्यं न चास्य परमस्य च' इत्यत्र प्रमाणम् । षाड्गुण्यविग्रह इत्यनेन

'जितं ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह ।
परानन्द परब्रह्मन्नमस्ते चतुरात्मने ।।'

इति पञ्चरात्रं सङ्गृह्णाति । 'सुपूर्णगुणविग्रह' इत्यत्रेदं प्रमाणं, सुपूर्णगुणैकदेहेत्यनेन शोभनाः पूर्णाः गुणाः एकः देहो यस्य तदस्य सम्बोधनम् । 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा । ब्रह्मपुच्छं प्रतिष्ठा' इति ब्रह्मवल्लीस्थश्रुतिः 'आनन्दो ब्रह्मेति व्यजानात्' इति भृगुवल्लीस्थश्रुतिः ।। २४ ।।

---

१. ब्र.सू.भा. ४-४-१९ । २. ब्र.सू.भा. ४-४-१८ ।

**भारतश्री**— आभास एवेत्यनेन 'आभास एव च' इति सूत्रम् । 'पृथगीशत एव जीव' इत्यनेन 'पृथगुपदेशात्' इति सूत्रम् । 'मुक्तस्य नास्ति' इत्यनेन 'जगद्व्यापारवर्ज्यम्' इति सूत्रम् । 'मात्रा परोऽसि न तु ते अश्नुवते महित्वम्' इत्यनेन 'एवं धर्मान् पृथक्पश्यन्' 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इत्येतत् । 'षाड्गुण्यविग्रह' इत्यनेन 'पूर्णषाड्गुण्यविग्रह' इति । 'सुपूर्णगुणैकदेह' इति, 'माहात्म्यदेह' इति द्वाभ्यां भागवतश्लोकं मोक्षधर्मवचनं च । 'मय्यनन्तगुणेऽनन्ते' भागवतश्लोकम् । 'माहात्म्यदेह' इति मोक्षधर्मवचनम्। 'सृतिमुक्तिगते' इत्यादिभिः 'एतस्यैव आनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' इति ।। २४-२५ ।।

**'माहात्म्यदेह' 'सृतिमुक्तिगते' 'शिवश्च**
**ब्रह्मा च तद्गुणगतौ न कथञ्चनेशौ'।**
**'न श्रीः कुतस्तदपरे' 'अस्य सुखस्य मात्रा-**
**मश्नन्ति मुक्तसुगुणाश्च शतावरेण' ।। २५ ।।**

**वादि**— '**माहात्म्यदेह**'इत्यस्य सहस्रशीर्षत्वं, सर्वव्याप्तत्वं, मुखाद्यवयवैः इन्द्राग्निचन्द्रसूर्यप्राण-भूम्यन्तरिक्षद्यौदिगादीनां स्रष्टृत्वम्, मातृयोनेर्निस्सरणदशायामेव श्रीवत्सकौस्तुभशङ्खगदादिस्वमूलरूपदिव्य-लक्षणवत्त्वम्, शैशवेऽपि जगदुदरवत्त्वम्, गोकुलस्थबहुतररज्जुभिरप्यबध्यत्वम्, तदैव गिर्युद्धारकत्वम् , सौत्यकर्तृसूक्ष्मदेहस्यैव दिगन्तव्याप्तदेहत्वं, ब्रह्मेशादिसकलदेवाद्याधारत्वमित्यादिमहामाहात्म्यं देहो यस्य तत्सम्बुद्धिः हे माहात्म्यदेह । अनेन पुरुषसूक्तभागवतगीतादिप्रमाणानि सङ्गृहीतानि । इदं च जननमरणाद्यखिल-दोषविवर्जितत्वे, निश्चेतनात्मकशरीरविदूरत्वे, 'नैतादृशः क्व च बभूव' इत्यत्र 'अभिदा कुतोऽस्य' इत्यत्र, 'स हि सर्वशक्तिः' इत्यत्र च प्रमाणम् । शिशोर्जगदुदरत्वादेरघटितघटकशक्त्यैव घटनीयत्वादिति भावः।

'**सृतिमुक्तिगते**' इत्यस्य सृतिमुक्त्योः बन्धमोक्षयोर्गमयतीति व्युत्पत्त्या गतिः स्वामी, तत्सम्बुद्धिः हे सृतिमुक्तिगते । अनेन 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इति श्रुतिं, [1]'सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।

'वरं वरय भद्रं ते ऋते कैवल्यमात्मनः।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ।।'

इत्यादि स्मृतिं च सङ्गृह्णाति । यत् यस्मात् कारणात् । अन्नेनान्नं मर्त्यं 'व्यत्ययो बहुलम्' इति वचनात् मर्त्यमन्नमिति स्मृतिसमाख्यया च अन्नेनेति तृतीया द्वितीयार्थे । अद्यते मृत्युनेत्यन्नं मरणशीलं मर्त्यं संसारिणम् । अतिरोहति अतिक्रम्य प्रादुर्भवति । 'रुह बीजजन्मनि प्रादुर्भावे' इति धातुः। अनेन कृष्णरामादिप्रादुर्भावेष्वपि मरणशीलं मर्त्यमतिक्रम्य तिष्ठति नतु तद्वत् स्वयं म्रियत इति भावं ध्वनयितुं अतिरोहतीत्याह । उत तस्मात्कारणात् अमृतत्वस्य मुक्तसमूहस्य ईशानः स्वामी । जनतेत्यादौ समूहेऽपि भावप्रत्ययदर्शनात् । संसारे स्वतोऽधमं जीवं मुक्तावप्यधमीकृत्यैव रक्षति न तु स्वसमं करोति । भगवतः प्रेक्षावत्त्वादिति भावः। यद्वा सृतिः संसारः तस्या मुक्तिः संसारप्रध्वंसः तयोरुभयोर्गतिर्गमनं यस्मात्स तथोक्तः। अनेन 'त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा । 'गुणस्य मायामूलत्वात् न मे मोक्षो न बन्धनम्' 'विद्यामयो यः स तु नित्यमुक्त' इत्यादि भागवतवाक्यं

१. भा. २-६-१७ ।

सङ्गृह्णाति । उक्तसम्बुद्धीनां ईदृश हे भगवन् ते महित्वं महिमानं नाश्नुवत इति पूर्वेण सम्बन्धः। अत्र विशेषणत्रयं निर्दोषपूर्णगुणविग्रह इत्यत्र प्रमाणम् । चतुर्थं तु 'मुक्तेन चास्य साम्यं नाप्यम्' इत्यत्र प्रमाणम् ।

**'शिवश्च ब्रह्मा च तद्गुणगतौ न कथञ्चनेशौ'** इत्यनेन 'नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः' इत्यादि भागवतवाक्यं सङ्गृह्णाति । तद्गुणगतौ तस्य परमात्मनः गुणानामवगतौ नेशावित्यर्थः। श्रीश्च तद्गुणगतौ तस्य नारायणस्य गुणानां सर्वोत्तमत्वादिमहिम्नां गतौ प्राप्तौ नेशा न समर्था । अनेन 'मम योनिरप्स्वा अन्तः समुद्रे', 'ततो वितिष्ठे भुवनानु विश्वो तामूं द्यां वर्ष्मणोपस्पृशामि', 'परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव' इत्यादिवाक्यं सङ्गृह्णाति । पूर्वोक्तविधया ब्रह्मादीनां जनने मरणे च समर्थाया अपि मम योनिः कारणीभूतः, कश्चन भगवान् समुद्रे अन्तरप्सु अस्ति । अहमेव सर्वेश्वरी न भवामि । ततः मम कारणीभूतात् नारायणात् विश्वा भुवना विश्वानि भुवनानि, मदादिकं सर्वं जगत् । अनु जननानन्तरम्। वितिष्ठे वितस्थिरे विशेषेण धृतान्यासन्नित्यर्थः। एकवचनं तु करस्थैकामलकवत् धृतमिति सूचनाय । अहं तु अमूं पृथिवीं, द्यामुत दिवं च, वर्ष्मणा देहेन उपस्पृशामि समीपे स्पृष्ट्वा तिष्ठामि । दधिमथनकर्त्र्या मातुः मन्थानं शिशुरिव स्पृष्ट्वा तिष्ठामीत्यर्थः। स एव सर्वजगद्धर्ता । अहं तु निमित्तमात्रमिति भावः। सः परमात्मा दिवा दिवः द्युनामकमद्रूपात् एना पृथिव्या अस्याः पृथिव्याश्च, पृथिवीनामकमद्रूपाच्च परः उत्तमः। अहं तु महिना महिम्ना, एतावती इयत्तावती बभूव । 'भू सत्तायाम्' इति धातोः लिटि उत्तमपुरुषैकवचनमिदम् । अनया श्रुत्या भगवान् निरवधिकमाहात्म्यवान्, लक्ष्मीस्तु सावधिकभाग्यवतीत्युच्यते । अतः श्रीरपि तद्गुणगतौ नेशेत्युक्तं युक्तमिति भावः। इदं च 'अस्य गुणविस्तृतिरन्यगा क्व' इत्यत्र प्रमाणम् । 'अस्य सुखस्य मात्रामश्नन्ति मुक्तसुगणाश्च शतावरेण' इत्यनेन '[1]एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिं, 'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यानन्द-तारतम्यश्रुतिं च सङ्गृह्णाति । पूर्वश्रुतौ भगवदानन्दस्य मात्रां एकदेशमुपजीवन्तीत्युक्तम् । सोऽप्येकदेशः न सर्वेषां साम्येन । किन्तु शतावरेण उत्तमादुत्तमात् नीचस्य नीचस्य क्रमाच्छतावरेण शतगुणितानन्दानामधोगणने सति अवरो यो भागस्तेन भागेनाश्नन्ति । इदं चोपलक्षणम् । उत्तमोत्तमाः शताधिकेन भागेनाश्नन्तीत्यपि द्रष्टव्यम् । भगवांस्तु 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्' इति श्रुतेर्मनोवाचा-मगोचरनिरवधिकानन्दभुगित्युच्यते । अतः क्वानयोः साम्यमिति भावः। इदमपि 'मुक्तेन च' इत्यत्र 'अभिदा कुतोऽस्य' इत्यत्र च प्रमाणम् ।। २५ ।।

**वरद—** 'माहात्म्यदेह' इत्यनेन माहात्म्यदेहेत्यादिमोक्षधर्मवचनमानन्दमात्रेत्यत्रैव प्रमाणम् । माहात्म्यं देहो यस्य तस्य सम्बोधनम्— **माहात्म्यदेहेति** ।। सृतिमुक्तिगतेत्यनेन 'अमृतस्यैष सेतुः' 'एतमानन्दमयमात्मान-मुपसङ्क्रम्य' इत्यादि वाक्यं मुक्तेन च इत्यत्रैव प्रमाणम् । सृतेः संसारान्मुक्तेः गतिराश्रयस्तस्य सम्बोधनं सृतिमुक्तिगत इति । तद्गुणगतौ तस्य हरेर्गुणगतौ गुणानां अवगतौ शिवश्च ब्रह्मा च कथञ्चन महोद्योगेऽपि नेशौ न समर्थौ । श्रीश्च न समर्था । तदपरे समर्थाः कुतः स्युः न कुतोऽपीत्यनेन 'नैनं मनो विशति वागुत चक्षुरात्मा' इत्यादि भागवतस्थं वाक्यमेतैः सुरादिभिरतिप्रतिभादियुक्तैरित्याद्युक्तार्थे प्रमाणम् । अस्य हरेः सुखस्यानन्दस्य मात्रां अंशं विप्लुषं प्रतिबिम्बभूतं स्वस्वरूपानन्दं मुक्तसुगणाः मुक्तानां श्रेष्ठगणाः ब्रह्माद्या अपि क्रमेण शतावरेण

---

१. बृ.उ. ६-३-३२ ज्योतिर्ब्राह्मणम् ।

शतोनत्वेन अश्नुवन्ति भुञ्जते इत्यनेन 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्येतदुपनिषद्वाक्यं 'अस्य गुणविस्तृतिरन्यगा' इत्यादौ प्रमाणमिति सूचितम् ।। २५ ।।

**जना**— माहात्म्यदेहेत्यनेन 'महाविभूते माहात्म्यशरीर' इति मोक्षधर्मस्थं गीताभाष्योद्धृतं वाक्यम् । माहात्म्यं महिमा शरीरं यस्येति । 'निर्दोषपूर्णगुणविग्रह' इत्यत्र मानम् । सृतिमुक्तिगते संसृतिः संसारः मुक्तिर्मोक्षः अनयोः गतिः प्राप्तिर्यस्मात्तस्य सम्बुद्धिः इत्यनेन 'बन्धको भवपाशेन भवपाशाच्च मोचक' इति वाक्यं साम्यं न चास्येत्यत्र मानम् । शिवश्च ब्रह्मा च तद्गुणगतौ तस्य विष्णोः गुणानामवगतौ । कथञ्चन केनापि प्रकारेण नेशावित्यनेन 'नान्तं गुणानामगुणस्य जग्मुः योगेश्वरा ये भवपाद्ममुख्या' इत्यादि भागवतवाक्यं 'अस्य गुणविस्तृतिरन्यगा क्व' इत्यत्रमानम् । श्रीरपि तद्गुणगतौ नेशा तत् तस्मादपरे कुत इत्यनेन 'परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव' इति तत्रैव मानम्— **अस्य सुखस्येति** ।। मुक्ताः सुगणाः शोभनसमुदायाः। अस्य विष्णोः सुखस्य मात्रामंशं प्रतिबिम्बभूतानन्दांशं शतावरेणाश्नुवन्तीत्यनेन 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिर्मुक्तेन चेत्यत्रमानम् ।। २५ ।।

**ताम्र**— माहात्म्यदेहेति 'महाविभूते माहात्म्यशरीर' इति गीताभाष्योदाहृतमोक्षधर्मवाक्यं च पूर्णषड्गुण-विग्रहेत्यत्रोपादत्ते । सृतिमुक्तिगत इत्यनेन 'मुक्तानां परमा गतिः' 'अमृतस्यैष सेतुः' इति श्रुतिं 'मुक्तेन च' इत्युक्तार्थमुक्तभेदे प्रमाणतया उपादत्ते। एतैः सुरादिभिरित्यत्र

[1]''अहं महेन्द्रो निर्ऋतिप्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ।
आदित्यविश्वेवसवो ये च साध्या मरुद्गणा रुद्रगणाः प्रसिद्धाः ।।
अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः सत्वप्रधाना अपि किं ततोऽन्ये ।।'

इति षष्ठस्कन्धवाक्यम् । 'नान्तं गुणानामगुणस्य जग्मुः योगेश्वरा ये भवपाद्ममुख्या' इति भागवतवाक्यान्तरं चोपादत्ते— **शिवश्चेति** ।। 'परमेण च केन चाप्यं मुक्तेन च' 'गुणविस्तृतिरन्यगा क्व' इत्यत्र, 'आभासकोऽस्य पवन' इत्यादौ सर्वेषां भगवदाभासत्वे च 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिं प्रमाणयति— **अस्येति** ।। मात्रां अंशम् । तत्प्रतिबिम्बितमिति यावत् । शतावरेण शताद्यवरत्वेन ।। २५ ।।

**जम्बु**— माहात्म्यदेहेत्यनेन सहस्रशीर्षत्वं सर्वव्याप्तत्वं मुखाद्यवयवैः इन्द्राग्निचन्द्रसूर्यप्राणभूम्य-न्तरिक्षद्यौदिगादीनां स्रष्टृत्वं, मातृयोनेर्निस्सरणदशायामेव श्रीवत्सकौस्तुभशङ्खगदादिस्वमूलरूपदिव्यलक्षणवत्त्वं, शैशवेऽपि जगदुदरवत्वं, गोकुलस्थबहुतररज्जुभिरप्यबध्यत्वं, तदैव गिर्युद्धारकत्वं, सौत्यकर्तृसूक्ष्मदेहस्यैव दिगन्तव्याप्तदेहत्वं, ब्रह्मेशादिसकलदेवाद्याधारत्वमित्यादिमहामाहात्म्यं देहो यस्य तत्सम्बुद्धिः हे माहात्म्यदेहेत्यनेन 'महाशरीर महाविभूते' इति गीताभाष्योदाहृतमोक्षधर्मवाक्यं पुरुषसूक्तभगवद्गीतादिप्रमाणानि सङ्गृहीतानि । शिशोर्जगदुदरत्वादेरघटितघटकशक्त्यैव घटनीयत्वादिति भाव इति ***वादिराजीये*** । अनेन 'एतमानन्दमयमात्मान-मुपसङ्क्रम्य' 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इति श्रुती 'सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्'

---

१. भा. ६-३-१४,१५ ।

[1]"वरं वरय भद्रं ते ऋते कैवल्यमात्मनः।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥'

'मुक्तानां परमागतिः'। 'अमृतस्यैष सेतुः' इति श्रुतिस्मृती: सङ्गृह्णाति। सृतिमुक्त्योर्गतिर्गमनं यस्मात्स तथोक्तः। अनेन 'त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा।' 'गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्' 'विद्यामयो यः स तु नित्यमुक्त' इत्यादिभागवतवाक्यं सङ्गृह्णाति। उक्तसम्बुद्धीनां ईदृश हे भगवन् ते महित्वं महिमानं नाश्नुवत इति पूर्वेण सम्बन्धः। विशेषणत्रयं निर्दोषपूर्णगुणविग्रह इत्यत्र प्रमाणं चतुर्थं तु मुक्तेन चास्य साम्यं नाप्यमित्यत्र प्रमाणम्। शिवश्च ब्रह्मा च तद्गुणगतौ तस्य विष्णोर्गुणानां गतावगतौ कथञ्चन केनापि प्रकारेण नेशौ न समर्थौ इत्यनेन 'नान्तं गुणानामगुणस्य जग्मुर्योगेश्वराः ये भवपाद्ममुख्याः' इत्यादिभागवतवाक्यं सङ्गृह्णाति। श्रीश्च लक्ष्मीरपि तद्गुणगतौ नेशा। अनेन [2]"मम योनिरप्स्वा अन्तस्समुद्रे। ततो वितिष्ठे भुवनानि विश्वा तामूद्यां वर्ष्मणोपस्पृशामि। परो दिवा पर एना पृथिव्या एतावती महिना सम्बभूव' इत्यादिवाक्यं सङ्गृह्णाति। पूर्वोक्तविधया ब्रह्मादीनां च जनने मरणे च समर्थाया अपि मम योनिः कारणीभूतात् नारायणाद्विश्वा भुवनानि महदादिकं सर्वं जगत् अनु जननानन्तरं वितिष्ठे वितस्थिरे विशेषेण धृतान्यासन्नित्यर्थः। एकवचनं तु करस्थैकामलकवत् धृतमिति सूचनाय। अहं तु अमुं पृथिवीं द्यां उत दिवं च वर्ष्मणा देहेन उपस्पृशामि समीपे सृष्ट्वा तिष्ठामि। दधिमाथनकर्त्र्याः मातुः मन्थानं शिशुरिव तिष्ठामीत्यर्थः। स एव सर्वजगद्धर्ता अहं तन्निमित्तमात्रमिति भावः। दिवा दिवः द्युनामकमद्रूपात् एना पृथिव्याः अस्याः पृथिव्याश्च पृथिवीनामकात् मद्रूपात् परः उत्तमः अहं तु महिना महिम्ना एतावती सम्बभूव इयत्तावती सम्बभूव भू सत्तायामिति धातोः लिट् उत्तमपुरुषैकवचनमिदम्। अनया श्रुत्या भगवान्निरवधिकभाग्यवान् लक्ष्मीस्तु सावधिकभाग्यवतीत्युच्यते। अतः श्रीरपि तद्गुणगतौ नेशेत्युक्तं युक्तमिति भावः। इदं च 'अस्य गुणविस्तृतिरन्यगा क्व' इत्यत्र प्रमाणं इति ***श्रीनिवासभट्टीये***। अस्य हरेः सुखस्यानन्दस्य मात्रां अंशं विष्णुगं स्वप्रतिबिम्बभूतं स्वस्वरूपानन्दं मुक्तसुगुणाः मुक्तानां सुगुणाः श्रेष्टगुणाः ब्रह्माद्या अपि क्रमेण शतावरेणाश्नुवन्ति भुञ्जन्ते इत्यनेन 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतिं 'सैषानन्दस्य मीमांसा भवति' इत्यानन्दतारतम्यश्रुतिं च सङ्गृह्णाति। पूर्वश्रुतौ भगवदानन्दस्य मात्रां एकदेशं उपजीवन्तीत्युक्तम्। सोऽप्येकदेशः सर्वेषां साम्येन न किन्तु शतावरेण उत्तमादुत्तमात् नीचस्य नीचस्य क्रमाच्छतावरेण शतगुणितानन्दानां अधोगणने सति अवरो यो भागः तेन भागेनाश्नन्ति। इदं चोपलक्षणं उत्तमोत्तमाः शताधिकेन भागेनाश्नुवन्तीत्यपि द्रष्टव्यम्। 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्' इति श्रुतेः मनोवाचामगोचरं निरवधिकानन्द–भुगित्युच्यते भगवान्। अतः क्वानयोस्साम्यमिति भावः। इदमपि 'गुणविस्तृतिरन्यगा क्व' इत्यत्र 'मुक्तेन च' इत्यत्र 'अभिधा कुतोऽस्य' इत्यत्र च प्रमाणमिति ***वादिराजीये*** ॥ २५ ॥

**'आभासकाभासपरावभास–**
**रूपाण्यजस्राणि च चेतनानाम्।**
**विष्णोस्सदैवातिवशात् कदापि**
**गच्छन्ति केशादिगणा न मुक्तौ' ॥ २६ ॥**

१. भा. १०-५४-२०। २. ऋ.सं. १०-१२५-७।

**व्यास**— ।। **आभासकेति** ।। आभासकोऽस्य पवन इत्युक्तेऽन्यत्वे प्रमाणम् । आभासकत्वेऽपि न प्रसिद्ध–प्रतिबिम्बवदनित्यत्वमित्युक्तम् । अजस्राणि नित्यानीति ।। २६ ।।

**वादि**— '**आभासक**' इत्यादि श्रुतिवचनमेव न स्ववचनम् । विष्णोराभासकः पवनः, तदाभासो रुद्रः, तस्य परः,अधोगणनायामुत्तरत्र विद्यमानः शक्रःतस्य च परस्य अवभासाः प्राणदक्षाद्याः, एवं विधानि चेतनानां रूपाणि अजस्राणि नित्यानि । भासमानजीवप्रकाशाख्योपाधेर्नित्यत्वात् तन्मध्यगतजीवाख्यप्रतिबिम्बकान्यजस्राणि । न तु नश्वरदर्पणोपाधिकप्रतिबिम्बवत् नश्वराणीत्यर्थः। ब्रह्मसूत्रोक्तवर्त्मना उत्तममध्यमाधमभेदेन सुरनरतिर्यगादिरूपेण नानाविधचेतनानामच्छमलिनमध्यमोपाधिनिमित्तेन प्रतिबिम्बेऽच्छत्वमलिनत्वादिवैचित्र्यवत् अदृष्टनिमित्तसुख–दुःखादिवैचित्र्येऽपि [1]''ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः'

[2]''अथासुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन्देवगणांश्च विष्णुर्देवेन नागेन्द्रमथापरेण ।।'

इत्यादि स्मृतेः। स्वशरीरान्तर्गतविचित्रभगवदाकारसदृशाकारवत्त्वमात्रेण यत्प्रतिबिम्बत्वमुक्तं तदत्र न विचार्यते । किन्तु ज्ञानानन्दादिगुणमात्रसादृश्येन तदधीनत्वेन च ब्रह्मादिनरोत्तमान्तशुभजीवानां यत्प्रतिबिम्बत्वं तदत्र विचार्यते । तत्रोक्तमाकारसाम्यं तु नात्र विवक्षितम् । तथा सति शेषगरुडयोर्मुक्तचतुर्मुखाभासत्वस्यायोगात्, एवमिन्द्रस्य मुक्तगरुडशेषौ प्रति आभासत्वस्य चायोगात् । अत्रापि पवनपदोदितब्रह्मणः रुद्रपदोदितशेषात् शतगुणितज्ञाना–नन्दादिगुणैर्भगवत्साम्यस्य सद्भावात्तस्यैव बिम्बरूपभगवदपेक्षयाप्याभासत्वमुच्यते । न तु बिम्बमात्राभासत्व–मत्रोच्यते । तस्य सर्वेष्वपि साम्यात् । गरुडशेषयोरिन्द्रबिम्बरूपत्वासम्भवाच्च । स्वस्वबिम्बरूपाणामेव सर्वे जीवा अधीनाः। न त्वबिम्बभगवदादिरूपाणामपीति शङ्कापरिहाराय सौत्राभासपदसूचितमिदमप्याभासत्वं विचार्यत इत्यनुसन्धेयम् । अत एवैते क्रमिकाभासा इति विवेको द्रष्टव्यः। 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इति वचनात् । प्रलयकालीनजलरूपा श्रीः ब्रह्मा च कशब्देनैवोच्येते । ईशः रुद्रः तदादिजीवगणाः सदा विष्णोर्वशात् अति अतिक्रम्य न गच्छन्तीत्यर्थः। अत्र पूर्वार्धं 'आभासकोऽस्य पवनः पवनस्य रुद्रः' इत्यादिनोक्तबिम्बप्रतिबिम्बभावपरम्परायां प्रमाणम् । उत्तरार्धं तु 'यस्याज्ञया रहितमिन्दिरया समेतं ब्रह्मेशपूर्वकमिदं न तु कस्य चेशम्' इत्यत्र प्रमाणम् ।। २६ ।।

**सङ्क**— आभासकोऽस्य पवन इत्यादिना यदुक्तं तद्भागवतवाक्येन दर्शयति— **आभासकेत्यादिना** ।। विष्णोराभासकाभासपरावभासभूतानि चेतनानां रूपाणीत्यन्वयः। विष्णोराभासकः पवनः। तदाभासो रुद्रः। रुद्रस्य पर आभासः। परस्य ततोऽपि परः आभास इत्यनेन क्रमेण तदाभासकानि रूपाणि चेतनानां रूपाणि । अत्र परशब्दोऽवरवाची । एवं रमादिदेवीनां रूपाणि द्रष्टव्यानि । नन्वाभासत्वं नाम प्रतिबिम्बत्वम् । तथा सति चेतनाख्यप्रतिबिम्बानां उपाधिनाशे नाशः स्यात् । दर्पणाद्युपाधिनाशेन तद्गतप्रतिबिम्बानां नाशवदित्यत आह— **अजस्राणीति** ।। सोपाधिकत्वादन्यप्रतिबिम्बानां नाश उपपद्यते । चेतनाख्यप्रतिबिम्बानां निरुपाधिकत्वात् सूर्यप्रतिबिम्बभूतेन्द्रचापवत् नित्यत्वमुपपन्नम् । ननु ब्रह्मादीनां आभासशब्देन सदा विष्ण्वधीनत्वमुक्तम् । तन्नोपपद्यते । मुक्त्यनन्तरं विष्ण्वधीनत्वाभावादित्यत आह— **अतिवशादिति** ।। केशादिगणाः मुक्तौ पूर्ववत् विष्णोर्वशादतिक्रम्य न गच्छन्तीति श्लोकार्थः ।। २६ ।।

---

१. भा.ता. १-२-२४ । २. भा. ७-७-११ ।

**वरद—** 'आभासकोऽस्य पवन' इत्याद्युक्तार्थे प्रमाणमुदाहरति— **आभासकेति** ।। विष्णोः सदा संसारे मुक्तौ च आभासकाभासपरावभासरूपाणि चेतनानां रूपाणीति सम्बन्धः। विष्णोराभासः पवनः, तस्याभासो रुद्रः, रुद्रस्य परावभासो इन्द्रः तस्यापि तदन्य इति साक्षात्परम्परया सर्वजीवरूपाणि भगवत्प्रतिबिम्बभूतानीति भावः। ननु प्रतिबिम्बस्य उपाध्यधीनत्वेन उपाधिनाशे तन्नाशनियमात् अत्रापि मुक्तौ सर्वोपाधिविनाशे प्रतिबिम्बभूतजीवस्वरूपविनाशः स्यादित्यत आह— **अजस्राणीति** ।। नित्यानीत्यर्थः । सत्यं प्रतिबिम्बस्योपाध्यधीनत्वमिति । प्रकृते च उपाधेर्नित्यत्वेन नाशाभावात् तन्निमित्तप्रतिबिम्बनाशानापत्तेः न जीवनाशप्राप्तिः। जीवोपाधेर्नित्यत्वं च

[१]"जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।।'
[२]'..................नित्योपाध्या स्वरूपया ।
चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः ।।'

इत्यादि प्रमाणसिद्धमिति भावः। अतो मुक्तावपि सर्वजीवानां भगवत्प्रतिबिम्बत्वानपायात् तदधीनत्वमेवानुवर्तत इत्याह— **अतिवशादिति** ।। मुक्तौ केशादिगणाः ब्रह्मरुद्रादिगणाः विष्णोर्वशात् अति विष्ण्वधीनत्वातिक्रमं न गच्छन्तीत्यर्थः ।। २६ ।।

**जना—** आभासकेति भगवद्वाक्यं पूर्वार्धे 'आभासकोऽस्य' इत्यत्र उत्तरार्धं तु 'यस्याज्ञया रहितम्' इत्यत्र मानम् । चेतनानां ब्रह्मादीनां आभासकः पवनः, तस्याभासकः रुद्रः, तस्यापरः, अन्य आभास शक्र इत्येतानि रूपाणि स्वरूपाणि अजस्राणि नित्यानि । केशादिगणा कः ब्रह्मा ईशः रुद्रः तावादी येषां ते । ते च ते गुणाः मुक्तौ कदापि संसारेऽपि सदैव विष्णोः अतिवशान्न गच्छन्तीत्यन्वयः ।। २६ ।।

**ताम्र—** आभासकोऽस्य पवन इत्यत्र 'आभास एव च' इत्यादि अविस्पष्टं प्रमाणम्। उक्तक्रमाप्रतीतेः। अतः स्पष्टं वामनपुराणमुदाहरति— **आभासकेति** ।। चेतनानां स्वरूपाणि विष्णोः अजस्राणि आभासकाभासपरावभासरूपाणि नित्यप्रतिबिम्बितानीत्यर्थः। कुत इत्यत उक्तम्— **चेतनानामिति** ।। चैतन्यात्मकोपाधीनां प्रतिबिम्बस्य विष्णोः तत्सन्निधेश्च सदैव सत्वात् इति शेषः। विष्णुशब्दस्य व्याप्त्यर्थकत्वात् । ननु कथं सदा प्रतिबिम्बत्वं मुक्तावुपाध्यपगमेन प्रतिबिम्बनाशादित्यत आह— **अजस्राणीति** ।। मुक्तौ बाह्योपाधेर्विलयेऽपि स्वरूपोपाधेः नाशाभावेन चेतनानां स्वरूपाणि अजस्रं प्रतिबिम्बान्येवेति भावः। जीवानां भगवत्प्रतिबिम्बत्वानाशे कार्यं च ज्ञापकमाह— **विष्णोरिति** ।। विष्णोर्वशात् अति वशमतिक्रम्य कदापि संसारे मुक्तौ च ब्रह्मेशादिगणा न गच्छन्ति । प्रतिबिम्बत्वापगमे तद्वशत्वायोग इति भावः। आभासको हरेर्वायुः। रुद्र आभासकाभासः। इन्द्रः आभासकाभासाभासः। सूर्यादिराभासकाभासपरावभासः इत्यादि ज्ञेयम् ।। २६ ।।[३]

---

१. भा.ता. ४-२१-२६ । २. गी.भा. २-१८ । ३. आभासत्वेऽपि न प्रसिद्धप्रतिबिम्बवदनित्यत्वं इत्युक्तम्–**अजस्राणीति** ।। उपाधेः स्वरूपत्वेनानाशादिति भावः। ननु उपाधिनाशात्तदभावेऽपि सन्निधिनाशाद्भविष्यतीत्यत उक्तम्। **विष्णोः सदैवातिवशादिति**। भगवत्सन्निधिः सदातनीति यावत्। सन्निध्यनपगमे ज्ञापकमाह–**विष्णोरिति** ।। विष्णोर्वशादतिक्रम्य कदापि संसारे मुक्तावपि ब्रह्मेशादिगणा न गच्छन्ति । सन्निध्यपगमे तद्वशत्वायोगादिति भावः। आभासको हरेर्वायुः लौकिकबिम्बप्रतिबिम्बयोर्यदन्तरं न तावदेव भगवद्वायोरिति द्योतयितुं कुत्सनार्थः कप्रत्ययः। वायो रुद्र आभास इति ज्ञेयम् ।। २६ ।। इति अधिकः पाठः हो. पुस्तके दृश्यते ।

**जम्बु**— आभासकोऽस्य पवन इत्याद्युक्तार्थे प्रमाणमुदाहरति— **आभासकेति** ।। इदं वामनपुराणस्य वचनम्। सदा संसारे मुक्तौ च। चेतनानां ब्रह्मादीनां स्वरूपाणीति शेषः। विष्णोराभासकाभासपरावभासभूतानि चेतनानां रूपाणीत्यन्वयः। विष्णोराभासकः पवनः। पवनस्य वायोराभासको रुद्रः। रुद्रस्याभासकाभासपरावभासः इन्द्रः। तस्यापि तदन्यो आभासः। अत्र परशब्दः अवरवाची । एवं रमादिदेवीनां द्रष्टव्यानीति। ननु लोके प्रतिबिम्बो दृष्टः। प्रतिबिम्बे प्रतिबिम्बस्तु कुत्राप्यदृष्टतर इति चेत् प्रतिबिम्बे प्रतिबिम्बं उपाधितः। तथाहि—

'यथा जलस्थ आभासः स्थलस्थेनाथ दृश्यते ।
स्वाभासेन यथा सूर्यः जलस्थेन दिवि स्थितः।।' इति ।

अस्यार्थः प्रतिबिम्बानां प्रतिबिम्बप्रकाशकत्वप्रकारः कथमिति तत्राह। गगनतलवर्तिनः सूर्यस्याभासः जले भवति जलस्थस्य तु आभासो जले भित्यादौ भवति। एवं स्थिते जलस्थेन भित्यादिगतेनाभासेन जलस्थाभासतो दृश्यते ज्ञायते यथा जलस्थेन स्वाभासेन प्रतिबिम्बेन दिविस्थसूर्यः बिम्बभूतोऽवगम्यत इति। ननु दर्पणाद्युपाधिनाशात् जीवनाशः स्यादित्यत [1]आह— **अजस्राणीति** ।। मुक्तावतः कारणादुपाधिनाशेऽपि जीवनाशः न। स्वरूपस्य नित्यस्योपाधेर्विद्यमानत्वादिति भावः। तदुक्तं प्रथमस्कन्धतात्पर्ये —

[2]'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना ।।' इति ।
'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।।
सर्वोपाधिविनाशे हि प्रतिबिम्बे कथं भवेत् ।
कथञ्चात्मविनाशाय यत्नं सेच्छति स क्वचित् ।।' इति।

ननु यथा दर्पणाद्युपाधिसन्निधाननाशात् प्रतिबिम्बनाशस्तथा सन्निधाननाशः स्यादित्यत आह— **अतिवशादिति** ।। केशादिगुणाः ब्रह्मरुद्रादिगणाः सदैव वशात् विष्ण्वधीनत्वात् विनाशं न गच्छन्ति। उपाधिसान्निध्यभावाच्च न प्रतिबिम्बनाश इति भाव इति ***नारायणाध्वरीये*** । विष्णोराभासकः पवनः। तदाभासो रुद्रः । तस्य परः। अधोगणनायामुत्तरत्र विद्यमानः शक्रः। तस्य च परस्य अवभासाः प्राणदक्षाद्याः। एवंविधानि चेतनानां रूपाणि अजस्राणि नित्यानि । भासमानजीवप्रकाशाख्योपाधेर्नित्यत्वात् तन्मध्यगतजीवाख्यप्रतिबिम्बकान्यजस्राणि । न तु नश्वरदर्पणोपाधिकप्रतिबिम्बवत् नश्वराणीत्यर्थः। अत्र बहुवक्तव्यमस्ति तन्न लिखितम् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इति वचनात् प्रलयकालीनजलरूपा श्रीः ब्रह्मा च कशब्देन उच्येते । ईशः रुद्रः तदादिजीवगणाः सदा विष्णोर्वशात् अति अतिक्रम्य न गच्छन्तीत्यर्थः। अत्र पूर्वार्धे 'आभासकोऽस्य पवनः पवनस्य रुद्र' इत्यादिनोक्तबिम्बप्रतिबिम्बभावपरम्परायाः प्रमाणम् । उत्तरार्धं तु 'यस्याज्ञया रहितमिन्दिरया समेतं ब्रह्मेशपूर्वकमिदं न तु कस्य चेशम्' इत्यत्र प्रमाणमिति ***वादिराजीये*** ।। २६ ।।

**भारतश्री**— अजस्राणि नित्यानि । उपाधेर्नित्यत्वात् ।। २६ ।।

१. दर्पणाद्युपाधिनाशवत् उपाधिनाशात् जीवनाशः स्यादिति पाठः साधुरिति भाति । २. भा.ता. १-१२-५५

**'यस्मिन्परेऽन्येऽप्यजजीवकोशा'**
**'नाहं परायुर्न मरीचिमुख्याः'।**
**'जानन्ति यद्गुणगणान्न रमादयोऽपि**
**नित्यः स्वतन्त्र उत कोऽस्ति तदन्य ईशः' ।। २७ ।।**

**व्यास**— 'यस्मिन्' इति 'नाहं' इति च भागवतवाक्यं सर्वोत्तमत्वसर्वगुणपूर्णत्वादौ ।। २७ ।।

**वादि— यस्मिन्परेऽन्येऽप्यजजीवकोशा** इत्यनेन

[१]'वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः।
यस्मिन्परेऽन्येऽप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमाम ।।'

इति भागवतस्थरुद्रवाक्यं सङ्गृह्णाति । अस्यार्थः हे तात, 'तातोऽनुकम्प्ये पितरि' इत्यनुशासनात् मम दयाविषय हे दूर्वासः, वयं न प्रभवाम हरेः सुदर्शनात् त्वां रक्षितुं न समर्थाः। हि यस्मात् भूम्नः सकलगुणपरिपूर्णात् नारायणात् ईदृशाः मम सदृशाः देवाः। काले सृष्टिकाले भवन्ति उत्पद्यन्ते । काले पुनः संहारकाले न भवन्ति । भगवता संहृतत्वात् न विद्यन्ते । तस्मान्न प्रभवामेति पूर्वेणान्वयः। अस्मदादीनां जननसंहरणसमर्थस्य हरेरायुधप्रतिरोधाय क्वास्माकं शक्तिरिति भावः। न केवलं भगवानस्मदादीनामेव सृष्ट्यादौ समर्थः। किन्तु यस्मिन्परे परमपुरुषे अन्ये अस्मत्तोऽन्ये अजजीवकोशाः अजस्य ब्रह्मणः जीवकोशाः जीवानां कोशस्थानीयाः ब्रह्माण्डानि । काले सृष्टिकाले । काले संहारकाले । भवन्ति न भवन्ति च । यत्र येषु ब्रह्माण्डेषु वयं सहस्रशः सकलजीवानां मनआदीन्द्रियप्रेरकतया सहस्रशः अपरिमितरूपैर्भ्रमामः। जीवोत्पत्तौ तत्तन्मनः प्रेरयितुं मूलरूपादागच्छामः। तेषां मरणे तु 'यथागतं मातलिसारथिर्ययौ' इतिवत् पुनर्मूलरूपं प्रति गच्छामः। एकैकांशेन तज्जीवसहायेन गच्छामश्च । 'भ्रमु अनवस्थान' इति धातोः। अस्मदादिशतकोट्याधारब्रह्माण्डभेत्तुरस्मद्भेदनं किमपूर्वमिति भावः। हरिरेव महासमर्थ इति हृदयम् । 'नाहं परायुर्न मरीचिमुख्या' इत्युत्तरचरणेन [२]'नाहं परायुर्ऋषयो न मरीचिमुख्याः जानन्ति यद्विरचितं खलु सत्त्वसङ्घा' इति वाक्यं सङ्गृह्णाति । 'जानन्ति यद्गुणगणान्न रमादयोऽपि' इति च प्रमाणान्तरार्थग्रहणम् । अनयोरर्थः स्पष्ट एव । इदं च स्वोक्तसर्वोत्तमत्वसर्वशक्तत्वादौ प्रमाणम् ।। २७ ।।

सङ्क—

'वयं न तात प्रभवाम भूम्नो यस्मिन् परेऽन्येऽप्यजजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशा सहस्रशो यत्र वयं भ्रमाम ।।'

इति दूर्वाससं प्रति महादेववचनम् भागवतस्थम् । अस्यायमर्थः– हे तात ! अस्य विष्णोः सुदर्शनं त्वत्तो निवारयितुं न प्रभवाम । वयं न समर्थाः। तत्कुतः? यस्मिन् भूम्नि परिपूर्णे परे सर्वोत्तमे विष्णौ ईदृशाः वर्तमानब्रह्माण्डसदृशाः अन्येऽपि भूतभविष्यन्तः सहस्रशः अजजीवकोशाः ब्रह्माण्डाः सृष्टिकाले भवन्ति । संहारकाले न भवन्ति । तदधीनत्वेन उत्पद्यन्ते प्रलीयन्ते चेति भावः। अत ईश्वरतमः स च सर्वशक्ति–

१. भा. ९-६-४४ । २. भाग. ८-११-९ ।

रित्यादिकमुपपन्नम् । 'नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्गुणगणान् खलु सत्वसङ्घाः' इत्यादिकं च भागवतस्थं श्रीविष्णुं प्रति महादेववचनम् । 'एतैस्सुरादिभिरतिप्रतिभादियुक्तैः' इत्यादिना उक्तार्थे प्रमाणं सूचयन्नाह— **नाहं परायुरिति** ।। अस्यायमर्थः रुद्रोऽहम् । परायुर्ब्रह्मा । मरीचिमुख्या ऋषयः। रमाऽपि यद्गुणगणान् न जानन्ति यतः तस्मात् तदन्य ईशः कोऽस्तीत्याक्षेपः इति ।। २७ ।।

**वरद**— तत्रैव भागवतस्थं प्रमाणमुदाहरति । यस्मिन्नित्यनेन

[1]"वयं न तात प्रभवाम भूम्नो यस्मिन् परेऽन्येऽप्यजजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमाम ।।'

इति वाक्यं गृहीतम् । अस्यार्थः। हे तात! वयं तत्सुदर्शनं निवारयितुं न समर्थाः। कुतः यस्मिन्परे सर्वोत्तमे भूम्नि परिपूर्णे ईदृशाः वर्तमानब्रह्माण्डसदृशाः अन्येऽपि भूतभविष्यन्तः अजजीवकोशाः अजस्य चतुर्मुखस्य जीवकोशाः जीवनिधानस्थानभूताः ब्रह्माण्डाः सहस्रशोऽपि सृष्टिकाले भवन्ति संहारकाले न भवन्ति । यत्र ब्रह्माण्डेषु वयं सर्वे भ्रमाम इति । नाहं परायुरित्यनेन 'नाहं परायुर्न मरीचिमुख्याः जानन्ति यद्विरचितं खलु सत्वसङ्घाः' इत्यादि विष्णुं प्रति रुद्रवाक्यं उपात्तम् । एतच्च 'एतैस्सुरादिभिः' इत्यत्र प्रमाणम् । अहं रुद्रः यद्गुणगणान् न जानामि परायुर्ब्रह्मापि न जानाति मरीचिमुख्याः ऋषयोऽपि न जानन्ति रमादयोऽपि न जानन्ति । तस्मात्तदन्यो नित्यः स्वतन्त्रः ईशः कोऽस्ति न कोऽपीत्यर्थः ।। २७ ।।

**जना**— यस्मिन्परेऽन्येऽप्यजजीवकोशा इत्यनेन

'वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः।
यस्मिन् परेऽन्येऽप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमाम ।।' इत्येतत् गृह्णाति ।

अस्यार्थः। इदं रुद्रवाक्यं दुर्वाससं प्रति । हे तात वयं तस्य भूम्नः सुदर्शनाद्रक्षितुं न प्रभवाम यतो भूम्नः ईदृशाः मत्सदृशाः काले सृष्टिकाले भवन्ति । काले प्रलयकाले न भवन्ति । यस्मिन्परे हरौ अन्येऽपि भूतभविष्यन्तः सहस्रशः अजजीवकोशा ब्रह्माण्डानि भवन्ति । यत्र येषु ब्रह्माण्डेषु वयं भ्रमाम इत्यर्थः। नाहं परायुरित्यनेन 'नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्वसङ्घाः' इत्येतत् गृह्णाति । जानन्तीत्येतदर्थं पुराणस्थम् । इदं त्रयं 'एतैः सुरादिभिः' इत्यत्र मानम् ।। २७ ।।

**ताम्र**— 'सर्वज्ञ ईश्वरतमः स च सर्वशक्तिः' इत्यत्र नवमस्कन्धवाक्यं पठति— **यस्मिन्निति** ।।

'वयं न तात प्रभवाम भूम्नो यस्मिन् परेऽन्येऽप्यजजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमाम ।।'

इति पूर्वोत्तरश्लोकशेषः। एतैः सुरादिभिरित्युक्तप्रमेयस्य दुर्ज्ञेयत्वात् 'नाहं परायुर्न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्वसङ्घाः' इति भागवतवाक्यमुपक्रम्यार्थतः शेषं पूरयति— **नाहं परायुरिति** ।। यस्मिन्परे यद्विरचितमिति यच्छब्दद्वयस्य तदन्य इति तच्छब्देनान्वयः ।। २७ ।।

---

१. 'वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः । यस्मिन् परेऽन्येऽप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमाम' इति वादिराजीये पाठान्तरम् ।

**जम्बु**— 'ईश्वरतमः स च सर्वशक्तिः' इत्यर्थे प्रमाणमाह— **यस्मिन्निति** ।। अनेन

'वयं न तात प्रभवाम भूम्नो यस्मिन् परेऽन्येऽप्यजीवकोशाः।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमाम ।।'

इति दूर्वाससं प्रति रुद्रवाक्यम् । एतैस्सुरादिभिरित्याद्यर्थे प्रमाणमाह— **नाहं परायुरिति** ।। अनेन 'नाहं परायुर्न मरीचिमुख्याः जानन्ति यद्विरचितं खलु सत्वसङ्घाः' इत्यादिकं दूर्वाससं प्रति महादेववाक्यं सङ्गृहीतम् । अहं रुद्रः यद्गुणगणान् यस्य भगवतः गुणसमूहान् न जानामि परायुर्ब्रह्मापि न जानाति मरीचिमुख्या ऋषयोऽपि न जानन्ति रमादयोऽपि लक्ष्म्याद्या अपि न जानन्ति इति तस्मात् तदन्यो जीवः नित्यः स्वतन्त्रः ईशः स्वामी कोऽस्ति न कोऽपीत्यर्थः ।। २७ ।।

**भारतश्री**— तत्रैव भागवतस्थवाक्यं प्रमाणमुदाहरति— **यस्मिन्निति** ।। यस्मिन् परे परमात्मनि अन्ये ईदृशाः अजजीवकोशाः अजस्य चतुर्मुखस्य जीवकोशाः जीवनिधानस्थानभूताः ब्रह्माण्डाः काले भवन्ति न भवन्ति तस्य नारायणस्य चक्रं निवारयितुं वयं न प्रभवाम इत्यन्वयः । अहं रुद्रः । परायुः ब्रह्मा च । यद्गुणगणान् । न जानामि न जानाति इति यथायोग्यं क्रियाध्याहारः ।। २७ ।।

**'नैवैक एव पुरुषः' 'पुरुषोत्तमोऽसा-**
**वेकः कुतः स पुरुषो' 'यत एव जात्या ।**
**अर्थात् श्रुतेश्च गुणतो निजरूपतश्च**
**नित्यान्य एव कथमस्मि स इत्यपि स्यात्' ।। २८ ।।**

**व्यास**— 'नैवैक'इति 'नैतदिच्छन्ति पुरुषं एकं कुरुकुलोद्वह' इति 'तदभिदा कुतोऽस्य' इत्यत्र, पुरुषाणां बहुत्वे कथं तत्वमसीत्याद्यैक्योक्तिर्घटतेत्यत उक्तं 'बहूनां पुरुषाणां हि यथैका योनिरुच्यते' इति तदर्थं पठितं 'पुरुषोत्तमोऽसावेक' इति हि। ऐक्यश्रुतेर्जीवब्रह्मैक्यमेवार्थः कस्मान्न स्यादित्यतो जीवब्रह्मणोः स्वरूपं निरूप्यायोग्यतया सम्बन्धायोगनिरूपकं

''यत स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।' इति

तदर्थकं वाक्यं पठति 'कुतः स पुरुष' इत्यादिना । स पुरुषः ईश्वरः अयं जीव इति जात्या, स निष्प्रयोजनः अयं सप्रयोजन इत्यर्थतः, 'द्वा सुपर्णा' इत्यादिभेदश्रुतेश्च ईश्वरः सर्वगुणपूर्णः यतो नित्यान्यः भिन्न एव । ततो कुतः कारणात् कथं सोऽस्मीति असंहितो अयुक्तः सम्बन्धः स्यात् । अपि च उपक्रमाद्यन्तरोपपत्तिभिश्च असंहितः सम्बन्धः कथं स्यात् ।। २८ ।।

**वादि**— 'नैवैक एव पुरुष' इत्यनेन

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।।'

---

१. म.भा. २२०-३६ शान्तिपर्वणि ।

इति वाक्यं सङ्गृह्णाति । 'पुरुषोत्तमोऽसावेकः कुतः स पुरुष' इत्यनेन

[१]"बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।।'

इति वाक्यमर्थतो गृह्णाति। 'यत एव जात्या' इत्यनेन

[२]"यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।'

इति मोक्षधर्मवचनं सङ्गृह्णाति । पुरुषाः चेतनाः बहव उत एक एवेति जनमेजयेन प्रश्ने कृते सति, हे कुरुकुलोद्वह । केचित् कुसमयिनः पुरुषमेकमाहुः। पण्डितास्तु एतत् पुरुषैकत्वं नेच्छन्ति मनसापि नेच्छन्ति । वचसा मरणेऽपि न वदन्तीति भावः। किन्तु त्वया पृष्टं पुरुषबहुत्वमेवेच्छन्ति । तर्हि बहूनां तेषां पुरुषाणां साम्यमेव । उत तत्रैकस्याधिक्यमस्तीति राज्ञो हार्दीं शङ्कां परिहरति— **बहूनामिति** ।। यथा बहूनां पुरुषाणां एका पुरुषव्यक्तिर्योनिः उत्पत्तिस्थित्यादेः कारणमुच्यते । 'जन्माद्यस्य यत' इत्यादौ सूत्रकृता व्यासेन 'यतो वा इमानि भूतानि जायन्ते' इति श्रुत्या चोच्यते । तथाहमपि तच्छिष्यत्वात् । विश्वं 'विश प्रवेशन' इति धातोः। सकलजीवानामन्तस्साक्षितया प्रविष्टं तं गुणाधिकं गुणैः सकलगुणैः पुरुषेभ्यः उत्तममाख्यास्यामीति प्रमाणवचनस्यार्थः। एवं च स पुरुष एतादृशो महापुरुष एकः जीवेनैकीभूतः कुतः स्यादिति भारतवाक्यस्य पर्यवसितार्थकथनमाचार्यैः कृतमिति ज्ञेयम् । यतः यतः कारणात् स परमात्मा स्वरूपतः अणुजीवेष्वघटितव्याप्तदेहाख्यस्वरूपतः। जातितः

[३]"अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।।'

इति वचनात् जीवत्वविरुद्धेश्वरत्वजातितः। श्रुतितः [४]"द्वा सुपर्णा' इत्यादिश्रुतितः। अर्थतः जीवेष्वघटितात् स्वशक्त्यैव अवाप्तस्वापेक्षितसकलप्रयोजनसमुदायात् । अन्यः जीवादत्यन्तभिन्नः। अतः अहं सोऽस्मीति असंहितः अनन्वितः, सम्बन्धः तादात्म्यरूपसम्बन्धः कथं स्यात् । इमानि वाक्यानि 'अभिदा कुतोऽस्य' इत्यत्र 'परतमः परमात्स एक' इत्यत्र च प्रमाणम् ।। २८ ।।

**सङ्क**— 'नैतदिच्छन्ति पुरुषं एकं कुरुकुलोद्वह' इत्यादि भारतवाक्यं

'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।' इति च

भारतवाक्यं अभिधा कुतोऽस्य प्राप्येत चेतनगणैरित्युक्तार्थे प्रमाणं सूचयति— **नैवेक इत्यादिना** ।। बहवः पुरुषा न सन्ति किन्तु एकः पुरुष इति पक्षो नोपपद्यते । तत्कथम्? बहवः पुरुषाः सन्त्येव । असौ नारायणः पुरुषोत्तम एक एव । ननु पुरुषोत्तमत्वं जीवस्य किं न स्यादित्यत आह— **कुत इति** ।। यतः स पुरुषोत्तमः पुरुषो जीवः इत्युक्तं तत्र को हेतुरित्यत आह— **यत इति** ।। जात्या जीवजात्या आत्मा परमात्मपरार्थप्रवृत्ति-विलक्षणस्वार्थात् प्रयोजनभेदाच्च, अन्यमीशमित्यादिश्रुतेश्च, परमात्मपूर्णगुणविलक्षणाल्पगुणतः निजरूपतश्च परतन्त्रजीवरूपतश्च यतो नित्यान्य एव अतः स विष्णुरहमस्मीत्यभिन्नतया जीवेन कथं सम्बन्धः स्याद् नारायणे इत्यर्थः ।। २८ ।।

---

१. म.भा. ३६०- १-३ शान्तिपर्वणि । २. म.भा. २२०-३६ शान्तिपर्वणि । ३. गी.ता.२-२० । ४. आ.उ. ३-१-१ ।

**वरद**— नैवेक एवेत्यनेन 'नैतदिच्छन्ति पुरुषम्' इत्यादि भारतवाक्यं उक्तार्थप्रतिपादकमुपात्तम् । एतच्च 'बहवः पुरुषा ब्रह्मन्' इत्यादिप्रश्नस्योत्तरम् । एक एव पुरुष इति मतं न युक्तम् । किन्तु बहवः पुरुषास्तत्रापि असौ हरिः पुरुषोत्तमः सर्वपुरुषोत्तमः। सः पुरुषः पुरुषोत्तमः एकः कुतो न कुतोऽपीत्यर्थः। 'यत एव जात्या' इत्यनेन

'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।' इति मोक्षधर्मवचनम् ।

अभिदा कुतोऽस्येत्यादौ प्रमाणमुदाहृतम् । यत एव कारणात् । यतो जीवगणाद्वा । जात्या ईश्वरत्वजात्या । अर्थात् प्रयोजनात् । श्रुतितो 'द्वा सुपर्णा' इत्यादेः। गुणतः परिपूर्णगुणत्वात् । निजरूपतश्च परममहत्वाधिकरणात् स्वरूपान्निमित्तात् । नित्यान्य एव हरिः। तस्मात्स हरिरहमस्मीत्यभेदबोधः कथं स्यात् । परस्परविरुद्ध-धर्माधिकरणयोः तादात्म्यस्य बाधितत्वादिति भावः ।। २८ ।।

**जना**— 'नैवैक एव पुरुषः पुरुषोत्तमोऽसावेक' इत्यनेन 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इति ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकं' इति वाक्यं गृह्णाति ।

'कुतः स पुरुषो यत एव जात्या' इत्यादिना

'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।' इति मोक्षधर्मवचनम् ।

अभिदा कुतोऽस्येत्यत्र मानम् । अस्यार्थः 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति जनमेजयेन पृष्टे इदमुत्तरं नैतदिच्छन्ति इति तदनुवादः एक एव पुरुषो जीवः नैवेति बहवः पुरुषाश्चेत्तर्हि एकमेवाद्वितीयमित्युक्तिः कथमत आह— **बहूनामिति** ।। यथा शास्त्रादौ बहूनां पुरुषाणां एका योनिः जन्मादिकारणं 'यतो वा इमानि भूतानि जायन्त' इति श्रुतौ [1]'जन्माद्यस्य यतः' इति सूत्रे चोच्यते । तथा तं पुरुषं विश्वव्याप्तं गुणाधिकमेकमाख्यास्याम-त्युत्तरम् । तदनुवादः। असौ पुरुषोत्तम एक इति । जन्यजनकत्वेऽप्यैक्यं कुतो नेत्यत आह— **यतः स्वरूपत इति** ।। तदनुवादः कुत इति । स जीवः पुरुष एव हरिरेवेति कुतः। न कुतोऽपीत्यर्थः। तत्र हेतुर्यतः स ईश्वरोऽयं जीव इति जात्या, सः निष्प्रयोजनः अयं सप्रयोजनः इत्यर्थात्, [2]'अन्यमीशं' इति 'द्वा सुपर्णे'त्यादि श्रुतेः, स अनन्तगुण अयं अल्पगुण इति गुणतः, स्वतन्त्रः अयं परतन्त्रः इति निजरूपतः, नित्यान्यः भिन्न एवातः सोऽस्मीत्यपि वाक्यमपि कथं स्यात्। युक्तं न स्यादित्यर्थः ।। २८ ।।

**ताम्र**— अभिदा कुतोऽस्येत्युक्त्या भेदाभावे

'नैतदिच्छन्ति पुरुषैमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।।'

इति मोक्षधर्मवाक्यं प्रमाणयति— **नैवेति** ।। नन्वेकः पुरुषो न यदुक्तं तत्कुतः स्यात् । [3]'अद्वैतः सर्वभावानां' इत्यादिष्वैक्योक्तेः इत्यतः स्वतन्त्राद्वैतपरा श्रुतिरित्याह— **पुरुषोत्तमोऽसावेक इति** ।। प्रतीत एवार्थः किन्न स्यादित्यत आह— **पुरुषोत्तम इति** ।। यतोऽसौ क्षराक्षरपुरुषोत्तमतयोक्तः अतस्तदैक्यं कुत इत्यर्थः। एतेन

१. ब्र.सू. १-१-२ । २. आ.उ. ३-१-२ । ३. मा.उ. १-२-२ ।

बहूनां पुरुषाणां हीत्यर्थतात्पर्यमुक्तं भवति । ननु 'अहं ब्रह्मास्मि' इत्यादिश्रुतिसत्वादभिदा कुतोऽस्य प्राप्येतेति ऐक्यप्रमाणाभावकथनमयुक्तमित्याक्षेपे 'चेतनगणैः सततास्वतन्त्रैः' इत्यादिना अहं ब्रह्मास्मीत्यादेर्योग्यता–विरहान्नैक्यार्थकत्वमित्युक्तम् । तत्र प्रमाणमाह— **पुरुषोत्तमोऽसावेक इत्यादिना** ।। स पुरुषो जीवः। ईश्वरो ईश्वरत्वजातिविशिष्टः। स्वयं जीवत्वजातिविशिष्ट इति जात्या भगवानतिपरिपूर्णतमानन्तानवद्य-सान्द्रस्वस्वरूप–भूतातिविचित्रानुभूयमानानन्दघनविग्रहतया न प्रयोजनवान् स्वयं सप्रयोजनत्वादित्यर्थात् । जीवः स्वार्थं प्रवृत्तः ईशः परार्थं प्रवृत्त इति प्रयोजनभेदादिति *न्यायरत्नावल्यां श्रीपद्मनाभतीर्थभट्टारकैस्तत्त्वनिर्णयटीकोक्तो* ज्ञेयः। अर्थतः अर्थापत्तितश्च । स्वातन्त्र्यान्यथानुपपत्तेः परतन्त्राज्जीवाद्भिन्न एव' इति *नारायणपण्डिताचार्यैः तत्त्वमञ्जर्युक्तार्थो* ज्ञेयः। 'द्वा सुपर्णा सयुजा सखाया' इत्यादि भेदश्रुतेः, सोऽनन्तगुणोऽयमल्पगुण इति गुणतः, सोऽनन्तपरिमाण इति यः स्वयमणुरिति निजरूपतश्च भगवता नित्यमन्य एव यस्मात्तस्मात्सोऽहमस्मीति योग्यतारहितः सम्बन्धः कथं स्यात् । तथा च 'अहं ब्रह्मास्मि' इत्यादीनां प्रतीतान्वययोग्यताविरहात् पुरुषोत्तमोऽसौ जीवेन एकः कुतः प्रमाणादवसीयत इत्यर्थः। एतेन

'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय............... ।।'

इत्यादिना मोक्षधर्मे ऐक्यस्य 'अहं ब्रह्मास्मि' इत्यादिशास्त्रतात्पर्यापरिज्ञानमूलकत्वमुक्त्वा

'यतः स्वरूपतश्चाऽन्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।' इति

प्रतीतान्वये योग्यताराहित्यमुक्तम् । तदुपात्तमिति ज्ञेयम् ।। २८ ।।

**जम्बु**— अभिदा कुतोऽस्येत्यत्र प्रमाणमाह— **नैवैक एव पुरुष इति** ।। अनेन

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यन्यः पुरुषश्रेष्ठः तं भवान्वक्तुमर्हति ।।'

वैशम्पायनः

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।।'

इति भारतमोक्षधर्मस्थवाक्यं सङ्गृहीतम् । पुरुषोत्तमोऽ सौ जीवेनैवैकः कुतः प्रमाणादवसीयत इत्यर्थः। एतेन

'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः।
शास्त्रतत्वमविज्ञाय....................... ।।'

इत्यादिना मोक्षधर्मे ऐक्यस्य 'अहं ब्रह्मास्मि' इत्यादिशास्त्रतात्पर्यापरिज्ञानमूलकत्वमुक्त्वा

'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।'

इति प्रतीतान्वययोग्यताराहित्यमुक्तं तदुपात्तमिति *श्रीनिवासभट्टीये* ।। २८ ।।

---

१. वि.त.नि. प्रथमपरिच्छेदः ।

**भारतश्री**— 'नैवैक एव पुरुष' इत्यनेन 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इति भारतवाक्यमुपादत्ते । एतच्च 'बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।' इति प्रश्नस्य उत्तरम् । एक एव पुरुष इति मतं न युक्तम् । किन्तु पुरुषाः बहवः। तत्र पुरुषोत्तम एक एव इति योजना । कुतः न कुतोऽपीत्यन्वयः । स पुरुषः पुरुषोत्तमः कुत स पुरुषः जीवेन एकः स्यादिति योज्यम् । जात्यापि ईश्वरत्वेन, अर्थात् जगत्स्रष्टृत्वादिप्रयोजनात्, श्रुतेः द्वा सुपर्णेत्यादेः, गुणतः अजन्तत्वात् निजरूपतः परममहत्त्वाधिकरणत्वात् । तस्मात् स हरिरहमस्मीति अभेदबोधः कथं स्यादित्यर्थः ।। २८ ।।

**'सर्वोत्तमो हरिरिदं तु तदाज्ञयैव**
**[१]चेत्तुं क्षमं स तु हरिः परमः स्वतन्त्रः।**
**पूर्णाव्ययागणितनित्यगुणार्णवोऽसौ'**
**इत्येव वेदवचनानि परोक्तयश्च ।। २९ ।।**

**व्यास**— सर्वोत्तम इति मानान्तरम् । इत्येवमेवार्थं प्रतिपादयन्तीति शेषः ।। २९ ।।

**वादि**— 'सर्वोत्तमो हरिरिदं तु तदाज्ञयैव' इति पुञ्जीभूयोक्तसमस्तार्थे प्रमाणान्तरम् । चेतुं 'चिती संज्ञाने' इति धातोः वेत्तुम् । 'इत्येव वेदवचनानि परोक्तयश्च' इत्यत्र परस्य परमात्मनः उक्तयः पञ्चरात्रभारतपुराणाद्याश्च । इत्येव अनेन प्रकारेणैव वदन्तीति प्रमाणवचनात्तस्यैव निगमनम् ।। २९ ।।

**सङ्क**— उक्तार्थमेव प्रमाणैः दृढीकरोति— **सर्वोत्तम इति** ।। चेतुं चेष्टितुं क्षमं शक्तमित्यर्थः। अनेन विष्णोः सर्वोत्तमत्वादिलक्षणवैशिष्ट्येन जीवाद्भेदो दर्शितो वेदितव्यः। अर्थोऽयमेवेत्यादिनोक्तमुपसंहरति— **इत्येवेति** ।। परोक्तयो विष्णूक्तयः ।। २९ ।।

**वरद**— तस्मादुक्तार्थस्य प्रामाणिकत्वात् नोपेक्षणीयत्वमित्युपसंहरति— **सर्वोत्तम इति** ।। हरिः सर्वोत्तमः। इदं विश्वं तस्य हरेराज्ञयैव चेत्तुं ज्ञातुं क्षमं समर्थम् । स हरिः परमत्वात् स्वतन्त्रः स्वाधीनज्ञानादिप्रवृत्तिकः। तस्मात् पूर्णैरव्ययैरगणितैर्नित्यगुणैरर्णवः पूर्णोऽसौ हरिः इत्येव एतदर्थप्रतिपादकान्येव अशेषवेदवचनानि । तथा परस्य श्रीवेदव्यासस्य ब्रह्मसूत्राद्युक्तयश्चैतदर्थप्रतिपादका एवेत्यर्थः ।। २९ ।।

**जना**— उक्तसर्वार्थसङ्ग्राहकं प्रमाणमुदाहरति— **सर्वोत्तम इति** ।। हरिः सर्वोत्तमः इदं जगत्तस्य हरेः आज्ञयैव चेतुं चेष्टितुं वेत्तुं वा क्षमं समर्थम् । स तु स एव । हरिः परमः स्वतन्त्रः असौ । पूर्णाः व्याप्ताः। अव्ययाः ह्रासरहिताः। अगणिता असङ्ख्याताः। नित्याः ये गुणास्तेषां अर्णव इति पृथगन्वयः। चतुष्टयं अर्थोऽयं इत्यादिनोक्तमर्थं उपसंहरति— **इतीति** ।। इत्येवानेनैव प्रकारेण। परस्य व्यासस्य उक्तयश्च प्रतिपादयन्तीति शेषः। इत्येव एतमेवार्थं इति वा ।। २९ ।।

१. 'चेतुम्' इति वादिराजीये जनार्दनीये च पाठान्तरम् ।

**ताम्र**— उक्तं सर्वं पिण्डीकृत्य प्रमाणेनाह— **सर्वोत्तम इति** ।। अव्ययत्वं वृद्धिह्रासराहित्यम् । इत्येव एतमर्थमेव प्रतिपादयन्तीति शेष: ।। २९ ।।

**जम्बु**— उक्तसर्वार्थसङ्ग्राहकं प्रमाणमुदाहरति— **सर्वोत्तम इति** ।। हरि: सर्वोत्तम: इदं विश्वं तस्य हरेराज्ञयैव चेत्तुं चेष्टितुं वेत्तुं वा क्षमं समर्थम् । स तु स एव। हरि: परमस्वतन्त्र: स्वाधीनज्ञानादिप्रवर्तक: तस्मात्पूर्णाव्ययागणित-नित्यसुखार्णव:। पूर्णाश्च ते अव्यया: वृद्ध्याद्यायासरहिताश्च ते अगणिता: सङ्ख्यातुमशक्याश्च ते नित्याश्च ते गुणाश्च पूर्णाव्ययागणितनित्यगुणा: तैरर्णव इवार्णव: असौ हरिरित्येव अनेनैव प्रकारेण इत्येव एतदर्थप्रतिपादकान्येवाशेषवेदवचनानि तथा परस्य श्रीवेदव्यासस्य ब्रह्मसूत्राद्युक्तयश्चैतदर्थप्रतिपादका एवेत्यर्थ: ।। २९ ।।

**भारतश्री**— उक्तार्थस्य प्रामाणिकत्वात् नोपेक्षणीयमित्युपसंहरति— **सर्वोत्तम इति** ।। चेत्तुं वेत्तुमिति वा पाठ:। उभयत्रापि ज्ञातुमित्यर्थ: । परोक्तय: परस्य नारायणस्य उक्तय: पौरुषेया: इत्यर्थ: ।। २९ ।।

**ऋगादयश्च चत्वार: [१]पञ्चरात्रं च भारतम् ।**
**मूलरामायणं ब्रह्मसूत्रं मानं स्वत: स्मृतम् ।। ३० ।।**

**व्यास**— नैतैर्वाक्यैर्विष्णो: सर्वोत्तमत्वादि सर्वसदागमप्रतिपाद्यमिति सिध्यति। तेषां यथाकथञ्चिदन्यथयितुं शक्यत्वात् इत्यत: प्रामाण्यस्य स्वतस्त्वेन असति बाधके प्रतीतार्थस्य त्यागायोगात् । सर्वशास्त्रप्रतिपाद्योऽयमेवार्थ इत्यत्र प्रमाणं पठति— **ऋगादय इति** ।। प्रामाण्यस्य स्वतस्त्वं नाम येन ज्ञायते उत्पद्यते वा तेन तत्प्रामाण्यस्यापि ज्ञानं उत्पत्तिश्च । स्वत: संवादाभावेऽपि मानं स्मृतम् । तथा चैतेषां वाक्यानां संवादाभावेनाप्रामाण्यशङ्का परास्ता ।। ३० ।।

**वादि**— दोषप्रतिरोधाभावे ज्ञानग्राहक: साक्षी प्रामाण्यमपि गृह्णात्येव । प्रामाण्यग्रहस्य स्वतस्त्वाङ्गीकारात्। अन्यथा कुम्भकारानीतनूतनभाण्डेषु पाकाख्यपरीक्षापर्यन्तमविश्वासप्रसङ्गात् । दोषश्चापौरुषेये वेदे न शङ्कितुमपि शक्य:। भ्रमप्रमादादिवक्तृदोषाभावे शब्ददोषस्य क्वाप्यदर्शनात् । अन्यथाप्तवाक्येऽपि दोषशङ्का-कलङ्कस्योत्सादनोपायाभावात् वक्तृदोषाभावेन हि तत्रापि दोषशङ्का निवार्या । एवं चापौरुषेयत्वेन वक्तृदोषरहिते वेदे दोषशङ्का गर्भस्रावेणैव गता । वेदानुकूलग्रन्थेषु तदनुकूलत्वादेव न दोषशङ्कावकाश:। तस्मात् वेदे

---

१. तन्त्राणां चैव सर्वेषां वक्ता नारायण: स्वयम्। अनुग्रहार्थं भक्तानां श्रावयामास च स्वयम्। श्रोतारो मूर्तिभेदाश्च मुनयश्च पितामह:। प्रयोजनं च शास्त्रस्य मोक्ष: प्रकृतिदुर्लभ:। अभिधेयं भगवत: समाराधनमुत्तमम्। सम्बन्धोऽपीष्यते सद्भि: साध्यसाधनलक्षण:। श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत्। सर्गे सर्गेऽप्यविच्छिन्नं देवदेवस्य शासनात्। ...। सत्यं सत्यं पुन: सत्यं उद्धृत्य भुजमुच्यते। वेदशास्त्रात्परं नास्ति न दैवं केशवात् परम्।' इति पाद्मसंहितायां ज्ञानपादे प्रथमाध्याये/८८-९६ ।। 'रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। तेनेदं पञ्चरात्रञ्च प्रवदन्ति मनीषिण:।' 'रात्रिरज्ञानमित्युक्तं पञ्चेत्यज्ञाननाशकम्। तच्छास्त्रं पञ्चरात्रं स्यादन्वर्थस्यानुरोधत:' इति श्रीप्रश्नसंहिता.२अ/४० । वेदानां स्वत: प्रामाण्यविषये स्कान्दे/सूतसंहिता/१/३५'वेदा: प्रमाणं प्रथमं स्वत एव तत: परम् । स्मृतयश्च पुराणानि' ।

वैदिकग्रन्थेषु च प्रामाण्यस्य स्वतस्त्वात् नोक्तवक्ष्यमाणवाक्येषु शङ्का कार्येत्यत्र प्रमाणवाक्यान्येव पठति— **ऋगादयश्चेत्यादिना** ।। ३० ।।

**सङ्क**— ननु वेदवचनादीनां प्रामाण्याभावात् कथमुक्तार्थनिर्णय इत्याशङ्क्य परिहारार्थं भविष्यत्पर्ववचनं उक्तानुक्तार्थप्रकाशकप्रमाणमाह— **ऋगादय इति** ।। न तावद् वेदानामप्रामाण्यम्। [1]''वाचा विरूप नित्यया' इत्यादिश्रुतिप्रामाण्यात् । अपौरुषेयत्वेन निर्दोषत्वावगमात् । तर्हि पञ्चरात्रादीनां पौरुषेयत्वेनाशङ्कितदोषाणां अप्रामाण्यमिति चेत् । मैवम् । [2]''इतिहासपुराणः पञ्चमो वेदानां वेद' इति वेदत्वेन गृहीतत्वात् निर्दोषत्वेन प्रामाण्यावगमात्तेषाम् । ननु अपौरुषेयत्वेऽपि वेदस्याप्रामाण्यं स्यात् । संवादाभावात् । संवादाधीनं हि प्रामाण्यं लोके दृश्यत इत्यत आह— **मानं स्वतः स्मृतमिति** ।। स्वत एव प्रामाण्यमङ्गीकर्तव्यं तेषां न संवादाधीनत्वेन । अन्यथा तत्संवादकप्रमाणस्य अन्यसंवादकप्रमाणाधीनत्वेन तत्संवादकप्रमाणस्य अन्यसंवादकप्रमाणाधीनत्वं तस्याप्येवं तस्याप्येवमित्यनवस्था स्यादित्याद्यूहनीयम् । 'निर्दोषत्वाच्च वेदानां वेदोक्तं ग्राह्यमेव हि' इति वक्ष्यमाणत्वात् अस्याभिप्रायस्यावगमादित्यर्थः ।। ३०-३१ ।।

**वरद**— ननु विष्णोः सर्वोत्तमत्वादिकं वेदपञ्चरात्रादिप्रतिपाद्यत्वात् प्रामाणिकत्वेन नोपेक्षणीयमित्युक्तम् । तत्तदा स्याद्यदि वेदादीनां प्रामाण्यं स्यादित्यतो वेदादिप्रामाण्यं भविष्यत्पर्ववचनेन साधयति— **ऋगादय इति** ।। ऋगादयः ऋग्यजुःसामाथर्वभेदभिन्नाश्चत्वारो वेदाः। पञ्चरात्रं नारायणरूपेण कृतम् । भारतं व्यासनिर्मितम् । मूलरामायणं ब्रह्मसूत्रं च स्वत एव मानं संवादनिरपेक्षमेव प्रमाणं स्मृतमित्यर्थः ।। ३० ।।

**जना**— नैतैर्वाक्यैर्विष्णोः सर्वोत्तमत्वादि सदागमप्रतिपाद्यमिति सिद्ध्यति । तेषां अन्यथापि नेतुं शक्यत्वात् । प्रतीतार्थे प्रामाण्यायोगादित्यत उक्तशङ्कानिवर्तकमुक्तानुक्तार्थप्रतिपादकं भविष्यत्पर्वनामकोपपुराणवचनं उदाहरति— **ऋगादय इति** ।। ऋगादयः स्वतो मानं संवादनिरपेक्षप्रमाणं स्मृतम् । संवादनिरपेक्षता च अपौरुषेयत्वेन । अपौरुषेयत्वं च 'वाचा विरूप नित्यया' इति श्रुतेः सिद्धम् । पञ्चरात्रादीनां तु संवादनिरपेक्षत्वं च 'इतिहासपुराणः पञ्चमो वेदानां वेद' इति श्रुतिसिद्धम् । इतिहासशब्देन पञ्चरात्रादित्रितयं ग्राह्यम् ।

[3]''पञ्चरात्रं भारतं च मूलरामायणं तथा ।
इतिहास इति प्रोक्तो ब्रह्माद्यं च पुराणकम् ।।'

इति प्रकाशिकावचनात् । अत एव व्याससमृतौ—

[4]'वेदाश्चैवेतिहासाश्च पुराणं भागवतं तथा ।
मूलप्रमाणमुद्दिष्टं मीमांसा चोत्तरा तथा ।।'

इति बहुवचनेन निर्देशश्च कृतः। सूत्रस्य निर्णायकत्वान्नान्यापेक्षा। वराहपुराणे च उपपुराणगणनायां भविष्यत्पर्वेति पुराणनाम कथितमस्ति ।। ३० ।।

**ताम्र**— ननु नैतैर्वाक्यैर्भगवत्सर्वोत्तमत्वादि सर्वसदागमप्रतिपाद्यमिति सिद्ध्यति । तेषामन्यथयितुं शक्यत्वादित्यतः प्रामाण्यस्य स्वतस्त्वेन असति बाधके प्रतीतार्थत्यागायोगात् सर्वशास्त्रप्रतिपाद्योऽयमेवार्थ

---

१. ऋ.सं. ८-७५-६ । २. छा.उ. ७-१-२ । ३. बृ.भा. ३-५, अव्याकृतब्राह्मणम् । ४. बृ.भा. ३-५, अव्याकृतब्राह्मणम् ।

इत्याह— **ऋगादय इति** ।। उत्पत्तौ ज्ञप्तौ च फलसंवादनिरपेक्षनिर्दोषतयैव प्रमाणं स्मृतम् । करणप्रामाण्यस्य ज्ञप्तौ परतस्त्वमङ्गीकृतमिति चेत् । [1]''तेषामपि ज्ञानजनकत्वं येन गृह्यते तेनैव यथार्थज्ञानजनकत्वस्य ग्राह्यत्वात् स्वतस्त्वम्' इति सुधायां स्वतस्त्वस्याप्यङ्गीकारात् । करणस्वरूपस्य प्रत्यक्षादिवेद्यत्वं प्रामाण्यस्या- नुमानवेद्यत्वमिति परतस्त्वं ज्ञानजनकत्वस्यातीन्द्रियत्वेन तद्विशिष्टकरणस्य तत्प्रामाण्यस्य चानुमानवेद्यत्वे- स्वतस्त्वमिति विवक्षाभेदेनोभयाविरोधादिति दिक् ।। ३०-३१ ।।

**जम्बु**— ननु एतैर्वाक्यैर्विष्णोस्सर्वोत्तमत्वादि न सिद्ध्यति प्रतीतार्थं परित्यज्य तेषां यथाकथञ्चिदन्यथा योजयितुं शक्यत्वादित्याशङ्क्य प्रामाण्यस्य स्वतस्त्वेन असति बाधके प्रतीतार्थस्यान्यर्थायोगात् सर्वशास्त्र- प्रतिपाद्योऽयमेवार्थ इत्यत्र प्रमाणं पठति— **ऋगादय इति** ।। ननु कुत्रचित् त्रय इत्युक्तं कुत्रचिच्चत्वारेति कथं निर्णय इत्यत आह— **चत्वार इति** ।। [2]''ऋग्यजुःसामाथर्वाणां वाक्यान् वेदान् पूर्वादिभिर्मुखैः' इति भागवतोक्तेः। पञ्चरात्रं नराग्रजेन नारायणेन कृतम् । मूलरामायणं हयग्रीवरूपेण कृतम्। उत्पत्तौ ज्ञप्तौ च फलसंवादनिरपेक्षमेव मानम् । तदुक्तम् —

[3]''ऋग्यजुस्सामाथर्वाश्च मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।
यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ।।
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।।' इति

ब्रह्मसूत्रं च स्वतः मानं स्मृतं ब्रह्मसूत्रस्य निर्णायकत्वान्नान्यापेक्षा इति ***नारायणाध्वरीये*** ।। ३० ।।

**भारतश्री**— ऋगादीनां प्रामाण्ये सर्वमुक्तमुपपन्नं स्यात् इत्यतः तत्प्रामाण्यं साधयति— **ऋगादय इति** ।। स्वतो मानं संवादनिरपेक्षं मानम् ।। ३०-३१ ।।

**अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ।**
**एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन ।। ३१ ।।**

**व्यास**— कथञ्चन कालपुरुषव्यवस्थयापि ।। ३१ ।।

**वादि**— प्रत्यक्षे त्वतिदूरत्वादिदोषशङ्काभावे स्वतः प्रामाण्यग्रहमभिनवमृद्दण्डचक्रादिषु प्रागेव विश्वस्य घटादिकं कुर्वन्कुम्भकार एव साधयिष्यति । किं मया तत्र प्रयतितव्यमिति स्मृतेरभिप्रायः ।। ३१ ।।

**अभिनव**— तत्रैव 'अविरुद्धं तु' इति श्लोकः । तस्यार्थः यत् अस्य ऋगादेः तु सर्वात्मना अविरुद्धं तत्तु तदेव प्रमाणम् । यत् अन्यथाभूतं ऋगादिविरुद्धं तत् प्रमाणं न च नैव । एतदेव विवृणोति— **एतदिति** ।। यत्

---

१. न्यायसुधा ९०२ पत्रम् । २. भा. ३-१३-३७ । ३. सू.भा. २-१-५ ।

एतद्विरुद्धं ऋगादिविरुद्धं तत् कथञ्चन देशकालपुरुषभेदतोऽपि मानं न तु नैव स्यादिति । एतेन अन्यथाभूतमिति वक्तव्यम् अन्यथेति कथनमयुक्तमिति दूषणं परास्तम् । भूतमित्यस्याध्याहार इत्यभ्युपगमात् । एतेन एतद्विरुद्धमित्येतत् तच्च नान्यथेत्यनेन पुनरुक्तमिति दूषणं परास्तम् । कथञ्चनेत्यधिकं वक्तुं एतद्विरुद्धमिति पुनरुक्तमित्यङ्गीकारात् ।। ३१ ।।

**वरद**— यत्तु अस्य ऋगादे: अविरुद्धं तदपि प्रमाणम् । नान्यथा अप्रमाणमिति न । किन्तु प्रमाणमेवेत्यर्थ:। एतस्य ऋगादे: विरुद्धं यत्स्यात्तन्मानं कथञ्चन न भवतीत्यर्थ: ।। ३१ ।।

**जना**— अस्योक्तप्रामाण्यस्य ऋगादिसमूहस्य । यदविरुद्धं तत्तु तदेव । प्रमाणं च प्रमाणमेव । अन्यथा प्रमाणं न । एतेषां पूर्वोक्तानां ऋगादीनां विरुद्धम् । कथञ्चन कालपुरुषव्यवस्थयापि । न तु स्यान्नैव स्यात् ।। ३१ ।।

**जम्बु**— अस्योक्तप्रामाण्यस्य ऋगादिसमुदाये यदविरुद्धं तत्तु तदेव प्रमाणं प्रमाणमेव । अन्यथा प्रमाणं न । तदेव विवृणोति— **एतदिति** ।। एतेषु पूर्वोक्तानां ऋगादीनां विरुद्धं यत् पाशुपतादि तत् मानं कथञ्चन कालपुरुषव्यवस्थयापि न तु स्यान्नैव स्यात् । सदागमानां बहुत्वाद्दुरागमानामल्पत्वादिति भाव:। तदुक्तं बृहद्भाष्ये—

[1]"शतकोटय: पञ्चरात्रं पुराणं तावदेव च ।
रामस्य चरितं तावत्तावदन्यच्च सर्वश: ।।
अनन्ताश्च तथा वेदा: साङ्गोपाङ्गाश्च सर्वश:।
सर्वाधिक्यं यत्र विष्णोस्तात्पर्यात्समुदीर्यते ।।
विंशदेव सहस्राणि श्लोकानां समुदीरितम् ।
बार्हस्पत्यं तथा बौद्धं भावाभावमतं तथा ।।
शिवशक्त्यादिकं यच्च किञ्चित्प्रामाण्यसंयुतम् ।
त्रिंशत्कोट्यैव तत्सर्वमतो मानं न तत्स्मृतम् ।।
बहुमानविरुद्धं यत्र तन्मानं विदो विदु: ।।' इति *नारायणाध्वरीये* ।। ३१ ।।

**वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वत:।**
**प्रमाणान्येव मन्वाद्या: स्मृतयोऽप्यनुकूलत: ।। ३२ ।।**

**व्यास**— किं तदविरुद्धं इति जिज्ञासायामाह— **वैष्णवानीति** ।। ३२ ।।

**वादि**— तर्हि भारतपञ्चरात्रादिपौरुषेयग्रन्थवत् वैष्णवपुराणानां वैष्णवस्मृतीनां च सङ्ग्राहकप्राचीनवाक्ये कुतो न सङ्ग्रह इति चोद्यं परिहरति— **वैष्णवानीति** ।। पुराणानां स्मृतीनां च सर्वत्र प्रामाण्याभावात् न पञ्चरात्रादिभि: सह पाठ इति भाव:। पञ्चरात्रेषु वैष्णवपुराणेषु च प्रतिपाद्यमानविष्णुसर्वोत्तमत्वादेरर्थस्यैकत्वात्

---

१. बृ.भा. ३-५ अव्याकृतब्राह्मणे ।

इत्याह— **ऋगादय इति** ।। उत्पत्तौ ज्ञप्तौ च फलसंवादनिरपेक्षनिर्दोषतयैव प्रमाणं स्मृतम् । करणप्रामाण्यस्य ज्ञप्तौ परतस्त्वमङ्गीकृतमिति चेत् । [1]"तेषामपि ज्ञानजनकत्वं येन गृह्यते तेनैव यथार्थज्ञानजनकत्वस्य ग्राह्यत्वात् स्वतस्त्वम्' इति सुधायां स्वतस्त्वस्याप्यङ्गीकारात् । करणस्वरूपस्य प्रत्यक्षादिवेद्यत्वं प्रामाण्यस्या– नुमानवेद्यत्वमिति परतस्त्वं ज्ञानजनकत्वस्यातीन्द्रियत्वेन तद्विशिष्टकरणस्य तत्प्रामाण्यस्य चानुमानवेद्यत्वे- स्वतस्त्वमिति विवक्षाभेदेनोभयाविरोधादिति दिक् ।। ३०-३१ ।।

**जम्बु**— ननु एतैर्वाक्यैर्विष्णोस्सर्वोत्तमत्वादि न सिद्ध्यति प्रतीतार्थं परित्यज्य तेषां यथाकथञ्चिदन्यथा योजयितुं शक्यत्वादित्याशङ्क्य प्रामाण्यस्य स्वतस्त्वेन असति बाधके प्रतीतार्थस्यान्यर्थायोगात् सर्वशास्त्र– प्रतिपाद्योऽयमेवार्थ इत्यत्र प्रमाणं पठति— **ऋगादय इति** ।। ननु कुत्रचित् त्रय इत्युक्तं कुत्रचिच्चत्वारेति कथं निर्णय इत्यत आह— **चत्वार इति** ।। [2]"ऋग्यजुःसामाथर्वाणां वाक्यान् वेदान् पूर्वादिभिर्मुखैः' इति भागवतोक्तेः। पञ्चरात्रं नराग्रजेन नारायणेन कृतम् । मूलरामायणं हयग्रीवरूपेण कृतम्। उत्पत्तौ ज्ञप्तौ च फलसंवादनिरपेक्षमेव मानम् । तदुक्तम् —

[3]"ऋग्यजुस्सामाथर्वाश्च मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।
यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः ।।
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।।' इति

ब्रह्मसूत्रं च स्वतः मानं स्मृतं ब्रह्मसूत्रस्य निर्णायकत्वान्नान्यापेक्षा इति ***नारायणाध्वरीये*** ।। ३० ।।

**भारतश्री**— ऋगादीनां प्रामाण्ये सर्वमुक्तमुपपन्नं स्यात् इत्यतः तत्प्रामाण्यं साधयति— **ऋगादय इति** ।। स्वतो मानं संवादनिरपेक्षं मानम् ।। ३०-३१ ।।

**अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ।**
**एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन ।। ३१ ।।**

**व्यास**— कथञ्चन कालपुरुषव्यवस्थयापि ।। ३१ ।।

**वादि**— प्रत्यक्षे त्वतिदूरत्वादिदोषशङ्काभावे स्वतः प्रामाण्यग्रहमभिनवमृद्दण्डचक्रादिषु प्रागेव विश्वस्य घटादिकं कुर्वन्कुम्भकार एव साधयिष्यति । किं मया तत्र प्रयतितव्यमिति स्मृतेरभिप्रायः ।। ३१ ।।

**अभिनव**— तत्रैव 'अविरुद्धं तु' इति श्लोकः । तस्यार्थः यत् अस्य ऋगादेः तु सर्वात्मना अविरुद्धं तत्तु तदेव प्रमाणम् । यत् अन्यथाभूतं ऋगादिविरुद्धं तत् प्रमाणं न च नैव । एतदेव विवृणोति— **एतदिति** ।। यत्

१. न्यायसुधा ९०२ पत्रम् । २. भा. ३-१३-३७ । ३. सू.भा. २-१-५ ।

एतद्विरुद्धं ऋगादिविरुद्धं तत् कथञ्चन देशकालपुरुषभेदतोऽपि मानं न तु नैव स्यादिति । एतेन अन्यथाभूतमिति वक्तव्यम् अन्यथेति कथनमयुक्तमिति दूषणं परास्तम् । भूतमित्यस्याध्याहार इत्यभ्युपगमात् । एतेन एतद्विरुद्धमित्येतत् तच्च नान्यथेत्यनेन पुनरुक्तमिति दूषणं परास्तम् । कथञ्चनेत्यधिकं वक्तुं एतद्विरुद्धमिति पुनरुक्तमित्यङ्गीकारात् ।। ३१ ।।

**वरद—** यत्तु अस्य ऋगादेः अविरुद्धं तदपि प्रमाणम् । नान्यथा अप्रमाणमिति न । किन्तु प्रमाणमेवेत्यर्थः। एतस्य ऋगादेः विरुद्धं यत्स्यात्तन्मानं कथञ्चन न भवतीत्यर्थः ।। ३१ ।।

**जना—** अस्योक्तप्रामाण्यस्य ऋगादिसमूहस्य । यदविरुद्धं तत्तु तदेव । प्रमाणं च प्रमाणमेव । अन्यथा प्रमाणं न । एतेषां पूर्वोक्तानां ऋगादीनां विरुद्धम् । कथञ्चन कालपुरुषव्यवस्थयापि । न तु स्यान्नैव स्यात् ।। ३१ ।।

**जम्बु—** अस्योक्तप्रामाण्यस्य ऋगादिसमुदाये यदविरुद्धं तत्तु तदेव प्रमाणं प्रमाणमेव । अन्यथा प्रमाणं न । तदेव विवृणोति— **एतदिति** ।। एतेषु पूर्वोक्तानां ऋगादीनां विरुद्धं यत् पाशुपतादि तत् मानं कथञ्चन कालपुरुषव्यवस्थयापि न तु स्यान्नैव स्यात् । सदागमानां बहुत्वाद्दुरागमानामल्पत्वादिति भावः। तदुक्तं बृहद्भाष्ये—

"[1]शतकोटयः पञ्चरात्रं पुराणं तावदेव च ।
रामस्य चरितं तावत्तावदन्यच्च सर्वशः ।।
अनन्ताश्च तथा वेदाः साङ्गोपाङ्गाश्च सर्वशः।
सर्वाधिक्यं यत्र विष्णोस्तात्पर्यात्समुदीर्यते ।।
विंशदेव सहस्राणि श्लोकानां समुदीरितम् ।
बार्हस्पत्यं तथा बौद्धं भावाभावमतं तथा ।।
शिवशक्त्यादिकं यच्च किञ्चित्प्रामाण्यसंयुतम् ।
त्रिंशत्कोट्यैव तत्सर्वमतो मानं न तत्स्मृतम् ।।
बहुमानविरुद्धं यत्र तन्मानं विदो विदुः ।।' इति ***नारायणाध्वरीये*** ।। ३१ ।।

**वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वतः।**
**प्रमाणान्येव मन्वाद्याः स्मृतयोऽप्यनुकूलतः ।। ३२ ।।**

**व्यास—** किं तदविरुद्धं इति जिज्ञासायामाह— **वैष्णवानीति** ।। ३२ ।।

**वादि—** तर्हि भारतपञ्चरात्रादिपौरुषेयग्रन्थवत् वैष्णवपुराणानां वैष्णवस्मृतीनां च सङ्ग्राहकप्राचीनवाक्ये कुतो न सङ्ग्रह इति चोद्यं परिहरति— **वैष्णवानीति** ।। पुराणानां स्मृतीनां च सर्वत्र प्रामाण्याभावात् न पञ्चरात्रादिभिः सह पाठ इति भावः। पञ्चरात्रेषु वैष्णवपुराणेषु च प्रतिपाद्यमानविष्णुसर्वोत्तमत्वादेरर्थस्यैकत्वात्

१. बृ.भा. ३-५ अव्याकृतब्राह्मणे ।

**पञ्चरात्रात्मकत्वत** इत्युक्तम् । अर्थैक्यात् शब्देऽप्यैक्यव्यवहार इति भावः। वैष्णवपुराणस्मृतीनां सङ्गृहीतत्वात् 'अविरुद्धं तु यत्त्वस्य' इत्यनेन किं सङ्गृहीतमिति न शङ्कनीयम् । अवैष्णवपुराणादिषु विद्यमानवेदानुकूलवाक्याना-मेतदनुकूलभाष्यानुव्याख्यानादिशिष्टकृतग्रन्थानां च सङ्ग्राह्यत्वसूचनाय सार्थक्यात् । अनुकूलतः अनुकूलत्वात् ।। ३२ ।।

**सङ्क**— ननु पञ्चरात्रपुराणानां सर्वेषामपि प्रामाण्यात् पञ्चरात्रादिभिः सहपाठः किं न स्यात् विशेषाभावात् इत्याशङ्कायामाह— **वैष्णवानीति** ।। वैष्णवपुराणानामेव पञ्चरात्रात्मकत्वेन प्रामाण्यम्। न लिङ्गादिपुराणानां वेदपञ्चरात्रादिविरुद्धार्थप्रतिपादकत्वात्तेषाम् । लिङ्गादिष्वपि वेदाविरुद्धार्थप्रतिपादकं तत्प्रमाणम् । यद्विरुद्धार्थप्रतिपादकं तदप्रमाणमिति विशेषप्रदर्शनार्थं न सहपाठः। अत एवोक्तं 'अविरुद्धं तु यत्त्वस्य' एतदविरुद्धं यदित्यर्थः। ननु पञ्चरात्रपुराणमन्वादिस्मृतीनां केवलाचारव्यवहारप्रायश्चित्ताख्यधर्मप्रतिपादकत्वेन ऋगाद्यर्थप्रतिपादकत्वाभावात् अप्रामाण्यं तासां इत्यत आह— **मन्वाद्या इति** ।। वेदादिषु प्रतिपादितार्थानां अनुकूलार्थप्रतिपादकत्वात् तासामपि प्रामाण्यं युज्यत इत्यर्थः ।। ३२ ।।

**वरद**— 'अविरुद्धं च यत्त्वस्य' इत्येतद्विवृणोति— **वैष्णवानीति** ।। सात्त्विकानि पुराणानि सात्त्विक-मन्वादिस्मृतयोऽपि पञ्चरात्रात्मकत्वात् पञ्चरात्रमूलत्वेन वेदाद्यनुकूलत्वात् प्रमाणमेवेति भावः ।। ३२ ।।

**जना**— 'इतिहासपुराण' इति श्रुतौ पुराणस्य स्वतःप्रमाणवेदसमत्वेनोक्तत्वात्तत्किमर्थं पूर्वोक्तेषु न गणितमित्यतः आह— **वैष्णवानीति** ।। पञ्चरात्रात्मकत्वतः पञ्चरात्रार्थप्रतिपादकत्वात् । वैष्णवानि पुराणान्येव प्रमाणानि नान्यानि । पुराणानामुभयरूपत्वात् न सह पाठः। पञ्चरात्रग्रहणेन वैष्णवपुराणानां ग्रहणान्न पृथक् ग्रहणमिति भावः। तर्हि स्मृतीनामप्रामाण्यं किमित्यत आह— **मन्वाद्या इति** ।। अनुकूलतः अनुकूलत्वादेव प्रमाणानीति ज्ञेयाः। न त्वननुकूलाः ।। ३२ ।।

**ताम्र**— अस्य ऋगादेः यदविरुद्धं तदपि स्वतः प्रमाणं इत्यर्थः। किं तदविरुद्धं कथं चाविरुद्धत्वम् । पुराणादेरपि स्वतः प्रामाण्याविशेषेऽपि 'अविरुद्धं तु यत्त्वस्य' इति पञ्चरात्रादेः प्राधान्यं किं निमित्तमित्यत आह— **वैष्णवानीति**।। पञ्चरात्रात्मकत्वं नाम पञ्चरात्रमुपलभ्यरचितत्वं तदेकार्थत्वम् । वक्ष्यति च । 'वैष्णवान् पञ्चरात्रांश्च' इति । तथा च स्वतः प्रामाण्याविशेषेऽपीमं विशेषमपेक्ष्य पञ्चरात्रादेः प्राधान्यमुक्तम् । तदुक्तं भाष्यकारैः—

[1]"ऋग्यजुस्सामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रञ्च वेदा इत्येव शब्दिताः ।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।'

इति तत्त्वप्रकाशिकायाञ्च 'स्वतः फलसंवादरहितनिर्दोषतयैव' इति । यद्वा पञ्चरात्रादीनां स्वतः प्रामाण्यं नाम अन्यमनुपलभ्यरचितत्वमिति ज्ञेयम् ।। ३२ ।।

१. सू.भा. २-१-५ ।

**जम्बु**— ननु—

'वेदादप्यधिकं मन्ये पुराणार्थं वरानने ।
वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः ।।'

इति पञ्चरात्रपुराणानां प्रामाण्यात् पञ्चरात्रादिभिः सह पाठाभावः किमर्थमित्यत आह— **वैष्णवानीति** ।। श्रीमद्भागवतादीनि । पञ्चरात्रात्मकत्वतः पञ्चरात्रप्रतिपादितार्थप्रतिपादकत्वात् । वैष्णवपुराणानामेव पञ्चरात्रात्मकत्वेन प्रामाण्यं न सर्वेषां पुराणानाम् । उभयरूपत्वान्न सहपाठः। पञ्चरात्रग्रहणेन वैष्णवपुराणानां ग्रहणात् न पृथग्ग्रहणमिति भावः। अनेन पुराणानामपि स्वतः प्रामाण्यमुक्तं भवति । तदुक्तम्-

'पुराणानि च यानीह वैष्णवानि विदो विदुः।
स्वतः प्रामाण्यमेतेषां नात्र कार्या विचारणा' इति भविष्यत्पर्वणि ।

ननु मन्वादिश्रुतीनां केवलाचारप्रतिपादकानां कथं प्रामाण्यमित्यत आह— **मन्वाद्या इति** ।। 'यद्वै किञ्चन मनुरवदत् भेषजम्' इति श्रुतेः स्मृतेः प्राधान्यविवक्षया मन्वाद्या इत्युक्तम् । पञ्चरात्रोक्तकर्मानुकूलतः अनुकूलत्वादेव प्रमाणानीति विज्ञेयाः। न तु अननुकूलाः ।। ३२ ।।

**भारतश्री**— पञ्चरात्रात्मकत्वतः पञ्चरात्रमूलकत्वतः ।। ३२ ।।

**एतेषु विष्णोराधिक्यमुच्यतेऽन्यस्य न क्वचित् ।**
**अतस्तदेव मन्तव्यं नान्यथा तु कथञ्चन ।। ३३ ।।**

**व्यास**— पञ्चरात्रात्मकत्वमनुकूलत्वं च विवृणोति— **एतेष्विति** ।। एतेषु विष्णोराधिक्यमुच्यतामतः किं इत्यत आह— **अत इति** ।। ३३ ।।

**अभिनव**— तत्रैव 'एतेषु विष्णोः' इति श्लोकः । तस्यार्थः एतेषु ऋगादिषु विष्णोः आधिक्यमुच्यते । अन्यस्य विष्णोरन्यस्य शिवादेः आधिक्यं ऋगादिषु मध्ये क्वचिदपि ग्रन्थे क्वचिदपि भागे नोच्यते । अतः कारणात् तदेव विष्णोराधिक्यमेव मन्तव्यम् । ऋगादीनां विष्ण्वाधिक्यप्रतिपादकत्वं विष्ण्वाधिक्यस्य मन्तव्यत्वमित्येतत् कथञ्चन केनापि निमित्तेन अन्यथा न भवतीति । एतेन अन्यत्र मन्तव्यमिति वक्तव्यम्, अन्यथा न मन्तव्यमिति कथनमयुक्तमिति दूषणं परास्तम् । ऋगादीनामित्यादेः शेषेणार्थान्तरस्योक्तत्वात् ।।

**सङ्क**— ननु वेदपञ्चरात्रादिषु कोऽर्थः प्रतिपाद्यते । येन तदनुकूलानां प्रामाण्यं तद्विरुद्धानामप्रामाण्यं च स्यादित्यत आह— **एतेष्विति** ।। ननु वेदादिष्वन्येषां रुद्रादीनामप्याधिक्यमुच्यते तत्कथं तेषां विष्णोराधिक्यमुच्यत इत्युक्तिरित्यत आह— **अन्यस्येति** ।। वेदादिषु क्वचिदपि अन्यस्य रुद्रादेराधिक्यं नोच्यते । रुद्रादिनाम्नां विष्ण्वेकवाचित्वादिति भावः। एवमङ्गीकारे स्मृतिभिः सम्यग्ज्ञानानुष्ठानाभ्यां विष्ण्वाधिक्यज्ञानसम्भवात् स्मृतीनामप्यानुकूल्यं सम्भवतीति प्रमाणान्येवेत्यादेः अभिप्रायो द्रष्टव्यः। वेदादिषु विष्णोरेवाधिक्यमुच्यतेऽन्यस्य क्वचिदप्याधिक्यं नोच्यते इत्यतश्च किमित्यत आह— **अत इति** ।। यतो वेदादिषु विष्णोराधिक्यमेवोक्तं नान्यस्यातस्तदेव मन्तव्यम् । नान्यथेत्यर्थः ।। ३३ ।।

**पञ्चरात्रात्मकत्वत** इत्युक्तम् । अर्थैक्यात् शब्देऽप्यैक्यव्यवहार इति भावः। वैष्णवपुराणस्मृतीनां सङ्गृहीतत्वात् 'अविरुद्धं तु यत्त्वस्य' इत्यनेन किं सङ्गृहीतमिति न शङ्कनीयम् । अवैष्णवपुराणादिषु विद्यमानवेदानुकूलवाक्याना-मेतदनुकूलभाष्यानुव्याख्यानादिशिष्टकृतग्रन्थानां च सङ्ग्राह्यत्वसूचनाय सार्थक्यात् । अनुकूलतः अनुकूलत्वात् ।। ३२ ।।

**सङ्क**— ननु पञ्चरात्रपुराणानां सर्वेषामपि प्रामाण्यात् पञ्चरात्रादिभिः सहपाठः किं न स्यात् विशेषाभावात् इत्याशङ्कायामाह— **वैष्णवानीति** ।। वैष्णवपुराणानामेव पञ्चरात्रात्मकत्वेन प्रामाण्यम्। न लिङ्गादिपुराणानां वेदपञ्चरात्रादिविरुद्धार्थप्रतिपादकत्वात्तेषाम् । लिङ्गादिष्वपि वेदाविरुद्धार्थप्रतिपादकं तत्प्रमाणम् । यद्विरुद्धार्थप्रतिपादकं तदप्रमाणमिति विशेषप्रदर्शनार्थं न सहपाठः। अत एवोक्तं 'अविरुद्धं तु यत्त्वस्य' एतदविरुद्धं यदित्यर्थः। ननु पञ्चरात्रपुराणमन्वादिस्मृतीनां केवलाचारव्यवहारप्रायश्चित्ताख्यधर्मप्रतिपादकत्वेन ऋगाद्यर्थप्रतिपादकत्वाभावात् अप्रामाण्यं तासां इत्यत आह— **मन्वाद्या इति** ।। वेदादिषु प्रतिपादितार्थानां अनुकूलार्थप्रतिपादकत्वात् तासामपि प्रामाण्यं युज्यत इत्यर्थः ।। ३२ ।।

**वरद**— 'अविरुद्धं च यत्त्वस्य' इत्येतद्विवृणोति— **वैष्णवानीति** ।। सात्त्विकानि पुराणानि सात्त्विक-मन्वादिस्मृतयोऽपि पञ्चरात्रात्मकत्वात् पञ्चरात्रमूलत्वेन वेदाद्यनुकूलत्वात् प्रमाणमेवेति भावः ।। ३२ ।।

**जना**— 'इतिहासपुराण' इति श्रुतौ पुराणस्य स्वतःप्रमाणवेदसमत्वेनोक्तत्वात्तत्किमर्थं पूर्वोक्तेषु न गणितमित्यतः आह— **वैष्णवानीति** ।। पञ्चरात्रात्मकत्वतः पञ्चरात्रार्थप्रतिपादकत्वात् । वैष्णवानि पुराणान्येव प्रमाणानि नान्यानि । पुराणानामुभयरूपत्वात् न सह पाठः। पञ्चरात्रग्रहणेन वैष्णवपुराणानां ग्रहणान्न पृथक् ग्रहणमिति भावः। तर्हि स्मृतीनामप्रामाण्यं किमित्यत आह— **मन्वाद्या इति** ।। अनुकूलतः अनुकूलत्वादेव प्रमाणानीति ज्ञेयाः। न त्वननुकूलाः ।। ३२ ।।

**ताम्र**— अस्य ऋगादेः यदविरुद्धं तदपि स्वतः प्रमाणं इत्यर्थः। किं तदविरुद्धं कथं चाविरुद्धत्वम् । पुराणादेरपि स्वतः प्रामाण्याविशेषेऽपि 'अविरुद्धं तु यत्त्वस्य' इति पञ्चरात्रादेः प्राधान्यं किं निमित्तमित्यत आह— **वैष्णवानीति**।। पञ्चरात्रात्मकत्वं नाम पञ्चरात्रमुपलभ्यरचितत्वं तदेकार्थत्वम् । वक्ष्यति च । 'वैष्णवान् पञ्चरात्रांश्च' इति । तथा च स्वतः प्रामाण्याविशेषेऽपीमं विशेषमपेक्ष्य पञ्चरात्रादेः प्राधान्यमुक्तम् । तदुक्तं भाष्यकारैः—

[1]"ऋग्यजुस्सामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रञ्च वेदा इत्येव शब्दिताः ।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।'

इति तत्त्वप्रकाशिकायाञ्च 'स्वतः फलसंवादरहितनिर्दोषतयैव' इति । यद्वा पञ्चरात्रादीनां स्वतः प्रामाण्यं नाम अन्यमनुपलभ्यरचितत्वमिति ज्ञेयम् ।। ३२ ।।

---

१. सू.भा. २-१-५ ।

**जम्बु**— ननु—

'वेदादप्यधिकं मन्ये पुराणार्थं वरानने ।
वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः ।।'

इति पञ्चरात्रपुराणानां प्रामाण्यात् पञ्चरात्रादिभिः सह पाठाभावः किमर्थमित्यत आह— **वैष्णवानीति** ।। श्रीमद्भागवतादीनि । पञ्चरात्रात्मकत्वतः पञ्चरात्रप्रतिपादितार्थप्रतिपादकत्वात् । वैष्णवपुराणानामेव पञ्चरात्रात्मकत्वेन प्रामाण्यं न सर्वेषां पुराणानाम् । उभयरूपत्वान्न सहपाठः। पञ्चरात्रग्रहणेन वैष्णवपुराणानां ग्रहणात् न पृथग्ग्रहणमिति भावः। अनेन पुराणानामपि स्वतः प्रामाण्यमुक्तं भवति । तदुक्तम्-

'पुराणानि च यानीह वैष्णवानि विदो विदुः।
स्वतः प्रामाण्यमेतेषां नात्र कार्या विचारणा' इति भविष्यत्पर्वणि ।

ननु मन्वादिश्रुतीनां केवलाचारप्रतिपादकानां कथं प्रामाण्यमित्यत आह— **मन्वाद्या इति** ।। 'यद्वै किञ्चन मनुरवदत् भेषजम्' इति श्रुतेः स्मृतेः प्राधान्यविवक्षया मन्वाद्या इत्युक्तम् । पञ्चरात्रोक्तकर्मानुकूलतः अनुकूलत्वादेव प्रमाणानीति विज्ञेयाः। न तु अननुकूलाः ।। ३२ ।।

**भारतश्री**— पञ्चरात्रात्मकत्वतः पञ्चरात्रमूलकत्वतः ।। ३२ ।।

**एतेषु विष्णोराधिक्यमुच्यतेऽन्यस्य न क्वचित् ।**
**अतस्तदेव मन्तव्यं नान्यथा तु कथञ्चन ।। ३३ ।।**

**व्यास**— पञ्चरात्रात्मकत्वमनुकूलत्वं च विवृणोति— **एतेष्विति** ।। एतेषु विष्णोराधिक्यमुच्यतामतः किं इत्यत आह— **अत इति** ।। ३३ ।।

**अभिनव**— तत्रैव 'एतेषु विष्णोः' इति श्लोकः । तस्यार्थः एतेषु ऋगादिषु विष्णोः आधिक्यमुच्यते । अन्यस्य विष्णोरन्यस्य शिवादेः आधिक्यं ऋगादिषु मध्ये क्वचिदपि ग्रन्थे क्वचिदपि भागे नोच्यते । अतः कारणात् तदेव विष्णोराधिक्यमेव मन्तव्यम् । ऋगादीनां विष्ण्वाधिक्यप्रतिपादकत्वं विष्ण्वाधिक्यस्य मन्तव्यत्वमित्येतत् कथञ्चन केनापि निमित्तेन अन्यथा न भवतीति । एतेन अन्यत्र मन्तव्यमिति वक्तव्यम्, अन्यथा न मन्तव्यमिति कथनमयुक्तमिति दूषणं परास्तम् । ऋगादीनामित्यादेः शेषेणार्थान्तरस्योक्तत्वात् ।।

**सङ्क**— ननु वेदपञ्चरात्रादिषु कोऽर्थः प्रतिपाद्यते । येन तदनुकूलानां प्रामाण्यं तद्विरुद्धानामप्रामाण्यं च स्यादित्यत आह— **एतेष्विति** ।। ननु वेदादिष्वन्येषां रुद्रादीनामप्याधिक्यमुच्यते तत्कथं तेषां विष्णोराधिक्यमुच्यत इत्युक्तिरित्यत आह— **अन्यस्येति** ।। वेदादिषु क्वचिदपि अन्यस्य रुद्रादेराधिक्यं नोच्यते । रुद्रादिनाम्नां विष्ण्वेकवाचित्वादिति भावः। एवमङ्गीकारे स्मृतिभिः सम्यग्ज्ञानानुष्ठानाभ्यां विष्ण्वाधिक्यज्ञानसम्भवात् स्मृतीनामप्यानुकूल्यं सम्भवतीति प्रमाणान्येवेत्यादेः अभिप्रायो द्रष्टव्यः। वेदादिषु विष्णोरेवाधिक्यमुच्यतेऽन्यस्य क्वचिदप्याधिक्यं नोच्यते इत्यतश्च किमित्यत आह— **अत इति** ।। यतो वेदादिषु विष्णोराधिक्यमेवोक्तं नान्यस्यातस्तदेव मन्तव्यम् । नान्यथेत्यर्थः ।। ३३ ।।

**वरद—** एवं ऋगादिप्रामाण्यमुक्त्वा तत्प्रतिपाद्यमर्थमाह— **एतेष्विति** ।। एतेषु ऋगादिषु विष्णोराधिक्यमुच्यते । क्वचिदपि भागेऽन्यस्याधिक्यं नोच्यत इत्यर्थः। अतः कारणात्तदेव विष्णोराधिक्यमेव मन्तव्यं स्वीकर्तव्यम् । नान्यथा विष्णोः हैन्यं कथञ्चन नाङ्गीकार्यमित्यर्थः ।। ३३ ।।

**जना—** ननु वेदादिषु कोऽर्थः प्रतिपाद्यते यदानुकूल्येन प्रामाण्यमित्यतस्तदर्थमाह— **एतेष्विति** ।। ननु वेदादिषु रुद्रादेः '[1]एको रुद्रो न द्वितीयाय' इत्यादिना आधिक्यस्योक्तेस्तत्कथं विष्णोराधिक्यमुच्यते इत्यत आह— **अन्यस्येति** ।। अन्यस्य रुद्रादेः। क्वचित् कुत्रचित् । रुद्रादिशब्दानां विष्णौ समन्वयात् । ततश्च किमित्यत आह— **अत इति** ।। यतः वेदादिषु विष्णोराधिक्यमुच्यते ततस्तदेव हर्याधिक्यमेव । कथञ्चन केनाप्युपायेन । अन्यथा पाशुपताद्युक्तं पशुपत्याद्युत्तमत्वं न मन्तव्यम् ।। ३३ ।।

**ताम्र—** पुराणादेः पञ्चरात्रात्मकत्वमानुकूल्यं च विवृणोति— **एतेष्विति** ।। उच्यतामेतेष्वाधिक्यमतः किमित्यत आह— **अत इति** ।। अन्यथा न मन्तव्यम् । प्रतीतार्थं परित्यज्यार्थान्तरकल्पनेनापकृष्टत्वादिकं न मन्तव्यमित्यर्थः। स्वतः प्रमाणत्वेन प्रतीतार्थत्यागायोगादिति भावः ।। ३३ ।।

**जम्बु—** ननु वेदादिषु कोऽर्थः प्रतिपाद्यते यदानुकूल्येन प्रामाण्यमित्यतस्तदर्थमाह— **एतेष्विति** ।। एतेषु ऋगादिषु विष्णोः आधिक्यं सर्वोत्तमत्वं उच्यते । ननु वेदादिषु रुद्रादेः 'एको रुद्रो न द्वितीयाय' इत्यादिना आधिक्यस्योक्तेः तत्कथं विष्णोराधिक्यमुच्यते इत्यत आह— **अन्यस्येति** ।। अन्यस्य रुद्रादेः। क्वचित् कुत्रचिद्भागे आधिक्यं नोच्यते इत्यर्थः। रुद्रादिशब्दानां विष्णौ समन्वयात् । भागवतादौ क्वचित् रुद्राधिक्योक्तिः अन्तर्यामिविवक्षया इति भावः। ततश्च किमित्यत आह— **अत इति** ।। यतः वेदादिषु विष्णोराधिक्यमुच्यते अतः तदेव मन्तव्यं स्वीकर्तव्यम् । कथञ्चन केनाप्युपायेन । अन्यथा पाशुपताद्युक्तं पशुपत्याद्युत्तमत्वं न मन्तव्यम् ।। ३३ ।।

**भारतश्री—** एतेषु ऋगादिषु ।। ३३ ।।

**मोहार्थान्यन्यशास्त्राणि कृतान्येवाज्ञया हरेः।**
**अतस्तेषूक्तमग्राह्यमसुराणां तमोगतेः ।। ३४ ।।**

**व्यास—** 'पाशुपताद्युक्तमग्राह्यम्' इत्युक्तं तत् कस्य हेतोरित्यत आह— **मोहार्थानीति** ।। किञ्च मिथ्याज्ञानप्रयोजनानि किमर्थं कृतानीत्यत आह— **असुराणामिति** ।। तमोगतेरर्थे यस्मादित्यनेन सम्बन्धः ।। ३४-३५ ।।

**वादि—** मोहार्थान्यन्यशास्त्राणीत्यस्य अन्यशास्त्राणि पाशुपतादीनि शास्त्राणि ।। ३४ ।।

**सङ्क—** नन्वेतेषु विष्णोराधिक्यमुच्यतां नाम अथापि तदेव मन्तव्यमिति कुतो निश्चीयते । शैवशाक्तेयस्कान्दसौरगाणपतशास्त्रविरुद्धत्वात् तेषु शिवादीनामुत्तमत्वप्रतिपादनादित्याशङ्क्याह— **मोहार्थानीति**।।

---

१. श्वेताश्वतरोपनिषत् ।

हरेराज्ञया अन्यशास्त्राणि मोहार्थानि कृतान्यतो तदुक्तमग्राह्यमित्यन्वयः। नन्वन्यशास्त्राणि मोहार्थानि कृतानीत्युक्तम्। केषां मोहार्थानि । मोहे च का तेषां गतिः। कैश्च तानि कृतानि इत्याशङ्कायामाह— **असुराणामिति** ।। यस्माद् शिवादिभिः तानि मोहार्थानि कृतानि तस्मात् तेषूक्तमग्राह्यमित्यनेनैवान्वयः। यतो एवमन्यशात्राणि मोहार्थानि अतस्तद्विरोधाभावात् विष्णोराधिक्यमेव मन्तव्यमिति भावः ।। ३४ ।।

**वरद**— ननु पाशुपतादिशास्त्रेषु विष्णोर्हैन्यमप्युच्यते । अतो 'नान्यथा तु कथञ्चन' इति कथमुच्यत इत्यत आह — **मोहार्थानीति** ।। अन्यशास्त्राणि अन्यस्य रुद्रादेराधिक्यप्रतिपादकानि पाशुपतादिशास्त्राणि मोहार्थानि मोहो मिथ्याज्ञानं अर्थः प्रयोजनं येषां तानि असुराणां मिथ्याज्ञानार्थं विष्णोराज्ञया कृतानि । अत एव तेषु पाशुपतादिषूक्तं रुद्राद्याधिक्यमग्राह्यम् । मोहार्थानि कृतानीत्येतद्विवृणोति— **असुराणामिति** ।। असुराणां तमोगतेः हेतोर्विष्णुनोक्तैः प्रेरितैः शिवादिभिः कृतानि यस्मात्तस्मात्सम्यग्ज्ञानार्थिना तेषूक्तमग्राह्यमित्यर्थः ।। ३४ ।।

**जना**— 'पाशुपताद्युक्तं अग्राह्यम्' इत्युक्तं तत्कस्य हेतोरित्यत आह— **मोहार्थानीति** ।। अन्यशास्त्राणि पाशुपतादीनि मोहार्थानि मोहोऽज्ञानं तेन तज्जननमुपलक्ष्यते । अर्थः प्रयोजनं येषां तानि अज्ञानोत्पादकानि । मोहकशास्त्रकरणात् पापं स्यादित्यत आह— **कृतानीति** ।। हरेराज्ञयैव कृतानीति यतोऽतस्तदुक्तं अग्राह्यमित्यर्थः। एतत्प्रयोजनं किमित्यत आह— **असुराणामिति** ।। तमोगतेः तमःप्राप्त्यर्थम् ।। ३४ ।।

**ताम्र**— नन्वसति बाधके प्रतीतार्थो न त्यज्यते । अत्र तु बाधकं पाशुपताद्यस्त्येव तत्कथमर्थग्रहः। अन्यथा पाशुपतादेरपि स्वतः प्रमाणत्वेन तदर्थग्रहेण विरोधापत्तेरित्यत आह— **मोहेति** ।। मोहेनापि किं मम प्रयोजनमित्यत उक्तं विवृणोति— **असुराणामिति** ।। तमोगतेरर्थे यस्मात्कृतान्यत इति सम्बन्धः ।। ३४ ।।

**जम्बु**— एतेषु विष्णोराधिक्यं उच्यतां नाम तथापि तदेव मन्तव्यमिति कुतो निश्चीयते शैवशाक्तेयस्कान्दसौर-गाणपतादिशास्त्रविरुद्धत्वात् तेषां शिवादीनां उत्तमत्वस्य प्रतिपादितत्वात् इत्याशङ्क्याह— **मोहार्थानीति** ।। अन्यशास्त्राणि पाशुपतादीनि मोहार्थानि मोहो मिथ्याज्ञानं तेन जननमुपलक्ष्यते। अर्थः प्रयोजनं येषां तानि अज्ञानोत्पादकानि । मोहकशास्त्रकरणात् पापं स्यादित्यत आह— **हरेराज्ञयेति** ।। हरेराज्ञयैव कृतानि इति यतः अतः उक्तमग्राह्यमित्यर्थः। एतत्प्रयोजनमाह— **असुराणामिति** ।। तमोगतेः मिथ्याज्ञानार्थं तमःप्राप्त्यर्थं वा ।। ३४ ।।

**भारतश्री**— अन्यशास्त्राणि पाशुपतादीनि कृतानि रुद्रादिभिः तमोगतेर्हेतुतः। तादर्थ्ये षष्ठी वा ।। ३४ ।।

**यस्मात्कृतानि तानीह विष्णुनोक्तैः शिवादिभिः।**
**एषां यन्न विरोधि स्यात्तत्रोक्तं तन्न वार्यते ।। ३५ ।।**

**सङ्क**— यदुक्तं 'तेषूक्तमग्राह्यम्' इति तदौत्सर्गिकम् । क्वचिदपवादोऽप्यस्तीत्याह— **एषामिति** ।। एषां वेदपञ्चरात्रादीनां यन्मोहशास्त्रोक्तं विरोधि न स्यात् तत् तत्रोक्तमपि न निवार्यत इत्यर्थः। तथा च आचार्योऽन्यत्र चाह [1]'चशब्देन भागोपलब्धिरङ्गीकृता' इति ।। ३५ ।।

---

१. सू.भा. २-१-२ ।

**वरद**— ननु तेष्वपि [1]"यदन्तरं व्याघ्रहरीन्द्रयोर्वने' इत्याद्यारभ्य

'अनन्तत्वान्महाविष्णोः तदन्तरमनन्तकम् ।
माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम् ॥'

इत्यन्तेन विष्णोराधिक्यं उच्यते । अतः कथं तेषूक्तमग्राह्यमित्यत आह— **एषामिति** ॥ एषां ऋगादीनां यद्विरोधि न स्यात् तत्रोक्तं अपि न वार्यते न निराक्रियते । किन्तु बाधकाभावात्प्रामाणिकत्वेन स्वीक्रियत इत्यर्थः। तदंशे तेषां प्रामाण्यमेवेति भावः ॥ ३५ ॥

**जना**— कर्तुरनुक्तेस्तदनुवादपूर्वकमुक्तमेवाह— **यस्मादिति** ॥ विष्णुनोक्तैः शिवादिभिः इह भूलोके तानि पाशुपतादीनि यस्मात्कृतानि अतस्तदुक्तमग्राह्यमित्यर्थः। यद्वा हरेराज्ञया कृतान्यन्यशास्त्राणि मोहार्थान्येव तदेव प्रयोजनपूर्वकमुपपादयति— **अत इति** ॥ विष्णुनोक्तैः शिवादिभिः असुराणां तमःप्राप्त्यर्थं यस्मात् कृतानि अतस्तेषूक्तमग्राह्यमित्यर्थः । अग्राह्यमित्यस्यापवादमाह— **एषामिति** ॥ एषां वेदादीनां यन्मोहशास्त्रोक्तं विरोधि न स्यात् तत्पाशुपतादावुक्तमविरोधार्थजातं न वार्यते न निषिध्यते । यद्वा यस्मात् इत्यग्रिमेण सम्बध्यते । यतः विष्णूक्तैः कृतमतः तत्रोक्तं न वार्यत इति सम्बन्धः । तेन बौद्धोदिताहिंसावदग्राह्यत्वं विष्णूदितादेव कृतत्वान्नेति भावः ॥ ३५ ॥

**ताम्र**— नन्वेतेष्वपि [2]"श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः' इत्यादौ विष्णूत्तमत्वाद्युक्तेः। कथं तदुक्तं अग्राह्यमित्यत आह— **एषामिति** ॥ ३५ ॥

**जम्बु**— कर्तुरनुक्तेः तदनुवादपूर्वकं उक्तमेवाह— **यस्मादिति** ॥ विष्णुना उक्तैः पेरितैः शिवादिभिः रुद्रादिभिः इह भूलोके तानि पाशुपतादीनि कृतानि यस्मात् अतः उक्तमग्राह्यमित्यर्थः। ननु 'तेषूक्तमग्राह्यम्' इत्युक्तं तेष्वपि

'यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः।
यदन्तरं सूर्यसुरेड्यबिम्बयोः तदन्तरं रुद्रमहेन्द्रयोः ॥' इत्यादि,
'अनन्तत्वात् महाविष्णोः तदन्तरमनन्तकम् ।
माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम् ॥
तत्समो ह्यधिको वापि नास्ति कश्चित्कदाचन ।
एतेन सत्यवाक्येन तमेव प्रविशाम्यहम् ॥'

इति विष्णोराधिक्यमुच्यते इत्यत आह— **एषामिति** ॥ एषां ऋगादीनां यत् मोहशास्त्रोक्तं विरोधि न स्यात् तत्र पाशुपतादौ तत् अविरोधि अर्थजातं न वार्यते । न निषिध्यते । बाधकाभावात् प्रामाणिकत्वेन अङ्गीक्रियते । तदंशे तेषां प्रामाण्यमेव इति भावः। ननु मणिमदादिदैत्यस्वरूपैः सङ्करादिभिः नृसिंहस्तुत्यादेः कृतत्वात् तदपि ग्राह्यं स्यात् पञ्चरात्राविरोधित्वात् इत्यत आह— **यस्मात्कृतानीति** ॥ भगवदाज्ञया सज्जनैः रुद्रादिभिः कृतत्वात् तेषूक्तं पञ्चरात्राविरोधि ग्राह्यम् । शङ्करादिकृतं पञ्चरात्राविरोधि नृसिंहस्तुत्यादिकं अग्राह्यम् । [3]"अभक्तोदाहृतं नैव

---

१. गी.भा. २-२४ । २. सू.भा. १-१-१ । ३. भा.ता. ६-२-१४ ।

फलदातृ भविष्यति' इति भागवततात्पर्योक्तेः इति भावः। केचित्तु यस्मात्कृतानीत्यस्य अतस्तेषूक्तमग्राह्यमिति पूर्वार्धेनान्वय इत्याहुः ।। ३५ ।।

**भारतश्री**— एषां ऋगादीनाम् ।। ३५ ।।

## विष्ण्वाधिक्यविरोधीनि यानि वेदवचांस्यपि ।
## तानि योज्यान्यानुकूल्याद्विष्ण्वाधिक्यस्य सर्वशः ।। ३६ ।।

**व्यास**— वेदादौ विष्णोराधिक्यमुच्यत इत्युक्तं अयुक्तम् । 'विष्णोशिशरः झडित्यपतत्' इत्यादिना दोषस्योक्तत्वादित्यत आह— **विष्ण्वति** ।। आनुकूल्यादानुकूल्यं विधाय। [1]अङ्गविकलयसकर्तृविषयत्वमङ्गीकृत्य विष्णोः सर्वोत्तमत्वादिकं वेदा उच्यन्ते इत्युक्तम् ।। ३६ ।।

**वादि**— '**विष्ण्वाधिक्यविरोधीनि**' इत्यत्र [2]"जनितोत विष्णोः'इत्यादिवाक्यानीत्यर्थः। आनुकूल्याद्योज्यानीत्यस्य 'तदहं वच्मि पवमान सोम' इत्याद्यव्यवहितातीतवाक्ये पवमानस्यैव सोमत्वोक्तेः उत्तरवाक्येऽपि सोमः पवमान एव । अत्रापि पवन इति वायुधर्मस्योक्तत्वाच्च । पवनं हि वायोरेव धर्मः। एवं च पवमानस्य विष्णुजनकत्वं न परेषां नाप्यस्माकं वाभिमतम् । अतोऽत्र न शैवैः प्रत्याशा कार्या । एवं च महत्तत्त्वाभिमानित्वात् द्युपदवाच्यान्तरिक्षस्वर्गाद्युत्तरलोकानां पृथिवीगर्भनिहितत्वेन पृथिवीपदवाच्यानाम् अधः सप्तलोकानां च जनिता जनयिता । अत एव—

> [3]"साभ्रोष्णाभीशुशुभ्रप्रभमभयनभोभूरिभूभृद्विभूति–
> भ्राजिष्णुर्भूर्ऋभूणां भवनमपि विभोऽभेदि बभ्रे बभूवे ।
> येन भ्रूविभ्रमस्ते भ्रमयतु सुभृशं बभ्रुवद् दुर्भृताशान्
> भ्रान्तिर्भेदावभासस्त्विति भयमभिभूर्भोक्ष्यतो मायिभिक्षून् ।।'

इति प्राचां वाचः। सकललोकेषु पाककर्तुरग्नेश्च जनिता जनयिता । सकललोकप्रकाशकस्य सूर्यस्य च जनिता जनयिता । काले काले धनधान्योत्पादनाय वृष्टिप्रदस्येन्द्रस्य जनिता जनयिता । सोमः पवमानपूयमानयोः सोमपदवाच्यो मुख्यप्राणः कल्पे कल्पे ज्ञानकार्याय जातमध्वाख्यतृतीयरूपेण 'तृतीयमस्य ऋषभस्य दोहसे दशप्रमतिं जनयन्त योषणः' इति श्रुतेः। विष्णोर्मतीनां सुमतीनां सर्वेश्वरत्वसर्वज्ञत्वादिविषयकशोभनमतीनां दिने दिने ब्रह्मसूत्रादिव्याख्यानं कृत्वा जनिता जनयिता सन् 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इति श्रुतेः, प्रवचने नियमसूचनाय वीप्सा । 'अयमिह सुमतिं वायुदेवो विदध्यादध्यात्मज्ञाननेता यतिवरमहितो भूमिभूषामणिर्मे' इति [4]"अनुदिनं व्याख्ययाप्याययेन्मां' इति च प्राचां वाचः। पवते ग्रामे ग्रामे स्वशिष्यजनबोधनाय आ सेतोराहिमा– चलाच्च पवते । पवित्रीकुर्वत् वा गच्छति । यद्वा सोमः मूलरूपापेक्षया सोमशब्दवाच्यः वायोस्तृतीयावतारो मध्वः मतीनां जनिता । ब्रह्मसूत्रव्याख्यानादिना हरेः सर्वोत्तमत्वसर्वगुणपूर्णत्वसाकारत्वादिशुभमतीनां जनिता जनयिता । दिवः पृथिव्याश्च जनिता जनयिता । परप्रकटितस्वरूपमिथ्यात्वं निरस्य पारमार्थिकसत्ताप्रतिपादनेन प्रागसतः सत्तासम्बन्धरूपजनेरेव कर्ता । अग्नेः सूर्यस्य इन्द्रस्य विष्णोश्च विशिष्टमिथ्यात्वप्रतिपादनेनोक्तं

१. अत्र शुद्धपाठः नोपलब्धः । २. ऋ.सं. ९-९६-५ । ३. वायुस्तुतिः । ४. अणुमध्वविजयः २८ श्लोकः ।

देहान्तःकरणादिमिथ्यात्वं निरस्य देहादीनामपि सत्तां प्रतिपाद्य देहयोगाख्यजनेरेव कर्ता ।

'जनिता चोपनीता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ।।'

इति वचनात् स्वरूपदेहादेरत्यन्ताभावाख्यभयात् त्राता कथं न जनयिता । किं च गीतायां भगवान्— [1]'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।' इति प्रागुक्त्वा,

'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।।' इत्याह ।

एवं च जगदसत्यत्वप्रतिपादनमेव जगत्क्षय इत्युक्तं भवति । सत्यत्ववादी च नष्टजगतः पुनः जन्मदायी कथं न जनयिता । अपि च 'यस्ता विजानात्स पितुः पितासत्' इति श्रुतिः तन्महिम्नः प्रमातुरपि पितृत्वसम्भवात् । अत एव प्रमातृत्वघटनाय प्राङ्मतीनां जनितेत्युक्तम् । [2]'वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति' इति पञ्चरात्रवचनं च । ईदृशं जन्मैव विष्णोर्वाच्यम् । न त्वपरं जन्मेति सूचनाय श्रुतौ व्याप्तत्वार्थकविष्णुपदग्रहणमित्यादिना आनुकूल्याद्योज्यानीत्यर्थः ।। ३६ ।।

**सङ्क**— ननु वेदादिष्वपि शिवादीनां उत्तमत्वप्रतिपादकानि विष्ण्वाधिक्यविरोधीनि वचांसि सन्ति । अतः स्वविरोधेनाप्रामाण्यात् कथं विष्णोरेवाधिक्यं युज्यत इत्याशङ्क्याह— **विष्ण्वाधिक्य इति** ।। शिवादिशब्दप्रवृत्तिनिमित्तानां विष्ण्वाधिक्येन वर्तमानत्वात् विष्ण्वाधिक्यविरोधीनि यानि वेदवचांसि तान्यपि सर्वाणि विष्ण्वाधिक्यस्यानुकूल्याद्योज्यानि । अतः स्वविरोधाभावात् वेदानां प्रामाण्यमुपपन्नमित्यर्थः ।। ३६ ।।

**वरद**— ननु तथापि एतेषु विष्णोराधिक्यमुच्यत इत्यनुपपन्नम् । ऋगादिष्वपि 'जनितोत विष्णोः' इत्यादौ विष्णोरुत्पत्यादिहैन्यश्रवणादित्यत आह— **विष्ण्वाधिक्येति** ।। वेदवचांसि वेदवचनान्यपि यानि विष्ण्वाधिक्यविरोधीनि विष्णोराधिक्यस्य विरोधीनि स्वविरोधीनि वा आपाततः प्रतीयन्ते तानि सर्वशः सर्वाणि विष्ण्वाधिक्यस्यानुकूल्यात् ल्यब्लोपनिमित्ता पञ्चमी । आनुकूल्यं विधायेति यावत् । योज्यानि योजनीयानि । आपाततः प्रतीतार्थपरतायाः बाधात् अबाधितमुख्यार्थपरतयैव योजना कर्तव्येति भावः ।। ३६ ।।

**जना**— ननु वेदादौ जननादिदोषाः 'जनितोत विष्णोः' इत्यादिनाऽधिक्यविरोधिनः उच्यन्तेऽतः कथं आधिक्यं उच्यत इत्यत आह— **विष्ण्वाधिक्येति** ।। विष्ण्वाधिक्यस्यानुकूल्यात् सर्वशः सर्वाणि तानि वाक्यानि योज्यानीति सम्बन्धः ।। ३६ ।।

**ताम्र**— नन्वस्तु पाशुपतादेः मोहार्थरचितत्वात् अप्रामाण्यात् विष्णूत्कर्षपरवाक्यबाधकत्वाभावः। 'एको रुद्रो न द्वितीयाय तस्थे' 'जनितोत विष्णोः' इत्यादिश्रुतीनां बाधकत्वं तु भवेदित्यत आह— **विष्ण्वाधिक्येति** ।। स्वतःप्रमाणत्वेन प्रतीतार्थप्रच्यावनायोग्यान्यपीत्यपि शब्दः। सर्वशः सर्वाणि । यद्वा सर्वशः सर्वेभ्यो विष्णोराधिक्यस्येत्यर्थः। आनुकूल्यादानुकूल्यं विधाय ।। ३६ ।।

---

१. भ.गी. १६- ८-९ । २. बृ.भा. ८-५ ।

**जम्बु**— ननु तथापि एतेषु विष्णोराधिक्यमुच्यते इत्यनुपपन्नम् ।
[1]"सोमः पवते जनिता मतीनां जनिता दिवः जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥'
इत्यादौ विष्णोः उत्पत्त्यादिश्रवणात् विष्णोराधिक्यविरोधिशिवाद्युत्कर्षस्य च प्रतिपादितत्वात् इत्यत आह— **विष्ण्वाधिक्यविरोधीनीति** ॥ यानि वेदवचांसि वचनान्यपि विष्ण्वाधिक्यविरोधीनि अधिकस्य भावः आधिक्यं विष्ण्वाधिक्यं तस्य विरोधीनि आपाततः प्रतीयन्ते । सर्वशः सर्वाणि तानि वेदवाक्यानि सर्वेभ्य इति वा विष्ण्वाधिक्यस्य विष्णोराधिक्यस्य उत्तमत्वस्य आनुकूल्यात् । ल्यब्लोपनिमित्ता पञ्चमी । आनुकूल्यं विधाय । योज्यानि योजनीयानि । आपाततः प्रतीतार्थपरत्वे बाधात् अबाधितमुख्यार्थपरत्वे एव योजना कर्तव्या इति भावः। उक्तं च **सन्न्यायरत्नावल्याम्** [2]' सोमादिशब्दवाच्यात् क्षीराब्धिशयनात् मूलरूपात् विष्णुशब्दाभिधेयप्रादुर्भाव-रूपस्य व्यत्त्यपेक्षया उपपन्नम्' इति ॥ ३६ ॥

**भारतश्री**— विष्ण्वाधिक्यविरोधीनि आपाततः तथा प्रतीयमानानि । आनुकूल्यात् उपक्रमादितात्पर्यलिङ्गात् ॥ ३६-३७ ॥

## अवतारेषु यत्किञ्चिद्दर्शयेन्नरवद्धरिः।
## तच्चासुराणां मोहाय दोषा विष्णोर्न हि क्वचित् ॥ ३७ ॥

**व्यास**— अध्यक्षेण तस्य दोषित्वसिद्धेरित्यतः तद्भ्रान्तमित्याह— **अवतारेष्विति** ॥ ३७ ॥

**वरद**— ननु तथापि विष्णोः हैन्यग्राहकप्रत्यक्षस्य का गतिः। विष्ण्ववतारेषु रामकृष्णादिषु प्रत्यक्षेणैव अज्ञानादिदर्शनादित्यतस्तस्यापि गतिमाह— **अवतारेष्विति** ॥ हरिरवतारेषु रामकृष्णादिरूपेषु नरवत् साधारणमनुष्यवत् यत्किञ्चित् अज्ञानादिकं दर्शयेत् तच्च तदपि असुराणां मोहाय मिथ्याज्ञानोत्पत्त्यर्थं न तु वास्तवम्। कुत इत्यत आह— **दोषा इति** ॥ हि यस्मात्कारणात् विष्णोः क्वचिदवतारेषु दोषा अज्ञानादयो न सन्ति। 'निरनिष्टो निरवद्यः' 'पूर्णमदः' इत्यादिश्रुतेः। अतस्तत्र दोषदर्शनं मिथ्याज्ञानमेवेत्यर्थः ॥ ३७ ॥

**जना**— ननु सर्वावतारेषु दोषदर्शनात् कथमन्यथा योज्यानि वाक्यानि इत्यत आह— **अवतारेष्विति** ॥ यत्किञ्चित् स्त्रीवियोगादि । क्वचित् कस्मिंश्चिदप्यवतारे ॥ ३७ ॥

**ताम्र**— एवं विष्णूत्कर्षपरवाक्यत्वावगमविरोधं परिहृत्य रामकृष्णादिष्वध्यक्षेणापकृष्टत्वप्रतीतेः (दोषित्वसिद्धेः) तद्विरोध इत्यतः प्रत्यक्षं भ्रान्तमित्याह— **अवतारेष्विति** ॥ कुतः प्रत्यक्षस्याप्रामाण्यमित्यतः बाधकवशादित्याह— **दोषाः इति** ॥ विष्णोर्दोषा न सन्तीति प्रसिद्धमित्यर्थः ॥ ३७ ॥

**जम्बु**— ननु विष्णोः सर्वोत्तमत्वादिकं न घटते रामकृष्णाद्यवतारेषु दोषदर्शनात् इत्याशङ्क्याह— **अवतारेष्विति** ॥ हरिः अवतारेषु रामकृष्णादिरूपेषु नरवत् साधारणमनुष्यवत् यत्किञ्चिदज्ञानादिकं दर्शयेत्

---
१. ऋ.सं. ९-९६-५ । २. सन्न्यायरत्नावली १-१-जन्माधिकरणम् ।

तच्च तदपि असुराणां मोहाय मिथ्याज्ञानोत्पादनार्थम् । न वास्तवम् । कुत इत्यत आह— **दोषा इति** ।। हि यस्मात्कारणात् विष्णोः क्वचिदवतारेषु दोषा अज्ञानादयो न सन्ति । निरनिष्टो निरवद्यः। अतस्तत्र दोषदर्शनं मिथ्यज्ञानमेव इत्यर्थः ।। ३७ ।।

**अज्ञत्वं पारवश्यं वा [१]छेदभेदादिकं तथा ।**
**तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ।। ३८ ।।**

**व्यास**— यत्किञ्चिदित्युक्तं विवृणोति— **अज्ञत्वमित्यादिना** ।। ३८-३९ ।।

**अभिनव**— तत्रैव 'अज्ञत्वं पारवश्यं' इति श्लोके वेधभेदादिकमित्यत्र वेधशब्देन अन्तःक्षतग्रहणम्, भेदशब्देन बहिःक्षतग्रहणमिति द्रष्टव्यम् । एतेन वेधभेदशब्दयोरुभयोरपि क्षतार्थकत्वात् पुनरुक्तिरिति दूषणं परास्तम् ।।

**सङ्क**— एतदेव प्रकटयति— **अज्ञत्वमित्यादिना** ।। ३८-३९ ।।

**वरद**— एतदेव विवृणोति— **अज्ञत्वमित्यादिना** ।। सीताप्रतिकृतिहरणादावज्ञत्वम्, नरकासुरयुद्धादौ पारवश्यम् , भीष्मादिनां युद्धे वेधः, भार्गवरामादौ भेदः, आदिपदेन स्वापेक्षया शक्त्यादिकं सङ्गृह्यते । तथाशब्दः समुच्चये । प्राकृतदेहत्वं कृष्णाद्यवतारे। तथा तत्रैव देहत्यागादिकम् ।। ३८ ।।

**जना**— किञ्चिदित्युक्तं दर्शयति— **अज्ञत्वमिति** ।। परवशस्य भावः पारवश्यम् । प्राकृतः देहो यस्य सः तस्य भावः प्राकृतदेहत्वम् ।। ३८ ।।

**ताम्र**— यत्किञ्चिदित्युक्तं विवृण्वन् न केवलमसुराणां किन्तु कुत्रचित् सतामपीत्याह— **अज्ञत्वमित्यादिना**।। दैत्यानां तमोयोग्यानां मुक्तियोग्यानां च । तदुक्तं विष्णुतत्त्वनिर्णये—

[२]'तथाप्यसुरमोहाय परेषां च क्वचित् क्वचित् ।
दुःखाज्ञानश्रमादीन् स दर्शयेद् शुद्धसद्गुणः ।।' इति ।। ३८-३९ ।।

**जम्बु**— किञ्चिदित्युक्तं विशदयति— **अज्ञत्वमिति** ।। सीताकृत्यन्वेषणादौ अज्ञत्वम् ,नरकासुरयुद्धादौ पारवश्यम् , भीष्मादिना युद्धे वेधः, भार्गवे रामे भेदः, आदिपदात् सुधाकलशाहरणादौ अशक्तत्वं, जरासन्धभयात् पलायनं तथा प्राकृतदेहत्वं कृष्णावतारे । तथा तत्रैव देहत्यागादिकम् ।। ३८ ।।

**भारतश्री**— अज्ञत्वं सीतान्वेषणादौ । पारवश्यं दशरथवचनात् वनवासादि । वेधादिकं युद्धे । प्राकृतदेहत्वमुपपादयति— **देहत्याग इति** ।। कृष्णावतारादौ देहत्यागः तथा अनीशत्वं इत्यन्वयः ।। ३८ ।।

**अनीशत्वं च दुःखित्वं साम्यमन्यैश्च हीनताम् ।**
**प्रदर्शयति मोहाय दैत्यादीनां हरिः स्वयम् ।। ३९ ।।**

---

१. 'वेधभेदादिकं' इति सत्याभिनव-वरद-जम्बु.पाठः । 'छेदवेधादिकं' इति पाठान्तरम् । २. वि.त.नि. तृतीयपरिच्छेदः ।

**वरद**— उग्रसेनादिराज्यस्थापनेन स्वस्यानीशत्वं अस्वामित्वम् , रामावतारे दुःखित्वम् , तथा अन्यैर्ब्रह्मरुद्रेन्द्रादिभिः साम्यम् , तथा तदपेक्षया हीनतां च । हरिः स्वयमेव दैत्यानां तमोयोग्यानां मोहाय मिथ्याज्ञानार्थं प्रदर्शयति ।। ३९ ।।

**जना**— अन्यैः। समस्य भावः साम्यम् । अन्यैश्च हीनता ।। ३९ ।।

**जम्बु**— उग्रसेनादिराज्यस्थापनेन स्वस्यानीशत्वं अस्वामित्वम् , रामावतारे दुःखित्वम् , तथा अन्यैः ब्रह्मरुद्रादिभिः साम्यम्, त्रिमूर्त्यवतारे ब्रह्मरुद्राभ्यां साम्यम्, तदपेक्षया हीनतां नीचत्वं उपेन्द्रावतारे । हरिः स्वयमेव दैत्यादीनाम् । आदिपदात् त्रिविधा अपि जीवा अपि ग्राह्याः। तेषां मोहाय मिथ्याज्ञानाय । मोहो द्विविधः। संशयो विपर्ययश्चेति । तथा संशयिनो नित्यसंसारिणः। विपर्ययिनः तमोयोग्याः इत्युक्तं भवति ।। ३९ ।।

**भारतश्री**— उग्रसेनाधीनत्वादिकम् । दुःखित्वं राज्यभ्रष्टाः वनवासं प्राप्ताः।

'...................हृता भार्या मृतः पिता ।
ततोऽपि दुःसहं दुःखं यत्सागरविलङ्घनम् ।।'

इत्याद्युक्तिः । अन्यैः साम्यं गोपालादिषु तद्वन्नटनम् । हीनतां रुद्राद्यर्चनेनावरताम् ।। ३९ ।।

**न तस्य कश्चिद्दोषोऽस्ति पूर्णाखिलगुणो ह्यसौ ।**
**सर्वदेहस्थरूपेषु प्रादुर्भावेषु चेश्वरः ।। ४० ।।**

**व्यास**— दोषित्वमेव कस्मान्न स्यादित्यत आह— **नेति** ।। ईश्वर इति तत्रोपपत्तिः ।। ४० ।।

**सङ्क**— ननु अज्ञत्वादिदोषान् हरिः दैत्यादीनां मोहाय प्रदर्शयतीत्युक्तम् । स जीव इव विष्णोः परमार्थत किं न स्यात् इत्यत आह— **न तस्येति** ।। तत्र युक्तिमाह— **पूर्णेति** ।। सर्वजीवदेहगतरूपेषु प्रादुर्भावेषु च असौ ईश्वरः पूर्णाखिलगुणो हि यतः अतः परमार्थतः न तस्य कश्चिद्दोषोऽस्ति । जीवस्य पूर्णगुणत्वाभावात् दोषोऽस्तीत्यभिप्रायः ।। ४० ।।

**वरद**— तावता तस्य हरेः कश्चिदज्ञानादिदोषो नास्ति । हि यस्मादसौ हरिरीश्वरः सर्वदेहस्थरूपेषु अन्तर्यामिरूपेषु प्रादुर्भावेषु च पूर्णाखिलगुणः परिपूर्णाशेषगुणात्मकः अतस्तदीयं प्रत्यक्षं भ्रान्तिरेवेति भावः ।। ४० ।।

**जना**— मोहाय दर्शयतीति कुतः सत्यमेव कुतो न स्यादित्यत आह— **न तस्येति** ।। सर्वजीवस्थरूपेषु अन्तर्यामिरूपेषु तथा सर्वावतारेषु तस्य विष्णोः कश्चिद्दोषो नास्तीत्यर्थः। दोषाभावे हेतुः हि यतः असौ पूर्णा देशतः कालतश्च व्याप्ता अखिलाः समग्रा गुणा यस्येति। हेत्वन्तरमाह— **ईश्वरश्चेति** ।। ४० ।।

**ताम्र**— प्रत्यक्षविरोधं परिहृत्य 'ईश्वरो दोषवान् चेतनत्वात् अस्मदादिवत्' इत्यनुमानविरोधपरिहाराय अस्याल्पगुणत्वमुपाधिमभिप्रेत्य सत्प्रतिपक्षमाह— **न तस्येति** ।। असावीश्वरः सर्वदेहस्थरूपेषु प्रादुर्भावेषु च पूर्णाखिलगुणो हि यस्मादतो न रामादेः कश्चिद्दोषोऽस्तीति योजना । ननु जीवपरयोरेकशरीरस्थत्वेनान्तर्यामिरूपाणां

जीवसमानभोगप्राप्तेर्दोषोऽवर्जनीय इति न दृष्टान्तस्सम्प्रतिपन्न इत्यतः स्वातन्त्र्यपारतन्त्र्येश्वरत्वानीश्वरत्ववैशेष्यान्न समानभोगप्राप्तिरिति भावेन 'ईश्वर' इत्युक्तम् ।। ४० ।।[१]

**जम्बु—** अन्तर्यामिरूपेषु सर्वदेहगतरूपेषु मोहाय दर्शयतीति कुतः सत्यमेव कुतो न स्यात् इत्यत आह— **नेति** ।। प्रादुर्भावेषु प्रादुर्भावरूपेषु च हरिः ईश्वरः पूर्णाखिलगुणः परिपूर्णगुणात्मकः अतस्तस्य विष्णोः कश्चिदपि दोषो नास्तीति सम्बन्धः। ***श्रीनिवासभट्टीये*** *तु* एवं विष्णूत्कर्षपरवाक्यस्य आगमविरोधं परिहृत्य रामकृष्णादिषु अध्यक्षेण दोषप्रतीतेः तद्विरोध इत्यतः प्रत्यक्षं भ्रान्तमित्याह— **अवतारेष्विति** ।। कुतः प्रत्यक्षस्य अप्रामाण्यमित्यत बाधकवशादित्याह— **दोषा इति** ।। विष्णोः दोषा न सन्ति इति प्रसिद्धमित्यर्थः। यत्किञ्चिदित्युक्तं विवृणोति । न केवलमसुराणां किन्तु कुत्रचित् सतामपि इत्यत आह— **अज्ञत्वमित्यादिना** ।। दैत्यानां तमोयोग्यानाम् । तदुक्तं विष्णुतत्वविनिर्णये-

'तथाप्यसुरमोहाय परेषां च क्वचित्क्वचित् ।
दुःखाज्ञानश्रमादीनि दर्शयेत् शुद्धसद्गुणः ।।'

इति प्रत्यक्षविरोधं परिहृत्य 'ईश्वरो दोषी चेतनत्वात् अस्मदादिवत्' इत्यनुमानविरोधपरिहाराय अस्य अल्पगुणत्वमुपाधिमभिप्रेत्य सत्प्रतिपक्षत्वमाह— **न तस्येति** ।। असावीश्वरः सर्वदेहस्वरूपेषु यथा एवं प्रादुर्भावेषु पूर्णाखिलगुणो हि यस्मात् तस्मात् न तस्य रामादेः कश्चिद्दोषोऽस्तीति योजना । ननु जीवपरयोः एकशरीरस्थत्वेन अन्तर्यामिरूपाणां जीवभोगसमानप्राप्तेः दोषो अवर्जनीयः इति न दृष्टान्तः सम्पन्नः इत्यतः ईश्वरानीश्वरत्ववैशेष्यात् न समानभोगप्राप्तिरिति भावेन **ईश्वर इत्युक्त**मिति ।। ४० ।।

**भारतश्री—** सर्वदेहस्थरूपेषु देहगतरूपेषु ।। ४०-४२ ।।

**ब्रह्माद्यभेदः साम्यं वा कुतस्तस्य महात्मनः।**
**यदेवं वाचकं शास्त्रं तद्धि शास्त्रं परं मतम् ।। ४१ ।।**

**व्यास—** उत्पत्त्यादिमद्ब्रह्माद्यभेदे दोषित्वं स्यादित्यत उक्तम्— **ब्रह्मेति** ।। वा शब्दः समुच्चये । क्वचित् साम्योक्तेरसाधुत्वाभिप्रायम् । तदितरं स्तौति— **यदिति** ।। ४१ ।।

**सङ्क—** ननु विष्णोः ब्रह्माद्यभेदेन तत्साम्येन वा दोषः किं न स्यात् इत्यत आह— **ब्रह्मेति** ।। परिपूर्ण-गुणत्वादेव तस्य महात्मनस्तैरभेदः साम्यं वा कुतः स्यात् इत्यर्थः। इतोऽपि हरेरज्ञत्वादिकं मोहनार्थमित्यङ्गीकर्तव्यम् । तदज्ञत्वादेः मोहनार्थत्वप्रतिपादकशास्त्रस्योत्तमत्वादित्यत आह— **यदेवमिति** ।। एवं तावत् विष्णोः सर्वोत्तमत्वात् एकेनापि विरोधाभावात् तथैवाङ्गीकर्तव्यमित्युक्तम् । तदुपसंहरति— **तद्धीति** ।। ४१ ।।

**वरद—** तस्मात् ब्रह्माद्यभेदप्रतीतेः तत्साम्यप्रतीतेश्च भ्रान्तित्वात् तत्प्रयुक्तदोषलेशशङ्का न कार्येत्युपसंहरति— **ब्रह्मादिति** ।। कुतो न कुतोऽपीत्यर्थः। तत्र हेतुः— **महात्मन इति** ।। तस्माद्विष्णोः सर्वोत्तमत्वस्यैव अबाधितत्वात् । एवं उक्तरीत्या वाचकं प्रतिपादकं शास्त्रं यत्तदेव परं शास्त्रं मतं सम्मतं इत्यर्थः ।। ४१ ।।

---

१. ननु जीवपरयोरेकशरीरस्थत्वेनान्तर्यामिरूपाणां जीवसमानभोगप्राप्तेर्दोषोऽवर्जनीय इत्यतः स्वातन्त्र्यपारतन्त्र्येश्वरत्वा-नीश्वरत्ववैशेष्यात् नेत्याह—सर्वदेहस्थेति ।। ४० ।। इति हो. पुस्तके पाठः ।

**जना**— सर्वदेहस्थरूपाणां ब्रह्मादिभिरभेदे पुनरपि दोषित्वं तुल्यं इत्यत आह— **ब्रह्मादीति** ।। **वा शब्दः** समुच्चये कुतः न कुतोऽपीत्यर्थः। तत्र हेतुः— **महात्मन इति** ।। इतोऽपि हरेरज्ञत्वादिकं मोहनार्थमिति ज्ञेयमित्याह— **यदिति** ।। यच्छास्त्रमेवं वाचकं अज्ञत्वादिकं मोहार्थमिति वाचकं तच्छास्त्रं परं मतम् । हि यत अतः अज्ञत्वादि मोहार्थमित्यर्थः। यद्वा उपसंहरति— **यदिति** ।। तत्परमिति मतं संमतम् ।। ४१ ।।

**ताम्र**— ननु ब्रह्मविष्णुमहेश्वराणामेकत्वात् साम्याद्वा तद्गतसंसारित्वादयो दोषाः भवेयुरित्यत आह— **ब्रह्मादीति** ।। कुतः प्रमाणात् न कुतोऽपि । यद्वा कुतः कथं घटेत युक्तिविरुद्धत्वात् । तामेव युक्तिमाह— **महात्मन इति** ।। महतां ब्रह्मादीनां आत्मन स्वामिन इति । ननु तर्हि भागवतादौ-

[1]"हिरण्यगर्भत्वमुपेत्य मूले सृजत्यशेषं भुवनं स एव ।
नारायणात्मन् परिपासि भूयो जहार चान्ते भगवान् शिवात्मन्'

इति भागवतवाक्ये त्रिमूर्त्यैक्ये प्रमाणम् । अतः कथं तदभाव इत्यतस्तद्वचनस्य अन्तर्याम्यैक्यपरत्वादिति भावेनाह । महतो ब्रह्मरुद्रयोः आत्मनोऽन्तर्नियामकस्येति । ननु कुत एवमन्तर्यामिपरत्वं कल्प्यते प्रतीत एवार्थः किन्न स्यादित्यत आह— **यदिति** ।। एवं निखिलजीवजडात्मकात्प्रपञ्चादत्यन्तविलक्षणतया निखिलगुणगणाढ्यतया च ब्रह्मवाचकम् । हीत्यनेन [2]"अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्' इत्यादिप्रमाणप्रसिद्धत्वमस्यार्थस्य दर्शयति । तथा च प्रतीतार्थतात्पर्यकत्वे भागवतादेरप्रामाण्यमेव भवेदत अन्तर्यामिपरता स्वीकार्येति भावः ।। ४१ ।।

**जम्बु**— ब्रह्माद्यभेदप्रतीतेः तत्साम्यप्रतीतेश्च भ्रान्तित्वात् दोषशङ्का न कार्या इत्युपसंहरति— **ब्रह्मेति** ।। तस्य विष्णोः ब्रह्माद्यभेदः ब्रह्मादिभ्यः अभेदः कुतः प्रमाणात् स्यात् न कुतोऽपि । यद्वा कुतः कथं घटेत युक्तिविरुद्धत्वात् । तामेव युक्तिमाह— **महात्मन इति** ।। महतां ब्रह्मादीनां आत्मा स्वामी तस्य । यद्वा महतोः ब्रह्मरुद्रयोः आत्मनः नियामकस्येति । तस्माद्विष्णोः सर्वोत्तमत्वस्यैव अबाधितत्वात् । एवं उक्तरीत्या वाचकं प्रतिपादकं शास्त्रं यत् तदेव परं शास्त्रं मतं सम्मतम् ।। ४१ ।।

**निर्णयायैव यत्प्रोक्तं ब्रह्मसूत्रं तु विष्णुना ।**
**व्यासरूपेण तद्ग्राह्यं तत्रोक्ताः सर्वनिर्णयाः ।। ४२ ।।**

**व्यास**— निर्णये ऋगादौ यद्विष्णोराधिक्यविरोधि प्रतीयते तदानुकूल्येन योज्यमित्युक्तं तत्र नियामकमाह— **निर्णयायैवेति** ।। ४२ ।।

**सङ्क**— ननु विशेषत एवं वाचकं परं शास्त्रं किं तदित्याह— **निर्णयायेति** ।। ४२ ।।

**वरद**— एतदर्थप्रतिपादकं तत्किं परं शास्त्रं इत्यत आह— **निर्णयायैवेति** ।। व्यासरूपेण विष्णुना निर्णयाय सर्वशास्त्रनिर्णयाय यत् ब्रह्मसूत्रं प्रोक्तं तत्परं शास्त्रं सर्ववेदनिर्णयार्थं ग्राह्यं स्वीकर्तव्यमित्यर्थः। कुत इत्यत आह— **तत्रोक्ता सर्वनिर्णया इति** ।। ४२ ।।

---

१. भा. १०-५३-५ । २. सू.भा. १-१-३ ।

**जना**— येन सर्वनिर्णयाः ज्ञेयाः तत्परं निर्णायकं किमित्यत आह— **निर्णयायैवेति** ।। ४२ ।।

**ताम्र**— विष्ण्वाधिक्यविरोधीनि वेदवचांस्यन्यथा योज्यानीत्युक्तम् । कथं तन्निर्णयः पाशुपतादीनां मोहार्थत्वात् निर्णायकं च किमित्यत आह— **निर्णयायेति** ।। विष्णुनेत्याप्तिमूलत्वं निर्णयायेति युक्तिमूलत्वं च सूत्रप्रामाण्यसाधनायोक्तम् । सर्वनिर्णयाः सर्वागमनिर्णीतार्थाः। निर्णये वा परार्थानुमानात्मकत्वात् शास्त्रस्य । व्यासरूपिविष्णुना कृतः निर्णयः ।। ४२ ।।[1]

**जम्बु**— विष्ण्वाधिक्यविरोधीनि वेदवचांसि अन्यथा योजनीयानीत्युक्तं कथं तन्निर्णयः कथं वा पाशुपतादीनां निर्णयः निर्णायकं च किं इत्यत आह— **निर्णयायैवेति** ।। व्यासरूपेण विष्णुना निर्णयाय सर्वशास्त्रार्थनिर्णयाय यद्ब्रह्मसूत्रं प्रोक्तं तत्परं शास्त्रं सर्वनिर्णयार्थं ग्राह्यं स्वीकर्तव्यमित्यर्थः। कुत इत्यत आह— **तत्रोक्ता इति** ।। तत्र ब्रह्मसूत्रे सर्वनिर्णयाः सर्वागमनिर्णीताः अर्थाः उक्ताः ।। ४२ ।।

**यथार्थवचनानां च मोहार्थानां च संशयम् ।**
**अपनेतुं हि भगवान् ब्रह्मसूत्रमचीक्लृपत् ।। ४३ ।।**

**व्यास**— यथार्थवचनानां मोहार्थानां च विप्रतिपत्त्या जातं संशयम् ।। ४३ ।।

**वादि**— '**यथार्थवचनानाम्**' इत्यत्र संशयं उभयोः श्रुतिवाक्ययोरर्थभेदसंशयम् । यद्वा उभयोर्वाक्ययोः श्रवणेन जातं जनानां संशयम् ।। ४३ ।।

**सङ्क**— ननु निर्णयकरणे व्याप्त्यभावात् कथं 'निर्णयाय' इत्युक्तमित्यत आह— **यथार्थेति** ।। ४३ ।।

**वरद**— नन्वेतादृशनिर्णयकरणे का प्रसक्तिः। यदर्थं ब्रह्मसूत्रं प्रोक्तमित्यत आह— **यथार्थेति** ।। यथार्थवचनानां ऋगादीनां मोहार्थानां पाशुपतादीनां दर्शनेन मध्यस्थानां प्राप्तं संशयं विष्णूत्कर्षविषयं अपनेतुं परिहर्तुं भगवान् व्यासः ब्रह्मसूत्रं ब्रह्मसूत्राणि अचीक्लृपत् चकारेत्यर्थः ।। ४३ ।।

**जना**— निर्णयकरणे संशयप्राप्तिः हेतुः, तदभावेन कथं 'निर्णयाय' इत्युक्तमित्यत आह— **यथार्थेति** ।। यथार्थवचनानां च मोहनार्थानां च विप्रतिपत्त्या जातं संशयम् ।। ४३ ।।

**ताम्र**— निर्णयः कुतः कृत इत्यत आह— **यथार्थेति** ।। यथार्थवचनानां मोहार्थानां च विप्रतिपत्त्या जातं संशयम् ।। ४३ ।।

**जम्बु**— ननु निर्णयकरणे संशयप्राप्तिः हेतुः तदभावेन कथं 'निर्णयाय' इत्युक्तं इत्यत आह— **यथार्थेति** ।। यथार्थवचनानां च यथार्थस्य अबाधितार्थस्य वाचकानां ऋगादीनां मोहार्थानां च मोहोद्देश्यार्थकवाक्यानां पाशुपतादीनां

---

१. विष्ण्वाधिक्यविरोधीनि वेदवचांस्यन्यथा योज्यानीत्युक्तं कथं तन्निर्णयः पाशुपतादीनां मोहार्थत्वात् । निर्णयश्च कथं ज्ञेय इत्यतो ब्रह्मसूत्रेषु सकलवाक्यनिर्णयस्य कृतत्वात्तदुक्तप्रकारेण कार्य इत्याह – निर्णयायेति । निर्णयाय यद्ब्रह्मसूत्रं व्यासरूपेण विष्णुना प्रोक्तं तदेव निर्णयाय प्रोक्तमित्यर्थः ।। ४२ ।। इति हो. पुस्तके पाठः ।

दर्शनेन मध्यस्थानां प्राप्तं संशयं विष्णूत्कर्षविषयं अपनेतु परिहर्तुं भगवान् व्यासः ब्रह्मसूत्राणि अचीक्लृपत् चकार ।। ४३ ।।

**भारतश्री**— यथार्थवचनानां ऋगादीनाम् । मोहार्थानां पाशुपतादीनाम् । मोहो नटनं वञ्चनं वा ।। ४३-४७ ।।

**तस्मात् सूत्रार्थमागृह्य कर्तव्यः सर्वनिर्णयः।**
**सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता ।। ४४ ।।**

**व्यास**— सूत्रार्थः कः यदनुसारेण वेदादिनिर्णयः कर्तव्य इत्यत आह— **सर्वदोषेति** ।।४४-४६ ।।

**वादि**— '**सर्वदोषविहीनत्वम्**' इत्यत्र सर्वदोषविहीनत्वमविरोधाध्याये । अत एव [1]''सर्वदोषोज्झितस्तस्माद्भगवान्पुरुषोत्तम' इति द्वितीयाध्यायतात्पर्यं वर्णयन्ति । गुणैः सर्वैरुदीर्णता प्रथमाध्याये । [2]''अतोऽनन्तगुणो यच्छब्दा योगवृत्तयः' इति हि प्रथमाध्यायतात्पर्यं वर्णयन्ति ।। ४४ ।।

**सङ्क**— 'निर्णयाय' इत्युक्तमर्थमुपसंहरति— **तस्मादिति** ।। ननु सूत्रार्थमागृह्य इत्युक्तम्। कोऽसौ सूत्रार्थो विवक्षितः। येन विष्णोराधिक्यं सिद्ध्यतीत्याह— **सर्वेति** ।। ४४-४५ ।।

**वरद**— तस्मादशेषशास्त्रार्थनिर्णयार्थं कृतत्वात् ब्रह्मसूत्रार्थं । आगृह्य उपजीव्य । ब्रह्मसूत्रार्थानुसारेणेति यावत् । सर्वनिर्णयः सर्वेषां शास्त्रार्थाणां निर्णयः सर्वस्य गुणपूर्णत्वादेः निर्णयो वा कर्तव्य इत्यर्थः। [3]ननु कोऽसौ ब्रह्मसूत्रप्रतिपाद्योऽर्थः यदुपजीवनेन निर्णयः कर्तव्य इत्यत आह— **सर्वदोषेति** ।। द्वितीयाध्याये सर्वदोषविहीनत्वं प्रथमाध्याये समन्वयप्रतिपादनेन सर्वैर्गुणैरुदीर्णता उत्कृष्टता ।। ४४ ।।

**जना**— 'निर्णयायैव' इत्यादिनोक्तमर्थमुपसंहरति— **तस्मादिति** ।। कोऽसौ सूत्रार्थः यदनुसारेण सर्वनिर्णयः कार्य इत्यत आह— **सर्वदोषेति** ।। सर्वदोषविहीनत्वमित्यादि विमुक्तिर्विद्ययेत्यन्तानि प्रमेयानि सूत्रेषु उक्तानि इत्यन्वयः। सामान्ये नपुंसकमिति नपुंसकता । सर्वदोषविहीनत्वं द्वितीयाध्याये प्रतिपादितम् । अत एव अणुभाष्ये 'सर्वदोषोज्झितस्तस्मात् भगवान् पुरुषोत्तमः' इति उपसंहारः कृतः। गुणैः सर्वैरुदीर्णता प्रथमाध्याये प्रतिपादिता । अत एव अणुभाष्ये 'शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः' इत्युक्तम् ।। ४४ ।।

**ताम्र**— आगृह्य ज्ञात्वा । कः सूत्रार्थः यदनुसारेण वेदार्थनिर्णयः कार्य इत्यत आह— **सर्वदोषेति** ।। द्वितीयेऽध्याये सर्वदोषविहीनत्वं, प्रथमेऽध्याये शब्दानां भगवति योगवृत्तिप्रदर्शनेन [4]''जन्माद्यस्य यतः' [5]''सर्वधर्मोपपत्तेश्च' इत्यादौ गुणपूर्णत्वम् । [6]''न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यादौ सर्वान्तर्यामिरूपेष्वभेदः। [7]''भेदव्यपदेशात् [8]''पृथगुपदेशात्' इत्यादौ जीवभेदम् । [9]''मुक्तोपसृप्यव्यपदेशात्' इत्यादौ सदा

---

१. अणुभाष्यम् २-१४ । २. अणुभाष्यम् १-७ । ३. मूलश्लोके तंजावूरपाठानुसारेण अत्रैव श्लोकः समाप्तः ।। ४४ ।। ४. ब्र.सू. १-१-२ । ५. ब्र.सू. २-१-३८ । ६. ब्र.सू. ३-२-११ । ७. ब्र.सू. १-३-५ । ८. ब्र.सू. २-३-२८ । ९. ब्र.सू. १-३-२ ।

मुक्तावपि जीवभेदः। [१]'शास्त्रयोनित्वात्' [२]'गतिसामान्यात्' इत्यादौ [३]'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यादौ सर्ववेदेड्यता। [४]'इयदामननात्' इत्यादौ तारतम्यम्। [५]'विद्यैव तु निर्धारणात्' इत्यादौ विमुक्तिर्विद्यये-त्यादीन्युक्त्वा साधितानीत्यर्थः। अस्त्वयं सूत्रार्थः। किं प्रकृत इत्यत आह— **तस्मादिति** ।। सूत्राणां निर्णयात्मकत्वेन प्राबल्यादित्यर्थः ।। ४४-४६ ।।

**जम्बु**— 'निर्णयायैव' इत्यादिना उक्तमर्थं उपसंहरति— **तस्मादिति** ।। तस्मात् दोषनिर्णयार्थं कृतत्वात् ब्रह्मसूत्रार्थमागृह्य उपजीव्य। ब्रह्मसूत्रानुसारेणेति यावत्। सर्वनिर्णयः सर्वेषां शास्त्राणां सर्वस्य गुणपरिपूर्णत्वादेः निर्णयो वा कर्तव्यः। ननु कोऽसौ ब्रह्मसूत्रप्रतिपाद्योऽर्थः यदुपजीवनेन निर्णयः कर्तव्य इत्यत आह— **सर्वदोषेत्यादि विमुक्तिर्विद्यया इत्यन्तानि** ।। प्रमेयानि सूत्रेषु उक्तानीत्यन्वयः। सामान्ये नपुंसकमिति नपुंसकता। सर्वदोषविहीनत्वं सर्वदोषराहित्यं द्वितीयाध्याये प्रतिपादितं [६]'अधिकं तु भेदनिर्देशात्', [७]'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यादिना। न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः अधिकशक्तित्वात् 'योऽशनायापिपासे शोकं जरां मृत्युमत्येति' इत्यादिभेदनिर्देशात् इत्यादिभाष्यात् सूत्रद्वयार्थो ज्ञेयः। सर्वैर्गुणैरुदीर्णता उत्कृष्टता इति प्रथमाध्याये सर्वशब्दानां भगवति योगवृत्तिप्रदर्शनेन 'जन्माद्यस्य यतः', 'सर्वधर्मोपपत्तेश्च' इत्यादिना दर्शिता ।। ४४ ।।

**[८]अभेदः सर्वरूपेषु जीवभेदः सदैव [९]च ।**
**विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा ।। ४५ ।।**

**वादि**— सर्वरूपेष्वभेदः 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यत्रोच्यते । जीवभेदः 'भेदव्यपदेशाच्चान्यः', [१०]'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते', [११]'विशेषणभेदव्यपदेशाभ्यां च नेतरौ', [१२]'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'पृथगुपदेशात्' इत्याद्यधिकरणेषु भेदस्थापनाचार्यत्वात् भगवान् सूत्रकारः बहुषु स्थलेषु भेदं स्थापयामासेति ज्ञेयम्। सर्ववेदेड्यता [१३]'शास्त्रयोनित्वात्', [१४]'तत्तु समन्वयात्', [१५]'ईक्षतेर्नाशब्दम्' इत्यधिकरणेषु समर्थिता ।। ४५ ।।

**वरद**— तथा तृतीयाध्याये 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यादि सूत्रेषु सर्वरूपेषु अन्तर्यामिरूपेषु प्रादुर्भावरूपेषु अभेदोऽत्यन्ताभेदः तथैव 'पृथगुपदेशात्' इत्यादौ सदैव संसारे मुक्तौ च विष्णोर्जीवभेदः परमात्मनो जीवेभ्यो भेदः जीवानां परस्परमेदश्च। [१६]तथा 'शास्त्रयोनित्वात्' 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यादौ सर्ववेदेड्यता सर्ववेदस्तुत्यता ।। ४५ ।।

**जना**— सर्वरूपेष्वभेदः 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यनेनोक्तम्। सदैव जीवभेदः हि बहुषूक्तः। तथा हि 'भेदव्यपदेशाच्चान्यः' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयत' इत्यादिषु प्रसिद्धः। तथा शब्दः समुच्चये सर्वैर्वेदैरीड्यता प्रतिपाद्यता 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इत्यादौ ।। ४५ ।।

---

१. ब्र.सू. १-१-३। २. ब्र.सू. १-१-१०। ३. ब्र.सू. ३-३-१। ४. ब्र.सू. ३-३-३५। ५. ब्र.सू. ३-३-४८। ६. २-१-२३। ७. २-१-३५। ८. 'गोलोके यः स वैकुण्ठे श्वेतद्वीपे स एव च। अंशांशिनोर्न भेदश्च ब्रह्मन्वह्निस्फुलिङ्गवत्।' इति ब्रह्मवैवर्तेप्युक्तम् (१ब्रह्मखण्ड/१७अ/३७)। ९. 'हि' इति पाठान्तरम्। १०. १-२-२०। ११. ब्र.सू. १-२-२२। १२. ब्र.सू. १-३-४२। १३. ब्र.सू. १-१-३। १४. ब्र.सू. १-१-४। १५. १-१-५। १६. मूलश्लोके तंजावूर पाठानुसारेण अत्रैव श्लोकः समाप्तः।

**जम्बु**— सर्वरूपेषु अन्तर्यामिरूपेषु अभेदः अत्यन्ताभदः 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रे प्रतिपादितः। 'पृथगुपदेशात्' 'भेदव्यपदेशात्' इत्यादौ सदैव संसारे मुक्तौ च विष्णोः जीवभेदः परमात्मनः जीवेभ्यो भेदः जीवानां परस्परं भेदश्च 'मुक्तोपसृप्यव्यपदेशात्' इत्यादौ सदा मुक्तावपि जीवभेदः तथा 'शास्त्रयोनित्वात्' 'गतिसामान्यात्' 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यादौ सर्ववेदेड्यता सर्ववेदैः स्तुत्यता उक्ता ।। ४५ ।।

**तारतम्यं च मुक्तानां विमुक्तिर्विद्यया तथा ।**
**तस्मादेतद्विरुद्धं यन्मोहाय तदुदाहृतम् ।।४६ ।।**

**वादि**— मुक्तानां च तारतम्यं 'इयदामननात्', [१]'तन्मनः प्राण उत्तरात्', [२]'सोऽध्यक्षे तदुपगमादिभ्यः' इत्यादौ निरूपितम् । विद्यया विमुक्तिः 'विद्यैव तु निर्धारणात्' इत्यादौ निरूपिता ।। ४६ ।।

**सङ्क**— एतद्विरुद्धमित्यादिना मोहार्थानीत्यादिना चोक्तार्थमुपसंहरति— **तस्मादिति** ।।४६ ।।

**जना**— मुक्तानां तारतम्यं च 'इयदामननात्' 'तन्मनः प्राण उत्तरात्' इत्यादौ । विद्यया विमुक्तिः 'विद्यैव तु निर्धरणात्' इत्यादौ निरूपितम् । यस्मात् तस्मात् एतेषां सूत्राणां विरुद्धं यत्तन्मोहनार्थं तु उदाहृतमिति ज्ञेयम् ।। ४६ ।।

**वरद**— तथा चतुर्थाध्याये मुक्तानां तारतम्यं तथा तत्रैव पुरुषार्थाधिकरणे विद्ययाऽपरोक्षज्ञानेन विमुक्तिरित्येतानि प्रमेयानि सूत्रेषु ब्रह्मसूत्रेषु उक्तानि एतदनुरोधेनैवाशेषशास्त्रार्थो वर्णनीयः । एतद्विरुद्धार्थप्रतिपादकं पाशुपतादिकं यत्तन्मोहार्थमुदाहृतम् ।। ४६ ।।

**जम्बु**— तथा तृतीये चतुर्थपादे 'इयदामननात्' इत्यादौ तारतम्यमुक्तम् । 'विद्यैव तु निर्धारणात्' इत्यादौ सर्ववेदैः तथा विद्यया अपरोक्षज्ञानेन मुक्तिः 'नान्यः पन्था अयनाय विद्यते' इत्यादेः भवतीति प्रतिपादितम् । इत्येतानि प्रमेयानि सूत्रेषु ब्रह्मसूत्रेषु उक्तानि यस्मात् तस्मात् एतद्विरुद्धं एतेषां ब्रह्मसूत्राणां विरुद्धं यत् तत् मोहार्थं मोहनार्थमुदाहृतमिति ज्ञेयम् ।। ४६ ।।

**तस्माद् ये ये गुणा विष्णोर्ग्राह्यास्ते सर्व एव तु ।**
**इत्याद्युक्तं भगवता भविष्यत्पर्वणि स्फुटम् ।। ४७ ।।**

**व्यास**— अस्त्वयं सूत्रार्थः प्रकृते किमित्यत आह— **तस्माद्य इति** ।। त एवेति सम्बन्धः ।। ४७ ।।

**सङ्क**— ऋगादय इत्यादेः फलितार्थं वदन्नुपसंहरति— **तस्माद्य इति** ।। यत्र ये ये विष्णोः गुणाः उक्ताः तत्र ते ते एव ग्राह्याः। न तु ते दोषा ग्राह्याः। तेषां सर्वप्रमाणविरुद्धत्वेनानुपादेयत्वादित्यर्थः ।। ४७ ।।

**वरद**— यस्मात्तस्माद्ये ये गुणाः विष्णोरुदाहृतास्ते ते ग्राह्याः । न तु दोषाः प्रतिपादिता अपि ग्राह्याः। तत्प्रतिपादनस्य असुरमोहनार्थत्वादिति भावः। ननु स्वकपोलकल्पितमेवैतत्सर्वमित्यत आह— **इत्यादीति** ।।

---

१. ब्र.सू. ४-२-३ । २. ब्र.सू. ४-२-४ ।

भगवता व्यासेन भविष्यत्पर्वणि स्फुटं स्पष्टं यथा भवति तथा इत्यादिकमुक्तं न तु स्वकपोलकल्पितमित्यर्थः ।। ४७ ।।

**जना**— ऋगादय इत्यादौ फलितं वदन्नुपसंहरति— **तस्मादिति** ।। ये ये गुणाः अणुत्वमहत्त्वादय उक्तास्ते सर्व एव ग्राह्याः न तु विरोधादेकोऽपि त्याज्यः ।। ४७ ।।

**ताम्र**— ततः किमित्यत आह— **तस्मादिति** ।। पाशुपतादेरप्रमाणत्वात् विष्ण्वाधिक्यविरोधिवेदवचसां च अन्यथा योज्यत्वात् । ये ये विष्णोर्गुणाः ते एव सर्वे ग्राह्याः न तु दोषाः तेषामसत्वादिति भावः ।।४७ ।।

**जम्बु**— 'ऋगादय' इत्यादेः फलितं तदनु फलितं वदन् उपसंहरति— **तस्मादिति** ।। विष्णोः ये ये गुणा उदाहृताः सर्वे समस्ताः ते ते गुणाः ग्राह्या एव । न दोषाः। प्रतिपादिता अपि न ग्राह्याः। तेषामसत्वादिति भावः। तत्प्रतिपादनस्य असुरमोहनार्थत्वादिति भावः। ननु स्वकपोलकल्पितमेतत्सर्वमित्यत आह— **इत्यादीति** ।। भगवता व्यासेन भविष्यत्पर्वणि स्फुटं यथा भवति तथा इत्यादिकं उक्तं न तु स्वकपोलकल्पितमित्यर्थः ।। ४७ ।।

**[१]एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।**
**त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।। ४८ ।।**

**व्यास**— विष्णोः सर्वोत्तमत्वादिकं प्रमाणान्तरेण द्रढयन् आह— **एष इति** ।। मुह्यतेऽनेन इति मोहः मोहकं शास्त्रमित्यर्थः। कारय कुरु च ।। ४८ ।।

**वादि**— **'एष मोहम्'** इत्यत्र मोहयतीति मोहो मोहकग्रन्थः बौद्धशास्त्रम् । यद्वा मोहयतीति मोहः कैलासयात्रादिः। कारय । त्वं कुरु । दधीच्यादिभिः कारय चेत्यर्थः ।। ४८ ।।

**सङ्क**— 'मोहार्थान्यशास्त्राणि' इत्यादि भविष्यत्पर्ववचनार्थं तदनुक्तार्थं च वराहपुराणवचनेन दर्शयति— **एष मोहमिति** ।। एषो विष्णुः अहम् । मोहं मोहकारणम् । सृजामि । रुद्र त्वं च मोहशास्त्राणि कुरु । स्कन्दादिभिश्च कारय ।। ४८ ।।

**वरद**— अत्रैव संवादार्थं वाराहपुराणवचनमुदाहरति— **एष इति** ।। रुद्रं प्रति विष्णुवाक्यमेतत् । एष विष्णुरहं मोहं मुह्यते अनेनेति मोहो नटनं वञ्चनं वा तं सृजामि करिष्यामि । कथम्भूतो मोहः यो मोहो जनान् दुर्जनान् मोहयिष्यति भ्रान्तान् करिष्यति । हे महाबाहो रुद्र त्वं च मोहशास्त्राणि मोहजनकशास्त्राणि कुरु दधीच्यादिभिश्च कारय ।। ४८ ।।

**जना**— 'मोहार्थान्यन्यशास्त्राणि' इत्यस्मिन्नर्थे विष्णोः सर्वोत्तमत्वार्थे च प्रमाणान्तरमाह— **एष इति** ।। विष्णुवचनमिदम् । एषः विष्णुरहम् । मोहं मुह्यतेऽनेनेति मोहो नटनं वञ्चनं वा । अविद्यमानाकारप्रदर्शनं नटनम् । विद्यमानाकाराच्छादनं वञ्चनम् । यो मोहः दधीच्यादिभिः कारय त्वं च कुरु ।। ४८ ।।

---

१. व.पु. ७०-३६-९५० । 'एतद्विरुद्धं यत्तु स्यात् न तन्मानं' इति स्वोक्तार्थविषये क्रमेण सात्विकराजसतामसपुराणवाक्यानि प्रमाणत्वेनोदाहृत्य सर्वपुराणसम्मतमेतत् प्रमेयमिति प्रतिपादयति ।

**ताम्र**— पाशुपतादेर्मोहार्थत्वं विष्णूत्कर्षादिरमोहायोच्यम.नत्वं मुक्तानामपि भेदः ज्ञानस्यैव मोक्षसाधनत्वमित्यादौ वाराहब्रह्माण्डस्कान्दपाद्मपुराणवाक्यानि प्रमाणयति— **एष इत्यादिना** ।। एषोऽहं । मुह्यतेऽनेनेति मोहो नटनं वञ्चनं वा सृजामि । कारय कुरु । स्वार्थे णिच् । दधीच्यादिभिः कारयेति वा ।। ४८ ।।

**जम्बु**— 'मोहार्थान्यन्यशास्त्राणि' इत्यस्मिन्नर्थे विष्णोः सर्वोत्तमत्वार्थे च प्रमाणान्तरमाह— **एष मोह-मिति** ।। रुद्रं प्रति विष्णुवाक्यमेतत् । एषः विष्णुरहम् । मोहं मुह्यते अनेन इति मोहः नटनं वञ्चनं वा । अविद्यमानाकारप्रदर्शनं नटनम् । विद्यमानाकाराच्छादनं मोहः। तमहं सृजामि यः मोहः जनान् आशु शीघ्रं मोहयिष्यति भ्रान्तान् करोति । हे महाबाहो रुद्र त्वं च मोहशास्त्राणि कुरु दधीच्यादिभिः कारय इति वा ।। ४८।।

**भारतश्री**— सृजामि करोमि ।। ४८ ।।

**[१]अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।**
**प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु ।। ४९ ।।**

**व्यास**— अतथ्यानि विद्यमानार्थाप्रतिपादकानि । वितथ्यानि विपरीतत्वे पुरुषान्तरगतत्वे तथ्यानि विद्यमानार्थानि ।। ४९ ।।

**वादि**— **'अतथ्यानि'** इत्यत्र अतथ्यानि अविद्यमानानि असकृत् भस्मधारणलिङ्गधारणादिना कैलासगमानादीनि । वितथ्यानि त्वत्तो विपरीते मयि तथ्यानि सर्वज्ञत्वादीनि दर्शयस्व त्वयि दर्शय । प्रकाशं प्रसिद्धं अप्रकाशमप्रसिद्ध-मित्यर्थः ।। ४९ ।।

**सङ्क**— अतथ्यानि कुत्राप्यविद्यमानानि लिङ्गमूलमार्गणादीनि । त्वत्तो विगतत्वतो विगतत्वे सति वैतथ्यानि स्रष्टुत्वादीनि वितथ्यानि त्वयि दर्शयस्व । आत्मानं त्वामित्यर्थः ।। ४९ ।।

---

१. भरद्वाजसंहितायां ४अ/ दृष्टिविरोधाधिकारे/ 'नाद्रियेत पुराणादीन् राजसाँस्तामसाँस्तथा। अनीशानां परेशत्वं वृथा यत्रोपवर्ण्यते। तथा रुद्रेण कथितं मोहदं क्षुद्रकामदम्। तन्त्रं बहुविरुद्धं च तामसं परिवर्जयेत्। अन्येषां त्रिदशादीनां स्तुतीर्मन्त्रांश्च वर्जयेत्' इति च। तथैव पाद्मेऽपि (उत्तरखण्ड/२३५अ/) 'शृणु देवि प्रवक्ष्यामि यद्गुह्यं परमाद्भुतम्। न वक्तव्यं त्वया देवि जनेषु कथितं मया। अपृथक्त्वाच्छरीरस्य वक्ष्यामि तव सुव्रते। नमुच्याद्या महादैत्याः पुरा स्वायम्भुवेऽन्तरे। महाबलमहावीर्या महावीरा महौजसः। अजेयान् सर्वदेवानां तपोनिर्द्धूतकल्मषान् । त्वमेवैतान् महादैत्यान् जेतुमर्हसि केशव। महादेव उवाच। इत्याकर्ण्य हरिर्वाक्यं देवानाञ्च भयानकम्। तान् समाश्वास्य दिक्पालान् मामाह पुरुषोत्तमः। श्रीभगवानुवाच। त्वं हि रुद्र महाबाहो मोहनार्थे सुरद्विषाम्। पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम। तामसानि पुराणानि कथयस्व च तान्प्रति। मोहनानि च शास्त्राणि कुरुष्व च महामते। मयि मुक्ताश्च विप्राश्च भविष्यन्ति महर्षयः। मद्भक्त्या तान् समाविश्य कथयस्व च तामसान्। काणादं गौतमं शक्तिमुपमन्युं च जैमिनिम्। कपिलं चैव दुर्वासं मृकण्डुं च बृहस्पतिम्। भार्गवं जामदग्न्यं च दशैतांस्तामसानृषीन्। ...। त्वच्छक्त्या च निविष्टास्ते तमसोद्रिक्तया भृषम्। तामसास्ते भविष्यन्ति क्षणादेव न संशयः। कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये। .....। तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्कृतः। कङ्कालशैवपाषण्डमहाशैवादिभेदतः। अलक्ष्यं च मतं सम्यग्वेदबाह्यं नराधमाः। ...। त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः।....। अहमप्यवतारेषु त्वां च रुद्र महाबल। तामसानां मोहनार्थं पूजयामि युगेयुगे। मतमेतदवष्टभ्य पतन्त्येव न संशयः' इति च उक्तम्।

**वरद—** तेषु मोहशास्त्रेषु अतथ्यानि मयि अविद्यमानान्येव लिङ्गमूलान्वेषणादीनि तथा वितथ्यानि व्यधिकरणत्वेन अन्यत्र विद्यमानानि पारतन्त्र्यादीनि दर्शयस्व । एतत्कार्यकरणे त्वं समर्थोऽसीति सूचयितुं महाबाहो महाभुजेति च सम्बोधनम् । आत्मानं स्वात्मानं प्रकाशं प्रसिद्धं मां च अप्रकाशं अप्रसिद्धं कुरु ।। ४९ ।।

**जना—** अतथ्यानि कुत्राप्यविद्यमानानि लिङ्गमूलमार्गणसकृद्भस्मलिङ्गधारणादिना कैलासप्राप्त्यादीनि । वितथ्यानि व्यधिकरणतया विद्यमानानि । अथवा विष्णौ तथ्यानि सर्वज्ञत्वादीनि त्वयि दर्शयस्व । आत्मानं प्रति प्रकाशं प्रसिद्धिं कुरु । मां प्रत्यप्रकाशमप्रसिद्धिं कुरु । आत्मानं प्रसिद्धं मामप्रसिद्धं कुर्विति वा । 'प्रकाशोऽतिप्रसिद्धेऽपि' इत्यभिधानम् ।। ४९ ।।

**ताम्र—** [1]"अतथ्यान्यविद्यमानानि लिङ्गमूलमार्गणादीनि । वितथ्यानि विगतत्वे सति तथ्यानि स्रष्टृत्वादीनि' इति तत्त्वप्रदीपे । व्यधिकरणानि रुद्रस्य मार्कण्डेयवरदानादीनि । प्रकाशं प्रसिद्धम् । आत्मानं प्रति प्रकाशं मां प्रति अप्रसिद्धिं कुर्विति वा ।। ४९ ।।

**जम्बु—** तेषु मोहशास्त्रेषु अतथ्यानि कुत्राप्यविद्यमानानि लिङ्गमूलमार्गणसकृद्भस्मलिङ्गधारणादिना कैलासप्राप्त्यादीनि । वितथ्यानि व्यधिकरणतया विद्यमानानि । अथवा वेः विष्णोः तथ्यानि सार्वज्ञ्यादीनि त्वयि दर्शयस्व । लोके आत्मानं स्वात्मानं प्रति प्रकाशं प्रसिद्धिं कुरु । मां प्रति अप्रकाशं अप्रसिद्धिं कुरु । आत्मानं प्रसिद्धं मामप्रसिद्धं कुरु इति वा । प्रकाशोऽतिप्रसिद्धेऽपीत्यभिधानम् । एतत्कार्यकरणे त्वं समर्थोऽसि इति सूचयितुं महाबाहो महाभुज इति सम्बोधनम् इति वाराहवचनं प्रमाणमस्तीति भावः ।। ४९ ।।

**भारतश्री—** अतथ्यानि सर्वथाऽविद्यमानानि लिङ्गमूलान्वेषणादीनि । वितथ्यानि व्यधिकरणानि अस्वातन्त्र्यादीनि ।। ४९-५५ ।।

**इति वाराहवचनं ब्रह्माण्डोक्तं तथापरम् ।**
**अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ।। ५० ।।**

**व्यास—** तत्रैव प्रमाणान्तरमाह— **अमोहायेति** ।। ५०-५१ ।।

**वादि—** यथा शिवादीनां महिमा पाशुपतादौ मोहाय कथितः। एवं विष्णोर्गुणा अपि वेदादौ मोहाय कथिताः किम्? नेत्याह— **अमोहायेति** ।। आकारश्चिच्छरीरतैव न तु प्राकृत इत्यर्थः ।। ५० ।।

**अभिनव—** तत्रैव 'इति वाराहवचनं' इत्यस्ति तस्यार्थः । इति पूर्वोक्तरीत्या भगवन्माहात्म्यप्रतिपादकं वाराहवचनं वराहपुराणसम्बन्धिवचनमस्ति । तथैव भगवन्माहात्म्यप्रतिपादकं अपरं वाराहब्रह्माण्डपुराणा-तिरिक्तपुराणस्थवचनमस्तीति । एतेन ब्रह्माण्डोक्तमित्येनैव ब्रह्माण्डपुराणवचनस्य वराहपुराणवचनान्यत्वलाभात् अपरमिति ब्रह्माण्डपुराणवचनस्य वराहपुराणवचनान्यत्वकथनं व्यर्थमिति दूषणस्यानवकाशः । अपरमित्यनेन ब्रह्माण्डपुराणवचनस्य वराहपुराणवचनान्यत्वमुच्यत इत्यनङ्गीकारात् ।। ५० ।।

---

१. तत्त्वप्रदीपः १-१-१ ।

**सङ्क**— ननु यथा अन्येषां सर्वोत्तमत्वादिगुणाः मोहार्थमुक्ताः तथा विष्णोरपि गुणाः मोहार्थं किं न स्युः विशेषप्रमाणाभावादित्याशङ्क्य तत्परिहारार्थं उक्तदार्ढ्याय च ब्रह्माण्डपुराणवचनं विशेषप्रमाणमाह— **ब्रह्माण्डोक्तमिति** ।। विष्णोराकारता चिच्छरीरता न जडात्मक इत्यर्थः ।। ५०-५१ ।।

**वरद**— इति वाराहवचनं प्रमाणमस्तीत्यर्थः। तथा उक्तार्थे ब्रह्माण्डपुराणोक्तं अपरं अन्यद्वचनमस्तीति प्रतिज्ञाय तद्वचनमुदाहरति— **अमोहायेति** ।। विष्णोर्गुणा अमोहाय प्रोक्ताः नतु दोषवन्मोहाय। तथा विष्णोश्चिच्छरीरता आकारो नतु प्राकृताकारत्वम् । चित् ज्ञानं शरीरं यस्यासौ चिच्छरीरस्तस्य भावस्तत्ता ।। ५० ।।

**जना**— ननु यथाऽन्येषां सर्वोत्तमत्वादिगुणा मोहार्थमुक्तास्तथा विष्णोरपि गुणाः किं न स्युरित्यतः प्रमाणेन तं निराकरोति— **ब्रह्माण्डेति** ।। तथा पूर्वोक्तार्थप्रतिपादकं परं उत्तमार्थप्रतिपादकत्वेनोत्तमं वचनमस्ति । परमन्यं तथा शब्दः अन्यशास्त्रस्य मोहार्थत्वविष्णूत्कर्षादिप्रतिपादकत्वरूपार्थसमुच्चये वा । तदुदाहरति— **अमोहायेति** ।। विष्णोर्गुणा आकारः सहस्रशीर्षेत्याकारः चिच्छरीरता शरीरस्य ज्ञानात्मता च ।। ५० ।।

**ताम्र**— अमोहाय उच्यत इत्यन्वयः। सादरमिति आदरेण तात्पर्यमवगम्यते इति भावः। पुत्रेति सम्बोधनात् आदरोऽवगम्यते । मोहाय कथ्यत इत्युक्त्वा नान्यथेति प्रकारान्तरनिषेधाच्च तात्पर्यमिति ज्ञेयम् । मोहकशिवशास्त्रगतं कथं प्रमाणतयोदाह्रियते इत्यत उक्तं स्मारयति 'शिवशास्त्रेऽपि' इति ।। ५०-५५ ।।

**जम्बु**— ननु यथाऽन्येषां सर्वोत्तमत्वादिगुणा मोहार्थं उक्ताः तथा विष्णोः अपि गुणाः किं न स्युरित्यतः प्रमाणेन तन्निराकारोति— **ब्रह्माण्डोक्तमिति** ।। तथा उक्तार्थे ब्रह्माण्डपुराणोक्तं अपरं अन्यच्च वचनमस्तीति प्रतिज्ञाय तद्वचनमुदाहरति— **अमोहायेति** ।। अमोहाय विष्णोः भगवतः गुणाः ज्ञानानन्दादयः । आकारः सहस्रशीर्षत्वाद्याकारः। चिच्छरीरता चित् ज्ञानं शरीरं यस्यासौ चिच्छरीरः तस्य भावः तथा । शरीरस्य ज्ञानात्मकता इति यावत् ।। ५० ।।

**निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ।**
**एतद्विरुद्धं यत् सर्वं तन्मोहायेति निर्णयः ।। ५१ ।।**

**वरद**— तथा विष्णोर्निर्दोषत्वं उच्यते । मुक्तानामपि न केवलं संसारिणाम् । तारतम्यं च उच्यते । एतद्विरुद्धं यदुच्यते तत्सर्वं असुरजनमोहाय इति अशेषशास्त्रनिर्णय इति ब्रह्माण्डपुराणवचनस्यार्थः ।। ५१ ।।

**जना**— निर्दोषत्वं मुक्तानां तारतम्यं चेति । अमोहाय मोहनाशाय ज्ञानाय चोच्यते । एतस्य पूर्वोक्तस्य विरुद्धं यत् तत्सर्वं मोहायाज्ञानायेति निश्चयः ।। ५१ ।।

**जम्बु**— तथा विष्णोर्निर्दोषत्वं उच्यते । मुक्तानामपि न केवलं संसारिणां तारतम्यं च उच्यते । अमोहाय मोहनाशाय ज्ञानाय च उच्यते । एतद्विरुद्धं एतस्य पूर्वोक्तस्य विरुद्धं यत् तत्सर्वं मोहाय असुरमोहाय अज्ञानायेति अशेषशास्त्रार्थनिर्णय इति ब्रह्माण्डपुराणवचनस्य अर्थः ।। ५१ ।।

**स्कान्देऽप्युक्तं शिवेनैव षण्मुखायैव सादरम्।**
**शिवशास्त्रेऽपि तद् ग्राह्यं भगवच्छास्त्रयोगि यत् ।। ५२ ।।**

**व्यास**— उक्तार्थं प्रमाणान्तरेण द्रढयन् तत्प्रामाण्यसन्देहं वारयितुमाह— **स्कान्देपीति** ।। अप्रमाणशिव-शास्त्रगतं प्रमाणत्वेनोदाह्रियते इत्यत आह— **शिवेति** ।। ५२-५६ ।।

**वादि**— स्कान्दपुराणस्य तामसत्वात् तदुक्तं कथं ग्राह्यमित्यतः साक्षात्पित्रैव पुत्रं प्रत्युक्तत्वात् ग्राह्यमित्याह— **स्कान्देऽपीति** ।। षण्मुखायैव न तु तत्समीपस्थः कश्चनायोग्योऽप्यस्तीति एवकारार्थः। अतो न शङ्कनीयमिति भावः ।। ५२ ।।

**सङ्क**— सर्वदोषविहीनत्वमित्यादि भविष्यत्पर्ववचनोक्तं स्कान्दवचनेनापि समर्थयति— **स्कान्देप्युक्तमिति**।। स्कान्दस्य शैवत्वात् तत्रोक्तं कथं स्वीक्रियत इत्यत आह— **शिवशास्त्रेऽपीति** ।। ५२-५३ ।।

**वरद**— एवमेव स्कान्दपुराणेऽपि षण्मुखाय पुत्रायैव न तु अन्यस्मै । येन प्रतारणं स्यात् । शिवेनैव न त्वन्येन । येन भ्रान्तिमूलकत्वशङ्का स्यात् । सादरं सतात्पर्यमुक्तम् । तथा च वक्तृश्रोतृप्रसङ्गानुकूल्यलक्षणाप्तिमूलत्वात् नाप्रामाण्यशङ्का कार्येत्यर्थः। ननु शैवे स्कान्दे उक्तं कथं प्रमाणत्वेनोदाहृतं इत्यतः 'तत्रोक्तं तत्र वार्यत' इत्युक्तं स्मारयति— **शिवशास्त्रेऽपीति** ।। शिवमधिकृत्य प्रवृत्तेऽपि शास्त्रे भगवच्छास्त्रयोगि वैष्णवशास्त्रानुकूलं यद्वचनं दर्शनभाषयोक्तं तदपि प्रमाणत्वेन ग्राह्यमित्यर्थः ।। ५२ ।।

**जना**— 'एषां यत्र' इत्यादिनोक्तमर्थं प्रमाणांन्तरेणोपपादयति— **स्कान्द इति** ।। स्कान्दपुराणस्य तामसत्वात् कथं तदुदाहरणमित्यत आह— **शिवेनैवेति** ।। पित्रा पुत्रस्योक्तत्वात् तदुदाहरणम् । एवकारस्तु वक्तरि अज्ञानादिदोषं वक्तव्यांशे निवारयति । श्रोतरि अयोग्यतां च निवारयति । अत एवान्तेऽपि पुत्रेति सम्बोधनम् । सादरमिति तदर्थे तात्पर्यमाह । ननु शैवतामसपुराणोक्तस्य पुत्रं प्रत्युक्तत्वेऽपि कथं ग्राह्यत्वमित्यत आह— **शिवशास्त्र इति** ।। भगवच्छास्त्रानुकूलत्वात् ग्राह्यमितिभावः ।। ५२ ।।

**जम्बु**— 'एषां यत्र विरोधि' इत्यादिनोक्तमर्थं प्रमाणान्तरेण उपपादयति— **स्कान्द इति** ।। स्कन्दपुराणस्य तामसत्वात् कथं तदुदाहरणमित्यत आह— **शिवेनैवेति** ।। स्कन्दपुराणेऽपि शैवेनैव न तु अन्येन । येन भ्रान्तिमूलत्वशङ्का स्यादित्यर्थः। एवकारस्तु वक्तरि अज्ञानादिदोषं वक्तव्यांशे निवारयति— **षण्मुखायैव** ।। अत्र एवकारस्तु श्रोतरि षण्मुखे अयोग्यतां वारयति। अत एवान्ते पुत्रेति सम्बोधनम् । सादरमिति तदर्थे तात्पर्यमाह । ननु शैवतामसपुराणोक्तस्य पुत्रं प्रत्युक्तत्वेऽपि कथं ग्राह्यत्वमित्यत आह— **शिवशास्त्र इति** ।। शिवमधिकृत्य प्रवृत्तेऽपि शास्त्रे भगवच्छास्त्रयोगि भगवतः विष्णोस्सर्वोत्तमत्वप्रतिपादकशास्त्रस्य योगि अनुकूलं यद्वचनं दर्शनभाषयोक्तं तदपि प्रमाणत्वेन ग्राह्यमित्यर्थः ।। ५२ ।।

**परमो विष्णुरेवैकस्तज्ज्ञानं मोक्षसाधनम् ।**
**शास्त्राणां निर्णयस्त्वेष तदन्यन्मोहनाय हि ।। ५३ ।।**

**वरद**— तत्किं स्कान्दोक्तवचनं इत्यतस्तत्पठति— **परम इत्यादि** ।। एको विष्णुरेव परमः सर्वोत्कृष्टः । तस्य विष्णोरेव ज्ञानं मोक्षसाधनं इत्येष एव शास्त्राणां निर्णयः। तदन्यदेतद्विरुद्धं यन्मयोच्यते तन्मोहनाय । हि यस्मात् तस्मादेष निर्णयः इति सम्बन्धः ।। ५३ ।।

**जना**— विष्णुरेक एव परमः ।। ५३ ।।

**जम्बु**— तत्किं स्कान्दोक्तवचनमित्यत आह— **परम इत्यादिना** ।। एकः विष्णुरेव परमः सर्वोत्कृष्टः। तज्ज्ञानं तस्य विष्णोर्ज्ञानं मुक्तिसाधनं मुक्तेर्मोक्षस्य साधनं कारणमित्येतत् एवं शास्त्राणां निर्णयः तदन्यत् तद्विरुद्धं मोहनायोच्यते । हि यस्मात् तस्मादेष निर्णय इति सम्बन्धः ।। ५३ ।।

**[१]ज्ञानं विना तु या मुक्तिः साम्यं च मम विष्णुना ।**
**तीर्थादिमात्रतो ज्ञानं ममाधिक्यं च विष्णुतः ।। ५४ ।।**

**सङ्क**— तदन्यन्मोहनायहीत्युक्तं विवृणोति— **ज्ञानं विनेति** ।। ५४- ५५ ।।

**वरद**— 'तदन्यन्मोहनाय हि' इत्युक्तं विवृणोति— **ज्ञानं विनेत्यादिना** ।। ज्ञानं विना कर्ममात्रेण मुक्तिरिति यदित्यर्थः। हे पुत्र मम रुद्रस्य विष्णुना साकं साम्यम् । तथा तीर्थादिमात्रतः तीर्थस्नानादिमात्रतो न तु सद्गुरुमुखेन सच्छास्त्रश्रवणेनेत्यर्थः। विष्णुतः विष्णोः सकाशात् मम आधिक्यं उत्तमत्वम् ।। ५४ ।।

**जना**— ज्ञानं विना काशीमरणादिना मुक्तिः। तीर्थादिमात्रतः तीर्थगमनवासादिनैव ज्ञानं भवति। मम शिवस्य । विष्णुतः विष्णोः ।। ५४ ।।

**जम्बु**— 'तदन्यन्मोहनाय' इत्युक्तं विवृणोति— **ज्ञानं विनेति** ।। ज्ञानं विना भगवज्ज्ञानमृते कर्ममात्रेण मुक्तिरिति यदित्यर्थः। हे पुत्र मम रुद्रस्य विष्णुना नारायणेन साकं साम्यं तथा तीर्थादिमात्रतः तीर्थस्नानवासादिनैव तत्र देवताद्यनुसन्धानं गुरूपदेशं च विनेति योज्यम् । ज्ञानं भवति । तदुक्तं दशमस्कन्धतात्पर्ये—

[२]"प्राकृतैर्दृश्यमानं तु न द्रवं तीर्थमुच्यते ।
देवाश्च न शिलामात्राः किन्तु तत्रान्तरस्थिताः ।।
गुरूपदेशं तु विना न ते दृश्याः कथञ्चन ।
न ज्ञायते च तद्रूपं अन्यथाज्ञानिनां च ते ।।
कोपाच्छापं प्रयच्छन्ति तस्मात् गुरुमुपव्रजेत् ।
तस्मात्तीर्थानि देवाश्च नित्यं विद्वत्सु संस्थिता ।।' इति ।

विष्णुतः विष्णोस्सकाशात् मम मे आधिक्यं उत्तमत्वं यथा ।। ५४ ।।

**अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा ।**
**इत्यादि सर्वं मोहाय कथ्यते पुत्र नान्यथा ।। ५५ ।।**

---

१. प.पु. ७१- ११५-११६ । २. भा.ता. १०-७१-११ ।

**वादि—** 'तदन्यन्मोहनाय हि' इति प्रागुक्त्वा 'इत्यादि सर्वं मोहाय', 'अन्यथा तत्वज्ञानाय न' इति त्रिवारं विष्णुमहिमविरोधिग्रन्थस्य मोहकत्वनिर्णीतेः दुश्शास्त्रखण्डने आदरोऽवगम्यते। पुत्रेति प्रेमोक्त्या स्वोक्ततत्वज्ञानेऽप्यादरोऽवगम्यते। अतः सादरमित्युक्तम् ।। ५५ ।।

**वरद—** तथा हरिणा अस्मदादीनां ब्रह्मादीनामभेदः। तथा मुक्तानां च हरिणा अभेद इत्यादि सर्वं मोहाय असुरजनमोहनाय मया कथ्यते । अन्यथा वास्तवं तत्र कथ्यत इत्यर्थः ।। ५५ ।।

**जना—** अस्मदादीनां संसारिणां हरिणा अभेदश्च । तथा शब्दः समुच्चये । मुक्तानां अस्मदादीनां हरिणा अभेदश्चेत्यादिसर्वम् ।। ५५ ।।

**जम्बु—** हरिणा अस्मदादीनां संसारिणामभेदः यथा मुक्तौ अस्मदादीनां हरिणा अभेदश्चेत्यादि सर्वं मोहाय असुरमोहाय मया कथ्यते अन्यथा वास्तवं ते न कथ्यत इत्यर्थः ।। ५५ ।।

**उक्तं पाद्मपुराणे च शैव एव शिवेन तु ।**
**यदुक्तं हरिणा पूर्वमुमायै प्राह तद्धरः ।। ५६ ।।**

**वादि—** **'उक्तं पाद्मपुराणे च'** इत्यत्र द्विविधं पाद्मपुराणं पूर्वकाण्डमुत्तरकाण्डं चेति । तत्र पूर्वकाण्डं पूर्वपक्षः। सात्त्विकगारुडादिपञ्चपुराणादिविरुद्धार्थबोधकत्वात् । उत्तरकाण्डं तु सिद्धान्तः। उक्तसात्त्विक-पञ्चपुराणानुकूलत्वात् । अतः पाद्मपुराणे 'शैव इति' उक्तं, शिवप्रतिपादकपूर्वकाण्ड इत्यर्थः ।। ५६ ।।

**सङ्क—** एष मोहमिति वराहपुराणोक्तं पद्मपुराणवचनेन प्रकटयन्नाह— **उक्तमिति** ।। एतदेव विवृणेति— **यदुक्तमिति** ।। हरिणा यदुक्तमात्मन इति शेषः ।। ५६-५७-५८ ।।

**वरद—** एवमेव शैवे शिवप्रतिपादके पद्मपुराणे च शिवेनोक्तम् । तत्किं तत्राह— **यदुक्तमिति** ।। पूर्वं हरिणा स्वात्मानं प्रति यदुक्तं तदुमायै पार्वत्यै हरः प्राहेत्यर्थः ।। ५६ ।।

**जना—** वराहपुराणोक्तं पद्मपुराणवचनेनाप्युपपादयति— **उक्तमिति** ।। पद्मपुराणे काण्डद्वयं तत्र पूर्वभागे शिवोत्कर्षप्रतिपादकत्वात् शैवे पाद्मपुराणे शिवेन पूर्वोक्तं अर्थजातमुक्तमस्ति । ननु तर्हि तत्र शम्भो इति सम्बोधनं कथं इत्यत आह— **यदिति** ।। हरः यद्धरिणा पूर्वं स्वस्योक्तं तदुमायै प्राहेति सम्बन्धः। तेन हरिवाक्यत्वात् शम्भो इति सम्बोधनं घटतेति भावः ।। ५६ ।।

**ताम्र—** यदुक्तं हरिणा स्वस्मै ।। ५६ ।।

**जम्बु—** वराहपुराणोक्तं पद्मपुराणवचनेनाप्युपपादयति— **उक्तमिति** ।। पद्मपुराणे काण्डद्वयं पूर्वकाण्डं उत्तरकाण्डश्चेति । तत्र पूर्वकाण्डं पूर्वपक्षः। सात्त्विकगरुडादिपञ्चपुराणविरुद्धार्थबोधकत्वात् । उत्तरकाण्डं तु सिद्धान्तः उक्तसात्त्विकपञ्चपुराणानुकूलत्वात् । अतः पद्मपुराणे 'शैव' इत्युक्तम् । शिवप्रतिपादकपूर्वकाण्डे इत्यर्थः। शिवेन पूर्वोक्तमर्थजातं उक्तमस्ति । ननु तर्हि तत्र शम्भो इति सम्बोधनं कथमित्यत आह— **यदिति** ।।

हरिणा स्वात्मानं प्रति यदुक्तं तदुमायै पार्वत्यै हरः प्राह तेन हरिवाक्यत्वाच्छम्भो इति सम्बोधनं घटत इति भावः ।। ५६ ।।

**भारतश्री—** शैव एव शैवभाग एव ।। ५६-६० ।।

**त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।**
**द्वापरादौ युगे भूत्वा कलया मानुषादिषु ।। ५७ ।।**

**व्यास—** षण्मुखं प्रति शिवोक्तं किं तद्वाक्यमित्यस्तत्पठति— **त्वामिति** ।। कलया अंशेन [1]।। ५७-९८।।

**वरद—** तद्वचनं उदाहरति— **त्वामाराध्य इति** ।। हे शम्भो द्वापरादौ युगे मानुषादिषु कलया अंशेनावतीर्य त्वामाराध्य पूजयित्वा सदा वरं गृहीष्यामि गृह्णामि ।। ५७ ।।

**जना—** तद्वाक्यमुदाहरति— **त्वामिति** ।। द्वापरादौ द्वापरः आदिः व्युत्क्रमेण यस्य तद् द्वापरादि । सामान्ये नपुंसकम् । तेन कलौ न अवतारः। कृतादौ इत्युक्तेः कलावपि प्राप्तेस्तथा नोक्तम् । युगे मानुषादिषु कलया स्वरूपांशेन भूत्वा अवतीर्य सदा अव्युच्छिन्नद्वादशाब्दादिना कालेन त्वामाराध्य तथा आराधनानुकूलं वरं गृहीष्यामीति सम्बन्धः। यद्वा सदा प्रतिब्रह्मदिनं वरं गृहीष्यामीति ।। ५७ ।।

**ताम्र—** ।। **द्वापरादाविति** ।। द्वापरयुगे कृष्णत्वेन मानुषेष्वतीर्य शिवाराधनेन पुत्रवरस्वीकारात् । त्रेतायां रामसेतौ लिङ्गं प्रतिष्ठाप्य ब्रह्महत्यामोचनवरस्वीकारात् । ***कुम्भकोणमाहात्म्ये—***

'तस्य पार्श्वे महत्तीर्थं मात्स्यं निश्रेयसः पदम् ।
पुरा प्रतिष्ठितं लिङ्गं विष्णुना मत्स्यरूपिणा ।
अद्यापि मत्स्यास्तिष्ठन्ति शङ्करस्य प्रसादतः ।।'

इति कृतयुगावतीर्णमत्स्यरूपविष्णोः लिङ्गप्रतिष्ठापकत्वोक्तेः द्वापरादौ मानुषादावित्यादिशब्दप्रयोगोपपत्तिः। कलया अंशेन ।। ५७ ।।

**जम्बु—** तद्वाक्यमुदाहरति— **त्वामिति** ।। हे शम्भो हे रुद्र द्वापरादौ द्वापरः आदिः व्युत्क्रमेण यस्य तत् द्वापरादि । सामान्ये नपुंसकम् । तेन कलौ नावतारः। कृतादावित्युक्ते कलावपि प्राप्तेः तथा नोक्तम् । युगे मानुषादिषु कलया स्वरूपांशेन भूत्वा अवतीर्य सदा अव्युच्छिन्नद्वादशाब्देन कालेन त्वामाराध्य तथाराधनानुकूलं वरं गृहीष्यामीति सम्बन्धः। यद्वा सदा प्रतिब्रह्मदिनं वरं गृहीष्यामीति द्वापरे कृष्णो भूत्वा शिवमाराध्य वरं गृहीतवान् । उक्तं भागवते—

[2]"आराध्य देवदेवेशं शङ्करं लोकशङ्करम् ।
तपसा तोषयित्वा तं कैलासगिरिवासिनम् ।
रुक्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः।।' इति ।

---

१. इतः परं सप्तनवति(९७)श्लोकपर्यन्तं ग्रन्थपातः । २. भा. १०-६८- १-२ ।

व्यासो भूत्वा च । तदुक्तं प्रथमस्कन्धतात्पर्ये—

[1]"नित्यतृप्तः परानन्दो योऽव्ययः परमेश्वरः।
तस्य पुत्रफलं नैव यज्जातं जगदीदृशम् ।।
यदधीनश्रियोपाङ्गात् ब्रह्मरुद्रादिसंस्थितिः।
स पुत्रार्थं तपस्तेपे व्यासो रुद्रस्य चेश्वरः ।।'

इति त्रेतायां रामसेतुलिङ्गं प्रतिष्ठाप्य ब्रह्महत्यामोचनरूपवरस्वीकारात् । कुम्भकोणमाहात्म्ये—

'तस्य पार्श्वे महातीर्थं मात्स्यं निःश्रेयसः प्रदम् ।
पुरा प्रतिष्ठितं लिङ्गं विष्णुना मत्स्यरूपिणा ।।
अद्यापि मत्स्या तिष्ठन्ति शङ्करस्य प्रसादतः ।।'

इति कृतयुगावतीर्णमत्स्यरूपिविष्णोः लिङ्गप्रतिष्ठापकत्वोक्तेः द्वापरादौ मानुषादावित्यादिशब्दप्रयोगोपपत्तिः ।। ५७ ।।

**स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।**
**मां च [2]'गोपाय येन स्यात् सृष्टिरेषोत्तराधरा' ।। ५८ ।।**

**वादि— सृष्टिरेषोत्तराधरे**त्यत्र उत्तराः कृतयुगादौ उत्तममार्गे प्रवर्तमानाः दैत्याः अधराः अधममार्गस्थाः यस्यां सा तथोक्ता । येन मया त्वया च कृतविपरीताचारेण ।। ५८ ।।

**वरद—** त्वं च स्वागमैः स्वप्रतिपादकागमैः कल्पितैः स्वकपोलकल्पितैः निर्मितैः जनान् दुष्टजनान् मद्विमुखान् मयि भक्तिशून्यान् कुरु । मां च गोपय आच्छादय । अनेन किं स्यादित्यत आह— **येन स्यादिति**।। येनानेन कृतेन एषा आसुरसृष्टिः उत्तरा सन्मार्गवर्तिन्यपि अधरा असन्मार्गवर्तिनी स्यात् । तदर्थं इदं कुर्वित्यर्थः ।। ५८ ।।

**जना—** कल्पितैरयथार्थैः स्वागमैः स्वोत्तमत्वप्रतिपादकैः येन गोपनेनोत्तरा कृतादौ सदाचारेणोर्ध्व-लोकगमनोन्मुखी अधरा नरकाद्यधोलोकगमनोन्मुखी, स्यात्तथा कुर्विति सम्बन्धः ।। ५८ ।।

**ताम्र—** स्वागमैः स्वप्रतिपादकागमैः। कल्पितैः केवलकल्पनायुक्तैः। येन मद्गोपनेन मद्विमुखीकरणेन च उत्तरा साधनानुष्ठानेन ऊर्ध्वलोकाभिमुखा असुरसृष्टिः अधरा अन्धंतमःपातिनी स्यादित्यर्थः ।। ५८ ।।

**जम्बु—** कल्पितैरयथार्थस्वागमैः स्वोत्तमप्रतिपादकैः कल्पितैरिति वा । स्वोत्तमप्रतिपादकैः आगमैः जनान् दुष्टजनान् मद्विमुखान् मयि भक्तिशून्यान् कुरु । मां च गोपय आच्छादय । अनेन किं स्यादित्यत आह— **येन स्यादिति** ।। येन मद्गोपनेन मद्विमुखीकरणेन वा एषा असुरसृष्टिः उत्तरा सन्मार्गवर्तिन्यपि अधरा असन्मार्गवर्तिनी स्यात् अनुष्ठानेनोर्ध्वलोकाभिमुखी असुरसृष्टिः अधरा अन्धन्तमःपातिनी स्यात् ।। ५८ ।।

---

१. भा.ता. १-२-२ । २. 'गोपय' इति पाठान्तरम् ।

**न च वैष्णवशास्त्रेषु वेदेष्वपि हरेः परः।**
**क्वचिदुक्तोऽन्यशास्त्रेषु परमो विष्णुरीरितः ।। ५९ ।।**

**वादि**— **अन्यशास्त्रेषु** शैवशास्त्रेषु । ईरितः क्वचित् क्वचिद्भागे ईरितः। अतस्तत्स्वविरुद्धत्वात् न वेदादिवत्सर्वत्र विश्वसनीयमिति भावः ।। ५९ ।।

**सङ्क**— ननु 'अमोहाय गुणा विष्णोः' इति विष्णुगुणानाममोहार्थत्वमुक्तम् । एतद्विरुद्धं मोहायेति चोक्तम् । तत्कथं निश्चीयत इत्यत आह— **न च वैष्णवशास्त्रेष्विति** ।। अत्रायमभिप्रायः। **वैष्णवशास्त्रेषु** वेदेष्वपि विष्णोरन्यस्य परत्वानुक्तेः इतरत्र विष्णोः परत्वोक्तेः विष्णोः सर्वोत्तमत्वादिगुणा अमोहाय अन्येषां सर्वोत्तमत्वादिगुणा मोहायोक्ता इति निश्चीयते ।। ५९ ।।

**वरद**— नन्वेवं शैवशास्त्रेष्वपि विष्णोः परत्वं यथोच्यते तथा वैष्णवशास्त्रेष्वपि शिवादेरुत्तमत्वमुच्यते चेत् को विशेष इत्यतो नेत्याह— **न चेति** ।। वैष्णवशास्त्रेषु भारतादिषु वेदेष्वपि च हरेः पर उत्कृष्टः क्वचिन्नोक्तः रुद्रादिनाम्नां विष्णुपरत्वात् । उक्तरीत्या च अन्यशास्त्रेषु विष्णुः पर ईरित इत्यतो विष्णोराधिक्यमस्तीत्यर्थः ।। ५९ ।।

**जना**— वैष्णवेषु विष्णोः शिवस्यापि परत्वं शैवे च शिवस्य विष्णोश्चोत्तमत्वमुच्यते । एवं सति निर्णयः कथमित्यत आह— **न चेति** ।। तथा च शैवशास्त्रं स्ववचनविरोधादेवाप्रमाणमिति भावः ।। ५९ ।।

**ताम्र**— एवं मोहार्थत्वात् शैवादिशास्त्रस्याप्रामाण्यमिह प्रसाध्य पूर्वोत्तरविरुद्धत्वाच्च अन्यागमाना-मप्रामाण्यमिति वदन् न चैतद्वैष्णवग्रन्थेष्वपि सममित्याह— **न च वैष्णवेशास्त्रेष्वित्यादिना** ।। ५९ ।।

**जम्बु**— नन्वेवं शैवशास्त्रेऽपि विष्णोः परत्वं यथा उच्यते तथैव वैष्णवशास्त्रेऽपि शिवादिषु उत्तमत्वमुच्यते चेत् को विशेष इत्यत नेत्याह— **न चेति** ।। वैष्णवशास्त्रेषु विष्णुसर्वोत्तमत्वप्रतिपादकशास्त्रेषु भारतादिषु वेदेष्वपि ऋगादिष्वपि हरेः विष्णोः परः उत्कृष्टः क्वचिन्नोक्तः। रुद्रादिनाम्नां विष्णुपरत्वात् । उक्तरीत्या अन्यशास्त्रे विशेषो अस्तीत्यर्थः। अथवा मोहकत्वात् शैवादिशास्त्रस्य अप्रामाण्यमिति प्रसाध्य पूर्वोत्तरविरुद्धत्वाच्च अन्यागमानां अप्रामाण्यमिति वदन् न चैवं वैष्णवग्रन्थेष्वपि सममित्याह— **न चेति** ।। तथा च शैवशास्त्रं स्ववचनविरोधादेव अप्रमाणमिति भावः ।। ५९ ।।

**निर्दोषत्वाच्च वेदानां वेदोक्तं ग्राह्यमेव हि ।**
**[1]वेदेषु च परो विष्णुः सर्वस्मादुच्यते सदा ।। ६० ।।**

**सङ्क**— इतोऽपि वैष्णवशास्त्रेषु वेदेषु चोक्तगुणा ग्राह्या एवेत्याह— **निर्दोषत्वाच्चेति** ।। च शब्दात् वैष्णवोक्तमपि ग्राह्यम् । वेदानुसारित्वेन निर्दोषत्वादित्यर्थः। ननु भवतु वेदाद्युक्तं ग्राह्यम् । तत्र किं प्रतिपाद्यत इत्यत आह— **वेदेष्वपीति** ।। अपि वेदानुसारिग्रन्थेष्वपीत्यर्थः ।। ६० ।।

---

१. 'वेदेष्वपि' इति पाठान्तरम् ।

**वरद**— ननु उक्तित्वाविशेषाद्वेदोक्तमेव भ्रान्तिविप्रलम्भादिमूलं किं न स्यादित्यत आह— **निर्दोषत्वादिति**।। वेदानामपौरुषेयत्वेन पुरुषदोषनिबन्धनदोषाभावात् वेदोक्तमेव ग्राह्यं नतु अन्यत्रोक्तं भ्रान्त्यादिमूलत्वसम्भवादित्यर्थः ।। ६० ।।

**जना**— प्रकारान्तरेणापि विष्णोः परत्वमुपपादयति— **निर्दोषत्वादिति** ।। निर्दोषत्वादपौरुषेयत्वेन वक्त्रादिनिबन्धन– दोषरहितत्वात् । वेदेषु किमुक्तमित्यत आह— **वेदेषु इति** ।। ६० ।।

**ताम्र**— ननु वेदवेदानुसारिषु हरेः परस्यानुक्तत्वेऽपि पाशुपतादिशास्त्रात्तद् ग्रहणं किं न स्यात् । वेदोक्तमपि हरिसर्वोत्तमत्वं त्यज्यतां वा किं न भवेत् । पाशुपतादिविरोधात् । न चासुरतमःप्राप्तये मोहनाय कृतत्वात् न ग्राह्यं पाशुपतमिति वाच्यम् । वेदादावपि मोक्षापेक्षया ईश्वरं प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्यैवासत्वसम्भवात् । संवादाभावेन सत्वनिश्चयायोगादित्यत आह— **निर्दोषत्वादिति** ।। वेदानाम् । च शब्दात् वैष्णवग्रन्थानां च निर्दोषत्वात् वेदवेदानुसार्युक्तहरिसर्वोत्तमत्वादिकं ग्राह्यमेव । तथा वेदोक्तमेव ग्राह्यम् । न तु तदनुक्तं (पाशुपताद्युक्तं) हरिसर्वोत्तमत्वादिकम् । तेषां विप्रलम्भादिमूलत्वेन सदोषत्वात् । हीत्यनेन [1]"अनुक्तं पञ्चभिर्वेदैः न वस्त्वस्ति कुतश्चन' इति प्रमाणप्रसिद्धिं सूचयति । इदमुक्तं भवति । करणेषु ज्ञानजनकत्वशक्तिरेव प्रामाण्यजनकत्वशक्ति–रित्युत्सर्गः। सति दोषे अप्रामाण्यजनकत्वशक्तिराविर्भवति । प्रकृते च वेदस्यापौरुषेयत्वाद्वैष्णवशास्त्रस्य तदनुसारित्वेन निर्दोषत्वात् वेदोक्तं ग्राह्यम् । पाशुपतादेः सदोषत्वादप्रामाण्यान्न तदुक्तं ग्राह्यमिति । किं तद्वेदोक्तमित्यतः तत्प्रतिज्ञाय तदर्थकं वेदवाक्यं पठति— **वेदेष्वित्यादिना** ।। ६० ।।

**जम्बु**— उक्तस्य रमाद्युत्कर्षस्यैवासम्भवात् संवादाभावेन सत्वे निश्चयायोगादित्यत आह— **निर्दोषत्वादिति** ।। निर्दोषत्वात् अपौरुषेयत्वेन वक्त्रादिनिबन्धनदोषरहितत्वात् वेदानां वेदोक्तमेव ग्राह्यम् । चशब्दात् वैष्णवग्रन्थानां च निर्दोषत्वात् वेदवेदानुसार्युक्तं हरिसर्वोत्तमत्वादिकं ग्राह्यमेव । तथा वेदोक्तमेव ग्राह्यम् । न तु तदनुक्तं (पाशुपताद्युक्तं) हरेस्सर्वोत्तमत्वादिकम् । तेषां विप्रलिप्सादिमूलत्वेन सदोषत्वात् । हीत्यनेन 'अनुक्तं पञ्चभिर्वेदैः न वस्त्वस्ति कुतश्चन' इति प्रमाणं सूचयति । इदमुक्तं भवति । करणेषु ज्ञानजनकत्वशक्तिरेव प्रामाण्यजनाकत्व–शक्तिरिति उत्सर्गः। सति दोषे न प्रामाण्यजनकत्वशक्तिराविर्भवति । प्रकृते च वेदस्य अपौरुषेयत्वेन वैष्णवशास्त्रस्य तदनुसारित्वेन निर्दुष्टत्वात् वेदोक्तं ग्राह्यम् । पाशुपतादेः सदोषत्वेन अप्रामाण्यात् न तदुक्तं ग्राह्यमिति । तदुक्तम्

[2]'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।
....तत्क्रमेणैव तैर्वर्णैः तैः स्वरैरेव नान्यथा ।।
पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु ।
क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत्' इति ।। ६० ।।

---

१. सू.भा. २-१-१६ । २. वि.त.नि. प्रथमपरिच्छेदः ।

**[१]"अस्य देवस्य मीळ्हुषो वया**
**विष्णोरेषस्य प्रभृथे हविर्भिः।**
**विदे हि रुद्रो रुद्रियं महित्वं**
**यासिष्टं वर्तिरश्विनाविरावत्' ।। ६१ ।।**

**वादि**— वेदेषु विष्णुः सर्वस्मात्परम उच्यते इत्युक्तम् । के ते वेदा इत्यतः कांश्चित्पठति । 'अस्य देवस्य' इत्यादिना 'न कश्चित्तत्समः सदा' इत्यन्तेन ग्रन्थेन । मीळ्हुषः 'मिह सेचन' इति धातोः भक्तानामभीप्सित-सकलपुरुषार्थसेचकस्य । एषस्य 'इषु इच्छायाम्' इति धातोः आ समन्तादप्रतिहतेच्छस्य । देवस्य क्रीडादिगुण-विशिष्टस्य । अस्य सकलजगद्भिन्नत्वेन अकारशब्दवाच्यस्य विष्णोः। हविर्भिः यज्ञीयहविर्भिः। प्रभृथे प्रकर्षेण भरणे । 'तृतीयोऽतिशये' इति सूत्रात् भृतमेव भृथम् । तस्मिन्नुदरभरणे कृते सति सम्पूर्णपूजायामित्यर्थः। 'वय बन्धन' इति धातोः । वया अहङ्कारारूपेण बन्धको रुद्रः। रुद्रान्तरव्यावृत्त्यर्थं वया इत्युक्तम् । रुद्रियं रुद्रसम्बन्धि । समुद्रियमितिवत् इदमपि पदं बोद्धव्यम् । महित्वं महिमानं विदे विविदे हि लेभे हीत्यर्थः। तेन कारणेन हे अश्विनौ देवौ युवामपि विष्णोर्हविर्भिः प्रभृथे कृते सति । इरावत् 'इरेत्यन्ननाम' इति ब्राह्मणवचनात् अन्नवत् । यज्ञाहुतिरूपान्नवदिति यावत् । वर्तिः वर्तनं 'वृतु वर्तन' इति धातोः। सर्पिःपदवन्नपुंसकपदं इदं औणादिके डिसन्प्रत्यये कृते सति जातम् । यासिष्टम् अयासिष्टं प्राप्तवन्तौ स्थः। महासमर्थो रुद्रोऽपि यतो विष्ण्वर्चनेनैव महिमानं प्राप । ततोऽप्यतिनीचयोर्युवयोर्विष्ण्वर्चनेनैव यज्ञभोक्तृत्वाख्यवृत्तिरासीदिति किं वाच्यमिति भावः। अर्चकादर्च्योत्तमत्वस्य सर्वजनसिद्धत्वात् । अनया श्रुत्या रूद्रादिभ्योऽपि विष्णुरुत्तम इति सिद्धम् । दृष्टान्ततयोक्तेः रुद्रस्यार्चकत्वं विष्णोरर्च्यत्वं रुद्रपददातृत्वं च सिद्धम् ।। ६१ ।।

**सङ्क**— तानुदाहरति— **अस्येत्यादिना न कश्चित्तत्समः सदेत्यन्तेन** ।। अस्य विष्णोः एषस्य आ समन्तादिस्वभावस्य । मीळ्हुषः समर्थस्य अभिलषितार्थसेचकस्य वा । देवस्य द्योतनविजयादिगुणविशिष्टस्य । हविर्भिः प्रभृथे प्रभरणे आराधने कृते सति हि । वया बन्धकः । स रुद्रो । रुद्रियं महित्वं रौद्रमहिमानं । विदे लेभे । हे अश्विनौ युवामपि इरावदन्नवत् । वर्तिं वृत्तिम् । हविर्भिः विष्ण्वाराधने सति तत्सकाशादेव यासिष्ट-मयासिष्टमित्यर्थः ।। ६१ ।।

**वरद**— वेदेषु च सर्वस्माद्रुद्रादेः परः उत्कृष्टो विष्णुः सदा संसारे मुक्तौ च उच्यत इति प्रतिज्ञाय रुद्राद्युत्तमत्व-प्रतिपादकवेदवाक्यानि पठति— **अस्येत्यादिना** ।। देवस्य क्रीडादिगुणविशिष्टस्य । मीळ्हुषो अभिलषितफलसेचकस्य । भक्तेभ्य इति शेषः। अभिलषितदातुरिति यावत् । समर्थस्य वा । एषस्य आ समन्तात् इष्टस्वरूपस्य विष्णोः। हविर्भिः प्रभृथे प्रभरणे आराधने कृते सति वयाः तमोगुणनियामकत्वेन अहंकाराभिमानित्वात् बन्धकः। वय बन्धन इति धातोः। एतादृशो रुद्रो रुद्रियं रुद्रस्य विद्यमानं महित्वं महिमानं विदे लेभे हि प्रसिद्धम् । अतो हे अश्विनौ युवामपि तं विष्णुमाराध्य इरावत् ओदनवत् वर्तिः वर्तनं यासिष्टं प्राप्नुतामित्यर्थः ।। ६१ ।।

---

१. ऋ.सं. ७-४०-५ ।

**जना**— कोऽसौ वेद इत्यतस्तमुदाहरति— **अस्येति** ।। देवस्य क्रीडादिगुणविशिष्टस्य । मीळ्हुषः भक्तेभ्यः सेचकस्याभीष्टदातुः। एषस्य आसमन्तादिष्टस्वभावस्य इच्छारूपस्य वा । अस्य विष्णोः। हविर्भिः प्रभृथे प्रभरणे पूजायां कृतायाम् । अहङ्काररूपेण बन्धकत्वात् वया बन्धको रुद्रः । रुद्रियं रुद्रसम्बन्धि । महित्वं महिमानं । विदे हि लेभे हि । हे अश्विनौ युवामपि इरावत् अन्नवत् । वर्तिः वर्तनम् । यासिष्टं अयासिष्टं प्राप्तौ अनेन रुद्रादिभ्यः उत्तमत्वमुक्तं भवति ।। ६१ ।।

**ताम्र**— अस्य प्रसिद्धस्य देवस्य द्योतनादिगुणवतः मीळ्हुषः भक्ताभिलषितवर्षितुः। एषस्य इच्छारूपस्य सत्यकामस्येति यावत् । विष्णोर्हविर्भि हविरादिद्रव्यैः । प्रभृथे भरणे पूजने कृते । तत्प्रसादात् वया 'वय बन्धने' असुन् । अहङ्काराभिमानित्वेन जीवानां बन्धको रुद्रो । रुद्रियं महित्वं रौद्रं महिमानम् । विदे विविदे । हि सुप्रसिद्धमेतत् । हे अश्विनौ युवामपि विष्णोः प्रसादादेव इरावद्वर्ति । देवानामन्नं इरा इत्युच्यते । अन्नवद्वर्तनम् । समस्तभोगवत्पदम् । यासिष्टम् अयासिष्टम् । लब्धवन्तावित्यर्थः। **न्यायरत्नावल्यां** तु 'आ समन्तादीशस्य । मीळ्हुषो वीर्यवतो विष्णोः। हविर्भिः विष्णूद्देशेन दत्तैर्हविर्भिः प्रभृथे ध्यानयोगे सति । वया कालरूपो रुद्रो' इति श्रीपद्मनाभतीर्थश्रीमच्चरणैः व्याख्यातम् ।। ६१ ।।

**जम्बु**— वेदेष्वपि वेदेषु च तस्मात् रुद्रादेः परः उत्तमः विष्णुः सदा संसारे मुक्तौ च उच्यते इति प्रतिज्ञाय रुद्राद्युत्तमत्वप्रतिपादकवेदवाक्यानि पठति— **अस्येत्यादिना** ।। अस्य प्रसिद्धस्य । देवस्य क्रीडादिगुणविशिष्टस्य द्योतनादिगुणवतो । मीळ्हुषः भक्ताभिलषितफलसेचकस्य समर्थस्य वा । एषस्य आ ईषस्येति पदच्छेदः। आ समन्तात् इष्टस्वरूपस्य एषस्य इच्छारूपस्य वा । सत्यकामस्येति यावत् । विष्णोर्नारायणस्य हविर्भिः । प्रभृथे प्रभरणे आराधने कृते सति । अहङ्काराभिमानित्वेन तमोगुणाभिमानित्वेन वा जीवानां वया बन्धकः 'वय बन्धने' इति धातोः। एतादृशो रुद्रियं रुद्रस्य विद्यमानं महित्वं पदवीं लेभे । हि प्रसिद्धमेतत् । तथा हे अश्विनौ युवामपि तं विष्णुं आराध्य । इरावत् अन्नवत् । 'इरेत्यन्नतार्थे' इति ब्राह्मणवचनात् । अन्नवत् यज्ञाहुतिरूपान्नवदिति यावत् । वर्तिः वर्तनम् । 'वृतु वर्तने' इति धातोः सर्पिःपदवत् नपुंसकपदमिदम् । समस्तभोगवत्पद-मिदम् । यासिष्टं प्राप्नुताम् । **न्यायावल्यां** तु आ समन्तादीशस्य मीळ्हुषः वीर्यवतः विष्णोः हविर्भिः विष्णूद्देशेन कृतैः हविर्भिः प्रभृते ध्यानयोगे सति वयाः कालरूपो रुद्र इति ***पद्मनाभतीर्थश्रीमच्चरणैः*** व्याख्यातम् ।। ६१ ।।

**भारतश्री**— रुद्राद्युत्तमत्वप्रतिपादकवेदवाक्यानि पठति— **अस्येत्यादिना** ।। देवस्य क्रीडादिगुणविशिष्टस्य । मीळ्हुषो भक्ताभिलषितसेचकस्य । एषस्य आसमन्तात् इष्टरूपस्य विष्णोः हविर्भिः प्रभृथे प्रभरणे आराधने कृते सति वयाः तमोगुणनियामकत्वेन बन्धकः । 'वय बन्धने' इति धातोः । एतादृशो रुद्रो रुद्रियं रुद्रस्य विद्यमानं महत्वं महित्वम् । विदे लेभे । हि प्रसिद्धम् । अतः अश्विनौ युवामपि । तं विष्णुमाराध्य । इरावत् अन्नवत् । वर्ति वर्तनम् । यासिष्टमयासिष्टम् । प्रार्थयाम इत्यर्थः ।। ६१ ।।

**[१]"स्तुहि श्रुतं गर्तसदं युवानं**
**मृगं न भीममुपहत्नुमुग्रम् ।'**
**[२]"यं कामये तन्तमुग्रं कृणोमि**
**तं ब्रह्माणं तमृषिं तं सुमेधाम्' ।। ६२ ।।**

**वादि**— हे रुद्र गर्ते गुहायां सदः सदनं यस्य तम्। 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः पचाद्यचि कृते सद इत्यकारान्तं पदं भवति । युवानं नित्यं यौवनवयसि स्थितम् । 'असाधारण्येन व्यपदेशा भवन्ति' इति वचनात् । मृगत्र मृगमिव सिंहमिव भीमं भयङ्करं नरसिंहमित्यर्थः। नशब्द उपमायाम् । 'व्यत्ययो बहुलम्' इति वचनात् मृगमित्युक्तम् । भीमत्वे दृष्टान्तीकृतेन स च मृगः सिंह इत्यपि लभ्यते । उपहत्नुं सिंहत्वात् शत्रूणां समीपं गत्वा गत्वा हननशीलम् । इतस्ततः उत्प्लुत्योत्प्लुत्य हिरण्यकशिपोः सेनाहन्तारमित्यर्थः। हिरण्यकशिपोः स्वाङ्क एव हननात् समीपे हन्तारं वा । समीपस्थप्रह्लादस्याहननाद्धननायोपपन्नानामेव हन्तारं वा । उग्रं शत्रुभयङ्करम् । श्रुतं श्रुतिप्रतिपाद्यम् नरसिंहं स्तुहि स्तोत्रं कुरु । स्तवान इति उपरि वर्तमानप्रयोगात् स्तौषीति वा । स्तवानः नरसिंहस्तुतिं कुर्वन्, त्व जरित्रे 'जरितागरिता' इति ब्राह्मणवचनात् । तवापि स्तुत्यनरसिंहस्य स्तुतिकर्त्रे मह्यम् । 'गृ निगरण' इति धातोः। मृड रक्षको भव। 'मृड रक्षण' इति धातोर्लोटि मध्यमपुरुषैकवचनमिदम् । ते सेनाः भूतप्रेतपिशाचाद्याः। अस्मत् अस्मत्तः अन्यमवैष्णवं जनम् । निवपन्तु नितरां नाशयन्तु । 'वप च्छेदन' इति धातोः वपनं छेदनमित्यर्थः। अनेन शिवान्तर्यामित्वात् शिवस्तुत्यत्वाच्च शिवादिभिरप्यवध्यदैत्यवधकर्तृत्वाच्च शिवादत्यन्तभेदः तदुत्तमत्वं सर्वोत्तमत्वं च सिद्धम् । यं यं उग्रं रुद्रं कर्तुं कामये । तं तमुग्रं रुद्रं कृणोमि करोमि । एवं यं यं ब्रह्माणं ऋषिं सुमेधां सुमेधसं च कर्तुं कामये । तं तं ब्रह्माणं ऋषिं सुमेधसं च कृणोमि करोमि इति लक्ष्म्या वचनम् । अनेन विष्णुभार्याधीनानां ब्रह्मरुद्रादीनां विष्ण्वधीनत्वं सुतरां सिद्ध्यतीति हृदयम् 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वात्' इति हि न्यायविदो वदन्ति ।। ६२ ।।

**सङ्क**— मृगं न सिंहमिव । भीमं भयङ्करं नृसिंहम् । श्रुतं प्रख्यातम् । गर्ते सदने उपहत्नुं सर्वसंहारकं हे रुद्र त्वं स्तुहीत्यर्थः। यं यं उग्रं कृणोमीति कामये तं तं उग्रं कृणोमि । यं यं ब्रह्माणं कृणोमीति कामये तं तं ब्रह्माणं कृणोमि । यं यं ऋषिं कृणोमीति कामये तं तं ऋषिं कृणोमि । यं यं सुमेधसं कृणोमीति कामये तं तं सुमेधसं कृणोमीत्यन्वयः ।। ६२ ।।

**वरद**— श्रुतं प्रसिद्धम् । गर्तसदं हृदयगुहानिहितम् । युवानं प्रथमवयस्कम् । मृगं सिंहम् । न इव । भीमं भयङ्करम् । उपहत्नुं संहारकम् । प्रलयकाल इत्यर्थः। उग्रं दंष्ट्रान्त्रमालादियुक्तत्वेन उग्रमिव विद्यमानं नरसिंहं स्तुहीति रुद्रं प्रति मन्त्रद्रष्टा उच्यते । यं कामयेति लक्ष्म्यात्मकाम्भृणीवाक्यम् । यं उग्रं रुद्रं कर्तुं कामये तं उग्रं रुद्रं कृणोमि करोमि । यं ब्रह्माणं कर्तुं कामये तं ब्रह्माणं करोमि । यं ऋषिं कर्तुं कामये तं ऋषिं करोमि । यं सुमेधां सुमेधसं कर्तुं कामये तं तथा करोमीत्यर्थः। अत्र रुद्रस्य लक्ष्म्यधीनत्वोक्त्या लक्ष्म्याः विष्ण्वधीनत्वात् लक्ष्म्यधीनस्य रुद्रस्य विष्ण्वधीनत्वं किमु वक्तव्यं इत्युक्तं भवति । अनेन नासङ्गतिः ।। ६२ ।।

---

१. ऋ.सं. २-३३-११ । २. ऋ.सं. १०-१२५-५ ।

**जना**— हे मृड हे रुद्र श्रुतं प्रसिद्धं गर्तसदं हृदयगुहागतम् । युवानं तरुणम् । मृगं न सिंहमिव । भीमं भयङ्करम् । उपहत्नुं सर्वसंहारकम् । उग्रं नृसिंहं स्तुहि । अत्र रुद्रस्तुत्यत्वकथनात् रुद्रोत्तमत्वं उक्तं भवति । यं उग्रं रुद्रं कर्तुं कामये तं तमुग्रं कृणोमि करोमि । एवं ब्रह्माणमित्यादौ योज्यम् । अत्र ब्रह्मादीनां हर्यधीनलक्ष्म्यधीनत्वकथनात् सर्वस्य हर्यधीनत्वमुक्तं भवति ।। ६२ ।।

**ताम्र**— श्रुतम् सर्ववेदप्रसिद्धम् । गर्तसदम् हृदयगुहानिवासम् । युवानं नित्ययौवनोपेतम् । मृगं न मृगमिव सिंहमिव भीमं भयङ्करम् । उग्रम् उग्राणां दैत्यानां उपहत्नुं संहारकं श्रीनृसिंहं स्तुहि स्तोषीति । इदं प्रतिवेदद्रष्टुर्वचनम् ।

[1]"कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ।
योनित्वेनात्मनो विष्णोः.................।।'

इत्युक्तत्वाच्च सिद्धं भगवदुत्तमत्वमिति भावेन श्रुतिमुदाहरति— **यमिति** ।। यं यं उग्रं रुद्रं कर्तुं कामये तं तं उग्रं कृणोमि करोमि । यं ब्रह्माणं कर्तुं कामये तं ब्रह्माणं करोमीत्यादि । सुमेधां सुमेधसम् ।। ६२-६३ ।।

**जम्बु**— श्रुतं सर्ववेदप्रसिद्धम् । गर्तसदं हृदयगुहानिहितम् । युवानं प्रथमवयस्कम् । मृगं न नृसिंहमिव । भीमं भयङ्करम् । उपहत्नुं संहारकम् । उग्रं दंष्ट्रान्त्रमालाधारित्वात् उग्रमिव विद्यमानम् । उग्राणां दैत्यानां उपहत्नुं संहारकं वा नरसिहं स्तुहि स्तोषीति रुद्रं प्रति वेदद्रष्टृवचनम् ।

'कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ।
योनित्वेनात्मनो विष्णोः............... ।।'

इत्युक्तत्वाच्च सिद्धं भगवदुत्तमत्वं इति भावेन श्रुतिमुदाहरति— **यं कामय इति** ।। अहं यं यं उग्रं रुद्रं कर्तुं कामये तं तं उग्रं रुद्रं कृणोमि करोमि । यं ब्रह्माणं कर्तुं कामये तं ब्रह्माणं करोमि यं ऋषिं कर्तुं कामये तं ऋषिं करोमि । यं सुमेधां सुमेधसं कर्तुं कामये तं सुमेधसं कृणोमि ।। ६२ ।।

**भारतश्री**— श्रुतं प्रसिद्धम् । गर्तसदं हृदयगुहानिहितम् । युवानं नित्ययौवनोपेतम् । मृगं सिंहम् । उपहत्नुं संहारकम् । उग्रं दंष्ट्राकरालवदनम् । नरसिंहं स्तुहीति रुद्रं प्रति मन्त्रद्रष्टा उपदिश्यते— **यं कामये इति** श्रीदेव्यात्मकाम्भृणीवाक्यम् । यं यं उग्रं रुद्रं कर्तुं कामये तं तं उग्रं कृणोमि करोमि । यं ब्रह्माणं कर्तुं कामये तं ब्रह्माणं कृणोमि । यं ऋषिं कर्तुं कामये तं तथा करोमि । यं सुमेधां सुमेधसम् । रुद्राय । रुद्रं आतनोमि । ब्रह्मद्विषे चतुर्मुखपञ्चममुखच्छेत्रे । शरवे हिंसकाय । हन्तुमेव इत्यर्थः ।। ६२ ।।

**[2]"एको नारायण आसीन्न ब्रह्मा न च शङ्करः।'**
**'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' ।। ६३ ।।**

**वादि**— 'इदमग्रे' इत्येकं पदम् । अस्य जगतोऽग्रे प्रलयकाल इत्यर्थः ।। ६३ ।।

---

१. अनु. १-१-८६ । २. 'आसीदेको हरिर्दिव्यो देवो नारायणःपरः। ब्रह्मा नेन्द्रो न चेशानो न च चन्द्रदिवाकरौ। न वा द्यावा पृथिव्यौ च न नक्षत्राणि दिवौकसः।' (पद्म/उ.खं.२३८अ/४१-५२) ।

**सङ्क—** एको नारायण आसीत् वासुदेवो वेत्यनयोः स्पष्टोऽर्थः ।। ६३ ।।

**वरद—** प्रलये एको नारायण आसीत् ब्रह्मा शङ्करश्च नासीदित्यर्थः। इदमग्रे अस्य जगत अग्र आदौ वासुदेवः आसीद्वै। न ब्रह्मेति पूर्ववत् ।। ६३ ।।

**जना—** ।। **एक इति** ।। हरेः प्रलयकालवर्तित्वं ब्रह्मादीनां तत्काले अभावश्चोच्यते— **वासुदेव इति** ।। अग्रे इत्यव्ययम् । तेन प्रथमान्ततापि ज्ञेया। इदं रमाब्रह्मादिकमपेक्ष्याग्रे अग्र्यः गुणश्रेष्ठश्चासीत् । इदमस्य रमादिजगतः अग्रे आदौ आसीत् इति वा ।

[1]'इदं सर्वं अपेक्ष्यासौ कालतो गुणतस्तथा ।
अग्र्य एव समस्तेश.................. ।।' इति वचनात् ।

'अग्रशब्दो गुणाधिक्यवाची' इति ऐतरेयभाष्योक्तेश्च । अत्र गुणकालाधिक्यमुक्तं भवति ।। ६३ ।।

**जम्बु—** प्रलये एकः नारायण आसीत् ब्रह्मा नासीत् शङ्करश्च नासीत् । एक इति हरेः प्रलयकालवर्तित्वं ब्रह्मादीनां तत्काले अभावश्च उच्यते ।। **वासुदेव इति** ।। अग्रे इति अव्ययम् । तेन प्रथमान्तता सप्तम्यन्तता च ज्ञेया । इदं रमाब्रह्मादिकं अपेक्ष्य अग्रे अग्र्यः गुणैः श्रेष्ठः आसीत् । इदमस्य रमादिजगतः अग्रे आदौ आसीत् ।

'इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा ।
अग्र्य एव समस्तेश.................... ।।' इति वचनात् ।

'अग्रशब्दो गुणाधिक्यवाची' इति ऐतरेयभाष्योक्तेश्च । अत्र गुणकालाधिक्यमुक्तं भवति ।। ६३ ।।

**भारतश्री—** प्रलये एको नारायण आसीत् । ब्रह्मा नासीत् शङ्करश्च नासीत् । इदमग्रे अस्य जगतोऽग्रे ।। ६३ ।।

**[2]'यदा पश्यः पश्यते रुग्मवर्णं**
**कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय**
**निरञ्जनः परमं साम्यमुपैति' ।। ६४ ।।**

**वादि—** ।। **यदा पश्यः**।। पश्यतीति पश्यो जीवः। पचाद्यचि कृते पश्य इत्यपि रूपं भवति । **रुक्मवर्णं** सुवर्णवर्णम् । कर्तारं जगत्कर्तारम् । ईशं सर्वेशम् । पुरवःपूर्णाः षाः षड्गुणाः यस्येति पुरुषः पूर्णषड्गुणः। ब्रह्मयोनिं चतुर्मुखस्य कारणम् । परमं परा ब्रह्मादिभ्योऽप्युत्तमा मा लक्ष्मीः पत्नी यस्य तं परमं नारायणम् । पश्यते अपरोक्षीकृत्य जानाति । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः अञ्जनपदवाच्याविद्यारहितः। परमं साम्यं निर्दुःखत्वनिरञ्जनत्वनित्यानन्दत्वनिःसंसारत्वादिना साम्यम् । चेतनत्वादिना ईषत्साम्यस्य संसारेऽपि विद्यमानत्वात् तमोगेषु च विद्यमानत्वात् परममित्युक्तम् । स्वस्मादुत्तमोत्तमनारायणवत् स्वस्मिन्

१. ऐ.भा. २-३-१-१ । २. आ.उ. ५-३ ।

स्वोत्तमत्वस्यायोगात् न सर्वसाम्यमिति भावः। अनेन सप्रकारतयैव विष्णोरपरोक्षज्ञानम्, विष्णुः कर्तृत्वादिगुणभरित एव न निर्गुणः, सर्वोत्तमश्च, मुक्तावपि तस्य साम्यमेव नाभेद, इति प्रमेयचतुष्टयं सिद्धम् ।। ६४ ।।

**सङ्क**— आसु श्रुतिषु ब्रह्मरुद्रादीनां पराधीनत्वदर्शनात् स्वातन्त्र्यादर्शनाच्च सर्वस्माद्विष्णोः परत्वं निश्चीयते । ननु विष्णोः सर्वदा सर्वपरत्वं नोपपद्यते मुक्त्यनन्तरं हरिणैक्यादित्यत आह— **यदेति** ।। अस्यां श्रुतौ रुग्म–वर्णत्वादिगुणविशिष्टविष्णुं दृष्ट्वा मुक्तस्य विष्णुसादृश्यकथनात् मुक्तौ ऐक्याभावेन सर्वदा सर्वपरत्वं निश्चीयते । अयं हि श्रुत्यर्थः। रुक्मवर्णं स्वर्णवर्णम् । सर्वस्य कर्तारं ईशं सर्वेश्वरम् । पुरुषं पूर्णषड्गुणम् । ब्रह्मणो वेदस्य चतुर्मुखस्य वा योनिं कारणम् । परमं सर्वस्मादुत्तमं विष्णुम् । पश्यतीति पश्यो जीवः। यदा पश्यते तदा विष्णोः साम्यं निर्दुःखत्वादिसादृश्यं उपैति । परममिति साम्यविशेषणं चेति ।। ६४ ।।

**वरद**— ननु उदाहृतश्रुतिभिः विष्णोः सर्वस्मात्परत्वं संसारदशायां सिद्ध्यति । मुक्तौ च विष्णोः सर्वाभेदात्कथं तत्र सर्वपरत्वम् । तथा च 'सर्वस्मादुच्यते सदा' इत्यनुपपन्नं इत्यतो मुक्त्यनन्तरमपि विष्णोः सर्वभेदश्रुतेः तत्रापि तद् सिद्ध्यतीत्याह— **यदेति** ।। पश्यतीति पश्यो जीवोऽपरोक्षज्ञानावस्थापन्नो। रुक्मवर्णं हिरण्यवर्णम् । सर्वस्य कर्तारं ईशं सर्वस्वामिनं पुरुषं पूर्णषड्गुणं ब्रह्मणो वेदस्य चतुर्मुखस्य वा योनिं कारणं परमात्मानं पश्यते अपरोक्षीकरोति यदा तदा विद्वान् असौ अपरोक्षज्ञानी पुण्यं अनिष्टं पापं च सर्वात्मना विधूय निरञ्जनः सर्वदोषविनिर्मुक्तः सन् परमं साम्यं अपरोक्षीकृतस्य हरेः निर्दुःखत्वादिसाम्यमुपैति नतु तदैक्यमित्यर्थः। अस्यां श्रुतौ रुक्मवर्णत्वादिगुणविशिष्टविष्णुं दृष्ट्वा मुक्तस्य विष्णुसादृश्यकथनात् मुक्तौ ऐक्याभावेन सर्वदा परत्वं युक्तमिति भावः ।। ६४ ।।

**जना**— ।। **यदा पश्यः** ।। पश्यतीति पश्यो जीवः। रुक्मवर्णं सुवर्णवर्णम् । सर्वस्य कर्तारमीशं सर्वेश्वरं पुरुषं पूर्णषड्गुणम् । ब्रह्मणश्चतुर्मुखस्य योनिं कारणं पश्यते । तदा विद्वान् अपरोक्षज्ञानी अप्रारब्धपुण्यपापं विधूय निरञ्जनः निर्लेपः परमं साम्यं निर्दुःखत्वादिना साम्यमुपैति ।। ६४ ।।

**ताम्र**— ननु भेदस्य व्यावहारिकत्वात् विष्णोः सर्वस्मात् परमत्वं सिद्ध्यति । मुक्तिदशायां भेदस्य निवृत्त्या उत्तमत्वायोग इत्यतस्तत्रापि भेदप्रतिपादकश्रुतिं पठति— **यदेति** ।। पश्यतीति पश्यो जीवः। ब्रह्मणश्चतुर्मुखस्य योनिं कारणं यस्य तं वा । पुण्यमनभीष्टमनारब्धं पुण्यं पापं च विधूय निरञ्जनः निर्लेपः साम्यं परमात्मना निर्दुःखित्वादिसादृश्यम् । अत्र साम्यस्य भेदव्याप्तत्वात्तत्सिद्धिः ।। ६४ ।।

**जम्बु**— मुक्त्यनन्तरमपि सर्वभेदश्रुतेः तत्रापि सर्वभेदता सिद्ध्यतीत्याह— **यदेति** ।। पश्यतीति पश्यो जीवः। अपरोक्षज्ञानावस्थापन्नः। रुक्मवर्णं हिरण्यवर्णं कर्तारं सर्वस्येति शेषः। ईशं सर्वस्वामिनं पुरुषं पूर्णषड्गुणं ब्रह्मयोनिं ब्रह्मणः वेदस्य चतुर्मुखस्य वा योनिं कारणं परमात्मानं पश्यते अपरोक्षीकरोति यदा तदा विद्वान् अपरोक्षज्ञानी असौ जीवः पुण्यपापे पुण्यं अनिष्टं पापं च अनारब्धं पुण्यपापं च सर्वात्मना विधूय निरञ्जनः सर्वदोषनिर्मुक्तः परमं साम्यं अपरोक्षीकृतहरेः निर्दुःखादिसादृश्यं न तु तदैक्यम् । अत्र साम्यस्य भेदव्याप्तत्वात् तत्सिद्धिः। तदुक्तं भविष्ये—

[1]"अनभीष्टं अनारब्धं पुण्यमस्य विनश्यति ।
किमु पापं परब्रह्मज्ञानिनां नात्र संशयः ।।' इति ।। ६४ ।।

**भारतश्री—** मुक्तौ भेदप्रतिपादकवाक्यं पठति— **यदेति** ।। पश्यो जीवः । पुरुषं पूर्णषड्गुणं ब्रह्मयोनिं वेदयोनिं चतुर्मुखकारणमिति वा पश्यते अपरोक्षीकरोति तदा स विद्वान् अपरोक्षज्ञानी ; पुण्यं अनिष्टम् । निरञ्जनः निर्दोषः । परमं साम्यं हरेर्निदुःखत्वादिसाम्यम् । न तु तदैक्यमित्यर्थः ।। ६४ ।।

**[2]"यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता' ।। ६५ ।।**

**वादि—** यो गुहायां हृदयगुहायां परमे व्योमन् व्योम्नि हृत्पद्माकाशे निहितं नारायणं वेद सः मुक्त्यनन्तरं विपश्चिता सर्वज्ञेन ब्रह्मणा परब्रह्मणा सह 'ब्रह्मविदाप्नोति परम्' 'सत्यं ज्ञानमनन्तं ब्रह्म'इति तस्यैव प्रस्तुतत्वात् । सर्वान्कामान्स्वयोग्यसर्वविषयान् अश्नुते भुङ्क्ते । सायुज्यपदव्यां यो भोगः सः मर्त्यदेहाविष्टग्रहवत् विष्णुदेहं प्रविश्य विष्णुपादेन गमनात् विष्णुचक्षुषा दर्शनात् विष्णुघ्राणेनाघ्राणनात् विष्णुरसनयास्वादनाच्च सहभोग इत्युच्यते । तत्रापि लक्ष्म्यादिभोगस्य निरवधिकपरमात्मपरानन्दभोगस्य च मुक्तेष्वसम्भवात् स्वस्वयोग्यमौक्तविषय एव ग्राह्यः। अत एव काम्यन्ते इति कामाः इति व्युत्पत्त्या कामनायोग्यविषयबोधकपदमेवोक्तम् । अनेन ब्रह्मणा सहेत्युक्त्या मुक्तावपि नाभेद इति सिद्धम् ।। ६५ ।।

**सङ्क—** 'यो वेद' इत्यनया श्रुत्या सर्वदा सर्वपरत्वं विष्णोः निश्चीयते । तथाहि श्रुत्यर्थः। यो हृद्गुहायां निहितं स्थिते । व्योमन् व्योम्नि आकाशे । परमस्य स्थानत्वात् परमे । निहितं ब्रह्म वेद । स मुक्त्यनन्तरं विपश्चिता सर्वज्ञेन परब्रह्मणा चतुर्मुखेन वा सह । सर्वान् कामान् समश्नुत इति ।। ६५ ।।

**वरद—** गुहायां हृदयगुहायां विद्यमाने परमे व्योमन् व्योम्नि हृदयाकाश इति यावत् । निहितं प्रतिष्ठितं यो वेद अपरोक्षतया पश्यति सः विपश्चिता अपरोक्षज्ञानिना ब्रह्मणा चतुर्मुखेन सह हरिं प्राप्य इति शेषः। तथा विपश्चिता सर्वज्ञेन हरिणा सह विद्यमानः सर्वान् स्वस्वयोग्यान् कामान् भोगान् अश्नुते भुङ्क्त इत्यर्थः। अत्र ब्रह्मणा सह इत्युक्त्या मुक्तावपि भेदो लभ्यते ।। ६५ ।।

**जना—** यः गुहायां हृदयगुहायाम् । परमे व्योम्नि आकाशे । निहितं स्थितं परमात्मानम् । वेद अपरोक्षतया जानाति सः विपश्चिता ब्रह्मणा चतुर्मुखेन परब्रह्मणा वा सर्वान्कामानश्नुते भुङ्क्ते । श्रुतिद्वये विष्ण्वपरोक्षज्ञानान्मुक्तिः उक्ता भवति । अपरोक्षज्ञाने विशेष उक्तो हरिवंशे—

[3]"विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत्सुराः।
प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ।।' इति ।

तथान्योऽपि विशेषो बोद्धव्यः।

---

१. सू.भा. ४-१-१७ । २. ब्रह्मानन्दवल्ली २-२ । ३. तै.भा. भृगुवल्ली ।

[1]"मध्ये वयसि चेत्सिद्धो मुक्तो मध्यं प्रपश्यति ।
वार्धक्ये चेद्विजानाति मुक्तः पादौ प्रपश्यति ।।
तेजोमण्डलमेवान्यदङ्गं विष्णोः प्रपश्यति ।
पूर्वे वयसि बोद्धव्यं आमुखात्सर्वदृष्टये ।।' इति ।। ६५ ।।

**ताम्र**— गुहायां हृदये । परमे भगवद्विशेषसन्निधियोग्यत्वात् उत्तमे । व्योमन् व्योम्नि । अत्र ब्रह्मणा परब्रह्मणा सहेति भेदोक्तिः ।। ६५ ।।

**जम्बु**— मुक्तौ जीवेश्वरभेद एव श्रुत्यन्तरं उदाहरति— **यो वेदेति** ।। यः गुहायां हृदयगुहायां विद्यमाने परमे व्योमन् व्योम्नि । भगवद्विशेषसन्निधानयुक्तत्वात् उत्तमे । हृदयावकाशे इति यावत् । निहितं प्रतिष्ठितं । यो वेद अपरोक्षतया यो पश्यति । सः विपश्चिता अपरोक्षज्ञानिना ब्रह्मणा चतुर्मुखेन सह हरिं प्राप्येति शेषः। तथा विपश्चिता सर्वज्ञेन हरिणा सह विद्यमानः सर्वान् स्वयोग्यान् कामान् अश्नुते भुङ्क्ते। श्रुतिद्वये विष्ण्वपरोक्षज्ञानात् मुक्तिरुक्ता भवति । अपरोक्षज्ञाने विशेष उक्तः हरिवंशे—

'विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत्सुराः ।
प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ।।' इति ।

तथा अन्योऽपि विशेषो बोद्धव्यः

'मध्ये वयसि चेत्सिद्धं मुक्तो मध्यं प्रपश्यति ।
वार्ध्यक्ये चेत् विजानाति मुक्तः पादौ प्रपश्यति ।।
तेजोमण्डलमेवान्यत् अङ्गं विष्णोः प्रपश्यति ।
पूर्वे वयसि बोद्धव्यं आमुखात् सर्वदृष्टय ।।' इति ।। ६५ ।।

**भारतश्री**— मोक्षे भेदे एव प्रमाणान्तरं पठति । यः गुहायां हृदयगुहायां विद्यमाने परमे व्योमन् व्योम्नि हृदयाकाशे निहितं प्रतिष्ठितं वेद अपरोक्षतया पश्यति स अपरोक्षज्ञानी विपश्चिता अपरोक्षज्ञानिना ब्रह्मणा चतुर्मुखेन सह हरिं प्राप्येति शेषः । तथा विपश्चिता सर्वज्ञेन हरिणा सह विद्यमानाः सर्वान् कामान् स्वयोग्यान् मुक्तान् भोगान् अश्नुते भुङ्क्ते इत्यर्थ ।। ६५ ।।

**[2]"प्र घा न्वस्य महतो महानि**
**सत्या सत्यस्य करणानि वोचम् ।'**
**[3]"सत्यमेनमनु विश्वे मदन्ति**
**रातिं देवस्य गृणतो मघोनः' ।। ६६ ।।**

**वादि**— अधुना ये भगवत्स्वरूपमात्रमङ्गीकृत्य स्रष्टृत्वपालकत्वादितत्कर्मणां करचरणाद्याकारस्य चक्षुरादिकरणानां सार्वज्ञ्यादिगुणानां प्रमाणप्रमेयादिजगतां च मिथ्यात्वं ब्रुवते। परवञ्चनाय कथञ्चित्सत्यतां वदन्तोऽपि

१. तै.भा. भृगुवल्ली । २. ऋ.सं. २-१५-१ । ३. ऋ.सं. ४-१७-५ ।

स्वकपोलमात्रपरिकल्पितव्यावहारिकसत्यतामेव वदन्ति। न तु स्वब्रह्मवत् पारमार्थिकसत्यत्वमङ्गीकुर्वते। तन्मतमपाकर्तुं त्रैकालिकनिषेधाभावरूपपारमार्थिकसत्यत्वसाधकश्रुती: पठति— **प्र घा न्वस्येत्यादिना** ।। सत्यस्य पारमार्थिकसत्यस्य। महत: सर्वोत्तमस्य हरे:। महानि महान्ति। "मह पूजायाम्" इति धातो: पचाद्यचि कृते महानीत्यपि साधु। करणानि "भावे ल्युट्" इत्यनुशासनात् जगत्स्रष्टृत्वपालकत्वादिकर्माणि। भावो नाम कर्मकरणादिव्युत्पत्तिं विना केवलं धातुस्वभावभूतार्थ:। एवं च परनिरपेक्षतया स्वभावत एव सदा भवतीत्यर्थलाभात् भगवत्कर्माण्यपि स्वभावत एव सदा भवन्ति। न तु कदापि तेषामभाव इति त्रैकालिकाभावाप्रतियोगित्वरूपं पारमार्थिकत्वमेव सिद्धम् । पराभिलषितमिथ्यात्वं व्यावहारिकसत्यत्वं च गर्भस्रावेणैव गतम्। एतदेवाभिप्रेत्य श्रुतिरन्याप्याह। 'स्वाभाविकी ज्ञानबलक्रिया च' इति।

यद्वा करणानि सृष्ट्युपयुक्तचक्षुर्हस्तादिदशेन्द्रियाणि। महीमहीधरादिमहाकार्याणि कथमहस्त: कुरुते। कथमपाद: कुरुते कथं चान्ध: कुरुते। तथा चोक्तरीत्या सदातनभगवत्कर्मोपयोगिनां तेषामपि सदातनत्वलाभात् पारमार्थिकत्वमेव सिद्ध्यति। किं च

"[1]ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्य: कृत:।
ऊरू तदस्य यद्वैश्य: पद्भ्यां शूद्रो अजायत ।।
चन्द्रमा मनसो जातश्चक्षो: सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ।।
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौ: समवर्तत।
पद्भ्यां भूमिर्दिश: श्रोत्रात् तथा लोकान्.....।।'

इत्यादिश्रुत्युक्तविधया सदातने ब्राह्मणादिस्रष्टृत्वं कथं सार्वकालीनमुखाद्यवयवाभावे चक्षुरादिकरणाभावे च स्यात्। इतोऽपि ब्राह्मणाद्यसाधारणकारणतया करणानि भगवन्मुखाद्यङ्गानि सूर्याद्यसाधारणकारणानि चक्षुरादिकरणानि च पारमार्थिकसत्यानीति सिद्धम्।

अथवा जीवेष्वसम्भावितपृथिव्यप्तेजोवाय्वादिमहत्तरविजातीयकर्तृत्वादौ असाधारणकारणतयोपयोगित्वात् करणानि सर्वज्ञत्वसर्वेश्वरत्वसर्वशक्तत्वादिभगवल्लक्षणानि च सदातनसृष्ट्युपयोगितया त्रिकालाबाध्यानीति सिद्धम्। विजातीयकार्योपादानभूतविजातीयानन्तपरमाणूनामपरोक्षज्ञानं कथं सार्वज्ञ्याभावे स्यात्। अनीश्वरजीवेष्वदृष्टं कथं सर्वेश्वरत्वाभावे स्यात् । कथं च सर्वशक्त्यभावे स्यात्। न ह्युपादानमपश्यन् कुलालादिर्घटादि निर्मिमीते। नापि कर्तृषूत्तमत्वाभावे प्रासादादिविचित्रकर्म कुरुते। अपि च 'अनाद्यनन्तं जगदेतदीदृक्प्रवर्तते' इति श्रुते: अनाद्यनन्तकालीनमहीमहीधरमहोदधिप्रभृतिकार्यसृष्टावन्तरङ्गकारणतया करणानि मृदाद्युपादानानि विना कथं तत्स्रष्टृत्वं भगवत: स्यात्। अतस्तान्यपि पारमार्थिकसत्यानीति सिद्धानि। अत एव एतानि परापरतत्वानि। अहं च सत्या सत्यानि। घ एव। सत्यान्येव नतु कदाचिदसत्यानीत्येवकारार्थ:। सत्यत्वावधारणस्य दीर्घकालीनत्वसूचनाय संहितायां घा इति दीर्घ:। एवं च विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकत्वेन कदाचिदपि सत्यत्वायोगो नेति पारमार्थिकत्वस्यैव सिद्धि:। 'सुपां सुलुक्' इति विभक्तिलोपे सति सत्या सत्यानीति सिद्ध्यति। इतोऽपि सत्यत्वस्य

---

१. ऋ.सं १०-९०- १२-१४ ।

कदापि विभागाभावरूपपारमार्थिकसत्यत्वं सिद्धम् । कर्तृकर्माद्यर्थसप्तके विभजनाद्धि विभक्तिः। प्रवोचं प्रावोचम्। नु एव प्रवोचमेव। वचने प्रकर्षो नाम तत्त्वावेदकत्वलक्षणं प्रामाण्यमेव। अत एव परोऽपि तत्त्वावेदकवाक्यानि महावाक्यान्याह। तथा च प्रेत्युपसर्गबलादपि वचनबोधितसत्यत्वरूपार्थस्य पारमार्थिकसत्यत्वसिद्धिः। किञ्च "नेह नाना" इति वाक्यशतकेन कुत्सितवादिभिः प्रतिषेधे कृतेऽपि प्रावोचमेवेति वदन्ती श्रुतिः तेषां सावकाशत्वेन दौर्बल्यं स्वस्या निरवकाशत्वेन प्राबल्यं च सूचयन्ती सती स्वोक्तमर्थं बाधकाभावात् पारमार्थिकतया द्रढयति।

यद्वा नोः प्रसिद्ध्यर्थकत्वात् सकललोकप्रसिद्ध्यैव सत्यानि प्रावोचम्। न तु कुसमयिनां कल्पनयाऽपि। मदुक्तं सत्यत्वं पारमार्थिकसत्यत्वमेवेत्याह।

अथवा "अप्यक्षरसाम्यान्निर्ब्रूयात्" इति श्रुतेः। नु ननु। "विस्मयामन्त्रणे ननु" इत्यनुशासनात् स्रष्टृत्वादिकर्मणां चक्षुरादिकरणानां सर्वज्ञत्वसर्वेश्वरत्वादिमहिम्नां च सत्यत्वाभावे [1]"सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते" इति वचनात् ब्रह्मण एव मरणापरपर्यायमसत्यत्वं स्यात्। यतोऽकीर्तिर्नाम महिम्नामभावोत्कीर्तनमेव। एवं च विस्मयकरो हि महिम्नां महिमा। यतः स्वाभावकथने उक्तरीत्या ब्रह्माभावं सम्पादयन्ति। तथा च ब्रह्मणः पारमार्थिकसत्यत्वनिर्वाहायैव तन्महिमादिसत्यत्वमपि प्रार्थयित्वा समानयेत्। अत एव सत्येत्येतत्प्रथममाह। भगवतः स्वरूपसत्यत्वमाशासानः पुमान् ओदनार्थी तण्डुलानिव प्रथमत एव महिम्नां सत्यत्वं चाभ्युपगच्छेदेवेति भावः। अपि चेयं श्रुतिः एकपङ्क्तावुक्तब्रह्मणः तन्महिम्नां च सत्यत्वे द्वैविध्यं वदतः परस्य बन्दीकरणाय महतो महानीति प्रतिबन्दीं जग्राह। तेन ब्रह्मणस्तन्महिम्नां च महत्त्वे यथा न वैचित्र्यम् तथा सत्यत्वेऽपि न वैचित्र्यमिति सिद्ध्यति। अतः सार्वभौमधर्मपत्नीश्रुतिः कथमेकपङ्क्तौ स्थितानां पङ्क्तिभेदेन परिवेषयेत्। अत एवोत्तरसत्यपदस्याना-नुभविकं कञ्चिदर्थं वदतः अन्वये उपक्रमविरोधं दर्शयितुं प्राक् सत्यस्येति ब्रह्मसत्यत्वमेव श्रुत्या प्रस्तावितम्। संहितायामुपसंहारविरोधं दर्शयितुं अन्ते सत्यस्येत्याह। तथा चेयमुभयतः पाशारज्जुः परस्य। किं च ब्रह्मणस्तन्महिम्नां च कालत्रयेऽपि व्ययाभावसूचनाय सहैवाव्ययत्रयं प्रथमत एव प्रायुङ्क्त । तस्माद्बहुयुक्तिरदनखरमुखरितत्वात् परोदीरितव्यावहारिकत्वाख्यकुञ्जरभञ्जने पञ्चाननोपमेयं श्रुतिरिति ज्ञेयम्। गृणतःस्तुतिं कुर्वतः। मघोनःइन्द्रस्य। रातिं बलिं पराभाज्य त्रैलोक्यदानम्। "रा दान" इति धातुः। विश्वे सर्वे देवाः। एनं दातारं भगवन्तं अनु अनुसृत्य। सत्या सत्यम्। पारमार्थिकसत्यमिति। मदन्ति हर्षं कुर्वन्ति। "मदि हर्षे" इति धातोः ।। ६६ ।।

**सङ्क**— अस्य महतः सत्यस्य विष्णोः महानि महान्ति सत्यानि पारमार्थिकानि करणानि सृष्ट्यादिकर्माणि नु इदानीं प्रावोचं घ प्रावोचमेव प्रवच्मीत्यर्थः। गृणतः स्तुवतः। मघोनः इन्द्रस्य देवस्य। रातिं अभीष्टदातारं एनं विष्णुं अनु विश्वे सर्वे देवा मदन्ति मोदन्ते सत्यं इति पारमार्थिकमित्यर्थः ।। ६६ ।।

**वरद**— इतोऽपि मुक्तौ भेदाभावो न मन्तव्यः। यतो विष्णोः महिम्नो जगतश्च सत्यत्वावगमेन सर्वभेदस्य पारमार्थिकत्वावगम इति भावेन महिमादिसत्यत्वप्रतिपादकश्रुतिमुदाहरति— **प्र घेत्यादिना** ।। अस्य महत उत्कृष्टस्य विष्णोः। महानि महान्ति । सत्या सत्यानि पारमार्थिकानि । करणानि कर्माणि सृष्ट्यादीनि । नु इदानीम् । घ एव । प्रावोचं प्रवच्मीत्यर्थः। गृणतः स्तुवतः। मघोन इन्द्रस्य देवस्य । रातिं मित्रं अभीष्टदातारं वा

---

१. भ.गी. २-३४ ।

'रा दान' इति धातुः। एनं विष्णुं अनु एतस्मादेव। विश्वे सर्वे अधिकारिणो देवाः। मदन्ति हृष्यन्ति इत्येतत्सर्वस्योपजीवकत्वं विष्णोः सर्वोपजीव्यत्वं च सत्यं पारमार्थिकमित्यर्थः ।। ६६ ।।

**जना**— महतः सर्वोत्तमस्य । सत्यस्य सत्यवचसः । अस्य विष्णोः । महानि महान्ति । करणानि कर्माणि । सत्या सत्यानि । नु इदानीम् । प्रावोचं घ प्रावोचमेव । [1]"अवधारणे घशब्दः स्यात्सारमात्रं तु सारघम्' इति शब्दनिर्णये । गृणतः स्तुवतः। देवस्य मघोनः इन्द्रस्य । रातिं अभीष्टदातारम् एनमनु विश्वे देवाः मदन्ति हर्षं प्राप्नुवन्तीत्येतत्सत्यम् । सत्यमित्येतत् एनमित्यस्य विशेषणं वा । अत्र विष्णुकृतसर्जनादेः सत्यत्वमुक्तं भवति ।। ६६ ।।

**ताम्र**— भगवतः सर्वोत्तमत्वे भेदादिप्रपञ्चसत्यत्वे च श्रुतीरुदाहरति— **प्र घेति** ।। अस्य महतः सर्वोत्कृष्टस्य । सत्यस्य उत्तमानन्दज्ञानस्वरूपस्य जगत्सद्भावयापकस्य वा परमेश्वरस्य। महानि महान्ति । सत्या सत्यानि। करणानि जगत्सर्जनादिकर्माणि । नु इदानीम् । प्र वोचं घ प्रावोचमेवेत्यर्थः। गृणतः स्तुवतः। मघोनः इन्द्रस्य। रातिं मित्रम् । सत्यं साधुगुणरूपं विष्णुम् । अनु अनुगृह्य तमुपजीव्य इति यावत् । विश्वे सर्वेऽपि प्राणिनो मदन्ति हृष्यन्तीत्येतत् ईश्वरस्य मुक्तानां च उपजीव्योपजीवकभावेन भेदपरम् ।। ६६ ।।

**जम्बु**— इतोऽपि विमुक्तभेदाभावो न मन्तव्यः यतः विष्णोर्महिम्ना जगतः सत्यत्वावगमेन सर्वभेदस्य पारमार्थिकत्वावगमः इति भावेन महिमादिसत्यत्वप्रतिपादकश्रुतीः उदाहरति— **प्र घेत्यादिना** ।। महतः सर्वोत्तमस्य। सत्यस्य उत्तमज्ञानानन्दस्वरूपस्य वा जगत्सद्भावयापकस्य वा। अस्य विष्णोः । महानि महान्ति। सत्यानि पारमार्थिकानि। करणानि सृष्ट्यादिकर्माणि । नु इदानीम् । प्रवोचं घ प्रावोचमेव। 'अवधारणे घशब्दः स्यात्सारमात्रं तु सारघम्' इति शब्दनिर्णये । गृणतः स्तुवतः। मघोनः इन्द्रस्य देवस्य । रातिं मित्रं अभीष्टदातारं वा । सत्यं साधुगुणरूपम् । एनं विष्णुं अनु अनुसृत्य तमुपजीव्येति यावत् । विश्वे सर्वेऽधिकारिणः मदन्ति हृष्यन्ति इत्येतत् सर्वस्योपजीवकत्वं विष्णोः सर्वोपजीव्यत्वं च सत्यं पारमार्थिकम् ।। ६६ ।।

**भारतश्री**— इतोऽप्यभेदो न मन्तव्य इत्याह— **प्र घेति** ।। अथवा सांसारिकभेदोऽपि पारमार्थिक इत्याह— **प्राप्येति** ।। अस्य महतः सत्यस्य तानि महानि महान्ति सत्या सत्यानि पारमार्थिकानि । करणानि सृष्ट्यादिकर्माणि। नु इदानीम् । घ एव । प्रावोचम् प्रावोचमेव । न तु वक्ष्यामीत्यर्थः । गृणतः स्तुवतः मघोनः इन्द्रस्य देवस्य रातिं मित्रं अभीष्टदातारं वा एनं विष्णुं अनु एतस्मादेव विश्वे अधिकारिणः। मदन्ति हृष्यन्ति ।। ६६ ।।

**[2]"यच्चिकेत सत्यमित् तन्न मोघं**
**वसु स्पार्हमुत जेतोत दाता।'**
**[3]"सत्यः सो अस्य महिमा**
**गृणे शवो यज्ञेषु विप्रराज्ये' ।। ६७ ।।**

---

१. भा.ता. ४-२३-६४ । २. ऋ.सं. १०-५५-६ । ३. ऋ.सं. ८-३-४ ।

**वादि**— तथा दाता भगवान् सत्यः। एवं दानं च सत्यम्। देयं त्रैलोक्यमपि सत्यम्। अन्यथा विप्रलम्भदातृवत् दातैवापहास्यः स्यात्। अतो भगवान् सर्वमस्मद्भोगार्हं जगच्च युक्तिबलादेव पारमार्थिकसत्यमिति हर्षं कुर्वन्तीति भावः। सर्वदेवानामपि सङ्ग्रहाय स्वरितस्वरः। स्पार्हं स्पृहायोग्यम्। वसु-त्रैलोक्यादिवस्तु। जेता बलेर्जेता। दाता-इन्द्राय दाता च। स भगवान् यज्जगच्चिकेत कृतवान् तत्सत्यमित् सत्यमेव मोघं न अपार्थं न। स्वकृतकृषेरपार्थत्वे कृषीवलस्य दैन्यवत् स्वकृतजगतोऽसत्यत्वे कर्तुर्भगवत एव अकुशलत्वं स्यात्। जयाय दानाय च स्वावतारोऽपि व्यर्थः स्यादिति सूचनाय सत्यमेवेत्युक्तम्। विप्राज्ये विप्राज्येषु विप्रप्रधानकेषु यज्ञेषु। शवः सुखम्। द्वितीया बलादेवोद्दिश्येति लभ्यते। महिमानं गृणे 'इदं विष्णुर्विचक्रमे' इत्यादिना गृणे स्तौमि।

"[1]यज्ञभुग्यज्ञफलदो यज्ञेशो यज्ञभावनः।
यज्ञत्राता यज्ञपुमान् वनमाली द्विजप्रियः।।'

इति वासुदेवसहस्रनामसु पाठात्। अस्य यज्ञभोक्तुर्यज्ञफलप्रदस्य यज्ञेश्वरस्य यज्ञरक्षकस्यापि विष्णोः स महिमा सत्य इत्यर्थः ।। ६७ ।।

**सङ्क**— स्पार्हं वसु स्पृहणीयस्य वसुनः द्रव्यस्य त्रैलोक्यराज्याख्यस्य बल्यादिस्थितस्य जेता इन्द्रादिभ्यश्च दाता उत विष्णुर्यद्विश्वं चिकेत चकार तत्सत्यमेव। न मोघम्। न मिथ्येत्यर्थः। विप्राज्येषु यज्ञेषु [2]"न ते विष्णो जायमानो न जातः देव महिम्नः परमन्तमाप' इत्यादिश्रुतिभिर्गीयमानः अस्य विष्णोः स महिमा ज्ञानम्। शवः सुखबलरूपः। सत्यः सर्वदाऽबाध्यः इति गृणे स्तौमीत्यर्थः। एतास्वपि श्रुतिषु विष्णोर्महिम्नो जगतश्च सत्यत्वकथनेन भेदस्यात्यन्तिकसत्यत्वावगतेः सर्वदा सर्वपरत्वं विष्णोः सिद्धमेव। न हि प्रमाणसिद्धस्य विश्वसत्यत्वस्य कदाचिदन्यथात्वं सम्भवति। अन्यथातिप्रसङ्गात् ।। ६७ ।।

**वरद**— स्पार्हं स्पृहणीयं स्वर्गादिरूपं वसु धनं बल्यादिभ्यः सकाशात् जेतोत जेतापि जित्वा इन्द्रादिभ्यो दातोत दातापि एतादृशो विष्णुः यच्चिकेत यद्विश्वं चकार तत्सत्यमित् सत्यमेव न तु मोघं न मिथ्येत्यर्थः। अस्य विष्णोः सः पूर्वोक्तः प्रसिद्धो वा महिमा सत्यः तं महिमानं विप्राज्ये विप्राज्यरूपेषु यज्ञेषु शवः सुखमुद्दिश्य गृणे स्तौमीत्यर्थः ।। ६७ ।।

**जना**— हरिः यच्चिकेत चकार तत्सत्यमित् सत्यमेव। मोघं न मृषा न। उत स्पार्हं स्पृहणीयं वसु जेता बल्यादिभ्यः उत जयानन्तरं दाता इन्द्रादिभ्यः अस्य सः श्रुत्याद्युक्तः जगत्सर्जनादिलक्षणः महिमा सत्यः तं विप्राज्येषु विप्रप्रधानेषु यज्ञेषु शवः सुखमुद्दिश्य स्तौमि। इयं महिमादीनां सत्यत्वोपपादिका ।। ६७ ।।

**ताम्र**— स्पार्हं स्पृहणीयं हविरादिकम्। वसु भक्तेभ्यो जेतोत प्राप्तोऽपि तथा तेभ्यः। स्पार्हं वसु फलरूपम्। दातोत दातापि स्वर्गादिस्पृहणीयं बल्यादिभ्यो जेता इन्द्रादिभ्यो दाता वा। परमेश्वरो यद्विश्वं चिकेत चकार तत्सत्यमित् सत्यमेव। कुतः। न मोघं अर्थक्रियास्वनुपयुक्तं न भवतीत्यर्थः। सः प्रागुक्तोऽस्य महिमा। महत्वं सर्वोत्तमत्वम्। सत्यम्। तदहम्। विप्राज्ये विप्रप्रधानकेषु यज्ञेषु। शवः सुखमुद्दिश्य गृणे स्तौमीत्यर्थः ।। ६७-६८ ।।

---

१. वासुदेवसहस्रनाम २६ श्लोकः। २. ऋ.सं ७-९९-२।

**जम्बु**— ।। **यच्चिकेतेति** ।। स्पार्हं स्पृहणीयं हविरादिकम् । भक्तेभ्यो जेता उत दातापि । तथा तेभ्यः स्पार्हं वसु फलरूपम् दातोत दातापि । स्वर्गादिस्पृहणीयं वसु वस्तु बल्यादिभ्यो जेता इन्द्रादिभ्यो दाता वा । परमेश्वरः यद्विश्वं चिकेत चकार तत्सत्यमित् सत्यमेव । कुतः। न मोघं अर्थक्रियासु अनुपयुक्तं न भवति । सः प्रागुक्तः प्रसिद्धो वा अस्य विष्णोर्महिमा महत्वं सर्वोत्तमत्वं सत्यः सत्यं तं महिमानं शवः सुखमुद्दिश्य शवः सुखबलरूपं परमात्मानं वा विप्राज्ये विप्रप्रधानकेषु यज्ञेषु स्तौमि । इयं स्तुतिः महिमादीनां सत्यत्वोपपादिका ।। ६७ ।।

**भारतश्री**— स्पार्हं स्पृहणीयम् । स्वर्गादिरूपं वसु । धनं बल्यादिभ्यः सकाशात् । उत जेता । उत अपि। जेता जित्वा । इन्द्रादिभ्यो दाता । एतान् एतादृशः विष्णुः यच्चिकेत यद्विश्वं चकार । तत्सत्यमित् । सत्यमेव न तु मोघम् । अस्य विष्णोः । सः पूर्वोक्तः प्रसिद्धो वा । महिमा सत्यः । तं महिमानं विप्राज्ये विप्रप्रधानेषु यज्ञेषु । शवं सुखमुद्दिश्य । गृणे स्तौमीत्यर्थः ।। ६७-६९ ।।

**सत्या विष्णोर्गुणाः सर्वे सत्या जीवेशयोर्भिदा ।**
**सत्यो मिथो जीवभेदः सत्यं च जगदीदृशम् ।। ६८ ।।**

**वादि**— गुणसत्यत्वं द्रढयन् जीवस्य भेदसत्यत्वं च साधयन् जगतो मिथ्यात्वे तत्कर्तृत्वादिकं मिथ्या स्यादित्यतः सत्यतां च समर्थयते— **सत्या इति** ।। ईदृशं अर्थक्रियासूपयुज्यमानम् ।। ६८ ।।

**सङ्क**— उक्तन्यायैः वक्ष्यमाणन्यायैश्च विष्णोस्सर्वपरत्वं विस्तरेणाह—**सत्या इत्यादिना** ।। ईदृशमिति अभिज्ञाभिवदनोपादानार्थक्रियाकारिस्वरूपं चतुर्विधव्यवहारास्पदं जगत्सत्यमित्यर्थः। अन्यदिति सर्वस्माद्विष्णोर्भिन्नत्वम्। असत्यं नेत्यर्थः। सृष्टिकाले सृज्यते स्थितिकाले स्थाप्यते संहारकाले संह्रियते इत्येवं तत्तत्काले विच्छेदेन प्रवर्तमानो जगत्प्रवाहः पञ्चभेदसमन्वितः सत्य इत्यर्थः ।। ६८-६९ ।।

**वरद**— विष्णोः सर्वे ज्ञानानन्दादयो गुणाः सत्याः। अत एव च विरुद्धधर्माधिकरणत्वात् जीवेशयोः भिदा भेदः सत्या सत्यः। मिथः परस्परं जीवानां भेदः स्वगुणकर्मादिभ्यो भेदः सत्यः। ईदृशं प्रत्यक्षसिद्धं जगच्च सत्यम् । जगत्सत्यत्वोपपादकमेतत् ।। ६८ ।।

**जना**— इदानीं विष्णुगुणादीनां सत्यत्वे श्रुतिमाह— **सत्या इति** ।। भिदा भेदः। मिथः परस्परं । जीवानां भेदः। ईदृशं अभिवचनाद्यर्थक्रियाकारिजगत् सत्यम् ।। ६८ ।।

**जम्बु**— गुणसत्यत्वं द्रढयन् जीवस्य भेदसत्यत्वं च साधयन् जगतो मिथ्यात्वे तत्कर्तृत्वादिकं मिथ्या स्यादित्यतः सत्यतां च समर्थयते— **सत्या इति** ।। विष्णोः सर्वे सार्वज्ञादयो गुणाः सत्याः। जीवेशयोः जीवश्च ईशश्च जीवेशौ । तयोः भिदा भेदः। सत्या सत्यः। अत एव विरुद्धधर्माधिकरणत्वात् मिथः परस्परं जीवभेदः जीवानां भेदः सत्यः। ईदृशं प्रत्यक्षसिद्धं इत्येतत् सर्वस्योपजीवकत्वं विष्णोः सर्वोपजीव्यत्वं च सत्यं पारमार्थिकम् । सर्वक्रियासु प्रयुज्यमानं वा जगच्च सत्यं जीवभेदवत् ।। ६८ ।।

**असत्यः स्वगतो भेदो विष्णोर्नान्यदसत्यकम् ।**
**जगत्प्रवाहः सत्योऽयं पञ्चभेदसमन्वितः ।। ६९ ।।**

**वादि—** जीवभेदवत् स्वावतारेष्वपि भेदो माभूदित्याह— **असत्य इति** ।। इदानीन्तनजगद्वत् अनाद्यनन्त–कालीनसकलजगन्त्यपि सत्यानीत्याह जगत्प्रवाह इति ।। ६९ ।।

**वरद—** जीवभेद इत्यस्य व्यावर्त्यमाह— **असत्य इति** ।। विष्णोः स्वगतो भेदः स्वगुणकर्मादिभ्यो भेदोऽसत्यो नास्त्येव । 'नेह नानास्ति' इति श्रुतेः। विष्णोरन्यद्विश्वमसत्यकं मिथ्याभूतं न भवति । किन्तु सत्यमेव । 'विश्वं सत्यम्' इत्यादि श्रुतेरित्यर्थः। जगदन्तरमपि सत्यमित्याह— **जगत्प्रवाह इति** ।। जगत्प्रवाहः प्रवाहरूपेण प्रवर्तमानं जगदित्यर्थः ।। ६९ ।।

**जना—** विष्णोः स्वगतस्वावतारस्वावयवगतभेद असत्यः। इदानीन्तनं जगदनाद्यनन्तकालीनसकलजगन्त्यपि सत्यानीत्याह— **जगदिति** ।। भेदानामनन्तत्वेऽपि राश्यपेक्षया पञ्चभेदसमन्वित इत्युक्तम् ।। ६९ ।।

**ताम्र—** 'अद्वैतं परमार्थत' इत्यादावैक्यस्य पारमार्थिकत्वेन भेदमिथ्यात्वोक्तेः। कथं भेदसत्यता इत्यत आह— **असत्य इति** ।। स्वगतभेदाभावपरं तद्वचनमिति भावः ।। ६९ ।।

**जम्बु—** विष्ण्वतारेष्वपि भेदो माभूदित्याह— **असत्य इति** ।। अथवा 'अद्वैतं परमार्थतः' इत्यादौ ऐक्यस्य पारमार्थिकत्वेन भेदमिथ्यात्वोक्तेः कथं भेदसत्यतेत्यत आह— **असत्य इति** ।। स्वगतभेदाभावपरं तद्वचनमिति भावः। स्वगतः स्वावतारस्वावयवस्वगुणकर्मादिभिः भेदः सत्यः नास्त्येव । विष्णोरन्यद्विश्वं असत्यकं मिथ्याभूतं न भवतीति इदानीन्तनजगद्वत् अनाद्यनन्तकालीनसकलजगन्त्यपि सत्यानीत्याह— **जगदिति** ।। पञ्चभेदसमन्वितः पञ्चभिः भेदैः समन्वितः। अयं जगत्प्रवाहः जगतामतीतानागतजगतां प्रवाहः प्रवाहरूपेण वर्तमानं जगदित्यर्थः। भेदानां अनन्तत्वेऽपि राश्यपेक्षया पञ्चभेदसमन्वितमित्युक्तम् ।। ६९ ।।

**जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।**
**जडेशयोर्जडानां च जडजीवभिदा तथा ।। ७० ।।**

**वादि—** के ते पञ्चभेदा इत्यत आह— **जीवेशयोरिति** ।। जडानां परस्परं भेद इत्यर्थः।। ७० ।।

**सङ्क—** पञ्चभेदानाह— **जीवेशयोरित्यादिना** ।। ७० ।।

**वरद—** पञ्चभेदसमन्वित इत्युक्तानेव पञ्चभेदान् दर्शयति— **जीवेशयोरिति** ।। जीवेशयोर्भेदः जीवानां परस्परं भेदः जडेशयोर्भेदः जडानां परस्परं भेदः जडजीवयोर्भेद इति ।। ७० ।।

**जना—** के ते पञ्चभेदा इत्यत आह— **जीवेति** ।। जीवेशयोश्च भिदैव भेद एव नतु भेदाभेदः। एवकारः सर्वत्रान्वेतव्यः। चशब्दः तथाशब्दः समुच्चये । परस्परं भेदश्च जडेशयोर्भिदेत्यनुवर्तनात् । भिदा भेद एव । जडानां च परस्परं भेदः। जडानां जीवानां च भेद एव ।। ७० ।।

**ताम्र**— ।। **जीवेशयोर्भिदा चैव** ।। एवकारेण भेदाभेदनिषेधः। भेदानामानन्त्येऽपि क्रोडीकारेण पञ्चत्वं ज्ञेयम् । यद्यपि जीवप्रतियोगिक ईश्वरधर्मिकः ईश्वरप्रतियोगिको जीवधर्मिक इत्येवं भेदानां दशत्वं क्रोडीकारेऽपि स्यात् तथापि जीवेश्वरादिधर्मिकं भेदद्वयमेकत्वेन विवक्षितत्वात् पञ्चत्वं ज्ञेयम् । तथा ज्ञातानामेव मोक्षसाधनत्वात् । महालक्ष्म्यास्तु अस्वतन्त्रत्वेन जीववर्गे निवेशात् न भेदानामष्टत्वप्राप्तिरिति ।। ७० ।।

**जम्बु**— के ते पञ्चभेदा इत्यत आह— **जीवेति** ।। जीवश्च ईशश्च जीवेशौ तयोः भिदैव भेद एव न तु भेदाभेदः। एवकारः सर्वत्र अन्वेतव्यः। चशब्दः तथाशब्दसमुच्चये । परस्परं अन्योन्यं जीवानां भेदः जडेशयोः जडं च ईशश्च जडेशौ तयोः भेद इत्यनुवर्तते । भिदा भेद एव जडानां च परस्परं भिदा इत्यनुवर्तते । जडानां परस्परं भेदः तथा । अन्योन्यं जडानां भेदः। जडजीवभिदा जडं जीवश्च जडजीवौ तयोः भिदा भेद एव । यद्यपि जीवप्रतियोगिकेश्वरधर्मिकः ईश्वरप्रतियोगिकजीवधर्मिक इत्येवं भेदानां दशत्वं क्रोडीकारेऽपि स्यात् तथापि जीवेश्वरादिधर्मिकं भेदद्वयं एकत्वेन विवक्षितत्वात् पञ्चत्वं ज्ञेयम् । तथा ज्ञातानामेव मोक्षसाधनत्वात् । महालक्ष्म्याः अस्वतन्त्रत्वेन जीववर्गे निवेशात् न भेदानां अष्टत्वप्राप्तिरिति ।। ७० ।।

**भारतश्री**— लक्ष्मीनारायणयोर्भेदः जीवेशभेदान्तर्गतः ।। ७०-७१ ।।

**पञ्चभेदा इमे नित्याः सर्वावस्थासु सर्वशः।**
**मुक्तानां च न हीयन्ते तारतम्यं च सर्वदा ।। ७१ ।।**

**वादि**— एकस्यापि भेदस्य कदाचिदप्यपोहो नास्तीत्याह— **सर्वेति** ।। सर्वशः सर्वे इत्यर्थः ।। ७१ ।।

**सङ्क**— सृष्टिस्थितिसंहाराख्यसर्वावस्थासु सर्वशः सर्वे पञ्चभेदा नित्याः । कदाचिदपि न नश्यन्ति । मुक्तनामपीमे पञ्चभेदा न हीयन्ते । तारतम्यं च न हीयते ।। ७१ ।।

**नरद**— इमे पञ्चभेदाः सर्जशः सर्वेऽपि सर्वावस्थासु संसारेषु सुप्तौ मुक्तौ च नित्याः विनाशरहिताः सन्ति । अत एव मुक्तानामपि पञ्चभेदाः न हीयन्ते न नश्यन्तीत्यर्थः। अत्र प्रकृतिकालाकाशादिरूपनित्यजडभेदो नित्य इति मन्तव्यम् । तथा मुक्तानां तारतम्यं च सर्वदा संसारे मुक्तौ च न हीयन्ते न नश्यन्तीत्यर्थः ।। ७१ ।।

**जना**— इमे पञ्चभेदाः नित्यगताः सर्वावस्थासु संसारे मुक्तौ च नित्याः । आनन्दादय इत्यपि ग्राह्यम् ।'सोऽयं सत्यो ह्यनादिश्च' इति श्रुतिः।[१] ब्रह्मणः सायुज्यकथनात् मुक्तब्रह्मणा ऐक्यं स्यादित्यत आह— **सर्वश इति** ।। सर्वशः सर्वेषां । मुक्तानां भेदाः न हीयन्ते न नश्यन्तीत्यर्थः । यद्वा इमे पञ्चभेदाः सर्वावस्थासु सृष्टिप्रलय-पालनाद्यवस्थासु सर्वशः सर्वे नित्याः नित्यगताः नित्याः । आनन्दादयश्च मुक्तानां कथमित्यत आह— **मुक्तानामिति** ।।

"भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम् ।
नष्टानामपि वस्तूनां भेदो नैव विनश्यति ।।'

इत्युक्तेः सर्वदा संसारे मुक्तौ च तारतम्यं च न हीयत इत्यर्थः ।। ७१ ।।

---

१. तैत्तिरीयब्रह्मानन्दवल्ली ।

**ताम्र**— नन्वस्तु भेदसत्यत्वं फलश्यामतावत् विनाशे पश्चादभेदः स्यादित्यत आह— **पञ्चभेदा इति** ।। ननु पृथुबुध्नोदराकाररूपविशेषरूपनाशेन घटादेः कारणात्मकत्वदशायां कथं भेदः वर्तत इत्यतः स्वयमपि कारणानुगतत्वेनास्ति । तस्य विकारान्तरप्राप्तौ तत्रापि अनुवर्तते इत्याह— **सर्वावस्थास्विति** ।। नित्यगतास्तु सर्वदैकप्रकारेण नित्या इत्यर्थः। ननु यावत्संसारं भेदावस्थानमस्तु मुक्त्यनन्तरमभेदात्तन्निवृत्तिरित्यत आह— **मुक्तानामिति** ।। मुक्तानां च भेदा न हीयन्ते । तारतम्यं च न हीयत इत्यर्थः । नन्वस्तु मुक्तानां विषयानुभवकाले तारतम्यं विषयभोगस्य विचित्रत्वात् । तदभावकाले साम्यं स्यादित्यत आह— **सर्वदा तारतम्यं न हीयत इति** ।। ७१ ।।

**जम्बु**— ननु अस्तु भेदसत्यत्वं फलश्यामतावत् विनाशे पश्चादभेदः स्यादित्यत आह— **पञ्चभेदा इति** ।। ननु पृथुबुध्नोदराकाररूपविशेषरूपनाशे घटादेः कारणात्मकत्वदशायां भेदः कथं वर्तत इत्यत स्वयमपि कारणत्वेनास्ति तस्य विकारान्तरप्राप्तौ तत्राप्यनुवर्तत इत्याह— **सर्वावस्थास्विति** ।। नित्यगतासु सर्वदा एकप्रकारेण नित्या इत्यर्थः। ननु यावत्संसारं भेदावस्थानमस्तु मुक्त्यनन्तरं तु अभेदात् तन्निवृत्तिरित्यत आह— **मुक्तानामिति** ।। मुक्तानां भेदा न हीयन्त तारतम्यं च न हीयते इत्यर्थः। नन्वस्तु मुक्तानां विषयानुभवकाले तारतम्यं विषयभोगस्य विचित्रत्वात्। तदभावकाले साम्यं स्यादित्यत आह— **सर्वदा तारतम्यं न हीयत इति** ।। ७१ ।।

**[1]क्षितिपा मनुष्यगन्धर्वा [2]दैवाश्च पितरश्चिराः ।**
**आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ।। ७२ ।।**

**वादि**— तारतम्यं कमारभ्य कियत्पर्यन्तमित्यत आह— **क्षितिपा इत्यादिना** ।। क्षितिपा मनुष्येषूत्तमाश्चक्रवर्तिनः। क्षितिपपदेनैव मनुष्योत्तमानां सङ्ग्रहः। तेष्वपीषदीषत्तारतम्यमस्त्येव । तथाप्यल्पत्वात् ग्रन्थगौरवभयाच्च न विविच्योक्तम् । देवाः देवगन्धर्वाः। पितरः पितृगणाः। चिराः पितृगणेषूत्तमाः पितरः। सामान्यपितृभ्यः पूर्वमेव सृष्टत्वात् चिरा इत्युच्यन्ते । गन्धर्वेषु द्वैविध्यवत् पितृष्वपि द्वैविध्यमस्तीति ज्ञेयम् । आजानजाः जननमारभ्य देवत्वेन जाताः देवपुत्रत्वादेव देवाः जयन्ताद्याः। कर्मजाः कर्मणा देवत्वं प्राप्ताः पृथ्वाद्याः। देवाः देवेभ्यः उत्पत्तिं कर्म च विना स्वभावेनैव देवाः। तारतम्यगणनायां स्पष्टमुक्तदेवेभ्योऽतिरिक्ताः शतस्था देवाः इन्द्रो देवगुरुर्बृहस्पतिः। पुरन्दरः शतक्रतुः ।। ७२ ।।

---

१. 'आदौ नरोत्तमं विद्याद्बले ज्ञाने सुखे तथा । तस्माद्भूतं शतगुणं विद्याज्ज्ञानादिभिर्वृतम्। भूतान्मनुष्यगन्धर्वान् विद्याच्छतगुणाधिकान्। तत्त्वाभिमानिनो देवांस्तेभ्यो विद्याच्छताधिकान् । तत्त्वाभिमानिदेवेभ्यः सप्तैव ऋषयो वराः। सप्तर्षिभ्यो वरो ह्यग्निरग्नेः सूर्यादयस्तथ। सूर्याद्गुरुर्गुरोः प्राणः प्राणादिन्द्रो महाबलः । इन्द्राच्च गिरिजा देवी देव्याः शम्भुर्जगद्गुरुः। शम्भोर्बुद्धिर्महादेवी बुद्धेः प्राणो बलाधिकः। न प्राणात्परमं किञ्चित्प्राणे सर्वं प्रतिष्ठितम् । प्राणाज्जातमिदं विश्वं प्राणात्मकमिदं जगत् । प्राणे प्रोतमिदं सर्वं प्राणादेव हि चेष्टते । सर्वाधारमिमं प्राहुः सूत्रं नीलाम्बुदप्रभम् । लक्ष्मीकटाक्षमात्रेण प्राणस्यास्य स्थितिर्भवेत् । सा लक्ष्मीर्देवदेवस्य कृपालेशैकभाजिनी । न विष्णोः परमं किञ्चिन्न समो वा कथञ्चन' इत्यादि स्कान्दे/ वैष्णवखण्ड/ वैशाखमासमाहात्म्य/ १९/ १७-२५) । २. देवाश्च इति वादिराजीय: पाठः ।

**सङ्क—** मुक्तानां तारतम्यप्रकारमाह— **क्षितिपा इत्यादिना** ।। ७२ ।।

**वरद—** मुक्ततारतम्यमेव दर्शयति— **क्षितिपा इति** ।। अत्र क्षितिपा नाम क्षुद्रमानुषोत्तमाधिकमानुषोत्कृष्टा अपि विवक्षिताः।

[१]"एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते ।
तस्माच्छतगुणानन्दाः गन्धर्वा मानुषात्मकाः ।।'

इति वचनात् क्षितिपेभ्यो मनुष्यगन्धर्वाः शतगुणोद्रिक्ताः । अत्रापि विशेषः- देवप्रेष्याः गन्धर्वाः द्विविधाः। मनुष्यगन्धर्वाः देवगन्धर्वाश्चेति । तत्र परमुखेन कार्ये प्रेष्याः मनुष्यगन्धर्वाः। स्वमुखेनैव कार्यप्रेष्या देवगन्धर्वाः। तत्र मनुष्यगन्धर्वाः क्षितिपशब्दवाच्येभ्यो मनुष्योत्तमेभ्यः उद्रिक्ता इत्यर्थः। तेभ्यो मनुष्यगन्धर्वेभ्यो देवाश्च च शब्देन गन्धर्वपदमनुकृष्य ते देवगन्धर्वा उत्कृष्टा इत्यर्थः। तथाचोक्तम्-

[२]"स्वमुखेनैव देवैर्ये आज्ञाप्याः सर्वदा गणाः ।
आख्याताः देवगन्धर्वाः येत्वन्यमुखगोचराः ।।
मानुषास्ते तु गन्धर्वाः तेभ्यस्ते च शतावराः ।
तेभ्यः शतावराश्चैव मनुष्येषूत्तमा गणा ।।' इति ।

देवगन्धर्वेभ्यश्चिराः पितरः शतगुणोत्तरा इत्यर्थः। चिरपितृष्वपि [३]"सप्त तेषु प्रधानकाः' इत्यादि विशेषो द्रष्टव्यः। चिरपितृभ्य आजानजाः देवाः शतगुणोत्तराः। अजानजाः नाम तात्त्विकानां कुले जाताः देवत्वेनानाख्याता देवभृत्या उच्यन्ते ।'

[४]"अनाख्याता देवतास्तु जाता देवकुले च याः।
आजानदेवतास्ताः हि ताभ्योऽग्र्याः कर्मदेवताः ।।' इति वचनात् ।

आजानजेभ्य कर्मजाश्च चशब्देन देवपदमनुकृष्यते । कर्मजाः देवाः शतगुणोद्रिक्ता इत्यर्थः। अत्र कर्मजाः नाम मध्ये कर्मणा देवत्वं प्राप्ताः बल्याद्यो राजानो विवक्षिताः । तथाचोक्तं- [५]"बल्याद्या अन्तरा प्राप्ताः देवताः कर्मदेवता' इति । अन्यत्र चोक्तम् —

[६]"कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।
शशबिन्दुश्च मान्धाता काकुत्स्थाद्या स्तथाऽपरे ।।
सर्वे ते विष्णुनाऽविष्टाः विष्णोर्भिन्नाः सदैव तु ।
शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ।।' इति ।

कर्मजेभ्यो देवा उत्कृष्टाः। अत्र देवशब्देन सृष्ट्यादौ देवत्वं गताः तात्त्विकाः देवाः विवक्षिताः । [७]"ताभ्यश्च तात्त्विकाः देवाः सृष्ट्यादौ देवतां गताः' इति वचनात् । देवेभ्यः पुरन्दरः इन्द्रः उत्तमः। इतरेन्द्रव्यावृत्त्यर्थं पुरन्दर इतीन्द्रस्य विशेषणं इति ।। ७२ ।।

---

१. तै.भा. ब्रह्मवल्ली । २. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । ३. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । ४. तै.भा. ब्रह्मवल्ली । ५. तै.भा. ब्रह्मवल्ली । ६. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । ७. तै.भा. ब्रह्मवल्ली ।

**जना**— तारतम्यं दर्शयति— **क्षितिपा इति** ।। क्षितिपा नृपाः। मनुष्यगन्धर्वाः परमुखेन देवप्रेष्याः मनुष्यगन्धर्वाः। देवाः देवगन्धर्वाः स्वमुखेन देवप्रेष्याः। चिराः पितरः। आजानजाः देवकुले जाताः अनाख्यातादेवाः आजानदेवाः। कर्मजाः कर्मणा देवत्वं प्राप्ताः कर्मदेवाः बल्याद्याः। देवाः तात्त्विका देवाः। इन्द्रः दक्षः। पुरन्दरः इन्द्रः। यद्वा पुरन्दरः इन्द्रः इति विशेषणविशेष्यभावेनान्वयः। अत्र क्षितिपेभ्योऽप्यवरा मनुष्योत्तमा ज्ञेयाः।

[१]"भूपा मनुष्यंगन्धर्वा देवाः पितर एव च ।
आजानेयाः कर्मदेवास्तत्त्वरूपाः पुरन्दरः ।।
शिवो विरिञ्च इत्येते क्रमाच्छतगुणोत्तराः ।
मुक्तावपि तदन्ये ये भूपाच्छतगुणावराः।।' इति गीतातात्पर्योक्तेः।

[२]'देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा' इति तत्वसङ्ख्यानोक्तेश्च। एतच्छब्दार्थः यजुःसंहितायां—

[३]"तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः ।
मुक्त्या श्रुतिफलं प्राप्ताः ततः कामहतास्तथा ।।
तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः ।
एते हि देवगन्धर्वानुक्तेभ्यस्तेभ्य एव च ।।
शताधिका हि पितरः तेभ्य आजानदेवताः ।
अनाख्याता देवतास्तु जाता देवकुले च याः ।।
आजानदेवतास्ता हि तेभ्योऽग्र्याः कर्मदेवताः ।
बल्याद्या अन्तरा प्राप्तदेवताः कर्मदेवताः।।
ताभ्यश्च तात्त्विका देवाः सृष्ट्यादौ देवतां गताः ।
तेभ्यो दक्षस्त्विन्द्रनामा स हीन्दुं रारयत्पुरा ।।
तस्माद्बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दरः ।
तस्मात्प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता ।।' इति ।

अत्र देवगन्धर्वेषु अष्टोत्तरशतं विना पितृभ्यः शतावराः । तत्राष्टगन्धर्वाः कर्मदेवसमाः शतमाजानदेवसमाः । तदुक्तं बृहद्भाष्ये-

[४]"कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।
आजानदेवास्तेभ्योऽन्ये पितृभ्यश्च शतावराः ।।' इति ।

तथा पितृषु अष्टौ विना पितरः आजानदेवेभ्यः शतावराः । तदुक्तं [५]"आजानेभ्यस्तु पितरो ह्यष्टभ्योऽन्ये शतावराः' इति बृहद्भाष्ये । तत्र सप्तपितरः कर्मदेवसमाः । एकस्तु ब्रह्मपुत्रसमः । तदुक्तम्-

[६]"पितृणां सप्तकं यत्तत्कर्मदेवसमं मतम् ।
विश्वामित्रो ब्रह्मपुत्रसमो मुनिरुदाहृतः ।।
आचार्यः पितृणां चासौ पितृभिः सह पठ्यते ।।' इति बृहद्भाष्ये ।

---

१. गी.ता. २-१८ । २. तत्त्वसंख्याने पञ्चमः श्लोकः । ३. तै.भा. ब्रह्मानन्दवल्ली । ४. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । ५. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । ६. बृ.भा. ३-५ अव्याकृतब्राह्मणम् ।

ननु ब्रह्मवीन्द्रशेषाः कुतो नोक्ता इत्यत आह— **एक इति** ।। ब्रह्मा वायुश्चैकः वायोरेव भविष्यद्ब्रह्मत्वात् पूर्ववायोर्वा इदानीन्तनब्रह्मत्वादेक इत्युक्तिः। रुद्रः शेषस्तथैकः यथा ब्रह्मवायू तथैकः मुक्तेषु कश्चिद्वायुना न समः। श्रीर्वायोः सकाशाद्गुणैः सहस्रगुणिता । 'तदेतत्सहस्रं तत्सर्वम्' इति श्रुत्या सहस्रशब्दस्य बहुत्ववाचित्वादत्र कोटिपरः। तदुक्तं बृहद्भाष्ये [1]'तेभ्यस्तु श्रीः विमुक्तेभ्यो गुणैः कोटिगुणोत्तरा' इति ।। ७२–७४ ।।

**ताम्र**— क्षितिपाः मनुष्योत्तमेभ्यः शतगुणोत्तमाः। तदुक्तम् 'भूतेभ्योऽन्ये शतावरा' इति । [2]'अन्ये मनुष्योत्तमाः' इति न्यायदीपे । देवाः देवगन्धर्वाः कर्मजाश्च देवा इत्यत्र देवपदेन 'ताभ्यश्च तात्त्विका देवाः सृष्ट्यादौ देवतां गताः' इत्युक्तसृष्ट्यादौ प्राप्तदेवास्तत्त्वाभिमानिनो बृहस्पत्यादयो विवक्षिताः। 'तत्त्वरूपाः पुरन्दरः' इत्यत्र 'तत्त्वरूपाः बृहस्पत्यादयः' इति न्यायदीपोक्तेः । तदन्येन्द्रव्यावृत्तये पुरन्दर इति विशेषणम् ।। ७२ ।।

**जम्बु**— तारतम्यं कमारभ्य कियत्पर्यन्तं इत्यत आह— **क्षितिपा इति** ।। अत्र क्षितिपात् पूर्वं इत्थं तारतम्यक्रमः। वृक्षस्तम्बलतादिभेदेन स्थावराः बहुविधाः। तेभ्यो जङ्गमा श्रेष्ठाः। तेऽपि जातिभेदेन बहुविधाः। जङ्गमेभ्यः शूद्राः श्रेष्ठाः तेभ्यो वैश्याः तेभ्यो क्षत्रियाः तेभ्यो ब्राह्मणाः श्रेष्ठाः तेऽपि आश्रमभेदेन बहुविधाः। गृहस्थेभ्यो ब्रह्मचारिणः श्रेष्ठाः तेभ्यो वनस्थाः तेभ्यो यतयः श्रेष्ठाः तेभ्यः क्षितिपाः श्रेष्ठाः । तदुक्तम्—

[3]'पशुवृक्षादिभेदेन जीवा एव व्यवस्थिताः ।
संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ।।
तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः।
तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ।।'

तथा 'मानुषाः वर्णभेदेन तथैवाश्रमभेदतः' इति। अत्र क्षितिपशब्देन मनुष्यचक्रवर्ती गृह्यते न तु कार्तवीर्यादिचक्रवर्तिनः तेषां मनुष्यगन्धर्वावरत्वायोगात्। तदुक्तं बृहद्भाष्ये—

'कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा।
शशिबिन्दुश्च मान्धाता काकुत्स्थाद्यास्तथाऽपरे।।
सर्वे ते विष्णुनाविष्टाः............... ।।'

मनुष्योत्तमेभ्यः शतगुणोत्तरा। तदुक्तम्। 'भूपेभ्योऽन्ये शतावरा' इति 'अन्ये मनुष्योत्तमा' इति न्यायदीपे। 'मनुष्यगन्धर्वाः परमुखेन कार्यप्रेष्याः मनुष्यगन्धर्वाः। स्वमुखेनैव कार्यप्रेष्या देवाः देवगन्धर्वाः।

[4]'स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः।
आख्याता देवगन्धर्वा येऽत्वन्यमुखगोचराः ।।
मानुषास्तेषु गन्धर्वास्तेभ्यस्ते च शतावराः।
तेभ्यश्शतावराश्चैव मनुष्येषूत्तमा गणा ।।' इति ।। ७२ ।।

**भारतश्री**— देवाः देवगन्धर्वाः । साक्षात् देवप्रेष्याः देवगन्धर्वाः । तत्प्रेष्याः मनुष्यगन्धर्वाः । आजानजाः अनाख्याताः देवाः। कर्मजा अन्तराप्राप्ताः देवपराः बल्याद्याः । देवाः तात्त्विकाः । इतरेन्द्रव्यावृत्यर्थं पुरन्दर इति ।। ७२ ।।

---

१. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । २. न्यायदीपः २-१८ । ३. भा.ता. ३-३०-३१ । ४. बृ.भा. ३-५ अव्याकृतब्राह्मणम् ।

**राम**— उक्तार्थं स्ववचनसूत्रपुराणश्रुत्युदाहरणपूर्वकं समर्थयन् उक्ततारतम्यं च सांसारिकमेव न मौक्तिकमित्यतो मुक्तावपीदं तारतम्यमस्तीति स्पष्टं प्रतिपादिकां श्रुतिमुदाहरति— **क्षितिपेति** ।। न च वाच्यमत्रेन्द्रपुरन्दरयोः पर्यायत्वात् विशेषणविशेष्यत्वेऽपि व्यावर्त्याभावाच्च वैय्यर्थ्यमिति। पुरन्दरपदस्य विशेष्यत्वे इन्द्रपदस्य व्यावर्तकत्वाभावेऽपि इन्द्रपदस्य विशेष्यत्वे पुरन्दरपदस्य इतरेन्द्रव्यावर्तकत्वात् । न च वाच्यं 'रुद्रः सरस्वती वायुः' इत्यत्र व्यावर्तकपदाभावेऽपि रुद्रपदं यथा मुख्यरुद्रवाय्वर्थकं तथा इन्द्रपदस्यापि इन्द्रार्थकत्वमिति । मुख्यस्यनिर्विशेषणशब्दोऽन्येषां तथाविध इति निरुपपदरुद्रवायुपदयो स्वस्वगुणेषु श्रेष्ठयो रुद्रवाय्वोर्वाचकत्वसम्भवेऽपि वैवस्वतमन्वन्तरस्थपुरन्दरनाम्नः आद्यद्वितीयेन्द्राधिक्याभावात् । तैत्तरीयभाष्ये तु इन्द्रपुरन्दरयोरुभयोर्विशेष्यत्वमित्यभिप्रेत्य इन्द्रपदस्य दक्षवाचकत्वमभिप्रेत्यऽन्यस्य शचीपतिवाचकत्वमिति व्याख्यातम् । [1]''तेभ्यो दक्षश्चेन्द्रनामा सहीन्दुं रावयत् पुरा' । इति । अत्र मुक्ताः शतगुणोत्तरा इति मुक्तपदेन कर्मक्षयादिप्राप्तत्वा–ज्जीवन्मुक्त्यवस्थाविवक्षया रुद्रवायू गृह्येते । परममुक्त्यवस्थायां तु शेषविरिञ्चाविति । उक्तं चानुव्याख्याने—

[2]''उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले ।।' इति ।। ७२ ।।

**रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः ।**
**एको ब्रह्मा च वायुश्च वीन्द्रो रुद्रसमस्तथा ।**
**[3]एको रुद्रस्तथा शेषो न कश्चिद् वायुना समः ।। ७३ ।।**

**वादि**— तारतम्यगणनायां ब्रह्मशेषगरुडानां कस्मादसङ्ग्रह इत्यत आह— **एक इति** ।। ब्रह्मवाय्वोरेकत्वात् न पृथग्ग्रहणम् । वायोर्ब्रह्मपदप्राप्तेरेव ब्रह्मैक्योक्तिः न तु स्वरूपैक्यादिति ज्ञेयम् । रुद्रगरुडयोः समत्वात् गरुडस्य न पृथग्ग्रहणम् । रुद्रशेषयोश्चैकत्वात् शेषस्य न पृथग्ग्रहणमिति भावः। स्वपदयोग्यान् विना यथेन्द्रादेः कामादिः समोऽस्ति तथा किं वायोरपीति जिज्ञासायामाह— **नेति** ।। ७३ ।।

**सङ्क**— ननु वायुरुद्रवत् ब्रह्मवीन्द्रशेषाः तारतम्यगणने किमिति न गणिता इत्यत आह— **एक इति** ।। वायुरेव ब्रह्मा भविष्यति । तथा रुद्र एव शेषो भविष्यतीत्येक इत्युक्तम् । ननु यथा वीन्द्रो रुद्रसमोऽस्ति तथा मुक्तेष्वमुक्तेषु वायुसमोऽस्ति किं इत्यताह— **न कश्चिदिति** ।। मुक्तेषु अमुक्तेषु वा वायुना समः कश्चिन्नास्तीत्यन्वयः ।। ७३-७४ ।।

**वरद**— पुरन्दरेन्द्राद्रुद्रः शतगुणोत्तरः। रुद्रात् सरस्वती शतगुणोत्तरा । सरस्वत्या वायुः शतगुणोत्तरः। न केवलमेते संसारदशायां शतगुणोत्तराः । किन्तु मुक्ताः सन्तोऽपि शतगुणोत्तरा इत्याह— **मुक्ताः शतगुणोत्तरा इति** ।। नन्वत्र वायुना सह ब्रह्मणो अपरिगणने रुद्रेण समं शेषगरुडयोरपरिगणने च को हेतुरित्यत आह— **एक इति** ।। भूतपूर्वगत्या वा भाविगत्या वा वायुशब्देन ब्रह्मणोऽपि गणनं वीन्द्रस्य गरुडस्य रुद्रसमत्वात्तत्परिगणनं

---

१. तै.भा ब्रह्मवल्ली । २. अनु. ४-२- १८८६-१८८७ । ३. 'रामो ज्ञेयस्तथा शेषो रुद्ररूपस्सलक्ष्मणः' इति भविष्येत्तोरपुराणे (प्रतिसर्गपर्व/४खं/१५अ/६०) ।

कृतप्रायम् । तथा शेषो रुद्रश्चैक एव । तथा च तत्रापि भूतपूर्वगत्या शेषस्य पूर्वरुद्रत्वाद्वा भाविगत्या रुद्रस्य शेषत्वं भविष्यतीति वा रुद्रग्रहणेन शेषो गृहीत एवेत्यर्थः। तथाह्युक्तम्—

[1]''स्थितप्रज्ञोऽपि यस्तूर्ध्वं प्राप्य रौद्रपदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादत ।।' इति गारुडे ।

नारदीये च [2]''महादेव परेजन्मंस्तव मुक्तिर्निरूप्यते' इति । ननु यथा रुद्रस्य समो वीन्द्रोऽस्ति तथा वायोः समोऽन्योऽस्ति किमित्याकाङ्क्षायामाह— **न कश्चिदिति** ।। मुक्तेष्वपि वायुना समो न कश्चिदस्तीत्यर्थः ।। ७३ ।।

**ताम्र**— ब्रह्मवीन्द्रशेषाः कस्मात्तारतम्ये नोक्ता इत्यत आह— **एक इति** ।। एकस्यैव क्रमेण पदद्वयस्थत्वात् एक इत्युक्तम् । तेन भारती सरस्वती च एके इत्युक्तप्रायम्— **न कश्चिदिति** ।। मुक्तेषु एककल्पे मुक्तेषु वायुना ब्रह्मणा समो न कश्चित् । शेषस्य गरुडवदित्यर्थः ।। ७३ ।।

**जम्बु**— न केवलमेते संसारदशायां शतगुणोत्तराः किन्तु मुक्ताः सन्तोऽपि शतगुणोत्तरा इत्याह— **मुक्ताः शतगुणोत्तरा इति** ।। गुणशब्दो गणनार्थः। ननु ब्रह्मरुद्रशेषाः कस्मात्तारतम्ये नोक्ता इत्यत आह— **एक इति**।। एकस्यैव क्रमेण पदद्वयस्थत्वादेक इत्युक्तिः। एतेन भारती सरस्वती च एक इत्युक्तप्रायम् । ब्रह्मवायुश्चैकः। वायोरेव भविष्यद्ब्रह्मत्वात् । पूर्ववायोरेव इदानीन्तनब्रह्मत्वात् एक इत्युक्तम् । तथा वीन्द्रः गरुडः रुद्रसमः। रुद्रः शेषः तथैकः यथा ब्रह्मवायू तथैकः । रुद्रस्य भविष्यच्छेषत्वात् पूर्वरुद्रस्य वा इदानीन्तनशेषत्वादेक इत्युक्तिः।

'स्थितप्रज्ञोऽपि यस्त्वूर्ध्वं प्राप्य रौद्रपदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' इति गारुडे।

स्वस्वपदयोग्यान्विहाय यथा शेषवीन्द्रादिः समोऽस्ति न तथा वायोरन्यः न कश्चिदिति मुक्तेष्वपि वायुना समो न कश्चिदस्ति । तथाशब्दः समुच्चये ।। ७३ ।।

**भारतश्री**— शतगुणोत्तराः । उपलक्षणमेतत् दशोत्तरा अपि सन्ति । सहस्रगुणिता कोटिगुणिता इत्युदाहृतम् ।। ७३-७४ ।।

**मुक्तेषु श्रीस्तथा वायोः सहस्रगुणिता गुणैः।**
**ततोऽनन्तगुणो विष्णुर्न कश्चित् तत्समः सदा ।। ७४ ।।**

**वादि**— सहस्रगुणिता अस्माभिः पूर्वोक्तरीत्या एकैकगुणस्य गणनायां सहस्रगुणिता । न तु सहस्रसङ्ख्याक-गुणैरेवाधिका। अतो महदन्तरमिति ज्ञेयम् ।। ७४ ।।

**वरद**— तथाशब्दः समुच्चये । वायोः सकाशात् लक्ष्मीः गुणैः ज्ञानानन्दादिभिः सहस्रगुणिता कोटिगुणोद्रिक्तेत्यर्थः। [3]''मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च' इति वचनात् । ततः श्रियः सकाशादनन्तगुणो

---

१. गी.भा. २-७२ । २. गी.भा. २-७२ । ३. बृ.भा. ३-५ अव्याकृतब्राह्मणम् ।

विष्णुरुच्यते। स एवावधिरित्याह— **न कश्चिदिति** ।। सदा संसारे मुक्तौ च तस्य विष्णोः समोऽधिको वा नास्त्येवेत्यर्थ ।। ७४ ।।

**ताम्र**— श्रीस्तथा समान्तररहिता वायोस्सहस्रगुणिता कोटिगुणाधिका ।। ७४ ।।

**जम्बु**— श्रीः लक्ष्मीस्तथा समान्तररहिता वायोः सकाशात् गुणैर्ज्ञानादिभिः सहस्रगुणिता । तदेतत् 'सहस्रं' इति श्रुत्या सहस्रशब्दस्य बहुवाचित्वादत्र कोटिसङ्ख्यापरत्वम् । तदुक्तं बृहद्भाष्ये— [1]"एतेभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा' इति । विष्णुर्भगवान् । ततः लक्ष्म्यास्सकाशात् । अनन्तगुणः अपरिमितगुणः । कश्चिदपि ब्रह्मादिः सदा संसारे मुक्तौ च । तत्समः तस्य भगवतः समानः नास्ति ।। ७४ ।।

**इत्यादि वेदवाक्यं विष्णोरुत्कर्षमेव वक्त्युच्चैः ।**
**तात्पर्यं महदत्रेत्युक्तं यो मामिति स्वयं तेन ।। ७५ ।।**

**वादि**— यो मामित्यनेन

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत ।
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत।।'

इति गीतावाक्यं सङ्गृह्णाति । अत्र 'स सर्ववित्' इति वेत्तुः स्तुत्या, 'गुह्यतमं' इति शास्त्रस्य स्तुत्या, 'बुद्धिमानपरोक्षज्ञाना। कृतकृत्यो मुक्त' इति द्विविधफलोक्त्या च स्वोक्तपुरुषोत्तमत्वे तात्पर्यमवगम्यते । तदेव पुरुषोत्तमत्वं द्वाविमावित्युक्तजीवेश्वरादिभेदश्च उक्तवेदवचनेष्वप्युच्यते । अतोऽत्रापि वेदवचनानां स्वोक्तार्थे तात्पर्यमवगम्यत इत्युक्तम्— **तात्पर्यं महदत्रेति** ।। एकत्र तात्पर्यविषयोऽर्थोऽन्यत्रापि तात्पर्यविषय एव । न हि गौरेकत्र गौरपरत्रागौर्भविष्यतीति भावः ।। ७५ ।।

**सङ्क**— वेदेष्वपीत्यादिनोक्तमर्थमुपसंहरति— **इत्यादीति** ।। ननु वेदेषु विष्णोरुत्कर्ष उच्यतां नाम तत्र तात्पर्यं केन निश्चीयते । तथाविधविशेषप्रमाणाभावादित्याशङ्कायां विशेषप्रमाणानि दर्शयति— **तात्पर्यमित्यादिना**।। [2]"यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्' इत्यादिना तेन विष्णुना स्वयं स्वेन कृष्णस्वरूपेण । अत्र विष्णोः पुरुषोत्तमत्वे महातात्पर्यमुक्तमित्यर्थः ।। ७५ ।।

**वरद**— 'वेदेषु च परो विष्णुः' इत्युक्तमुपपाद्योपसंहरति— **इत्यादीति** ।। इत्युदाहृतं वाक्यजातं आदिः यस्य वेदवाक्यस्य तद्विष्णोरुत्कर्षमेव वक्ति न तु कुत्रचित् हैन्यम् । विष्णोरेवोत्कर्षं वक्ति न तु रमादेरिति वा एवकारसम्बन्धः। उच्चैरिति स्पष्टमित्यर्थः। ननूदाहृतवाक्याद्विष्णूत्कर्षः प्रतीयत इत्येतावता न तत्सिद्धिः। वाक्यस्य तत्र तात्पर्यानिश्चयादित्यतस्तत्रैव तात्पर्यं सर्ववेदानामित्यत्र प्रमाणं सूचयति— **तात्पर्यमिति** ।। अत्र विष्णोरुत्कर्षे महत्तात्पर्यमस्तीत्येतत्

---

१. बृ.भा. ३-५ अव्याकृतब्राह्मणम् । २. भ.गी. १५-१९ ।

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्ववित्...................... ।।'

इति च तेन वेदव्यासेन कृष्णेन वा स्वयं स्वेनैवोक्तम् । यो मामिति पुरुषोत्तमत्वं जानतः सर्वविदिति सर्वज्ञत्वमुक्तम् । तत्तदा स्याद्यदि पुरुषोत्तमत्वस्यैव सर्वशास्त्रार्थत्वं स्यात् । अतस्तत्रैव सर्ववेदादिशास्त्रतात्पर्यमस्तीति भगवता उक्तमिति भावः ।। ७५ ।।

**जना**— ततः लक्ष्म्याः सदा मुक्तौ संसारावस्थायां च इत्यादि एवमादि उच्चैस्तात्पर्यपूर्वकमुत्कर्षं सर्वोत्तमत्वं वक्ति वदति। उदाहृतवाक्यानां स्वोक्तार्थे तात्पर्याभावे नैतत्सिद्ध्यतीत्यतः तत्र तात्पर्यसद्भावे प्रमाणं सूचयन्नाह— **तात्पर्यमिति** ।। तेन विष्णुना स्वयं स्वेन कृष्णरूपेणात्र विष्णोर्गुणोत्कर्षे महातात्पर्यं— **यो मामिति** ।।

'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ।।'

इत्यनेनोक्तम् । य एवं क्षराक्षरातीतत्वेन पुरुषोत्तमं मां जानाति स सर्ववित् सर्वज्ञः। सर्वज्ञत्वं च नेश्वरवत्सर्वज्ञानेन पुरुषोत्तमत्वस्यासर्वात्मकत्वात् किन्तु ऋगादिसर्वशास्त्रार्थत्वेन पुरुषोत्तमत्वस्य । तथाच पुरुषोत्तमत्वं सर्वशास्त्रप्रतिपाद्यं तेन पुरुषोत्तमत्वज्ञानेन सर्वशास्त्रज्ञत्वं भवतीति भावः। ननु क्षराक्षरातीतत्वेन पुरुषोत्तम इति न कोऽपि जानाति । अपि तु अश्वकर्णादिवत्संज्ञात्वेनैव जानातीत्यत आह— **असम्मूढ इति** ।। **मूर्खश्चेत्र** जानाति मा जानातु मोहरहितस्तु वेत्स्यति इत्यर्थः। सर्वभावेन सर्वप्रकारेण मां भजति च । गुणोत्कर्षवेत्तुः फलकथनेन सर्वागमानां गुणोत्कर्षे तात्पर्यं सूचितं भवति ।। ७५ ।।

**ताम्र**— विष्णोरेवोत्कर्षमिति अन्वयः। उत्कर्षमेव न क्वचिदपकर्षमिति वा । उच्चैः स्फुटम् । ननु उदाहृतवाक्यानां स्वार्थे तात्पर्यं कुतः इत्यतस्तत्र प्रमाणमाह— **तात्पर्यमिति** ।। स्वयं साक्षात्तेन सर्वशास्त्रतात्पर्य-विषयीभूतेन भगवता वासुदेवेन

'यो मामेवमसम्मूढो जानाति पुरुषोत्तम् ।
स सर्ववित्........................।।'

इत्यत्र 'गुणोत्कर्षे महातात्पर्यं अस्ति' इत्युक्तं इत्यर्थः। अत्र हि पुरुषोत्तमत्वज्ञानिनः सर्वशास्त्राभिज्ञत्वमुच्यते । तच्च पुरुषोत्तमत्वरूपसर्वोत्कर्षस्य सर्वशास्त्रार्थत्वाभावेऽयुक्तमिति भावः। यदि उत्कर्षे तात्पर्यं तर्हि कर्मादिविलोपः उभयत्र तात्पर्ये वाक्यभेद इत्यत उक्तम्— **महदिति** ।। अन्यत्रावान्तरतात्पर्याङ्गीकारात् न कर्मादिविलोपो नापि वाक्यभेद इति भावः ।। ७५ ।।

**जम्बु**— 'वेदेषु च परो विष्णुः' इत्याद्युक्तमुपपाद्योपसंहरति— **इत्यादीति** ।। इत्यादि उदाहृतवाक्यजातं आदिः यस्य वेदवाक्यस्य तत्तथा विष्णोरुत्कर्षमेव सर्वोत्तमत्वमेवोच्चरति स्पष्टं वक्ति न तु क्वचित् हैन्यम् । विष्णोरेवोत्कर्षं वक्ति न रमादेरिति वा एवकारसम्बन्धः। वेदानां विष्णूत्कर्षे तात्पर्यमस्तीत्यत्र ज्ञापकं प्रमाणं सूचयन्नाह— **तात्पर्यमिति** ।। यद्युत्कर्षे तात्पर्यं तर्हि कर्मादिविलोपः उभयत्र तात्पर्ये वाक्यभेद इत्यत उक्तम्— **महदिति** ।। अन्यत्रावान्तरतात्पर्याङ्गीकारान्न कर्मादिविलोपो नापि वाक्यभेद इति भावः । महातात्पर्यं 'यो मां' इत्यादिना तेन व्यासेन च स्वयं स्वेनैवोक्तं साक्षादिति वा । एतत्पुरुषोत्तमत्वज्ञानस्य सर्वज्ञानोत्तमत्वोक्त्या ज्ञायत इति भावः ।। ७५ ।।

**भारतश्री**— वाक्यजातं आदिर्यस्य वेदवाक्यस्य तत् । अन्येषामपि वेदवाक्यनां अत्र विष्णुगुणोत्कर्षे महातात्पर्यमित्युक्तमिति योजना 'यो माम्' इति 'यो मामेवमसम्मूढः' इति वाक्यमनेन सङ्गृहीतम् । स सर्ववित् अस्यैव सर्वशास्त्रार्थत्वादिति तद्व्याख्यानम् ।। ७५ ।।

**भूम्नो ज्यायस्त्वमिति ह्युक्तं सूत्रेषु निर्णयात् तेन ।**
**तत्प्रीत्यैव च मोक्षः प्राप्यस्तेनैव नान्येन ।। ७६ ।।**

**वादि**— भगवन्निष्ठपूर्णत्वाख्यगुणस्य ज्यायस्त्वकथने गुणगुणिनोरभेदात् भगवत एव ज्यायस्त्वमुक्तं स्यादिति भावेनाह— **भूम्न इति** ।। क्रतुवत् क्रियासु ज्योतिष्टोमवत् । इतिशब्दः प्रकारवचनः। अनेन प्रकारेण 'जन्माद्यस्य यतः' 'द्युभ्वाद्यायतनं स्वशब्दात्' 'अक्षरमम्बरान्तघृतेः' 'सर्वोपेता च तद्दर्शनात्' इत्यादि सूत्रेषूक्तमिति भावः। अतः सूत्रेष्विति बहुवचनम् ।। ७६ ।।

**सङ्क**— ब्रह्मसूत्रेषु [1]"भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' इति विष्णुस्वरूपेण व्यासेन महातात्पर्यनिर्णयात्। भूमगुणस्य परिपूर्णगुणस्य सर्वगुणेषु ज्यायस्त्वमुत्तमत्वमुक्तम् । अतः विष्णुगुणोत्कर्ष एव वेदानां महातात्पर्यमस्तीत्यर्थः। 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' 'नारायणोऽसौ परमो विचिन्त्य मुमुक्षुभिः कर्मपाशादमुष्मात्' इत्यादि श्रुतिं सूचयति— **तत्प्रीत्यैव इति** ।। तेनैव विष्णुना तत्प्रीत्या स्वप्रीतिद्वारैव मोक्षः प्राप्यः नान्येनेत्यर्थः । ननु विष्णुप्रीत्या मोक्षः प्राप्योऽस्तु । श्रीविष्णुगुणोत्कर्षे सर्ववेदानां महातात्पर्यमस्तीत्यत्र किमायातं इति चेदुच्यते । मोक्षो हि सर्वपुरुषार्थोत्तमः । स च विष्णुप्रसादादेव लभ्यते नान्येन । प्रीतिश्च गुणोत्कर्षज्ञानादेव भवति नान्यथा अतो भगवत्प्रीतिसाध्यमोक्षसिद्ध्यर्थं श्रीविष्णुगुणोत्कर्ष एव सर्ववेदानां महातात्पर्यमस्तीति निश्चीयते । तथाहि श्रुतिः

[2]'न तादृशी प्रीतरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
तत्प्रीणानान्मोक्षमाप्नोति सर्वः ततो वेदाः तत्पराः सर्व एव ।।
[3]सर्वोत्कर्षे देवदेवस्य विष्णो महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततो हि ।।'

इत्यादिका गुणोत्कर्षज्ञातरि पुरुषे विष्णोर्यादृशी प्रीतिः स्यात् तादृशी प्रीतिः गुणोत्कर्षाऽज्ञातरि पुरुषे न स्यात् । गुणैरुत्कर्षः गुणोत्कर्ष इत्यर्थः । विष्णोः सर्वोत्कर्षे सर्वेभ्यः लक्ष्मीविरिञ्चादिभ्यः उत्कर्षे सर्वागमानां महातात्पर्यं अन्यत्र लक्ष्म्याद्युत्कर्षे महातात्पर्यं नैवेत्येतत्सत्यम् । तदन्यत् विष्णोरन्यत्र तत्परत्वं तात्पर्यं अवान्तर-ममुख्यमित्यर्थः ।। ७६ ।।

**वरद**— विष्णोः सर्वोत्तमत्वे वेदानां तात्पर्यमस्तीत्यत्र ज्ञापकान्तरमाह— **भूम्न इति** ।। 'भूम्नः क्रतुवज्जायस्त्वं तथा हि दर्शयति' इति सूत्रे ब्रह्मसूत्रेषु स्थिते भूम्नो भूमगुणस्य सर्वगुणेषु श्रेष्ठत्वमुक्तं अतोऽपि ज्ञायते पूर्णत्वापरपर्यायसर्वोत्तमत्वं सर्ववेदतात्पर्यविषय इति भावः। निर्णयात् निर्णयेनेत्यर्थः । सूत्रस्य निर्णायकत्वादिति भावः । एवं विष्णोः सर्वोत्तमत्व एव सर्ववेदानां महातात्पर्यमस्तीत्यत्र स्मृतिसूत्रे प्रमाणयित्वा तत्साधितम् ।

---

१. ब्र.सू. ३-३-५९ । २. तत्त्वनिर्णयोदाहृतसौपर्णश्रुतिः प्रथमपरिच्छेदः । ३. तत्त्वनिर्णयोदाहृतपैङ्गिश्रुतिः प्रथम परिच्छेदः ।

अधुना युक्त्यापि तत्सिद्ध्यतीति भावेनाह— **तत्प्रीत्यैव** चेति ।। अयं भावः। विष्णोः प्रीत्यैव मोक्षस्तावच्छ्रूयते। 'तत्प्रीणनात् मोक्षमाप्नोति सर्वः ततो वेदाः तत्पराः सर्व एव ' इत्यादि श्रुतेः। विष्णुप्रीतिश्च गुणोत्कर्षज्ञानात् । 'न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्' इत्यादि श्रुतेः।

''घातयन्ति हि राजानो राजाहमिति वादिनम् ।
ददाति च सर्वपुरुषार्थान् ...............।।'

गुणोत्कर्षं वदतः इत्यादेश्च । मोक्ष एव च सर्वपुरुषार्थोत्तमः अतस्तेनैव फलेन वेदे भवितव्यं अतो यज्ज्ञानान्मोक्षः तद्वेदेन तात्पर्यात् प्रतिपाद्यं अतो गुणोत्कर्ष एव वेदानां तात्पर्यं सिद्ध्यति । तस्य विष्णोः प्रीत्यैव न तु द्वेषजन्याप्रीत्या । ननु विष्णोर्मोक्षदातृत्वे तत्प्रीत्यैवेत्येतत् सिद्ध्यति । तदेव कुत इत्यत उक्तम्— **तेनैवेति** ।। तेनैव विष्णुनैव मोक्षो सिद्ध्यति नान्येनेत्यर्थः ।। ७६ ।।

**जना**— तेन वेदव्यासेन निर्णयान्निर्णयं कृत्वा सूत्रेषु बहुसूत्रात्मके शास्त्रे 'भूम्नो ज्यायस्त्वं' इति गुणोत्कर्षे तात्पर्यमुक्तम् । इदं व्याख्यातं जयतीर्थार्यैः मायावादखण्डने 'सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपद्यत्वमिति सूत्रार्थोऽत्राभिप्रेतः' इत्यनेन । यद्यपि भाष्ये भूमगुणस्योपास्यत्वे इदं सूत्रम् । तथापि व्याख्यानान्तरं ज्ञेयम्। अत एव जयतीर्थार्यैः अत्रेत्युक्तम् । समस्तसूत्रार्थस्तु सर्वगुणेषु भूम्नः ज्यायस्त्वं वेदमुख्यप्रतिपाद्यत्वं क्रतुवद्दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथयुक्ताग्निष्टोमस्यैव । तथाहि दर्शयति–

'सर्वोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततो हि ।।' इति ।

'यस्य प्रसादात्परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण' इति श्रुत्यर्थं सूचयन्सर्वोत्कर्षे तात्पर्यमित्यत्र युक्तिमाह— **तत्प्रीत्येति** ।। तेनैव हरिणैव । तस्य हरेः प्रीत्यैव मोक्षः प्राप्यः। अन्येन हरेरन्येन स्वतन्त्रेणान्येन प्रीतैरन्येन प्रवचनादिना च न प्राप्यः। मोक्षः सर्वप्रार्थ्यः पुरुषार्थः। तस्य च सिद्धौ हरिः साधनम् । सिद्धं च साधनं प्रीत्याख्यव्यापारवत्कार्यम् । प्रीतिर्हि गुणोत्कर्षज्ञानसाध्या । तदर्थं च श्रवणं शास्त्रस्य । यदि शास्त्रतात्पर्यं गुणोत्कर्षे न स्यात्तदा शास्त्रजिज्ञासा विधीयमाना व्यर्था स्यात्तदन्यथानुपपत्या शास्त्रस्य गुणोत्कर्षे तात्पर्यं ज्ञेयम् । तथा च श्रुतिः—

'न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञतरि यादृशी स्यात् ।
तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव' इति ।। ७६ ।।

**ताम्र**— सर्वागमानां उत्कर्षे तात्पर्ये सूत्रं च प्रमाणयति— **भूम्न इति** ।। तेन भगवता व्यासेन । सूत्रेष्विति निर्धारणसप्तमी । निर्णयादिति ल्यब्लोपनिमित्ता पञ्चमी। सर्वशास्त्रार्थनिर्णयं विधायेति यावत् । 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' इति सूत्रेण उत्कर्षे सर्वागमनां तात्पर्यमुक्तमित्यर्थः । दीक्षाप्रायणीयोदयनीयसवनत्रयावभृतात्मकस्य क्रतोः यथेतरकर्मापेक्षया ज्यायस्त्वं मुख्यतो वेदादिप्रतिपाद्यमिति सूत्रार्थः । नन्विदं सूत्रं पूर्णत्वरूपभूमगुणस्य पूर्णानन्दः पूर्णज्ञान इत्यादिरूपेण सर्वगुणविशेषणतया सर्वोपास्यत्वलक्षणज्यायस्त्वमित्येवं भाष्ये व्याख्यातम् । अतः तद्विरोध इति चेत् इह प्रकारान्तरेण सूत्रार्थं मनसि निधाय आचार्यैरुक्तार्थे एतत्सूत्रोदाहरणे

१. वि.त.नि. प्रथमपरिच्छेदः ।

विरोधाभावात् । तदुक्तं मायावादखण्डनटीकायां 'सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपाद्यत्वं इति सूत्रार्थो अत्र विवक्षित' इति । युक्त्यापि तत्साधयति— **तत्प्रीत्यैवेति** ।। ननु 'भवपाशाच्च मोचक' इति विष्णोरेव मोक्षप्रदत्वं श्रूयते । तत्कथं तत्प्रीतेरेव तदित्यत आह— **तेनैवेति** ।। तेन भगवता कारणेन तत्प्रीत्या व्यापारेण मोक्षः प्राप्य इत्यर्थः। मोक्षकारणीभूतो भगवान् सव्यापारीकरणीयः। व्यापारश्च प्रसाद इति न भगवतो मोचकत्वविरोध इति भावः। यद्वा केन प्राप्य इति जिज्ञासायां तेन प्रीतिविषयतया सन्निहितेन भक्तेनैवेत्युक्तम् । इदमुक्तं भवति- श्रुतिस्मृतिलक्षणः सर्वोऽप्याम्नायः तावदेकमेव शास्त्रम् । भेदे प्रमाणाभावात्। शास्त्रैक्यं च विषयप्रयोजनैक्यनिमित्तम्। उपाध्यन्तराभावात् । सर्वोत्तमं च इदं शास्त्रम् । 'वेदशास्त्रात् परं नास्ति' इति वचनात् । सर्वोत्तमं च प्रयोजनं मोक्ष एव । 'अनित्यत्वात् सदुःखत्वात्' इत्यादेः इति सर्वशास्त्राणां मोक्षार्थत्वे स्थिते विषयो विचार्यते । प्रतिवाक्यं वाक्यार्थानां अनेकत्वेऽपि न तैः शास्त्रस्य विषयवत्ता युज्यते। भेदप्रसङ्गात् । अतो यत्प्रतिपत्त्यर्थं अवान्तरवाक्यार्थप्रतिपादनं यश्च ज्ञातो अभिमतप्रयोजनहेतुः तेन विषयेण भवितव्यम् । अन्यथा विषयप्रयोजनयोः सम्बन्धाभावात् । अभिप्रेतप्रयोजनस्य च प्रसन्नो भगवानेव हेतुः 'यस्य प्रसादात्' इत्यादिश्रुतेः। प्रसादश्च उत्कर्षज्ञानादेव भवति । राजादिप्रसादतः तथा दर्शनात् । 'न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्' इत्यादिश्रुतेः । अतो गुणोत्कर्ष एव सकलसदागमानां महातात्पर्यमङ्गीकार्यमिति ।। ७६ ।।

**जम्बु**— सर्वागमानां विष्णोरुत्कर्षे तात्पर्ये सूत्रं प्रमाणयति— **भूम्न इति** ।। तेन भगवता व्यासेन सूत्रेष्विति निर्धारणे सप्तमी । निर्णयादिति ल्यब्लोपनिमित्ता पञ्चमी । सर्वशास्त्रनिर्णयं विधायेति यावत्। 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति' इति सूत्रेण गुणोत्कर्षे सर्वागमानां तात्पर्यमुक्तम् । दीक्षाप्रायणीयोदनीयसवनत्रयावभृथात्मक–क्रतोर्यथेतरकर्मापेक्षया ज्यायस्त्वं मुख्यतो वेदादिप्रतिपाद्यत्वं इति सूत्रार्थः । तदुक्तं मायावादखण्डनटीकायां 'सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदादिप्रतिपाद्यत्वं इति सूत्रार्थोऽत्र विवक्षित' इति । 'यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण' इति श्रुत्यर्थं सूचयन् सर्वोत्कर्षे तात्पर्यमित्यत्र युक्तिमाह— **तत्प्रीत्येति** ।। ननु 'भवपाशाच्च मोचक' इति विष्णोरेव मोक्षप्रदत्वं श्रूयते तत्कथं तत्प्रीत्यैव इत्यत आह— **तेनेति** ।। तेन भगवता कारणेन । तत्प्रीत्या प्रसादाख्यव्यापारेण मोक्षः प्राप्यः । अन्येन विष्णुनान्येन रुद्रादिना, प्रसादं विना अन्येन साधनान्तरेण, मोक्षः प्राप्यो न भवतीति मोक्षकारणीभूतो भगवान् सव्यापारीकरणीयः व्यापारश्च प्रसाद इति न भगवतो मोचकत्वविरोध इति भावः । यद्वा केन प्राप्य इति जिज्ञासायां तेन प्रीतिविषयतया सन्निहितेन भक्तेनैवेत्युक्तम् । इदमुक्तं भवति । तद्गुणोत्कर्ष एव सकलसदागमानां महातात्पर्यमित्यङ्गीकारादिति ।। ७६ ।।

**भारतश्री**— विष्णोस्सर्वोत्तमत्वे वेदानां महातात्पर्यमस्तीत्यत प्रमाणान्तरमाह— **भूम्न इति** ।। 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' यथा क्रतुषु अश्वमेधस्य श्रैष्ठ्यं एवं विष्णोर्भूमगुणस्य श्रैष्ठ्यमिति सूत्रार्थः । सूत्रेषु भूम्न इत्यनेन सूत्रेण तेन व्यासेन निर्णयादित्युक्तम् । उक्तमर्थं युक्त्यापि साधयति— **तत्प्रीत्यैवेति** ।। अयं भावः । 'तत्प्रीणनात् मोक्षमाप्नोति सर्वः' इति श्रुतेः विष्णोः प्रीत्यैव मोक्षः । तत्प्रीतिश्च 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्' इति श्रुतेः गुणोत्कर्षज्ञानादेव । तच्च वेदेनैव नान्येन । 'नेन्द्रियाणि' इति

श्रुतेः । अतो वेदानां तत्रैव महातात्पर्यमिति ज्ञायत इति । अथवा तत्प्रीत्या मोक्षः कुतः इत्यत आह— **तेनैवेति** ।। यतस्तेनैव विष्णुनैव मोक्षो नान्येन । यतस्तत्प्रीत्यैवेत्यर्थः इत्यन्वयः ।। ७६ ।।

**[१]नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते [२]तनूं स्वाम् ।। ७७ ।।**

**वादि**— तेनैव यस्मिन्प्रीतस्तेनैव। तत्प्रीत्यैव च मोक्ष इत्युक्तम्। तत्र प्रमाणमाह— **नायमात्मेति** ।। वरणं नाम स्वीयतयाङ्गीकारः। प्रसाद इत्यर्थः ।। ७७ ।।

**सङ्क**— नायमत्मेत्येतया च श्रुत्या अयमर्थः सिद्ध इत्याह— **नायमिति** ।। प्रवचनं व्याख्यानम्। अयमात्मा परमात्मा प्रवचनादिना न लभ्यः किन्तु यं पुरुषं एषः परमात्मा गुणोत्कर्षज्ञानस्नेहरूपया प्रीत्या मदीयोऽयमिति वृणुते स्वीकरोति तेन पुरुषेन लभ्यः। तस्य पुरुषस्य एषः परमात्मा स्वां केवलसच्चिदानन्दात्मिकां जीवतनुं वृणुते प्रकटीकरोति। अतो गुणोत्कर्षज्ञानसाध्यप्रीत्या विष्णोर्मोक्षदातृत्वात् सर्वागमानां श्रीविष्णुगुणोत्कर्ष एव महातात्पर्यमस्तीत्यर्थः

'भक्त्या प्रसन्नो विष्णुर्हि मोक्षदातेति तद्गुणान् ।
वदन्ति श्रुतयस्सर्वा महातात्पर्यतोऽखिलान् ।
इत्युक्तमर्थमखिलं एतस्याप्युपयोगि यत् ।
तत्सर्वं भगवानाह भविष्यत्पर्वणि स्फुटम् ।।' ।। ७७ ।।

**वरद**— न प्रतिज्ञामात्रेण तदुभयं सिद्ध्यतीत्यतस्तत्प्रीत्यैव च इत्यत्र तावत्प्रमाणमाह— **नायमिति** ।। अयं आत्मा परमात्मा प्रवचनेन व्याख्यानेन न लभ्यः प्राप्यो न भवतीत्यर्थः। मेधया प्रज्ञया न लभ्यः। बहुना श्रुतेन श्रवणेनापि न लभ्यः। एषः परमात्मा यं जीवं स्वीयत्वेन प्रीत्या वृणुते तेन जीवेन लभ्यः प्राप्यः तस्य जीवस्यैषः प्रकृत आत्मा स्वां तनुं स्वबिम्बरूपं विवृणुते प्रकटीकरोति। जीवस्यापि अपरोक्षीकृतस्वबिम्बरूपां स्वां तनुं सच्चिदानन्दाद्यात्मकं विवृणुते आवरणतिरोधानेन प्रकटीकरोतीत्यर्थः ।। ७७ ।।

**जना**— नान्येनेत्यस्य व्यावर्त्यं प्रदर्शयन् प्रीतहरेर्मोक्षसाधनत्वं प्रतिपादयञ्छ्रुतिमुदाहरति— **नायमिति**।। प्रवचनं व्याख्यानम्। श्रुतं श्रवणम्। अयमात्मा प्रवचनादिना न लभ्यः किन्तु यं पुरुषमेषः परमात्मा गुणोत्कर्षज्ञानात् स्नेहरूपया प्रीत्या मदीयोऽयमिति वृणुते स्वीकरोति तेन पुरुषेणैव लभ्यः। तस्य पुरुषस्यैव परमात्मा स्वां तनूं केवलसच्चिदानन्दात्मिकां जीवतनुबिम्बभूतां स्वमूर्तिं च विवृणुते प्रकटीकरोत्यतो गुणोत्कर्षज्ञानात्स्नेहरूपया प्रीत्या विष्णोः मोक्षदातृत्वात् सर्वागमानां श्रीविष्णोर्गुणोत्कर्ष एव महातात्पर्यमस्तीत्यर्थः ।। ७७ ।।

---

१. का.उ. १-२ । २. 'तनुम्' इति वरदराजीयः जम्बु-भारतश्री पाठः ।

**ताम्र**— ननु प्रवचनादिनैव मोक्षोपपत्तेः कुतः प्रसादापेक्षा येन तदर्थं गुणोत्कर्षज्ञानं अपेक्षितं स्यात् इत्यत आह— **नायमिति** ।। लभ्यः प्राप्यः। कथम्। यतस्तस्य स्वां तनूं विवृणुते प्रकाशयति। ततश्च स्वां तनुमविद्यावृतस्वरूपं विवृणुते आविर्भवतीत्यर्थः ।। ७७ ।।

**जम्बु**— ननु प्रवचनादिनैव मोक्षोपपत्तेः कुतः प्रसादापेक्षा येन तदर्थं गुणोत्कर्षज्ञानं अपेक्षितं स्यादित्यत आह — **नायमिति** ।। अयमात्मा परमात्मा प्रवचनेन व्याख्यानेन लभ्यः प्राप्यो न। मेधया प्रज्ञया न लभ्यः। बहुना श्रुतेन श्रवणेनापि न लभ्यः। एष विष्णुः यं जीवं वृणुते स्वीयत्वेन प्रीत्या वृणुते स्वीकरोति तेन पुरुषेण लभ्यः तस्य पुरुषस्यैव आत्मा परमात्मा स्वां तनुं स्वबिम्बरूपं वृणुते प्रकटीकरोति। ततः स्वां तनुं चिदानन्दतनुं विवृणुत इत्यर्थः। 'यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण' इति ।। ७७ ।।

**भारतश्री**— उक्तार्थे प्रमाणमाह— **नायमिति** ।। अयमात्मा परमात्मा । प्रवचनेन व्याख्यानेन लभ्यो प्राप्यो न । मेधया ज्ञानेन । श्रुतेन श्रवणेन । एषः हरिः यं स्वकीयत्वेन वृणुते तेन लभ्यः । स्वां तनुं स्वबिम्बरूपम् । विवृणुते प्रकटीकरोति ।। ७७-८१ ।।

**विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया ।**
**मोक्षो ज्ञानं च क्रमशो मुक्तिगो भोग एव च ।। ७८ ।।**

**सङ्क**— ।। **विष्णुर्हि दातेति** ।। ननु वायुरपि मोक्षदाता क्वचित् क्वचित् श्रूयते । अन्ये स्वोत्तमाश्च क्वचित् क्वचित् मोक्षदातारः श्रूयन्ते । तत्कथं विष्णुरेव मोक्षदातेत्यत आह— **वायुश्चेत्यादिना** ।। स्वातन्त्र्येणैव विष्णुर्मोक्षदाता । वायुश्च विष्णोराज्ञयैव मोक्षदाता । च शब्देन तु अन्ये स्वोत्तमा स्वस्वबुद्धिस्थविष्णुप्रेरणयैव मोक्षदातारो अतो न विरोधः इत्यर्थः । वायुश्च तदनु मोक्षस्य दातेत्युक्त्या विष्णुः स्वातन्त्र्येण मोक्षदातेति चोक्तं भवति । तदुभयत्र युक्तिमाह 'सर्वेषां च हरिर्नित्यं नियन्ता तद्वशाः परे' इति । अत्र मोक्षज्ञानमुक्तिगभोगा भक्तिवैराग्यादिगुणानामुपलक्षकाः इति ज्ञातव्यम् ।। ७८-७९ ।।

**वरद**— 'तेनैव नान्येन' इत्यत्रापि प्रमाणमाह— **विष्णुर्हीति** ।। इतः परं भविष्यत्पर्ववचनमित्यतः प्राक्तनानि वाक्यानि भविष्यत्पर्ववचनानीति ज्ञातव्यम् । ननु वायोरपि क्वचिन्मोक्षदातृत्वं श्रूयतेऽत आह— **वायुश्चेति** ।। तस्य विष्णोरनुज्ञया वायुर्मोक्षदाता न तु स्वातन्त्र्येणेत्यर्थः। अत्र मोक्षपदं ज्ञानानन्दभोगादेरुपलक्षणम् । एवं वायुपदमपि स्वस्वोत्तमोपलक्षणमित्याह— **मोक्ष इति** ।। मोक्षः संसारात् । तत्साधनं ज्ञानं क्रमशः क्रमेण मुक्तिगो मुक्तौ जायमानं आनन्दभोगश्च ।। ७८ ।।

**जना**— विष्णुर्मोक्षदातेत्याद्यर्थे भविष्यत्पर्ववचनमाह— **विष्णुर्हीति** ।। चशब्दात् रमापि दात्री । उक्तमोक्षादीनां समुच्चये एकश्चकारः। द्वितीयो मुक्तभक्तिवैराग्यादीनाम् । क्रमशः क्रमेण ।। ७८ ।।

**ताम्र**— मुक्त्यर्थं वायुप्रसादोऽपेक्षितः तस्य च मोचकत्वप्रसिद्धेः । किं विष्णुप्रसादेनेत्यत आह— **विष्णुरिति**।। यद्वा 'तारतम्यज्ञानपूर्वकं सर्वतो हरेराधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते' इति वचनात् तारतम्यज्ञानपूर्वकमेव सर्वोत्कृष्टत्वं ज्ञेयमिति सयुक्तिकमाह— **विष्णुर्हीत्यादिना** ।। वायोः मोक्षदातृत्वेन श्रीमध्वशास्त्रकर्तृत्वेन

चरमदेहोत्क्रमणकाले उपदेशकत्वेन 'स एनान् ब्रह्म गमयति' इति ब्रह्मगमकत्वेन मौक्तानन्दप्रापकत्वेन ब्रह्मापरोक्षवत् तदपरोक्षस्यापि मुक्तौ नियतत्वेन इत्याद्यनेकप्रकारेण ज्ञेयम् । यत एवं ज्ञानभक्तिमोक्षतद्गतभोगाश्च उत्तमप्रसादाधीनाः। प्रसादश्च उत्कर्षज्ञानसाध्यः। अतः तत्तारतम्यं तदङ्गत्वेन हरेरुत्तमत्वं च अवश्यं मोक्षार्थं ज्ञेयम् । प्रवृत्तानां श्रुतीनां तारतम्यपूर्वमुत्कर्षे तात्पर्यमवश्यमङ्गीकार्यमिति । तत्र नीचमुक्तिदशायां उत्तमः साधनमार्गप्रविष्टाननुगृह्णाति। तत्र ईश्वर एव परप्रसादमनपेक्ष्य स्वयं मुक्तिप्रद इति न कश्चित् क्षुद्रोपद्रवः ।। ७८-८० ।।

**जम्बु**— 'प्राप्यस्तेनैव नान्येन' इत्यत्र प्रमाणमाह— **विष्णुर्हीति** ।। इतः परं भविष्यत्पर्ववचनमित्यतः प्राक्तनानि वाक्यानि भविष्यत्पर्ववचनानीति ज्ञातव्यम् । अथवा 'तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेराधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यत' इति वचनाज्ज्ञानतारतम्यपूर्वकं सर्वोत्कृष्टत्वं ज्ञेयमिति सयुक्तिकमाह— **विष्णुरित्यादिना** ।। विष्णुरिति प्रमाणान्तरत्वान्न पुनरुक्तिदोषः विष्णुर्भगवान्मोक्षस्य दाता हीति प्रमाणप्रसिद्धिं सूचयति । ननु

'धर्मश्चार्थश्चकामश्च मोक्षश्चैव यशो ध्रुवम् ।
त्वय्यायत्तमिदं सर्वं सर्वलोकस्य भारत ।।'

इति वायोर्मोक्षदातृत्वोक्तिविरोध इत्यत आह— **वायुश्चेति** ।। वायुर्मोक्षदाता चशब्दाद्रमापि दात्री उत्तमोक्षादीनां समुच्चये एकश्चकारः द्वितीयोऽनुक्तभक्तिवैराग्यादीनां वायोर्मोक्षदातृत्वं न स्वातन्त्र्येण किन्तु भगवदाज्ञयेत्याह— **तदनुज्ञयेति** ।। वायोर्मोक्षदातृत्वं श्रीमध्वशास्त्रकर्तृत्वेन चरमदेहलिङ्गोत्क्रमणकाले उपदेशकत्वेन 'स एनान् ब्रह्म गमयति' इति ब्रह्मगमकत्वेन मौक्तानन्दप्रापकत्वेन ब्रह्मापरोक्षवत् तदपरोक्षस्यापि मुक्तौ नियतत्वेनेत्याद्यनेकप्रकारेण ज्ञेयमिति **श्रीनिवासभट्टीये** । अत्र मोक्षपदं ज्ञानानन्दादिरुपलक्षणम् । वायुपदं स्वस्वोत्तमोपलक्षणमित्याह— **मोक्ष इति** ।। मोक्षः संसारात् मोक्षसाधनं ज्ञानमपरोक्षज्ञानं क्रमशः क्रमेण मुक्तौ जायमानः आनन्दादिभोगश्च ।। ७८ ।।

**उत्तरेषां प्रसादेन नीचानां नान्यथा भवेत् ।**
**सर्वेषां च [1]हरिर्नित्यनियन्ता तद्वशाः परे ।। ७९ ।।**

**वरद**— उत्तरेषां स्वस्वोत्तमानां प्रसादेनैव नीचानां अधमानां भवेत् नान्यथेत्यर्थः । तदनुज्ञयेत्येतद्विवृणोति— **सर्वेषां चेति** ।। नित्यं संसारे मुक्तौ च सर्वेषां जीवानां हरिर्नियन्ता । ते च परेऽन्ये सर्वे जीवास्तद्वशगा इत्यर्थः ।। ७९ ।।

**जना**— उत्तरेषां श्रेष्ठानां सर्वेषां प्रसादेनैव मोक्षादिर्भवति । एव शब्दव्यावर्त्यमाह । अन्यथा तदभावे न भवेदिति । अत्रापि स्वन्तर्यामिप्रेरणयेति ग्राह्यम् । तदेवाह— **सर्वेषामिति** ।। ७९ ।।

**जम्बु**— उतरेषां स्वस्वोत्तमानां प्रसादेनैव नीचानां भवेत् । एवकारव्यावृत्तमाह— **नान्यथेति** ।। तदभावे न भवेदिति अत्रापि स्वान्तर्यामिप्रेरणयेति वाच्यम् तदेवाह— **सर्वेषामिति** ।। नित्यं संसारे मुक्तौ च । सर्वेषां

---

१. हरिर्नित्यं नियन्ता इति वरदराजीयः पाठः ।

जीवानां । हरिः नियन्ता प्रेरकः । तेन परे अन्ये जीवाः । तद्वशाः तस्य भगवतः वशाः अधीनाः ! क्वचित्स्वोत्तमानां मुक्तिदातृत्वोक्तेरभिप्रायमाह **मोक्ष इतीति नारायणाध्वरीये** । यत एवं ज्ञानभक्तिमोक्षतद्गतभोगाश्च उत्तमप्रसादाधीनाः प्रसादज्ञानश्चोत्कर्षज्ञानसाध्यः अतस्तारतम्यं तदन्तर्गतत्वेन हरेरुत्तमत्वं चावश्यं मोक्षार्थं प्रवृत्तानां श्रुतीनां तारतम्यपूर्वकमुत्कर्षे तात्पर्यमवश्यमङ्गीकार्यमिति । तत्र नीचमुक्तिदशायां उत्तमः साधनमार्गप्रविष्टाननुगृह्णाति । तत्र ईश्वर एव परप्रसादमनपेक्ष्य स्वयं मुक्तिप्रद इति न कश्चित् क्षुद्रोपद्रवः इति **श्रीनिवासभट्टीये** ।। ७९ ।।

**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद्विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ।। ८० ।।**

**वादि— तारतम्यं ततो ज्ञेयमित्यत्र** ततस्तदर्थं मोक्षार्थम् ।। ८० ।।

**सङ्क—** उत्तरेषां प्रसादेन नीचानां मोक्षदिकं भवेदित्युक्तम् । तेषां तारतम्यापरिज्ञाने तत्प्रसाद एव न लभ्यत इति तत्तारतम्यमवश्यं ज्ञातव्यमिति भावेनाह— **तारतम्यमिति** ।। मुक्त्यर्थं तारतम्यं हरेः सर्वोत्तमत्वं ज्ञेयमित्युक्तम् । तद्विपक्षे बाधकमाह— **एतदिति** ।। ८० ।।

**वरद—** ततः तत्प्रसादस्यापि अपेक्षितत्वात्तेषां तारतम्यं ज्ञेयम् । तथा सर्वापेक्षयोत्तमत्वं हरेर्ज्ञेयमित्यर्थः । एतदुभयाज्ञाने मोक्षाभावात् उभयमेव अवश्यं ज्ञेयमित्याह— **एतद्विनेति** ।। एतदुभयज्ञानं विना कस्यापि जीवस्य कथञ्चन केनापि प्रकारेण विमुक्तिर्न स्यादित्यर्थः ।। ८० ।।

**जना—** ततः उत्तरोत्तरज्ञानार्थम् । तथाशब्दः समुच्चये। यद्वा ततस्तदर्थं मुक्त्यर्थम्। विपक्षे बाधकमाह— **एतदिति** ।। ८० ।।

**जम्बु—** ततः उत्तरोत्तरज्ञानार्थं तेषां तेषां प्रसादस्यापेक्षितत्वात् तेषां तारतम्यं ज्ञेयम् । तथाशब्दः समुच्चये। यद्वा ततः तदर्थं मुक्त्यर्थं हरेर्भगवतः सर्वोच्चत्वं सर्वापेक्षयोत्तमत्वं ज्ञेयम् । एतदुभयाज्ञाने मोक्षाभाव उभयमेवावश्यं ज्ञेयमित्याह— **एतद्विनेति** ।। एतयोर्ज्ञानं विना न कस्यापि जीवस्य कथञ्चन केनापि प्रकारेग विमुक्तिर्मोक्षः न स्यात् ।। ८० ।।

**पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।**
**निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा ।। ८१ ।।**

**सङ्क—** न केवलं लक्ष्मीविरिञ्चादीनां तारतम्यज्ञानात् विष्णोस्सर्वोत्तमत्वज्ञानाच्च मुक्तिः स्यात् किन्तु पञ्चभेदादिज्ञानात् सम्यक् विष्णुभक्त्या च मुक्तिः स्यात् नान्यथेत्याह— **पञ्चभेदांश्चेत्यादिना ज्ञात्वा मुक्तिर्न चान्यथेत्यन्तेन ग्रन्थेन** ।। ८१-८४ ।।

**वरद—** तथान्यदपि मोक्षार्थं अवश्यं ज्ञेयमस्तीत्याह— **पञ्चभेदांश्चेति** ।। पूर्वोक्तान् पञ्चभेदान् विष्णोः स्वाभेदं रूपगुणकर्माद्यभेदं तथा विष्णोर्निर्दोषत्वं गुणोद्रेकं गुणोत्कर्षं च ज्ञात्वैव मुक्तिर्नान्यथेत्यर्थः ।। ८१ ।।

**जना**— न केवलं विरिञ्चादीनां तारतम्यज्ञानात् विष्णोः सर्वोत्तमत्वज्ञानाच्चमुक्तिः स्यात् । किन्तु पञ्चभेदादिज्ञानं भक्तिश्चापेक्षितेत्याह— **पञ्चेति** ।। स्वाभेदं स्वावयवानां स्वावताराणामभेदमेव ज्ञात्वा न तु भेदाभेदम् । स्थितस्येति शेषः ।। ८१ ।।

**ताम्र**— मुक्त्यर्थं अवश्यं ज्ञातव्यानाह— **पञ्चेत्यादिना** ।। पूर्वसङ्गतिस्तु— ननु सति भेदे तारतम्यमेव नास्तीत्यत आह— **पञ्चभेदानिति** ।। ननु कथं भेदावधारणं 'नेह नाना' इति भेदनिषेधविरोधादित्यत आह— **विष्णोरिति** ।। भगवद्रूपादिभेदनिषेधपरा श्रुतिरिति भावः। स्वाभेदमुपपादयति— **निर्दोषत्वमिति** ।। भगवद्रूपगुणादौ सर्वत्रेति शेषः। यद्वा सजातीयविजातीयनानात्वनिषेधपरैव श्रुतिः किं न स्यादित्यत आह— **निर्दोषत्वं गुणोद्रेक-मिति** ।। सदोषाल्पगुणजीवैक्यं बाधितमिति भावः ।। ८१ ।।

**जम्बु**— न केवलं रमाविरिञ्चादीनां तारतम्यज्ञानात् विष्णोस्सर्वोत्तमत्वज्ञानाच्च मुक्तिस्स्यात् किन्तु पञ्चभेदज्ञानं भक्तिश्चापेक्षतेत्याह— **पञ्चेति** ।। यद्वा ननु सति भेदे तारतम्यं स एव नास्तीत्यत आह— **पञ्चेति** ।। प्रागुक्तान् पञ्चभेदान् विज्ञाय ज्ञात्वा । ननु कथं भेदावधारणं 'नेह नाना' इति भेदनिषेधविरोधादित्यत आह— **विष्णोरिति**।। भगवद्रूपादिभेदनिषेधपरा सा श्रुतिरिति भावः । सजातीयविजातीयनानात्वनिषेधपरैव श्रुतिः किं न स्यादित्यत आह— **निर्दोषत्वं गुणोद्रकमिति** ।। सदोषाल्पगुणजीवैक्यं बाधितमिति भावः। दोषाभावं गुणोद्रेकं गुणोत्कर्षं च ज्ञात्वैव स्थितस्येति शेष इति *जनार्दनभट्टीये* ।। **मुक्तिर्नचान्यथा** ।। अन्यथा पञ्चभेदादिज्ञानाभावे न च मुक्तिः मुक्तिर्नेत्यर्थः ।। ८१ ।।

**अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्च ये ।**
**तदावेशांस्तथा सम्यग् ज्ञात्वा मुक्तिर्न चान्यथा ।। ८२ ।।**

**वरद**— हरेरवतारान् स्वरूपावतारान् मत्स्यादीन् । ये च हरेर्नावताराः पृथुबलभद्राद्याः तदावेशान् तेषु विद्यमानान् विशेषावेशांश्च सम्यक् याथार्थ्येन ज्ञात्वैव मुक्तिर्नान्यथेत्यर्थः ।। ८२ ।।

**जना**— ये हरेर्नावतारा अवतारभिन्नास्तांश्च ज्ञात्वेति सम्बन्धः । चशब्देन देवावताराननवतारांश्च ज्ञात्वेति ग्राह्यम् ।। ८२ ।।

**ताम्र**— ननु कथं भगवतो निर्दोषत्वादिकम् । तदवतारेषु बलपृथ्व्यादिषु जरादिदर्शनात् अनवतारेषु व्यासादिषु दोषदर्शनात् इत्यत आह— **अवतारानिति** ।। पृथ्वादेरेव अवतारत्वोक्तेः गतिमाह— **तदावेशानिति** ।। ८२ ।।

**जम्बु**— हरेर्विष्णोः अवतारान् स्वस्वरूपावतारान् मत्स्याद्यवतारान् ज्ञात्वा । ये च हरेर्नावताराः पृथुबलभद्राद्याः तदावेशान् तेषु विद्यमानविशेषावेशांश्च सम्यक् याथातथ्येन ज्ञात्वैव । चशब्देन देवावताराननवतारांश्च ज्ञात्वेति ग्राह्यम्। स्थितस्येति शेषः। मुक्तिः अन्यथा अवतारादिज्ञानाभावे मुक्तिर्न भवति ।। ८२ ।।

**भारतश्री**— अवतारान् साक्षादंशावतारान् । ये नावतारा पृथ्वाद्याः आवेशावताराः इत्यर्थः ।। ८२-९८ ।।

जीवानां । हरिः नियन्ता प्रेरकः । तेन परे अन्ये जीवाः । तद्वशाः तस्य भगवतः वशाः अधीनाः ! क्वचित्स्वोत्तमानां मुक्तिदातृत्वोक्तेरभिप्रायमाह **मोक्ष इतीति नारायणाध्वरीये** । यत एवं ज्ञानभक्तिमोक्षतद्गतभोगाश्च उत्तमप्रसादाधीनाः प्रसादज्ञानश्चोत्कर्षज्ञानसाध्यः अतस्तारतम्यं तदन्तर्गतत्वेन हरेरुत्तमत्वं चावश्यं मोक्षार्थं प्रवृत्तानां श्रुतीनां तारतम्यपूर्वकमुत्कर्षे तात्पर्यमवश्यमङ्गीकार्यमिति । तत्र नीचमुक्तिदशायां उत्तमः साधनमार्गप्रविष्टाननुगृह्णाति । तत्र ईश्वर एव परप्रसादमनपेक्ष्य स्वयं मुक्तिप्रद इति न कश्चित् क्षुद्रोपद्रवः इति **श्रीनिवासभट्टीये** ।। ७९ ।।

**तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।**
**एतद्विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ।। ८० ।।**

**वादि— तारतम्यं ततो ज्ञेयमित्यत्र** ततस्तदर्थं मोक्षार्थम् ।। ८० ।।

**सङ्क—** उत्तरेषां प्रसादेन नीचानां मोक्षदिकं भवेदित्युक्तम् । तेषां तारतम्यापरिज्ञाने तत्प्रसाद एव न लभ्यत इति तत्तारतम्यमवश्यं ज्ञातव्यमिति भावेनाह— **तारतम्यमिति** ।। मुक्त्यर्थं तारतम्यं हरेः सर्वोत्तमत्वं ज्ञेयमित्युक्तम् । तद्विपक्षे बाधकमाह— **एतदिति** ।। ८० ।।

**वरद—** ततः तत्प्रसादस्यापि अपेक्षितत्वात्तेषां तारतम्यं ज्ञेयम् । तथा सर्वापेक्षयोत्तमत्वं हरेर्ज्ञेयमित्यर्थः । एतदुभयाज्ञाने मोक्षाभावात् उभयमेव अवश्यं ज्ञेयमित्याह— **एतद्विनेति** ।। एतदुभयज्ञानं विना कस्यापि जीवस्य कथञ्चन केनापि प्रकारेण विमुक्तिर्न स्यादित्यर्थः ।। ८० ।।

**जना—** ततः उत्तरोत्तरज्ञानार्थम् । तथाशब्दः समुच्चये। यद्वा ततस्तदर्थं मुक्त्यर्थम्। विपक्षे बाधकमाह— **एतदिति** ।। ८० ।।

**जम्बु—** ततः उत्तरोत्तरज्ञानार्थं तेषां तेषां प्रसादस्यापेक्षितत्वात् तेषां तारतम्यं ज्ञेयम् । तथाशब्दः समुच्चये। यद्वा ततः तदर्थं मुक्त्यर्थं हरेर्भगवतः सर्वोच्चत्वं सर्वापेक्षयोत्तमत्वं ज्ञेयम् । एतदुभयाज्ञाने मोक्षाभाव उभयमेवावश्यं ज्ञेयमित्याह— **एतद्विनेति** ।। एतयोर्ज्ञानं विना न कस्यापि जीवस्य कथञ्चन केनापि प्रकारेग विमुक्तिर्मोक्षः न स्यात् ।। ८० ।।

**पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।**
**निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा ।। ८१ ।।**

**सङ्क—** न केवलं लक्ष्मीविरिञ्चादीनां तारतम्यज्ञानात् विष्णोस्सर्वोत्तमत्वज्ञानाच्च मुक्तिः स्यात् किन्तु पञ्चभेदादिज्ञानात् सम्यक् विष्णुभक्त्या च मुक्तिः स्यात् नान्यथेत्याह— **पञ्चभेदांश्चेत्यादिना ज्ञात्वा मुक्तिर्न चान्यथेत्यन्तेन ग्रन्थेन** ।। ८१-८४ ।।

**वरद—** तथान्यदपि मोक्षार्थं अवश्यं ज्ञेयमस्तीत्याह— **पञ्चभेदांश्चेति** ।। पूर्वोक्तान् पञ्चभेदान् विष्णोः स्वाभेदं रूपगुणकर्माद्यभेदं तथा विष्णोर्निर्दोषत्वं गुणोद्रेकं गुणोत्कर्षं च ज्ञात्वैव मुक्तिर्नान्यथेत्यर्थः ।। ८१ ।।

**जना**— न केवलं विरिञ्चादीनां तारतम्यज्ञानात् विष्णोः सर्वोत्तमत्वज्ञानाच्चमुक्तिः स्यात् । किन्तु पञ्चभेदादिज्ञानं भक्तिश्चापेक्षितेत्याह— **पञ्चेति** ।। स्वाभेदं स्वावयवानां स्वावताराणामभेदमेव ज्ञात्वा न तु भेदाभेदम् । स्थितस्येति शेषः ।। ८१ ।।

**ताम्र**— मुक्त्यर्थं अवश्यं ज्ञातव्यानाह— **पञ्चेत्यादिना** ।। पूर्वसङ्गतिस्तु— ननु सति भेदे तारतम्यमेव नास्तीत्यत आह— **पञ्चभेदानिति** ।। ननु कथं भेदावधारणं 'नेह नाना' इति भेदनिषेधविरोधादित्यत आह— **विष्णोरिति** ।। भगवद्रूपादिभेदनिषेधपरा श्रुतिरिति भावः। स्वाभेदमुपपादयति— **निर्दोषत्वमिति** ।। भगवद्रूपगुणादौ सर्वत्रेति शेषः। यद्वा सजातीयविजातीयनानात्वनिषेधपरैव श्रुतिः किं न स्यादित्यत आह— **निर्दोषत्वं गुणोद्रेकमिति** ।। सदोषाल्पगुणजीवैक्यं बाधितमिति भावः ।। ८१ ।।

**जम्बु**— न केवलं रमाविरिञ्चादीनां तारतम्यज्ञानात् विष्णोस्सर्वोत्तमत्वज्ञानाच्च मुक्तिस्स्यात् किन्तु पञ्चभेदज्ञानं भक्तिश्चापेक्षितेत्याह— **पञ्चेति** ।। यद्वा ननु सति भेदे तारतम्यं स एव नास्तीत्यत आह— **पञ्चेति** ।। प्रागुक्तान् पञ्चभेदान् विज्ञाय ज्ञात्वा । ननु कथं भेदावधारणं 'नेह नाना' इति भेदनिषेधविरोधादित्यत आह— **विष्णोरिति**।। भगवद्रूपादिभेदनिषेधपरा सा श्रुतिरिति भावः । सजातीयविजातीयनानात्वनिषेधपरैव श्रुतिः किं न स्यादित्यत आह— **निर्दोषत्वं गुणोद्रकमिति** ।। सदोषाल्पगुणजीवैक्यं बाधितमिति भावः। दोषाभावं गुणोद्रेकं गुणोत्कर्षं च ज्ञात्वैव स्थितस्येति शेष इति *जनार्दनभट्टीये* ।। **मुक्तिर्नचान्यथा** ।। अन्यथा पञ्चभेदादिज्ञानाभावे न च मुक्तिः मुक्तिर्नेत्यर्थः ।। ८१ ।।

**अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्च ये ।**
**तदावेशांस्तथा सम्यग् ज्ञात्वा मुक्तिर्न चान्यथा ।। ८२ ।।**

**वरद**— हरेरवतारान् स्वरूपावतारान् मत्स्यादीन् । ये च हरेर्नावताराः पृथुबलभद्राद्याः तदावेशान् तेषु विद्यमानान् विशेषावेशांश्च सम्यक् याथार्थ्येन ज्ञात्वैव मुक्तिर्नान्यथेत्यर्थः ।। ८२ ।।

**जना**— ये हरेर्नावतारा अवतारभिन्नास्तांश्च ज्ञात्वेति सम्बन्धः । चशब्देन देवावताराननवतारांश्च ज्ञात्वेति ग्राह्यम् ।। ८२ ।।

**ताम्र**— ननु कथं भगवतो निर्दोषत्वादिकम् । तदवतारेषु बलपृथ्व्यादिषु जरादिदर्शनात् अनवतारेषु व्यासादिषु दोषदर्शनात् इत्यत आह— **अवतारानिति** ।। पृथ्वादेरेव अवतारत्वोक्तेः गतिमाह— **तदावेशानिति** ।। ८२ ।।

**जम्बु**— हरेर्विष्णोः अवतारान् स्वस्वरूपावतारान् मत्स्याद्यवतारान् ज्ञात्वा । ये च हरेर्नावताराः पृथुबलभद्राद्याः तदावेशान् तेषु विद्यमानविशेषावेशांश्च सम्यक् याथातथ्येन ज्ञात्वैव । चशब्देन देवावताराननवतारांश्च ज्ञात्वेति ग्राह्यम्। स्थितस्येति शेषः। मुक्तिः अन्यथा अवतारादिज्ञानाभावे मुक्तिर्न भवति ।। ८२ ।।

**भारतश्री**— अवतारान् साक्षादंशावतारान् । ये नावतारा पृथ्वाद्याः आवेशावताराः इत्यर्थः ।। ८२-९८ ।।

**सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।**
**मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा ।। ८३ ।।**

**वादि— अज्ञानबन्धनानित्यत्र** बध्नन्तीति बन्धनाः कामकर्माद्याः । तांश्च ।। ८३ ।।

**वरद—** तथा सृष्ट्यादिव्यापारानपि विष्ण्वैकनिष्ठान् ज्ञात्वा मुक्तिर्नान्यथेत्याह— **सृष्टीति** ।। हृतिः संहारः। अज्ञानं आवरणम् । 'बन्धनान्' इति पुल्लिङ्गः साधु । बहवः कर्मकारणाः सन्तीत्यादिवत् ।। ८३ ।।

**जना—** रक्षा पालनम् । बन्धनं बन्धः । यद्वा बन्धनं बन्धो यैस्ते कामक्रोधादयः । कारणैः कार्यमुपलक्ष्यते। विष्णुत एव स्वातन्त्र्येण तु अन्येभ्यस्तदाज्ञया तत्प्रेरणया च ।। ८३ ।।

**ताम्र—** ननु 'हिरण्यगर्भः समवर्तताग्रे' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रुतिषु अन्येषामपि सृष्ट्यादिकर्तृत्वप्रतीतेः कथमेवास्य हरेरुद्रिक्तगुणत्वादिकमित्यत आह— **सृष्टीति** ।। ८३ ।।

**जम्बु—** ननु 'हिरण्यगर्भस्समवर्तताग्रे' 'ज्ञात्वा शिवम्' इत्यादिश्रुतिषु अन्येषामपि सृष्ट्यादिकर्तृत्वप्रतीतेः कथमेकस्यैव हरेरुद्रिक्तगुणत्वमित्यत आह— **सृष्टीति** ।। सृष्टिः सर्जनम् । रक्षा पालनम्। हृतिः संहारः। ज्ञानम् । नियतिः विषयेषु प्रेरणम् । अज्ञानं आवरणम् । बन्धनं बन्धः। बहवः कर्मकारणास्सन्तीत्यादिवत् 'बन्धनान्' इति पुल्लिङ्गस्साधुरिति ***वरदराजीये*** । पुल्लिङ्गश्छान्दस इत्यन्ये । यद्वा बन्धनं बन्धो यैस्ते कामक्रोधादयः। कारणैः कार्यमुपलक्ष्यत इति ***जनार्दनभट्टीये*** । मोक्षः विष्णुतः एव स्वातन्त्र्येण । तु अन्येभ्यः तदाज्ञया तत्प्रेरणया चेति ज्ञात्वा विद्यमानस्य मुक्तिर्भवति अन्यथा हरेः सृष्ट्यादिकर्तृत्वाज्ञानेन अन्यस्य तत्कर्तृत्वज्ञाने न भवति ।। ८३ ।।

**[१]वेदांश्च पञ्चरात्राणि सेतिहासपुराणकान् ।**
**ज्ञात्वा विष्णुपरानेव मुच्यते नान्यथा क्वचित् ।। ८४ ।**

**वरद—** पञ्चरात्राणि सेतिहासपुराणकान् वेदांश्च विष्णुपरानेव ज्ञात्वा मुच्यते नान्यथेत्यर्थः ।। ८४ ।।

**जना—** इतिहासशब्देन महाभारतं रामायणं च ग्राह्यम्। कुरुपाण्डवन्यायेन विष्णुपरानेव मुख्यतः विष्णुपरान् ।। ८४ ।।

**ताम्र—** श्रुतिगतिमाह— **वेदानिति** ।। ८४ ।।

---

१. 'त्रयी साङ्ख्यवेदान्तयोगाः पुराणं तथा पञ्चरात्रं प्रभो धर्मशास्त्रम् । तवैवातिमाहात्म्यमेकस्य नित्यं प्रकारैरनेकैर्हि गायन्ति भक्त्या ।। त्वदेवेश शास्त्राणि चैतानि भूम्नो बभूवुस्त्वदेकाश्रयाण्यादिकल्पे । रमासेव्यपादाम्बुजं शास्त्रयोनिं तवाद्यं भवन्तं भजे वासुदेवम् ।। कथा त्वदीया भवपाशमोचिनी सुधैव तापत्रयतप्तदेहिनाम् । अनेकजन्माघचयापहारिणी तनोति भक्तिं वयुनं तवाञ्जसा ।।' इति । (स्कान्दे.वैष्णवखण्ड/श्रीवासुदेवमाहात्म्य/१५अ/१-५) ।

**जम्बु**— पञ्चरात्राणि सेतिहासपुराणकान् । इतिहासः भारतं च पुराणानि अष्टादशपुराणानि च इतिहासपुराणानि तैः सह वर्तन्त इति तथा तान् । वेदांश्च ऋगादीन् विष्णुपरानेव विष्णुप्रतिपादकानेव ज्ञात्वा मुच्यते अन्यथाज्ञात्वा क्वचिदपि न मुच्यते ।। ८४ ।।

**माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।**
**स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ।। ८५ ।।**

**वादि**— ज्ञानप्रकारः कथितः। इदानीं भक्तिस्वरूपमाह— **माहात्म्येति** ।। माहात्म्यज्ञानं [1]"सन्ध्ये सृष्टिराह हि' इत्यादिसूत्रोक्तरीत्या दिने दिने सवपिक्षितसुखकरस्वाप्नपदार्थस्रष्टृत्वसुषुप्तिदातृत्वजाग्रत्प्रवर्तकत्वरूपं यन्माहात्म्यं तज्ज्ञानपूर्व इत्यर्थः । स्वोपकारिपितृमात्रोरिवोक्तविधया स्वोपकर्तरि भगवति स्नेहोपोद्बलकत्वात् इदं ज्ञानमावश्यकम्। सुदृढः मरणेऽप्यचाल्यमानः । सर्वतोऽधिकः स्रक्चन्दनवनितादिविषयेभ्योऽप्यधिकः ।। ८५ ।।

**सङ्क**— भक्त्या मुक्तिर्भवतीति वक्तुं भक्तेः स्वरूपमुक्तम्— **माहात्म्येति** ।। ८५ ।।

**वरद**— एवं साधारणसाधनान्युक्त्वा असाधारणसाधनमाह— **माहात्म्येति** ।। **सर्वोत्तमभक्त्यैव** मुक्तिर्नान्यथेत्युक्ते का नाम भक्तिरित्यपेक्षायां भक्तिस्वरूपं निरूपयति— **माहात्म्येति** ।। सर्वोत्तमत्वज्ञानपूर्वकः सुदृढः कदाप्यनपगतः सर्वतः प्रियादप्यधिकः स्नेहः अधिका प्रीतिर्हरौ भक्तिरित्यर्थः । तथा च हरिभक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकः अन्तराय-सहस्रेणाप्यप्रतिबद्धः निरन्तरः प्रेमप्रवाह इत्युक्तं भवति ।। ८५ ।।

**जना**— माहात्म्यज्ञानपूर्वः माहत्म्यं जगत्सर्जनादिसुषुप्त्यादिदातृत्वं तज्ज्ञानपूर्वः । सुदृढः मरणेऽप्यचाल्यः। सर्वतः स्त्रीपुत्रादिभ्यः ।। ८५ ।।

**ताम्र**— ननु [2]"वैरेण यन्नृपतयः' इत्यादौ द्वेषस्यापि मोक्षहेतुत्वोक्तेः कथं गुणोद्रेकस्य मुमुक्षुण अवश्यं ज्ञेयत्वमित्यत आह— **माहात्म्येति** ।। भक्त्यादिसाधनेन ।। ८५ ।।

**जम्बु**— ननु 'वैरेण यन्नृपतय' इत्यादौ द्वेषस्यापि मोक्षहेतुत्वोक्तिः कथं गुणोद्रेकस्य मुमुक्षुणा अवश्यं ज्ञेयत्वमित्यत आह— **माहात्म्येति** ।। भेदादिकं ज्ञातमपि भक्त्यभावे न मोक्षमापादयतीत्यतः तल्लक्षणमाह— **माहात्म्येति** ।। माहात्म्यज्ञानपूर्वं माहात्म्यं जगत्सर्जनादि सुषुप्तिदातृत्वादि तस्य ज्ञानमेव पूर्वस्मिन् यस्य सः तथा । सुदृढः मरणकालेऽप्यचाल्यः। सर्वतः स्त्रीपुत्रादिभ्यः प्रियेभ्यः अधिकः स्नेहः अधिका प्रीतिर्हरौ भक्तिरित्यर्थः। उक्तं च सुधायां 'निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्यो अनेकगुणाधिकः अन्तरायसहस्रेणाप्यप्रतिबद्धः निरन्तरप्रेमप्रवाहो भक्तिः' इति सर्वतो अधिकः स्नेहः उपपादितः। बृहद्भाष्ये—

[3]"स एव भगवान् विष्णुः पुत्राद्वित्तात् तथात्मनः ।
अन्यस्मादपि सर्वस्मात् प्रेष्ठ एव स्वभावतः ।।

---

१. ब्र.सू. ३-२-१ । २. भा. ११-५-४९ । ३. बृ.भा. ३-५ अव्याकृतब्राह्मणम् ।

आत्मनोऽपि प्रियत्वं तु तेनैव कृतमञ्जसा ।
आत्मनो निरयायैव कुर्यात् कर्मापि नित्यशः ।।' इति ।

न चान्यथा भक्तिं विना साधनशतैरित्यर्थः। तदुक्तं बृहद्भाष्ये—

[1]"तुलापुरुषदानाद्यैः अश्वमेधादिभिर्मखैः ।
वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये ।।
गयाश्राद्धादिभिः पित्रे वेदपाठादिभिर्जपैः ।
तपोभिरुग्रैर्नियमैः यमैर्भूतदयादिभिः ।।
गुरुशुश्रूषणैस्सत्यैः धर्मैर्वर्णाश्रमोचितैः ।
ज्ञानाध्यानादिभिः सम्यक् उचितैर्जन्मजन्मनि ।।
न याति परमं श्रेयो विष्णुं सर्वेश्वरेश्वरम् ।
सर्वभावैरनाश्रित्य पुराणपुरुषोत्तमम् ।।' इति ।

भावो भक्तिः इति ***नारायणाध्वरीये*** ।। ८५ ।।

**[2]त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।**
**तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ।। ८६ ।।**

**वादि**— मुक्तिदो भगवानित्युक्तम् । तर्हि सर्वेषामपि जीवानां मुक्तिदः किम् ? नेति भावेन जीवत्रैविध्यमपि प्रमाणेनैव दर्शयति— **त्रिविधा इति** ।। ८६ ।।

**सङ्क**— ननूक्तसाधनैर्मोक्षो भवतीत्युक्तम् । स किं सर्वेषां जीवसङ्घानां साधारण्येन सम्भवति अथ वा केषाञ्चिदेवेत्याशङ्क्य न सर्वेषां साधारण्येन मोक्षः किन्तु केषाञ्चिदेवेति वक्तुं जीवसङ्घान् विभज्य दर्शयति— **त्रिविधा इत्यादिना** ।। तत्र के मुक्तियोग्या इत्यपेक्षायामाह— **तत्रेति** ।। नित्यसुखात्मकमुक्तियोग्या इत्यर्थः । मानुषाणां दानवानां च योग्यताप्रकारमाह— **मानुषेष्वित्यादिना** ।। अयमर्थः मानुषेषु त्रिविधा प्रोक्ताः तेषु उत्तमा देववन्मुक्तियोग्याः । मध्यमास्तु सदैव सुखदुःखसाम्यात्मकसंसृतियोग्याः । अधमा निरयायैव योग्याः । दानवास्तु नित्यदुःखात्मकान्धन्तमसि स्थातुं योग्याः ।। ८६-८७ ।।

**वरद**— ननूक्तसाधनसम्पत्तौ किं सर्वेषां जीवानां अविशेषेण मोक्षो भवत्युत कतिपयानामेवेत्याकाङ्क्षायां कतिपयानां योग्यानामेवेति वक्तुं जीवविभागमाह— **त्रिविधा इत्यादिना** ।। देवमानुषदानवा इति जीवसङ्घास्त्रिविधा

---

१. बृ.भा. ३-५ अव्याकृतब्राह्मणम्, पद्मपुराणे उ.खं. ७१- ९४-९७ । २. 'त्रिविधा जीवसङ्घा हि रजःसत्वतमोगुणाः । ...तामसा दुःखबहुला सदा तामसवृत्तयः ।। निर्दया निष्ठुरा लोके सदा द्वेषैकजीविनः । राक्षसाद्याः पिशाचान्ता तामसीं यान्ति वै गतिम् ।। राजसा मिश्रमतयः कर्तारः पुण्यपापयोः। पुण्यात्स्वर्गं प्राप्नुवन्ति क्वचित्पापाच्च यातनाम् ।। अत एते मन्दभाग्या आवर्तन्ते पुनःपुनः । सात्विका सात्विकीं वृत्तिमनुतिष्ठन्त आसते ।। ते चोर्ध्वं यान्ति विमला गुणापाये महौजसः। .... गुणकर्मानुरूपेण तेषां विष्णुर्महाप्रभुः। कर्माणि कारयत्यद्धा स्वस्वरूपाप्तये विभुः।।' इति स्कान्दे वैशाखमासमाहात्म्य/अ२०/ ३-१४ ) ।

इत्यर्थः । तत्र तेषु त्रिविधेषु देवा मुक्तियोग्याः । मानुषा अपि त्रिविधा उत्तमा मध्यमा अधमा इति । तत्रोत्तमानां देववन्मुक्ति-योग्यतेत्याह— **मानुषेष्विति** ।। ८६ ।।

**जना**— तत्र यः कोऽप्येतज्ज्ञानान्मुच्यते किमित्याशङ्कायां तद्योग्या एव मुच्यन्ते नेतरे इत्युत्तरमभिसन्धाय। अथवा योग्यानामेव साधनं भवतीति वक्तुं तद्योग्यानयोग्यान् वक्तुं जीवविभागमाह— **त्रिविधा इति** ।। धाप्रत्ययेन अवान्तरभेदोऽप्यस्तीति ज्ञापयति— **देवमानुषदानवाइति** ।। त्रैविध्यकथनं मानुषेष्वपि त्रैविध्यं ज्ञेयम् । मुक्तियोग्याः के इत्यतो मुक्तियोग्यानाह— **तत्रेति** ।। ८६ ।।

**ताम्र**— मोक्षश्च न सर्वेषां भवतीति भावेन अधिकारिप्रभेदमाह— **त्रिविधा इति** ।। अत्र देवशब्देन देवगन्धर्वान्ता गृह्यन्ते । इतरे मानुषोत्तमाः चशब्देन ।। ८६ ।।

**जम्बु**— ननु उक्तसम्पदा सर्वेषां जीवानां अविशेषेण मोक्षो भवत्युत कतिपयानामेवेत्यशङ्कायां कतिपयानां योग्यानामेवेति वक्तुं तद्योग्यायोग्यांश्च वक्तुं जीवविभागमाह— **त्रिविधा इत्यादिना** ।। धाप्रत्ययेनावान्तरभेदोऽस्तीति ज्ञायते । जीवसङ्घाः जीवानां समूहाः। देवाश्च मानुषाश्च दानवाश्च इति त्रिविधा इत्यर्थः। तत्र त्रिविधेषु जीवेषु देवा इति देवशब्देन ऋषिपितृगन्धर्वनृपाश्च ग्राह्याः। मानुषा अपि त्रिविधाः उत्तमा मध्यमा अधमाश्चेति । तत्रोत्तमाः देववन्मुक्तियोग्या इत्याह— **मानुषेष्विति** ।। देवाः मुक्तियोग्याः तथा देववदेव मानुषेषूत्तमाः मुक्तियोग्याः ।। ८६ ।।

**राम**— 'त्रिविधा...तमोलयाः' इत्यत्र देवमानुषदानवा इति त्रिविधाः । तुशब्दस्त्रिविधेष्वपि त्रित्वविभागवत्त्व-सूचकः । तत्र तेषु देवा अष्टविधाः । मानुषोत्तमाः ऋषिगन्धर्वाश्च मुक्तियोग्याः । मध्यमा मानुषा नित्यसंसारिणः । अधमा मानुषा निरयायैव । दानवास्तु दैत्यरक्षःपिशाचकाः तमोलयाः । तमोयोग्या इत्यर्थः । तदुक्तं एकादशतात्पर्ये

[1]"सन्तस्तु त्रिविधा प्रोक्ता उत्तमाधममध्यमाः ।
उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ।
अधमा मानुषोत्कृष्टा ते चापि त्रिविधा मता ।।' इति ।

आदिपदेन मनुष्यगन्धर्वा गृह्यन्ते । अत्रापि तुशब्दो अवान्तरत्रित्वविभागवत्वसूचकः । ते चापि मन्दमध्योच्चभेदिनो देवर्षिमानुषा अपि पुनर्मन्दमध्योच्चभेदिन इति मता इत्यर्थः । उक्तं च भाष्ये

[2]"मन्दमध्योच्चभेदेन त्रिधा विध्यधिकारिणः ।
तत्र मन्दा मनुष्येषु य उत्तमगणाः मताः' इति ।

अत्र गणा इत्यनेन वर्णाश्रमाचाररताः मनुष्याः मुक्तियोग्याः मन्दमध्योच्चभेदिन इति ज्ञायन्ते । अन्यथा तत्र मन्दा मनुष्योत्तमाः इत्यनेनैव पूर्तौ गणा इत्येतद्व्यर्थः स्यात् । 'देवास्तत्रोत्तमा मताः' इत्यत्र विद्यमानतत्रेत्यनेनैव देवा उत्तमा इति वक्तुं शक्यत्वात् पुनस्तत्रेत्यस्य किमित्यतो देवेष्वप्यष्टविधनामका नवकोटिदेवा उत्तमाधिकारिण एवेति वक्तुं पुनस्तत्रेत्युक्तमिति । एतद्विशेषसूचको हिशब्दः । उक्तं च तृतीयस्कन्धे [3]"देवसर्गश्चाष्टविधः विबुधाः पितरोऽसुरा' इत्यादिना तत्तात्पर्ये च प्रोक्ता 'अष्टविधा देवा विबुधास्सर्व एव तु' इत्यादिना । विबुधास्सर्वे

१. भा.ता. ११-३-२३ । २. ब्र.सू.भा. १-१-१ ।

उत्तमाधिकारिण एव । न त्वन्येषामिव मध्यममाधमत्वं नास्तीति सूचनाय तुशब्दः । तदुक्तं पञ्चमतात्पर्ये

[1]"प्रजापाश्च तथा देवा महाधीकारिण स्मृताः ।
ऋष्यशीतिस्तथा सप्तपितरोऽप्सरसां शतम् ।।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ताः अनधीकीरिणः परे ।।' इति ।

अस्यायमर्थः प्रजापश्च देवा विबुधाः अष्टविधाः स्वस्वजातिषु तृतीयतात्पर्योक्तसङ्ख्याविशिष्टा उत्तमोत्तमाधिकारिण। मरीच्याद्याः शतं ऋषयः । चशब्दात् मनुष्यगन्धर्वोत्तमाश्च गृह्यन्ते । मध्यमोत्तमाधिकारिण इत्यर्थः । तथेत्यनेन मनुष्योत्तमाः क्षितिपोत्तमाः शतं च अधमोत्तमाधिकारिण इति त्रिविधा 'महाधीकारिणः' इति स्मृत्युक्ताः । पितृसप्तकं अप्सरसां शतं देवगन्धर्वशतं असुरसिद्धविद्याधरयक्षरक्षचारणभूतप्रेतपिशाचकिन्नरादिषु पृथक् पृथक् विंशतिश्चोत्तममध्यमाधिकारिणः 'ऋष्यशीतिस्तथा' इत्यंशेन मनुष्यगन्धर्वाः मध्यममध्यमाधिकारिणः राज्ञां शतम्। वर्णाश्रमोचिताचाररता मनुष्योत्तमाः अधममध्यमाधिकारिण इति । (तदन्ये पितरो असुरदेवगन्धर्वाः अष्टशतं अप्सरसः सिद्धविद्याधरयक्षरक्षचारणभूतप्रेतपिशाचकिन्नरादयः उत्तमाधिकारिणः अशीत्युत्तरशतोनशतकोटय ऋषयः मनुष्यगन्धर्वाश्च मध्यमाधमाधिकारिणः । राज्ञां अष्टशतं वर्णाश्रमोचिताचारमनुष्योत्तमाः अधमाधमाधिकारिणः) तदेतदुक्तम् ।

[2]"देवसर्गश्चाष्टविधो विबुधाः पितरो सुराः ।
गन्धर्वाप्सरसः सिद्धाः यक्षरक्षांसि चारणाः ।
भूतप्रेतपिशाचाश्च विद्याध्राश्चारणादय' इति तृतीयस्कन्धे ।

तत्तात्पर्ये च ।

'प्रोक्ता अष्टविधा देवाः विबुधास्सर्व एव च ।
पितृणां शतमेवात्र असुरास्त्रिंशदेव च ।
गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।
सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु ।
शतं सिद्धास्तथान्यासु सप्ततिस्सर्वजातिषु ।।' इति ।

अत्रायं विवेकः । 'सर्वजातिषु' इति तृतीयतात्पर्योक्तत्रिंशदन्यासु जातिष्विति पञ्चमतात्पर्योक्त्या चाष्टविधत्वोपेता देवा अपि स्वजातिषु मन्दमध्योच्चभेदिनः तेषु विबुधपदोदिताः उत्तमाधिकारिणः एव । ऋषयो मनुष्यगन्धर्वाः मध्यमाधिकारिणः । तेऽपि मन्दमध्योच्चभेदिनः । क्षितिपाः मनुष्योत्तमाश्च अधमाधिकारिणः । तेऽपि ब्राह्मणादि– वर्णाश्रमोपेताः प्रतिलोमानुलोमभेदेन षोडशजातीयाः । तत्प्रभेदेन चतुष्षष्टिजातीया भवन्ति । तेषु स्वजातिषु क्रमेण गुणाधिका भवन्ति । सर्वेष्वपि ब्राह्मणा गुणाधिकाः । तेष्वपि ब्रह्मचारिगृहस्थवानप्रस्थसन्यासिनः तेषु कुटीचकबहूदकहंसपरमहंसभेदेन क्रमाद् गुणाधिकाः । तथा च क्षितिपेषु सर्ववर्णाश्रमोपेतेषु मनुष्योत्तमेष्वपि मन्दमध्योच्चभेदिन इति ज्ञातव्यम् । एतदभिप्रायेणैव भाष्येऽपि 'उत्तमाः गणा' इति गणपदप्रयोग इति ज्ञायते । उक्तं च द्वितीयस्कन्धे

---

१. भा.ता. ५-६-५ । २. भा. ३-११-२७ ।

[1]"किरातहूणान्ध्रपुलिंदपुल्कसाः आभीरकङ्कायवनाशकादयः ।
येऽन्ये च पापाः यदपाश्रयाश्रयात् शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः।।'

एवं जङ्गमा अपि कीटपशुपक्षिमृगादिभेदेन बहुविधाः मुक्तियोग्याः तेऽपि मन्दमध्योच्चभेदिनः । स्थावरा अपि वृक्षस्तम्बलतादिभेदेन बहुविधाः मुक्तियोग्याः । तेऽपि मन्दमध्योच्चभेदिनः ज्ञेयम् । उक्तं च तृतीयतात्पर्ये ।

[2]"अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः ।
तिरश्चान्तावदेतस्माद्गण्यन्ते शास्त्रवेदिभिः ।।
स्थास्नुभिर्नियमात् मुख्या स्थितेर्गतिरवाप्यते ।
प्रायः परोपकर्तृत्वात्ते मुख्यस्त्रोतसः स्मृताः ।।' इति ।

एवमेतावता प्रबन्धेन मूले त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः । तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा । इत्याशङ्क्याभिप्रायो विवृतः ।। ८६ ।।

**मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।**
**अधमा निरयायैव दानवास्तु तमोलयाः ।। ८७ ।।**

**वादि**— तमस्येव तामिस्त्रः अन्धतामिस्त्र इत्यवान्तरभेदोऽस्ति । तत्रातिनिबिडतमो यत्र सोऽन्धतामिस्त्र इत्युच्यते। ततः ईषत्तमो यत्र स तामिस्त्र इत्युच्यते । तस्यैव निर्गतमयनं उद्गमनं यस्मादिति व्युत्पत्त्या निरय इति नाम,। तत्र मनुष्याधमाः तेभ्योऽप्यधमाः केचन दानवाश्च तामिस्त्राख्ये निरये पतन्ति । अधमाधमाः कल्याद्यास्तु अन्धतामिस्त्रे पतन्तीति भावेनाह— **अधमा इति** ।। अत एव दानवास्त्विति तुशब्दः । 'तामिस्त्रान्धा-दिकाख्ये तमसि सुबहुलं दुःखयस्यन्यथाज्ञान्' इति प्राचां वाचश्च । अन्यथा पापफलस्य निरयस्य पापकारिभि-रुत्तममध्यमजीवैरपि गम्यत्वात् अधमा निरयायैवेति न घटत इति ज्ञेयम् । अधमाः मनुष्याधमाः ।। ८७ ।।

**वरद**— मध्यमानां योग्यतामाह— **मध्यमा इति** ।। इतरेषां संसारयोग्यत्वेऽपि कदाचित् तन्नाशोऽस्ति । मध्यमानां तु कदापि संसारनाशो नास्तीति विशेषादितरेभ्यो भेद इत्याह— **सृतियोग्या सदैव इति** ।। अधममानुषाणां योग्यतामाह— **अधमा इति** ।। निरयाय नित्यनिरयाय। दानवानां योग्यतामाह— **दानवास्त्विति** ।। तु शब्देन तमस्यपि विशेषोऽस्तीति सूचितम्। तमः अन्धन्तमः आलयो गृहं येषां ते तथा ।। ८७ ।।

**जना**— तत्र तेषु त्रिविधेषु सृतियोग्यानाह— **मध्यमा इति** ।। सदैव सृतियोग्याः संसारयोग्या हि । निरयतमोयोग्यानाह— **अधमाइति** ।। अधमा मानुषा निरयायैव तामिस्त्राख्यनरकायैव गच्छंन्ति दानवाः असुराः तमस्येव लीयन्ते लीना भवन्तीति तमोलयाः। तम अन्धतामिस्त्रं लय आलयो येषामिति वा ।। ८७ ।।

**ताम्र**—

[3]"तमस्सञ्ज्ञं च नरकं नित्यं विविधमीरितम् ।
तामिस्त्रमन्धतामिस्त्रं तत्रान्धं त्रिविधं स्मृतम् ।।
ऊर्ध्वमध्येऽधरं चापि श्रवणादेव मारकम् ।।' इति

१. भा. २-४-१८ । २. भा.ता. ३-११-२३ । ३. सन्यासपद्धतिः १०९श्लोकः ।

विष्णुतीर्थार्यवचनात् अधमा निरयायैव इत्यस्य मर्त्याधमाः नित्यतामिस्राख्यनिरयायैव दानवाः दैत्यरक्षःपिशाचकास्तु तम एव । त्रिविधतमसि लयः स्वरूपविनाशः येषां ते तथा । यद्वा हतशब्दवत् लयशब्दो तमःपरः। 'मुक्तिर्नित्या तमश्चैव' इत्यत्र तमश्शब्देन नित्यनरकद्वयं विवक्षितम् ।। ८७ ।।

**जम्बु**— ये मध्यमाः मानुषाः ते सदैव सृतियोग्याः संसारयोग्या हि । इतरेषां संसारयोग्यत्वे कदाचिन्नाशोऽस्ति मध्यमानां तु कदापि संसारनाशो नास्तीति विशेषात्— **सदैवेति** ।। तदुक्तम्—

'नित्यसंसारिणः सर्वे सृष्टौ सृष्टौ भवन्ति च ।
न तेषां संसृतेर्नाशः क्वचित्क्वापि भविष्यति ।।' इति ।

अधमाः मनुष्याधमाः निरयायैव नित्यनरकायैव भवन्ति । तदुक्तं भाष्ये—

[1]"रौरवोऽथ महांश्चैव वह्निर्वैतरिणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।।
तामिस्रं चान्धतमिस्रं द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्तप्रधानानि गरीयश्चोत्तरोत्तरम् ।।
एतानि क्रमशो गत्वैवारोहोऽथावरोहणम् ।।' इति ।

दानवास्तु दानवशब्देन दैत्यरक्षः पिशाचका ग्राह्याः। तमोलयाः तमसि लयं लीना भवन्तीति तथा तमः अन्धन्तमः लयः आलयो येषामिति वा । चशब्देन गमनस्यापि विशेषोऽस्तीति सूचयितुं । तदुक्तम्—

[2]"महातमस्त्रिधा प्रोक्तं ऊर्ध्वं मध्यं तथाधरम् ।
श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ।
तस्मान्न विस्तरेणैव कथ्यते राजसत्तम ।।' इति **नारायणाध्वरीये** ।। ८७ ।।

**राम**— इदानीं '**मध्यमा.....तमोलयाः**' इत्यंशस्य विवरणं क्रियते । तथा हि । अत्र हि ये मनुष्येषु मध्यमाः ते सदा सृतियोग्या एव तुशब्दस्तेष्वप्यवान्तरत्रित्वविभागवत्वसूचकः । हिशब्दः प्रसिद्धार्थकः । तथा च मानुषमध्यमाः नित्यसंसारिणः वर्णाश्रमोचिताचारयुताः प्रतिलोमानुलोमभेदेन चतुष्षष्टिजातियुक्ता भवन्ति ।। ते सर्वे मन्दमध्योच्चभेदिनः । 'त्रिदिवनिरयभूगोचरान्' इत्युक्तेः । एवं मध्यमस्थावरजङ्गमा अपि नित्यसंसारिणः । तेऽपि त्रिदिवनिरयभूगोचराः। तेऽपि पशुपक्षिमृगकीटादिभेदेन वृक्षस्तम्बलतागुल्मादिभेदेन च बहुविधाः । मानुषाधमाः नियमेन निरयायैव । स्थावरजङ्गमाधमा अपि नियमेन निरययोग्याः । दानवास्तु तमोयोग्याः । अत्रापि तुशब्दस्त्रित्वविभागसूचकः । 'ऊर्ध्वं मध्यं तथाधरम्' इति तमस्यपि स्थानविशेषप्राप्तियोग्या इत्यर्थः । 'महातमस्त्रिधा प्रोक्तं ऊर्ध्वमध्यं तथाधरम्' इत्युक्तेः ।

[3]'नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः।
दैत्यभृत्याः महादैत्याः मुख्यतामसतामसाः।।'

इति गीतातात्पर्ये ।। ८७ ।।

---

१. ब्र.सू.भा. ३-१-१६ । २. ब्र.सू.भा. ३-१-२३ । ३. गी.ता. १८-४१ ।

**मुक्तिर्नित्या तमश्चैव नाऽवृत्तिः पुनरेतयोः ।**
**देवानां निरयो नास्ति तमश्चापि कथञ्चन ।। ८८ ।।**

**वादि**— स्वर्गादिरिव मुक्तिस्तमश्चानित्ये किम्? नेत्याह— **मुक्तिरिति** ।। मध्यमजीवानां स्वरूपभूत-सुखदुःखात्मकनरकानुभवस्य नित्यत्वेऽपि 'त्रिदिवनिरयभूगोचरान्' इत्यनित्यलोकेष्वेव सञ्चारोक्त्या लोकनित्यत्वाभावात् द्वयोरेव लोकयोर्नित्यत्वोक्तिरिति ज्ञेयम् ।। ८८ ।।

**सङ्क**— नन्वेवं मुक्तानां मुक्तिसंसृतिनिरयान्धतमसां एकपङ्क्तिगणितत्वेन किमेकप्रकारतेत्यत आह— **मुक्तिरिति** ।। एतच्च नित्यत्वं नोपचारत इत्याह— **नावृत्तिरिति** ।। ननु देवादीनां मुक्त्यादिप्राप्त्यानन्तरं पुनरावृत्तिर्मास्तु । तथापि तत्प्राप्तेः पूर्वमेव कारणविशेषेण मुक्तियोग्यानामपि देवानां नरकान्धतमः प्राप्तिः। दैत्यानामन्धतमो-योग्यानामपि मुक्तिप्राप्तिः । मध्यममनुष्याणां नित्यसंसृतियोग्यानामपि मुक्तिप्राप्तिः अन्धतमः प्राप्तिर्वा भवेत्किम् इति मन्दाशङ्कां परिहरति— **देवानामित्यादिना** ।। योग्यतायाः प्रबलत्वेन कारणविशेषादपि देवादीनां नान्यतरगतिर्भवतीति भावः ।। ८८-८९ ।।

**वरद**— ननु मुक्तानां तमोगतानां पुनः संसारप्राप्तौ नित्यसंसारिणां एतेषां च को विशेष इत्युभयेषामप्या-वृत्तिर्नास्तीत्याह— **मुक्तिरिति** ।। एतयोः मुक्तितमसोः सकाशात्संसारे आवृत्तिः आगमनं नास्ति । तयोर्गत्यो-र्नित्यत्वादित्यर्थः । न चैतेषां योग्यतायाः व्यत्यासोऽस्तीत्याह— **देवानामिति** ।। देवानां मनुष्योत्तमानां मुक्तिरेव नतु निरयस्तमश्चेति ।। ८८ ।।

**जना**— ननु मुक्तितमसोर्नाशानन्तरं एतेषां कुत्रावस्थानमित्यत आह— **मुक्तिरिति** ।। तमश्च नित्यमेव एतयोर्मुक्तितमसोः सकाशात् पुनरावृत्तिर्न 'न स पुनरावर्तते वन्नमनन्तं' इति श्रुतेः— **देवनःमिति** ।। कथञ्चन महता पातकेनापि ।। ८८ ।।

**ताम्र**— ननु [१]"केचिदत्रैव मुच्यन्ते' इत्यादेः मुक्तिस्थानस्य भूम्यादेः नाशात् तमसोऽपि नाशात् कथं नित्यत्वमित्यत. उक्तम्— **नावृत्तिरिति** ।। संसारं प्रति आवृत्त्यभाव एव नित्यत्वं विवक्षितमिति भावः । अमृतायोग्यराहोः अमृतप्राप्तिवत् कदाचिद्देवानां तमः तामसानां च मुक्तिर्भवति किं नेत्याह— **देवानामिति** ।। अत्र देवशब्दो मोक्षयोग्यमात्रपरः। निरयः तामिस्रम् । यद्वा देवशब्दः उत्तमाधिकारिपरः नित्यशब्देन नित्यनिरय उच्यते । असुरशब्दस्तु तमोयोग्यमात्रपरः। ।। ८८-८९ ।।

**जम्बु**— ननु मुक्तानां तमोगतानां पुनः संसारप्राप्तौ च नित्यसंसारिणां तेषां च को विशेष इत्यतः उभयेषामपि आवृत्तिर्नास्तीत्याह— **मुक्तिरिति** ।। मुक्तिर्नित्या तमश्च नित्यनरकद्वयं विवक्षितम् । ननु **'केचिदत्रैव मुच्यन्ते'** इत्यादेः मुक्तिस्थानस्य भूम्यादेः नाशात् तमसोऽपि नाशात् कथं नित्यत्वमित्यत आह— **नावृत्तिरिति** ।। एतया मुक्तितमसोस्सकाशाद् आवृत्तिः संसारे पुनः पुनरागमनं नास्ति । संसारबीजस्य लिङ्गशरीरस्य नष्टत्वादिति भावः। अमृतायोग्यराहोः अमृतप्राप्तिवत् कदाचित् देवानां तमः तामसानां मुक्तिर्भवतीति किं नेत्याह— **देवानामिति**।।

---

१. ब्र.सू.भा. ४-४-१९ ।

विष्णुतीर्थार्यवचनात् अधमा निरयायैव इत्यस्य मर्त्याधमाः नित्यतामिस्राख्यनिरयायैव दानवाः दैत्यरक्षःपिशाचकास्तु तम एव । त्रिविधतमसि लयः स्वरूपविनाशः येषां ते तथा । यद्वा हतशब्दवत् लयशब्दो तमःपरः। 'मुक्तिर्नित्या तमश्चैव' इत्यत्र तमश्शब्देन नित्यनरकद्वयं विवक्षितम् ।। ८७ ।।

**जम्बु**— ये मध्यमाः मानुषाः ते सदैव सृतियोग्याः संसारयोग्या हि । इतरेषां संसारयोग्यत्वे कदाचिन्नाशोऽस्ति मध्यमानां तु कदापि संसारनाशो नास्तीति विशेषात्— **सदैवेति** ।। तदुक्तम्—

'नित्यसंसारिणः सर्वे सृष्टौ सृष्टौ भवन्ति च ।
न तेषां संसृतेर्नाशः क्वचित्क्वापि भविष्यति ।।' इति ।

अधमाः मनुष्याधमाः निरयायैव नित्यनरकायैव भवन्ति । तदुक्तं भाष्ये—

[१]"रौरवोऽथ महांश्चैव वह्निर्वैतरिणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।।
तामिस्रं चान्धतमिस्रं द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्तप्रधानानि गरीयश्चोत्तरोत्तरम् ।।
एतानि क्रमशो गत्वैवारोहोऽथावरोहणम् ।।' इति ।

दानवास्तु दानवशब्देन दैत्यरक्षः पिशाचका ग्राह्याः। तमोलयाः तमसि लयं लीना भवन्तीति तथा तमः अन्धन्तमः लयः आलयो येषामिति वा । चशब्देन गमनस्यापि विशेषोऽस्तीति सूचयितुं । तदुक्तम्—

[२]"महातमस्त्रिधा प्रोक्तं ऊर्ध्वं मध्यं तथाधरम् ।
श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ।
तस्मान्न विस्तरेणैव कथ्यते राजसत्तम ।।' इति **नारायणाध्वरीये** ।। ८७ ।।

**राम**— इदानीं '**मध्यमा.....तमोलयाः**' इत्यंशस्य विवरणं क्रियते । तथा हि । अत्र हि ये मनुष्येषु मध्यमाः ते सदा सृतियोग्या एव तुशब्दस्तेष्वप्यवान्तरत्रित्वविभागवत्वसूचकः । हिशब्दः प्रसिद्धार्थकः । तथा च मानुषमध्यमाः नित्यसंसारिणः वर्णाश्रमोचिताचारयुताः प्रतिलोमानुलोमभेदेन चतुष्षष्टिजातियुक्ता भवन्ति ।। ते सर्वे मन्दमध्योच्चभेदिनः । 'त्रिदिवनिरयभूगोचरान्' इत्युक्तेः । एवं मध्यमस्थावरजङ्गमा अपि नित्यसंसारिणः । तेऽपि त्रिदिवनिरयभूगोचराः। तेऽपि पशुपक्षिमृगकीटादिभेदेन वृक्षस्तम्बलतागुल्मादिभेदेन च बहुविधाः । मानुषाधमाः नियमेन निरयायैव । स्थावरजङ्गमाधमा अपि नियमेन निरययोग्याः । दानवास्तु तमोयोग्याः । अत्रापि तुशब्दस्त्रित्वविभागसूचकः । 'ऊर्ध्वं मध्यं तथाधरम्' इति तमस्यपि स्थानविशेषप्राप्तियोग्या इत्यर्थः । 'महातमस्त्रिधा प्रोक्तं ऊर्ध्वमध्यं तथाधरम्' इत्युक्तेः ।

[३]'नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः।
दैत्यभृत्याः महादैत्याः मुख्यतामसतामसाः।।'

इति गीतातात्पर्ये ।। ८७ ।।

---

१. ब्र.सू.भा. ३-१-१६ । २. ब्र.सू.भा. ३-१-२३ । ३. गी.ता. १८-४१ ।

**मुक्तिर्नित्या तमश्चैव नाऽवृत्तिः पुनरेतयोः ।**
**देवानां निरयो नास्ति तमश्चापि कथञ्चन ।। ८८ ।।**

**वादि**— स्वर्गादिरिव मुक्तिस्तमश्चानित्ये किम्? नेत्याह— **मुक्तिरिति** ।। मध्यमजीवानां स्वरूपभूत-सुखदुःखात्मकनरकानुभवस्य नित्यत्वेऽपि 'त्रिदिवनिरयभूगोचरान्' इत्यनित्यलोकेष्वेव सञ्चारोक्त्या लोकनित्यत्वाभावात् द्वयोरेव लोकयोर्नित्यत्वोक्तिरिति ज्ञेयम् ।। ८८ ।।

**सङ्क**— नन्वेवं मुक्तानां मुक्तिसंसृतिनिरयान्धतमसां एकपङ्क्तिगणितत्वेन किमेकप्रकारतेत्यत आह— **मुक्तिरिति** ।। एतच्च नित्यत्वं नोपचारत इत्याह— **नावृत्तिरिति** ।। ननु देवादीनां मुक्त्यादिप्राप्त्यानन्तरं पुनरावृत्तिर्मास्तु । तथापि तत्प्राप्तेः पूर्वमेव कारणविशेषेण मुक्तियोग्यानामपि देवानां नरकान्धतमः प्राप्तिः। दैत्यानामन्धतमो-योग्यानामपि मुक्तिप्राप्तिः । मध्यममनुष्याणां नित्यसंसृतियोग्यानामपि मुक्तिप्राप्तिः अन्धतमः प्राप्तिर्वा भवेत्किम् इति मन्दाशङ्कां परिहरति— **देवानामित्यादिना** ।। योग्यतायाः प्रबलत्वेन कारणविशेषादपि देवादीनां नान्यतरगतिर्भवतीति भावः ।। ८८-८९ ।।

**वरद**— ननु मुक्तानां तमोगतानां पुनः संसारप्राप्तौ नित्यसंसारिणां एतेषां च को विशेष इत्युभयेषामप्या-वृत्तिर्नास्तीत्याह— **मुक्तिरिति** ।। एतयोः मुक्तितमसोः सकाशात्संसारे आवृत्तिः आगमनं नास्ति । तयोर्गत्यो-र्नित्यत्वादित्यर्थः । न चैतेषां योग्यतायाः व्यत्यासोऽस्तीत्याह— **देवानामिति** ।। देवानां मनुष्योत्तमानां मुक्तिरेव नतु निरयस्तमश्चेति ।। ८८ ।।

**जना**— ननु मुक्तितमसोर्नाशानन्तरं एतेषां कुत्रावस्थानमित्यत आह— **मुक्तिरिति** ।। तमश्च नित्यमेव एतयोर्मुक्तितमसोः सकाशात् पुनरावृत्तिर्न 'न स पुनरावर्तते वव्रमनन्तं' इति श्रुतेः— **देवनामिति** ।। कथञ्चन महता पातकेनापि ।। ८८ ।।

**ताम्र**— ननु "केचिदत्रैव मुच्यन्ते'[१] इत्यादेः मुक्तिस्थानस्य भूम्यादेः नाशात् तमसोऽपि नाशात् कथं नित्यत्वमित्यत. उक्तम्— **नावृत्तिरिति** ।। संसारं प्रति आवृत्त्यभाव एव नित्यत्वं विवक्षितमिति भावः । अमृतायोग्यराहोः अमृतप्राप्तिवत् कदाचिद्देवानां तमः तामसानां च मुक्तिर्भवति किं नेत्याह— **देवानामिति** ।। अत्र देवशब्दो मोक्षयोग्यमात्रपरः। निरयः तामिस्रम् । यद्वा देवशब्दः उत्तमाधिकारिपरः नित्यशब्देन नित्यनिरय उच्यते । असुरशब्दस्तु तमोयोग्यमात्रपरः। ।। ८८-८९ ।।

**जम्बु**— ननु मुक्तानां तमोगतानां पुनः संसारप्राप्तौ च नित्यसंसारिणां तेषां च को विशेष इत्यतः उभयेषामपि आवृत्तिर्नास्तीत्याह— **मुक्तिरिति** ।। मुक्तिर्नित्या तमश्च नित्यनरकद्वयं विवक्षितम् । ननु 'केचिदत्रैव मुच्यन्ते' इत्यादेः मुक्तिस्थानस्य भूम्यादेः नाशात् तमसोऽपि नाशात् कथं नित्यत्वमित्यत आह— **नावृत्तिरिति** ।। एतया मुक्तितमसोस्सकाशाद् आवृत्तिः संसारे पुनः पुनरागमनं नास्ति । संसारबीजस्य लिङ्गशरीरस्य नष्टत्वादिति भावः। अमृतायोग्यराहोः अमृतप्राप्तिवत् कदाचित् देवानां तमः तामसानां मुक्तिर्भवतीति किं नेत्याह— **देवानामिति**।।

---

१. ब्र.सू.भा. ४-४-१९ ।

अत्र देवशब्दो मोक्षयोग्यमात्रपरः। निरयस्तामिस्रम्। यद्वा देवशब्द उत्तमाधिकारिमात्रपरः। निरयशब्देन नित्यनिरय उच्यते। कथञ्चन महता पातकेनापि निरयो नास्ति। तमश्च नास्ति। तदुक्तं अनुव्याख्याने—

[1]"तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः।
मानुषोत्तममारभ्य देवास्तु निरयं विना॥
असुरास्तु विना मुक्तिं तमोन्धमपि चाप्नुयुः॥' इति।

अस्यार्थः सुधायामुक्तः 'मनुष्योत्तमाः तावत् निरयमानुष्यस्वर्गमुक्तीः प्राप्नुवन्ति। देवाश्च मानुष्यस्वर्गमुक्तीः। असुराश्च मानुषस्वर्गनिरयान्धतमसानि' यान्ति। एतच्च द्वितीयाध्याये सम्यक् प्रपञ्चयिष्यामः। अन्ये तु तेषां योग्यताव्यत्यासो नास्तीत्याह— **देवानामिति**॥ देवानां मनुष्योत्तमान्तानां मुक्तिरेव न तु नित्यनिरयः तमश्च तथा असुराणां मनुष्याधमान्तानां मुक्तिः कथञ्चिदपि नास्ति। मध्यमानां स्वर्गनरकभूप्राप्तिरूपसंसार एव न तु तमः मुक्तिश्चेत्यर्थः।' इत्याहुः। असुराणामिति देवानां यथा नरकादिर्नास्ति तथा दैत्यानां मुक्तिर्नास्तीति दृष्टान्ते तथाशब्दः। अथवा मुक्त्यभावतमःप्राप्त्योः समुच्चये। कदाचित्कस्मिंश्चित्काले केनचिदुपायेन क्वचिद्देशे न भवतीति ***जनार्दनभट्टीये***॥ ८८॥

**राम**— 'मुक्तिर्नित्या तमश्चैव नावृत्तिः पुनरेतयोः' इत्यत्र मुक्तिशब्देन मुक्त्यवस्वस्थायां मुक्तिमतो जीवसङ्घस्य च ग्रहणम्। तथा तमः शब्देन स्वरूपदुःखाभिव्यक्तिलक्षणावस्थायाः तद्वतः कल्यादिजीवसङ्घस्य च ग्रहणम्। तथा चैतयोः जीवसङ्घयोः कर्मभूमौ पुनः जननादिकं नास्तीत्यर्थः। तदुक्तं भागवते। [2]"एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग॥' इति। तत्तात्पर्ये च —

[2]"....... एतां गतिं गतो नेह विषज्जते।
वासुदेवाश्रिता देवाः ब्रह्माद्या मुक्तबन्धनाः॥
भेददृष्ट्यभिमानेन चावृत्तिं नैव यान्ति ते' इति॥
'ततः पतत्यन्धो यस्मादुत्थानं नैव कुत्रचित्।
भिन्नलिङ्गास्तमस्यन्धे पुनरावृत्तिवर्जिते॥
अनाद्यनन्ते तस्मिन् पञ्चकष्टेऽतिदारुणे।
तमोऽन्धं याति नैकोपि कदापि बहिराव्रजेत्॥' इत्यादि॥ ८८॥

**नासुराणां तथा मुक्तिः कदाचित् केनचित् क्वचित्।**
**मानुषाणां मध्यमानां नैवैतद्द्वयमाप्यते॥ ८९॥**

**वरद**— तथा असुराणां मनुष्याधमान्तानां मुक्तिः कदाचित् काले केनचित् साधनेन क्वचिदपि देशे न भवति। तथा मध्यममानुषाणां नित्यं स्वर्गनरकमर्त्यप्राप्तिरूपः संसार एव। न तु एतद्द्वयं मुक्तितमोलक्षणमाप्यते प्राप्यत इत्यर्थः॥ ८९॥

---

१. अनु. ३-४- १६७५-१६७६, फलश्रुत्यधिकरणम्। २. भा. २-३-३५।

**जना**— दैत्यानां पुण्येन कर्मणा स्वर्गवत् मुक्तिर्भविष्यति किमिति आह— **नेति** ।। देवानां यथा नरकादि नास्ति तथा दैत्यानां मुक्तिर्नास्तीति दृष्टान्ते तथाशब्द:। अथवा मुक्त्यभावतम:प्राप्त्यो: समुच्चये कदाचित् कस्मिंश्चित् काले केनचिदुपायेन क्वाचिद्देशे न भवति । ननु तर्हि मध्यमानां का गतिरित्यत आह— **मानुषाणामिति**।। एतद्द्वयं मुक्तिस्तम इति द्वयम् । मानुषाणामिति षष्ठी तृतीयार्थे । स्वर्गनिरयभूगोचरा इत्यर्थ: ।। ८९ ।।

**जम्बु**— ननु तर्हि मध्यमानां का गतिरित्यत आह— **मनुष्याणामिति** ।। मनुष्यमध्यमानां नित्यस्वर्गनरक-मर्त्यप्राप्तिरूप: संसार एव । एतद्द्वयं मुक्तितमोलक्षणम् । नावाप्यते न प्राप्यते । मानुषाणामिति षष्ठी तृतीयार्थे ।। ८९ ।।

**असुराणां तम:प्राप्तिस्तदा नियमतो भवेत् ।**
**यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत् परम् ।। ९० ।।**

**वादि**— नन्वनन्तजीवेष्वेते असुरा: एतेषां तम:, एते तु देवा: एतेषां मुक्तिरिति केनोपायेन कदा निर्णेतुं शक्यत इत्यत आह— **असुराणामिति** ।। ज्ञानिसद्भावेऽपि यदा परमुत्तमं तत् नारायणाख्यं वस्तु ज्ञानिषु द्वेषात् ज्ञाने अविश्वासात् हरौ प्रद्वेषाच्च नैव गृह्णन्ति । ज्ञानिमुखात् श्रुत्वा स्वहृदि नैवोपाददते । "ग्रह उपादान" इति धातु:। तदा ते असुरा: तेषां तम इति निर्णेतुं शक्यते । सत्समागमाभावात् उत्तमानामपि कदाचिद्धरि-ज्ञानाभावसम्भवाज्ज्ञानिसद्भाव इत्युक्तम् ।। ९० ।।

**सङ्क**— ननूक्तनियम एवास्तु । तथाप्यसुराणां कदा तम:प्राप्तिर्भवेत् देवानां कदा मुक्तिर्भवेत् तत्राह— **असुराणामित्यादिना** ।। षण्णवत्यङ्गुलत्वादिलक्षणलक्षितज्ञानिसद्भावेऽपि तत्परं सर्वोत्तमं ब्रह्म न गृह्णन्ति । तदा तेषामन्धन्तम:प्राप्तिर्भवेत् । देवानां तु स्वयोग्ययोपासनया प्रसादितविष्णुतन्वा मुक्तिप्रदानयोग्यतया हरिर्यदा प्रत्यक्षगो भवति तदा तेषां मुक्तिर्भवेदित्यर्थ: ।। ९०-९१ ।।

**वरद**— ननु तमोयोग्यानां तमो मुक्तियोग्यानां मुक्तिश्च कदा भवतीत्यपेक्षायामाह— **असुराणामिति** ।। यदा ज्ञानिसद्भावे षण्णवत्यङ्गुलादिलक्षणलक्षितस्य ज्ञानिन: सद्भावे सान्निध्ये सत्यपि तत्परं सर्वोत्तमं ब्रह्म नैव गृह्णन्ति । स्वरूपद्वेषस्याभिव्यक्तत्वात् । तदा असुराणां नियमत: तमप्राप्तिर्भवेत् । सम्पूर्णस्य स्वरूपद्वेषस्याविर्भावे तमप्राप्तिर्भवतीति भाव: ।। ९० ।।

**जना**— ननु उक्तनियम एवास्तु तथाप्यसुराणां तम: प्राप्ति: कदा स्यादित्यत आह— **असुराणामिति** ।। ज्ञानिसद्भावे द्वात्रिंशल्लक्षणादिलक्षणलक्षितज्ञानिन: । उपदेशकस्य सद्भावे परं सर्वोत्तमं तद् ब्रह्म न गृह्णन्ति तदा तेषां असुराणां तम: प्राप्ति: नियमेन भवेत् । तदनन्तरं सञ्चितकर्माकरणं तद्भोग: प्रारब्धस्यैव भोग इति ज्ञेयम् ।। ९० ।।

**ताम्र**— असुराणां तम: देवानां मुक्तिश्च इत्युक्तम्। तत् कस्मिन् काले नियतमित्यत आह— **असुराणामिति**।। ज्ञानिसद्भावे तस्मिंश्च उपदिशत्यपि । तद्विरोधिनि सत्त्वबुद्ध्या परं विलक्षणं ब्रह्म यदा गृह्णन्ति तदा नियमत: तम:प्राप्तिर्भवेदित्यर्थ:। यदा तदा इत्येतावता पूर्तावपि ज्ञानिनो मोक्षनियमवता अत्रापि अप्रस्तुतप्रतिबन्धनियमं

सूचयति । यथोक्तम्—

[1]'बोधके विद्यमानेऽपि ये विदुर्न परं हरिम् ।
तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम् ।।'
'सम्यगाचार्यवचनं अविज्ञाय विरोधिनि ।
सत्त्वबुद्धिं यतः कुर्युः अतस्ते अधिकपापिनः ।।' इति बृहद्भाष्ये ।। ९० ।।

**जम्बु**— ननु उक्तनियम एवास्तु तथापि असुराणां तमःप्राप्तिनियमः कदा स्यादित्यत आह— **असुराणामिति** ।। यदा ज्ञानिसद्भावे षण्णवत्यङ्गुलादिद्वात्रिंशल्लक्षणलक्षितज्ञानिनः उपदेशकस्य सद्भावे सान्निध्ये सत्यपि परं सर्वोत्तमं तद् ब्रह्म यदा न गृह्णन्ति प्रत्युत द्विषन्ति च तदा अशेषाणामसुराणां तमःप्राप्तिः नियतः नियमेन भवेत्। सम्पूर्णस्वस्वरूपद्वेषस्याविर्भावे तमःपातो भवत्येवेति भावः ।। ९० ।।

**तदा [2]मुक्तिश्च देवानां यदा प्रत्यक्षगो हरिः ।**
**स्वयोग्ययोपासनया तन्वा तद्योग्यया तथा ।। ९१ ।।**

**वादि**— यदा हरिः स्वस्वयोग्योपासनया तद्योग्यया अपरोक्षज्ञानयोग्यया तन्वा स्वस्वबिम्बमूर्त्या देवानां देवपदोपलक्षितोत्तमजीवानां प्रत्यक्षगो भवति । तदा ते देवाद्युत्तमजीवाः तेषां मुक्तिरिति च निर्णेतुं शक्यत इति भावः । परान्तकाल एव ब्रह्मादीनां मुक्तिः कल्यादीनां तमश्चेति सिद्धान्तरहस्यम् । अत उक्तैव योजनेति ज्ञेयम् ।। ९१ ।।

**वरद**— यदा च हरिः प्रत्यक्षगः प्रत्यक्षविषयः प्रसन्नो हरिः तद्रूपः तदा देवानां मुक्तियोग्यानामिति यावत् मुक्तिर्भवतीत्यर्थः। कथं प्रत्यक्षगो हरिः भवतीत्यत उक्तम्— **स्वयोग्ययेति** ।। स्वस्वयोग्यगुणोपासनया प्रसन्नो हरिः तदुपासकयोग्यया तन्वा तद्दर्शनयोग्येन स्वरूपेण प्रत्यक्षगो भवतीति सम्बन्धः ।। ९१ ।।

**जना**— ननु देवादियोग्यानां सद्गुरूपदेशग्रहणानन्तरं मुक्तिनियमः किमित्यत आह— **तदेति** ।। देवानां तु स्वस्वयोग्योपासनया तद्योग्ययापरोक्षज्ञानयोग्यया । तन्वा स्वस्य बिम्बमूर्त्या प्रत्यक्षगो हरिर्भवति तदा तेषां मुक्तिर्नियमतो भवेदित्यर्थः । 'नेक्षा क्व च न बाध्यते' इति वचनात् ।। ९१ ।।

**ताम्र**— ननु भगवदपरोक्षस्य मोक्षहेतुत्वे रामकृष्णाद्यपरोक्षिणां सर्वेषामपि मोक्षः स्यादित्यत आह— **स्वयोग्ययोपासनयेति** ।। स्वयोग्योपासनापूर्वापरोक्षस्यैव मुक्तिहेतुत्वं न केवलस्येति भावः। ननु उपासनापूर्वं भगवत्साक्षात्कारेऽपि महरादिप्राप्तिरेव भवति। न मुक्तिरित्यत उक्तम्— **तन्वा तद्योग्ययेति** ।। सामान्य-दर्शनाल्लोकप्राप्तावपि योग्यरूपदर्शनस्य मोचकत्वे नानुपपत्तिरिति भावः ।। ९१ ।।

**जम्बु**— ननु मुक्तियोग्यानां देवानां सद्गुरूपदेशग्रहणानन्तरं मुक्तिर्नियतः किमित्यत आह— **तदेति** ।। देवानां तु स्वयोग्योपासनया तथा तद्योग्यतया अपरोक्षज्ञानयोग्यतया तन्वा स्वस्य बिम्बमूर्त्या प्रत्यक्षगो हरिर्यदा

---

१. बृ.भा. ६-४ शारीरब्राह्मणम् । २. 'मुक्तिर्हि' इति पा

भवति तदा तेषां मुक्तिर्नियमेन भवेत् 'नेक्षा क्वचन बाध्यत' इति वचनादिति **जनार्दनभट्टीये** । यदा हरिः प्रत्यक्षगो भवति तदा देवानां मुक्तिर्भवति । ननु भगवदपरोक्षस्य मोक्षहेतुत्वे रामकृष्णाद्यपरोक्षिणां सर्वेषामपि मोक्षः स्यादित्यत आह— **स्वयोग्येति** ।। स्वयोग्योपासनापूर्वकापरोक्षस्यैव मुक्तिहेतुत्वं न केवलस्येति भावः। ननु उपासनापूर्वं भगवत्साक्षात्कारेऽपि महरादिलोकप्राप्तिरेव भवति न मुक्तिरित्यत उक्तम्— **तन्वा तद्योग्ययेति** ।। सामान्यदर्शनाल्लोकप्राप्तावपि योग्यरूपदर्शनस्य मोचकत्वे नानुपपत्तिरिति भावः इति **श्रीनिवासभट्टीये** । देवानां मुक्तियोग्यानाम् । उक्तं च भाष्ये—

[1]'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ।।' इति ।

अपरोक्षज्ञानसाधनमाह— **स्वयोग्ययेति** ।। उक्तं च तन्त्रसारे—

[2]'आसा शौचं प्राणयामो निष्परिग्रहपूर्वकाः ।
तपआद्याः क्रमात्सर्वे उत्तरोत्तरतोऽधिकाः ।।
शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।
प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणोत्तराः ।।
स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।
पूजाऽतस्त्रिगुणं ध्यानं इति धर्मक्रमः स्मृतः ।।' इति ।
'सर्वस्माच्छ्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।
अज्ञस्य श्रवणं श्रेष्ठं अयुक्तेर्मननं तथा ।।
ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ।
वरं दशगुणं तस्मात् व्याख्यैकस्य शतोत्तरा ।।' इति ।

यदा स्वयोग्योपासनया प्रसन्नो हरिः तत्तदुपासनयोग्यया तन्वा प्रत्यक्षो भवति तदा मुक्तिरिति सम्बन्धः। तत्र तावत् स्वयोग्योपासना श्रवणाख्या विवक्षिता ।

[3]'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चेति तदङ्गं धारणादिकम् ।।'

इत्यनुव्याख्यानोक्तेः सा श्रवणाख्योपासना तत्रैव विवक्षितात्

[4]'लिङ्गाल्लातव्यतः पूर्वमृजोर्ब्रह्मत्वतः शतात् ।
शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ।
सार्धं परार्धं विष्णोस्तु गुणान् भक्त्या स्वयोग्यतः ।।'

इत्यादि । अस्य सुधाद्यनुसारेणार्थो ज्ञातव्यः। विस्तरभयादिह न लिख्यते ।। ९१ ।।

१. ब्र.सू.भा. ३-४-२५ । २. तं.सा. ४- १४०-१४६ । ३. अनु. ३-३- १२४९, सर्ववेदान्तप्रत्ययाधिकरणम् । ४. अनु. ४-१-१६८७, आवृत्त्यधिकरणम् ।

**सर्वैर्गुणैर्ब्रह्मणा तु समुपास्यो हरिः सदा ।**
**आनन्दो ज्ञः सदात्मेति ह्युपास्यो मानुषैर्हरिः ।। ९२ ।।**

**वादि**— 'स्वयोग्ययोपासनया' इति उपासनायां वैचित्र्यं सूचितम् । तद्विविच्याह— **सर्वैरिति** ।। अनन्तवेदोक्त-गुणैरित्यर्थः। संश्चासावात्मा चेति विग्रहः। ज्ञः ज्ञानरूपः। सन् निर्दोषः। आत्मा स्वामीत्यर्थः। तदन्यैः मनुष्योत्तमव्यतिरिक्तैः ।। ९२ ।।

**सङ्क**— ननु स्वयोग्योपासनयेत्युक्तम् । तत्र कस्य कथं योग्यतेत्यताह— **सर्वैरित्यादिना** ।। आनन्दादि-सर्वगुणैर्ब्रह्मणोपास्यः । उत्तममानुषैरानन्दादिगुणचतुष्टयेनोपास्यः। एतदन्यैः मुक्तियोग्यैः विरिञ्चिपर्यन्तस्थितैः देवपितृगन्धर्वमनुष्यादिभिः गुणचतुष्टयमारभ्य तदुपरि यथाक्रमं गुणवृद्ध्या हरिरुपास्य इत्यर्थः ।। ९२-९५ ।।

**वरद**— ननु 'स्वयोग्ययोपासनया' इत्युक्तम् । तत्र के गुणाः कस्योपासनायोग्या इत्यत आह— **सर्वैरिति**।। सर्वैर्वेदोक्तैर्गुणैः सदा संसारे मुक्तौ च ब्रह्मणा सम्यक् उपास्यः। आनन्दः, ज्ञः, चिद्रूपः, सन् निर्दोषः, आत्मा स्वामी, चतुर्भिः गुणैः हरिः मानुषैरुपास्य इत्यर्थः ।। ९२ ।।

**जना**— 'स्वयोग्योपासनया' इति उपासनातारतम्यं सूचितमतस्तत्प्रकारमाह— **सर्वैरिति** ।। सर्वैर्गुणै-र्वेदोक्तैर्मानुषैः मनुष्योत्तमैः ।। ९२ ।।

**ताप्र**— 'स्वयोग्ययोपासनया' इत्युपास्तौ तारतम्यं सूचितम् । तद्दर्शयति— **सर्वैरिति** ।। वेदोक्तैस्तदनुक्तै-र्भगवत्सम्प्रदायागतैः गुणक्रियारूपदोषाभावात्मकैः स्वज्ञातैः सर्वैः शुभधर्मैरित्यर्थः । सदेति कदाचिदपि तिरोधानं निषेधति । सन्निर्दुष्टः । आत्मा सर्वस्वामी। मम स्वामी । यद्यप्येकगुणोपासक एव चरमावधिभूतं तथापि चतुर्विधमोक्षभाग्भिः सर्वैरपि नियमेन चतुर्गुणानामुपास्यत्वेन ब्रह्मणः सर्वगुणोपास्तिमुक्त्वा चतुर्गुणोपास्तिरुक्ता । मानुषैरित्युक्तिस्तु तेषां तन्मात्राधिकारज्ञापनाय । तदुक्तं [1]''आनन्दादयः प्रधानस्य' इति ।

'आनन्दो ज्ञः सदात्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ।।' इति

चतुर्गुणोपासकानां मुक्तौ यत्प्रकाशादिमात्रमपेक्षितं तत् भगवद्रूपप्रतीत्यविनाभूतप्रकाशादिनैव लभ्यत इति ज्ञेयम्। गुणोद्रेकात् गुणबाहुल्यात् । सर्वगुणोपसंहारं विधायेति यावत् ।। ९२ ।।

**जम्बु**— स्वयोग्ययोपासनयेत्युक्तं तत्र के गुणा कस्योपासना योग्या इत्यत आह-- **सर्वैरिति** ।। सर्वैः गुणैः ब्रह्मणा तु वेदोक्तैस्तदनुक्तैर्भगवत्सम्प्रदायागतैः गुणक्रियारूपदोषाभावात्मकैः शुभधर्मैरित्यर्थः। सदेति कदाचिदपि तिरोधानं निषेधति । सदा संसारे मुक्तौ चेति वा। ब्रह्मणा चतुर्मुखेन हरिः समुपास्यः सम्यगुपासक एव चरमावधिभूतः। तथापि चतुर्विधमोक्षभाग्भिः सर्वैरपि चतुर्गुणानामुपास्यत्वेन ब्रह्मणः सर्वगुणोपासनमुक्त्वा चतुर्गुणोपास्तिरुक्ता मानुषैरित्युक्तिस्तु तन्मात्राधिकारज्ञापनाय तदुक्तं 'आनन्दादयः प्रधानस्य' इति ।

---

१. ब्र.सू. ३-३-१२ ।

'आनन्दो ज्ञः सदात्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ।।' इति च भाष्ये ।

चतुर्गुणोपासकानामपि मुक्तौ यत्प्रकाशादिमात्रमपेक्षितं तच्च भगवद्रूपं प्रतीत्यविनाभूतप्रकाशादिनैव लभ्यते इति ज्ञेयमिति *श्रीनिवासभट्टीये* ।। ९२ ।।

## यथाक्रमं गुणोद्रेकात् तदन्यैरा विरिञ्चतः ।
## ब्रह्मत्वयोग्या ऋजवो नाम देवाः पृथग्गणाः ।। ९३ ।।

**वादि**— आविरिञ्चतः विरिञ्चपर्यन्तं विद्यमानैः ऋषिगन्धर्वाद्युत्तमजीवैः। गुणोद्रेकात् स्वस्वयोग्यगुण-बाहुल्यादुपास्य इति सम्बन्धः। ननु मानुषादीनामेव तपआदिना कदाचित् ब्रह्मत्वसम्भवे व्यर्थोऽयं विभाग इत्यत आह— **ब्रह्मत्वयोग्या इति** ।। पृथग्गणाः पृथग्राशीभूताः ।। ९३ ।।

**सङ्क**— ननु स्वयोग्यतातारतम्यात् उपास्यो विष्णुरिति यदुक्तं तन्नोपपद्यते । यतस्साधनविशेषैर्ब्रह्मादिपदप्राप्तौ सर्वेषामविशेषेणोपास्तिसम्भवात् । अत उपास्तितारतम्यं फलतारतम्यं च न सम्भवतीत्याह— **ब्रह्मत्वेति** ।। ९३ ।।

**वरद**— तदन्यैः तेभ्यो मानुषेभ्योऽन्यैः ऋष्यादिभिः यथाक्रमं स्वस्वयोग्यतानुसारेण आविरिञ्चतः चतुर्मुखपर्यन्तं गुणोद्रेकात् गुणाधिक्यादुपास्य इत्यर्थः। ननूक्तरीत्या उपासनातारतम्येन साधनतारतम्येन फलतारतम्यस्य आवश्यकत्वात् मोक्षेऽपि तारतम्यं स्यात् । तच्चायुक्तं 'साम्यमुपैति' इति मोक्षे साम्यप्राप्तिश्रुतेरित्यत आह— **ब्रह्मत्वेति** ।। ब्रह्मत्वप्राप्तियोग्या ऋजवो नाम प्रसिद्धाः देवाः पृथक् शेषादिगणेभ्यो विलक्षणो गणो येषां ते तथा ते सन्ति ।। ९३ ।।

**जना**— तदन्यैः तेभ्यः मनुष्योत्तमेभ्यश्च अन्यैः क्षितिपाद्यैः विरिञ्चतः आब्रह्मपर्यन्तं गुणोद्रेकाद्यथाक्रममुपास्यः। ननु स्वयोग्येत्यनुपपन्नम् । उपासनाविशेषेणायोग्येनापि ब्रह्मपदादेः प्राप्तुं शक्यत्वादित्यत आह— **ब्रह्मत्वेनेति** ।। नाम प्रसिद्धाः पृथग्भिन्नाः गुणाः सन्ति ।। ९३ ।।

**ताम्र**— ननूक्तं ब्रह्माद्युपासनातारतम्यमयुक्तम् । ''स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति' इति यस्य कस्यचित्साधनवशेन तत्पदप्राप्तौ तथैवोपासनाप्रसक्त्या तारतम्यस्याप्ययोगादित्यत आह— **ब्रह्मत्व-मित्यादिना तस्मादनाद्यनन्तं हीत्यन्तेन** ।। ऋजूनां नवकोटिष्वनन्तर्भावेऽपि गुह्यादेशपदोदितऋजूनां मक्षिकात्वेन पञ्चममधूपासकत्वात् 'देवानामपि देवता' इत्यन्यत्रोक्तेश्च तेषामनादितोऽपि सर्वदोषराहित्यादिना गतमानुषत्वेन देवत्वजातिमत्वाद् 'ऋजवो नाम देवा' इत्युक्तम् । अत एव पृथग्गणाः विलक्षणगणाः पदप्राप्तिविवक्षया तदुपरीत्युक्तम् । देवा इति भाविनीसंज्ञया इत्येके ।। ९३ ।।

**जम्बु**— तदन्यैः तेभ्यो मनुष्योत्तमेभ्यः अन्यैः ऋष्यादिभिः क्षितिपाद्यैरिति **जनार्दनभट्टीये** । यथाक्रमं स्वयोग्यतानुसारेण विरिञ्चतः ब्रह्मणः अपयन्ति गुणोद्रेकात् गुणबाहुल्यात् स्वस्वयोग्यगुणोपसंहारं विधाय इति यावत् । उपास्येत्यर्थः। ननूक्तं ब्रह्माद्युपासकतारतम्यमयुक्तम् । उक्तं च न्यायविवरणे—

---

१. भा. ४-२४-२९ ।

[1]'यस्य यावत् गुणाः स्पष्टं प्रतिभासन्त्युपासने ।
युगपत्स्वभुजौ यद्वद् ध्यायेत् तावत एव तु ।।
युगपद् ब्रह्मणः सर्वे भासन्ते हि गुणाः हरेः ।
तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः ।।' इति ।

अत्रेदमनुव्याख्यानोक्तं अनुसन्धेयम् ।

[2]'ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः ।
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे ।।' इति ।

अस्यार्थः सुधायामुक्तः 'वेदोक्तसमस्तगुणोपेततयानन्तरूपं हरिमुपासितुं ब्रह्मैव योग्यः सरस्वती तु सकलवेदोक्तगुणोपेततयानन्तरूपं हरिमुपास्ते । त्रिविक्रमत्वादिक्रियास्तु नित्यविक्रान्त्यादिषु अन्तर्भावः । रुद्रस्तु वेदोक्तरूपाण्युपास्ते गुणान् क्रियाश्च सङ्कोचयति । शक्रादयस्तु रूपाणि गुणान् क्रियाश्च सङ्कोचयन्ति' इति । मनुष्योत्तमेषु निकृष्टाः मुक्तियोग्याः केचिदेकगुणोपासकाः। तदुक्तं भाष्ये–

[3]'आत्मेत्युपासनं कार्यं सर्वदैव मुमुक्षुभिः ।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ।।' इति ***नारायणाध्वरीये***।

ननूक्तं ब्रह्माद्युपासकतारतम्यमयुक्तं 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति' इति यस्य कस्यचित् साधनवतो तत्पदप्राप्तौ तथैवोपासनप्रसक्त्या तारतम्यायोगादित्यत आह— **ब्रह्मत्वेत्यादिना** ।। 'तस्मादनाद्यनन्तं हि' इत्यनेन ऋजूनां नवकोटिष्वनन्तभार्वेऽपि गुह्यादेशपदोदितऋजूनां मक्षिकात्वेन पञ्चममधूपासकत्वात् । 'देवनामपि देवता' इत्यन्यत्रोक्तेश्च तेषामनादितोऽपि देवत्वजातिमत्वात् 'ऋजवो नाम देवा' इत्युक्तम् । नाम प्रसिद्धाः । अत एव पृथग्गणाः । पृथग्दोषादिगुणेभ्यो विलक्षणगणाः येषां ते तथा सन्ति ।। ९३ ।।

**तैरेवाप्यं [4]पदं तत्तु नैवान्यैः साधनैरपि ।**
**एवं सर्वपदानां च योग्याः सन्ति पृथग् गणाः ।। ९४ ।।**

**सङ्क**— अन्यैः पुरुषैः साधनविशेषैरपि नैवाप्यमित्यर्थः । यत एवं ब्रह्मादिपदप्राप्तावनादि-योग्यतातारतम्यमपेक्षितमतः ।। ९४ ।।

**वरद**— तैरेव ऋजुभिस्तत्पदं ब्रह्मपदं आप्यं प्राप्यम्— **अन्यैरिति** ।। शेषादिभिः साधनैरनुष्ठितैरपि नैव प्राप्यम् । अतः फलेऽपि तारतम्यस्य विद्यमानत्वात्तैरेव सर्वैर्गुणैरुपास्यो नान्यैरिति साधने तारतम्यं युक्तमिति भावः । ननु तर्हि तदतिरिक्तानां अविशेषेण उपासनं स्यात् फले तारतम्याभावादित्यत आह— **एवमिति** ।। सर्वपदानां शेषगरुडादिपदानां योग्याः पृथक् परस्परविलक्षणगणाः सन्ति । अतस्तैस्तैरेव तत् फलं प्राप्यं नान्यैरिति तत्रापि फलतारतम्याद्युक्तं उपासनातारतम्यमिति भावः ।। ९४ ।।

**जना**— अन्यैः रुद्रादिपदयोग्यैः साधनैरपि नैवाप्यं एवं यथा ब्रह्मपदयोग्याः सन्ति सर्वपदानां रुद्रादिपदानाम् ।। ९४ ।।

---

१. न्या.वि. ३-३-३ । २. अनु. ३-३-१३८०, विद्याधिकरणम् । ३. सू.भा. ४-१-३ । ४. 'तत्पदं तु' इति पाठान्तरम् ।

**ताम्र—** सर्वपदानां योग्याः सन्तीत्युक्त्या एकजातीनामव तत्पदप्राप्तिरिति प्रतीयते। अतः पृथग्गणा इत्युक्तम्। तत्तारतम्यं चशब्दात्पदाधिपत्यं च ।। ९४-९५ ।।

**जम्बु—** तैरेव ऋजुभिरेव तत्पदं ब्रह्मपदं आप्यं प्राप्यं अन्यैः शेषादिभिः साधनैरनुष्ठितैरपि नैव प्राप्यं अतः फलेऽपि तारतम्यस्य विद्यमानत्वात् तैरेव सर्वैगुणैरुपास्यो नान्यैरिति साधनतारतम्यं युक्तमिति भावः। ननु तर्हि तद्व्यतिरिक्तानामविशेषेणोपासना स्यात् फलतारतम्यसद्भावादित्यत आह— **एवमिति** ।। यथा ब्रह्मपदयोग्यास्सन्ति तथा तु सर्वपदानां सर्वेषां शेषगरुडादिपदानां योग्याः पृथक्परस्परविलक्षणाः गणाः सन्ति। अतस्तैरेव फलं प्राप्यं नान्यैरिति तत्रापि फलतारतम्याद्युक्तमुपासनातारतम्यमिति भावः इति च ***वरदराजीये***। ब्रह्मत्वेति तदुक्तं चतुर्थस्कन्धतात्पर्ये –

"ऋजवो नाम ये देवाः योग्याः ब्रह्मपदस्य तु ।
त एव शतजन्मानि विशेषोपासकाः हरेः ।
प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः ।।'[1]

इत्यादि। 'अन्येषामप्युदीर्यते' इत्यन्तेन। अत्रैव एकविंशोऽध्याये वक्ष्यते

'अनादिकालतः सर्वदोषहीना गुणाधिकाः ।
सर्वजीवगुणेभ्यो ये ते हि वायुत्वमाप्नुयुः ।।
ऋजवो नाम ये देवा देवानामपि देवताः ।।' इति ***नारायणाध्वरीये***।

सर्वपदानां योग्यास्सन्ति इत्युक्त्या एकजातीयानामेव तत्पदप्राप्तिरिति प्रतीयते अतः पृथग्गणा इत्युक्तम् ।। ९४ ।।

## तस्मादनाद्यनन्तं हि तारतम्यं चिदात्मनाम् ।
## तच्च नैवान्यथा कर्तुं शक्यं केनापि कुत्रचित् ।। ९५ ।।

**सङ्क—** उक्तव्यवस्थाया कदाचिदप्यन्यथात्वं नास्तीत्युपसंहरति— **तस्मादिति** ।। ननु केनचित्समर्थेन पुंसा तत्तारतम्यं अन्यथाकर्तुं शक्यं किं न स्यादित्याह— **तच्चेति** ।। ९५ ।।

**वरद—** तस्मात्साम्यश्रुतेः निर्दुःखत्वादिसाम्यपरत्वात् न स्वरूपसाम्यं तदर्थ इत्याह— **तस्मादिति** ।। चिदात्मनां चिद्रूपाणां अशेषोत्तमजीवानाम्। तारतम्यं स्वरूपेण नीचोच्चभाव इति यावत्। न विद्यते आदिः उत्पत्तिः यस्य तत्तथा। न विद्यते अन्तो विनाशो मोक्षोऽपि यस्य तत्तथोक्तम्। हि यस्मात्तस्मात्तारतम्यं कुत्रचिद्देशे काले वा केनापि साधनेन पुरुषेण वा अन्यथाकर्तुं नीचमुच्चं कर्तुं उच्चं नीचं कर्तुं न शक्यमित्यर्थः ।। ९५ ।।

**जना—** एवं योग्यतोपपादनेन फलितमाह— **तस्मादिति** ।। चिदात्मनां जीवानां तारतम्यमनाद्यनन्तं हि केनापि पुरुषेण कुत्रचिद्देशे तत्तारतम्यम् ।। ९५ ।।

---

१. भा.ता. ४-२३-२९ ।

**जम्बु**— एवं योग्यतोपपादनेन फलितमाह— **तस्मादिति** ।। चिदात्मनां चित्स्वरूपाणां जीवानाम् । तारतम्यं हि यस्मात् कारणात् । अनाद्यनन्तं न विद्यते आदिरुत्पत्तिर्यस्य तत्तथा, न विद्यते अन्तो विनाशो यस्य तत्तथा अनादि च अनन्तं तत्तथा । तस्मात् तच्च तारतम्यम् । चशब्दादाधिपत्यं च केनापि पुरुषेण कुत्रचिद्देशे काले वा साधनेन वा अन्यथा कर्तुं नीचमुच्चं उच्चं नीचं कर्तुं न शक्यम् । तथा च 'स्वधर्मनिष्ठ' इति वाक्यं तत्पदयोग्यजीवविषयमिति कल्प्यते ।। ९५ ।।

**अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ।**
**तस्माद्योग्यानुसारेण सेव्यो विष्णुः सदैव हि ।। ९६ ।।**

**वादि**— न केवलं स्वोत्तमपदप्राप्तिरशक्या, अपि तु तदिच्छायामप्यनर्थोऽस्तीत्याह— **अयोग्यमिति** ।। योग्यानुसारेण योग्यतानुसारेण ।। ९६ ।।

**सङ्क**— न केवलं तत्तारतम्यमन्यथा कर्तुं न शक्यं, किन्तु अन्यथा कर्तुमिच्छतो अधः पातोऽपि भवतीत्याह — **अयोग्यमिच्छन्निति** ।। उक्तार्थमुपसंहरति— **तस्मादिति** ।। ९६ ।।

**वरद**— ननु केनचिन्नीचेन उच्चयोग्यमुपासनं क्रियते चेदुच्चभावः प्राप्तुं शक्यत इत्यत आह— **अयोग्यमिति** ।। स्वायोग्यमुपासनं कर्तुमिच्छन्नेव पतति । तस्मादुपासनात् भ्रंश्यते । तत्करणं दूरतोऽपास्तमिति भावः। यतोऽयोग्योपासनेच्छायां पातः तस्माद्योग्यतानुसारेण सदा सर्वैर्विष्णुः सेव्य उपास्य इत्याह— **तस्मादिति** ।। ९६ ।।

**जना**— अधिकपदेच्छूनामनर्थमाह— **अयोग्यमिति** ।। उपसंहरति— **तस्मादिति** ।। ९६ ।।

**ताम्र**— कुत एवं स्वधर्मनिष्ठ इति वाक्यं तत्पदयोग्यजीवविषयमिति कल्प्यते पुंमात्रविषयमेव किं न स्यादित्यत उत्तमपदं तादृसोपासनं वा साधनैरप्राप्यमित्येतत् "न चाधिकारिकमपि पतनानुमानात् तदयोगात्'[1] इति सौत्रन्यायेनोपपादयति— **अयोग्यमिति** ।। ९६ ।।

**जम्बु**— न केवलं स्वोत्तमपदप्राप्तिरशक्यं अपि तु अयोग्येच्छायामनर्थोऽस्तीत्याह— **अयोग्यमिति** ।। अयोग्यमुपासनं कर्तुमिच्छन्नेव पतति। तस्मादुपासनात् भ्रंश्यते । तत्करणं दूरोपास्तमिति भावः । संशयो नास्ति यतो अयोग्योपासनेच्छायां पातस्तस्माद्योग्यानुसारेण सदा सर्वदा विष्णुः सेव्यः उपास्यः ।। ९६ ।।

**अच्छिद्रसेवनाच्चैव निष्कामत्वाच्च योग्यतः ।**
**द्रष्टुं शक्यो हरिः सर्वैर्नान्यथा तु कथञ्चन ।। ९७ ।।**

**वादि**— उपासनया प्रत्यक्षगो हरिरित्युक्तम् । सोपासना नाम केत्यतस्तां विवेचयन्सहकार्यन्तरमप्याह— **अच्छिद्रेति** ।। छिद्रं मध्ये मध्ये विच्छेदः । सेवनं ध्यानम् । तैलधारावदच्छिन्नध्यानमित्यर्थः। स्वकृतसन्ध्यावन्दन–

---

१. ब्र.सू. ३-४-४१ ।

यज्ञदानादिकर्मणां निर्गतः कामः फलेच्छा यस्य स निष्कामः तस्य भावः निष्कामत्वं तस्मात् । विष्णुप्रीत्यर्थमेव नित्यनैमित्तिककर्माणि कार्याणि । स्वर्गकामः पशुकाम इत्यादिनोक्ततत्फलं नापेक्ष्यम् । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः निष्कामकर्मापि ज्ञाने सहकार्यन्तरमिति भावः। योग्यतः योग्यत्वात् ।। ९७ ।।

**सङ्क**— ननु योग्यतानुसारेण कदाचिद्विष्णुसेवनेन अपरोक्षज्ञानसम्भवात् सदैव विष्णुसेवनमप्रयोजकमित्यत आह— **अच्छिद्रेति** ।। न केवलं योग्यतया अच्छिद्रसेवनाद्धरिः द्रष्टुं शक्यः, किन्तु फलाऽकामात् निषिद्धाकामाच्चेत्याह— **निष्कामत्वाच्चेति** ।। ९७ ।।

**वरद**— ननु सदैव सेव्य इत्यनुपपन्नम् । कदाचित्सेवनेनापि तदपरोक्षज्ञानसम्भवादित्यत आह— **अच्छिद्रेति** ।। अच्छिद्रसेवनात् निरन्तरसेवनात् । तथा निष्कामत्वात् फलानाकाङ्क्षया । योग्यतः योग्यतानुसारेणैव। हरिर्द्रष्टुं शक्यः । अन्यथा तु कथञ्चन केनापि प्रकारेण । द्रष्टुं न शक्य इत्यर्थः ।। ९७ ।।

**जना**— ननु योग्यतयैव सर्वसिद्धेर्हरिसेवनं व्यर्थमित्यत आह— **अच्छिद्रेति** ।। अच्छिद्रसेवनात् सदोपासनायाः । निर्गतः कामो यस्मात् कर्मणः । स्वरूपे त्वप्रत्ययः । निष्कामकर्मणः । योग्यतः योग्यतायाः। भावप्रधानो निर्देशः हेतौ पञ्चमी । हेतुत्वं कारणत्वम् । तेन एतैरेव साधनैर्हरिर्द्रष्टुं शक्यः अन्यथा सेवादिकं विना कथञ्चन एतदन्योपायेन । यद्वा निष्कामनादिति सेवनविशेषणम् ।। ९७ ।।

**ताम्र**— उपासनया भगवानध्यक्षो भवतीत्युक्तम् । न यया कयापि तयेत्याह— **अच्छिद्रेति** ।। निरन्तरभगवत्सेवनं च वैराग्यलभ्यमित्याह— **निष्कामत्वादिति** ।। योग्यतः योग्यतानुसारेण द्रष्टुं शक्यः। 'विद्युद्वन्मानुषा विद्युः सूर्यमण्डलवत्सुरा' इत्यादेः ।। ९७ ।।

**जम्बु**— ननु सदैव सेव्य इत्यनुपपन्नम् । कदाचित् सेवनेनापि तदपरोक्षज्ञानसम्भवादित्यत आह— **अच्छिद्रेति** ।। अच्छिद्रं मध्ये विच्छेदरहितं सेवनं ध्यानं तैलधारावदच्छिन्नध्यानं तस्मात् । स्वकृतसन्ध्यावन्दन-यज्ञदानादिकर्मणां निर्गतः कामः विषयेच्छा यस्य स निष्कामः तस्य भावः निष्कामत्वं तस्मात् । विष्णुप्रीत्यर्थमेव नित्यनैमित्तिककर्माणि कार्याणि । स्वर्गकामः पशुकाम इत्यादिनोक्तफलं नापेक्ष्यं 'विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुतेः। निष्कामकर्मापि ज्ञाने सहकार्यन्तरमिति भावः। योग्यतः योग्यत्वात् । अच्छिद्रसेवनविवरणं भाष्ये कृतम्—

> [1]"अनादिजन्मसम्बद्धं निर्भेत्तुं पापपञ्जरम् ।
> यावत्या सेवया शक्यं तावत् कार्यं न संशयः ।।
> यावद्दूरे स्थितो गम्यः तावद् गन्तव्यमेव हि ।
> इह जन्मान्तरे वापि तावत्येव तु दर्शनम् ।।
> श्रवणं मननं चैव निदिध्यासनमेव च ।
> हरौ गुरौ च या भक्तिः परिचर्यात्मकं हरेः ।।
> सैवोपासेति सम्प्रोक्ता यया तद्दर्शनं भवेत् ।।' इति ।

१. सू.भा. ३-४-५० ।

।। **निष्कामत्वादिति** ।। मोक्षोपयोगिज्ञानभक्त्यादिकामतया दोषो नास्ति । तदुक्तम् -

'भक्तिर्ज्ञानं च वैराग्यमृतं यो नेच्छति क्वचित् ।
शुभाशुभपरित्यागी विद्वद्भिः परिकीर्तितः ।।' इति ।

अधिकारिणामधिकाराभिकामनं न दोषाय । तदुक्तम् -

[1]'आधिकारिकदेवानां स्वाधिकाराभिकामनम् ।
भवति प्रीतये विष्णोः भक्त्यादेरपि यत्सदा ।।' इति ।

योग्यताया आवश्यकत्वमुक्तं सप्तमतात्पर्ये-

[2]'तपसा विद्यया वापि ज्ञानध्यानादिनाऽथवा ।
(क्लेशैः) व्यस्तैः समस्तैरपि वा कुर्वतां यत्नमुत्तमम् ।।
सम्भारविक्षेपशतैर्बहुकोटिभिरेव वा ।
न शक्यन्ते समारोढुं स्वात्मायोग्यपदानि तु ।।
तथाप्याचरतां कुर्युः दैत्यानां सुरनायकाः ।
विघ्नं तु तप आदीनां वैयर्थ्यस्यापनुत्तये ।।' इति ।। ९७ ।।

**नियमोऽयं हरेर्यस्मान्नोल्लङ्घ्यः सर्वचेतनैः ।**
**सत्यसङ्कल्पतो विष्णुर्नान्यथा च करिष्यति ।। ९८ ।।**

**वादि**— प्रबलैरपि राक्षसैर्नायं क्रम उल्लङ्घ्य इत्यत्र हेतुमाह— **नियमोऽयमिति** ।। नियमः नियमनं आज्ञा । हरिणैव कदाचिदन्यथीक्रियते चेत् कथं नोल्लङ्घ्य इत्यत आह— **सत्यसङ्कल्पत इति** ।। सत्यसङ्कल्पत्वात् ।। ९८ ।।

**सङ्क**— ननु उक्तनियमस्यान्यथात्वं किं न स्यात् इत्यत आह— **नियम इति** ।। ननु हरेर्नियमोऽन्यै-रनुल्लङ्घ्योऽपि विष्णुनैवान्यथा क्रियतां समर्थत्वात्तस्येत्यत आह— **सत्येति** ।। ९८ ।।

**वरद**— तच्च नैवान्यथा कर्तुमित्यत्र हेतुमाह— **नियम इति** ।। अयं पूर्वोक्तनियमो हरेः यस्मात् तस्मात् सर्वचेतनैः नोल्लङ्घ्यः। अशक्यत्वादित्यर्थः। हरेः शक्तत्वात् स्वकृतो नियमः स्वेनैव अन्यथा क्रियत इत्यत आह— **सत्येति** ।। विष्णुः शक्तोऽपि सत्यसङ्कल्पः सत्यः नियतः सङ्कल्प इच्छाविशेषो यस्य सः तथा। भावप्रधानो निर्देशः। सत्यसङ्कल्पत्वात् इत्यर्थः। अथवा सत्यश्चासौ सङ्कल्पश्चेति सत्यसङ्कल्पः तस्मादित्यर्थः। एवमेव करिष्यामीति इच्छाविशेषान्नान्यथा करिष्यतीत्यर्थः ।। ९८ ।।

**जना**— ननूक्तनियमस्यान्यथात्वं किं न स्यादित्यत आह— **नियम इति** ।। ननु हरेर्नियमस्यान्यै-रनुल्लङ्घ्यत्वेऽपि विष्णुनैव स्वनियमोऽन्यथा क्रियतां तस्य तत्र सामर्थ्यादित्यत आह— **सत्येति** ।। अन्यथा स्वकृतनियमस्यान्यथात्वम् ।। ९८ ।।

---

१. भा.ता. ३-१०-३९ । २. भा.ता. ७-३-१० ।

**जम्बु—** तच्च नैवान्यथाकर्तुमित्यत्र हेतुमाह— **नियमोऽयमिति** ।। अयं पूर्वोक्तनियमो हरेर्यस्मात् तस्मात् सर्वचेतनैः उल्लङ्घ्यो न भवति । अशक्यत्वादित्यर्थः । हरेश्शक्तत्वात् स्वकृतो नियमः स्वेनैव अन्यथा कर्तुं शक्यत किम्? इत्यत आह— **सत्यसङ्कल्पत इति** ।। विष्णुः शक्तोऽपि सत्यसङ्कल्पतः सत्यः नियतः सङ्कल्प इच्छाविशेषो यस्य स तथा भावप्रधानो निर्देशः। सत्यसङ्कल्पत्वादित्यर्थः। अथवा सत्यश्चासौ सङ्कल्पश्च सत्यसङ्कल्पः तस्मादित्यर्थः। एवमेव करोमीति इच्छाविशेषात् अन्यथा न करिष्यतीत्यर्थः ।। ९८ ।।

**दानतीर्थतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा ।**
**अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये"।**
**भविष्यत्पर्ववचनमित्येतदखिलं परम् ।। ९९ ।।**

**वादि—** भक्तिज्ञानाभ्यां मुच्यत इत्ययुक्तं, क्वचिद्दानादिनापि मोक्षादिश्रवणादित्यत आह— **दानेति** ।। हरिसेवायां हरेर्नैरन्तर्येण ध्यानाख्यसेवायाम् । भक्तौ चेत्यपि ग्राह्यम्। 'कर्मणा ज्ञानमातनोति' इति श्रुतेः अन्तःकरणशुद्धिद्वारा ज्ञानाङ्गानि दानादीनीति भावः। एका मुख्या । ज्ञानवैराग्ययोरपि मुक्त्यर्थमपेक्षितत्वादेकेत्युक्तम् ।। ९९ ।।

**अभिनव— तत्रैव** 'दानतीर्थतपो'... इति श्लोकः। तस्यार्थः । विमुक्तये भक्तिः एका प्रधाना साक्षात् साधनमिति यावत् । भक्त्यर्थं कर्तव्यायामिति शेषः । भक्त्यर्थं कर्तव्यायां हरिसेवायां हरिविषयकश्रवणादिसेवायां दानतीर्थतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा अङ्गानि साधनानीति । अयं भावः । दानादिभिः श्रवणादिरूपा हरिसेवा सिद्धा भवति । श्रवणादिरूपहरिसेवया भक्तिः । भक्त्या मुक्तिरिति ।। ९९ ।।

**सङ्क—** ननु दानादिधर्मैर्मुक्तिसम्भवात् भक्त्याख्यसेवया किं प्रयोजनमित्यत आह— **दानेति** ।। भक्त्याख्य-सेवयैव मुक्तिर्भवति । दानादयः धर्मा हरिसेवाया अङ्गत्वेन तद्द्वारा मुक्तिसाधका इत्यभिप्रायः ।। ९९ ।।

**वरद—** ननु 'तया मुक्तिर्न चान्यथा' इत्यादिना भक्तेरेव मोक्षसाधनत्वमुक्तं तदयुक्तम् । 'त्यागेनैके अमृतत्वमानशुः' इत्यादिश्रुत्या दानादिनापि मोक्षप्राप्तिप्रतिपादनादित्यत आह— **दानेति** ।। दानं पात्रे द्रव्यत्यागः, तीर्थं भागीरथ्यादि, तपः चान्द्रायणादि, यज्ञो ज्योतिष्टोमादिश्च पूर्वे येषां ते तथा । ते सर्वे उपाया हरिसेवायां भक्तिरूपायां अङ्गानि । भक्तिस्तु विमुक्तये मोक्षाय । एका स्वानन्तरभाविसाधनान्तरानपेक्षा उपाय इत्यर्थः। उदाहृतानि वचनानि न स्वकपोलकल्पितानीत्याह— **भविष्यदिति** ।। परं निर्दोषम् । इत्येतदुदाहृतमखिलं वचनं 'विष्णुर्हि दाता मोक्षस्य' इत्यादिकं भविष्यत्पर्वगतं वचनमित्यर्थः ।। ९९ ।।

**जना—** दानादिनैव मोक्षप्राप्तेर्न भक्त्या प्रयोजनमित्यत आह— **दानेति** ।। दानादीनां हरिसेवाङ्गत्वात् मोक्षसाधनत्वोक्तिः न तु साक्षात्साधनत्वम् । इदं प्रमाणं कुत्रत्यमित्यत आह— **भविष्यदिति** ।। अखिलं अखिलार्थप्रतिपादकं यत्। हरेः सर्वोत्तमत्वप्रतिपादकत्वात् परमुत्तमम् । भविष्यत्पर्ववचनस्य पूर्वमपि प्रमाणत्वेनोक्तत्वादिदं परं द्वितीयमिति वा। इत्येतदेतदर्थप्रतिपादकं भविष्यत्पर्ववचनं भविष्यत्पर्वगतवाक्यमित्यर्थः। यद्वा इतीदं भविष्यत्पर्ववचनं एतद्वक्ष्यमाणं परमपौरुषेयत्वेन निर्दोषम् । खिलमुच्छिन्नं न भवतीत्यखिलं पठ्यमानम्।

देवा मुक्तियोग्याः। असुराः तमोयोग्याः। मनुष्यमध्यमा नित्यसंसारिणः इत्येतन्नियममपहाय अयोग्येच्छायामधःपात इत्यर्थप्रतिपादकं वचनमस्ति ।। ९९ ।।

**ताम्र**— ननु 'त्यागेनैकेन अमृतत्वमानशुः'। [१]'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा' इत्यादौ दानतीर्थेत्यादिना मुक्त्युक्तेः 'तया मुक्तिर्न चान्यथा' इति कथमुच्यत इत्यत आह— **दानेति** ।। हरिसेवायां भक्तिरूपायाम् ।। ९९ ।।

**जम्बु**— ननु 'तया मुक्तिर्न चान्यथा' इत्यादिना भक्तेरेव मोक्षसाधनत्वमुक्तं तदयुक्तम् । 'त्यागेनैके अमृतत्वमानशुः' इत्यादिना श्रुत्यादिनापि मोक्षप्राप्तिप्रतिपादनादित्यत आह— **दानेति** ।। दानं पात्रे द्रव्यत्यागः, तदुक्तं गीतातात्पर्ये।

'न्यायार्जितधनं धान्यं मत्वा यस्तु प्रतीयते।
अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम्' ।।

तीर्थं भागीरथ्यादितीर्थस्नानम्, तपश्चान्द्रायणादि, यज्ञो ज्योतिष्टोमादिः एते पूर्वे एषां ते सर्वे उपाया हरिसेवायां भक्तिरूपायां अङ्गानि । भक्तिस्तु भक्तिरेव विमुक्तये मोक्षाय । एका स्वानन्तराभाविसाधनांतरापेक्षा उपाय इत्यर्थः। उदाहृतं प्रमाणं कुत्र इत्यत आह— **भविष्यदिति** ।। अखिलं अखिलार्थप्रतिपादकं परं हरेस्सर्वोत्तमत्वप्रतिपादकत्वात् परमुत्तमं भविष्यत्पर्ववचनस्य पूर्वमपि प्रमाणत्वेनोदाहृतत्वादिदं परं द्वितीयमिति वा इत्येतदर्थप्रतिपादकं भविष्यत्पर्ववचनं भविष्यत्पर्वगतवाक्यमित्यर्थः। यद्वा इतीदं भविष्यत्पर्ववचनं एतद्वक्ष्यमाणं परमपौरुषेयत्वेन निर्दोषमखिलं खिलमुत्सन्नं न भवतीत्यखिलं पठ्यमानम्। देवाः मुक्तियोग्याः असुरास्तमोयोग्याः मनुष्यमध्यमा नित्यसंसारिण इत्येतन्नियममपहाय अयोग्येच्छायामधःपात इत्यर्थप्रतिपादकं वचनमस्ति ।। ९९ ।।

**[२]शृण्वे वीर उग्रमुग्रं दमाय-**
**न्नन्यमन्यमतिनेनीयमानः।**
**एधमानद्विळुभयस्य राजा**
**चोष्कूयते विश इन्द्रो मनुष्यान् ।। १०० ।।**

**व्यास**— विशो मध्यमजीवान् संसारे चोष्कूयते पर्यावर्तयति ।। १०० ।।

**वादि**— 'तत्र देवा मुक्तियोग्याः' इत्यादिनोक्तमर्थं श्रुत्यापि समर्थयते— **शृण्व इति** ।। वीरः अध्यवसितान्तगामी श्रीनारायणः उग्रमुग्रं लोकोपद्रवकरणात् क्रूरं क्रूरं दैत्यजनं दमायन् दमायन् अन्धे तमसि दण्डयन् । दमनस्य दीर्घकालीनत्वसूचनाय संहितायां दीर्घः। अन्यमन्यमुग्रादन्यमन्यं शान्तं ब्रह्मादिसज्जनगणं अति अतिशयितं स्थानं नेनीयमानः नितरां नयन् शृण्वे । शुश्रुवे श्रूयते वा । उभयेषामपि स्वाधीनत्वात् न केनापि व्यत्यासः कर्तुं शक्यत इति भावेनाह— **उभयस्येति** ।। उभयस्य देववर्गस्यासुरवर्गस्य च राजा नियामकः। इन्द्रः परमैश्वर्यवान्नारायणः। भक्तं बलिं कस्मादधोलोकमनयदित्यत उक्तम्— **एधमानद्विडिति** ।। एधमानं

१. गी.भा. ३-२० । २. ऋ.सं. ६-४७-१६ ।

उग्रतपआदिशक्त्या वर्धमानं द्वेष्टि तदतिक्रमं न सहत इति स उग्रोक्तः। अत एव स्वाधिकगरुडद्रोहकर्तुः कालियस्य मर्दनम्। उभयोरन्ते महदैश्वर्यदानात् तात्कालिक एव द्वेषो न तु दैत्यादाविव सदातन इति ज्ञेयम् । विशः कृषीवलादिरिव प्रायः स्वोदरपूरणोपयुक्तमध्यममार्गमेव विशन्तीति विशः मनुष्यान् । दैत्यादिवन्नात्युग्रान्। देवादिवन्नातिशान्तान् । यद्वा कदाचिदधमान्विशन्ति । कदाचिदुत्तमान्विशन्तीति विशो मध्यमजीवान् चोष्कूयते। स्वरूपभूतसुखदुःखाख्यनित्यसंसार एव प्रवर्तयति । 'चुकू परिवर्तन' इति धातुः ।। १०० ।।

**सङ्क**— देवानां मुक्तिरेव । दैत्यानामन्धन्तम एव । मध्यममनुष्याणां संसृतिरेव । तेषामेतद्वैपरीत्यं कदाचिदपि न भवेदिति यदुक्तं तच्छ्रुत्या समर्थयति— **शृण्व इति** ।। यो य उग्रः आसुरप्रकृतिस्तं तम् । दमायन् अधोऽधो नयन् । यो य आसुरप्रकृतेरन्यः दैवप्रकृतिः तं तं अधिकं पदं स्वकीयमतिशयेन नयन् । ऐश्वर्यादिन्द्रनामको वीरोऽध्यवसानान्तगामी विष्णुः। शृण्वे श्रूयते स्म । स एव एधमानद्विट् यः स्वायोग्यपदकामः तद्द्वेषी उभयस्य दैवासुरवर्गद्वयस्य च राजा । मध्यममनुष्यांस्तु विशः प्रजाः केवलराजसस्वभावान् नान्धन्तमः नापि मोक्षं नयति किन्तु संसारमण्डल एव चोष्कूयते परिभ्रामयति ।। १०० ।।

**वरद**— 'त्रिविधा जीवसङ्घास्तु' इत्याद्युक्तार्थे श्रुतिसम्मतिमाह— **शृण्वेति** ।। वीरो महाबलः आरब्धान्तगामी इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा। शृण्वे श्रूयते सर्वेषु वेदेष्विति शेषः। किं कुर्वन् उग्रं उग्रं वीप्सायां द्विर्वचनं सर्वांस्तामसान् द्वेषिणो जीवानित्यर्थः। दमायन् तमः प्रापयन्निगृह्णन्नित्यर्थः। पुनः किं कुर्वन् अन्यं अन्यं उग्रेभ्योऽन्यान् सात्त्विकान् जीवान् मोक्षयोग्यान् अतिनेनीयमानः अत्यन्तं ऊर्ध्वं वैकुण्ठादिस्थानं अतिशयेन नयतीत्यर्थः। कुतोऽयं नियमः यतोऽयमिन्द्रः एधमानद्विट् स्वयोग्यतातिक्रमं इच्छमानानां द्वेषी । कुत एतत् उभयस्य देववर्गस्य असुरवर्गस्य च राजा नियामकः। तथा मनुष्यान् मनुष्यरूपान् विशः प्रजारूपान् जीवान् चोष्कूयते पुनः पुनः भूनरकस्वर्गेषु परिभ्रमयति । नतु कदापि तमः प्रापयति ऊर्ध्वं वा नयतीत्यर्थः ।। १०० ।।

**जना**— तां श्रुतिं पठति— **शृण्व इति** ।। वीरः प्रारब्धान्तगामी। इन्द्रः परमेश्वरः। उग्रं उग्रं उग्रस्वभावान् सर्वदैत्यवर्गान् दमायन्नन्धेतमसि दण्डयन् । अन्यमन्यं उग्रादन्यं सत्स्वभावान् अतिनेनीयमानः संसारमतिक्रामयन् अतिशयितं स्थानं नयन् वा । एधमानद्विट् स्वयोग्यतातिरेकेणैधमानं वर्धमानं द्वेष्टीति एधमानद्विट् । **शृण्वे** श्रूयते। तत्र हेतुं आह— **उभयस्येति** ।। उभयस्य देवासुरवर्गस्य राजा अधिपतिः। विशः प्रजारूपान् मनुष्यान् केवलराजसान् चोष्कूयते पर्यावर्तयति संसार एव क्षिपतीत्यर्थः ।। १०० ।।

**ताम्र**— 'त्रिविधा जीवसङ्घास्तु' 'तत्र देवा मुक्तियोग्या' इत्यादौ श्रुतिमप्याह— **शृण्व इति** ।। सुधायामियं (उभयलिङ्गाधिकरणे) श्रुतिरित्थं व्याख्याता। वीरोऽध्यवसितान्तगामी । इन्द्रः परमेश्वरः। उग्रमुग्रं सर्वान् दुष्टप्रकृतीन्। दमायन् नित्यनरकं प्रापयन् । अन्यमन्यं सर्वान् सत्स्वभावान् । अति नेनीयमानः संसारं भृशं अतिक्रामयन्। स्वयोग्यतातिरेकेणैधमानान् द्वेष्टीत्येधमानद्विट् शृण्वे श्रूयते । कुतः उभयस्य देवतासुरवर्गस्य राजा यत इति। किञ्च मनुष्यान् विश प्रजाः चोष्कूयते । नित्यं परिवर्तयति ।। १०० ।।

**जम्बु**— 'विष्णुर्हि दाता मोक्षस्य' इत्यारभ्य त्रिविधा जीवसङ्घास्तु' इत्याद्युक्तार्थे श्रुतिं पठति— **शृण्व इति** ।। वीरः महाबलः अध्यवसितान्तगामी वा । अत एवेन्द्रः परमैश्वर्यसम्पन्नः परमात्मा । शृण्वे श्रूयते

सर्ववेदेष्विति शेषः। किं कुर्वन् उग्रमुग्रं वीप्सायां द्विवचनम् । सर्वान् तामसान् द्वेषिणो दुष्टान् दमयन् । नित्यनिरयं प्रापयन् पुनः किं कुर्वन् अन्यमन्यं दुष्टेभ्यो अन्यान् सात्विकजीवान् मोक्षयोग्यान् । अतिनेनीयमानः अत्यन्तमूर्ध्वं वैकुण्ठादिस्थानं अतिशयेन नयन्नित्यर्थः। संसारमतिक्रामयन् वा। कुतोऽयं नियमः यतोऽयमिन्द्रः एधमानद्विट् स्वयोग्यतातिरेकेण एधमानानां द्वेषी । कुत एतत् उभयस्य देववर्गस्यासुरवर्गस्य राजा नियामकः। तथा मनुष्यान् मनुष्यरूपान् केवलराजसान्। विशः प्रजारूपान् जीवान् चोष्कूयते । एते पुनः पुनः भूनरकस्वर्गेषु परिभ्रामयति। न तु कदाचित्तमः प्रापयति ऊर्ध्वं नयतीत्यर्थः ।। १०० ।।

**भारतश्री**— उक्तार्थे प्रमाणमाह— **स एवेति** ।। वीरो महाबलः । इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा । शृण्वे श्रूयते । सर्वेषु वेदेष्विति शेषः । किं कुर्वन् उग्रमुग्रं वीप्सायां द्विर्वचनम् । सर्वान् तामसान् जीवानित्यर्थः। दमायन् तमः प्रापयित्वा निघ्नन् । पुनः किं कुर्वन् अन्यमन्यम् उग्रेभ्योन्यं सात्त्विकान् जीवानिति यावत् । अतिनेनीयमानः अत्यन्तमधिकं वैकुण्ठादिलोकं अतिशयेन नयतीत्यर्थः। कुतोऽयं नियमः । यतोऽयमिन्द्रः एधमानद्विट् स्वरूपमतिक्रम्येच्छतां द्वेषी । कुत एतदुभयस्य देववर्गस्यासुरवर्गस्य च राजा नियामकः । तथा विशः मनुष्यान् नित्यसंसारिजीवान् । चोष्कूयते पुनः पुनः स्वर्गनरकादिषु परिभ्रमयति ।। १०० ।।

**[१]'परा पूर्वेषां सख्या वृणक्ति**
**वितर्तुराणो अपरेभिरेति।**
**अनानुभूतीरवधून्वानः**
**पूर्वीरिन्द्रः शरदस्तर्तरीति' ।। १०१ ।।**

**व्यास**— कदाचिदसुरेभ्यो द्रुह्यन्नपि तैः सख्यं करिष्यति । देवानां प्रियोऽपि कदाचिदप्रियो भविष्यति किमिति जिज्ञासायामाह— **परेति** ।। पूर्वेषां सुरद्विषां सख्या सख्यानि परावृणक्ति । दूरतश्छिनत्ति । वितर्तुराणः त्वरमाणो परेभिर्देवैः सख्यान्येति । अनानुभूतीः परमेश्वरस्यैश्वर्याभावोपासनया स्वयमप्यैश्वर्यरहितान् अव नरके धून्वानः इन्द्रः पूर्वीः पूर्वाः शरदोऽतरत्, वर्तमानास्तर्तरीति । एष्यन्ति शरदः तरिष्यति ।। १०१ ।।

**वादि**— दैत्यैरपि बहुतरसेवायां कृतायां किमङ्गीकरोति? नेत्याह— **परेति** ।। पूर्वेषां पूर्वोक्तानां सुरद्विषां सख्या सख्यानि परावृणक्ति दूरतः छिनत्ति । वृञ् छेदन इति धातुः। दैत्यैः सेवायां कृतायामपि सुराणकेष्विव केनचिदुपायेन सेवामेव छिनत्ति। अतस्तेषां न कदाप्यूर्ध्वगतिरिति भावः। वितर्तुराणः विशेषेण त्वरमाणः। अपरेभिः उत्तरत्रोक्तैः देवैः। सख्यानि एति । अनानुभूतीः भगवदनुभवरहितान् । अनुभवाभावः सदातन इति सूचनाय नञि दीर्घः। न केवलमुग्राः किन्तु भगवदनुभवरहिताश्च । अवधून्वानः अधोलोके तमसि धून्वानः। अनेन दमनं नैहिकं किन्तु अधोलोकोत्तरकालीनं यातनारूपमिति सूचितम् । इन्द्रः पूर्वीः पूर्वाः शरदः संवत्सरान् एवमेवातरत् । इदानीं वर्तमानास्तर्तरीति । अतिशयेन तरति । एष्यन्तीः शरदः तरिष्यति । पूर्वीरिति अतीतप्रयोगं

१. ऋ.सं. ६-४७-१७ ।

तर्तरीतीति वर्तमानप्रयोगं च कुर्वन्त्याः क्रियोपलक्षणया भविष्यत्कालोपलक्षणया च कालत्रयेऽपि तरणमभिप्रेतम्। अन्यथा इन्द्र इत्युक्तपरमेश्वरत्वस्य कालान्तरे हानिःस्यादिति ज्ञेयम् ।। १०१ ।।

**सङ्क**— स एव पूर्वेषां पूर्वनिर्दिष्टानामुग्रशब्दोक्तानां सख्यानि परावृणाक्ति विनाशयति । न कदाचिदप्यसुरैश्शठमतिभिः कृतानि सख्यानि स्वीकरोतीत्यर्थः। अपरेभिरनन्तरनिर्दिष्टैरुग्रेतरप्रकृतिभिस्सह वितर्तुराणः विशेषेण त्वरन् सख्यानि एति। अनानुभूतीः सम्यगनुभवयोग्यताशून्यान् अघोध एव धून्वानः पूर्वीः शरदः अनादितोऽवतीर्य अतीतवत्सरास्तर्तरीति तीर्णवान् । अत उत्तरकालेऽपि एवमेव तरिष्यते भगवान् । न त्वनादितो वर्तमानां व्यवस्थामतिक्रम्यासुरप्रकृतीनामनुग्रहं दैवप्रकृतीनां वा निग्रहं करिष्यतीत्यर्थः ।। १०१ ।।

**वरद**— 'एधमानद्विट्' इत्युक्तं विवृणोत्युत्तरमन्त्रेण । इन्द्रः पूर्वेषां उग्रशब्दोक्तानां तमोयोग्यनां सख्या सख्यानि हिताचरणानि परावृणक्ति न स्वीकरोतीत्यर्थः। तथा अपरेभिः अन्यशब्दोक्तैः मुक्तियोग्यैः सह सख्यानि वितर्तुराणः त्वरमाणः सन् एति तेषां सख्यानि स्वीकरोतीत्यर्थः। तथा अनानुभूतीः सम्यगनुभवयोग्यताशून्यान् मिश्रज्ञानान् मध्यमजीवान् अवधून्वानः नरकादीन् प्रापयन् पूर्वीः शरदः अतीतानन्तसंवत्सरान् तर्तरीति अतिशयेन तीर्णवान्। उत्तरत्रापि एवं तरिष्यति । न तु कदापि व्यत्यासं करिष्यतीत्यर्थः ।। १०१ ।।

**जना**— असुरेषु द्वेषः देवेषु प्रीतिः कदापि न नश्यतीत्यत्र श्रुतिं पठति— **परेति** ।। वितर्तुराणः त्वरावान्। इन्द्रः परमैश्वर्यवान् । पूर्वेषां पूर्वश्रुतौ पूर्वमुक्तानां दैत्यानाम् । सख्या सख्यानि । परावृणक्ति परित्यजति। अपरेभिरपरैः साधुभिः सख्यानि एति प्राप्नोति । न तावदेतधिकमप्याह— **अनानुभूतीरिति** ।। अनानुभूतीः सम्यगनुभवरहितानवधून्वानोऽवमे संसारे वर्तयन् । यद्वा अभूतिरित्युपासां प्राप्ताननानुभूतीन् दैत्यान् अव अधस्तान्नरके धून्वानः क्षिपन् दुःखेन कम्पयन्वा पूर्वीः शरदः अतीतवत्सरानतरत् । इदानीं वर्तमानं तर्तरीत्यतिशयेन तरति । आगामिवत्सरान् तरिष्यतीति ।। १०१ ।।

**ताम्र**— परा पूर्वेषाम् । अतीतमन्त्रे पूर्वेषां पूर्वनिर्दिष्टानां उग्राणां सख्या सख्यानि परावृणक्ति परित्यजति। अपरेभिरपरैः साधुभिः सह । सख्यानि वितर्तुराणः अतिशयेन त्वरमण एति । अनानुभूतीः सम्यगसम्यगनुभवरहितान् अवधून्वानः अवमे संसारे वर्तयन्निन्द्रः पूर्वीः शरदः अतीतान् संवत्सरान् तीर्णः वर्तमानान् च तर्तरीति। आगामिनश्च तरिष्यतीति । अत्र मन्त्रद्वये असुराणामनादितो भगवद्भजनाभावो नित्यनरकावाप्तिश्च श्रूयते । देवानां सदा भगवद्भजनं मोक्षावाप्तिश्च । मानुषाणां सर्वदा संसार इति ।। १०१ ।।

**जम्बु**— 'एधमानद्विड्' इत्युक्तं विवृणोति उत्तरमन्त्रेण । इन्द्रः पूर्वेषां अतीतमन्त्रे पूर्वनिर्दिष्टानां उग्राणां सख्या सख्यानि परावृणक्ति त्यजति न स्वीकरोति । तथा अपरेभिः अन्यशब्दोक्तैर्मुक्तियोग्यैः सह वितर्तुराणः अतिशयेन त्वरमाणः एति गच्छति । तथा अनानुभूतीः सम्यगनुभवरहितान् मध्यमान् मिश्रज्ञानान् अवधून्वानः नरकान् प्रापयन् पूर्वीः शरदः अतीतान् संवत्सरान् तर्तरीति । अतिशयेन तीर्णवान् । उत्तरत्रापि एवं तरिष्यति । न तु कदापि व्यत्यासं करिष्यतीत्यर्थः । अत्र मन्त्रद्वये असुराणां अनादितो भगवद्भजनाभावो नित्यनरकावाप्तिश्च श्रूयते । देवानां भगवद्भजनं मोक्षावाप्तिश्च मानुषाणां सदा संसार इति ।। १०१ ।।

**भारतश्री**— 'एधमानद्विड्' इत्युक्तं विवृणोति उत्तरमन्त्रेण । इन्द्रः पूर्वेषां उग्रशब्दोक्तानां तमोयोग्यानाम् । सख्या सख्यानि विहिताचरणानि । परावृणक्ति स्वीकरोति । अपरेभिः अन्यशब्दोक्तैः मुक्तियोग्यैः सह सख्यानि वितर्तुराणो त्वरमाणः सन् एति । तेषां सख्यानि स्वीकरोतीत्यर्थः । अनानुभूतीः सम्यगनुभवयोग्यताशून्यान् मिश्रान् मध्यमान् जीवान् अवधून्वानो नरकादिप्रापयन् । पूर्वीः शरदः अतीतान् संवत्सरान् तर्तरीति अतिशयेन तीर्णवान् । उत्तरत्राप्येवं तरिष्यति । न कदाचिद्व्यत्यासं करिष्यतीत्यर्थः ।। १०१ ।।

> **[१]तमेवं विद्वानमृत इह भवति**
> **नान्यः पन्था अयनाय विद्यते।**
> **[२]तमेव विदित्वाऽति मृत्युमेति**
> **नान्यः पन्था विद्यतेऽयनाय ।। १०२ ।।**

**व्यास**— ज्ञानमेव मोक्षसाधनं नान्यदित्यत्र श्रुतिं च पठति— **तमेवमिति** ।। अयनाय मोक्षाय । तत्रैव श्रुत्यन्तरं पठति— **तमेवेति** ।। तं विदित्वैव मृत्युमतीत्यैव । ज्ञानस्य भक्तिभागत्वान्न भक्तेर्मोक्षसाधनत्वविरोधः ।। १०२ ।।

**वादि**— ज्ञानमेव मोक्षसाधनं नान्यदित्यत्र श्रुतीश्च पठति— **तमेवमिति** ।। तं परमात्मानं एवं सहस्रशीर्षत्वादिप्रकारेण इह विद्वानन्ते अमृतो भवति। अयनाय मोक्षाय । अतिमृत्युं मृत्युमतिक्रम्य वर्तमानं मोक्षम् ।। १०२ ।।

**सङ्क**— 'विमुक्तिर्विद्यया तथा' इत्यादिना ज्ञानादेव मोक्षो नान्यथेति यदुक्तं तच्छ्रुत्या उपपादयति— **तमेवमित्यादिना** ।। १०२ ।।

**वरद**— 'विमुक्तिर्विद्यया तथा' इत्युक्तं श्रुत्या समर्थयते— **तमिति** ।। तं पुरुषं एवं सहस्रशीर्षत्वादिना विद्वान् अमृतो मुक्तो भवति । न तु अयनाय मोक्षाय अन्यः पन्था विद्यत इत्यर्थः। तमेवमुक्तरीत्या विदित्वा ज्ञात्वा मृत्युं संसारमत्येति अतिक्रान्तो भवति नतु संसारतरणाय अन्यो मार्गोऽस्तीत्यर्थः ।। १०२ ।।

**जना**— 'विमुक्तिर्विद्यया' इत्यत्र श्रुतिमुदाहरति— **तमेवमिति** ।। तं पुरुषमेवं सहस्रशीर्ष इत्यादिप्रकारेण इह विद्वानमृतः भवति । अयनाय मोक्षाय पन्थाः साधनम् । तत्रैव श्रुत्यन्तरं पठति— **तमिति** ।। विदित्वा ज्ञात्वा मृत्युं संसारमत्येति ज्ञानस्य भक्त्यैकदेशत्वात् 'भक्तिर्मोक्षाय केवला' इत्यस्य न विरोधः ।। १०२ ।।

**ताम्र**— 'तदा मुक्तिश्च देवानां यदा प्रत्यक्षगो हरिः' इत्यत्र प्रमाणमाह— **तमेवमिति** ।। १०२ ।।

**जम्बु**— 'विमुक्तिर्विद्यया' इति ज्ञानादेव मोक्षो नान्येनेति यदुक्तं तच्छ्रुत्योपपादयति— **तमिति** ।। तं पुरुषं एवं ज्ञात्वा सहस्रशीर्षत्वादिना विद्वान् इह मध्यमाधिकारिषु जानन् अमृतो मुक्तो भवति । अयनाय मोक्षाय

---

१. चित्त्युपनिषत् । २. श्वेताश्वतर ३-८, 'तमेवं' इति वरदराजीयः पाठः ।

अन्यः पन्थाः साधनं न विद्यते । तत्रैव श्रुत्यन्तरं पठति— **तमिति** ।। तं परमात्मानं एवमुक्तरीत्या विदित्वा ज्ञात्वा मृत्युं संसारं अत्येति अतिक्रमते । अयनाय संसारतरणाय अन्यो ज्ञानातिरिक्तः मार्गो न विद्यते। ननु प्राक् प्रसादादेव मोक्षो नान्येनेत्युक्तं अत्र ज्ञानादेव मोक्षो नान्येनेत्युच्यते । अतो विरोध इति चेत् । अधिकारिनिष्ठसाधनेषु ज्ञानस्योत्तमत्वं ईश्वरनिष्ठसाधनेषु प्रसादस्य उत्तमत्वमिति व्यवस्थया विरोधः परिहर्तव्यः। ननु तथापि भक्त्यैव मोक्षो नान्येनेत्युक्तं अत्र ज्ञानेनैव मोक्षो नान्येनेति चोच्यते अतो विरोध इति चेत् ज्ञानस्य भक्तिभागत्वात् न विरोधः ।। १०२ ।।

**भारतश्री**— 'विमुक्तिर्विद्यया' इत्युक्तं श्रुत्या समर्थयते— **तमिति** ।। अयनाय मोक्षाय । मृत्युं संसारमत्येति ।। १०२ ।।

**[1]'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ।। १०३ ।।**

**व्यास**— भक्तिरेव मोक्षसाधनम्। अन्यानि तु तत्साधनानीत्यत्र प्रमाणान्तरमाह— **यस्येति** ।। १०३ ।।

**वादि**— मुमुक्षोर्हरिभक्तिवत् गुरुभक्तिरप्यपेक्षितेति प्रमाणेन द्रढयति— **यस्येति** ।। देवे परा भक्तिरिति वदता गुरौ न तादृशी भक्तिः। यथा तथेति तु दार्ढ्यमात्रे दृष्टान्त इति सूचितम् ।। १०३ ।।

**सङ्क**— 'भक्त्यैव मोक्ष' इति यदुक्तं तच्छ्रुत्या समर्थयति— **यस्येति** ।। अयमर्थः - यस्य पुरुषस्य देवे विष्णौ परा सर्वत उत्कृष्टा भक्तिरस्ति। देवे यथा भक्तिरस्ति तथा तदनुसारेणैव गुरावपि भक्तिरस्ति । तस्य महात्मनः एते पूर्ववाक्यकथिताश्शमदमादयोऽर्थाः प्रकाशन्ते भक्तिद्वारा मोक्षदा भवन्ति ।। १०३ ।।

**वरद**— 'भक्त्यैव मोक्ष' इत्युक्तं श्रुत्याप्युपपादयति— **यस्येति** ।। यस्य महात्मनोऽधिकारिणो देवे हरौ परा उत्कृष्टा भक्तिरस्ति तस्योत्कृष्टत्वात्। यथा उत्कृष्टत्वानतिक्रमेण देवे भक्तिः तथा स्वस्वरूपानतिक्रमेण गुरौ भक्तिः यस्यास्ति तस्य एते पूर्वोक्ताः शमादयोऽर्थाः मोक्षसाधनत्वेन कथिताः प्रकाशन्ते न तु भक्तिं विनेत्यर्थः ।। १०३ ।।

**जना**— साधनबोधिकां श्रुतिमुदाहरति— **यस्येति** ।। यस्य देवे हरौ परा सर्वोत्कृष्टा भक्तिरस्ति। यथा योग्यतानुसारेण देवे देवेषु च। सामान्ये एकवचनम् । तथा शब्दः समुच्चये यथातथाशब्दौ आवर्तनीयौ गुरुषु च योग्यतानुसारेण यस्य भक्तिरस्ति तस्य एते कथिता अर्थाः शमदमादयः प्रकाशन्ते । तस्य विशेषणं महानात्मा ज्ञानं यस्येति ।। १०३ ।।

**ताम्र**— 'मोक्षो ज्ञानञ्च क्रमशो मुक्तिगो भोग एव च' इत्यादिना स्वोत्तमप्रसादेन मोक्षादेः प्राप्यत्वात् तेष्वपि भक्तिः कर्तव्येत्युक्तम् । तत्र हरिभक्त्यैव मोक्ष इत्यत्र च प्रमाणमाह— **यस्येति** ।। [2]"यथा देवे देवयोग्यता तथा

---

१. श्वेताश्वतर ६-२३ । २. न्यायसुधा ३-४ ।

गुरौ गुरुयोग्यतेत्यर्थः' इति सुधायाम् । तस्य पुंसः कथिताः पूर्वमुक्ताः एते शमादयोऽर्थाः मुक्तिसाधनतया प्रकाशन्ते इत्यर्थः ।। १०३ ।।

**जम्बु**— 'भक्त्यैव मोक्ष' इति यदुक्तं तच्छ्रुत्या समर्थयति । महान् आत्मा ज्ञानं यस्य स तथा। यस्य देवे हरौ परा सर्वोत्कृष्टा भक्तिरस्ति यथायोग्यानुसारेण । देवे देवेषु च । सामान्ये एकवचम् । तथाशब्दः समुच्चये। यथा तथा शब्दवावर्तनीयौ गुरौ गुरुषु च यथायोग्यतानुसारेण भक्तिरस्ति । तस्य एते कथिताः अर्थाः शमदमादयः मोक्षसाधनत्वेन कथिताः प्रकाशन्ते न तु भक्तिं विनेत्यर्थः ।। १०३ ।।

**भारतश्री**— भक्त्या मोक्ष इत्युक्तं श्रुत्याह— **यस्येति** ।। १०३-११९ ।।

**राम— यस्य देवे परा भक्तिः यथा देवे तथा गुरौ** । इत्यत्र यस्याधिकारिणो देवे नारायणे परा भक्तिः सर्वोत्तमत्वज्ञानपूर्विका भक्तिर्भवति । देवैः ब्रह्मादिदेवतासमूहे यथा तारतम्यानुसारेण भक्तिर्भवति । तथाशब्द-स्समुच्चये । गुरावपि ज्ञानोपदेष्टर्यपि भक्तिर्भवति । तस्यैते कथिताः उपदिष्टाः शास्त्रार्थः प्रकाशन्त इत्यर्थः । तदुक्तं बृहद्भाष्ये—

> "[1]सर्वोत्तमतया ज्ञानपूर्वकस्नेह एव तु ।
> भक्तिर्विष्णौ समुद्दिष्टा तदन्येषां तु योग्यतः ।
> विष्णुभक्तिर्देवभक्तिर्गुरुभक्तिस्तथैव च ।।' इति ।। १०३-१२९ ।।

**भक्त्यर्थान्यखिलान्येव भक्तिर्मोक्षाय केवला।**
**मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी ।। १०४ ।।**

**व्यास**— फलप्राप्त्यनन्तरं साधनत्वाद्भक्तिर्निवर्तते किमिति जिज्ञासायामाह— **मुक्तानामपीति** ।। १०४ ।।

**वादि**— फलप्राप्त्यनन्तरं साधनत्वाद्भक्तिर्निवर्तते किमिति जिज्ञासायामाह— **मुक्तानामपीति** ।। १०४ ।।

**सङ्क**— दानतीर्थादयो धर्मा भक्त्याख्यसेवाया अङ्गानि भक्तिस्त्वेका विमुक्तय इति यदुक्तं तच्छ्रुत्या दृढीकरोति — **भक्त्यर्थानीति** ।। ननु मोक्षसाधनभूता भक्तिर्मोक्षेऽस्ति न वा इत्यत आह— **मुक्तानामपीति** ।। अस्तीति शेषः। सा कथं तिष्ठतीत्यत आह— **नित्येति** ।। १०४ ।।

**वरद**— यतोऽखिलानि शमदमादीनि भक्त्यर्थाः भक्तिफलकानि। भक्तिस्तु केवला मोक्षाय भवतीत्यर्थः। मोक्षार्थं भक्तिश्चेन्मोक्षानन्तरं किं भक्त्येत्यत आह— **मुक्तानामपीति** ।। मोक्षात्प्राक् साधनरूपा भक्तिः मोक्षानन्तरं फलरूपा अवतिष्ठत इत्यर्थः ।। १०४ ।।

**जना**— दानादयः भक्तिकारणानि। भक्तिरेव मुक्तिसाधनमित्यत्र श्रुतिमुदाहरति— **भक्त्यर्थानीति** ।। भक्त्यर्थानि एव इत्यन्वयः। ननु फलप्राप्तिपर्यन्तं भक्तिः, तदनन्तरं सा निवर्तत इत्यत आह— **मुक्तानामिति** ।। मुक्तानामपि भक्तिरस्ति हि । सा कथं तिष्ठतीत्यत्राह— **नित्येति** ।। १०४ ।।

---

१. बृ.भा. ३-५ ।

**ताम्र**— दानतीर्थानि भक्त्यङ्गानि इत्यत्र प्रमाणमाह— **भक्त्यर्थानीति** ।। भक्तिः साधनम्। मुक्तिप्राप्त्यनन्तरं नास्तीति प्रतीतिः स्यात् फलप्राप्तौ साधननिवृत्तिदर्शनात्। तन्निवृत्त्यर्थमाह— **मुक्तानामिति** ।। भक्तिरनुवर्तत इति शेषः। प्रेमविशेषो हि भक्तिर्नाम उपकारकत्वज्ञानाज्जाता प्रेमकृतमहोपकारे नितरां वर्तत इत्येव खलु युक्तं न तु हीयत इति । अत एवानुव्यख्याने [1]"अनुवर्तते च सा भक्तिः मुक्तौ' इत्युक्तम् । सुधायामपि एतैरेव वाक्यैः उपपाद्यते तत् । 'तदेतत् अस्तीत्यनुक्त्वा अनुवर्तत इति वदता सूचितम्' इत्युक्तम्। तर्हि तस्याः फलवत्वं स्यात्तथा च मुक्तावधिकार्जनापात इत्यत आह— **नित्यानन्देति** ।। प्राक्कर्तव्यतया कृता अतः साधनरूपा। मुक्तौ तु स्वभावभूता अतः आविर्भूतफलरूपैवेति भावः ।। १०४ ।।

**जम्बु**— ज्ञानादीनि भक्तिकारणानि भक्तिरेव मुक्तिसाधनमित्यत्र श्रुतिमुदाहरति— **भक्त्यर्थानीति** ।। अखिलानि दानतीर्थानि भक्त्यर्थान्येव भक्तिफलकान्येव। केवलं भक्तिस्तु मोक्षाय न भवतीत्यर्थः। फलप्राप्तिपर्यन्तं भक्तिः तदनन्तरं सा निवर्तते किम्? इत्यत आह— **नित्यानन्दस्वरूपिणी** ।। मोक्षात् प्राक्कर्तव्यतया कृतः अतः साधनरूपा मुक्तौ तु स्वभावभूता आविर्भूतफलरूपैव ।। १०४ ।।

**ज्ञानपूर्वः परः स्नेहो नित्यो भक्तिरितीर्यते ।**
**इत्यादि वेदवचनं साधनप्रविधायकम् ।। १०५ ।।**

**सङ्क**— भक्तिलक्षणमाह— **ज्ञानेति** ।। १०५ ।।

**वरद**— ज्ञानपूर्वः माहात्म्यज्ञानपूर्वः परः सर्वोत्कृष्टः नित्यः स्नेहो भक्तिः। न पदार्थान्तरमित्यर्थः। अतो नित्यानन्दस्वरूपत्वं उक्तं युक्तमिति भावः। 'तमेवं' इत्याद्युक्तमुपसंहरति— **इत्यादीति** ।। इति उदाहृतवचनं आदिः यस्य तत् इत्यादि वेदवचनम्। साधनप्रविधायकं साधनविधायकमस्तीत्यर्थः ।। १०५ ।।

**जना**— भक्तिलक्षणमाह— **ज्ञानेति** ।। माहात्म्यज्ञानपूर्वः स्त्रीपुत्रादिभ्यः परः श्रेष्ठः स्नेहः सुदृढः। 'तमेवं' इत्यादि वेदवाक्यं साधनप्रविधायकं भवतीति शेषः ।। १०५ ।।

**ताम्र**— ननु 'तमेवं विद्वान्' इत्यादौ ज्ञानादेव मुक्तिरित्युच्यते। कथं भक्तेर्मोचकत्वं विरोधादित्यतो भक्तेर्लक्षणमाह — **ज्ञानेति** ।। तथा च ज्ञानस्य भक्तिभागत्वात् 'तमेवं विद्वान्' इत्यादौ ज्ञानशब्देन भक्तेर्लक्ष्यत्वान्न विरोध इति भावः। तदुक्तमनुव्याख्याने [2]"ज्ञानस्य भक्तिभागत्वाद्भक्तिर्ज्ञानमितीर्यते' इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये वदन्ति श्रुतय इति । ननु ज्ञानपूर्वःस्नेहः भक्तिरिति ज्ञानोपसर्जनत्वं भक्तेरयुक्तम् । 'महत्त्वबुद्धिभक्तिस्तु स्नेहपूर्वाभिधीयत' इति स्नेहोपसर्जनज्ञानस्य भक्तित्वोक्तेः क्वचिज्ज्ञानस्नेहसमाहारो भक्तिरिति समप्रधानयोस्तयो-स्तत्वोक्तेः इति चेत्, गोपिकाद्या देवा ऋषयो (देव्य) इत्यधिकारिभेदेन त्रित्वोपपत्तेः। तदुक्तं सप्तमस्कन्धतात्पर्ये

[3]"बहुमानस्नेहसाम्याद्देवा भक्ता इतीरिताः।
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः।
बहुमानोऽपि देवानां ऋषिभ्योऽप्यधिको मत' इत्यादि।

१. अनु. ३-३-१४०'१, ताद्विद्याधिकरणम् । २. अनु. ३-४-१६२० । ३. भा.ता. ७-१-३१ ।

'भक्तिर्मोक्षाय केवला' इत्ययुक्तम्। 'यस्य प्रसादात्' इत्युक्त्वा 'नापरेण' इति निषेधादित्यत आह— **इत्यादीति** ।। जीवनिष्ठसाधनप्रतिपादकमित्यर्थः। 'श्रुण्वे वीरम्' 'परा पूर्वेषाम्' इत्यत्र जीवत्रैविध्योक्तावपि मोक्षयोग्यताया अपि ज्ञानमोक्षौ प्रति साधनत्वस्य 'स्वभावाख्या योग्यता' इत्यत्र स्पष्टमुक्तत्वात् 'इत्यादि वेदवचनं साधनप्रविधायकम्' इति योग्यताया अपि साधनत्वं युक्तम् ।। १०५ ।।

**जम्बु**— ननु फलस्य वृत्तित्वेन मुक्तौ भक्तिरेव नास्तीति किं न स्यादित्यत आह— **ज्ञानपूर्वमिति** ।। ज्ञानपूर्वः परः सर्वोत्कृष्टः नित्यः स्नेहो भक्तिः। न पदार्थान्तरमतो मुक्तानन्दस्वरूपत्वं युक्तमिति भावः। प्रेमविशेषो हि भक्तिर्नाम उपकारकत्वज्ञानाज्जातो हि प्रेमः कृतमहोपकारणेन नितरां वर्धते इत्येव खलु युक्तमित्युपपादनार्थं पुनर्भक्तिलक्षणकथनमिति भावः। 'तमेवम्' इत्यादिवेदवाक्यं साधनप्रविधायकं भवतीति शेषः ।। १०५ ।।

**निश्शेषधर्मकर्ताप्यभक्तस्ते नरके हरे।**
**सदा तिष्ठति भक्तश्चेद् ब्रह्महापि विमुच्यते" ।। १०६ ।।**

**व्यास**— भक्तिरेव श्रेष्ठं साधनमित्यत्र स्मृतीश्च पठति **निःशेषेति** ।। १०६ ।।

**वादि**— भक्तिरेव श्रेष्ठं साधनमित्यत्र स्मृतीश्च पठति **निःशेषेति** ।। १०६ ।।

**मङ्क**— भक्तिरेव मोक्षसाधनं नान्यदिति वक्तुं यदुक्तं भक्तेर्माहात्म्यं तद्भगवद्वाक्यैर्दर्शयति— **निःशेषेति** ।। १०६-१०७ ।।

**वरद**— सर्वसाधनेषु भक्तेः प्राधान्यं पुराणान्तरवचनैरपि दर्शयति— **निःशेषेत्यादिना** ।। हे हरे ते अभक्तो निःशेषधर्मकर्ताऽपि सर्वधर्मानुष्ठाताऽपि सदा नरके तिष्ठति। ते भक्तश्चेत् ब्रह्महापि विमुच्यते। तस्माद्दोषादिति शेषः ।। १०६ ।।

**जना**— इदानीं पूर्वोक्तार्थेष्वेव पुराणवाक्यानि उदाहरति— **निःशेषेति** ।। हे हरे ते अभक्तः निःशेषधर्मकर्तापि। ब्रह्महापि भक्तश्चेत् ।। १०६ ।।

**ताम्र**— दानतीर्थादिधर्माणां भक्त्यन्वयानुविधानेनैव फलप्रदत्वमन्यथा विपरीतफलप्रदत्वमिति प्रमाणेनाह— **निश्शेषेति** ।। १०६ ।।

**जम्बु**— भक्तेः प्राधान्ये प्रमाणमाह— **निश्शेषेति** ।। हे हरे ते अभक्तः निश्शेषधर्मकर्तापि सर्वधर्माननुष्ठातापि सदा नरके तिष्ठति। ते भक्तश्चेत् ब्रह्महापि विमुच्यते। तस्मात् दोषादिति शेषः ।। १०६ ।।

**धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत।**
**पापं भवति धर्मोऽपि यो नभक्तैः कृतो हरे ।। १०७ ।।**

**व्यास**— नभक्तैरित्येकं पदम् ।। १०७-१०८ ।।

**वरद**— हे अच्युत तव भक्तैः अधर्मः कृतोऽपि धर्मो भवति । लोकदृष्ट्या अधर्मत्वेन प्रतीयमानोऽपि धर्म एवेति भावः। नभक्तैरित्येकं पदम् । नसमासोऽयं ननु नञ्समासः। अतो नस्य लोपाभावः। तथा च अभक्तैरित्यर्थः। यो धर्मोऽपि कृतः स पापं भवति । लोकदृष्ट्या धर्मत्वेन प्रतीयमानोऽपि भक्तिराहित्येन पापमेव भवतीति भावः ॥ १०८ ॥

**जना**— अच्युत तव भक्तैः कृतोऽधर्मोऽपि अधर्मवत् प्रतीयमानः ब्रह्महत्यादिः धर्मः धर्मसाध्यफलसाधनं भवति । नभक्तैः अभक्तैः भक्तविरोधिभिर्वा कृतः धर्मोऽपि यज्ञादिः पापं पापफलसाधनं भवति ॥ १०७ ॥

**ताम्र**— नभक्तैरित्येकं पदम् । यथा वृत्रहत्या । यथा पौण्डरीको याग इति बोध्यम् ॥ १०७ ॥

**जम्बु**— तदेवोपपादयति— **धर्मो भवतीति** ॥ हे अच्युत तव भक्तैः कृतोऽधर्मोऽपि अधर्मवत्प्रतीयमानः ब्रह्महत्यादिर्धर्मः धर्मसाध्यफलसाधनः भवति । हरे नभक्तैः अभक्तैः भक्तिविरोधिभिर्वा कृतधर्मोऽपि यज्ञादि पापसाधनफलसाधनं भवति इति । ***नारायणाध्वरीये*** तु अधर्मत्वेन प्रतीयमानोऽपि यथा इन्द्रस्य वृत्रहत्यादिः 'इन्द्रो वै वृत्रं हत्वा महान् अभवत्' इति श्रुतेः। [1]"क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुण' इति भागवतोक्तेश्च। यद्वा भक्तैः कृतोऽधर्मोऽपि धर्मो भवति न दोषाय भवतीत्यर्थः। तदुक्तं ***विजयध्वजीये*** [2]"अजीगर्तस्य पुत्रविक्रयः' [3]'विश्वामित्रस्य श्वभक्षणवृत्तिः' 'सप्तर्षीणां शवभक्षणोद्योगः' न दोषायेति ॥ १०७ ॥

**भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ १०८ ॥**

**वादि**— **अनन्ययेत्यत्र** न विद्यते अन्यः विषयो यस्याः सा अनन्येत्यर्थः ॥ १०८ ॥

**सङ्क**— भक्त्यैव न अन्यया । रमाब्रह्मादिषु क्रियमाणाया भक्तेः साकाशादतिशयेन क्रियमाणया मद्विषयया। अहं तत्त्वेन यथावत्स्वरूपेण पारोक्ष्येण ज्ञातुं आपरोक्ष्येण द्रष्टुं च मुक्तौ मयि प्रवेष्टुं च शक्य इत्यर्थः। ननु ज्ञानादेव मोक्षो नान्येनेत्युक्तम्। भक्त्यैव मोक्षो नान्यथेति चोक्तम् । अतस्तत्प्रतिपादकवाक्ययोर्विरोधादप्रामाण्यमेवेति चेन्मैवम् । ज्ञानेनैव मोक्षो न कर्मणेत्यभिप्रायेण भक्त्यतिशयत्वाज्ज्ञानस्य तयोरेवैक्याभिप्रायेण च तज्ज्ञानेनैव मोक्ष इति वचनार्थः। भक्त्यैव मोक्ष न द्वेषेणेत्यभिप्रायेण भक्त्यैव मोक्षः इत्येतद्वचनार्थः। अतो न विरोधः ॥ १०८ ॥

**वरद**— हे परन्तप अर्जुन । एवंविधोऽहं अनन्यया रमाब्रह्मादिषु एवं अविद्यमानया भक्त्या तत्त्वेन यथार्थत्वेन परोक्षेण ज्ञातुं तथा तत्त्वेन द्रष्टुं साक्षात्कर्तुं तदनन्तरं प्रवेष्टुं शक्यो भवामीत्यर्थः। अत्र भक्तेः ज्ञानघटितमूर्तित्वेन 'ज्ञानेनैव मोक्षो' 'भक्तिर्मोक्षाय केवला' इत्यनयोर्न विरोध इति ज्ञातव्यम् ॥ १०८ ॥

**जना**— एवंविधो विश्वरूपो अहम् । अनन्यया रमाब्रह्मादिषु क्रियमाणायाः भक्तेः अतिशयितया भक्त्या। तत्त्वेन यथावत्परोक्षेण ज्ञातुं अपरोक्षेण द्रष्टुं मुक्तौ प्रवेष्टुं शक्यः। इदं प्रमाणत्रयं भक्तेर्मोक्षसाधनत्रये ॥ १०८ ॥

---

१. भा. ११-२२-१ । २. भा. ९-८-७६ । २. म.भा. शान्तिपर्वणि १४१ अध्याये द्रष्टव्या ।

**ताम्र**— न विद्यते एतदन्यो विषयो यस्याः सानन्या। 'यादृशी तत्र भक्तिः स्यात्' इति वचनात् ।। १०८ ।।

**जम्बु**— परन्तप परसंहारक हे अर्जुन । एवं विधः विश्वरूपः अहम्। अनन्यया अन्याविषयया ब्रह्मादिष्वविद्यमानया तद्भक्त्यपेक्षयातिशयितया भक्त्या

[1]''यादृशी मयि भक्तिस्स्यात्तादृश्न्यत्र नैव चेत्।
अनन्यभक्तिः सा ज्ञेया विष्णोरेवतु सा भवेत् ।।' इत्युक्तेः ।

तत्त्वेन यथार्थत्वेन परोक्षेण ज्ञातुं तथा तत्त्वेन द्रष्टुं साक्षात्कर्तुं तदनन्तरं मुक्तौ प्रवेष्टुं च शक्यो भवामि । १०८ ।।

**[2]अनादिद्वेषिणो दैत्या विष्णौ द्वेषो विवर्द्धितः।**
**तमस्यन्धे पातयति दैत्यानन्ते विनिश्चयात् ।। १०९ ।।**

**व्यास**— ननु द्वेषोऽपि मोक्षसाधनं श्रूयते तत्कथं भक्तिरेव मोक्षसाधनमित्यत आह—**अनादीति** ।। अन्ते [3]परि सायामाह— **मुक्तामपीति** ।। १०९ ।।

**सङ्क**— ननु 'भक्त्यर्थान्यखिलान्येव' इति 'भक्तिर्मोक्षाय केवला' इति मुक्तिसाधनं भक्तिरेवेत्युक्तम् । अन्धन्तमः प्राप्तौ किं साधनमित्याशङ्क्य तत्साधनं विविच्य पुराणवचनैः दर्शयति— **अनादीति** ।। अन्ते द्वेषसमृद्ध्यनन्तरं इत्यर्थः ।। १०९ ।।

**वरद**— ननु भक्तेः मोक्षचरमकारणत्वमुक्तं किं पुनः अन्धन्तमसः चरमकारणमित्यत आह— **अनादीति**।। यथा देवा अनादिभक्ता एवं दैत्या अपि अनादिद्वेषिणः। यथा भक्तिर्विष्णौ विवर्धिता मुक्तिं प्रापयति । एवं विष्णौ द्वेषो विवर्धितो अन्ते कल्पावसाने दैत्यानन्धे तमसि पातयतीत्यर्थः ।। १०९ ।।

**जना**— मोक्षसाधनमुक्त्वा तमःसाधनमाह— **अनादीति** ।। दैत्या अनादिद्वेषिण इति स्वरूपकथनम्। तेन मोक्षोऽपि तादृशो ज्ञेयः। विष्णौ विवर्धितः सम्यगेधितो द्वेषः। दैत्यानन्ते द्वेषसमृद्ध्यनन्तरं विनिश्चयादन्धेतमसि पातयति ।

यद्वा अन्ते ब्रह्मदिनप्रलयान्ते ।

[4]''आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः।
ततः पतत्यधो यस्मादुत्थानं नैव तु क्वचित् ।।' इति

एकादशस्कन्धतात्पर्यात् । अस्यार्थः। जीवेशत्वं विजानतः द्वेषपूर्त्यनन्तरमारब्धभोगार्थं यज्जन्म तदाभूतसंप्लवाद्दिनप्रलयपर्यंन्तम्। दिनप्रलयादर्वाग्यथायोग्यं केषाञ्चिदुक्तोक्तकाले केषाञ्चित् कलिपातकाले । न तु तदूर्ध्वमारब्धभोगः यथा सतां सर्वेषां शतब्रह्मकालादर्वाक् । ततः प्रारब्धभोगानन्तरं संयमनीभोगानन्तरम् ।। तमःपात इति ।। ये दैत्येषु नीचाः त एव कलिना सह तमः गच्छन्ति । न तु श्रेष्ठाः। इदमुक्तं स्कान्दे

१. गी.ता. ७-१७ । २. 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम्। मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः। यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम्। कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित्।' इति शान्तिपर्वणि (३५६अ/५-६) । ३. 'अन्ते परिपाकान्ते।अन्धेतमसि प्रापयति' इति भाव्यमिति भाति । ४. भा.ता. ११-३-७ ।

'दैत्यानामेव सर्वेषां यदा कलियुगात्ययः।
कलिना सह गच्छन्ति नीचा ये निरयालयाः ।।' इति ।

कलियुगात्ययः। कलेः पूर्वकलेः युगेन कालविशेषेणाभिमानलक्षणसम्बन्धस्यात्ययो अभावो यदा । यद्वा कलिना युक् कालेन योगः सम्बन्धस्तस्यात्ययो सम्यक् नाशः ब्रह्मरात्र्यन्ते अथवा दिनान्ते ब्रह्मरात्रौ कलेः सुप्तत्वात्। कालाभिमानिनः कालेन सम्बन्धाभावात् । इदमयुक्तं 'सुप्ताः सृतिस्थाः सर्वेऽपि तमोगा अपि सर्वश' इति तदा सर्वेषां दैत्यानां मध्ये ये नीचाः प्रारब्धभोगार्थं निरयगास्ते कलिना सह तमः गच्छन्ति । स्वां गतिं निस्यालया' इति पाठं कल्पयन्ति । तत्र षष्ठ्या अनन्वयः। अत एवोक्तमाचार्यैः

[१]'द्वेषात्स सर्वजगदेकगुरोः स्वकीयैः पूर्वप्रमापितजनैः सहितः समस्तैः।
धात्र्यादिभिः प्रतिययौ कुमतिस्तमोऽन्धमन्येऽपि चैवमुपयान्ति हरावभक्ताः ।।' इति ।

तथा

[२]'समन्त्रिभिर्मन्त्रिपुत्रैः समेतो जगाम कृष्णावज्ञयान्धन्तमश्च'

तथा

[३]'स च ब्रह्माहं वासुदेवोऽस्मि नित्यमिति ज्ञानादगमत्तमोऽन्धम्।
साहाय्यकृच्चास्य च काशिराजो यथैव किर्मीरहिडिम्बसाल्वाः ।।
अन्ये च दैत्या अपतंस्तमोन्धं तथैव सोऽप्यपतत्पापबुद्धिः ।।'

इत्यादिना एतस्यनिश्चयपरत्वेन व्याख्याने शेषा यास्यन्ति इत्यादिप्रयोगविशेषाः न स्युः। भूतसम्प्लवस्तु दिनप्रलये इत्युक्तं विष्णुपुराणे । तथाहि—

[४]'आभूतसम्प्लवं स्थानममृतत्वं विभाव्यते।
त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते ।।
ब्रह्महत्याश्वमेधाभ्यां पुण्यपापकृतो विधिः।
आभूतसंप्लवान्तन्तु फलमुक्तं तयोर्द्विज ।।
यावन्मात्रे प्रदेशे तु मैत्रेयावस्थितो ध्रुवः।
क्षयमायाति तावत्तु भूमेराभूतसम्प्लवात् ।।' इति ।

अस्यार्थः– आभूतसम्प्लवं आसम्यग्भूतानां सम्प्लवः अवस्थानं यस्मिन् तत्वस्थानममृतत्वमिति विभाव्यते उपचर्यते । चिरकालस्थायित्वात् । उपचारे बीजमाह— त्रैलोक्येति ।। भूम्यादिलोकत्रयस्य स्थितिकालोऽयं ब्रह्मणः दिवसः अपुनर्मारः पौनःपुन्येन भृशं वा मृत्युशून्य उच्यते। तस्माल्लोकत्रयनाशात् उपचारादमृतत्वमित्यर्थः। प्रसङ्गादस्यैव पुण्यपापभोगावधित्वमाह— ब्रह्महत्येति ।। अत्र यथायोग्यं सम्बन्धः। अश्वमेधब्रह्महत्याभ्यां पुण्यपापकृतः पुरुषस्य त्रैलोक्यावस्थितिः कालः। विधिर्विधीयतेऽवधित्वेनेति विधिः पुण्यपापकृतोः फलभोगविधिः इत्यर्थः। तदेव स्पष्टयति— आभूतेति ।। तत्तस्मात्तयोः पुण्यपापयोः फलं आभूतसम्प्लवाद्दिनप्रलयपर्यन्तम्। तदुक्तं एकादशस्कन्धतात्पर्ये । [५]'महापातकजन्यं च कल्पावधिसामीरितं' इति । दिनप्रलये जलप्रलयावधिमाह—

१. म.ता.नि. १३-१३२ । २. म.ता.नि. २०-१०३ । ३. म.ता.नि. २२-२१९ । ४. वि.पु. २-८- ९५-९७ । । ५. भा.ता. ११-१४-३० ।

यावदिति ।। भूमिमारभ्य ध्रुवोपलक्षितस्वर्गान्तं लोकत्रयं नश्यति इत्यर्थः। एतस्य महाप्रलयपरत्वे त्रैलोक्यस्थितिकाल इति, तथा ध्रुवपर्यन्तं लोकनाशकथनम्, महापातकजन्यमिति तात्पर्यं च विरुध्येत। यत्तु

'आभूतसम्प्लवं ह्येतदहोरात्रं प्रभोः स्मृतम्।
त्रैलोक्येशानि सत्वानि स्थावराणि चराणि च ।।
आभूतेभ्यः प्रलीयन्ते तस्मादाभूतसम्प्लवः।
अग्रे भूतः स भूतानां तस्माद्भूतः प्रजापतिः ।।
आभूताच्च प्लवन्ते वै तस्मादाभूतसम्प्लवः ।।'

इति वचनादाभूतसम्प्लवशब्दो महाप्रलयवाचीति चेन्न । अत्र प्रभुशब्देन हरिरभिधीयते । अपि तु चतुर्मुख एवोच्यते । येन महाप्रलयवाचीस्यात् । तथा चास्यार्थः। एवं ब्रह्मणः एतदहोरात्रं आभूतसम्प्लव इति स्मृतं हि। आभूतशब्दं निर्वक्ति— त्रैलोक्येशानीति ।। यस्मात्स्थावराणि चराणि सत्वानि भूतेभ्यः आभूतपर्यन्तं पञ्चभूतानि विना प्रलीयन्ते । तस्मादाभूतसम्प्लवेत्युच्यते । प्रकारान्तरेण आभूतशब्दं निर्वक्ति— अग्रेति ।। स प्रजापतिः भूतानामग्रे आदौ भूतो जातः तस्मात्प्रजापतिर्भूतः। आदौ जातत्वमत्रभूतशब्दप्रवृत्तिनिमित्तमित्यर्थः। भूतात्प्रजापतेः सत्त्वानि आप्लवन्ते नश्यन्ति वै । यद्वा आभूतादित्यत्र आ भूतादिति पदच्छेदः। आ पदं उभयत्र सम्बध्यते आभूतः आभूतादिति तेन अग्र इति भूतो जात इति आभूतपदं व्याख्यातं भवति । आभूताद् ब्रह्मण इति तस्मादाभूतसम्प्लवशब्देन दैनन्दिननाशमुच्यते । चशब्दः निरुक्तिसमुच्चये । अस्तु वा प्रभुशब्दः हरिपरः तथाप्यत्रत्यस्य शतवर्षपरत्वेऽपि न सर्वत्र विद्यमान आभूतशब्दः शतवर्षपरः। तथा च व्याख्यानमस्य आभूततसम्प्लवः प्रभो हरेः अहोरात्रं स्मृतमित्यन्वयः। पूर्वोक्तप्रकारेणाभूतसम्प्लवशब्दनिर्वचनेन ब्रह्मदिने आभूतसम्प्लवशब्दवृत्तेः सत्वात्

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ।।'

इत्येतन्मानविरोधात्कथं हरिदिनत्वं आभूतसम्प्लवशब्दस्य इत्याशङ्कायां त्यैलोक्येशानीत्यादिना योगकथनं तेन भूतसम्प्लवशब्दस्य ब्रह्मदिने रूढेः सत्त्वेऽपि शतवर्षे योगस्य सत्वाच्छतवर्षपरत्वम् । न तु सर्वत्र शतवर्षपरत्वमिति। यदुक्तम्—

'[1]................बह्वभद्रावहः पुमान् ।
आभूतसम्प्लवात्स्वर्गप्रलयावश्नुतेऽवशः' इत्युत्त्वा।

'धातूपप्लव आसन्न' इत्यादिना तत्त्वलयोक्तेः आभूतसम्प्लवशब्दस्य महाप्रलयपरत्वमिति । तन्न । राज्ञा 'परस्य विष्णोः' इत्यादिना सृष्टिप्रलयप्रश्ने कृते । अन्तरिक्षः 'एभिर्भूतानि' इत्यादिना सृष्टिमुक्त्वा प्रसङ्गाज्जीवस्य ईश्वरत्वज्ञानिनः 'मन्यमान' इत्यनेन तमः प्राप्तिमुक्त्वा तदेव 'कर्माणि' इत्यनेनोपपाद्य तमःप्राप्तिकालावधिं 'आभूतसम्प्लवात्' इत्यनेनोक्त्वा सृष्टिकथनानन्तरं 'धातूपप्लव' इत्यादिना महाप्रलयमुक्तवान्न तु आभूतशब्दार्थं येन तदर्थस्स्यात् ।

---

१. भा. ११-३- १०-१८ ।

यत्पुनरुक्तं वैवस्वतकालीनपौण्ड्रकवासुदेवस्य पञ्चमतात्पर्ये अर्हतरूपेण स्वायम्भुवमन्वन्तरे अवस्थान-कथनाद्दिनद्वयावस्थान प्राप्तेर्दिनमात्रावधिककथनस्य भग्नत्वाच्छतवर्षस्यैवावधित्वम् । तथा च तात्पर्यं ब्राह्मं

[1]"ज्ञानानन्दात्मको देहो ऋषभस्य महात्मन:।
तादृशेनैव मनसा चरंश्च कुटचाचले।।
दावग्निमनुविश्याथ तत्रस्थ:प्रादहज्जगत् ।
एवमग्नेरभिव्यक्त: तथा विष्णुस्सनातन: ।।
ऋषभत्वेन सङ्गोप्य धर्मानद्यापि तत्रग: ।
आस्ते स वासुदेवात्मा वासुदेवोऽहमित्यज:।।
सदा स्थित: स्थितिं तां तु शुश्रावार्हो दुरात्मवान्।
पूर्वं तु पौण्ड्रको नाम वासुदेव: स दुर्मति:।।
जातिस्मरो द्विधा शास्त्रं पाषण्डं निर्ममे तु य:।
एकं तु वासुदेवाख्यं वासुदेवोऽहमित्यपि ।।
कुत्सितं वासुदेवत्वप्रतिपादकमात्मन: ।
लोकार्थं चापरमपि चकारार्हतनामकम् ।।
तत्प्रशिष्य: क्रमुर्नाम न जानंस्तन्मतं परम्।
वासुदेवात्मतां सर्वजीवानामवदत्कुधी: ।।
क्रम्वाख्यं शास्त्रमकरोदभेदप्रतिपादकम्।
कुशास्त्रं सर्ववेदानां विरुद्धं तामसालयम् ।।
तं दृष्ट्वाऽद्याऽपि वर्तन्ते वर्तिष्यन्ति कलौ युगे।
अशौचा अव्रताचारा वासुदेवोऽहमित्यपि ।।' इति ।

न तु दिनमात्रस्येति चेन्न, अर्थानवबोधात् । तथा हि ऋषभकथाया: स्वायम्भुवकालीनत्वेऽपि नार्हतस्य तत्कालीनत्वम्। किं तु वासुदेवमृत्यनन्तरं द्वापरे एव वा सन्धौ वाऽर्हतो जन्मात्। तस्य ऋषभोपास्तिकथाश्रवणं अद्याप्यास्ते इत्युक्ते: अन्यद्वारा वा साक्षाद्वा सम्भवति । तं दृष्ट्वाऽद्यापि वर्तन्ते वर्तिष्यन्ते कलौयुगे इत्यपि द्वापरसन्धौ वा जननात्सङ्गच्छते । तथा च समग्रतात्पर्यार्थ:। इदं च [2]"तस्य ह वा' इत्यारभ्य [3]"प्रायेण भविष्यति' इत्येतस्य तात्पर्यम् । योगमायाया: प्रकृते: अवसानं समाप्तिर्यस्मिन्नप्राकृत इत्यर्थ:। योगसामर्थ्यस्य अवसानं कालोत्कर्षो यस्येति । अस्येदं तात्पर्यम्। ज्ञानानन्दात्मक इति । मुक्तलिङ्गस्य भगवत इत्येतयोर्महात्मन इति । अभितो मानं ज्ञानं तस्यावभास: प्रकाशो यस्येत्यस्य तात्पर्यम्। तादृशेन ज्ञानान्दात्मकेनैव मनसेति सह तेन ददाहेत्यस्य तात्पर्यम्— दावाग्निरित्यादि ।। तत्रस्थ: अग्निस्थ: एतेन तेन ऋषभेण सह सहित इति व्याख्यानम्। जगदिति कर्माध्याहार:। नतु कालान्तरभाविन: जगन्नाशस्येदानीमेव समापितावतारस्य ऋषभस्य कथं कारणत्वम्। कथं वा एतस्मात्कलौ दुर्मतप्रवृत्तिरित्यतस्तदुपपत्तिप्रकारमाह । एवं दावाग्निप्रवेशेन तत्स्थ: अग्निस्थ: सनातन: नित्य: विष्णु: व्याप्त: अग्ने: सकाशात्पृथगभिव्यक्तोऽभूदित्यन्वय:। तेन जगन्नाशनिमित्तत्वमुपपादितं भवति ।

१. भा.ता. ५-६-११ । २. भा. ५-६-७ । ३. भा. ५-६-११ ।

यः अजः जन्मरहितः ऋषभत्वेन धर्मान् सङ्गोप्य तत्रगः अग्रिगः अद्याप्यास्ते। स वासुदेवात्मा वासुदेवाभिन्नः वासुदेवोऽहमिति । उपास्तिं सदास्थितः। अनेन इदानीमपि सत्वादुपास्तिश्रवणं सङ्गच्छत इति भावः। तत्रग इति क्वचित्तत्र तत्राग्रावपि अद्याप्यास्त इत्यर्थः । दुरात्मवान् दुष्टज्ञानवान्। तस्य पूर्वस्वरूपमाह— पूर्वमिति।। उपास्तिश्रवणानन्तरं किं चकारेत्यत आह— जातीति ।। जातौ जन्मनि त्वत्कृतोपास्तिं वासुदेवोऽहमिति ब्रह्माहमिति उपास्तिं स्मरतीति जातिस्मरः। आत्मनः स्वस्यैव तन्मतम् । स्वस्यैव वासुदेवप्रतिपादकं मतं परं ऋषभमतं च । यद्वा परं तन्मतं प्रथमत्वेनोत्तमं तन्मतं वासुदेवोऽहमिति । अद्यापि द्वापरान्ते सन्धौ वा । ननु [१]''स्वयं वेन-श्चतुर्थस्तु महातमसि पातित' इति । [२]''अहं ब्रह्मेति वेनस्तु ध्यायन्नायाद(न्नापा)धरं तम' इत्यादिना वेनस्य तमःप्राप्तिरुक्ता । पुनः पौण्ड्रकत्वेन जननमुक्त्वा । [३]''स च ब्रह्माहं वासुदेवोऽस्मि नित्यमिति ज्ञानादगमत्ततमोऽन्धम्' इति तमःप्राप्तेरुक्तत्वात् । कथं पौण्ड्रकस्यार्हतत्वेन जननमिति चेत्सत्यम् । 'आयाद(आपा)धरं तम' इति 'आगमत्तम' इत्यादिना तमसः गमनारम्भ उच्यते । यथा लोके द्वारकादिगमनारम्भे द्वारकादिगत इत्यादि-व्यवहारस्तद्वदुपपत्तेः। न तु तदानीमेव संयमिनीमननुभूय प्रारब्धमभुक्त्वा तमोगमनं सम्भवति। तस्मादगमदित्यादि-साधनपूर्तिवाचकमूर्ध्वं तु प्रारब्धभोग इति भावः। पापिनां सर्वेषां तमोगमनं नियतमित्युक्तं सूत्रादौ । तथा हि [४]''संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्' इति सूत्रं तेषामनिष्टकारिणामेवंविधगतेः श्रुतिसिद्धत्वादित्यर्थः। (एतत्सूत्रभाष्ये) श्रुतिश्च 'सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति तत्र हि ये परद्विषो गुरुद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैते उत्तिष्ठन्तेऽपि कर्हिचित् वज्रं वा एतदित्याहुः। अथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति' इति । स्मृतिश्च—

> [५]''गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः।
> तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ।।
> महातमसि मग्नानां न तेषामुत्थितिः क्वचित्।
> इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ।।
> सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
> इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा ।।' इति

आरब्धभोगस्य दिनकल्पावधेरुक्तत्वात्। तन्मध्ये यस्य यावत्प्रारब्धभोगकालस्तन्मध्ये उक्तजन्मादिसम्भवान्न काचिदनुपपत्तिः। यदि संयमिनीभोगकाल एव जन्मादिकथनं तर्हि अंशेन भोगोंऽशेन जन्म इति ज्ञेयम् । नन्वेतेषां दैत्यानामिन्द्रियाद्यभिमानिनां तमःप्राप्तौ पुनरिन्द्रियादिव्यापरः कथमिति चेदित्थम् । तत्समानानामन्येषां तत्तद्व्यापारकृतां सत्त्वात्तदुपपद्यते । तदुक्तं स्कान्दे–

> 'तेषां च राशिसंस्था ये तन्नामानो परेऽपि च।
> जायन्ते कर्मणां स्थाने तत्तत्कर्मविधायका ।।' इति ।

[६]''कृष्णेन निहतश्चैव नरकः कर्णमास्थित' इति तेनैव गतार्थम्। [७]''अंशेन यो भुवमगान्मणिमानिति स्म स क्रोधतन्त्रकगणेष्वधिपो निषाद' इति । निषादत्त्वेनोक्तस्य [८]''स चाप पापस्तम एव घोरं कृष्णद्वेषान्नित्यदुःखात्मकं तत् ' इति एकलव्यस्य तमः प्राप्तिरुक्ता ।

---

१. भा.ता. ४-१३-४५ । २. भा.ता. ४-१३-२५ । ३. म.ता.नि. २२-२१८ । ४. ब्र.सू. ३-१-१४ । ५. सू.भा. ३-१-१५ । ६. म.ता.नि. २२-४२९ । ७. म.ता.नि. १४-४० । ८. म.ता.नि. २२-२२२ ।

[१]"...................मणिमांश्च पुनः कलौ।
जातो मिथ्यामतिं सम्यगास्तीर्यपि ततोऽधिकम् ।।' इति ।

उक्तमप्यनेनैवान्यथयितुं शक्यं यद्यपि तथाऽप्यत्र विशेषोऽस्ति। निषादस्त्वंशः अंशी तु मणिमान् । अंशिनि स्थिते अंशस्य तमः प्राप्तिर्न सम्भवति । अत एव तमःशब्दो मूले नित्यदुःखात्मकत्वेन व्याख्यातः। ध्यानादौ कदाचित् स्वरूपसुखाविर्भाववत् स्वरूपदुःखस्याविर्भावः सम्भवति । न च

[२]"ततो भोगेन पुण्यं च क्षपयित्वेतरत्तथा।
ब्रह्मद्विट् ब्रह्मदर्शी च तमोमोक्षमवापतुः।।
ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः।
ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद्ब्रह्मणस्तथा ।।
रुद्रस्य विंशदेव स्यात् इन्द्रस्यार्कादिके दश।
अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसङ्क्षयः।।
ब्रह्मणैव सहातश्च परं नारायणं व्रजेत् ।।'

इत्यनेन उपपाद्य उपसंहृतम्। तत्र अनुक्तकालविशेषाणां ब्रह्ममात्रस्योक्तेः ब्रह्मकल्पस्यावधित्वं अर्थादेव सिद्धमिति वाच्यम्। अत्रोपक्रमे द्वयोर्ग्रहणेऽपि अन्तिमस्य प्रपञ्चनार्थोऽयं ग्रन्थ इति ज्ञापयितुं नारायणं व्रजेदित्युपसंहृतम्। तेन इदं ज्ञानिपरं न तु दैत्यपरमिति । इदं व्याख्यातं जयतीर्थार्यैः। तथा हि [३]"ब्रह्मणां शतमिति अलुक् । तस्य कालो ब्रह्मणां शतकालः। तस्मात् तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनां प्रारब्धसंक्षयो भवति । अस्यैव विवरणं ब्रह्मणस्तावत्त्वमेव ब्रह्मकल्पानां शतेनैव कर्मक्षयवत्त्वम् । ब्रह्मण इति जातावेकवचनम् । पञ्चाशतां ब्रह्मणां कालात् पूर्वं रूद्रस्य आरब्धकर्मसंक्षयः। तथाशब्दो समुच्चये । विंशत्यब्दपर्यायो विंशच्छब्दः। ब्रह्मणां विंशतिरेव तदवच्छिन्न एव इन्द्रस्य प्रारब्धकर्मसङ्क्षयकालः। अर्कादिके दश । अर्कादीनां दश ब्रह्मणः तदवच्छिन्नः कर्मक्षयकालः। ब्रह्ममात्रस्य एकस्यैव ब्रह्मणः। अतः परं च प्रारब्धकर्मसङ्क्षयानन्तरमपि ब्रह्मणा सहैव नारायणं व्रजेदिति' । ननु ब्रह्मणः काम्यकर्माभावात् कथं प्रारब्धकर्मवत्त्वम् । सत्यम् । बाह्यार्थविषयककामाभावेऽपि नित्यानन्दोपयोगिकामस्य सत्त्वात् । तद्विषयस्य भोक्तुमारब्धस्य कर्मणः प्रारब्धकर्मत्वात् तद्वत्त्वं सम्भवति। तथा चोक्तं शक्तिविवेके–

[४]"नित्यानन्दोपयोग्यन्यकामस्योज्झिततस्सदा ।
बहिरर्थविनिर्मुक्तः.................. ।।' इति ।

ननु नारायणतन्त्रे–

[५]"प्रारब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ।।' इत्युक्तस्य
'ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः।
नियमेन भवेन्नात्र कार्या काचिद्विचारणा ।।' इति सामान्येनावधेरुक्तत्वात् ।

१. म.ता.नि. २२–३१५ । २. अनु. ४-१- १७४९-१७५२ । ३. सुधा ५४३२ । ४. भा.ता. ११-७-१७ । ५. सू.भा. ४-१-१९ ।

अनेन अवधिब्रह्मकल्पो भविष्यतीति चेन्न । एतस्यापि विशेषवाक्यबलात् ज्ञानिपरत्वमेव । अथवा एतस्य सामान्यत्वात् दैत्यविषये आभूतसम्प्लवादिति विशेषस्य सत्त्वात् एतज्ज्ञानिपरम् । ननु—

[1]'ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु ।
त एव शतजन्मानि विशेषोपासका हरेः ।।
प्राप्य ब्रह्मपदं पश्चात् श्रियं प्राप्यानुमोदिताः।
तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ ।।
अनादिकालतो भक्ता ज्ञानिनस्ते न संशयः।
विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः ।।
सर्वदाऽपि विशेषेण शतजन्मप्रयत्नतः।
स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते ।।
तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः।
विंशद्भिरैन्द्रं दशभिरन्येषामप्युदीरितम् ।।'

इति षाड्गुण्यवचने रुद्रस्य चत्वारिंशद्ब्रह्मणः कालमात्रकथनात् विरोध इति चेत् अल्पान्तरत्वादत्रापि दशाधिकं पूरणीयम् । अथवा सत्तत्त्ववचनं प्रारब्धभोगपरम् । षाड्गुण्यवचनं तु रुद्रपदप्रापकविशेषोपास्तिपरमिति न विरोधः। दशकल्पं मोक्षविशेषतपःपरमिति पृथक्कथितम् । इन्द्रादीनां वर्षाणामेव कथनात्कल्पपूर्तेरभावात् ब्रह्मणस्तु पदप्राप्तितपसः मोक्षविशेषतपसश्च एकत्वान्न पृथक्कथनम् । तथाच न्यायविरोधः ।

'शतं परानभिपश्यैव देव ब्रह्माचरद्दुश्चरं यत्तपोऽग्र्यम्।
विहाय रागं मनसश्चोपरिष्टो ततोऽभवत् परमेष्ठी स मुक्तौ ।।' इति ।

अस्यार्थः यः ब्रह्मा भाविब्रह्मत्वेन ऋजुः ब्रह्मा देवं विष्णुं अभिपश्येव । शतं परान् ब्रह्मकल्पान् मनसो रागं विहाय यद्यस्माद्दुश्चरं तपोऽग्र्यं आचरत् तत्तपसा स तपःकर्ता ऋजुः परमेष्ठी भूत्वा मुक्तौ उपरिष्टः उत्तमोऽभवत् । यद्वा मनस इति अत्रापि सम्बन्धनीयम् । ततश्चायं मनसः मनोऽभिमानिरुद्रात् उत्तम अभवदित्यर्थः।

[2]' ..........विशेषेण शतजन्मप्रयत्नतः ।
स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते ।।' इति संवादात् ।

दशकल्पस्य मोक्षविशेषार्थतपःपरत्वमुक्तम्—

[3]'दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ।
त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसि ।।
शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः।
वर्षायुतं च सूर्येण तपोऽर्वाक्शिरसा कृतम् ।।
सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिना ।
पीता मरीचयो वर्षसहस्रमतिसादरम् ।।

---

१. भा.ता. ४-२३-२९ । २. भा.ता. ४-२३-२९ । ३. अनु. ३-४- १४४७-१४५०, कामचाराधिकरणम् ।

अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि च ।
इत्येतदखिलं मोक्षविशेषाभावतः कथम् ।।' इत्यनुव्याख्याने ।

यत्तु—

'लिङ्गाल्लातव्यतः पूर्वं ऋजोर्ब्रह्मत्वतः शतात्।
शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ।।
सार्धं परार्धं विष्णोस्तु गुणान् भक्त्या सदोद्यतः।
तत्त्रिभागमुपासां च चक्रे सम्भृतमानसः ।।
दशमन्वन्तरं शक्रपदयोग्यो गरुत्मतः।
पदयोग्यात् सुमनसः सुनन्दो नाम चाश्रुणोत् ।।
उपासां चक्र उद्युक्तो मन्वन्तरचतुष्टयम् ।
सूर्याचन्द्रमसोश्चैव पदयोग्यौ सुतेजसौ ।।
सुरूपः शान्तरूपश्च मन्वन्तरचतुष्टयम् ।
अश्रुण्वतां सुमनसो मन्वन्तरमुपासताम् ।।
ततः प्रोक्तास्तु ते सर्वे भक्त्योग्रतपआदयः ।।'

इत्युक्ततपःकालस्य अधिकस्य विद्यमानत्वात्कथमितिचेत् । 'अपश्यन् परमं विष्णुं तत्प्रसादैधितः सदा' इति वाक्यशेषेऽपरोक्षज्ञानसाधनत्वेनोक्तत्वात् तदेतद्भिन्नं पूर्वभावि च । स्फुटमेतत् स्कान्दे—

'हरेः द्वेषः सुपूर्णश्च कलेरप्यतिशीघ्रतः।
ततः पश्चात्तमोयोग्याः क्रमाद्दीर्घेण पूर्तितः ।।
अन्धन्तमो निगच्छन्ति सम्प्राप्ते ब्रह्मणो निशि ।
कल्पादीनां तमोगानां क्लृप्तदुःखं हि भुञ्जताम् ।।
कलिरेकः स्वदेहेन भुङ्क्ते प्राकृतमिश्रितः।
अदन्त्यन्ये स्वदेहेन दुःखं दैत्याधमाः कलेः ।।' इत्यादि ।

तथा 'दीर्घभक्तिस्तु देवानां तस्माद्दीर्घेण मुक्तिगा ' इति । द्वात्रिंशाध्याये अयमर्थः सूचितोऽस्ति । तथा हि 'द्वेषात्तमोऽन्धं त्वरया समाप्नुयुर्देवाः स्वकाले निजयोग्यमुक्तिम्' इति ।। १०९ ।।

**ताम्र**— 'त्रिविधा जीवसङ्घास्तु' इत्युपक्रम्य तत्र योग्यानां मुक्तौ भक्तिः कारणमित्युक्तम् । दैत्यानां तमः प्राप्तौ कारणमाह— **अनादीति** ।। द्वेषो नाम अवमत्वज्ञानपूर्वकमनोवैमुख्यम् । अन्ते परिपाकान्ते ।। १०९ ।।

**जम्बु**— 'त्रिविधा जीवसङ्घास्तु' इत्युपक्रम्य तत्र योग्यानां मुक्तौ भक्तिः कारणमित्युक्तम् । दैत्यानां तमः प्राप्तिकारणमाह— **अनादीति** ।। यथा देवा अनादिभक्ताः एवं दैत्या अपि अनादिद्वेषिण इति तेषां स्वरूपकथनम् । यथा भक्तिः विष्णौ विवर्धिता मुक्तिं प्रापयति । एवं विष्णोः विवर्धितः द्वेषः अन्ते कल्पावसाने दैत्यानन्धेतमसि प्रापयतीत्यर्थः ।। १०९ ।।

**पूर्णदुःखात्मको द्वेषः सोऽनन्तो ह्यवतिष्ठते ।**
**पतितानां तमस्यन्धे निःशेषसुखवर्जिते ।। ११० ।।**

**व्यास**— पाके तमः सम्पाद्य द्वेषो निवर्तते इति न मन्तव्यमित्याह— **पूर्णेति** ।। तमः स्वरूपं निरूपयति— **निःशेषेति** ।। ११० ।।

**सङ्क**— द्वेषस्वरूपमाह— **पूर्णेति** ।। पश्चान्नाशो न भविष्यतीत्याह— **सोऽनन्त इति** ।। ११० ।।

**वरद**— यथा च पूर्णानन्दस्वरूपिणी भक्तिर्मुक्तौ तिष्ठति एवं पूर्णस्वरूपदुःखात्मकः अनन्तः स एव यः पूर्वं विवर्धितः द्वेष इत्यर्थः। अन्धे तमसि पतितानां दैत्यानां अवतिष्ठते। कथम्भूते अन्धे तमसि— **निःशेषसुखवर्जित इति** ।। सर्वथा सुखव्यपेत इत्यर्थः ।। ११० ।।

**जना**— ननु द्वेषस्य साधनत्वात् फलपर्यन्तमवस्थितिः तत्प्राप्तौ सत्यां नास्तीत्यत आह— **पूर्णेति** ।। पूर्णं यद्दुःखं तदात्मकः अनन्तः नित्यः ईषदपि सुखसम्बन्धवर्जितेऽन्धेतमसि ।। ११० ।।

**जम्बु**— ननु द्वेषस्य साधनत्वात् फलपर्यन्तावस्थितिः तत्प्राप्तौ सत्यां नास्तीत्यत आह— **पूर्णेति** ।। पूर्णानन्दस्वरूपिणी भक्तिः मुक्तौ तिष्ठति एवं पूर्णद्वेषस्वरूपदुःखात्मको यः अनन्तः नित्यः पूर्वविवर्धित इत्यर्थः। अन्धेतमसि पतितानामवतिष्ठति । कथम्भूते अन्धेतमसि निःशेषषसुखवर्जिते सर्वदा सुखव्यपेत इत्यर्थः। तदुक्तमेकादशतात्पर्ये—

"[1]अन्धे तमसि मग्नस्य चेतनेन्द्रियसन्तता ।
सुखानुभवशक्तिर्या सा विनश्यति सर्वदा ।
नित्यदुःखपरीतायुःर्धृतिवत्प्रश्वसित्यपि ।।' इति ।। ११० ।।

**जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।**
**[2]साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ।। १११ ।।**

**व्यास**— द्वेषो नाम कः इत्यतस्तत्स्वरूपं विरुद्धभक्तिस्वरूपं च विशदमाह— **जीवेति** ।। जीवाभेद इत्यादौ तज्ज्ञानं द्वेष इति द्रष्टव्यम् ।। १११-११२ ।।

**वादि**— द्वेषाः क इत्यतस्तान् प्रदर्शयति— **जीवेति** ।। १११ ।।

**सङ्क**— नन्वेवं विधो द्वेषः कतिधा तिष्ठतीत्याशङ्क्याह— **जीवेत्यादिना** ।। १११-११२ ।।

---

१. भा.ता. ११-२१-२२ । २. ब्रह्मवैवर्तेऽपि (१ब्रह्मखण्ड/१७अ/४८-५०) 'विष्णुनिन्दा च त्रिविधा ब्रह्मणा कथिता पुरा। अप्रत्यक्षं च कुरुते किं वा तं च न मन्यते। देवान्यसाम्यं कुरुते ज्ञानहीनो नराधमः। तस्यात्र निष्कृतिर्नास्ति यावद्वै ब्रह्मणःशतम्।' तथा 'येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः। नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृताः' इति (२३५अ/३)'यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। सममन्यैर्निरीक्षेत स पाषण्डी भवेत्सदा।' इति च (पद्म/उत्तरखण्ड/२३५अ/१०) विष्णोः अन्यसमत्वज्ञानस्य निन्दितत्वं कथितम् ।

**वरद**— यथा भक्तिः श्रवणादिनवविधलिङ्गगम्या एवं द्वेषोऽपि जीवाभेदज्ञानरूपादिनवविधलिङ्गगम्यः इत्याह— **जीवाभेद इत्यादिना** ।। अत्र जीवाभेदादिशब्दैः तज्ज्ञानान्युपलक्ष्यन्ते । तदन्येषां तस्माद्विष्णोरन्येषां ब्रह्मादीनां साम्यं आधिक्यं चेति द्वेषद्वयम् । तद्गतः हरौ रूपगुणकर्मादिभेदः ।। १११ ।।

**जना**— द्वेषानाह— **जीवाभेद इति** ।। जीवैरभेदस्तेन तज्ज्ञानमुपलक्ष्यते । अग्रेऽपि ज्ञानोपलक्षकता ज्ञेया । तस्य हरेरन्येषां ब्रह्मादीनां साम्यं चाधिक्यम् । नीचस्य समस्य वा अधिकत्वेन ज्ञानमन्येषां हरेः सकाशादाधिक्यं वा । तद्गतः तदवयवगतस्तदवतारगतो वा भेदः भेदज्ञानं च, प्रादुर्भावविपर्यासः अवतारस्यानवतारत्वज्ञान-मनवतारस्यावतारत्वज्ञानं तद्भक्तानां हरिभक्तानां द्वेषो विरोध एव । द्वेषनिन्दनयोः स्वरूपेणैव द्वेषत्वं नत्वेतज्ज्ञानस्येति एवकारेण ज्ञापयति । तस्य विष्णोः सर्वोत्तमत्वगुणपूर्णत्वादिप्रतिपादकप्रमाणस्य निन्दा । कल्पितविषयत्वकल्पनम् । एते जीवाभेदादयोऽखिलाः नवविधद्वेषाः मताः सम्मताः। प्रामाणिकानामित्यर्थः ।। १११- ११२ ।।

**ताम्र**— ननु रामानुजादयोऽपि भक्तिभाजः भगवदुत्तमत्वज्ञानपूर्वकस्नेहवत्वात् । कथमन्यथा रोमाञ्चाङ्कित-गात्रत्वानन्दाश्रुप्रभृतयो भावा इत्यतो नवविधद्वेषं निरूपयन् तद्रहितैव भक्तिः। वादिषु सा नास्त्येव । रोमाञ्चादयस्तु डम्भादिकृताः। "डम्भस्य चलभक्तेश्च यस्मादश्र्वादिकं भवेत्' इति भावेनाह— **जीवाभेद इति** ।। अत्र तत्तज्ज्ञानं द्वेष इति द्रष्टव्यम् ।। १११-११२ ।।

**जम्बु**— ननु रामानुजादयोऽपि भक्तिभाजः भगवत्युत्तमत्वज्ञानपूर्वकस्नेहवत्वात् । कथमन्यथा रोमाञ्चाङ्कितगात्रत्वानन्दाश्रुप्रभृतयो भावा इत्यतो नवविधद्वेषं निरूपयन् तद्रहितैव भक्तिः। वादिषु सा नास्त्येव। रोमाञ्चादयस्तु डम्भादिकृताः 'डम्भस्य चलभक्तेश्च यस्मादश्र्वादिकं भवेत्' इति भावेनाह— **जीवाभेद इति** ।। अत्र तत्तज्ज्ञानं द्वेष इति द्रष्टव्यम् । जीवैरभेदः जीवाभेदः। तेन तत्ज्ञानमुपलक्ष्यते । अग्रेऽपि ज्ञानोपलक्षकता ज्ञेया । निर्गुणत्वं गुणराहित्यं । अपूर्णगुणता न विद्यन्ते पूर्णगुणा यस्मिन् स तथा तस्य भावस्तत्ता । तदन्येषां तस्य हरेरन्येषां ब्रह्मादीनां च साम्यं चाधिक्यं च नीचस्य समस्य वा अधिकत्वेन ज्ञातुं अन्येषां हरेस्सकाशादधिक्यं वा तद्गतः तदवतारगत एव भेदः भेदज्ञानम् ।। १११ ।।

**प्रादुर्भावविपर्यास[२]स्तद्भक्तद्वेष एव च।**
**तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः ।। ११२ ।।**

**वादि**— प्रादुर्भावविपर्यासः प्रादुर्भावेष्ववतारेषु विपर्यासः। उत्पन्नत्व-मृतत्व-प्राकृतत्वादिभ्रम इत्यर्थः। 'जीवाभेदः' इत्यारभ्य 'प्रादुर्भावविपर्यासः' इत्यन्तं अभेदादिपदैस्तत्तद्विषयकं ज्ञानमुपलक्ष्यते ।। ११२-११३ ।।

---

१. भा.ता. ११-१४-२४ । २. आश्व/११६/२१-२४ 'मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये नराः। नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः।। चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान्। अवमानात् पतत्येव नरके रौरवे नराः।। मम भक्तस्य भक्तेषु प्रीतिरभ्यधिका मम। तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः।। कीटपक्षिमृगाणां च मयि सन्यस्तचेतसाम् । ऊर्ध्वमेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम्।।' ।

**वरद—** तथा प्रादुर्भावविपर्यासः अवतारस्यानवतारत्वं अनवतारस्य वा अवतारत्वज्ञानमित्यर्थः। तस्य विष्णोः भक्तानां रमादीनां द्वेषः। तस्य विष्णोः सर्वोत्तमत्वगुणपूर्णत्वादिप्रतिपादकप्रमाणस्य निन्दा कल्पित-विषयत्वादिकल्पनम् । एते जीवाभेदादयो नवापि अखिलाः प्रत्येकं द्वेषाः सम्मताः प्राभाणिकानामित्यर्थः ।। ११२ ।।

**जम्बु—** प्रादुर्भावे विपर्यासः अवतारस्यानवतारत्वं अनवतारस्यावतारत्वं तज्ज्ञानम् । तद्भक्तद्वेषः तस्य हरेर्भक्तानां द्वेषो विरोध एव । द्वेषनिन्दनयोः स्वरूपेणैव द्वेषत्वं नात्र ज्ञानस्येति एवकारेण ज्ञापयति । तत्प्रमाणस्य तत्प्रतिपादक-प्रमाणानां निन्दनं चेत्येके । ते अखिला द्वेषा मताः प्रमिताः। जीवाभेदं निर्गुणं चाहुर्मायावादिनः। ब्रह्मणः अपूर्णगुणत्ववादिनः हैतुकाः। तदन्ये ब्रह्मादीनां साम्यमाहुः त्रिमूर्त्यैक्यवादिनः। स्कान्दसौरदिकाः तत्तदाधिक्यमाहुः। तद्गतं भेदमाहुर्हैतुकाः। प्रादुर्भावविपर्यासमाहुः रामानुजाः। बलभद्रस्य अवतारत्वं व्यासस्यानवतारत्वं तैरङ्गीकृतम् । यतः तद्भक्तरुद्रादिद्वेषिणः तत्प्रमाणनिन्दकाः बौद्धाः ।। ११२ ।।

**एतैर्विहीना या भक्तिः सा भक्तिरिति निश्चिता ।**
**अनादिभक्तिर्देवानां क्रमाद् वृद्धिं गतैव सा ।। ११३ ।।**

**व्यास—** एवं विधा भक्तिः केषामस्तीति जिज्ञासायामाह— **अनादीति** ।। ११३-११४ ।।

**वादि—** एवंविधा भक्तिः केषामस्तीत्यत आह— **अनादीति** ।। ११३ ।।

**सङ्क—** माहात्म्यज्ञानपूर्वेत्यादिना यद्भक्तिलक्षणमभिहितं तदेव प्रमाणान्तरेण विविच्य निश्चिनोति— **एतैरिति**।। 'तत्र देवा मुक्तियोग्या' इति पूर्वमुक्तम् । तेषां देवानां भक्त्या मुक्तिप्रकारमाह— **अनादीति** ।। ११३ ।।

**ताम्र—** ननु न भक्तेर्मुक्तावनुवृत्तिः सम्भवति । माहात्म्यज्ञानसम्पाद्यत्वेनागन्तुकतया अस्वरूपत्वादित्यत आह— **अनादीति** ।। ननु यथा दानतीर्थादीनां भक्तिद्वारा मोक्षहेतुत्वं तथा तत्र तत्र भक्तेरप्यपरोक्षादि-हेतुत्वोक्तेस्तद्द्वारा मोक्षहेतुत्वेन दानादितुल्यत्वात् तया मोक्षो न चान्यथेति कथं चरमसाधनत्वमुच्यत इत्यतो वाह— **अनादीति** ।। स्पष्टं चैतदनुव्याख्याने—

"[1]भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च सा।
ततो मुक्तिस्ततो भक्तिः सैव स्यात्सुखरूपिणी' इति ।

तथा च भक्तेरपरोक्षं प्रति मोक्षं प्रत्यपि साक्षाद्धेतुत्वान्न दोष इति भावः ।। ११३-११४ ।।

**वरद—** भक्तिरपि एतेषां मध्ये एकेनाऽपि विहीना चेत् सैव सद्भक्तिरिति निश्चिता । एकेनाऽपि युक्ता चेदसद्भक्तिरेवेत्याह— **एतैरिति** ।। भक्तेः स्वविशेषरूपापरोक्षज्ञानद्वारा मोक्षहेतुत्वमाह— **अनादीति** ।। ननु दानादीनां भक्तिसाधनत्वमुक्तं तदयुक्तम् । भक्तेः स्वरूपत्वेनानादित्वात् तदसाध्यत्वादित्यतो वाऽह— **अनादीति** ।। देवानां मुक्तियोग्यानामित्यर्थः। अनादिभक्तिः स्वरूपभूता भक्तिः क्रमाद्दानादिना वृद्धिङ्गता अभिव्यक्ता सती ।। ११३ ।।

१. अनु. ३-४-१६३८, आधिकारिकाधिकरणम् ।

**जना**— भक्तेर्विशेषमाह— **एतैरिति** ।। एतै: पूर्वोक्तै: द्वेषै:। तां विविच्य दर्शयति— **अनादीति** ।। क्रमाद् वृद्धिं गता सा भक्तिरपरोक्षज्ञानहेतु:। पुनर्वृद्धिं गता मोक्षहेतुश्च सा भक्ति: ।। ११३-११४ ।।

**जम्बु**— ननु जीवाभेदादिवादिभिरपि भक्तिपूर्वकं बहुद्रव्यव्ययादिना विष्ण्वर्चनादे: क्रियमाणत्वात् कथं तेषां द्वेषित्वमित्यत आह— **एतैरिति** ।। एतैर्जीवाभेदज्ञानादिभि: विहीना या भक्ति: सा स्याद् भक्तिरिति निश्चितायां केनापि सहिता चेदसद्भक्तिरेव । एतेषु भक्तिर्नास्ति किन्त्वैहिकफलोद्देशेन भजनमात्रमिति भाव:। तदुक्तं **सन्न्यायरत्नावल्याम्**—

"[१]भजनं भक्तिरित्याद्या द्वितीया स्तुतिरूपिणी ।
स्मृतिरूपा तृतीया च चतुर्थी प्रेमलक्षणा ।।' इति ।

ननु भक्तिर्द्विविधा स्वरूपभूता वृत्तिरूपा चेति । तत्र वृत्तिरूपाया अनादिसाध्यत्वसम्भवेऽपि स्वरूपभूताया भक्तेरनादित्वात् तदसाध्यत्वादित्यत आह— **अनादीति** ।। देवानां मुक्तियोग्यानां अनादिभक्ति: स्वरूपभक्ति: क्रमात् दिने दिने अभिव्यक्ता सती अपरोक्षदृशेर्हेतु: पुन: अनन्तरं सा भक्ति: मुक्तिहेतुश्च मोक्षकारणं भवति सैव भक्ति: नित्या सती आनन्दस्वरूपेण मुक्तेषु तिष्ठतीति **नारायणाध्वरीये** । ननु न भक्तेर्मुक्तावनुवृत्ति: सम्भवति माहात्म्यज्ञानसम्पादकत्वेन आगन्तुकतया स्वरूपत्वादित्यत आह— **अनादीति** ।। ननु यथा अर्थदानतीर्थादीनां भक्तिद्वारा मोक्षहेतुत्वं तथा तत्र तत्र भक्तेरपरोक्षादिहेतुत्वोक्तेस्तद्द्वारा मोक्षहेतुत्वेन दानादितुल्यत्वात्तया मोक्षो न चान्यथेति कथं चरमसाधनत्वमुच्यत इत्यत आह— **अनादीति** ।। स्पष्टं चैतदनुव्याख्याने—

'भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततस्तु सा ।
ततो मुक्तिस्ततो भक्तिस्सैव स्यात् सुखरूपिणी ।।' इति ।

तथा च भक्तेरपरोक्षं प्रत्यपि साक्षाद्धेतुत्वाददोष इति भाव: ।। ११३ ।।

## अपरोक्षदृशेर्हेतुर्मुक्तिहेतुश्च सा पुन:।
## सैवानन्दस्वरूपेण नित्या मुक्तेषु तिष्ठति ।। ११४ ।।

**वादि**— भक्तेरपि जीवस्वरूपत्वादानन्दज्ञानादीनामपि जीवस्वरूपत्वात् सैवानन्दस्वरूपेणेत्युक्तम् ।। ११४ ।।

**सङ्क**— मुक्तानामपि भक्ति: नित्यानन्दस्वरूपिणी पूर्वत्र मुक्तेषु भक्तिर्यथा स्थितोक्ता तेनैव प्रकारेण पुनस्तिष्ठतीति। पुन: प्रकारान्तरेण दृढीकरोति— **सैवेति** ।। ११४ ।।

**वरद**— अपरोक्षदृशेर्भगवदपरोक्षज्ञानस्य हेतुर्भवति । पुनरनन्तरं सा अपरोक्षदृशि: सा भक्तिश्च मोक्षहेतुर्भवतीत्यर्थ:। अत एव स्वरूपेणावस्थानात् सैव भक्तिर्नित्या सती मुक्तेषु आनन्दस्वरूपेण तिष्ठतीत्यर्थ: ।। ११४ ।।

---

१. सन्न्यायरत्नावली ३-४-६ ।

**यथा शौक्ल्यादिकं रूपं गोर्भवत्येव सर्वदा।**
**सुखज्ञानादिकं रूपमेवं भक्तेर्न चान्यथा ।। ११५ ।।**

**व्यास**— आनन्दस्वरूपत्वं कथं भक्तेः सर्वाधिकत्वज्ञानादिलक्षणया इत्यतो दृष्टान्तेन दर्शयति— **यथेति** ।। शौक्ल्यादिकं शुक्लत्वादिकम् ।। ११५ ।।

**वादि**— तत्र दृष्टान्तमाह— **यथेति** ।। यथा सर्वदा विद्यमानं शौक्ल्यादिकं गोः गोपिण्डस्य रूपं स्वरूपम् । यावद्वस्तुविद्यमानत्वेन सविशेषाभिन्नत्वात् । एवं मुक्तौ आनन्दज्ञानभक्त्यादीनां जीवेन सह अन्योन्यं च सविशेषाभिन्नत्वात् भक्तेरप्यानन्दरूपत्वमिति भावः। अन्यथा केवलमत्यन्ताभेदेन नेत्यर्थः। तथासत्यपर्यायशब्दवाच्यत्वं न स्यात् । अत्यन्ताभेदे हि घटकरीरकलशादिशब्देषु पर्यायेणैव वाच्यता । न तु सहप्रयोगः। पौनरुक्त्यप्रसङ्गात् । ज्ञानानन्दभक्त्यादिशब्दास्तु न पर्यायेण प्रयुज्यन्ते । अपितु सहैव प्रयुज्यन्ते । इदं चापर्यायशब्दवाच्यत्वं भिन्नेषु घटपटादिषु भिन्नाभिन्नेषु मृद्घटादिषु च भेदेनैव निर्वोढुं शक्यते । भेदरहिततयाऽभिन्नेषु स्वरूपभूतज्ञानानन्दादिषु मत्स्यकूर्माद्यवतारेषु भगवतो हस्तपादादिषु च न तथा । किन्तु भेदप्रतिनिधित्वात् एकसत्वेऽप्यपरनाशाख्यभेदासाधारणकार्यं विना तदितरसकलभेदकार्यकारिणा विशेषेणैव सर्वत्र निर्वाह्यमिति ज्ञेयम् ।। ११५ ।।

**अभिनव**— तत्रैव 'यथा शौक्ल्यादिकं' इति श्लोकः । तस्यार्थः। गोः शौक्ल्यादिकं धर्मजातं रूपं परस्परस्वरूपं यथा सर्वदैव भवत्येव । एवं मुक्तानां सुखज्ञानादिकं सुखज्ञानभक्त्यादिधर्मजातं रूपं परस्परस्वरूपं भवति । इदं कदापि अन्यथा न च नैव भवति । अतः 'आनन्दस्वरूपिणी' इति भक्तेरानन्दस्वरूपत्वोक्तिर्युक्तेति। एतेन भक्तेरित्येतदनन्वितमिति दूषणं परास्तम् । अत इत्यादीनां शेषेणान्वयस्योक्तत्वात् ।। ११५ ।।

**सङ्क**— ननु भक्तिर्नाम सेवा । तस्याः सुखरूपत्वं कथं इत्याशङ्क्य तस्याः सुखादिरूपत्वं सदृष्टान्तमाह— **यथेति** ।। संसारदशयां भक्तिः सुखज्ञानादिरूपाऽपि संवलितत्वात्प्रायेण दुःखदा भवति । मुक्त्यनन्तरं सुखरूपेणैवाविर्भवतीति सुखज्ञानादिविशेषवत्त्वं भक्तेर्युज्यत इत्यर्थः ।। ११५ ।।

**वरद**— ननु भक्तेः कथं आनन्दस्वरूपत्वमित्यत आह— **यथेति** ।। यथा शौक्ल्यादिकं गवि विद्यमानं रूपं गोः स्वरूपं भवति विशेषबलेन च अपर्यायशब्दवाच्यत्वं तथा सुखज्ञानादिकं आनन्दज्ञानादिकं भक्तेः रूपं स्वरूपं नान्यथा न ततः अतिरिक्तमित्यर्थः ।। ११५ ।।

**जना**— सच्चिदानन्दस्वरूपेण तिष्ठतीत्यनेन प्राप्तां भेदशङ्कां दृष्टान्तेन परिहरति— **यथेति** ।। (यावद्द्रव्य-भाविगोः शौक्ल्यादिकं अभिन्नं एवं भक्तेः सुखज्ञानादिकं रूपं अभिन्नं इति भावः ।। **ब्रह्मादीनामिति** ।। तारतम्येन स्थिताऽनादिश्चासौ नित्या च भक्तिः) इतरत्कर्मादिना तारतम्यकारणं नेत्यर्थः ।। ११५-११७ ।।

**ताम्र**— ननु भक्तेः कथं आनन्दादिरूपत्वम् । धर्मस्य धर्मान्तरात्मकत्वानुपपत्तेः एकपरिशेषापाताच्च अपर्यायशब्द-वाच्यतापाताच्चेत्यतो धर्मिधर्माभेददृष्टान्तेन धर्माभेदमप्युपपादयति— **यथेति** ।। यथा शौक्ल्यादिकं गोः स्वरूपं सर्वदा भवति । एवं सुखज्ञानादिकं भक्तेः स्वरूपमित्यर्थः। आदिपदेन स्नेहग्रहणम् । भेदाभेदव्यावृत्त्यर्थं

सर्वदा स्वरूपमित्युक्तम् । अयमत्र विवेक:। ज्ञानस्नेहयोर्भक्तिशब्दार्थैकदेशतया तद्रूपत्वं, सुखस्य तु ज्ञानस्नेहरूपाया भक्ते: साधनत्वविशेषमपहाय भक्तित्वमनपहाय स्वसाध्यानन्दरूपत्वेनानुसन्धीयमानत्वमिति। तथा चोक्तम् ''साध्यानन्दस्वरूपैव भक्तिर्नैवात्र साधनम्' इति 'नैवान्यसाधनं भक्ति: फलरूपा हि सा यत' इति च । तथा च यथा शुक्लरूपत्वलक्षणविशेषानपायेनैव रूपस्य गोस्वरूपत्वं नैकपरिशेषापर्यायशब्दवाच्यता तथा भक्तेरपि साधनत्वविशेषत्यागेन साध्यानन्दरूपत्वेऽपि अम्बुवदग्राहकत्वरूपविशेषस्यानुवृत्त्या भक्तिरेवास्ति नानन्द इति वाऽऽनन्द एवास्ति न भक्तिरिति वा नैकपरिशेष:। नाप्यपर्यायपदाभिधेयता । तथा च धर्माणां धर्म्यभेदवत् धर्मान्तराभेदोऽपि युक्त इति । सुखज्ञानशब्दौ भावप्रधानौ। आदिशब्देन अम्बुवदग्राहसुदृढत्वादिधर्मा: गृह्यन्ते । तथा च गो: शुक्लत्वादिधर्मजातं स्वरूपं कुत: सर्वदा भावित्वात् । यावद्रव्यभावित्वात् । तथा अनुकूलवेदनीयत्व-विषयविकारित्वसर्वाधिकत्वं यावद्द्रव्यभावित्वात् ज्ञानस्नेहरूपाया भक्ते: स्वरूपमेव । इयांस्तु विशेष: तत्रानन्दत्वस्य मुक्तौ व्यक्तिरिति ।। ११५ ।।

**जम्बु**— ननु भक्ते: कथमानन्ददिरूपत्वम् । धर्मस्य धर्मान्तरात्मकत्वानुपपत्ते: एकपरिशेषापाताच्च अपर्या-शब्दवाच्यतापाताच्चेत्यतो धर्मिधर्मभेददृष्टान्तेन धर्मभेदमुपपादयति— **यथेति** ।। यथा शौक्लादि शुक्लत्वादिकं गवि विद्यमान: गो: स्वरूपं सर्वदा भवति । एवं सुखज्ञानादिकं भक्ते: स्वरूपम् । भेदाभेदव्यावृत्त्यर्थं सर्वदा स्वरूपमित्युक्तम् । न चान्यथान्यत् अतिरिक्तम् । यद्वा भक्तिर्ज्ञानमानन्द इति पृथग्व्यवह्रियमाणस्यानन्दादे: भक्तिस्वरूपत्वं व्यर्थमित्याशंक्य दृष्टान्तेन साधयति— **यथेति** ।। यथा गवि विद्यमानस्य शुक्लो रक्त: पीत इति पृथग्व्यवह्रियनाणस्य शुक्लादे: गो: स्वरूपं तथा ज्ञानानन्दादे: भक्तिस्वरूपत्वं सम्भवतीत्यर्थ:। अयमत्र विवेक:। ज्ञानस्नेहयो: भक्तिशब्दार्थैकदेशतया तद्रूपत्वं, सुखस्य तु ज्ञानस्नेहरूपाया: भक्ते: साधनविशेषमपहाय साध्यानन्दरूपत्वेनानुसन्धीयमानत्वमिति। तदुक्तं 'साध्यानन्दस्वरूपैव भक्तिर्नैवात्र साधनम्' इति । तथा च यथा शुक्लत्वलक्षणविशेषानपायेनैव साधनत्वविशेषत्यागेन साध्यानन्दस्वरूपतोऽपि अम्बुवद्ग्राहकत्वरूपविशेषस्या-नुवृत्त्या भक्तिरेवास्ति नानन्द इति वा आनन्द एवास्ति न तद्भक्तिरिति वा नैकपरिशेष: नाप्यपर्यायपदा-भिधेयता । तथा च धर्माणां धर्म्यभेदवत् धर्मान्तराभेदेऽपि युक्त इति । यद्वा सुखज्ञानशब्दौ भावप्रधानौ । आदिपदादम्बुवदग्राहकत्वसुदृढत्वादिधर्मा: गृह्यन्ते । तथा च यथा गो: शुक्लत्वादिधर्मजातं स्वरूपम् । कुत:। सर्वदा भावित्वात् यावद्द्रव्यभावित्वात् तथाऽनुकूलवेदनीयत्वविषयीकारित्वसर्वाधिकत्वादिकं यावद्द्रव्यभावित्वात् ज्ञानस्नेहरूपाया भक्ते: स्वरूपमेव । इयांस्तु विशेष: तत्रानन्दत्वस्याधिका व्यक्तिरिति ***श्रीनिवासभट्टीये*** ।। ११५ ।।

## भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
## स एव मुक्तिदाता च भक्तिस्तत्रैककारणम् ।। ११६ ।।

**व्यास**— भक्त्यैव मुच्यत इत्ययुक्तम् । मुक्तेर्भगवत्प्रसादैकसाध्यत्वादित्यत: सत्यं भगवत्तुष्टिश्च तयैवेत्याह— **भक्त्येति** ।। स एव तुष्ट एव ।। ११६-११९ ।।

१. गी.ता. १-१ ।

**वादि**— भक्त्यैव मुच्यत इत्ययुक्तम् । मुक्तेर्भगवत्प्रसादैकसाध्यत्वात् इति चेत्सत्यम् । भगवत्तुष्टिश्च तयैवेत्याह — **भक्त्यैवेति** ।। ११६ ।। ११७ ।।

**सङ्क**— ननु भक्तिरेव मुक्तिहेतुरिति कुतोऽवसीयते। अन्यदेव मुक्तिसाधनं किं न स्यादित्यत आह— **भक्त्यैवेति** ।। श्रीविष्णुः भक्त्यैव तुष्टिमभ्येति नान्येन साधनेन । अतः श्रीविष्णुप्रीतिद्वारा श्रीविष्णुभक्तिरेव मुक्तिहेतुरिति निश्चीयत इत्यर्थः। नन्वेवं भक्तेरेव स्वातन्त्र्येण मोक्षसाधनत्वेऽपसिद्धान्तः स्यादित्यत आह— **स एवेति** ।। ११६ ।।

**वरद**— ननु 'तत्प्रीत्यैव च मोक्ष' इति भगवत्प्रसादेनैव मोक्ष इत्युक्तम् । तद्भक्तेर्मोक्षसाधनत्वं विरुद्धमित्यत आह— **भक्त्यैवेति** ।। विष्णुः भक्त्यैव तुष्टिं प्रसादमभ्येति प्रसन्नो भवतीत्यर्थः। अन्येन केनापि कर्मादिना नेत्यर्थः। अतः स एव मुक्तिदाता । तत्र मुक्तौ भक्तिरेव कारणम् । प्रसादद्वारेति शेषः। भक्तेर्भगवत्प्रीतिद्वारा मोक्षसाधनत्वमिति न विरोध इति भावः ।। ११६ ।।

**ताम्र**— ननु भक्त्यैव मुच्यत इत्ययुक्तम् । 'यस्य प्रसादात्परमार्तिरूपात्' इति श्रुतिविरोधादित्यत आह— **भक्त्येति** ।। अन्येन दानतीर्थादिना । स एव तुष्ट एव । चो यस्मादित्यर्थे । यस्माद्भक्त्यैव तुष्टिमभ्येति तुष्ट एव मुक्तिदाता अतो भक्तिरेव तत्र मुक्तौ कारणमुच्यते । अतो न दोषः। ननु कुतः प्रसादमन्तराधाय भक्तेर्मोचकत्वं [१]"भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति' इत्यादिश्रुतेः, [२]"न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इति वचनाच्च अपरोक्षज्ञानोपलक्षितभक्तिरेव मोक्षसाधनं न प्रसन्नः परमात्मेति किन्न स्यात् । न ह्येकलव्यस्य गुरुप्रसादो विद्यासाधनं किन्तु गुरुभक्तिरेवेत्यत आह— **स एवेति** ।। स एव तुष्ट एव । चशब्दो ज्ञानदाता च । प्रमाणसमुच्चायको वा चशब्दः। तर्हि 'भक्तिरेवैनम्' इति श्रुतेः का गतिरित्यत आह— **भक्तिरिति** ।। तत्र मोक्षादौ भक्तिरेव कारणम् । मोक्षदाता प्रसन्नो भगवान् । भक्तिस्तु तस्य मुक्तिदाने प्रधानं साधनम् । तद्विवक्षया श्रुतिरिति भावः। यद्वा भक्तिरेव मुक्तिकारणमुच्यते तत्र वाक्ये स एव मुक्तिदाता उच्यते । भक्तिपदस्य तत्परत्वादिति भावः। तथा च सूत्रं [३]"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः' इति । यथोक्तं भाष्ये –'प्रधानसाधनत्वाद् भक्तिः करणत्वेनोच्यते'। मायावैभवे च –

'भक्तिस्थः परमो विष्णुस्तयैवेनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ।।
स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः।
भक्तिरित्युच्यते सैव करणं परमीशितुः ।।' इति ।। ११६ ।।

**जम्बु**— ननु भक्त्यैव मुच्यत इत्ययुक्तं 'यस्य प्रसादात् परमार्तिरूपात्' इति श्रुतिविरोधादित्यत आह— **भक्त्यैवेति** ।। विष्णुर्भक्त्यैव तुष्टिं प्रसादमभ्येति प्राप्नोति प्रसन्नो भवतीत्यर्थः। अन्येन भक्तिरहितकर्मादिना नेत्यर्थः। अतस्तुष्टः स एव विष्णुरेव मुक्तिदाता मुक्तेर्मोक्षस्य दाता । तत्र मुक्तौ भक्तिरेव कारणम् । प्रसादद्वारेणेति शेषः। भक्तेर्भगवत्प्रीतिद्वारा मोक्षसाधनत्वमिति न विरोध इति भावः। ननु कुतः प्रसादमन्तराधाय भक्तेर्मोचकत्वं

---

१. सू.भा. ३-३-५४ । २. गी.भा. ३-३१ । ३. ब्र.सू. ३-३-५४ ।

'भक्तिरेवैनं गमयति भक्तिरेवैनं दर्शयति' इत्यादि श्रुतेः भक्तिरेव मोक्षसाधनं न प्रसन्नः परमात्मेति किन्न स्यात् , एकलव्यस्य गुरुप्रसादो विद्यासाधनं न, किन्तु गुरुभक्तिरेवेत्यत आह— **स एवेति** ।। स एव तुष्ट एव । चशब्दात् ज्ञानदाता च । प्रमाणसमुच्चायको वा चशब्दः। तर्हि 'भक्तिरेवैनम्' इति श्रुतेः का गतिरित्यत आह— **भक्तिरिति** ।। तत्र मोक्षादेः भक्तिरेव करणम् । मुक्तिदाता प्रसन्नो भगवान् । भक्तिस्तु तस्य मुक्तिप्रदाने प्रधानसाधनम्। तद्विवक्षया श्रुतिरिति भावः। तथा च सूत्रं 'परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः' इति भाष्ये च 'प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते ।

'भक्तिस्थः परमो विष्णुस्तयैवेनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ।।
स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः।
भक्तिरित्युच्यते सैव करणं परमीशितुः ।।' इति ***श्रीनिवासभट्टीये*** ।। ११६ ।।

## ब्रह्मादीनां च मुक्तानां तारतम्ये तु कारणम् ।
## तारतम्यस्थिताऽनादिर्नित्या भक्तिर्न चेतरत् ।। ११७ ।।

**सङ्क**— न केवलं भक्तिर्मुक्तिहेतुः किन्तु ब्रह्मादीनां तारतम्येन स्थितौ च कारणमित्याह— **ब्रह्मादीनामिति**।। ननु सर्वदा भक्तिः स्वयमेकप्रकारा कथं तारतम्ये कारणं चेत्यतः तद्रूपत्वात्तेषामित्याह— **तारतम्येति** ।। ११७ ।।

**वरद**— ब्रह्मादीनां मुक्तानां तारतम्ये भक्तिरेव कारणं कथमित्यत उक्तम्— **तारतम्यस्थितेति** ।। स्वयं तरतमभावेन मुक्तेषु अनादिनित्यत्वेन स्थिता भक्तिः मुक्तानां तरतमभावे कारणं नेतरत् तत्र कारणमित्यर्थः ।। ११७ ।।

**ताम्र**— ननु भक्तेः प्रसादस्य चैकप्रकारत्वात् कथं मुक्तावानन्दवैचित्र्यमित्यत आह— **ब्रह्मादीनामिति** ।। तारतम्ये भगवत्प्रियत्वतारतम्ये च ततश्चानन्दतारतम्ये च । चलभक्तिरिह न विवक्षितेत्याह । अनादिनित्या भक्तिः कारणम् । इतरदन्यत् न कारणम् । भक्तिः स्वयं तारतम्येन वर्तमाना भगवत्प्रसादं च स्वाधिकरणेषु स्वानुसारेण सम्पाद्य मुक्तितारतम्यहेतुः। "तद्यावती वाव भक्तिस्तावज्ज्ञानं तावदानन्दो मौक्तिकः' इति श्रुतेः इति भावः ।। ११७ ।।

**जम्बु**— ननु भक्तेः प्रसादस्य चैकप्रकारत्वात्कथं मुक्तौ आनन्दवैचित्र्यमित्यंत आह— **ब्रह्मादीनामिति** ।। मुक्तानां ब्रह्मादीनां तारतम्ये भगवत्प्रियत्वतारतम्ये च । ततश्चानन्दतारतम्ये भक्तिरेव कारणं ज्ञापकम् । तदुक्तम्—

[२]"यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।।' इति ।

---

१. भा.ता. १०–७५–५० । २. सू.भा. ३-२-२१ ।

चलभक्तिरिह न विवक्षितेत्याह— **तारतम्येति** ।। तारतम्येन तरतमभावेन मुक्तेषु स्थिता अनादिनित्यभक्तिः तारतम्ये कारणम् । नेतरत् अन्यत्र कारणम् । भक्तिस्स्वयं तारतम्येन वर्तमाना भगवत्प्रसादं च स्वाधिकरणेषु स्वानुसारेण सम्पाद्य मुक्तितारतम्यहेतुः। 'यावती वाव भक्तिः तावज्ज्ञानं तावदानन्दो मौक्तिकः' इति श्रुतेरिति भावः ।। ११७ ।।

**मानुषेष्वधमाः किञ्चिद् द्वेषयुक्ताः सदा हरौ।**
**दुःखनिष्ठास्ततस्तेऽपि नित्यमेव न संशयः ।। ११८ ।।**

**वादि**— मानुषाधमानां तमः, मध्यमानां मिश्रं फलं, उत्तममानवानां मुक्तिरित्युक्तं तत्र क्रमेण हेतुमाह— **मानुषेष्वित्यादिना** ।। किञ्चित्कल्याद्यपेक्षया । सदेत्यनेन मध्ये मध्ये भक्तेः कदापि नावकाश इति सूचयति । तेन मध्यमजीवेभ्यो वैलक्षण्यं सिद्धमिति भावः ।। ११८ ।।

**सङ्क**— ननु देवानां श्रीविष्णुभक्तिरेव मुक्तिसाधनमित्युक्तम् । दैत्यानां श्रीविष्णुद्वेषः एव अन्धतमः प्राप्तिसाधनमिति चोक्तम् । तथा सति मानुषाणां स्वयोग्यतानुसारेण स्वगतिप्राप्तौ किं साधनमित्याशङ्क्य तान् त्रिधा विभज्य तद्गतिसाधनान्याह— **मानुषेष्वधमा इत्यादिना** ।। ११८-११९ ।।

**वरद**— ननु देवानां भक्तिः मोक्षहेतुः दैत्यानां द्वेषस्तमोहेतुरित्युक्तम् । मनुष्याणां का गतिः किं च तत्साधनमित्यपेक्षायां मानुषानपि त्रेधा विभज्य तद्गतितत्साधनान्याह— **मानुषेष्विति** ।। मानुषास्त्रिविधा अधमा मध्यमा उत्तमाश्चेति । तत्र मानुषेषु अधममानुषाः हरौ सदा किञ्चिद्द्वेषयुक्ताः अल्पद्वेषयुक्ता यतः ततस्तस्मात्कारणात्तेप्यधमा नित्यदुःखनिष्ठाः नित्यनिरयप्राप्तियोग्याः ।। ११८ ।।

**जना**— ततः द्वेषयुतत्वात्ते मानुषाधमा अपि ।। ११८ ।।

**ताम्र**— भक्तितारतम्येन फलप्राप्तिरन्यथानर्थ इत्येतल्लक्ष्यनिर्दिष्टतया दर्शयति— **मानुषेत्यादिना ब्रह्मणा इत्यन्तेन** ।। मिश्रभूतत्वात् मिश्रभक्तित्वात् । यद्वा मानुषांस्त्रेधा विभज्य 'मानुषेषूत्तमास्तथा' इति मोक्षित्वादिकमुक्तं तत्सनिमित्तमाह—**मानुषेष्विति** ।। ११८-११९ ।।

**जम्बु**— भक्तितारतम्येन फलप्राप्तिः अन्यथानर्थ इत्येतल्लक्ष्यनिर्दिष्टतया दर्शयति— **मानुषेष्वित्यादिना ब्रह्मणा इत्यन्तेन** ।। यद्वा प्राङ् मानुषांस्त्रेधा विभज्य 'मानुषेषूत्तमास्तथा' इति मोक्षित्वादिकमुक्तं तस्य निमित्तमाह— **मानुषेष्विति** ।। मानुषाः त्रिविधाः अधममध्यमोत्तमाश्चेति । तत्र मानुषेषु अधममानुषा हरौ सदा किञ्चित् द्वेषयुक्ताः अल्पद्वेषयुक्ताः यतः ततः तेन कारणेन तेऽपि अधमाः नित्यदुःखनिष्ठाः नित्यनिरयप्राप्तियोग्याः। अत्र संशयो नास्ति । ननु किञ्चिद् द्वेषयुक्तानां यदि तमः तर्हि शिशुपालादीनामपि तमः स्यादित्यत आह— **सदेति** ।। शिशुपालादयः पूर्वं भक्ता एव शापात् कदाचित् असुरावेशवशात् किञ्चित् द्वेषयुताः न तु सर्वदेति भावः। तदुक्तं सप्तमस्कन्धतात्पर्ये—

[1]"चैद्यादयोऽसुरावेशात् हरौ द्वेषयुताऽपि ।
निजस्वभावया भक्त्या नीता हरिसरूपताम् ।।
अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ।
इति मत्वा मोचयति चैद्यादीनपि केशवः ।।' इति ।। ११८ ।।

**मध्यमाः मिश्रभूतत्वान्नित्यं मिश्रफलाः स्मृताः।**
**किञ्चिद्भक्तियुता नित्यमुत्तमास्तेन मोक्षिणः ।। ११९ ।।**

**वादि—** किञ्चिद्भक्तियुताः ब्रह्माद्यपेक्षया किञ्चिद्भक्तियुताः ।। ११९-१२० ।।

**वरद—** मध्यमास्तु मिश्रभूतत्वात् नित्यं मिश्रज्ञानित्वात् नित्यं सर्वदा मिश्रफलाः स्वर्गनरकमर्त्यप्राप्तिफलाः स्मृता इत्यर्थः। उत्तममानुषाः हरौ किञ्चिद्भक्तियुता अल्पभक्तियुता यतः तेन कारणेन तेऽपि मोक्षिणो मोक्षप्राप्तियोग्या इत्यर्थः। तथा च अधमानां तम एव गतिः तत्साधनं द्वेषः। मध्यमानां मिश्रफलप्राप्तिः गतिः तत्साधनं मिश्रज्ञानम् । उत्तमानां मोक्षो गतिस्तत्साधनं भक्तिरेवेत्युक्तं भवति ।। ११९ ।।

**जना—** मध्यमा मानुषमध्यमाः। मिश्रभूतत्वात् विष्णोरुत्कर्षसन्देहत्वात् सन्देहस्य कोटिद्वयत्वेन मिश्रत्वम् । यद्वा माहात्म्यज्ञाने सन्देहवत्त्वेन भक्तेर्मिश्रत्वं तद्वत्त्वेन मिश्रभूतत्वम् । अन्याधिक्यस्याभावज्ञानसहितविष्णोः सर्वात्मनाऽधिक्यज्ञाने सन्देहवत्त्वेन वा मिश्रभूतत्वं न तु द्वेषभक्तिमिश्रत्वम् । अज्ञस्य राजसतामसस्यापि द्वेषहीनत्वोक्तेः। तदुक्तं गीतातात्पर्ये—

[2]"त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः।
अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः।
अज्ञा विष्णौ द्वेषहीनाः सर्वे राजसतामसाः ।।' इति ।

मिश्रफलाः स्वर्गनरकभूप्राप्तिरूपफलाः। उत्तमाः मनुष्योत्तमाः । नित्यं भक्तियुतास्तेन मोक्षिणः ।। ११९ ।।

**जम्बु—** मध्यमाः मानुषमध्यमाः । मिश्रभूतत्वात् विष्णोरुत्कर्षसन्देहवत्त्वात् । सदेत्यस्य कोटिद्वयवत्त्वेन मिश्रत्वम् । यद्वा माहात्म्यज्ञाने सन्देहवत्त्वेन भक्तेर्मिश्रत्वं तद्वत्त्वेन मिश्रभूतत्वम् । अन्याधिक्यस्याभाव-ज्ञानसहितविष्णोः सर्वात्मनाधिक्यज्ञाने सन्देहवत्त्वेन वा मिश्रभूतत्वं न तु द्वेषभक्तिमिश्रितत्वम् । अज्ञस्य राजसतामसस्यापि द्वेषहीनत्वोक्तेः। तदुक्तं गीतातात्पर्ये—

'त्रैविध्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः।
अन्याधिक्यं न मन्यन्ते श्रीशाद्राजसराजसाः।
अज्ञा विष्णौः द्वेषहीनाः सर्वे राजसतामसाः ।।' इति ।

मिश्रफलाः स्वर्गनरकभूप्राप्तिरूपफलाः स्मृताः। उत्तमाः मनुष्योत्तमाः हरौ किञ्चिद्भक्तियुक्ता यतस्तेन कारणेन तेऽपि मोक्षिणः। मोक्षप्राप्तियोग्या इत्यर्थः। तथा चाधमानां तमोगतिः तत्साधनं द्वेषः। मध्यमानां मिश्रफलप्राप्तिः गतिः तत्साधनं मिश्रज्ञानम् । उत्तमानां मोक्षो गतिस्तत्साधनं भक्तिरेवेत्युक्तं भवति ।। ११९ ।।

---

१. भा.ता.७-१-२९ । २. गी.ता. १८-४० ।

**ब्रह्मणः परमा भक्तिः सर्वेभ्यः परमस्ततः ।**
**इत्यादीनि च वाक्यानि पुराणेषु पृथक् पृथक् ।। १२० ।।**

**व्यास**— यत्प्राङ्मानुषान् त्रिधा विभज्य मानुषेषूत्तमास्तथेति मोक्षित्वादिकमुक्तम् । तत्र निमित्तमाह— **ब्रह्मण इति** ।। १२० ।।

**सङ्क**— ननु ब्रह्मादिमुक्तानां भक्तिस्तारतम्ये कारणमित्युक्तम् । तत्र ब्रह्मणः कीदृशी भक्तिरित्यत आह— **ब्रह्मण इति** ।। 'निःशेषधर्म' इत्यादिना 'ब्रह्मणः परम' इत्यन्तेन तानि वाक्यानि स्वविवक्षितार्थे प्रोक्तानि पृथक पृथक् पुराणगतानि न स्वकृतानीति भावेनाह— **इत्यादीनीति** ।। १२० ।।

**वरद**— तारतम्यस्थिता भक्तिः ब्रह्मादीनां तारतम्ये कारणमित्युक्तं तत्स्पष्टयति— **ब्रह्मण इति** ।। सर्वेभ्यो जीवेभ्यः ब्रह्मणः परमा उत्कृष्टा भक्तिः यतः तत्कारणात् ब्रह्मा सर्वेभ्यो जीवेभ्यः परम इत्यर्थः। 'निःशेष' इत्यारभ्य 'ब्रह्मणः' इत्यन्तानि वाक्यानि न स्वकपोलकल्पितानीत्याह— **इत्यादीनीति** ।। न केवलं पूर्वोक्तानि पुराणस्थानि किन्तु इत्यादीनि च वाक्यानि पुराणेषु पृथक् सन्तीत्यर्थः ।। १२० ।।

**जना**— ततः सर्वेभ्यः परमभक्तिमत्वात् । सर्वेभ्यः परम इत्यादीनि उदाहृतवाक्यान्येव आदिभूतानि येषां तानि एवमादीनि अन्यानि च पुराणेषु पृथक्पृथक् सन्ति ।। १२० ।।

**ताम्र**— ब्रह्मादीनां तारतम्ये भक्तिः कारणमित्युक्तम् । तत्र ब्रह्मणः कीदृशी भक्तिरित्यत आह— **ब्रह्मण इति** ।। १२० ।।

**जम्बु**— यतः ब्रह्मणः सर्वेभ्यो जीवेभ्यो परमा उत्कृष्टा भक्तिर्वर्तते ततः सर्वेभ्यः परमभक्तिमत्वात् सर्वेभ्यः परमः । निर्दोष इत्यारभ्य ब्रह्मण इत्यन्तानि वाक्यानि न मया कृतानीत्याह— **इत्यादीनीति** ।। न केवलं पूर्वोक्तानि वाक्यानि पुराणस्थानि किन्त्वित्यादीनि च वाक्यानि पुराणेषु पृथक्पृथक्सन्ति ।। १२० ।।

**षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः।**
**सप्तपादश्चतुर्हस्तो [१]द्वात्रिंशल्लक्षणैर्युतः।**
**असंशयः संशयच्छिद् गुरुरुक्तो मनीषिभिः ।। १२१ ।।**

---

१. 'उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु पञ्चसु। गम्भीरा त्रिषु चाङ्गेषु इयं रक्ता च पञ्चसु ।। श्रोण्यौ ललाटमूरू च घ्राणं चेति षडुन्नतम्। सूक्ष्माण्यङ्गुलिपर्वाणि केशरोमनखत्वचः ।। स्वरः सत्वं नाभिश्च त्रिगम्भीरं प्रचक्षते। पाणिपादतले रक्ते नेत्रान्तौ च नखानि च ।। पञ्चदीर्घः चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम्। सप्तरक्तं त्रिविस्तीर्णं त्रिगम्भीरं प्रशस्यते ।। पञ्चैव दीर्घा हनुलोचनानि बाहूरुनासात्र सुखप्रदानि। ह्रस्वानि चत्वारि च लिङ्गपृष्ठे ग्रीवा च जङ्घे च हितप्रदानि ।। सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशास्त्वक्चैव वै कररुहाश्च न दुःखितानाम्। वक्षोऽथ कक्षो नखनासिककास्युरंसत्रिकं चेति षडुन्नतानि ।। नेत्रान्तपादकरताल्वधरोष्ठजिह्वा रक्ता नखाश्च खलु सर्वसुखावहानि।।' इति उद्योगपर्वणि(११६/२-८ )तथा सामुद्रिकशास्त्रेऽपि प्रतिपादितानि ।। तथा जयाख्यसंहितायां (१७५/५१) 'भक्तानां संशयच्छेदं कुर्याच्छास्त्रं विना तु वै।' इति आचार्यलक्षणे ।

**व्यास**— 'यथा देवे तथा गुरौ' इति गुरुः प्रकृतः स किं लक्षणक वोदेववत् गोचरः स च क इत्यत तल्लक्षणपूर्वमाह— **षण्णवतीति** ।। १२१ ।।

**वादि**— 'यथा देवे तथा गुरौ' इति गुरुः प्रकृतः तस्य लक्षणमाह— **षण्णवतीति** ।। षण्णवत्यङ्गुलः पादादिकेशपर्यन्तमौन्नत्यगणनायां षण्णवत्यः अङ्गुलयो यस्य स तथोक्तः। अष्टवितस्तिप्रमाण इत्यर्थः। न्यग्रोधपरिमण्डलः न्यग्रोधाख्यसङ्ख्यया उदरे परितः मण्डलाकारो यस्य स तथोक्तः। न्यग्रोध इति पदेन अष्टचत्वारिंशदङ्गुलयो गृह्यन्ते । औन्नत्यादर्धप्रमाणेन मण्डलाकारवानित्यर्थः। "व्यामो बाह्वोः सकरयोस्ततयो-स्तिर्यगन्तरम् । व्यामो वटश्च न्यग्रोधौ" इत्यभिधानात् । तिर्यक् ततयोः एकहस्तोपरि एकहस्तस्य तिर्यक् विन्यसनात् तिर्यग्भूतयोर्बाह्वोर्यदन्तरं स व्याम इत्युच्यते । स एव न्यग्रोधो नाम । हस्तैः परिगणनायां चतुर्हस्तो भवेत् । एकैकस्यहस्तौ वितस्तिद्वितयप्रमाणौ यदा तदा दीर्घौ भवेतामिति भावः। सप्तपादः। अस्यैव परिमाणस्य पादेन परिगणनायां पादसप्तकं यथा भवेत् तथा पादावपि स्वयोग्यदीर्घतया युक्तो भवेतामिति भावः। अतिह्रस्वत्वे ह्रस्वपादत्वे ह्रस्वहस्तत्वे लक्षणशून्यः पुरुष इत्यर्थः। द्वात्रिंशल्लक्षणानि चैतानि। १) भुजनेत्रहनुजानुनखस्थानेषु पञ्च दैर्घ्याणि । तथा २) त्वक्केशाङ्गुलिदन्ताङ्गुलिपर्वसु पञ्च सौक्ष्म्याणि । तथा ३) पाणितलद्वये पादतलद्वये नेत्रान्ते तालुस्थाने जिह्वायामधरोष्ठे नखेषु चेति सप्तस्थानेषु सप्तरक्तत्वानि । तथा ४) वक्षःकुक्ष्यलकस्कन्ध-करवक्त्रेषु षट्स्थानेषु औन्नत्यानि षट् । तथा ५) ललाटकटिवक्षस्सु त्रिषु स्थानेषु त्रीणि पृथुत्वानि । तथा ६) जङ्घायां ग्रीवायां मेहने च त्रीणि ह्रस्वत्वानि । तथा ७) स्वरसत्वनाभिषु त्रिषु स्थानेषु गम्भीरत्वानि ।। तथा चोक्तं लक्षणग्रन्थे—

> [1]पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः।
> त्रिपृथुस्त्रिषु गम्भीरो द्वात्रिंशल्लक्षणस्त्विति ।। १२१ ।।

**सङ्क**— ननु 'यथा देवे तथा गुरौ' इत्युक्तम् । तत्र गुरोः किं लक्षणमित्यपेक्षायां गुरुलक्षणं तत्प्रसङ्गादन्यच्च विवक्षितं तत्सर्वं भविष्यत्पर्ववचनेन सविस्तरमाह— **षण्णवत्यङ्गुल इत्यादिना** ।। १२१ ।।

**वरद**— ननु 'यथा देवे तथा गुरौ' इत्युक्तम् । तत्र कः सर्वेषां मुख्यगुरुः। किं तस्य लक्षणमित्यपेक्षायां तल्लक्षणं तावदाह— **षण्णवत्यङ्गुल इत्यादिना** ।। यस्तु षण्णवत्यङ्गुलः षडुत्तरनवतिसङ्ख्याकस्वाङ्गुल्यवच्छेद्य-प्रमाणपरिमितदीर्घपरिमाण इत्यर्थः। तथा न्यग्रोधपरिमण्डलः स्वबाहुद्वयपरिमितदैर्घ्यः। तथा सप्तपादः स्वसप्तपादावच्छेद्यदेशपरिमितदीर्घपरिमाणः तथा चतुर्हस्तः चतुर्हस्तावच्छेद्यदेशपरिमितदीर्घपरिमाणः तथा द्वात्रिंशल्लक्षणैः द्व्यधिकत्रिंशल्लक्षणैर्युतः। तथा तत्त्वेषु स्वयं असंशयः संशयरहितः तथा शिष्याणां तत्त्वविषय-संशयच्छेत्ता सः मनीषिभिः पण्डितैः गुरुरुक्त इत्यर्थः। अत्र द्वात्रिंशल्लक्षणानि चैतानि । तथा हि भुजनेत्रहनुजानु-नासास्थानेषु पञ्चदैर्घ्याणि । तथा त्वक्केशाङ्गुलिदन्ताङ्गुलिपर्वसु पञ्चसौक्ष्म्याणि । तथा पाणि पादतलद्वये नेत्रान्ते तालुस्थाने जिह्वायां अधरोष्ठे नखेषु च इति सप्तस्थानेषु रक्तानि । तथा वक्षकुक्षिकटिस्कन्धकरवक्त्रेषु षट्स्थानेषु औन्नत्यानि । तथा कटिशिश्नगुल्फेषु त्रिलघुत्वानि तथा ललाटजघनवक्षःसु त्रिषु स्थानेषु त्रीणि

---

१. 'पञ्चसूक्ष्मः पञ्चदीर्घः सप्तरक्तः षडुन्नतः। त्रिपृथुर्लघुगम्भीरो द्वात्रिंशल्लक्षणस्त्विति ।।' इति वीरमित्रोदये स्कन्दपुराण-वचनत्वेनोदाहृतोऽयं श्लोकः।

पृथुत्वानि । तथा स्वरसत्वनाभिषु त्रिषु स्थानेषु त्रीणि गम्भीरत्वानीति द्वात्रिंशल्लक्षणानि । तथा चोक्तं लक्षणग्रन्थे—

"पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः।
त्रिपृथुर्लघुगम्भीरः द्वात्रिंशल्लक्षणस्त्विति"

इत्यादि यस्मात्तद्गुरुलक्षणं चतुर्मुख एव मुख्यं तस्मात्कारणात्सर्वेषां शेषादीनां सर्वदा संसारे मुक्तौ च ब्रह्मैव मुख्यो गुरुरित्यर्थः ।। १२१ ।।

**जना—** तथा गुराविति प्रसक्तगुरोर्लक्षणमाह— **षण्णवत्यङ्गुल इति** ।। षण्णवत्यङ्गुलपरिमितः न्यग्रोधपरिमण्डलः। व्यामपरिमितः 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् । व्यामो वटश्च न्यग्रोधौ' इत्यभिधानात् । मनीषिभिरेतादृशः गुरुरुक्तो यतस्ततस्मान्मुख्यो गुरुः ब्रह्मैव ।। १२१ ।।

**ताम्र—** 'यथा देवे तथा गुरौ' इति हरिगुरुभक्त्योः कर्तव्यत्वमुक्तम् । तत्र हरिभक्तेरावश्यकत्वमुक्त्वा गुरुभक्तेरप्या–वश्यकत्वमित्यभिप्रेत्य गुरुष्वपि नैकप्रकारेण भक्तिः कार्या । किन्तु तारतम्येनैवेति भावेन लक्षणपूर्वं मुख्यामुख्य-गुरूनाह— **षण्णवत्यङ्गुलेति** ।। न्यग्रोधपरिमण्डलः स्वबाहुद्वयपरिमितदैर्घ्यः। 'हस्ते मुष्ट्या तु बद्धया' इत्युक्तेः। मुष्टिबद्धहस्तचतुष्टयसमदीर्घः। "यस्तु स्वमुखमानेन नवाधो देहवान् पुनः' इति दशमुख–परिमाणवत्त्वमुच्यते मुखस्य च नवाङ्गुलत्वं प्रमितम् । तथा च षण्णवत्यङ्गुलत्वं विरुद्धमिति चेत्तत्र गले च चतुरङ्गुलं मुखादूर्ध्वं द्व्यङ्गुलोच्चमिति षडङ्गुलापेक्षया दशमुखत्वोक्तेरविरोधात् । अत्र यावद्वक्तव्यं तावदस्मदाचार्यकृततन्त्रसारव्याख्याने द्रष्टव्यम् । द्वात्रिंशल्लक्षणानि तु नास्माभिर्ज्ञायन्ते 'तेनायं दुःखबहुल' इत्युक्त्वा 'पुनरेव च । वदन्तमेव पाञ्चाली कटाक्षेण न्यवारयत्' इति रहस्यत्वोक्तेरिति ज्ञेयम् ।। १२१ ।।

**जम्बु—** अस्मदुक्तेषु अर्थेषु न प्रष्टव्यम् । सम्यग्लक्षणलक्षिताचार्यवचनेषु प्रमाणप्रश्नस्य कर्तव्यत्वाभावेना–चार्यलक्षणमाह— **षण्णवत्यङ्गुल इति** ।। तदुक्तं बृहद्भाष्ये—

[२]"पञ्चोराः सप्तपादो यः नाशङ्क्यं तद्वचः क्वचित्
चतुर्विंशाङ्गुलतनुः तद्वाक्यं देवपूजितम् ।।
यस्मान्न विदुषां वाक्यं आशङ्क्यं केनचित् क्वचित्।
तस्माद् वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः ।।
न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना ।।'

अत एव सर्वागमेषु आचार्यलक्षणमुच्यते इति षण्णवत्यङ्गुलः षडुत्तरनवतिसङ्ख्याकस्वाङ्गुल्यवच्छेद्यप्रमाण–परिमितदीर्घपरिमाण इत्यर्थः। तथा न्यग्रोधपरिमण्डलः 'स्वबाहुद्वयपरिमितदैर्घ्यं बाहू न्यग्रोध उच्यते' इति भागवततात्पर्योक्तेः । तथा सप्तपादः सप्तपादावच्छेद्यदेशपरिमितदीर्घपरिमाणः। चतुर्हस्तः स्वचतुर्हस्तावच्छेद्य–देशपरिमितदीर्घपरिमाणः। तथा द्वात्रिंशल्लक्षणैः द्व्यधिकत्रिंशल्लक्षणैः युतः। तथा तत्त्वेषु स्वयमसंशयः संशयरहितः तथा शिष्याणां तत्त्वविषये संशयच्छेत्ता यः सः मनीषिभिः पण्डितैः गुरुरुक्तः इत्यर्थः। अत्र द्वात्रिंशल्लक्षणानि । तथाहि । भुजनेत्रहनुजानुनासस्थानेषु पञ्चसु दैर्घ्यम् । तथा त्वक्केशाङ्गुलिदन्तागुलिपर्वसु पञ्चसु सौक्ष्माणि । तथा पाणितलद्वयनेत्रान्ते तालुस्थाने जिह्वायामधरोष्ठनखेषु चेति सप्तस्थानेषु सप्तरक्तानि । वक्षःकुक्षिललाट–

---

१. गी.ता. १३-२५ । २. बृ.भा. ५-९, शाकल्यब्राह्मणम् ।

स्कन्धकक्षवक्त्रेषु षट् स्थानेषु औन्नत्यानि । तथा ललाटकटिवक्षस्सु त्रिषु स्थानेषु त्रीणि पृथुत्वानि । तथा जिह्वायां ग्रीवायां मेहने च त्रीणि ह्रस्वानि । तथा सत्त्वे स्वरनाभिषु त्रिषु स्थानेषु त्रीणि गम्भीराणीति द्वात्रिंशल्लक्षणानि। तथा चोक्तं लक्षणग्रन्थे—

'पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः।
त्रिपृथुर्लघुगम्भीरो द्वात्रिंशल्लक्षणानि तु' इत्यादि ।। १२१ ।।

**भारतश्री—** तथा लक्षणमाह— **षण्णवत्यङ्गुल इत्यादिना** ।। न्यग्रोधपरिमण्डलः स्वबाहुपरिमितदीर्घः। द्वय इति द्वात्रिंशल्लक्षणानि सरहस्यानि[1] ।। १२१-१२६ ।।

## तस्माद् ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा ।
## अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः ।। १२२ ।।

**व्यास—** ब्रह्मा मुख्यो गुरुरिति विशेषोक्त्या प्राप्तमाह— **अन्येऽपीति** ।। १२२ ।।

**सङ्क—** ननु एवंलक्षणलक्षितो गुरुः क इत्यत आह— **तस्मादिति** ।। ननु सर्वेषां ब्रह्मैव मुख्यगुरुश्चेत् अन्येषां केन प्रकारेण गुरुत्वमित्यत आह— **अन्येऽपीति** । स्वात्मनः स्वस्मात् मुख्या । एकैकस्मादुत्तरोत्तरक्रमेण गुरव इत्यर्थः ।। १२२ ।।

**वरद—** ननु तर्हि चतुर्मुख एव मुख्यगुरुश्चेदन्येषां गुरुत्वं नास्त्येवेति प्रतीयत इत्यत आह— **अन्येऽपीति** ।। चतुर्मुखात् अन्ये शेषादयः मनुष्योत्तमपर्यन्ताः स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः पण्डितैरित्यर्थः ।। १२२ ।।

**जना—** 'ब्रह्मा गुरुर्मुख्य' इत्यनेन सूचितमर्थमाह— **अन्येति** ।। स्वात्मनः स्वस्मान्मुख्याः श्रेष्ठा अन्येऽपि क्रमात्तारतम्यक्रमेण गुरवश्च ईरिताः ।। १२२ ।।

**ताम्र— सर्वेषामपीति** सर्वदा नियमेन । [2]'ज्ञानं प्राप्य बहुभ्योऽपि नर्ते मुक्तिश्चतुर्मुखात्' इति तदुपदेशं विना कस्यापि मोक्षाभावोक्तेरिति भावः ।। १२२ ।।

**जम्बु—** ननु एवंलक्षणलक्षितो गुरुः क इत्यत आह— **तस्मादिति** ।। यस्मादेतद्गुरुलक्षणं चतुर्मुख एव मुख्यं तस्मात् कारणात् सर्वेषां शेषादीनां सर्वदा संसारे मुक्तौ च ब्रह्मैव मुख्यो गुरुः। 'ज्ञानं प्राप्य बहुभ्योऽपि नर्ते मुक्तिश्चतुर्मुखात्' इति तदुपदेशं विना कस्यापि मोक्षाभावोक्तेरिति भावः। ननु चतुर्मुख एव मुख्यगुरुश्चेदन्येषां गुरुत्वं नास्त्येवेति प्रतीयतेत्यत आह— **अन्येऽपीति** ।। चतुर्मुखादन्ये शेषादयः मनुष्योत्तमपर्यन्ताः स्वात्मनो मुख्याः क्रमाद्गुरव ईरिता इति । पण्डितैरिति शेषः। तदितरेषामुत्तमानां विद्यासम्प्रदायप्रवर्तकत्वात् गुरुत्वम् । अप्रवर्तकानां तु अनुग्राहकत्वादिनेति । तदुक्तमनुव्याख्याने

[3]'स्वोत्तमास्तु क्रमेणैव सर्वेषां गुरवस्स्मृताः।
उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये ।।' इति ।

अथवा स्वात्मनः स्वस्मात् मुख्याः श्रेष्ठाः अन्येऽपि क्रमात् तारतम्येन गुरवश्च ईरिताः ।। १२२ ।।

---

१. शुद्धपाठः नोपलब्धः । २. भा.ता. ११-९-३१ । ३. अनु. ३-३-१४०२, पूर्वविकल्पाधिकरणम् ।

**क्रमाल्लक्षणहीनाश्च लक्षणालक्षणैः समाः।**
**मानुषा मध्यमाः सम्यग् दुर्लक्षणयुतः कलिः ।। १२३ ।।**

**व्यास**— क्रमाद्गुरुत्वे निमित्तमाह— **क्रमादिति** ।। तदन्येषां गुरुत्वप्राप्तिरेव नास्तीति भावेन तत्स्वरूपं निरूपयति— **लक्षणालक्षणैरिति** ।। १२३ ।।

**वादि**— क्रमाद्गुरुत्वे निमित्तमाह— **क्रमादिति** ।। लक्षणं बहु । अलक्षणं तु ईषदीषदेवेति भावः। तदन्येषां गुरुत्वयोग्यतैव नास्तीति भावेनाह— **लक्षणालक्षणैः समाः**।। मध्यमा मानुषा इति ।। १२३ ।।

**सङ्क**— ननु सर्वेषां लक्षणसाम्ये सति क्रमाद्गुरुत्वं कथमित्यत आह— **क्रमाल्लक्षणहीनाश्चेति** ।। अयं नियमो ब्रह्माणमारभ्यमनुष्योत्तमपर्यन्तमेव । अतस्तेषामेव मोक्ष इत्यभिप्रायः। ननु अर्वाक्तनानां मोक्षाभावे किं कारणमित्याशङ्क्याह— **लक्षणालक्षणैस्समा इत्यादि** ।। लक्षणालक्षणैस्समत्वेन हरौ द्वेषभक्तिसमत्वान्मध्यममनुष्याणां मोक्षो न भवेत् । सम्यग् दुर्लक्षणयुतत्वेन हरौ सम्पूर्णद्वेषयुतत्वात् कलेर्मोक्षो न भवेदित्यर्थः। तारतम्येन एकैकस्मादेकैकस्य लक्षणहीनत्वे मध्यममनुष्येषु कथं लक्षणसंस्थेत्यतो वाह— **लक्षणालक्षणैस्समा इति** ।। कथमसुरेषु लक्षणसंस्थेत्यतो वाह— **सम्यगिति** । असुरेषु लक्षणानि न सन्त्येव। किन्तु दुर्लक्षणानि सन्ति तारतम्येन । तत्र सम्यग् दुर्लक्षणयुतः कलिरित्यर्थः ।। १२३ ।।

**वरद**— ननूक्तलक्षणानि सर्वेषु सन्ति चेत् कथं तदा तारतम्येन गुरुत्वमित्यतः तदेव नास्तीत्याह— **क्रमादिति** ।। चतुर्मुखापेक्षया शेषे किञ्चिल्लक्षणन्यूनत्वं तदपेक्षया इन्द्र इत्यादिप्रकारेण क्रमाल्लक्षणहीनाः अतः क्रमाद्गुरव इत्यर्थः। तर्हि मध्यममानुषेषु कथमित्यत आह— **लक्षणालक्षणैः समा इति** ।। मध्यममानुषाः लक्षणैः कतिपयैरलक्षणैर्दुर्लक्षणैस्तत्समसङ्ख्याकैः समा इत्यर्थः। यथा सम्यग्लक्षणसम्पन्नो ब्रह्मा एवं सम्यग्दुर्लक्षणयुतः कलिः तस्मादेव सर्वेभ्योऽसुरेभ्योऽधिकः ।। १२३ ।।

**जना**— क्रमाद्गुरुत्वे निमित्तमाह— **क्रमादिति** ।। क्रमाल्लक्षणैः हीनाश्च । लक्षणहीनत्वमुक्तं बृहद्भाष्ये—

[1]"द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः।
नियमेनैव विष्णोस्तु प्रादुर्भावा विशेषतः ।।
सहस्रारेण चक्रेण चिह्निता दक्षिणे करे ।
गदयाष्टास्रया चैव शतावर्तेन कम्बुना ।।
वामे करे तथाब्जेन सहस्रदलशोभिना ।
अष्टाविंशल्लक्षणैश्च गिरीशपदयोगिनः ।।
चतुर्विंशतिमारभ्य षोडशादा सुरा मताः।
आष्टकादृषयः प्रोक्तास्तदूनाश्चक्रवर्तिनः ।।' इति ।

दुर्लक्षणयुताश्चेत्यपि ज्ञेयम् । अर्जुनादेर्दुर्लक्षणयुतत्वेन कथनात् । ननु मनुष्योत्तमेभ्योऽर्वाक्तनानां मोक्षाभावे किं कारणमित्याशङ्क्य आह— **लक्षणालक्षणैरिति** ।। मध्यमा मानुषा लक्षणैरलक्षणैः समाः समानाः लक्षणदुर्लक्षण–

---

१. बृ.भा. ३-३, उद्गीथब्राह्मणम् ।

युक्ता:। तेन द्वेषभक्तिभ्यां समत्त्वात्तेषां मोक्षो नास्तीति भाव:। सम्यक्दुर्लक्षणयुतत्वं नाम लक्षणाभावविशिष्टसर्व-दुर्लक्षणवत्वम् । तेन हरौ सम्यग्द्वेषयुतत्वात् कलेरन्धन्तम: प्राप्तिरिति भाव:। यद्वा देवानामुक्त्वा मनुष्य-मध्यमानाह— **लक्षणालक्षणैरिति** ।। कलेराह सम्यगिति ।। १२३-१२४ ।।

**ताम्र**— तदन्येषां गुरुत्वप्राप्तिरेव नास्तीति भावेनाह— **लक्षणेति** ।। सल्लक्षणदुर्लक्षणमिश्रिता इत्यर्थ:। सल्लक्षणानि च मुक्त्ययोग्यलक्षणेभ्योऽतिविलक्षणानीति बोध्यम् । दुर्लक्षणयुत इत्यनेन तमोयोग्येषु दुर्लक्षणतारतम्यं सल्लक्षणाभावं च सूचयति ।। १२३ ।।

**जम्बु**— क्रमाद्गुरुत्वे निमित्तमाह— **क्रमादिति** ।। क्रमाल्लक्षणै: हीनाश्चेत्यत्रायं विवेक:। हरेरनन्तावताराणां च द्वात्रिंशल्लक्षणनि अनन्तानि । विरिञ्चपदयोग्यस्य द्वात्रिंशल्लक्षणानि । गिरिशपदयोग्यस्याष्टाविंशल्लाक्षणानि । इन्द्रादीतरदेवानां आचतुर्विंशति षोडशपर्यन्तलक्षणानि । ऋष्यादीनामष्टलक्षणानि । तदूनलक्षणानि च चक्रवर्त्यादीनाम् । एवमङ्गुलिलक्षणान्यपि । विरिञ्चपदयोग्यस्य षण्णवत्यङ्गुलम् । क्रमात् ह्रस्वत् एकनवत्यङ्गुलपर्यन्तं सुराधमानाम् । तत: सप्ताशीत्यङ्गुलपर्यन्तं गन्धर्वाणाम् । सप्ताशीत्यङ्गुलं मनुष्योत्तमानां परिमाणम् । एवं पादलक्षणेऽपि सप्तपादपरिमाणं विरिञ्चस्य तत्पदायोग्यस्य अङ्गुल्योनसप्तपादपरिमाणं देवानां पुनरङ्गुल्योनसप्तपादपरिमाणम् गन्धर्वादीनां पृथ्वादीनां अवरदेववत्परिमाणानीति । तदुक्तं बृहद्भाष्ये—

द्वात्रिंशल्लक्षणैस्सम्यग्युक्ता वायुत्वयोग्यका:।
नियमेनैव विष्णोस्तु प्रादुर्भावा अशेषत: ।।
सहस्रारेण चक्रेण चिह्निता दक्षिणे करे ।
गदयाष्टास्रया चैव शतावर्तेन कम्बुना ।।
वामे करे तथाब्जेन सहस्रदलशोभिना ।
अष्टाविंशल्लक्षणाश्च गिरीशपदयोगिन: ।।
चतुर्विंशतिमारभ्य षोडशादासुरा: स्मृता:।
आष्टकादृषय: प्रोक्तास्तदूनाश्चक्रवर्तिन: ।।' इति ।

शिष्टं प्रमाणजातं गीतातात्पर्ये द्रष्टव्यम् । द्वात्रिंशल्लक्षणनि तु नास्माभि: ज्ञायन्ते 'तेनायं दु:खबहुल' इत्युक्त्वा ''पुनरेव च । वदन्तमेव पाञ्चाली कटाक्षेण न्यवारयत्' इति रहस्यतोक्तेरिति ज्ञेयम् । अत: क्रमाद्गुरव इति । तर्हि मध्यममानुषेषु कथमित्यत आह— **लक्षणालक्षणैरिति** ।। मध्यममानुषा: लक्षणै: कतिपयै: अलक्षणै: दुर्लक्षणै-स्तत्समसङ्ख्याकै: समा इत्यर्थ:। तेन भक्तिद्वेषाभ्यां समत्वात्तेषां मोक्षो नास्तीति भाव:। यथा सम्यग्लक्षणसम्पन्नो ब्रह्मा एवं सम्यग्दुर्लक्षणयुत: कलि:। तस्मात् सर्वेभ्यो असुरेभ्योऽधिक:। सम्यग्दुर्लक्षणत्वं नाम लक्षणाभाव-विशिष्टसर्वदुर्लक्षणवत्वम् । तेन हरौ सम्यग्द्वेषयुतत्वोक्ते: अन्धन्तम: प्राप्तिरिति भाव:। एवं दुर्लक्षणं असुरेषु मानुषान्तेषु तारतम्येन द्रष्टव्यम् ।। १२३ ।।

**सम्यग्लक्षणसम्पन्नो यद् दद्यात् सुप्रसन्नधी:।**
**शिष्याय सत्यं भवति तत् सर्वं नात्र संशय: ।। १२४ ।।**

१. म.ता.नि. ३०-११७ ।

**व्यास**— उक्तलक्षणवताप्यप्रसन्नेनोक्तार्थाः प्रकाशन्ते किमिति जिज्ञासायामाह— **सम्यगिति** ।। १२४ ।

**सङ्क**— नन्वेवं सर्वलक्षणसम्पन्नो गुरुः किं फलं दातुं समर्थ इत्यत आह— **सम्यगिति** ।। १२४ ।।

**वरद**— एवं दुर्लक्षणतारतम्यानुसारेषु मनुष्याधमान्तेषु तारतम्यं द्रष्टव्यमित्याह— **सम्यगिति** ।। देवताप्रसादस्य गुरुप्रसादसाध्यत्वात् देवतापूजावत् गुरुपूजापि कर्तव्येति युक्तं इति वक्तुं मोक्षसाधनज्ञानस्य गुरुप्रसादसाध्यत्वे अन्वयव्यतिरेकावाह— **सम्यग्लक्षणेति** ।। पूर्वोक्तलक्षणैः सम्यक् सम्पूर्णतया सम्पन्नः सुप्रसन्नधीः सम्यक् प्रसन्नबुद्धिः शिष्याय यत् ज्ञानादिकं दद्यात् तत्सर्वं सत्यं मोक्षाख्यफलजनकं भवतीत्यर्थः ।। १२४ ।।

**जना**— गुरुलक्षणमुक्त्वा तत्साध्यं प्रयोजनमाह— **सम्यगिति** ।। तत्सर्वमित्युक्तं तथा च मोक्षदाने तदपि सत्यं भवेत् । तथात्वे 'तत्प्रीत्यैव च मोक्षः प्राप्यस्तेनैव नान्येन' इत्यनेन विरोधः स्यादित्यत आह— **अगम्यत्वादिति** ।। तद्दत्तं मुक्त्याद्यपि हरिदत्तमिति भावः ।। १२४ ।।

**ताम्र**— एवं गुरून्निरूप्य

'मोक्षो ज्ञानञ्च क्रमशो मुक्तिगो भोग एव च ।
उत्तरेषां प्रसादेन............................।।'

इति ज्ञानादेस्तत्प्रसादसाध्यत्वमुक्तम् । तदन्वयव्यतिरेकाभ्यां उपपादयन् गुरुप्रसादसाधनमाह श्लोकद्वयेन— **सम्यगिति** ।। ज्ञानादिकम् । तत्सर्वं ज्ञानं सत्यं फलाव्यभिचारि । पूर्णफलप्रदमिति यावत् ।। १२४ ।।

**जम्बु**— देवताप्रसादस्य गुरुप्रसादसाध्यत्वात् देवतापूजाद्गुरुपूजापि कर्तव्येति वक्तुं मोक्षसाधनज्ञानस्य गुरुप्रसादसाध्यत्वे अन्वयव्यतिरेकाभ्यामाह— **सम्यग्लक्षणेति** ।। लक्षणैः सम्यक् सम्पूर्णतया सम्पन्नः युक्तः सुप्रसन्नधीः सम्यक्प्रसन्नबुद्धिः शिष्याय यज्ज्ञानादिकं दद्यात् तत्सर्वं सत्यं मोक्षख्यफलजनकं भवतीत्यर्थः। अत्र संशयो नास्ति ।। १२४ ।।

**अगम्यत्वाद्धरिस्तस्मिन्नाविष्टो मुक्तिदो भवेत्।**
**नातिप्रसन्नहृदयो यद् दद्यात् गुरुरप्यसौ।**
**न तत् सत्यं भवेत् तस्मादर्चनीयो गुरुः सदा ।। १२५ ।।**

**व्यास**— यच्छिष्याय गुरुर्दद्यात् सत्यं भवेदित्ययुक्तं तस्य मोक्षदाने सामर्थ्याभावात् सामर्थ्यभावे वा ब्रह्मलक्षणस्यातिव्याप्तिरित्यत आह— **अगम्यत्वादिति** ।। सम्यग्लक्षेणेत्यस्य भावार्थमाह— **नातिप्रसन्नेति** ।। १२५ ।।

**वादि**— ननु—

[1]"..........मस्तके हस्तपङ्कजम् ।
निधायोत्तीर्य संसारात्सुखी भव हरेः प्रियः ।।"

---

१. ॐतत्सत्प्रणवकल्पे १६श्लोकः।

इति गुरुणा शिष्यायाशीर्वादो देय इत्याचारकाण्डे कथ्यते । तदपि सत्यं भवति चेत् मुक्तिदत्वं भगवल्लक्षणं गुरावतिव्याप्तम् । न चेदुक्तमयुक्तं स्यादित्यत आह— **अगम्यत्वादिति** ।। इदानीं गुरुप्रसादोऽवश्यं सम्पादनीय इति भावेनाह— **नातिप्रसन्नेति** ।। अत एव इन्द्रविरोचनयोरेकदैव [1]"य एषोऽन्तरक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच' इत्येकयोक्त्यैव ब्रह्मणा ज्ञाने दत्तेऽपि विरोचनस्य चक्षुस्तारान्तर्दृश्यमानस्वप्रतिमैवात्मेति तावदुच्यते । तच्च बिम्बप्रतिबिम्बयोरैक्यात् 'अहं ब्रह्मास्मि' इत्यत्रैव पर्यवस्यतीति मिथ्याज्ञान एव दार्ढ्यमभूत्। इन्द्रस्य तु 'सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' इति श्रुत्युक्तन्यायेन यत्सन्धानाच्चक्षुरप्यसङ्गमभूत् सोऽयमसङ्गो भगवान्नारायण आत्मेति तत्त्वज्ञान एव दार्ढ्यमभूदिति भावः ।। १२५ ।।

**सङ्क**— ननु हरिणैव मोक्षादिपुरुषार्थसिद्धौ किं गुरुणेत्यत आह— **अगम्यत्वादिति** ।। ननु उक्तलक्षणसम्पन्नो हि गुरुर्यद्दध्यात् तत्सत्यं भवेत् । भवत्येव । अतस्सुप्रसन्नधीरिति विशेषणं व्यर्थमित्याशङ्क्य आह— **नातिप्रसन्न इति** ।। ननु तर्हि गुरोरतिप्रसन्नधीत्वं कुतो भवतीत्याह— **तस्मादिति** ।। १२५ ।।

**वरद**— ननु स्वप्रसादद्वारा गुरुरेव मोक्षप्रदः किमित्यपेक्षायामाह— **अगम्यत्वादिति** ।। गुरुद्वारमन्तरेण हरेरगम्यत्वात् तस्मिन् गुरौ आविष्टः सन्निहितो हरिः मुक्तिदो भवेत् । तथा च हरेः सकाशात् मोक्षप्राप्तै गुरुः द्वारमिति भावः। एवं मोक्षस्य गुरुप्रसादसाध्यत्वेऽन्वयमभिधाय तद्व्यतिरेकमाह— **नातिप्रसन्नेति** ।। असौ पूर्वोक्तलक्षणसम्पन्नो गुरुरपि नातिप्रसन्नहृदयः अत्यन्तं प्रसन्नबुद्धिरहितः सन् शिष्याय यद्द्यात् तत्सत्यं न भवेत् फलजनकं न भवेत् यस्मात् तस्मात् गुरुप्रसादार्थं सदा गुरुरर्चनीय इत्यर्थः ।। १२५ ।।

**जना**— [2]गुरौ सम्यक् लक्षणवत्वविशेषणेनालम् । किं सुप्रसन्नधीरिति विशेषणेनेत्यत आह— **नातीति** ।। गुरुरपि हितोपदेष्टापि । अतिप्रसादने कारणमाह— **अर्चनीय इति** ।। १२५ ।।

**ताम्र**— नन्विदमयुक्तम् । [3]"अज्ञानां ज्ञानदो विष्णुः' इत्यादेर्विष्णोरेव ज्ञानस्य तत्फलभूतमोक्षस्य च दातृत्वात् । गुरौ तदुक्तौ विरोधादित्यत आह— **अगम्यत्वादिति** ।। ज्ञानं दत्वा मुक्तिदः ।। १२५-१२६ ।।

**जम्बु**— ननु स्वप्रसादद्वारा गुरुरेव मोक्षप्रदः किमित्यपेक्षायामाह— **अगम्यत्वादिति** ।। गुरुद्वारमन्तरेण हरेरगम्यत्वात् तस्मिन् गुरावाविष्टः सन्निहितो हरिः मुक्तिदो भवेत् । तथा च हरेस्सकाशात् मोक्षप्राप्तौ गुरुः द्वारमिति भावः। एवं मोक्षस्य गुरुप्रसादसाध्यत्वेऽन्वयमभिधाय तद्व्यतिरेकमाह— **नातिप्रसन्नेति** ।। असौ पूर्वोक्तलक्षणसम्पन्नो गुरुरपि नातिप्रसन्नहृदयः अत्यन्तप्रसन्नबुद्धिरहितः सन् शिष्याय यद् दद्यात् तत् सत्यं न भवेत् फलजनकं न भवेत् । यस्मात् तस्मात्सदा गुरुरर्चनीय इत्यर्थः ।। १२५ ।।

**स्वावरणां गुरुत्वं तु भवेत् कारणतः क्वचित्।**
**मर्यादार्थं तेऽपि पूज्या न तु यद्वत् परो गुरुः"।**
**इत्येतत् पञ्चरात्रोक्तं पुराणेष्वनुमोदितम् ।। १२६ ।।**

---

१. छा.उ. ८-२-४ । २. जनार्दनीये 'अगम्यत्वात्' इति श्लोकः पूर्वश्लोके व्याख्यातः । ३. अनु. १५, जिज्ञसाधिकरणम् ।

**व्यास**— ननु स्वावरोऽपि कदाचिद्गुरुर्भवति । स कथं सम्यगर्चनीय इत्यत आह— **स्वेति** ।। १२६ ।।

**वादि**— इन्द्रस्य स्वावरो बृहस्पतिरपि गुरुरासीत् । तदा कथं पूजा कार्येत्यत आह— **स्वावराणामिति** ।। १२६ ।।

**सङ्क**— ननु स्वोत्तमाः सर्वे गुरवः उक्ताः। ते सर्वे स्वाभिप्रायसिद्ध्यर्थं सदा अर्चनीया इत्युक्तम् । यदि कदाचित्स्वावराणामपि केनचित्कारणेन गुरुत्वं भवेत् तदा स्वोत्तमगुरुवत्तेऽपि पूज्या भवन्ति वा न वेत्याकाङ्क्षायां तन्निर्णयमाह— **स्वावराणामित्यादिना** । गुरुत्वाद् पूज्यत्वमस्तीति लौकिकवैदिकप्रसिद्धिः। अतो न पूज्यश्चेत् शिष्टाचारभङ्गेन दोषप्राप्तेस्तत्परिहाराय स्वावरा अपि गुरवः पूज्याः मर्यादार्थमित्यर्थः— **परो गुरुरिति** ।। उत्तमगुरुः स्वतः इत्यर्थः। षण्णवत्यङ्गुल इत्यादिना योऽर्थोऽभिहितस्तमर्थं पञ्चरात्रपुराणसंवादेन गुरुलक्षणं वक्तुं समर्थयति— **इत्येतदिति** ।। १२६ ।।

**वरद**— ननु 'अन्येऽपि स्वात्मनो मुख्या' इत्यत्र स्वापेक्षया गुणाधिकत्वं गुरुत्वे प्रयोजकमुक्तम् । तर्हि वयोज्येष्ठत्वादिमात्रेण वा एकदेशोपदेशकर्तृत्वेन वा यद्गुरुत्वं तत्र स्यादित्यत आह— **स्वावराणामिति** ।। स्वापेक्षया ज्ञानादिरहितानां क्वचित् कारणतः वयोज्येष्ठत्वादिना गुरुत्वं भवेत् । मर्यादार्थं लोकमर्यादार्थं तेऽपि स्वावरा अपि गुरुत्वं प्राप्ताः पूज्याः । नतु परो गुरुः मुख्यो गुरुः स्वापेक्षया मुख्यो गुणाधिको गुरुः यद्वत् यथा पूज्यः तथा न पूज्य इत्यर्थः। षण्णवत्यङ्गुलमित्यादिकं न स्वकोपकल्पितमित्यत आह— **इत्येतत्पञ्चेति** ।। एतद्वचनजातं पञ्चरात्रोक्तं तथान्येषु पुराणेषु अनुमोदितं सम्प्रतिपन्नमित्यर्थः ।। १२६ ।।

**जना**— स्वावरस्य कारणाद्गुरुत्वे सति स्वोत्तमगुरुवदर्चनीयः किमित्यत आह— **स्वेति** ।। तु शब्दोऽप्यर्थः। स्वावराणामपीति सम्बन्धः। इति अनेन प्रकारेणैतत्प्रतिपादितमर्थजातं पञ्चरात्रेऽप्युक्तमस्ति पुराणेश्वनुमोदितं सम्मतीकृतं चास्ति ।। १२६ ।।

**ताम्र**— स्वोत्तमा एव गुरव इति नियमः। कारणविशेषेण स्वावराणां गुरुत्वे तेऽपि धर्ममर्यादासंरक्षार्थं पूज्या किमुत उत्तमा इति भावेनाह— **स्वावरेति** ।। पुराणानामेतत्प्रमेयप्रतिपादकत्वं पञ्चरात्रोपजीवनेनेति सूचयितुं अनुमोदितमनुमतमित्युक्तम् ।। १२६ ।।

**जम्बु**— ननु 'अन्येऽपि स्वात्मनो मुख्या' इति स्वापेक्षया गुणाधिकत्वं गुरुत्वे प्रयोजकं तर्हि

'पिता माता तथा भ्राता ज्येष्ठः श्वशुरमातुलौ ।
मातामहश्चोपनीता सप्तैते गुरवः स्मृताः ।।'

इति पित्रादीनां गुरुत्वोक्तिर्विरुद्धेत्यत आह— **स्वावरणामिति** ।। यद्वा—

[1]'स यदा परमाचार्यं देवानां आत्मनश्च ह ।
नाभ्यनन्दत सम्प्राप्तं प्रत्युत्थानासनादिभिः ।।
वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ।
नोच्चचालासनादिन्द्रः पश्यन्नपि समागतम् ।।'

१. भा. ६-७- ७-८ ।

इत्यादिना बृहस्पतिं प्रति अप्रत्युत्थानादिना इन्द्रस्य स्वर्गभ्रंश उक्तः। बृहस्पतेरिन्द्रावरत्वात् कथं गुरुत्वमित्यत आह— **स्वावरणामिति** ।। स्वावराणां स्वापेक्षया ज्ञानादिरहितानां क्वचित्कारणतः वयोज्येष्ठत्वादिना गुरुत्वं भवेत् । मर्यादार्थं तेऽपि स्वावरा अपि गुरुत्वं प्राप्ताः पूज्याः न तु परो गुरुः मुख्यगुरुः स्वापेक्षया मुख्यगुरुः मुख्यो गुणाधिको गुरुर्यद्वत् पूज्यस्तथा न पूज्य इत्यर्थः। षण्णवत्यङ्गुल इत्यादिकं न स्वकपोलकल्पितमित्याह— **इत्येतदिति** ।। इति अनेन प्रकारेण एतत् प्रतिपादितमर्थजातं पञ्चरात्रेप्युक्तमस्ति पुराणेष्वनुमोदितं सम्मतं कृतमस्ति ।। १२६ ।।

**यदा मुक्तिप्रदानाय स्वयोग्यं पश्यति ध्रुवम् ।**
**रूपं हरेस्तदा तस्य सर्वपापानि भस्मसात् ।। १२७ ।।**

**व्यास**— ज्ञानान्मोक्ष इत्युक्तं तदयुक्तं पापानामव्ययादित्यत आह— **यदेति** ।। ध्रुवं भस्मसादिति सम्बन्धः ।। १२७ ।।

**वादि**— भगवदपरोक्षज्ञानान्मोक्ष इत्युक्तम् । तदा रामकृष्णाद्यवतारदर्शिनामसुराणां कुतो न मुक्तिः, भोक्तव्य–पापानामनन्तत्वात्कथं मुक्तिरिति चोद्यद्वयं परिहरति— **यदा मुक्तिप्रदानायेति** ।। स्वस्य मुक्तिप्रदानाय योग्यं रूपं पश्यतीति अर्थक्रमेण सम्बन्धो ज्ञेयः। यस्य कस्यचिद्भगवद्रूपस्य दर्शनान्न मुक्तिः किन्तु स्वबिम्बरूपदर्शनादेव मुक्तिरिति प्राचीनशङ्कायाः परिहारः सूचितः। द्वितीयस्योत्तरं तु स्पष्टम् । पूर्वपापानि अप्रारब्धानि । ज्ञानोत्तरकालमपि उत्तमद्रोहादिजन्यपापस्य श्लेषोऽस्ति । अतः कानिचिदित्युक्तम् ।। १२७ ।।

**सङ्क**-

'तदा मुक्तिश्च देवानां यदा प्रत्यक्षगो हरिः।
स्वयोग्ययोपासनया तन्वा तद्योग्यया तथा ।।'

इत्यत्र स्वयोग्यबिम्बोपासनया हरेः आपरोक्ष्यं मुक्तिहेतुरित्युक्तम् । तत्कुतो निश्चीयते ज्ञानात्पूर्वं वृतानां ज्ञानात्पश्चात्कृतानां पापानां विद्यमानत्वादित्यत आह— **यदेति** ।। मुक्तिप्रदानाय स्वयोग्यं हरेर्बिम्बरूपं यदा पश्यति तदा तस्य ज्ञानिनः पूर्वाणि सर्वपापानि भस्मसात् यान्ति । ज्ञानादुत्तराणि कृतपापानि कानिचित् न श्लेषं यान्ति । प्रारब्धानि तु भोगेन क्षयं यान्ति । एवं ज्ञानोदयसमयेऽतिशयफलमुदेति यस्मात्तस्मात् स्वयोग्यहरिदर्शने मोक्षश्च नियत इति श्लोकद्वयार्थः ।। १२७-१२८ ।।

**वरद**— ननु "तदा मुक्तिर्हि देवानां यदा प्रत्यक्षगो हरिः' इत्यादिना अपरोक्षज्ञानानन्तरमेव मोक्षो भवतीत्युक्तम् । तदनुपपन्नम् । ज्ञानात्पूर्वं कृतानां पश्चात्करिष्यमाणानामनेकेषां कर्मणां प्रतिबन्धकत्वेन विद्यमानत्वादित्यत आह— **यदेति** ।। मुक्तिप्रदानाय व्यक्तीकृतं स्वयोग्यं हरेः बिम्बरूपं जीवः पश्यति यदा ।। १२७ ।।

**जना**— हरेरापरोक्ष्यान्मुक्तिरित्युक्तम् । तदयुक्तम् । दैत्यादीनां रामाद्यपरोक्षेऽपि मोक्षादर्शनात् । पापानां प्रतिबन्धकानां सत्वाच्चेत्यत आह— **यदेति** ।। मुक्तिप्रदानाय मुक्तिं प्रदातुं स्वयोग्यं बिम्बमूर्त्यादि हरेः रूपं पश्यति तदा तस्य द्रष्टुः पूर्वाणि सर्वपापानि सञ्चितानि सर्वपापानि ध्रुवं भस्मसाद्भवन्ति । पापानीत्युपलक्षणम् ।

राजसं मिश्रं अनिष्टपुण्यं च ग्राह्यं, तदपि नश्यति । इष्टमपि द्विविधम् । काम्यमकाम्यं च । अत्र काम्यमनारब्धं सुहृद:पुत्राः दायं उपयन्ति । राजसं तूदासीना उपयन्ति । अकाम्यं चाग्निहोत्राद्यपरोक्षज्ञानसाधनत्वान्न नश्यति । इष्टनाशस्यापुरुषार्थत्वात् । उत्तराणि अपरोक्षज्ञानोत्तरं कृतानि कानिचित्पापानि श्लेषं न यान्ति । स्वफलनरकादि-सम्बन्धवत्त्वं कर्तुं न समर्थानि भवन्ति । कानिचित् स्वोत्तमद्रोहादीनि सम्बन्धवत्यपि अशुचित्वासम्भाष्यत्वा-पाङ्क्तेयत्वनरकदुःखरूपफलप्रदानि न भवन्ति । पापानीत्युपलक्षणम् । पुण्यान्यकाम्यानि सुखाधिक्यहेतुभूतानि सुखाभिव्यक्तिजनकानि तानि श्लेषमायान्ति । काम्यानि यानि तानि पुत्रादयः दायमुपयन्ति । प्रारब्धस्य च भोगादेव नाशः। कस्यचित् किञ्चिद्धुक्तस्य प्रारब्धस्य उपमर्दश्च । एवं हीनं ब्रह्म पश्यतां दैत्यानां अनुत्थानपाते प्रत्यासन्ने पातार्थं पूर्वस्य पुण्यस्य नाशो भवति । उत्तरस्याश्लेषश्च भवति । उक्तार्थे प्रमणानि अनुव्याख्याने—

[१]"तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् ।
करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गता।
करोति तद्विषश्चैवं पुण्यनाशोऽप्यसङ्गताम् ।।' इति ।
[२]"अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ।।' इति ।
[३]"अनभीष्टमनारब्धं पुण्यं तस्य विनश्यति ।
किमु पापं परब्रह्मज्ञानिनो नास्ति संशय' इति पाद्मे ।

नारायणतन्त्रे च—

[४]"यत्त्वनारब्धपापं स्यात्तद्विनश्यति निश्चयात् ।
पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः।
द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः।
तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।
आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः' इति ।
[५]"यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः।
एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम्' इत्याग्नेये ।

'तस्य पुत्रा दायमुपयन्ति । सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । अत्र [६]"साधुकृत्याशब्देन काम्यमप्रारब्ध-मनिष्टं पुण्यमुच्यत' इति टीका । [७]'कृष्णोपास्तिमकुर्वतः ज्ञानिनोऽपि यतो ह्रासः' इति । 'शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः' इति । 'नाभुक्तं क्षीयते कर्म' इति । [८]" न वै जनो जातु कथञ्चनाव्रजेन् मुकुन्दसेव्यन्यवदङ्गसंसृतिम्' इति च । तेन दैत्यादीनां स्वयोग्यहरिदर्शनाभावान्न तेषां मुक्तिरिति भावः। [९]"पुण्यं पापं मिश्रमित्येव पाशान्यथायोग्यं श्लथयान्येषु दत्वा' इति ऋग्भाष्ये । 'हे वरुण उत्तमं पाशं पुण्यं अस्मदुच्छ्रथय अस्मत्सुहृद्भ्यो दत्वा अस्मत्तो वियोजय । अधमं पाशं पापं अवश्रथय द्विषद्भ्यो दत्वा अस्मद्वियोजय । मध्यमं पाशं मिश्रं पुण्येन मिश्रं पापञ्च विश्रयथ उदासीनेभ्यो दत्वा वियोजय । एवशब्देनास्य मुख्यार्थतामाह' इति टीका [१०]'स त्वं त्रिगुणपाशान्नो मुमुग्धि छिन्दि वाञ्जसा' इति च । इदमपि एवमेव व्याख्यातं टीकाकारैः।। १२७ ।।

---

१. अनु. ४-१- १७४६-१७४७, तदधिगमाधिकरणम् । २. अनु. ३-४-१४१४, कामचाराधिकरणम् । ३. सू.भा. ४-१-१७ । ४. ४-१-१५ । ५. सू.भा. ४-१-१४ । ६. त.प्रका. ४-१-१७ । ७. ई.भा. २ । ८. भा. १-५-१ । ९. ऋ.भा. २-२४ । १०. ऋ.भा. २-२५ ।

**ताम्र**— ननु यदा प्रत्यक्षगो हरिस्तदा मुक्तिरित्ययुक्तम् । प्रागापादितकर्मणां भावात् । न च तानि ज्ञानजन्मनि भुज्यन्ते बहुशरीरकर्मणां भावात् । न तानि क्रमेण भुज्यन्ते कर्मणामनन्तत्वेनानन्तकालभोगेऽप्यपर्यवसानात् । न च युगपत्कायव्यूहेन भोगसम्भवः। अनियतदेशकालविपाकत्वात् । न च योगप्रभावेन तादृशानामपि भोगः। तद्भोगकाले पुनः कर्मान्तरसम्भवेनासमाप्तेः । न च ज्ञानी न करोति । '[1]न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिविरोधात् । तथा च मोक्षायोग इत्यत आह— **यदेति** ।। मुक्तिप्रदानाय व्यक्तीकृतं भगवद्रूपम् । सुहृत्सु पुण्यं द्विषत्सु पापस्येति नियमसूचनाय तस्येत्युक्तम् । कानिचिदप्रारब्धानि सर्वपापनि । अनिष्टपुण्यानामपि पापतुल्यत्वात् पापानि ।। १२७ ।।

**जम्बु**— ननु 'तदा मुक्तिश्च देवानां यदा प्रत्यक्षगो हरिः' इत्यादिना अपरोक्षज्ञानानन्तरमेव मोक्षो भवतीत्युक्तम् । तदनुपपन्नं दैत्यादीनां रामाद्यपरोक्षेऽपि मोक्षादर्शनात्, ज्ञानात् पूर्वकृतानां पश्चात् करिष्यमाणानां अनेकेषां कर्मणां प्रतिबन्धकत्वेन विद्यमानत्वादित्यत आह— **यदेति** ।। मुक्तिप्रदानाय व्यक्तीकृतं स्वयोग्यं हरेः बिम्बरूपं जीवः पश्यति तदा तस्य पश्यतो जीवस्य तत्पूर्वाणि ज्ञानात् पूर्वकृतानि सर्वपापानि अनिष्टपुण्यानि च ध्रुवं भस्मसाद्यान्ति भस्मीभवन्ति ।। १२७ ।।

**राम**— **रूपं हरेस्तदा तस्य सर्वपापानि भस्मसात् । यान्ति पूर्वाण्युत्तराणि न श्लेषं यान्ति कानिचित्** । इत्यत्र हरेरूपं यदा पश्यति तदा तस्यापरोक्षज्ञानिनः ज्ञानपूर्वमनुष्ठितानि प्रारब्धातिरिक्तानि सर्वपापकर्माणि भस्मसाद्यान्ति । उत्तराणि पापकर्माणि तु कानिचित् श्रेष्ठापराधरूपाणि श्लेषं यान्ति । मुक्तावानन्दह्रासकरत्वेन ऐहिकमनःखेदकरत्वेन च सम्बन्धानि भवन्ति इत्यर्थः । कानिचिदल्पानि तु क्लृप्तदुःखस्यैव सूचकानि । ततोऽतिरिक्तानि कानिचिद् श्लेषं न यान्तीति । अत्र पुण्यमपि सञ्चिताप्रारब्धभेदेन द्विविधं प्रारब्धं भोगैकनाश्यम् । सञ्चितमपि काम्यमकाम्यं चेति द्विविधम् । अकाम्यमपरोक्षपयोगि । काम्यं च द्विविधं इष्टमनिष्टं चेति । इष्टमपि भोगैकनाश्यम् । अनिष्टं पुण्यं तु नश्यति । ननु सर्वपापानि भस्मासात् 'ज्ञानाग्निस्सर्वकर्माणि भस्मासात् कुरुतेऽर्जुन' इति । 'यथैषीका तूलमग्नौ प्रोतं प्रदूयेत एवं ह वास्य सर्वे पाप्मानः प्रदूयत' इति सर्वपापकर्मणां स्वरूपतो नाशोक्तेः । 'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति' इति काम्यानि सुपुण्यस्यपि नाशोक्तेः । 'पुण्यपापे विधूय' इत्यनेन कयोः पुण्यपापयोः विधूननमिति न ज्ञायते । किञ्च 'तस्य पुत्राः दायमुपयन्ति । सुहृदः साधुकृत्यान् द्विषन्तः पापकृत्यान्' इत्युक्तेः । सुहृद्भिः भुज्यमानं पुण्यं द्विषद्भिर्भुज्यमानं पापं वा किमिति न ज्ञायते अतोऽत्र महान्तः प्रष्टव्याः । अत्र केवलं साम्प्रदायिकास्त्वेवं वर्णयन्ति । 'यस्मिन् जन्मनि अपरोक्षस्तज्जन्मकृतपुण्यपापे विधूयेत । ते एव सुहृद्विषद्भ्यां भुज्येते । तत्पूर्वं तेषु कृतानि काम्यानिष्टपुण्यानि सञ्चितपापानि च स्वरूपतो नश्यन्ति । तदुत्तरदेहेषु कृतपुण्यानि आनन्दातिशया–पादकानि भवन्ति । तदुत्तरकृतपापकर्मणां कानिचित् श्लेषं न यान्ति' इति । ननु 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रार्थस्य सर्वविषयत्वात् सर्वेषामपरोक्षिणामुत्तरपूर्वाघयोर्वक्तव्यत्वात्। ब्रह्मणः 'अनादिकालतः सर्वदोषहीना गुणाधिकाः' इत्युक्त्या अघमात्रस्याप्रसक्तेः । कथमप्रसक्तपूर्वोत्तराघयोरश्लेषविनाशोक्तिरिति चेदुच्यते । अनादितस्सर्वदोषरहितानां स्वयोग्यापरोक्षसम्पूर्णज्ञानवतां ऋजूनां स्वयोग्यसाधनानुष्ठाने प्रयत्नाभाव एव दोषः।

१. भ.गी. ३-६ ।

स एव पूर्वाघ इत्युच्यते । स च योग्यापरोक्षेण नश्यतीति । तदेतदुक्तम्—

'अनादिकालतस्सर्वदोषहीनाः गुणाधिकाः ।
ऋजूनामेक एवास्ति परमोत्साहवर्जनम् ।।' इति ।
'शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते ।
आपरोक्ष्येण पारोक्ष्यात् पूर्णं ज्ञानं सदैव तु ।।' इति च ।

एवं ब्रह्मणः उत्तराघप्रसक्तिं च सम्पाद्य तस्याश्लेषोऽपि वक्तव्यः । अत्राघशब्देन विकर्मोच्यते । उत तज्जनिताज्ञानभयशोकादिकम् । नाद्य'न काम्यकर्मकृत्तस्मात्' इत्यादिना काम्यकर्माभावोक्तेस्तद्रहितस्य ब्रह्मणः सुतरां विकर्मकरणाभावादिति चेदुच्यते । विकर्म च सात्त्विकं राजसं तामसमिति त्रिविधं भवति । तत्र राजसतामसविकर्मकरणेऽपि सात्त्विकविकर्मकरणं सम्भवति । किं तत्सात्त्विकं विकर्म । गुरुगवादिहननार्थं प्रवृत्तस्य हननादेर्यद्धननं शिष्यादिभिः क्रियते तदेव सात्त्विकं विकर्मेत्युच्यते । तद्धननस्य पापरूपत्वेऽपि गुर्वादिरक्षणायेति पुण्यहेतुत्वात् । तदुक्तम्—

'धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।'
'क्वचित्पापं च पुण्यानां वृद्धये भवति स्फुटम् ।
वृत्रहत्या यथेन्द्रस्य जाता धर्माभिवृद्धये ।।
न हि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः इति ।।'

एवं ब्रह्मणोऽपि विष्णुप्रीत्यर्थं सज्जनहितार्थं च दैत्यहननादिरूपविकर्मकरणं सम्भवति । अत एवोक्तम् ।

'चकार तं रणात्मके मखे रमेशदैवते ।
पशुं प्रभञ्जनात्मज.................. ।। इति।'
'निहत्य कृष्णस्य रिपुं स भीमः समर्पयामास तदर्चनं हरेः ।
कृते हि भीमेन समर्चनां तां समक्षमादातुमिहागतो ह्यज' इति ।

यस्य दुःखहेतुत्वं तस्यैवाघशब्दवाच्यत्वं विष्णुप्रीतिजनकदैत्यहननादेरानन्दातिशयहेतुत्वेनाघरूपत्वाभावात् कथं ब्रह्मणोऽघप्रसक्तिः । 'देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरं' इत्युक्तेः । सत्यम् । दैत्यहननादिर्न साक्षात् आनन्दातिशयहेतुः किन्तु भगवदाराधनरूपतपआदिद्वारैव । तपश्चरणकालीनदुःखस्य तु साक्षात् कारणत्वम् । (दैत्यहननादीनां) स्वतो हिंसारूपत्वात् । उक्तं चानुव्याख्याने

'दश कल्पं तपश्चीर्णं रूद्रेण लवणार्णवे ।
त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ।।
शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।।' इति ।

एवं ब्रह्मकृतदैत्यहननादेः सृष्ट्यादिविषयकतपःकरणकालीनदुःखाद्यल्पफलसम्पादकत्वाघप्रसक्तिः । तज्जनिता मुख्यफलस्य दुःखरूपत्वाभावात् अश्लेषोक्तिश्च सम्भवतीति भावः ।

'तत्त्वज्ञाने विष्णुभक्तौ धैर्ये स्थैर्ये पराक्रमे ।
वेगे च लाघवे चैव प्रलापस्य च वर्जने ।।
भीमसेनसमो नास्ति................... ।।'

इत्यादिना भयाद्यभावोक्तेरिति चेन्न । तस्य दुःखस्पृष्टचेतस्त्वेन भविष्यज्जनस्वभावसिद्ध्यर्थं दग्घपटायमान-बाह्यान्तःकरण एवत्यल्पाज्ञानभयशोकानां क्षणार्धकाले उत्पत्तिमात्रमित्यवश्यमङ्गीकरणीयत्वात् । तदुक्तं षष्ठतात्पर्ये—

[1]"जनिष्यतां जनानां तु स्वभावानां प्रसिद्धये ।
ज्ञानादिगुणपूर्णस्य ब्रह्मणोऽपि क्षणार्धगाः ।।
भयादिका भवन्तीव कथं तस्मिन् स्थिरालयाः ।
भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः ।।
न वृथा तस्य भावः स्यात् कश्चित्तेऽपि क्षणार्धगाः ।
अज्ञानं तु चतुर्वारं द्विवारं भयमेव च ।।
शोकोऽपि तावान् नान्यत्र कदाचित् ब्रह्मणो भवेत् ।।' इति ।
[2]"तमत्तुं व्यददाद् आस्यं तदासौ विरुराव ह ।।' इति च ।।

न च वाच्यमज्ञानं ब्रह्मणः प्रदर्शनमात्रं वृत्तौ नोत्पद्यते इति । तथा सति रमायाः ब्रह्मभयदातृत्वोक्तिविरोधः स्यात् । तदुक्तम्—

[3]"यत्र वायूदपद्मादिरूपेण प्रकृतिः स्थिता ।'
[4]"सैव ब्रह्मादिभयदा............... ।।' इति ।

अत्राज्ञानादीनां क्षणार्धकाले बाह्यान्तःकरणे उत्पद्यत इत्यघप्रसक्तिः। स्वरूपान्तःकरणं बाह्यान्तःकरणेन मिलितमपि बाह्यान्तःकरणजन्यदुःखं स्वरूपान्तःकरणे नीचतासम्पादकं न भवतीति तस्याश्लेषोक्तिश्च सम्भवतीति भावः । [5]"नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते' इत्युक्तेः ।। १२७ ।।

**यान्ति पूर्वाण्युत्तराणि न श्लेषं यान्ति कानिचित्।**
**मोक्षश्च नियतस्तस्मात् स्वयोग्यहरिदर्शने" ।। १२८ ।।**

**वरद**— तदा तस्य पश्यतो जीवस्य पूर्वाणि ज्ञानात्पूर्वं कृतानि सर्वपापानि अनिष्टपुण्यानि च भस्मसाद्यान्ति भस्मीभवन्ति । सञ्चितानि सर्वाणि सर्वं फलं अदत्वैव लयं यान्तीत्यर्थः। उत्तराणि अपरोक्षज्ञानानन्तरकृतानि अनिष्टपुण्यपापरूपाणि कर्माणि न श्लेषं यान्ति न लिम्पन्तीत्यर्थः। कानिचिदनिष्टान्येवेत्यर्थः। ज्ञानिकृतेष्टकर्मणां आनन्दाभिवृद्ध्यर्थत्वादिति भावः। तस्मादेवं सञ्चितानां नाशादुत्तरेषामश्लेषात् प्रारब्धकर्मणां भोगेन क्षयात्प्रतिबन्धका-भावे सति स्वयोग्यहरिदर्शने मोक्षो नियत एवेत्याह— **मोक्ष इति** ।। १२८ ।।

**जना**— उपसंहरति— **मोक्ष इति** ।। १२८ ।।

**ताम्र**— पूर्वं कर्मनाशेऽपि पुनरार्जनात्कथं मोक्ष इत्यत उक्तम्— **उत्तराणीति** ।। कानिचित्काम्यमपि श्लेषं न यान्तीत्यर्थः। अत्र अश्लेषो नाम अशुचित्वासम्भाष्यत्वनरकादिहेतुत्वाभावः न तु आनन्दह्रासापादकत्वाभावो विवक्षितः । तदुक्तम्—

---

१. भा.ता. ६-९-२३ । २. सू.भा. १-२-१० । ३. भा.ता. ६-९-२३ । ४. भा.ता. ६-९-२० । ५. सू.भा. ३-१-१७ ।

[1]'ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम्' ।

सुधायां चतुर्थाध्याये 'उत्तराघस्याश्लेष इत्यनेनालेपः तत्फलं नरकाद्यभाव उच्यते' इत्युक्तम् । यद्वा युधिष्ठिरानृतशङ्कायाः स्वतः श्लेषानापादकत्वेऽपि प्रारब्धानर्थसूचकत्वेन नरकदर्शनहेतुत्वस्य दर्शनात्, द्रौणेर्दुर्योधनस्त्रीकामस्य अस्त्रोपसंहारविघटके ब्रह्मचर्यहानिरूपश्लेषसम्पादकत्वाच्च कानिचिदित्युक्तम् । तथा च पूर्वकर्मणां नाशादुत्तराश्लेषान्मोक्षो नियत इति ।। १२८ ।।

**जम्बु**— सञ्चितानि सर्वाणि फलमदत्वैव लयं यान्तीत्यर्थः। उत्तराणि अपरोक्षज्ञानानन्तरं कृतानि अनिष्टपुण्यपापरूपाणि कर्माणि न श्लेषं यान्ति न लिम्पन्तीत्यर्थः। कानिचिदनिष्टान्येवेत्यर्थः। अश्लेषो नाम अशुचित्वासम्भाष्यत्वनरकादिहेतुत्वाभावः न तु आनन्दह्रासापादकत्वाभावो विवक्षितः। तदुक्तम्—

'ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ।।' इति ।

सुधायां 'चतुर्थाध्याये उत्तराघस्याश्लेष इत्यादिना अलेपस्तु नरकाद्यभावः उच्यते' इत्युक्तम् । यद्वा युधिष्ठिरानृतशङ्कायाः स्वतः श्लेषानापादकत्वेऽपि प्रारब्धानर्थसूचकत्वेन नरकदर्शनरूपहेतुत्वस्य, द्रौणेः दुर्योधनस्त्रीकामस्यास्त्रोपसंहारसामर्थ्यविघटकब्रह्मचर्यहानिरूपश्लेषापादकत्वाच्च कानिचिदित्युक्तम् । ज्ञानिकृतेष्टकर्मणां मुक्तावानन्दभिवृद्ध्यर्थत्वादिति भावः। दैत्यानां रामाद्यवतारदर्शनेऽपि योग्यहरिदर्शनाभावान्न तेषां मुक्तिरिति भावः। उपसंहरति—**मोक्षश्चेति** ।। यस्मात् पूर्वकर्मणां नाशः उत्तरकर्मणामश्लेषः तस्मात् स्वयोग्यहरिदर्शने सति मोक्षः नियतः भवत्येवेति निश्चयः ।। १२८ ।।

**भविष्यत्पर्ववचनमित्येतत् सूत्रगं तथा ।**
**श्रुतिश्च तत्परा तद्वत् तद्यथेत्यवदत् स्फुटम् ।। १२९ ।।**

**व्यास**— तत्परा सूत्रार्थे तात्पर्यवती । श्रुतिप्रतीकं सम्यग्गृह्णाति— **तद्यथेति** ।। १२९ ।।

**वादि**— एतत्सूत्रगमित्यस्य एतत् प्रमेयं सूत्रगम् । [2]'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रगतमित्यर्थः। तद्यथेत्यनेन [3]'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' इति श्रुतिं सङ्गृह्णाति ।। १२९ ।।

**सङ्क**— न केवलं 'यदा मुक्तिप्रदानाय' इति भविष्यत्पर्ववचनोक्तोऽयमर्थः किन्तु 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति ब्रह्मसूत्रगतवचनोक्तश्चेत्याह— **सूत्रगतं तथेति** ।। अस्मिन्नर्थे श्रुतिरपि विद्यत इत्याह— **श्रुतिश्चेति** ।। [4]'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते'। 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते' इति श्रुतिश्च तत्परा तद्वत् स्फुटमवददित्यर्थः ।। १२९ ।।

---

१. अनु. ३-४- १४१३, १४१४ कामचाराधिकरणम् । २. ब्र.सू. ४-१-१३ । ३. छा.उ. ४-३-७ । ४. छा.उ. ५-५-७ ।

**वरद**— एतत् कुत्रत्यवाक्यमित्यत आह— **भविष्यत्पर्ववचनमिति** ।। सूत्रेऽप्येतत्समर्थितमित्याह— **सूत्रगमिति** ।। एतत्प्रमेयं सूत्रगं ब्रह्मसूत्रे प्रतिपादितमित्यर्थः। तथा च ब्रह्मसूत्रं "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति । अस्यार्थः तदधिगमे तस्य ब्रह्मणोऽधिगमे अपरोक्षे सति उत्तरपूर्वाघयोः अपरोक्षज्ञानोत्तराघस्य तत्पूर्वाघस्य चेत्यर्थः। यथाक्रमं अश्लेषविनाशौ भवतः उत्तरस्याश्लेषः पूर्वस्य विनाश इत्यर्थः। कुत इत्यपेक्षायां स्वोक्तार्थे श्रुतिं प्रमाणयति सूत्रकारः— **तद्व्यपदेशादिति** ।। तस्योक्तार्थस्य व्यपदेशाद् श्रुतावित्यर्थः। तामेव श्रुतिं भगवानाचार्योऽपि दर्शयति— **श्रुतिश्चेति** ।। तत्परा उक्तार्थे तात्पर्यवती तद्यथेत्यादिश्रुतिश्च स्फुटं यथा भवति तथा सदृष्टान्तं तद्वदेव अवदत् । तथाच अश्लेषविनाशप्रतिपादकश्रुतिद्वयं भाष्ये भगवत्पादैरुदाहृतम् । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवं एवंविदि पापं कर्म न श्लिष्यत" इति तथा "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं है वास्य सर्वे पाप्मानः प्रदूयन्त" इति ।। १२९ ।।

**जना**— इत्येतत्पूर्वोक्तं न केवलं भविष्यत्पर्वं अपि तु सूत्रमप्यस्तीत्याह— **सूत्रगमिति** ।। तथा तदर्थ-प्रतिपादकं सूत्रगं वचनं चास्ति । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रम् । अस्यार्थः। तस्य ब्रह्मणोऽधिगमे दर्शने उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च श्रुतौ तयोरश्लेशविनाशयोर्व्यपदेशात् कथनादिति । अत्रोत्तराश्लेषस्य पूर्वकथनं श्रुत्यनुसारेण । अत्र श्रुतिमप्याह— **श्रुतिश्चेति** ।। तत्परा तत्र तात्पर्यवती तद्यथेति । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' 'तद्यथा ईषीकातूलमग्नौ प्रोतं प्रदूयेतैवं है वास्य सर्वे पाप्मानः प्रदूयन्त' इति श्रुतिरपि तद्वत्सूत्रवत्स्फुटमवदत् ।। १२९ ।।

**ताम्र**— नन्वेतदयुक्तम् । 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधादिति चेन्न । यथा खलु 'ब्रह्महा द्वादशाब्दव्रतं चरेत्' इति प्रायश्चित्तविधिबलात् 'नाभुक्तम्' इति स्मृतेरकृतप्रायश्चित्तविषयत्वं कल्प्यते, तथा प्रमाणबलेन स्मृतेरज्ञानिविषयत्वं अकामेनाऽप्यङ्गीकार्यमिति भावेनाह— **भविष्यत्पर्ववचनमित्यादिना** ।। 'श्रुतिश्च तद्यथा' इत्यनेन 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवं है वास्य सर्वे पाप्मानः प्रदूयन्ते', 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' इति श्रुतिद्वयमुपादत्ते तद्वत् "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रमिति ।। १२९ ।।

**जम्बु**— नन्वेतदयुक्तं 'नाभुक्तं क्षीयते कर्म' इति स्मृतिविरोधादिति चेन्न । यथा खलु 'ब्रह्महा द्वादशब्दं व्रतं चरेत्' इति प्रायश्चित्तविधिबलात् नाभुक्तमिति स्मृतेरकृतप्रायश्चित्तविषयत्वं कल्प्यते । तथा प्रमाणबलात् स्मृतेरज्ञानि-विषयत्वमकामेनाप्यङ्गीकार्यमिति भावेनाह— **भविष्यदिति** ।। इति अनेन प्रकारेण एतत् प्रतिपादितार्थप्रतिपादकं भविष्यत्पर्ववचनमस्ति । न केवलं भविष्यत्पर्ववचनमपि तु सूत्रमस्तीत्याह— **सूत्रगमिति** ।। तथा तदर्थप्रतिपादकं सूत्रगं वचनं चास्ति 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रम् । अस्यार्थः। तस्य ब्रह्मणः अधिगमे अपरोक्षे सति उत्तरपूर्वाघयोः अपरोक्षज्ञानोत्तराघस्य तत्पूर्वाघस्य चेत्यर्थः। यथाक्रममश्लेषविनाशौ भवतः उत्तराघस्याश्लेषः पूर्वाघस्य विनाश इत्यर्थः। अत्रोत्तराश्लेषस्य पूर्वकथनं श्रुत्यनुसारेण । कुत इत्यपेक्षायां स्वोक्तार्थे श्रुतिं प्रमाणयति सूत्रकारः— तद्व्यपदेशादिति ।। तस्योक्तार्थस्य व्यपदेशात् श्रुतावित्यर्थः। तामेव श्रुतिं दर्शयति— **श्रुतिश्चेति** ।। तत्परा उक्तार्थतात्पर्यवती तद्यथेत्यादिश्रुतिश्च स्पष्टा यथा भवति । सदृष्टान्तं तद्वदेवावदत् । तथा च अश्लेषविनाशप्रतिपादकश्रुतिद्वयं भाष्ये भगवत्पादैरुदाहृतं 'तद्यथा पुष्करपलाशे आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते' इति । तथा 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत' इति ।। १२९ ।।

**भारतश्री**— तत्परा उक्तार्थतात्पर्यवती । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते' इति श्रुतिः ॥ १२९ ॥

**इति श्रीडम्बल अनन्ताचार्यशिष्यभारतश्रीनिवासाचार्यविरचितटिप्पण्यां प्रथमोऽध्यायः**

**मुक्तास्तु मानुषा देवान् देवा इन्द्रं स शङ्करम् ।**
**स ब्रह्माणं क्रमेणैव तेन यान्त्यखिला हरिम् ॥ १३० ॥**

**व्यास**— प्रकृतमोक्षमाह— **मुक्ता इति** ॥ १३०-१३१ ॥

**वादि**— प्रकृतमोक्षप्रकारमाह— **मुक्ता इति** ॥ तेन ब्रह्मणा । 'रुद्रपुरःसराः' इत्यत्र रुद्रपदेन शेषो गृह्यते ॥ १३० ॥

**सङ्क**— 'क्षितिपा मनुष्यगन्धर्वा' इत्यादिना मनुष्योत्तममारभ्य ब्रह्मपर्यन्तानां मुक्तानां उत्तरोत्तरं शतगुणितत्वेन तारतम्यमुक्तम् । 'मोक्षश्च नियतस्तस्मात्स्वयोग्यहरिदर्शने' इत्युक्तम् । तत्र तेषां मुक्तानां मुक्तिप्रकारो दर्शितः। तं प्रकारान्तरमिदानीं प्रदर्शयति— **मुक्तास्तु मानुषा इत्यादिना** ॥ १३० ॥

**वरद**— एवमपरोक्षज्ञानानन्तरं मुक्तिनियमे मनुष्योत्तमादिब्रह्मान्तानां मुक्तिप्रकारमाह— **मुक्तास्त्वित्यादिना**॥ संसारान्मुक्ताः मनुष्याः मनुष्योत्तमाः देवान् यान्ति । देवा इन्द्रं यान्ति । स इन्द्रः शङ्करं शेषं याति । स शेषो ब्रह्माणं याति । एवं क्रमेणैव सर्वे ब्रह्माणं प्राप्यन्ते । तेन ब्रह्मणा सहैव हरिं यान्तीत्यर्थः ॥ १३० ॥

**जना**— इदानीं मुक्तानां मुक्तिप्रकारमाह— **मुक्ता इति** ॥ मानुषाः मुक्ताः आदौ धर्मं प्राप्य तद्द्वारा देवान् द्वारदेवान्यान्ति । [1]''वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेत्य काले' इत्यनुव्याख्यानोक्तेः । स इन्द्रः शङ्करं गरुडम् । शेषगरुडमार्गौ द्वौ तत्र यदा इन्द्रप्रवेशस्तदा रुद्रशब्देन गरुडः यदा कामप्रवेशस्तदा रुद्रशब्देन शेषो ग्राह्यः। तदुक्तम्—

[2]''इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीशनाम्ना........... ॥' इति ।

तथा—

[3]''सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नी ।
तया सुपर्णं सह तेन वाणीं ब्रह्माणमेतद्गत एव याति ॥' इति ॥ १३० ॥

**ताम्र**— एवं कर्मक्षयोत्क्रान्तिमार्गप्राप्तानां देवादीनां लयप्रकारमाह— **मुक्ता इति** ॥ कर्मक्षयादिप्राप्तत्वान्मुक्ता इत्युक्तम् । मानुषाः यमं प्रविश्य तद्द्वारा देवान् मन्वादीन् तेन क्रमेणेन्द्रं प्राप्नुवन्ति । स तु वारुणीद्वारा गरुडं प्रविशति । शेषमार्गस्यापि सूचनाय शङ्करमित्युक्तम् । वस्तुतस्तु शङ्करपदेन गरुड एव विवक्षितः। तदुक्तमनुव्याख्याने

[4]''इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता गिरीशस्तु सुपर्णनाम्ना (सुपर्णश्च गिरीशनाम्ना)ततो विरोधस्तु न कश्चनात्र ॥' इति

---

१. अनु. ४-२-१८९२, पराधिकरणम् । २. अनु. ४-२-१८९०, पराधिकरणम् । ३. ४-२-१८८८, पराधिकरणम् । ४. अनु. ४-२-१८८९, पराधिकरणम् ।

शेषमार्गविवक्षायां तु मानुषपदेन गन्धर्वाद्याः देवभृत्याः विवक्षिताः। इन्द्रपदेन कामः शङ्करपदेन शेषः। तदुक्तं तथैव

"[1]उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाल' इति ।

मुक्तौ च ब्रह्मा लक्ष्मीमार्गेण हरिं याति । एवं तेन सूत्रश्रुत्युक्तक्रमेण बिम्बप्रतिबिम्बभावक्रमेण हरिं यान्ति लीयन्ते । एवं लयप्रकारमुक्त्वा भोगप्रकारमाह— **क्रमेणेति** ।। तेन क्रमेण हरिं यान्ति । सायुज्यं यान्तीत्यर्थः ।। १३०।।

**जम्बु**— एवमपरोक्षज्ञानानन्तरं मुक्तिनियमेन मनुष्योत्तमादिब्रह्मान्तानां मुक्तिप्रकारमाह— **मुक्तास्त्वित्यादिना**।। कर्मक्षयादिप्राप्यत्वात् मुक्ता इत्युक्तम् । मानुषा यमं प्रविश्य तद्द्वारा देवमन्वादीन् यान्ति । ते च देवाः क्रमेणेन्द्रं प्राप्नुवन्ति । स इन्द्रः वारुणीद्वारा शङ्करं गरुडं प्रविशति । शेषमार्गस्यापि सूचनाय शङ्करमित्युक्तम् । वस्तुतस्तु शङ्करपदेन गरुडो विवक्षितः । तदुक्तमनुव्याख्याने—

'इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र' इति ।

शेषमार्गविवक्षायां मानुषपदेन गन्धर्वा विवक्षिताः। इन्द्रपदेन कामः शङ्करपदेन शेषः। तदुक्तं अनुव्याख्याने—

'उमा गिरीशाविति भारतीराविति स्म वाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाल' इति।

सः शेषः ब्रह्माणं याति । एवं क्रमेणैवाखिलास्सर्वे ब्रह्माणं प्राप्य तेन ब्रह्मणा सहैव हरिं यान्ति ।। १३० ।।

**उत्तरोत्तरवश्याश्च मुक्ता रुद्रपुरस्सराः।**
**निर्दोषा नित्यसुखिनः पुनरावृत्तिवर्जिताः।**
**स्वेच्छयैव रमन्तेऽत्र नानिष्टं तेषु किञ्चन ।। १३१ ।।**

**सङ्क**— नन्वनेन प्रकारेण मुक्तानां तारतम्येन स्थितानां केन प्रकारेण स्थितिरित्यत आह— **उत्तरोत्तरवश्या इति** ।। १३१ ।।

**वरद**— एवं हरिप्राप्तानां तेषां मुक्ताववस्थितिप्रकारमाह— **उत्तरोत्तरेति** ।। रुद्रपुरःसराः शेषपुरःसराः मुक्ताः स्वस्वोत्तमवशास्तिष्ठन्तीत्यर्थः। ननु तत्र पराधीनत्वे द्वेषेर्ष्यादिदोषस्स्यादित्यत आह— **निर्दोषा इति** ।। मात्सर्यादिदोषरहिताः अत एव नित्यसुखिनः मुक्ताः संसारावृत्तिरहिताः सन्तः स्वेच्छयैव अत्र मुक्तौ रमन्ते । तस्मात्तेषु अनिष्टं दुःखं किञ्चन नास्तीत्यर्थः ।। १३१ ।।

**जना**— एवं गतानां मुक्ताववस्थानप्रकारमाह— **उत्तरेति** ।। रुद्रपुरस्सराः शेषाद्या मुक्ताः उत्तरोत्तरवश्याः श्रेष्ठश्रेष्ठाधीनाः। अत्र मुक्तौ । तेषु मुक्तेषु अनिष्टं दुःखं न विद्यते ।। १३१ ।।

---

१. अनु. ४-२-१८८६, पराधिकरणम् ।

**ताम्र**— 'मुक्तौ लये यद्वत्' इत्यनुव्याख्याने स्थितप्रकारं सूचयति— **उत्तरोत्तरेत्यादिना** ।। चशब्देनोत्तरोत्तर-प्रतिबिम्बत्वोक्तिं सूचयति । [1]"बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा' इति वचनात् । ननु मुक्तावपि पराधीनत्वे द्वेषेर्ष्यादिदोषः स्यादित्यत उक्तम्— **निर्दोषा इति** ।। द्वेषेर्ष्यासन्तापप्रतिघातेच्छादिरहिता इत्यर्थः। तत्कुत इत्यत आह— **निर्दोषा इति** ।। द्वेषेर्ष्यादिव्यापकीभूताविद्याहङ्कारादिदोषरहिता इत्यर्थः। तथा च व्यापकाभावे व्याप्याभाव इत्यर्थः। तदुक्तं सुधायां 'अत्र द्वेषेर्ष्यासन्तापपरेष्टप्रतिघाताद्याः व्याप्याः अविद्या अहङ्काराद्याः व्यापका इति विवेकः' इति । तथा च भगवद्वचनं [2]"अक्षरधियां त्वविरोध' इति । ननु सच्छिष्यवद-सूयादिराहित्येऽपि सेवातिशयेन खेदः स्यादित्यत उक्तम्— **सुखिन इति** ।। ननु स्वर्गतानां भाविपातशङ्कया दुःखमिव तेषामपि तस्य भाव्यत्वात् नित्यसुखमयुक्तमित्यत उक्तम्— **पुनरावृत्तीति** ।। तथा च सूत्रं [3]"अनावृत्ति-शब्दादनावृत्तिशब्दात्' इति । ननु मुक्तानां भगवदोकसि स्थितत्वाद् भूम्यादिस्थितानामिव तत्तत्साधनसाध्य एव भोगो भवेत् । तस्याप्युक्तरूपसाम्यात् । तथा च स्वेष्टकाले रमणाप्राप्त्या दुःखमवर्जनीयमित्यत आह— **स्वेच्छयैवेति** ।। स्वसङ्कल्पमात्रेणेत्यर्थः। तथा च सूत्रं [4]"सङ्कल्पादेव च तच्छ्रुतेः' इति ।

ननु न मुक्तानां भोग उपपद्यते । तथाहि किं ते शरीरवन्त उत न । आद्ये तदभिमानेन दुःखप्राप्तेः। [5]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतेः। द्वितीयेऽपि भोगायोगः। न हि शरीरविरहितस्य भोगो दृष्ट इत्यत आह— **स्वेच्छयेति** ।। स्वेच्छयैव कदाचिच्चिन्मात्रदेहेन कदाचित्स्वेच्छया स्वीकृतज्योतिर्मयदेहेन च रमन्त इत्यर्थः। तथा च सूत्रं [6]"द्वादशाहवदुभयविधं बादरायणोऽत' इति । ननु बाह्यशरीरभावे तत्राभिमानभावेन दुःखं प्राप्यत इत्युक्तमेवेत्यत आह— **नानिष्टमिति** ।। न जडशरीरप्रवेशेऽभिमानेऽपि दुःखाद्यनुभवप्राप्तिः किन्तु साधूनेव भोगाननुभवन्ति । तथाचोक्तं [7]"प्रदीपवदावेशः तथाहि दर्शयति' इति । यद्वा भोगानुपपत्तिं प्रकारान्तरेण परिहरति— **स्वेच्छयेति** ।। अत्र प्रकृते हरौ रमन्ति । ब्राह्मदेहेन रमन्त इत्यर्थः। न सायुज्यभाजां बहिरागमनाभावो मन्तव्य इत्याह— **स्वेच्छयेति** ।। तदन्तर्बहिरेव वा स्वेच्छयैव रमन्त इत्यर्थः। तथा च सूत्रं [8]"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति ।। १३१ ।।

**जम्बु**— एवं हरिं प्राप्तानां मुक्तावेव स्थितिप्रकारमाह— **उत्तरोत्तरेति** ।। रुद्रपुरस्सराः शेषाद्या मुक्ता उत्तरोत्तरवश्याः स्वोत्तमवशाः तिष्ठन्तीति चशब्देनोत्तरोत्तरप्रतिबिम्बत्वोक्तिं सूचयति । 'बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा' इति वचनात् । ननु मुक्तावप्यन्याधीनत्वे द्वेषेर्ष्यादिदोषः स्यादित्यत उक्तम्— **निर्दोषा इति** ।। ईर्ष्यादिसन्तापपरनिष्ठप्रतिघातेच्छादिरहिता इत्यर्थः। तत् कुत इत्यत उक्तम्— **निर्दोषा इति** ।। द्वेषेर्ष्यादिव्यापकाविद्याहङ्कारादिदोषरहिता इत्यर्थः। तथा च व्यापकाभावात् व्याप्याभाव इति भावः। तदुक्तं सुधायां 'अत्र द्वेषेर्ष्यादिसन्तापपरनिष्ठप्रतिघाताद्याः व्यापकाः अविद्याहङ्काराद्याः व्याप्याः इति विवेक' इति । तथा च सूत्रं 'अक्षराधियां त्वविरोध' इति । ननु सच्छिष्यादिवदसूयादिराहित्येऽपि सेवातिशयेन खेदः स्यादित्यत उक्तम्— **नित्यसुखिन इति** ।। सुखमेषास्तीति सुखिनः नित्यं सुखिनः। ननु स्वर्गगतानां भाविपातशङ्कया दुःखमिव तेषामपि तस्य भाव्यत्वात् नित्यसुखित्वमयुक्तमित्यत उक्तम्— **पुनरावृत्तीति** ।।

---

१. अनु. ४-२-१८९८, पराधिकरणम् । २. ब्र.सू. ३-३-३४ । ३. ब्र.सू. सू ४-४-२३ । ४. ब्र.सू. ४-४-८ । ५. छा.उ. ८-४-१ । ६. ब्र.सू. ४-४-१२ । ७. ब्र.सू. ४-४-१५ । ८. ब्र.सू. ४-४-५ ।

पुनः संसारे आवृत्तिरहिताः। तथा च सूत्रं 'अनावृत्तिशब्दात्' इति । ननु मुक्तानां भगवदोकसि स्थितत्वात् तत्र च भूम्यादिस्थितानामिव तत्तत् साधनसाध्य एव भोगो भवेत् तस्याप्येतत् साम्यात् । तथा च स्वेष्टकाले रमणाप्राप्यदुःखमवर्जनीयमित्यत आह— **स्वेच्छयैवेति** ।। स्वेच्छयैवात्र मुक्तौ रमन्ते स्वसङ्कल्पमात्रेण । तथा च सूत्रं 'सङ्कल्पादेव तत्सिद्धेः' इति ।

ननु मुक्तानां भोगः नोपपद्यते । तथा हि किं ते शरीरवन्त उत न । आद्ये तदभिमानेन दुःखप्राप्तेः 'न ह वै सशरीरस्य सतः प्रियाप्रियोरपहतिरस्ति' इति श्रुतेः। द्वितीयेऽपि भोगायोगः। ननु शरीररहितस्य भोगो दृष्ट इत्यतो वाह— **स्वेच्छयेति** ।। स्वेच्छयैव कदाचित् चिन्मात्रदेहेन कदाचित् स्वेच्छया स्वीकृतज्योतिर्मयेन देहेन च रमन्त इत्यर्थः। तथा च सूत्रं 'द्वादशाहवदुभयविधं बादरायणोऽत' इति । ननु बाह्यशरीरभावे तत्राभिमानेन दुःखं प्राप्यत इत्यत आह— **नानिष्टमिति** ।। तेषु मुक्तेषु अनिष्टं दुःखं किञ्चन नास्तीत्यर्थः। न जडशरीरप्रवेशेऽपि दुःखाद्यनुभवप्राप्तिः किन्तु साधून्येव भोगाननुभवन्ति प्रदीपवदावेशः तथाचोक्तं 'प्रदीपवदावेशः तथाहि दर्शयति' इति । यद्वा भोगानुपपत्तिं प्रकारान्तरेण परिहरति— **स्वेच्छयेति** ।। अत्र प्रकृते हरौ रमन्ति ब्राह्मदेहेन रमन्त इत्यर्थः। न हि सायुज्यभाजां बहिर्गमनाभावो मन्तव्य इत्याह— **स्वेच्छयेति** ।। तदन्तर्बहिरेव वा स्वेच्छैव रमन्त इत्यर्थः। तथा च सूत्रं 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति ।। १३१ ।।

**राम— 'उत्तरो......किञ्चन'** इत्यत्र रुद्रपुरस्सराः शेषपुरस्सराः । स्वेच्छया विष्णिवच्छया । तदुक्तम्—

[1]"परस्वो हरिरुद्दाम इति नामचतुष्टयम् ।
स्वतन्त्रत्वात् सुखत्वाच्च स्वनामा विष्णुरुच्यते ।।' इति दशमतात्पर्ये ।
[2]"मुक्तानां सत्यकामत्वं सामर्थ्यं तु परस्य च ।
कामानुकूलकामत्वं नान्यत् तेषां विधीयते ।।' इति भाष्ये च ।

अत्र विष्णुलोके विष्णुनेकास्थितानां जीवन्मुक्तानां जयादिपार्षदानां इव शापादिनिमित्तकमनिष्टं नास्तीत्याह— **नानिष्टं तेषु किञ्चनेति** ।। तदुक्तं सप्तमतात्पर्ये—

[3]"अधिकारस्थिताश्चैव विमुक्ताश्च स्थिता जनाः ।
विष्णुलोकस्थितास्तेषां वरशापादियोगिनः ।।
अधिकारस्थिता मुक्तिं नियतं प्राप्नुवन्ति च ।
विमुक्त्यनन्तरं तेषां वरशापादयो न हि ।।' इति ।

मुक्तानामीश्वरेच्छानुसारीच्छारमणवत्वेऽपि स्वोत्तमाधीनरमणवत्वं चास्तीत्याह— **उत्तरोत्तरवश्याश्चेति** ।। तदुक्तं सप्तमतात्पर्ये—

[4]"देहेन्द्रियासुयुक्ताश्च पूर्वपश्चात्तनैर्युताः ।
अप्यभीमानिभिस्तेषां देवैः स्वात्मोत्तमैर्युताः ।।' इति ।
'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति च ।।

**इति श्रीमन्महाभारततात्पर्यभावविवृतौ श्रीवासुदेवयतिपूर्वाश्रमतनुजरामकृतौ प्रथमोऽध्यायः**

---

१. भा.ता. १०-२-१८ । २. सू.भा. ४-२-१६ । ३. भा.ता. ७-१-३७ । ४. भा.ता. ७-१-३८ ।

**असुराः कलिपर्यन्ता एवं दुःखोत्तरोत्तराः।**
**कलिर्दुःखाधिकस्तेषु तेऽप्येवं ब्रह्मवद्गणाः ।। १३२ ।।**

**व्यास**— मनुष्योत्तमादयः आनन्दादौ तारतम्येन तिष्ठन्तीत्युक्तं असुरास्तद्विरुद्धा कथमिति जिज्ञासायामाह— **असुरा इति** ।। तेऽपि कलयोऽपि ।। १३२ ।।

**वादि**— **तेऽप्येवमित्यत्र** तेऽपि कलिपदयोग्या अपि ।। १३२ ।।

**अभिनव**— तत्रैव 'कलिर्दुःखाधिकस्तेषु' इत्यस्ति । तस्यार्थः । यथा देवेषु ब्रह्मा सुखाधिकः । एवं तेषु असुरेषु कलिः दुःखाधिकः । तेऽपि सोऽपि कलिरपि ब्रह्मवत् गणाः गणवान् इति । एतेन कलिरित्येकवचनान्तशब्देन कलेः प्रकृतत्वात् सोऽपीति वक्तव्यं तेऽपीति बहुवचनान्तशब्देन कलेः परमर्शोऽनुपन्नः गणा इति बहुवचनं चानुपपन्नमिति दूषणं परिहृतम् । 'सुपां सुपो भवन्ति' इति वचनानुसारेण स इति प्रथमैकवचनस्य त इति प्रथमाबहुवचनमादेशः, गणा इति बहुवचनं च गण इत्येकवचनादेश इति स्वीकरणात् । एतेनैव कलेर्गणवत्त्वं वक्तव्यं गणा इति गणरूपत्वकथनमयुक्तमिति दूषणं परास्तम् । मत्वर्थीयाजन्तत्वमङ्गीकृत्य गणा इति शब्देन गणवत्वमुच्यते इत्यभ्युपगमात् ।। १३२ ।।

**इति श्रीसत्यनाथपूज्यपादशिष्येण श्रीसत्याभिनवयतिना कृतायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां प्रथमोऽध्यायः**

**सङ्क**— नन्वेवं मनुष्योत्तममारभ्य ब्रह्मपर्यन्तानां श्रीविष्णुभक्तानां स्थितिप्रकारो दर्शितः । कथं कलिपर्यन्तानामसुराणां श्रीविष्णुद्वेषिणां स्थितिप्रकार इत्यत आह— **असुरा इत्यादिना** ।।मनुष्योत्तममारभ्य ब्रह्मपर्यन्ता यथा सुखोत्तरा एवमसुरा कलिपर्यन्ता दुःखोत्तरोत्तराः। यथा ब्रह्मा सर्वेभ्यः सुखाधिकः एवं सर्वेभ्यः कलिर्दुःखाधिकः। यथा ब्रह्मत्वयोग्यगणाः पृथक् सन्ति एवं कलित्वयोग्या गणा पृथक् सन्ति । यथा रुद्रादियोग्यदेवत्वगणा पृथक् सन्ति तथाऽन्येऽपि असुरत्वयोग्या गणास्सन्ति इत्यर्थः ।। १३२ ।।

**वरद**— मुक्तियोग्येषु उक्तप्रकारं तमोयोग्येष्वप्यतिदिशति— **असुरा इत्यादिना** ।। मनुष्योत्तममारभ्य चतुर्मुखपर्यन्तं यथा सुखोत्तरोत्तरा एवं असुराः मनुष्याधममारभ्य कलिपर्यन्तं दुःखोत्तरोत्तराः। यथा ब्रह्मा सर्वेभ्यो सुखाधिकः एवं तेष्वसुरेषु कलिर्दुःखाधिकः। यथा ब्रह्मत्वयोग्या ऋजवो नाम गणाः सन्ति एवं तेऽपि कलित्वयोग्याः गणाः सन्ति ।। १३२ ।।

**जना**— सुराणामुक्त्वा दैत्यानामाह— **असुरा इति** ।। मनुष्याधममारभ्य कलिः पर्यन्ते सर्वा एषां ते असुराः एवं यथा देवाः सुखादिकाः तथा दुःखोत्तरोत्तराः। दुःखेनोत्तराः केचित्तेभ्यः अन्ये उत्तराः अधिकाः तेषु दैत्येषु कलिर्दुःखाधिकः। इदानीन्तनस्य नरकपाते अग्रे कथमित्यत आह— **त इति** ।। तेऽपि भाविकलयः तत्पदयोग्याः ब्रह्मपदयोग्यऋजुवद्गणाः समूहाः सन्ति ।। १३२ ।।

**ताम्र**— एवं योग्यानां ब्रह्मान्तानां मुक्तौ स्थितिप्रकारो दर्शितः। तारतम्येन स्थितानामसुराणां तमसि स्थितिप्रकारमाह— **असुरा इत्यादिना** ।। यथा ब्रह्मान्ता देवा सुखोत्तरोत्तरा एवं असुरा दुःखाधिका इत्यर्थः।

तेऽप्येवमित्यत्रैवंशब्दः कलिर्दुःखाधिक इत्यत्रान्वेति । यथा ब्रह्मा सुखाधिक एवमिति । यद्वा तेऽप्येवं इत्युक्तस्य विवरणं ब्रह्मवदिति । ब्रह्मगणा ऋजव इव कल्यादयोऽपि दोषिगणा इत्यर्थः। ते कल्यादयोऽपि ब्रह्मण इव गणस्था इति वा ।। १३२ ।।

**जम्बु**— एवं योग्यानां ब्रह्मान्तानां स्थितिप्रकारो दर्शितः। तारतम्यस्थितानामसुराणां तमसि स्थितिप्रकारमाह— **असुरा इति** ।। यथा मनुष्योत्तममारभ्य ब्रह्मान्ता देवाः सुखोत्तरोत्तरा एवमसुराः मनुष्याधममारभ्य कलिपर्यन्ताः दुःखोत्तरोत्तराः दुःखाधिकाः। तेषु असुरेषु । तेऽप्येवमित्यत्र एवं शब्दः दुःखाधिकमित्यत्रान्वेति । यथा ब्रह्मा सुखाधिकः एवं कलिः दुःखाधिकः। यद्वा तेऽप्येवमित्युक्तस्य विवरणम्— **ब्रह्मवदिति** ।। ब्रह्मगणा ऋजव इव तेऽपि कलयोऽपि दोषगणा इत्यर्थः । ते कलयोऽपि ब्रह्मण इव गणस्था इति वा ।। १३२ ।।

**तथान्येऽप्यसुराः सर्वे गणा योग्यतया सदा ।**
**ब्रह्मैव सर्वजीवेभ्यः सदा सर्वगुणाधिकः ।। १३३ ।।**

**व्यास**— मनुष्योत्तमानारभ्य चतुर्मुखपर्यन्तमधिकारतारतम्यमुक्तं ततोऽप्यन्यस्याधिकस्याधिकारिणो भावे उक्तं न्यूनमित्यत आह— **ब्रह्मेति** ।। १३३-१३४ ।।

**सङ्क**— न केवलं ब्रह्म सर्वजीवेभ्यः सदा गुणाधिकः किन्तु सदा सर्वजीवेभ्यः ज्ञानभक्त्यादिसर्वगुणाधिक इति दर्शयति— **ब्रह्मैवेति** ।। सर्वगुणाधिको अन्यो नैवेत्येवशब्दार्थः ।। १३३ ।।

**वरद**— यथा च रुद्रेन्द्रादिपदयोग्यगणाः पृथक्सन्ति तथान्येऽप्यसुराः सर्वगणाः सन्तीत्यर्थः। न केवलं ब्रह्मा सुखाधिकः किन्तु सदा सर्वैर्गुणैर्ज्ञानभक्त्यादिकैरधिकः । न केवलं संसारे सर्वेषामाधिपत्ये स्थितः किन्तु मुक्तोऽपि सर्वमुक्तानामाधिपत्ये तिष्ठतीत्याह— **ब्रह्मैवेति** ।। सर्वगुणाधिकोऽन्यो नैवेत्यर्थः ।। १३३ ।।

**जना**— कलेरुक्त्वा अन्येषामाह— **तथेति** ।। यथा रुद्रादिगणाः। अन्ये कलेरन्ये द्वापरादयः सर्वेऽसुरा योग्यतया गणाः बहवः सदा सन्ति । पूर्वं शेषपर्यन्तमेव 'रुद्रपुरःसरा' इत्यनेनोक्तत्वात् ब्रह्मण आह— **ब्रह्मेति** ।। १३३ ।।

**ताम्र**— सदा तदन्येऽप्यसुरा योग्यतया गणाः स्वस्वपदयोग्यगणवन्त इत्यर्थः। योग्यतया इत्युत्तरेणान्वेति। ब्रह्मणो गुणाधिक्यमेव विवृणोति— **ब्रह्मेति** ।। कादाचित्कयोग्यताव्यवच्छेदाय **सदा योग्यतयेति** ।। सदा योग्यतया सदा सर्व गुणाधिक इत्यर्थः ।। १३३ ।।

**जम्बु**— कलेरुक्त्वा अन्येषामाह— **तथेति** ।। यथा रुद्रेन्द्रादिपदयोग्यगणाः पृथक् सन्ति तथान्येऽप्यसुर-गणयोग्यास्सन्तीत्यर्थः। तदुक्तं स्कान्दे—

'दैत्यानामपि सर्वेषां यदा कलियुगात्ययः।
कलिना सहैव गच्छन्ति स्वां गतिं निरयालयाः।।
तेषां तु राशिसंस्था हि तन्नामानो परेऽपि च ।
जायन्ते कर्मणा स्वेन तत्र कर्मविधायकाः ।।

अत्र मुक्तियोग्यानां च विरुद्धोभयगत्युक्त्या नित्यसंसारिणां नोभयमिति सूचितम् । तदुक्तम्—

'नित्यसंसारिणस्सर्वे सृष्टौ सृष्टौ भवन्ति हि।
न तेषां संसृतेर्नाशः कश्चित्क्वापि भविष्यति ।।'

न केवलं ब्रह्मा सुराधिकः सदा सर्वगुणैः ज्ञानभक्त्यादिकैः अधिकः इत्याह— **ब्रह्मैवेति** ।। सदा संसारे ब्रह्मैव सर्वजीवेभ्यः सर्वगुणाधिकः सर्वैः ज्ञानभक्त्यादिगुणैरधिकः ।। १३३ ।।

**मुक्तोऽपि सर्वमुक्तानामाधिपत्ये स्थितः सदा।**
**आश्रयस्तस्य भगवान् सदा नारायणः प्रभुः ।। १३४ ।।**

**सङ्क**— ननु ब्रह्मा सदा सर्वजीवेभ्यः सर्वगुणाधिक इति कथमुपपद्यते । मुक्तानामुत्तरोत्तरवश्यत्वमात्रेण सर्वमुक्ता–धिपत्याभावात् ब्रह्मणः इत्याशङ्क्याह— **मुक्तोऽपीति** ।। नन्वेवं सर्वगुणाधिक्ये ब्रह्मणो विष्णवधीनत्वं न स्यादित्यत आह— **आश्रयेति** ।। अस्मिन्नध्याये क्वचित् क्वचिदुक्तप्रमेयमुच्यते न तावता पुनरुक्तिदोषः शङ्कनीयः। 'मानमेयविशेषेण पुनरुक्तिर्न जायत' इत्युक्तन्यायस्यऽत्रापि सम्भवादित्याद्यूहनीयम् ।। १३४ ।।

**वरद**— तर्हि विष्णुरपि न व्यावर्त्य इति प्राप्तमत आह— **अश्रय इति** ।। तस्य ब्रह्मणो भगवान्नारायणः सदा संसारे मुक्तौ चाश्रय इत्यर्थः । तत्र हेतुः **प्रभुरिति** ।। १३४ ।।

**जना**— सर्वमुक्ताधिपतित्वे ब्रह्मण उक्ते अस्याधिपतिः अन्यो नास्तीति प्राप्तमत आह— **आश्रय इति** ।। तस्य ब्रह्मणः ।। १३४ ।।

**ताम्र**— मुक्तौ साम्यमिति पक्षं दूषयति— **मुक्तोऽपीति** ।। १३४ ।।

**जम्बु**— न केवलं सर्वेषामधिपत्ये स्थितः किन्तु मुक्तोऽपि सर्वमुक्तानामधिपत्ये तिष्ठतीत्याह— **मुक्तोऽपीति** ।। यस्मिन् काले मुक्तो ब्रह्मा तस्मिन् काले मुक्तानामाधिपत्ये स्थितः [१]"मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरस्सराणां' इत्युक्तेः । 'ब्रह्मन् । मुक्तोऽपि सर्वमुक्तानां आधिपत्ये स्थितो भव' इति सर्वमुक्ताधिपतित्वे ब्रह्मण उक्ते अस्याधिपतिरन्यो नास्तीति प्राप्तमत आह— **आश्रय इति** ।। तस्य ब्रह्मणः प्रभुः भगवान्नारायणः सदा संसारे मुक्तौ चाश्रयः तत्र हेतुः प्रभुरिति ।। १३४ ।।

**इत्यृग्यजुःसामाथर्वपञ्चरात्रेतिहासतः।**
**पुराणेभ्यस्तथाऽन्येभ्यः शास्त्रेभ्यो निर्णयः कृतः ।। १३५ ।।**

**व्यास**— सदागमार्थं प्रदर्श्योपपाद्योपसंहरति— **इतीति** ।। १३५ ।।

**वादि**— सदागमार्थं प्रदर्श्योपपाद्योपसंहरति— **इतीति** ।। १३५ ।।

---

१. अनु. ४-४-१९०८, अनन्याधिपतित्वाधिकरणम् ।

**सङ्क**— 'अर्थोऽयमेव निखिलैरपि' इत्यादि 'सदैव' इति प्रतिज्ञाय यो य निर्णयः समभिहितः तं निर्णयं उपसंहरति— **इतीति** ।। १३५ ।।

**वरद**— 'अर्थोऽयमेव निखिलैरपि वेदवाक्यैः' इत्यादिना कृतं निर्णयमुपसंहरति— **इतीति** ।। इति उक्तरीत्या शास्त्रेभ्यो निर्णयः कृत इति सम्बन्धः। शास्त्रशब्दविवरणम्— **ऋग्यजुरित्यादि** ।। इतिहासो भारतं। पञ्चम्यर्थे तसिः। अन्येभ्यो ब्रह्माण्डादिभ्यः ।। १३५ ।।

**जना**— अर्थोऽयमित्यादिना प्रतिज्ञातमर्थमुपपाद्य उपसंहरति— **इतीति** ।। १३५ ।।

**ताम्र**— अर्थोऽयमेवत्याद्युक्तमुपसंहरति— **इतीति** ।। १३५ ।।

**जम्बु**— 'अर्थोऽयमेव निखिलैरपि वेदवाक्यैः' इत्यादिना प्रतिज्ञातमर्थमुपपाद्य उपसंहरति— **इतीति** ।। इत्युक्तरीत्या शास्त्रेभ्यो निर्णयः कृत इति सम्बन्धः। शास्त्रशब्दविवरणम्— **ऋग्यजुरित्यादिना** ।। इतिहासो भारतम् ।। १३५ ।।

**विष्ण्वाज्ञयैव विदुषा तत्प्रसादबलोन्नतेः।**
**आनन्दतीर्थमुनिना पूर्णप्रज्ञाभिधायुजा ।। १३६ ।।**

**व्यास**— सर्वशास्त्रनिर्णयकरणे किं निमित्तं सामर्थ्यं च कुतस्तवेत्यत आह— **विष्ण्विति** ।। इत्युक्तमनुवदन् अध्यायप्रयोजनमाह— **आनन्देति** ।। १३६-१३७ ।।

इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां
सर्वशास्त्रनिर्णयो नाम प्रथमोऽध्यायः

**वादि**— सर्वशास्त्रार्थनिर्णयकरणे किं निमित्तं सामर्थ्यं च कुतस्तवेत्यत आह— **विष्ण्विति** ।। १३६-१३७ ।।

इति श्रीमत्पूर्णप्रमतिभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयटीकायां
श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
भावप्रकाशिकायां प्रथमोऽध्यायः

**सङ्क**— नन्वेवं निर्णयकर्तृत्वसामर्थ्यमात्मनः कुतः इत्यत आह— **विष्ण्वाज्ञयैवेति** ।। नन्वेवं निर्णयः किं विषय इत्यत आह— **आनन्दतीर्थमुनिना इति** ।। सर्वशास्त्रविषय इति भावः ।। १३६ ।।

**वरद**— ननु केनायं निर्णयः कृतः किमर्थं च कृतः किञ्च तत्करणे सामर्थ्यमित्यत आह— **विष्ण्वाज्ञयेति** ।। केनेत्यस्योत्तरम्— **आनन्दतीर्थमुनिनेति** ।। स्वस्यैव नामान्तरमाह— **पूर्णप्रज्ञेति** ।। पूर्णप्रज्ञ इत्यभिधया नाम्ना युक्तेनेत्यर्थः। स्वस्वरूपज्ञानमप्यधिकारिणो मोक्षसाधनमिति दर्शयितुं नामान्तरं दर्शितम्। किमर्थमित्यस्योत्तरं— **विष्ण्वाज्ञयेति** ।। निर्णयकरणे किं सामर्थ्यमित्यस्योत्तरम्— **विदुषेति** ।। अनेन पूर्णप्रज्ञशब्दार्थो दर्शितः।

अत्र मुक्तियोग्यानां च विरुद्धोभयगत्युक्त्या नित्यसंसारिणां नोभयमिति सूचितम् । तदुक्तम्—

'नित्यसंसारिणस्सर्वे सृष्टौ सृष्टौ भवन्ति हि।
न तेषां संसृतेर्नाशः कश्चित्क्वापि भविष्यति ।।'

न केवलं ब्रह्मा सुराधिकः सदा सर्वगुणैः ज्ञानभक्त्यादिकैः अधिकः इत्याह— **ब्रह्मैवेति** ।। सदा संसारे ब्रह्मैव सर्वजीवेभ्यः सर्वगुणाधिकः सर्वैः ज्ञानभक्त्यादिगुणैरधिकः ।। १३३ ।।

**मुक्तोऽपि सर्वमुक्तानामाधिपत्ये स्थितः सदा।**
**आश्रयस्तस्य भगवान् सदा नारायणः प्रभुः ।। १३४ ।।**

**सङ्क**— ननु ब्रह्मा सदा सर्वजीवेभ्यः सर्वगुणाधिक इति कथमुपपद्यते । मुक्तानामुत्तरोत्तरवश्यत्वमात्रेण सर्वमुक्ता–धिपत्याभावात् ब्रह्मणः इत्याशङ्क्याह— **मुक्तोऽपीति** ।। नन्वेवं सर्वगुणाधिक्ये ब्रह्मणो विष्ण्वधीनत्वं न स्यादित्यत आह— **आश्रयेति** ।। अस्मिन्नध्याये क्वचित् क्वचिदुक्तप्रमेयमुच्यते न तावता पुनरुक्तिदोषः शङ्कनीयः। 'मानमेयविशेषेण पुनरुक्तिर्न जायत' इत्युक्तन्यायस्यऽत्रापि सम्भवादित्याद्यूहनीयम् ।। १३४ ।।

**वरद**— तर्हि विष्णुरपि न व्यावर्त्य इति प्राप्तमत आह— **अश्रय इति** ।। तस्य ब्रह्मणो भगवान्नारायणः सदा संसारे मुक्तौ चाश्रय इत्यर्थः । तत्र हेतुः **प्रभुरिति** ।। १३४ ।।

**जना**— सर्वमुक्ताधिपतित्वे ब्रह्मण उक्ते अस्याधिपतिः अन्यो नास्तीति प्राप्तमत आह— **आश्रय इति** ।। तस्य ब्रह्मणः ।। १३४ ।।

**ताम्र**— मुक्तौ साम्यमिति पक्षं दूषयति— **मुक्तोऽपीति** ।। १३४ ।।

**जम्बु**— न केवलं सर्वेषामधिपत्ये स्थितः किन्तु मुक्तोऽपि सर्वमुक्तानामधिपत्ये तिष्ठतीत्याह— **मुक्तोऽपीति** ।। यस्मिन् काले मुक्तो ब्रह्मा तस्मिन् काले मुक्तानामाधिपत्ये स्थितः [1]"मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरस्सराणां' इत्युक्तेः । 'ब्रह्मन् । मुक्तोऽपि सर्वमुक्तानां आधिपत्ये स्थितो भव' इति सर्वमुक्ताधिपतित्वे ब्रह्मण उक्ते अस्याधिपतिरन्यो नास्तीति प्राप्तमत आह— **आश्रय इति** ।। तस्य ब्रह्मणः प्रभुः भगवान्नारायणः सदा संसारे मुक्तौ चाश्रयः तत्र हेतुः प्रभुरिति ।। १३४ ।।

**इत्यृग्यजुःसामाथर्वपञ्चरात्रेतिहासतः।**
**पुराणेभ्यस्तथाऽन्येभ्यः शास्त्रेभ्यो निर्णयः कृतः ।। १३५ ।।**

**व्यास**— सदागमार्थं प्रदर्श्योपपाद्योपसंहरति— **इतीति** ।। १३५ ।।

**वादि**— सदागमार्थं प्रदर्श्योपपाद्योपसंहरति— **इतीति** ।। १३५ ।।

---

१. अनु. ४-४-१९०८, अनन्याधिपतित्वाधिकरणम् ।

**सङ्क**— 'अर्थोऽयमेव निखिलैरपि' इत्यादि 'सदैव' इति प्रतिज्ञाय यो य निर्णयः समभिहितः तं निर्णयं उपसंहरति— **इतीति** ।। १३५ ।।

**वरद**— 'अर्थोऽयमेव निखिलैरपि वेदवाक्यैः' इत्यादिना कृतं निर्णयमुपसंहरति— **इतीति** ।। इति उक्तरीत्या शास्त्रेभ्यो निर्णयः कृत इति सम्बन्धः। शास्त्रशब्दविवरणम्— **ऋग्यजुरित्यादि** ।। इतिहासो भारतं। पञ्चम्यर्थे तसिः । अन्येभ्यो ब्रह्माण्डादिभ्यः ।। १३५ ।।

**जना**— अर्थोऽयमित्यादिना प्रतिज्ञातमर्थमुपपाद्य उपसंहरति— **इतीति** ।। १३५ ।।

**ताम्र**— अर्थोऽयमेवत्याद्युक्तमुपसंहरति— **इतीति** ।। १३५ ।।

**जम्बु**— 'अर्थोऽयमेव निखिलैरपि वेदवाक्यैः' इत्यादिना प्रतिज्ञातमर्थमुपपाद्य उपसंहरति— **इतीति** ।। इत्युक्तरीत्या शास्त्रेभ्यो निर्णयः कृत इति सम्बन्धः। शास्त्रशब्दविवरणम्— **ऋग्यजुरित्यादिना** ।। इतिहासो भारतम् ।। १३५ ।।

**विष्ण्वाज्ञयैव विदुषा तत्प्रसादबलोन्नतेः।**
**आनन्दतीर्थमुनिना पूर्णप्रज्ञाभिधायुजा ।। १३६ ।।**

**व्यास**— सर्वशास्त्रनिर्णयकरणे किं निमित्तं सामर्थ्यं च कुतस्तवेत्यत आह— **विष्ण्वति** ।। इत्युक्तमनुवदन् अध्यायप्रयोजनमाह— **आनन्देति** ।। १३६-१३७ ।।

इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्जिकायां
सर्वशास्त्रनिर्णयो नाम प्रथमोऽध्यायः

**वादि**— सर्वशास्त्रार्थनिर्णयकरणे किं निमित्तं सामर्थ्यं च कुतस्तवेत्यत आह— **विष्ण्वति** ।। १३६-१३७ ।।

इति श्रीमत्पूर्णप्रमतिभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयटीकायां
श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
भावप्रकाशिकायां प्रथमोऽध्यायः

**सङ्क**— नन्वेवं निर्णयकर्तृत्वसामर्थ्यमात्मनः कुतः इत्यत आह— **विष्ण्वाज्ञयैवेति** ।। नन्वेवं निर्णयः किं विषय इत्यत आह— **आनन्दतीर्थमुनिना इति** ।। सर्वशास्त्रविषय इति भावः ।। १३६ ।।

**वरद**— ननु केनायं निर्णयः कृतः किमर्थं च कृतः किञ्च तत्करणे सामर्थ्यमित्यत आह— **विष्ण्वाज्ञयेति** ।। केनेत्यस्योत्तरम्— **आनन्दतीर्थमुनिनेति** ।। स्वस्यैव नामान्तरमाह— **पूर्णप्रज्ञेति** ।। पूर्णप्रज्ञ इत्यभिधया नाम्ना युक्तेनेत्यर्थः। स्वस्वरूपज्ञानमप्यधिकारिणो मोक्षसाधनमिति दर्शयितुं नामान्तरं दर्शितम् । किमर्थमित्यस्योत्तरं— **विष्ण्वाज्ञयेति** ।। निर्णयकरणे किं सामर्थ्यमित्यस्योत्तरम्— **विदुषेति** ।। अनेन पूर्णप्रज्ञशब्दार्थो दर्शितः।

विद्वत्त्वमपि भगवत्प्रसादायत्तमित्याह— **तत्प्रसादेति** ।। तस्य भगवतः प्रसाद एव बलं तस्योन्नतिः उत्कर्षः। तस्याः सकाशान्निर्णयः कृत इति सम्बन्धः ।। १३६ ।।

**जना**— विष्ण्वाज्ञयैव निर्णयः कृतः। तस्य विष्णोस्तत्प्रसाद एव बलं तस्योन्नतिरुत्कर्षः। तस्माद्विदुषां आनन्दकरशास्त्रकारित्वात् ज्ञानित्वाच्च सिद्धं,आश्रमदाने पददाने च गुरुदत्तं वा नामद्वयमाह— **आनन्देति** ।। १३६ ।।

**ताम्र**— अनन्तशास्त्रनिर्णयकरणे किं निमित्तं किं प्रयोजनं सामर्थ्यं च कुतस्तत्र भवतामित्यत आह— **विष्ण्वाज्ञयेति** ।। साक्षात्करणरूपत्वात् तत्प्रीतिरेव स्वप्रयोजनमितिसूचितम् । अधिकारिणान्तु परमानन्द एव फलमिति सूचयन् वेदप्रसिद्ध स्वनामज्ञानादेव स्वस्य शास्त्रकरणसामर्थ्यं ज्ञायत इत्याह— **आनन्देति** ।। तदुक्तम्—

[1]"आनन्दरूपस्य परस्य पात्रधी–
रानन्दरसन्दायि सुशास्त्रकृत्स यत्।
आनन्दतीर्थेति पदं गुरूदितं
बभूव तस्यात्यनुरूपरूपकम्' इति ।। १३६ ।।

**जम्बु**— ननु केनायं कृतः किमर्थं च निर्णयः कृतः तत्करणे कथं सामर्थ्यमित्यत आह—**विष्ण्वाज्ञयेति** ।। केनेत्यस्योत्तरम्— **आनन्दतीर्थमुनेरिति** ।। तस्य नामान्तरम्— **पूर्णप्रज्ञाभिधायुजेति** ।। स्वरूपज्ञानमधिकारिणां मोक्षसाधनमिति दर्शयितुं नामान्तरं दर्शितम् । किमर्थमित्यस्योत्तरम्— **विष्ण्वाज्ञयैवेति** ।। निर्णयकरणे किं सामर्थ्यमित्यस्योत्तरम् —**विदुषेति** ।। अनेन पूर्णप्रज्ञशब्दार्थो दर्शितः। विद्वत्त्वमपि भगवत्प्रसादायत्तमित्याह— **तत्प्रसादेति** ।। तस्य भगवत्प्रसाद एव बलं तस्योन्नतिः उत्कर्षः तस्याः सकाशात् निर्णयः कृतः ।। १३६ ।।

**तात्पर्यं शास्त्राणां सर्वेषामुत्तमं मया प्रोक्तम्।**
**प्राप्यानुज्ञां विष्णोरेतज्ज्ञात्वैव विष्णुराप्योऽसौ ।। १३७ ।।**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये प्रथमोऽध्यायः**

**सङ्क**— विष्ण्वाज्ञयैव इत्युक्तं प्रकटयति— **प्राप्येति** ।। मूलरूपस्य व्यासावताररूपस्य च विष्णोरनुज्ञां प्राप्येत्यर्थः। ननु किमर्थमयं निर्णयः क्रियते । श्रीविष्णुप्राप्त्यर्थं चेत् श्रीविष्णुप्राप्तिरन्यथा किं न स्यादित्यत आह— **एतज्ज्ञात्वैवेति** ।। ननु मयोक्तं इत्युक्त्यैव श्रीमदाचार्यकृतोऽयं निर्णय इति ज्ञायते । तत्किमर्थं नामद्वयग्रहणमिति उच्यते । एतन्नामद्वयार्थभूतस्वज्ञानमप्यधिकारिणां पुरुषार्थप्रदं भवतीति स्वनामद्वयग्रहणं कृतमिति निरवद्यम् ।। १३७ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां सङ्कर्षणतीर्थभट्टारकविरचितायां शुभप्रकाशिकायां प्रथमोऽध्यायः**

---

१. म.वि. ५-२ ।

**वरद**— ननु निर्णय: कृत इति कोऽर्थ इत्यतरनम्य तात्पर्यं दर्शयति— **तात्पर्यमिति** ।। शास्त्राणां ऋगादीनां उत्तमं तात्पर्यं महातात्पर्यं विष्णो: सर्वोत्तमत्व इति शेष:। मया आनन्दतीर्थेन प्रोक्तम् । विष्णवाज्ञयैवेत्येतद्विवृणोति— **प्राप्येति** ।। विष्णोर्नारायणस्य तदवतारभूतव्यासस्य चेत्यर्थ:। ननु किमर्थं विष्णो: सर्वोत्तमत्वे शास्त्राणां महातात्पर्यं दर्शितम् । तज्ज्ञानार्थमिति चेत् तज्ज्ञानमपि किमर्थम् । मोक्षार्थं इति चेन्न । अन्यज्ञानेनापि तत्सम्भवादित्यत आह— **एतदिति** ।। एतत् विष्णो: सर्वोत्तमत्वं ज्ञात्वैव असौ वैकुण्ठादिस्थानस्थितो विष्णुराप्य: प्राप्य इत्यर्थ:। विष्णो: सर्वोत्तमत्वज्ञानमेव मोक्षसाधनं तदर्थं तत्रैव अशेषशास्त्रतात्पर्यप्रदर्शनरूपनिर्णयकरणं युक्तमिति भाव इत्यशेषमतिमङ्गलम् ।। १३७ ।।

श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि ।
आद्यस्स्पष्टीकृतस्तावत् प्रीत्यै माधवमध्वयो: ।।

**इति श्रीमदानन्दतीर्थकृतमहाभारततात्पर्यनिर्णयव्याख्यायां**
**वरदराजाचार्यविरचितायां मन्दसुबोधिन्यां प्रथमोऽध्याय:**

**जना**— पूर्वोक्तार्थमनुवदन्नेतज्ज्ञानफलमाह— **तात्पर्यमिति** ।। विष्णोरनुज्ञां प्राप्य मया सर्वेषां शास्त्राणां उत्तमं तात्पर्यं प्रोक्तम् । अधिकारिणाऽसौ विष्णुरेव । तत्तात्पर्यं ज्ञात्वैवाप्य: ।। १३७ ।।

यं गङ्गाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधा–
त्पुत्रं प्राप जनार्दनं शमदम:स्वाध्यायसम्पद्युतात् ।
आद्यस्तस्य कृतौ सतां सुखकरोऽध्याय: समाप्तिं युत:
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

**इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां**
**पदार्थदीपिकायां जनार्दनभट्टविरचितायां प्रथमोऽध्याय:**

**ताम्र**— नन्वानन्दप्राप्ति: जीवमोक्षार्थं प्रवृत्तागमेनैव भवति किमेतेनेत्यत आह— **तात्पर्यमिति** ।। परमतात्पर्यानिरूपणे अपव्याख्यानादिना विपरीतज्ञानजननाद्वेदैरपि मोक्षायोगात् न तज्ज्ञानाद्भगवत्प्राप्तिरिति भाव:। तात्पर्यं तात्पर्यविषयम् ।। १३७ ।।

**इति श्रीविठ्ठलाचार्यतनुजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना**
**श्रीनिवासेन विरचितायां प्रमेयमणिमालायां प्रथमोऽध्याय:**

**जम्बु**— ननु निर्णयकृतौ कोऽर्थ: इत्येतस्य तात्पर्यं दर्शयति— **तात्पर्यमिति** ।। शास्त्राणां ऋगादीनां उत्तमं तात्पर्यं महातात्पर्यं विष्णो: सर्वोत्तमत्वं इति शेष:। मया आनन्दतीर्थेन प्रोक्तम् । विष्णवाज्ञयैवेत्येतद्विवृणोति— **प्राप्येति** ।। विष्णो: नारायणस्य तदवतारभूतस्य व्यासस्य चेत्यर्थ:। ननु किमर्थं विष्णो: सर्वोत्तमत्वे महातात्पर्यं दर्शितं ज्ञानार्थमिति चेत् तज्ज्ञानमपि किमर्थं मोक्षार्थमिति चेत् सम्यज्ज्ञानेनापि तत्सम्भवादित्यत आह— **एतदिति** ।। एतद्विष्णो: सर्वोत्तमत्वं ज्ञात्वैवासौ वैकुण्ठादिस्थाने स्थितो विष्णुराप्य इत्यर्थ:। विष्णुतत्सर्वोत्तमत्वे ज्ञात्वैव ज्ञानमेव मोक्षसाधनं तदर्थं तत्रैवाशेषशास्त्रार्थतात्पर्यरूपनिर्णयकरणं युक्तमिति भाव:। तत्प्रसादबलोन्नते: तस्य विष्णो: प्रसाद: अनुग्रह: स एव बलं तस्य प्रसादबलस्य उन्नते: उत्कर्षात् विदुषा ज्ञानिना आनन्दतीर्थमुनिना आनन्दयति सुखयतीत्यानन्द: मोक्षादिप्रदं तीर्थं शास्त्रं यस्मात् स आनन्दतीर्थ:। आनन्दस्य सुखरूपस्य नारायणस्य

पात्रीभूता धीर्यस्य स तथा वा तेन । तदुक्तम्—

'आनन्दरूपस्य परस्य पात्रधीरानन्दसन्दायिसुशास्त्रकृत्स यत् ।
आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूपरूपकम्' इति।

पूर्णप्रज्ञाभिधायुजा पूर्णा प्रज्ञा ज्ञानं यस्य सः पूर्णप्रज्ञः। पूर्णप्रज्ञ इत्यभिधा नामधेयं तया युजा युक्तेन । विष्ण्वाज्ञयैव विष्णोराज्ञयैव न तु स्वबुद्ध्या इति पूर्वोक्तप्रकारेण ऋचश्च यजूंषि च सामानि च अथर्वाणश्च पञ्चरात्रं च इतिहासश्च ऋग्यजुःसामथर्वपञ्चरात्रेतिहासाः तेभ्यः तसिः। पुराणेभ्यः अष्टादशपुराणेभ्यः तथान्येभ्यः ऋगादिभिन्नेभ्यः शास्त्रेभ्यः निर्णयः कृतः। किमेतेनेत्यत आह— **तात्पर्यमिति** ।। विष्णोरनुज्ञां प्राप्य मया सर्वेषां शास्त्राणां ऋगादीनां उत्तमानां तात्पर्यं महातात्पर्यं मया प्रोक्तम् । असौ विष्णुः एतत्तात्पर्यं ज्ञात्वैवेति स्थितेनाधिकरिणा आप्यः प्राप्यः इत्यशेषमतिमङ्गलम् ।। १३७ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयस्य टीकासङ्ग्रहे श्रीमद्रोट्टीरमणाचार्यशिष्येण जम्बुखण्डीलक्ष्मीनरसिंहेन विरचिते प्रथमोऽध्यायः**

# अथ द्वितीयोऽध्यायः

**जयति हरिरचिन्त्यः सर्वदेवैकवन्द्यः**
**परमगुरुरभीष्टावाप्तिदः सज्जनानाम् ।**
**निखिलगुणगणार्णो नित्यनिर्मुक्तदोषः**
**सरसिजनयनोऽसौ श्रीपतिर्मानदो नः ।। १ ।।**

**व्यास**— विष्णोः सर्वोत्तमत्वादिकं सर्वसदागमप्रतिपाद्यमित्येतत् [1]"भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शित' इति वचनात् सकलसदागमार्थेन भारतेनापि समर्थयिष्यन् [2]प्रकरणान्तरत्वादिष्टमेव ।। १ ।।

**वादि**— इदानीं द्वितीयाध्यायमारभमाणो भगवानानन्दतीर्थमुनिः 'नमो नम' इति प्रागुक्तमङ्गलबाहुल्यमनुभावयन्नध्यायादौ स्वेष्टदेवतामभिष्टौति— **जयतीति** ।। जयति सर्वोत्कृष्टो वर्तते । अचिन्त्यः स्वगतानन्तानन्तमाहात्म्यसहिततया चिन्तयितुमशक्यः। अरं दोषं नयन्ति नाशयन्तीत्यर्णानि पुण्यजलानि । 'नीञ् प्रापण' इति धातोः कर्त्रर्थे औणादिके डप्रत्यये कृते सति निष्पन्नमिदं पदम् । 'द्वौ चापरौ वर्णविकारनाशौ' इति वचनात् निरुक्तत्वात् पदान्ताकारलोपः। निखिलगुणगणा एवार्णांनि यस्य स तथोक्तः। निखिलगुणगणार्णव इत्युक्तं भवति । वर्णवाचकार्णपदवज्जलवाचकमप्यकारान्तमर्णपदं वा। तानेव गुणान् लेशतो वक्ति— **हरिरित्यादिना**।। हरिः सकलदुर्जनसंहारी ।। १ ।।

**सङ्क**— श्रीविष्णोः सर्वगुणपरिपूर्णत्वनिर्णयायैव श्रीमन्महाभारतवाक्यानां समुद्धृतिं कर्तुं तत्प्रतिपाद्यमेव पुरुषोत्तमं अध्यायादौ स्तौति— **जयतीति** ।। १ ।।

**वरद**— एवं तावत् प्रथमे अध्याये भगवद्गुणोत्कर्ष एवाशेषशास्त्रतात्पर्यविषयीभूतोऽर्थ इति निर्णीयेदानीं विशेषतो अशेषभारतस्यापि तात्पर्यविषयीभूतः स एवार्थः इति निर्णेतुकामो भगवानाचार्यो 'नारायणं सुरगुरुं' इति भारतार्थसङ्ग्राहकतदाद्यश्लोकप्रतिपादितगुणवत्तया भारतप्रतिपाद्यं नारायणमध्यायादौ स्तौति— **जयतीति**।। हरिर्नारायणो जयत्युत्कृष्टो वर्तते । अत्र जयतेरुत्कर्षप्राप्त्यर्थत्वेन अकर्मकत्वात् कर्मानुक्तिर्न दोषाय । तत्र भारताद्यश्लोके विभुशब्देन पूर्णसंविद्गुणात्मकत्वेन साकल्येनाचिन्त्यत्वं लब्धं, तदाह— **अचिन्त्य इति** ।। 'सकललोकनमस्कृतम्' इत्यनेन 'अमरासुरसिद्धवन्द्यम्' इत्यनेन च मुक्तामुक्तगणवन्द्यत्वमुक्तं, तदाह— **सर्वदेवैकवन्द्य इति** ।। सर्वैर्मुक्तैश्च देवैर्मुख्यतया वन्द्य इत्यर्थः। अनेन कैमुत्यन्यायेन हरिप्रवणत्वमेव सर्वस्य धर्म इति चोक्तं भवति । 'सुरगुरुम्' इत्यनेन पद्मापद्मभवादीनां ज्ञानप्रदत्वमुक्तं, तदाह— **परमगुरुरिति** ।। गुरूणां गुरुरित्यर्थः। 'भवघ्नम्' इत्यनेन मोक्षैकहेतुत्वमुक्तं, तदाह— **सज्जनानामभीष्टावाप्तिद इति** ।। विभुशब्देनैव चोदारसंविद्गुणपूर्णत्वमुक्तं, तदाह— **निखिलगुणगणार्ण इति** ।। निखिलगुणानां गणा एव अर्णांसि जलानि यत्रासौ तथोक्तः। अनेनानन्तगुणसमुद्रत्वं लभ्यते । 'त्रैगुण्यवर्जितम्' इत्यनेन निर्दोषत्वमुक्तं, तदाह— **नित्यनिर्मुक्तदोष इति** ।। नित्यं निर्मुक्ताः दोषाः यस्य असौ तथोक्तः। भक्तप्रियमित्यनेन भक्त्यैव

---

१. भा. १-४-२२ । २. 'प्रकरणान्तरमिष्टमेव' इति स्यात् ।

तुष्यतीत्युक्तं, तदाह । **नः** अस्माकम् **मानद इति** ।। 'जगदेकनाथम्' इत्यस्यार्थं कैमुत्यन्यायेनाह— **श्रीपतिरिति** ।। अजशब्दमहिम्ना जननराहित्येन नित्याप्राकृतकल्याणदेहवत्वं लब्धं, तदाह— **सरसिजनयन इति** ।। १ ।।

**जना**— ॐ विष्णोः सर्वोत्तमत्वादिकं सर्वसदागमप्रतिपाद्यमित्येतत् 'भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः' इति वचनात् भारतस्य वेदार्थरूपत्वाद्भारतवाक्यैः प्रतिपादयन् भारताद्यपद्योक्तगुणत्वेनाद्यपद्येन स्तौति— **जयतीति** ।। असौ जयति उत्कृष्टो वर्तते । अनेन वन्द इत्येतदुक्तार्थं भवति । अयं मत्तोऽधिको अहमनुत्कृष्ट इति बुद्धिर्हि वन्दनमिति । 'विभुम्' इत्यस्यार्थो हरिरिति । निखिलात्मकत्वात् । तत्र [1]"अखिलामरवरो हरिराविरासीद्' इत्युक्तत्वात् 'ईशम्' इत्यस्याचिन्त्य इति । 'सकललोक' इत्यस्य 'अमर' इत्यस्य च सर्वदेवैकवन्द्य इति । सर्वलोकैर्देवैश्च । यद्वा सर्वैर्देवैर्मुक्तामुक्तैर्मुख्यतया वन्द्य इति । ब्राह्मणपरिव्राजकन्यायेन पूर्वव्याख्यानम् । सुरगुरुमित्यस्य परमगुरुरिति सुराणां परमत्वात् । भक्तप्रियमित्यस्य भवघ्नमित्यस्य च सज्जनानां अभीष्टावाप्तिद इति । भक्तानां मुक्तियोग्यानां च सत्त्वात् मुक्तेरिष्टत्वादभीष्टदातुः प्रियत्वात् । नारायणमित्यस्य निखिलेति । त्रैगुण्यवर्जितमित्यस्य नित्यनिर्मुक्तदोष इति । त्रिगुणवत एव दोषित्वात् । अजमित्यस्य सरसिजनयन इति । सर्वदोत्फुल्लारविन्दनयनस्य जननरहितस्यैव सम्भवात् । जगदेकनाथमित्यस्य श्रीपतिरिति । श्रियः सर्वोत्कृष्टत्वात्तन्नाथस्य सर्वनाथत्वम् । 'आद्यम्' इत्यस्य नः मानद इति । जन्याद्यब्रह्मणः ज्ञानदत्वादाद्यत्वमिति ज्ञेयम् । यद्वा प्रकरणभेदात् प्रकरणादौ स्तुतिरूपं मङ्गलमाचरति— **जयतीति**।। असौ हरिः हरति पापमिति प्रतिबन्धकपापनाशको जयति उत्कृष्टो वर्तते । उत्कृष्टार्थजयेरकर्मकत्वात्कर्माकथनम्। उत्कर्षबोधकानि सर्वाणि विशेषणानि । सर्वैर्देवैर्मुख्यतया वन्द्यः। परमस्य ब्रह्मणः गुरुरुपदेष्टा । निखिलाः पूर्णाश्च ते गुणाश्च तेषां गणाः समूहाः तैरर्णः समुद्र इव समुद्रः। [2]"अर्ण इत्युदकनाम । ततो मत्वर्थे तद्धिता इति डप्रत्यय' इति ऋग्भाष्यटीकोक्तेः। सरसिजनयन इति प्रसादोन्मुख इति ध्वनयति । मानं सच्छास्त्रं तद्ददात्युपदिशतीति मानदः। अथवा निखिलेति नित्येति परमेति अभीष्टेति अध्यायचतुष्टयार्थम् । सर्वेति विशिष्टत्वम् । सरसिजेत्यादित्रिभिः हरिरिति द्वाभ्यामिष्टत्वं प्रतिपाद्यत्वं चाह । यद्वा पूर्वार्धस्थविशेषणानामुत्तरार्धस्थविशेषणानि उपपादकानि । बहुगुणवत अचिन्त्यत्वात्, दोषरहितस्यैव परदोषहारित्वात्, शुभदृष्टिवतः वन्द्यत्वात्, ज्ञानदस्यैव गुरुत्वात् लक्ष्मीपतेरभीष्टदत्वादिति ।। १ ।।

**ताम्र**— रमापतिः पूर्णगुणोऽनवद्यः सतां गुरुश्चेष्टदोऽजो ह्यनन्तः ।
जयत्यजेशेन्द्रमुखैकवन्द्यः श्रीपूर्णबोधार्यसुमानदो हरिः ।।

प्रथमेऽध्याये भगवद्गुणोत्कर्ष एवाशेषशास्त्रतात्पर्यविषयीभूतः इति निर्णीय, इदानीं 'भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः' इति वचनात् भारततात्पर्यविषयीभूतोऽपि स एवार्थ इति निर्णेतुकामो भगवानाचार्यः एतदध्यायस्य पृथक्शास्त्रतुल्यत्वात् 'नारायणं सुरगुरुं' इति भारताद्यपद्योक्तार्थवत्तया स्वेष्टदेवतां स्तौति— **जयतीति** ।। व्याख्यानव्याख्येयभावस्तु वक्ष्यमाणरीत्या स्फुटः। स्तुत्यत्वप्रयोजकमिष्टत्वमाह— **सज्जनानां परमगुरुरभीष्टावाप्तिद इति** ।। निखिलेत्यादिविशेषणद्वयं विशिष्टत्वोपपादकम् । 'अर्ण इत्युदकनाम ततो मत्वर्थे तद्धिता इति डप्रत्ययः' इति ऋग्भाष्यटीकोक्तदिशा गुणैरर्णः समुद्र इवेत्यर्थः। समुद्रदृष्टान्तप्राप्तमितत्वं निराह—

---

१. भा. ८-४-२८ । २. ऋग्भाष्याद्यमङ्गलश्लोकव्याख्याने ।

**अचिन्त्य इति** ।। इष्टत्वं विशिष्टत्वं चोपपादयति— **श्रीपतिरिति** ।। सकलवाङ्मनोनियामिकायाः ब्रह्मादिभ्योऽपि पददात्र्याः अत एव सर्वश्रेष्ठायाः श्रियः पतित्वात् इष्टत्वमुत्तमत्वं च युज्यते इति भावः। अधिकृतत्वमिष्टत्वं चोपपादयति । सर्ववेदैर्मुख्यतया भारतादिभिः स्तुत्यो नम्य इति । निराकारस्य कथं गुरुत्वं श्रीपतित्वं चेत्यत उक्तम्— **सरसिजनयन इति** ।। सरसिजवद्दिव्यमाननयनोपलक्षितसर्वावयव इति । नन्वितरेषां मोक्षादीष्टदातृत्वा-दिष्टत्वं परमैकान्तिनां कथमित्यत आह— **नो मानदो ज्ञानद इति** ।। भक्त्यादिद इति च ग्राह्यम् । [1]"मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते" इति वचनात् मानदो बहुमानदः। [2]"इयदामननात्" इत्युक्ताधिकारिकेष्टरूपमर्याददो वा। साक्षात्सर्वाङ्गसायुज्यलक्षणलयदो वा । एतेन भगवतो गुरुत्वे च वयमेव साक्षिणः इत्यप्युक्तं भवति ।। १ ।।

**भारतश्री**— एवं तावत्प्रथमाध्याये भगवद्गुणोत्कर्ष एव अशेषश्रुतिस्मृतीतिहासपुराणादिमहातात्पर्य-विषयीभूतोऽर्थ इति निर्णीय, इदानीं महाभारतमुख्यतात्पर्यविषयीभूतोऽर्थः स एवेति भारतवाक्येनैव निर्णेतुकामो भगवानाचार्यः 'नारायणं सुरगुरुम्' इति भारतार्थसङ्ग्रहकतदाद्यश्लोकप्रतिपाद्यगुणवत्तया भारतप्रतिपाद्यं नारायणमध्यायादौ स्तौति— **जयतीति** ।। हरिर्नारायणो जयति उत्कृष्टो वर्तते । भारताद्यश्लोके विबुधशब्देन पूर्णत्ववाचिना साकल्येनाचिन्त्यत्वं लब्धं तदाह— **अचिन्त्य इति** ।। 'अमरासुरसिद्धवन्द्यम्' इत्यनेन मुक्तामुक्तगण-वन्द्यत्वमुक्तम् । तत् 'सर्वदेवैकवन्द्यम्' इत्यनेन आह । 'सुरगुरुम्' इत्यनेन यद्गुरुत्वं तत्परमगुरुपदेनाह। 'भवघ्नम्' इत्यनेन मोक्षदातृत्वमुक्तं तदाह 'अभीष्टावाप्तिदस्सज्जनानाम्' इत्यनेन । विभुशब्देन लब्धं पूर्णत्वं गुणैरेवेत्याह— **निखिलगुणगणार्ण इति** ।। 'त्रैगुण्यवर्जितम्' इत्यनेन लब्धं निर्दोषत्वं 'नित्यनिर्मुक्तदोषः' इत्यनेनाह । अजशब्दमहिम्ना जननराहित्येन नित्याप्राकृकल्याणदेहत्वं लब्धं तदाह 'सरसिजनयनः' इति । 'जगदेकनाथम्' इत्यस्यार्थं कैमुत्यन्यायेनाह— **श्रीपतिरिति** ।। 'भक्तप्रियम्' इत्यनेन भक्त्यैव तुष्टिमभ्येतीत्युक्तम्— **तदाह नोस्माकं मानद इति** ।। १ ।।

**उक्तः पूर्वेऽध्याये शास्त्राणां निर्णयः परो दिव्यः ।**
**[3]अथ भारतवाक्यान्येतैरेवाध्यवस्यन्ते ।। २ ।।**

**व्यास**— देवयोग्यत्वे दर्शितम्— **दिव्य इति** ।। एतैर्भारतवाक्यैः।। २ ।।

**वादि**— अधुना पूर्वाध्यायार्थमनुवदन्नस्मिन्नध्याये वक्ष्यमाणमर्थं शिष्याणां मनःसमाधानाय तमेव सङ्क्षेपतः प्रदर्शयति— **उक्त इति** ।। परः उत्तमः। तत्र हेतुर्दिव्य इति । देवपदवाच्यश्रीनारायणसम्बन्धी । अथानन्तरम् अस्मिन्नध्याये भारतवाक्यानि तत्रतत्रत्यकठिणभारतवाक्यानि । एतैरेव कैश्चिद्भारतवाक्यैः तदुपयुक्तब्रह्माण्ड-मार्कण्डेयादिप्रमाणवचनैरेव न तु स्वकपोलकल्पितवचनैः। अध्यवस्यन्ते निर्णीयन्ते ।। २ ।।

**सङ्क**— प्रथमाध्यायार्थसङ्गतत्वेन उत्तराध्यायार्थं भगवानाचार्यः प्रदर्शयति— **उक्त इति** ।। श्रीमन्महाभारत-वाक्यानि एतैरेव महाभारतवाक्यैरेव श्रीविष्णुः सर्वगुणपरिपूर्णः सर्वदोषविवर्जित इत्यध्यवस्यन्ते निश्चीयन्त इत्यर्थः। एतैरेवेत्यस्य श्रीमन्महाभारतवाक्यैः शास्त्रान्तरवाक्यैश्च इत्यर्थः।। २ ।।

---

१. बृ.भा. ३-२, अश्वमेधब्राह्मणम् । २. ब्र.सू. ३-३-३५ । ३. 'अथ भारतवाक्यानि'(२-१७९) 'श्रीमद्भारतवाक्यानि' इति उभयविधोऽपि पाठः सङ्कर्षणीये ।

**वरद—** एवं हरिं स्तुत्वा श्रोतृबुद्ध्यनुकूलनाय पूर्वाध्यायार्थं अनुवदंस्तत्सङ्गतत्वेनैतदध्यायचिकीर्षितं प्रतिजानीते— **उक्त इति** ।। ऋगादिशास्त्राणां विष्णोः सर्वगुणपूर्णत्वादावेव महातात्पर्यमिति पूर्वाध्याये निर्णय उक्तः। अथानन्तरं भारतवाक्यानामपि तत्रैव तात्पर्यमिति भारतोपक्रमोपसंहारमध्यस्थैर्निर्णीतैः वाक्यैर्निर्णयः क्रियत इत्यर्थः। एतैरेवेत्यस्य शास्त्रवचनैरिति वार्थः। अध्यवस्यन्ते निर्णीयन्ते इति यावत् ।। २ ।।

**जना—** इदानीं पूर्वाध्यायार्थानुवादपूर्वकमुत्तराध्यायस्य सङ्गतिमाह— **उक्त इति** ।। परः सर्वोत्कर्षप्रतिपादकः दिव्यः देवयोग्यः। एतैरेव भारतवाक्यैरेव । अन्यवाक्यानामल्पत्वात् एतेषां बहुत्वादेतैरेवेत्युक्तम् । अध्यवस्यन्ते निर्णीयन्ते ।। २ ।।

**ताम्र—** पूर्वाध्यायेनैतदध्यायं सङ्गमयति— **उक्त इति** ।। परमत्वमेव देवतामुख्यज्ञेयत्वेन दर्शितम्— **दिव्य इति** ।। दिव्योऽद्भुतो वा शास्त्रे प्रकाशमान इति वा । एतैः प्रथमाध्यायप्रतिपादितैः अर्थैः। इत्थंभूतलक्षणे तृतीया । भारतार्थत्वं प्राप्तैरिति । यद्वा सह योगे तृतीया । भारतवाक्यान्युक्तार्थवत्तया निर्णीयन्ते इति यावत्। अथवा भारतवाक्यान्येतैः भारतवाक्यैः तदतिरिक्तागमवाक्यैश्चोक्तार्थवत्तया निर्णीयन्ते इत्यर्थः ।। २ ।।

**भारतश्री—** एवं हरिं स्तुत्वा श्रोतृबुद्धिमनुकूलयन् पूर्वाध्यायार्थमनुवदन् एतदध्यायप्रतिपाद्यं दर्शयति— **उक्त इति** ।। अथ अनन्तरं भारतवाक्यान्युक्ततात्पर्याणीति एतैर्भारतवाक्यैरेव अध्यवस्यन्ते निर्णीयन्ते ।। २ ।।

**क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि ।**
**कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ।। ३ ।।**

**व्यास—** सर्वशास्त्रभारतयोः निर्णयकरणे तयोः किं प्राप्तमित्यतस्तद्दर्शयति— **क्वचिदिति** ।। प्रायशः सर्वे ग्रन्था अनुत्सन्ना अपि इति व्याकुलाः। तदेव दर्शयति— **क्वचिदित्यादिना** ।। ३ ।।

**वादि—** यदि सन्ति सर्वे ग्रन्थास्तर्हि तान् व्युत्पन्नाः स्वयमेव दृष्ट्वा ज्ञास्यन्ति किमस्मदभिनवप्रयत्नेनेत्यतः कलौ युगे जनानामल्पमतित्वादलसत्वाच्च शतकोटिसङ्ख्याका मूलरामायणपञ्चरात्राद्याः प्रायश उत्सन्ना एव अनुत्सन्ना भारतादयोऽपि दुर्विदग्धकुत्सितविद्वज्जनकौटिल्यादुत्सन्नप्राया आसन् अतोऽस्माभिरेव हरिकैङ्कर्यधुरन्धरैः प्रयतितव्यमिति भावेनाह— **क्वचिदित्यादिना** ।। ग्रन्थान् स्वस्वमतानुकूलस्वकपोलकल्पितश्लोकान् । क्वचित् मूलग्रन्थस्य भागे प्रक्षिपन्ति । क्वचित् स्वप्रतिकूलश्लोकान् । अन्तरितान् अन्तर्धानं प्राप्तान् । कुर्वन्ति त्यजन्तीत्यर्थः। अस्मद्ग्रन्थे नास्तीति वक्तुमुत्पाटयन्तीत्यर्थः। व्यत्यासं उक्तहरिमहिमसम्बद्धश्लोकं कथाविच्छेदाया-न्यत्र निक्षिपन्ति । एतत्कथाननुकूलं श्लोकमिह लिखन्ति । क्वचित् साधवोऽपि प्रमादात् स्वाज्ञानात् अन्यथा ग्रन्थाभिसन्धेरन्यथा कुर्युः व्याकुर्युः ।। ३ ।।

**सङ्क—** नन्वेवं श्रीमन्महाभारतवाक्यार्थः किमर्थं निश्चीयते कस्यापि तत्र विप्रतिपत्त्यभावात् इत्याशङ्क्य श्रीमन्महाभारतादिग्रन्थेष्वेव विप्रतिपत्तिः किम्वर्थेषु देवदुर्गमेषु विप्रतिपत्तिरित्यतस्तेषां निर्णयोऽपेक्षित इत्याद्यभिप्रायेणाह— **क्वचिदिति** ।। केचिद्धूर्ताश्च स्वपाण्डित्यप्रकटनाय स्वयं कृत्वा ग्रन्थान् क्वचित्प्रक्षिपन्ति।

केचिन्मन्दमतयो यथावस्थितान् ग्रन्थानसहमानाः क्वचिदन्तरितान्यपि कुर्युः। केचित्पूर्वापरीकारेण परपूर्वाकारेण इति क्वचिद्व्यत्यासं कुर्युः। केचिदज्ञानादन्यथाज्ञानाच्च अन्यथा ग्रन्थपाठान् क्वचित्कुर्युः।। ३ ।।

**वरद**— ननु भारतग्रन्थपर्यालोचनया निर्णयः स्यात् किं तन्निर्णयकरणेनेत्यत आह— **क्वचिदिति** ।। केचिद्धूर्ताः स्वपाण्डित्यप्रकटनाय स्वयं श्लोकान् रचयित्वा क्वचित्प्रदेशे प्रक्षिपन्ति प्रवेशयन्ति । क्वचित्प्रदेशे विद्यमानानेव ग्रन्थांस्तदर्थबोधासामर्थ्येन वा विष्णूत्कर्षासहिष्णुत्वेन वा अन्तरितान् उत्सन्नान्कुर्युः। ततः प्रदेशात्ते ग्रन्थाः निष्कासिता इति भावः। क्वचित्प्रदेशे व्यत्यासं पूर्वोक्तस्योत्तरत्र प्रक्षेपं उत्तरत्रोक्तस्य पूर्वत्र प्रक्षेपञ्च कुर्युरित्यर्थः। क्वचिच्च प्रमादात् भ्रान्त्या अन्यथापाठान् कुर्युरित्यर्थः।। ३ ।।

**जना**— ननु भारतवाक्यानां निर्णयः किमर्थं क्रियते तत्र केषामपि विप्रतिपत्त्यभावादित्यतस्तत्र विप्रतिपत्ति-कारणमाह— **क्वचिदित्यादिना** ।। अनुत्सन्नाः पठ्यमाना अपि सर्वशः सर्वग्रन्था इत्यनेन प्रकारेण व्याकुलाः व्यत्यस्ताः। व्यत्यासप्रकारमाह— **क्वचिदिति** ।। ग्रन्थान् श्लोकान् कृत्वा क्वचित्प्रदेशे प्रक्षिपन्ति क्वचित्प्रदेशादन्तरितान्निष्कासितान् ग्रन्थान् कुर्युः। क्वचिद्व्यत्यासं पूर्वोक्तस्योत्तरत्र प्रक्षेपमुत्तरोक्तस्य पूर्वत्र प्रक्षेपं कुर्युः। क्वचित्प्रमादादनवधानात् भ्रान्त्या वान्यथा पाठान् कुर्युरित्यर्थः।। ३-४ ।।

**ताम्र**— ननु पूर्वाध्याये कृतसर्वागमनिर्णयोऽत्र क्रियमाणभारतनिर्णयश्च व्यर्थः। तैरेव शास्त्रैः विदितपदपदार्थ-सङ्गतिकस्यार्थप्रत्यायनसम्भवात् । न च तान्युत्सन्नानि कारणाभावात् । केषाञ्चिदुत्सादेऽपि इतरैरर्थप्रत्ययोपपत्तेः। न च तान्यपि व्याकुलानि कारणाभावात् । अस्तु उत्सादादिकं तन्निर्णयकरणे भवतां का प्रसक्तिः। एवं विलुलितनिर्णयकरणे भवतां शक्तिश्च का इत्यत आह— **क्वचिदित्यादिना** ।। ३ ।।

**भारतश्री**— ननु भारतादिपर्यालोचनया निर्णयस्स्यात् । किमिदानीं निर्णयकरणेनेत्यतः आह— **क्वचिदिति** ।। ३ ।।

**अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः ।**
**उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्तते ।। ४ ।।**

**व्यास**— पाठलोपे अर्थस्य किमायातमित्यतः सा शङ्कैव नोदेतीति भावेन कैमुत्यमाह— **ग्रन्थ इति** ।। ४ ।।

**वादि**— अनुत्सन्ना अपि ग्रन्था इति उक्तप्रकारेण व्याकुलाः। सर्वे मूलरामायणादयः। कोट्यंशः कोटिभ्योंऽशः कोट्यंशः शतसहस्रलक्षादिसङ्ख्याक इत्यर्थः ।। ४ ।।

**सङ्क**— एवमनुत्सन्नान् ग्रन्थान् व्याकुलान् दृष्ट्वा तद्व्यतिरिक्ताः प्रायशः सर्वे ग्रन्था उत्सन्नाः। एवमुनुत्सन्नानां ग्रन्थानां निखिलानां मिलितानां यावती सङ्ख्या तावत्सङ्ख्याकानां ग्रन्थानां मध्ये कोट्यंशोऽप्यनुत्सन्नो ग्रन्थो न वर्तते ।। ४ ।।

**वरद**— एवमनुसन्नानामिदानीमनुपपद्यमानामपीयं स्थितिः उत्सन्नानां तु का कार्येत्याह— **अनुत्सन्ना** इति ।। क्वचिद्ग्रन्थानित्याद्युक्तप्रकारेण व्याकुला निर्णयाजनकाः प्रायशः बाहुल्येन तस्मात् यथावत् स्थितो ग्रन्थः कोट्यंशोऽपि बहुलांशोऽपि न वर्तते ।। ४ ।।

**जना**— एतादृशामपि परामर्शादर्थनिर्णयः स्यादित्यत आह— **उत्सन्ना इति** ।। सर्वे शतकोटिविस्तर-मूलरामायणपञ्चाशत्कोटिविस्तरपंञ्चरात्रषष्ठिलक्षविस्तृतभारतचतुर्लक्षविस्तृतपुराणादिकाः ग्रन्थाः प्रायशः प्रायेण अपपाठादिनोच्छिन्नाः। तन्मध्ये कोट्यंशोऽपि न विद्यते ।। ४ ।।

**ताम्र**— सर्वग्रन्थाः प्रायशः उत्सन्नाः। कोट्यंशोऽपि कोटिधा विभक्तसकलशास्त्रमध्ये एकांशो न विद्यते ।

[1]"शतकोटयः पञ्चरात्रं पुराणं तावदेव च ।
रामस्य चरितं तावत्तावदन्यच्च सर्वशः।
अनन्ताश्च तथा वेदाः साङ्गोपाङ्गाश्च सर्वशः।
सर्वाधिक्यं यत्र विष्णोः तात्पर्यात् समुदीर्यते ।।'

इत्युक्तग्रन्थमध्ये कोट्यंशाभावादिति भावः । नन्वनुत्सन्नानां केषाञ्चिद् भावात् तैरेव ज्ञानोदयसम्भवात् निर्णयकरणं व्यर्थमित्यत आह— **अनुत्सन्ना अपि इति** ।। इतिशब्दोक्तव्याकुलताप्रकारं दर्शयति— **क्वचिदित्यादिना**।। ग्रन्थान् प्रकल्प्य मध्ये प्रवेशः प्रक्षेपः। विद्यमानस्योद्धारो अन्तरितत्वम् । पूर्वोत्तरग्रन्थानां पौर्वापर्यतया व्यत्यासः। क्वचिदन्यथा अपपाठादिकम् । क्वचिद् प्रमादात् क्वचिद् बुद्धिपूर्वं कुर्युरिति व्याकुला इत्यर्थः ।। ४ ।।

**ग्रन्थोऽप्येवं विलुलितः किम्वर्थो देवदुर्गमः ।**
**कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ।। ५ ।।**

**व्यास**— निमित्तान्युक्त्वा साध्यमाह— **कलाविति** ।। ५ ।।

**वादि**— ग्रन्थे व्याकुलिते सतीत्यर्थः ।। ५ ।।

**सङ्क**— एवमुक्तप्रकारेण ग्रन्थो विलुलितः। किमु देवदुर्गमोऽर्थो विलुलित इति किमु वक्तव्यमित्यर्थः। ननु ग्रन्थानामर्थानां च कदा व्याकुलितत्वमभूत् । पश्चात्केन तन्निर्णयः कृतः। केन वा प्रेरितः कृतवान् । कुत एतज्ज्ञानमस्येति प्रश्नक्रमेण परिहारमाह— **कलाविति** ।। ५ ।।

**वरद**— एवं शब्दत एव व्यत्यासे यथावस्थितं भारतं देवदुर्गमार्थं व्यत्यासावस्थायामर्थनिर्णयजनकं न भवतीति किमु वाच्यमित्याशयेनाह— **ग्रन्थोऽप्येवमिति** ।। एवमुक्तरीत्या विलुलितः निर्णयाजनकः यथावस्थित्य-वस्थायां देवदुर्गमो देवानां दुरधिगमो भारतार्थो व्यत्यासावस्थायां विलुलितः निर्णेतुमशक्य इति किमु वक्तव्यमित्यर्थः। अतो निर्णयकरणप्रसक्तेः सद्भावात् हरिणा श्रीवेदव्यासेन प्रचोदितः प्रेरितोऽहं निर्णयान् वच्मीत्याह— **कलाविति**।। एवमुक्तप्रकारेण कलौ कलियुगे शब्दतोऽर्थतश्च भारते व्याकुलिते सति तन्निर्णयाय हरिणा श्रीवेदव्यासेन प्रचोदितः प्रेरितोऽहं निर्णयान् वच्मीत्यर्थः।। ५ ।।

---

१. बृ.भा. ३-५, अव्याकृतब्राह्मणम् ।

**जना**— कैमुत्यन्यायेनार्थव्यत्यासमुपपादयति— **ग्रन्थ इति** ।। देवानां दुर्गमः अर्थः— **विलुलित इति** ।। किमु वक्तव्यं किमपि वक्तव्यं नास्तीत्यर्थः। व्याकुलिताश्च कदा जाताः ततः केन प्रेरितेन केन निर्णयः कृत इत्यत आह— **कलाविति** ।। कलौ कलिकाले । एवं प्रक्षेपणादिना निर्णयाय निर्णयार्थं प्रचोदितः निर्णयान् वच्मि ।। ५ ।।

**ताम्र**— कैमुत्यन्यायेनार्थव्याकुलतामाह— **ग्रन्थ इति** ।। पाठार्थयोर्व्याकुलीभावे निमित्तमाह— **कलाविति** ।। ५ ।।

**हरिणा निर्णयान् वच्मि विजानंस्तत्प्रसादतः ।**
**शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः ।। ६ ।।**

**व्यास**— निर्णेतव्यपूर्वपक्षाज्ञाने कथं तस्माद्विवेकेन निर्णयः कर्तुं शक्य इत्यत आह— **शास्त्रान्तराणि** पञ्चरात्रादीनीति ।। ६ ।।

**वादि**— शास्त्रान्तराणि पञ्चरात्रब्रह्मसूत्रादीनि ।। ६ ।।

**सङ्क**— विजानन् तत्प्रसादत इत्युक्तमर्थं विवृणोति— **शास्त्रान्तराणीति** ।। भारतमपेक्ष्य शास्त्रान्तरत्वमित्यर्थः ।। ६ ।।

**वरद**— ननूक्तव्यत्यासे कथं तवापि निर्णयाभिधाने शक्तिरित्युक्तम्— **विजानन्निति** ।। निर्णयानित्येतदत्रापि सम्बध्यते । तस्य श्रीवेदव्यासस्य हरेः प्रसादात् व्यत्यस्तग्रन्थपर्यालोचनाभावेऽपि निर्णयान् स्वत एव विजानन्नित्यर्थः। न केवलं स्वयं प्रतिभातपरावरत्वेन निर्णयान् जानामि किं तर्हि अनुत्सन्नभारता-द्यशेषग्रन्थपर्यालोचनमपि तत्प्रसादादेवास्तीत्याह— **शास्त्रान्तराणीत्यादिना** ।। अनुत्सन्नभारतापेक्षया शास्त्रान्तराणि वेदांश्च अस्य व्यासस्य प्रसादतः सम्यक् जानन् ।। ६ ।।

**जना**— उक्तव्यत्यासकाले तवापि ज्ञानं कथमित्यत आह— **विजानन्निति** ।। तस्य हरेः प्रसादतः विजानन् । निर्णयानित्यस्यानुषङ्गः। न केवलं निर्णयमात्रं जानाम्यपि तूत्सन्नग्रन्थानपीत्याह— **शास्त्रेति** ।। अस्य प्रसादतः शास्त्रान्तराणि उत्सन्नशास्त्राणि वेदान् सर्ववेदांश्च जानन् ।। ६ ।।

**ताम्र**— वेदापेक्षया शास्त्रान्तराणि पौरुषेयाणि शिक्षाद्यङ्गशास्त्राणि वा कलाशास्त्राणि वा । स्वस्य निर्णयकरणे प्रसक्तिमाह— **विजानन्निति** ।। ६ ।।

**देशे देशे तथा ग्रन्थान् दृष्ट्वा चैव पृथग्विधान् ।**
**यथा स भगवान् व्यासः साक्षान्नारयणः प्रभुः ।। ७ ।।**

**व्यास**— क्रियमाणो निर्णयः किमौत्प्रेक्षिकः किमौपदेशिक इत्यत द्वितीयं पक्षमवलम्बते— **यथेति** ।। वेदादेः पृथग्विधाः प्रकारा येषां ते तथोक्ताः। सच्छास्त्राविरोधिन इत्यर्थः ।। ७–८ ।।

**वादि**— क्रियामाणो निर्णयः किमौत्प्रेक्षिक उतौपदेशिक इत्यतो द्वितीयं पक्षमवलम्बते— **यथेति** ।।७।।

**अभिनव**— 'देशे देशे' इत्यस्ति । तथा देशं स्थितानां जनानां पाठेन । चस्त्वर्थः । विशेषतः पृथग्विधानेव ग्रन्थान् दृष्ट्वेत्यर्थः । एतेन देशमात्रस्य ग्रन्थपृथग्विधत्वहेतुत्वाभावात् देशे देशे पृथग्विधानित्युक्तमयुक्तमिति दूषणं परिहृतम् । स्थितानामित्यादेः शेषेण तत्तद्देशस्थितजनपाठस्य ग्रन्थपृथग्विधत्वमुच्यते इत्यभ्युपगमात् ।। ७ ।।

**सङ्क**— न केवलं ज्ञानदृष्ट्यैव शास्त्रान्तरज्ञानं किन्तु नाना देशे पट्टणे नानापाठत्वेन स्थितग्रन्थदर्शनं चास्तीत्याह— **देशे देश इति** ।। एवं तावन्महाभारतवाक्यानां निर्णयप्रसङ्गात् सर्वेषां शास्त्राणां निर्णयोऽपेक्षितः। तथा सति महाभारतवाक्यानां महाभारतवाक्यैरेवोत्तरत्र (ग्रन्थे) अर्थनिर्णयं करिष्यन् प्रथमतः सङ्क्षेपात् सर्वशास्त्रार्थं दर्शयति— **यथेति** ।। ७ ।।

**वरद**— न केवलमेतावद्देशे देशे बदरिकाश्रमादिपुण्यभूमिषु यथावस्थितं तत्र भागवतादिनिर्णायकग्रन्थदर्शनमपि ममास्तीत्याह— **देशे देश इति** ।। पृथग्विधान् नानाप्रकारान् । निर्णया अपि भगवदभिप्रायव्याप्ता एव क्रियन्त इत्याह— **यथा स इति** ।। ७ ।।

**जना**— न केवलं ज्ञानदृष्ट्यैव शास्त्रदर्शनमपि तु प्रत्यक्षतोऽपि निर्णायकशास्त्रज्ञानमस्तीत्याह— **देश इति** ।। किं कृत्वा देशे देशे च पृथक्पृथक्देशे पृथग्विधान् नानाविधनिर्णयप्रतिपादकान् ग्रन्थान् तथा तत्प्रसादतः दृष्ट्वैव । मया क्रियमाणो निर्णय औपदेशिक इत्याह— **यथेति** ।। ७ ।।

**ताम्र**— नन्वेवं सर्वशास्त्रपारङ्गतस्य भवतः कथमयमंश उत्सन्नोऽयमंशः प्रक्षिप्तः इति पूर्वपक्षज्ञानं येन निर्णय इति चेत् । सर्वज्ञत्वात् मन्दान् प्रति स्वस्य तद्भानोपायमाह— **देश इति** ।। नानादेशीयकोशज्ञोऽपि तान् पृथग्विधानेकप्रकारतारहितान् विलुलितग्रन्थान् तदुत्सादहेतुभूतपाशुपतादींश्च क्रियमाणो निर्णयः सङ्करादि-कृतिवदौत्प्रेक्षिकः किं नेत्याह— **यथेति** ।। ग्रन्थकृतो यद्विवक्षितं तदेव वक्ष्यत इति भावः।। ७ ।।

**जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ।**
**सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारतः ।। ८ ।।**

**वादि**— भारतार्थानुसारतः सर्वशास्त्रार्थं वक्ष्य इति पूर्वेणान्वयः ।। ८ ।।

**सङ्क**— नारायणो व्यासस्सन् भारताद्येषु शास्त्रेषु निर्णयान् यथा जगाद तथा तत्कारुण्यावलोकनेन सर्वशास्त्रार्थं प्रथमेऽध्याये विभज्योक्तत्वात् सङ्क्षेपेण विशेषतो भारतार्थानुसारतो वक्ष्य इत्यर्थः ।। ८ ।।

**वरद**— भारताद्येषु यथा येन प्रकारेण जगाद तथैव तदीक्षया तस्य भगवतो व्यासस्येच्छया वक्ष्ये निर्णयानिति शेषः। न केवलं भारतार्थ एवोच्यते किन्तु निर्णीतार्थभारतार्थानुसारेण सर्वशास्त्रार्थोऽप्यभिधीयत इत्यत आह— **सङ्क्षेपादिति** ।। ननु कथं सर्वशास्त्राभिधानमल्पेन ग्रन्थेनेत्यत उक्तम्— **सङ्क्षेपादिति** ।। ८ ।।

**जना**— तदीक्षया तद्दत्तज्ञानेन तत्प्रेरणया वा । भारताद्येषु ग्रन्थेषु व्यासः मां प्रति यथार्थं जगाद तथा सर्वेषां शास्त्राणामर्थं वक्ष्ये । विरोधे तव निर्णायकं किमित्यत आह— **भारतेति** ।। बहुत्वेऽनुपादेयं स्यादित्यत आह— **सङ्क्षेपादिति** ।। यद्वा मया क्रियमाणो निर्णयो वेदव्याससंमत इति वदन्नादौ भारतार्थानुसारेण संक्षेपेण सर्वशास्त्रार्थं वक्ष्य इति प्रतिज्ञान्तरं करोति— **यथेति** ।। सर्वश्चासौ शास्त्राणामर्थस्तमिति वा ।। ८ ।।

**ताम्र**— यद्वा भारताद्येषु व्यासो यथा ममाह तथोपदेशानुसारेण वक्ष्य इत्यर्थः। तदीक्षया तद्दत्तज्ञानेन तत्कृपाकटाक्षबलेनेति वा । सर्वशास्त्रविनिर्णये विस्तरेणानुपादेयत्वं स्यादित्यत आह— **सङ्क्षेपादिति** ।। सर्वशास्त्रार्थोक्तौ भारतवाक्यानि निर्णीयन्त इति प्रतिज्ञाविरोध इत्यत आह— **भारतेति** ।। ८ ।।

**निर्णयः सर्वशास्त्राणां भारतं परिकीर्तितम् ।। ९ ।।**

**वादि**— भारतार्थानुसारेण निर्णये निमित्तमाह— **निर्णय इति** ।। निर्णीयतेऽनेनेति निर्णयः ।। ९ ।।

**सङ्क**— ननु विशेषतो भारतवाक्यानुसारेण सर्वशास्त्रार्थनिर्णये को हेतुरित्यत आह— **निर्णय इति** ।। ९ ।।

**वरद**— ननु भारतार्थानुसारेण सर्वशास्त्राभिधानं कुत इत्यत आह— **निर्णय इति** ।। भारतं सर्वशास्त्राणां निर्णयः । निर्णीयतेऽनेनेति निर्णयः। निर्णयकारणं परिकीर्तितं पुराणेष्विति शेषः। अतः सर्वशास्त्रनिर्णायकत्वेन सर्वशास्त्रोत्तमत्वात्तदनुसारेण सर्वशास्त्राभिधानं युक्तमिति भावः ।। ९ ।।

**जना**— ननु विशेषतः भारतार्थानुसारेण सर्वशास्त्रस्यार्थनिर्णयकरणे को हेतुरित्यत आह— **निर्णय इति** ।। निर्णीयतेऽनेनेति निर्णयः निर्णायकमिति पुराणेषूक्तम् ।। ९ ।।

**ताम्र**— इतरपरित्यागेन तदनुसारेण निर्णये निमित्तमाह— **निर्णय इति** ।। निर्णीयत अनेनेति निर्णयो निर्णायकः। ननु सुधायां [1]"भारतं सर्वशास्त्रोत्तमम् । सत्यम् । विचार्येषु तदित्यविरोधः' इति भारतस्य निर्णेयत्वमुक्तमिति चेत् तत्सूत्रापेक्षया सर्वशास्त्रनिर्णायकत्वेऽस्यापि सूत्रनिर्णेयत्वात् । प्रणवकल्पे [2]"इतिहासं पुराणं च पञ्चरात्रं तथैव च' इत्युक्त्वा [3]'तदर्थान् ब्रह्मसूत्रैश्च सम्यङ्निर्णीय तत्त्वतः' इत्युक्तेरतोऽत्र निर्णायकत्ववचनमविरुद्धम् । यद्वा भारतस्य निर्णयत्वं नाम नोपक्रमदिना तात्पर्यलिङ्गैः निर्णायकत्वं किन्तु निर्णीतत्वं विवक्षितम् । निर्णीतग्रन्थानुसारेणेतरेषां निर्णयो ज्ञेय इति भावः ।। ९ ।।

**भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।**
**देवैर्ब्रह्मादिभिः सर्वैः ऋषिभिश्च समन्वितैः**
**व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ।। १० ।।**

**व्यास**— विस्तारेऽनुपादेयत्वं स्यादित्यत उक्तम्— **व्यासस्याज्ञयेति** ।। १० ।।

---

१. न्यायसुधा पत्रसंख्या १११ । २. यतिप्रणवकल्पः २४ श्लोकः । ३. यतिप्रणवकल्पः २५ श्लोकः ।

**वादि**— भारतस्य सकलशास्त्रोत्तमत्वं सम्भावितमिति तदुत्तमत्वे प्रमाणं पठति— **भारतमिति** ।। व्यासस्यैवाज्ञया तुलामारोपितेति पूर्वेणान्वयः ।। १० ।।

**सङ्क**— ननु भारतस्य सर्वशास्त्रार्थनिर्णयात्मकत्वे किं वैशिष्ट्यमस्तीत्याशङ्क्य तावद् ब्रह्माण्डपुराणेन सर्ववैशिष्ट्यं श्रीमन्महाभारतस्य दर्शयति— **भारतमिति** ।। व्यासाज्ञयैव ब्रह्मादिदेवैः ऋषिभिश्च भारतं सर्ववेदाश्च पुरा तुलामारोपिताः। तत्र भारतमर्थाधिक्येनात्यरिच्यतेत्यनेन श्रीमन्महाभारतस्य सर्वशास्त्रेभ्यो वैशिष्ट्यं प्रतीयते ।। १० ।।

**वरद**— इतोऽपि सर्वशास्त्रोत्तमत्वात्तदनुसारेणैव निर्णयकरणमिति भावेनाह— **भारतं सर्ववेदाश्चेत्यादिना** ।। वेदयन्तीति वेदाः सर्वशास्त्राणि । व्यासस्याज्ञयैव ऋषिभिः समन्वितैः ब्रह्मादिभिर्देवैः भारतमेकतः सर्वशास्त्राण्येकतश्चेति तुलामारोपिताः । अत्र भारतादेस्तुलारोपणं नाम तत्प्रतिनिधिमण्याद्यारोपणम् । एवं तुलारोपणे कृते सति तत्र तयोर्मध्ये भारतं भारतप्रतिनिधिभूतो मणिरत्यरिच्यत भारेणाधिकोऽभूत् । तुशब्देन भारतस्यातिरेकहेतुभूतं विशेषमाह । अतः सर्वशास्त्रोत्तमत्वं भारतमिति भावः।। १० ।।

**जना**— सदृष्टान्तं तदुत्तमत्वप्रतिपादकं विष्णुसर्वोत्तमत्वादिप्रतिपादकं ब्रह्माण्डपुराणवाक्यं पठति— **भारतमिति**।। तुलारोपणं प्रतिनिधिमण्याद्यारोपणेन । सर्ववेदाः वेदयन्तीति वेदाः शास्त्राणि च । समन्वितैर्युक्तैः। तुलारोपणेन शास्त्रपरीक्षणे शास्त्रकर्तुः क्षोभः स्यादित्यत आह— **व्यासस्येति** ।। आज्ञयैवेत्यन्वयः। तत्र तयोर्मध्ये भारतमेवात्यरिच्यत अतिशयेनाधिकमभूत् । ननु गीतातात्पर्यभाष्ययोरत्र च 'अत्यरिच्यत भारतम्' इति भारतस्योत्तमत्वं अनुव्याख्याने [1]'अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते' इत्यनेन सूत्रस्योत्तमत्वमुच्यते। तत्कथमुत्तमत्वमुभयोरिति चेदित्थम् । निर्णायकेषु सूत्रस्य निर्णेयेषु भारतस्येति । इदमुक्तं जयतीर्थार्यैः 'विचार्येषु शास्त्रेषु तत्' इति । न चात्र भारतस्यापि निर्णायकत्वमुक्तमतः कथं सूत्रस्यानिर्णायकोत्तमत्वमिति वाच्यम् । सूत्रेण निर्णीतं भारतमन्येषां निर्णायकमिति सम्भवात् । अत एव भाष्ये [2]'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः' इति विशेषणात् अत्र च 'निर्णयः सर्वशास्त्राणाम्' इति सामान्यत उक्तं भारतस्य सर्वशास्त्रनिर्णायकत्वे स्वयं स्वस्य निर्णायकमिति भवेदिति चेदित्थमेतत् । अत एवोक्तं 'अथ भारतवाक्यन्यैतैरेवाध्यवस्यन्त' इति । अत एव निर्णेयता निर्णायकता च ।। १० ।।

**ताम्र**— भारतस्य बह्वर्थत्वेनोत्तमत्वात् तदनुसारेणावश्यं निर्णयः कथ्यते इति भावेन तत्र प्रमाणमाह— **भारतमिति** ।। वेदपदेन वेदयन्तीति व्युत्पत्त्या [2]'इतिहासः पुराणः पञ्चमो वेदानां वेदः' इति श्रुतेश्च सर्वशास्त्रा- ण्युच्यन्ते । तुलारोपणं भारवत्त्वं च रत्नादिप्रतिनिधिद्वारेणेत्युपपादनीयम् । तुलारोपेण ग्रन्थपरीक्षायां ग्रन्थकर्तुः कोपः स्यादित्यत उक्तम्— **व्यासस्याज्ञयेति** ।। १० ।।

**महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।**
**निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।। ११ ।।**

---

१. अनु. १-१-७, जिज्ञासाधिकरणम् । २. सू.भा. १-१-१ ।

**व्यास**— महत्त्वात् महार्थप्रतिपादकत्वात् भारवत्वात् उत्तमार्थत्वेन गुरुत्ववत्वात् । उत्तमत्वे निमित्तान्तरमाह— **निरुक्तमिति** ।। अस्य भारतस्य निरुक्तं नितरां वचनं व्याख्यानमित्यर्थः। भारतशब्दमात्रनिर्वचनज्ञानिनः सर्वपापप्रहाणलक्षणमुक्तियोगेनान्यार्थसम्भवात् ।। ११ ।।

**वादि**— महत्त्वात् महार्थप्रतिपादकत्वात् । भारवत्वात् उत्तमार्थप्रतिपादकत्वेन तुलायामारोपणेऽपि गुरुत्ववत्वात् ।। ११ ।।

**सङ्क**— महत्त्वाद्भारवत्वाच्चेत्यादिश्लोकेन महाभारतनिरुक्तिज्ञानात् सर्वपापक्षयदर्शनेन श्रीमन्महाभारतस्य सर्ववैशिष्ट्यमस्तीति विज्ञायते ।। ११ ।।

**वरद**— महाभारतशब्दपर्यालोचनयाप्ययमर्थोऽवसीयत इत्याह— **महत्त्वादिति** ।। महत्त्वात् तत एव भारेण ततत्वादित्यर्थः। 'इदमत्यरिच्यत' इत्यनेनापि सम्बध्यते । भारतशब्दनिर्वचनमात्रेण सर्वपापक्षयश्रवणादपि भारतस्य सर्वशास्त्रोत्तमत्वं ज्ञायत इत्याह— **निरुक्तमिति** ।। अस्य भारतशब्दस्य निरुक्तमुक्तरीत्या निर्वचनं निर्णयः ।। ११ ।।

**जना**— प्रकारान्तरेणाप्युत्तमत्वमाह— **महत्त्वादिति** ।। महत्त्वात् पूज्यार्थप्रतिपादकत्वात् महद्भारवत्त्वात् । प्रतिनिधिमणिद्वारा भारवत्त्वात् भारतम् । तद्वत्त्वार्थे तप्रत्ययः पर्वतशब्दवदुपसङ्ख्यानात् । यद्वा भारेण ततत्वाद्भारतमित्येकदेशग्रहणं 'समाने लोपः' इत्येकलोपेन वा भारतम् । महच्च भारतं चेति महाभारतमुच्यते । निरुक्तं नितरामुक्तं वचनं व्याख्यानमित्यर्थः। अस्य भारतस्य निर्वचनज्ञानमात्रेण सर्वपापक्षयकथनादुत्तमत्वं ज्ञेयम् ।। ११ ।।

**ताम्र**— भारतस्यार्थातिशयेनोत्तमत्वं महाभारतशब्दार्थपर्यालोचनयैव ज्ञायते इत्याह— **महत्त्वादिति** ।। भारतशब्दनिरुक्तिज्ञानादेव सर्वपापक्षयोक्तेश्च भारतस्योत्तमत्वं लभ्यत इत्याह— **निरुक्तमिति** ।। अयं भावः। यथा नारायणादिभगवन्नामनिरुक्तिज्ञानात् भवत्पापक्षय अभिधेयस्य सर्वोत्तमत्व एव सम्भवति तथा भारतशब्द-निरुक्तिज्ञानात् भवत्पापक्षय अभिधेयस्योत्तमत्वं गमयति। शब्दान्तरनिरुक्तिज्ञानेन तदभावादिति ।। ११ ।।

**निर्णयः सर्वशास्त्राणां सदृष्टान्तो हि भारते ।**
**कृतो विष्णुवशत्वं हि ब्रह्मादीनां प्रकाशितम् ।। १२ ।।**

**व्यास**— भारतं सर्वशास्त्राणां निर्णय इत्युक्तं तत्र निर्णयः कथं कृत इत्यत आह— **निर्णय इति** ।। दृष्टान्ते व्याप्तो हेतुः। किं तत्सकलशास्त्राणां प्रमेयं यद्भारते सहेतुकं निर्णीयते इत्यत आह— **विष्णिवति** ।। १२ ।।

**वादि**— भारतं सर्वशास्त्राणां निर्णय इत्युक्तम् । तत्र निर्णयः कथं कृत इत्यतो निर्णयप्रकारप्रतिपादकब्रह्माण्ड-पुराणवाक्यानि पठति— **निर्णयः सर्वशास्त्राणामित्यारभ्य अत्रोक्तं सर्वशास्त्रेषु न हि सम्यगुदाहृत-मित्यन्तेन ग्रन्थेन** । सदृष्टान्तः दृष्टान्तप्रदर्शनपूर्वकः। के ते दृष्टान्ता इति चेत् किमत्र वक्तव्यम् । यस्माद्धरेः

---

१. छा.उ. ७-१-२ ।

सर्वोत्तमत्वे रूपवद्भिर्ब्रह्मादिभिः सर्वैर्मुनिभिः सर्वैर्नृपैश्च आसीनराजसूयसभायामग्रपूजाग्रहणाख्यदृष्टान्तस्य दर्शितत्वात्। भीमस्य देवोत्तमत्वे बलाधिकत्वरूपदृष्टान्तस्य दर्शितत्वात् । द्रौपद्या लक्ष्मीव्यतिरिक्तनार्युत्तमत्वे लावण्याधिक्यस्य दृष्टान्तस्य दर्शितत्वात् । विष्णुपक्षीयसौभाग्ये धर्मराजसाम्राज्यस्यैव दृष्टान्तस्य दर्शितत्वात्। विष्णुविरोधिनां दौर्भाग्ये सहानुजदुर्योधननिधनस्यैव दृष्टान्तस्य प्रकटितत्वादित्यादयो दृष्टान्ता वक्ष्यमाणन्यायेन भारतकथाकथकैर्विद्वद्भिः स्वयमेबोत्प्रेक्षयितुं शक्यन्ते । तथा पुराणकृद् व्यासः स्वकृतभारताभिमतरहस्य–प्रमेयानि पृथक्पृथक् स्वयमेव प्रदर्श्य तत्र तत्रोचितदृष्टान्तांश्च स्वयमेव दर्शयति— **विष्णिवत्यादिना** ।। १२ ।।

**सङ्क**— इतोऽपि भारतस्य वैशिष्ट्यमस्तीत्याह— **निर्णय इति** ।। भारते सर्वशास्त्राणां निर्णयः कृत इत्युक्तम् । कोऽसौ निर्णय इत्यत आह— **विष्णुवशत्वं हीति** ।। १२ ।।

**वरद**— सर्वशास्त्राणामिति भारतस्य सर्वशास्त्रनिर्णायकत्वमुक्तं दर्शयति— **निर्णय इति** ।। हि यस्मात् भारते सर्वशास्त्राणां निर्णयः सदृष्टान्तः निदर्शनसहितः कृतः तस्मान्निर्णायकत्वमित्यर्थः। कः शास्त्रार्थनिर्णयः कथं सदृष्टान्तः कृत इत्यत आह— **विष्णुवशत्वं हीति** ।। ब्रह्मादीनां विष्णुवशत्वं सर्वशास्त्रनिर्णीतार्थः । तद्भारते भीमादीनां कृष्णवशत्वकथनेन प्रकाशितं कृष्णस्य विष्णुत्वात् भीमादीनां ब्रह्मादित्वादित्यर्थः ।। १२ ।।

**जना**— इतोप्युत्तममित्याह— **निर्णय इति** ।। भारते सर्वशास्त्राणां निर्णयः निर्णीतिः सदृष्टान्तः दृष्टान्तो निदर्शनं तेन सहितः वर्तते हि तेन तस्योत्तमत्वमिति । सदृष्टन्तः निर्णयः कथं कृत इत्यत आह— **विष्णिवति**।। यतः सर्वे भीमाद्याः सम्यक् कृष्णवशे ईरिता अतः ब्रह्मादीनां विष्णुवशत्वं प्रकाशितं कथितं हि । कृष्णस्य विष्णुत्वाद्भीमस्य ब्रह्मत्वादिति भावः ।। १२ ।।

**ताम्र**— भारतं सर्वशास्त्राणां निर्णय इत्युक्तम् । तत्र निर्णयः कथं कृत इत्यत आह— **निर्णय इति** ।। सदृष्टान्तः सोदाहरणम् । विष्णुरयं कृष्णः ब्रह्माद्या एव भीमादयः तद्वशाः इति शृङ्गिग्राहकतयेति यावत् । यद्वा दृष्टान्ते व्याप्तो हेतुः। किं तत् सकलशास्त्राणां प्रमेयं यद्भारते सहेतुकं सोदाहरणं निर्णीतमित्यतः आह — **विष्णुरिति** ।। १२ ।।

**यतः कृष्णवशे सर्वे भीमाद्याः सम्यगीरिताः ।**
**सर्वेषां ज्ञानदो विष्णुर्यशोदातेति चोदितः ।। १३ ।।**

**व्यास**— भीमाद्याश्च ब्रह्मादय इति प्रसिद्धं शास्त्राणां प्रमेयान्तरं च सलिङ्गं निर्णीतमित्याह— **सर्वेषामिति** ।। १३ ।।

**वादि**— भीमाद्याः ब्रह्मादय इति सुप्रसिद्धम् । ब्रह्मादीनां विष्णुवशत्वाख्यपरमप्रमेये कृष्णवशस्थिता भीमादय एव दृष्टान्ता इति भावः। सर्वेषां ब्रह्मादीनां ज्ञानदो यशोदातेति च भारते उदितः। इदं च भारते रहस्यभूतप्रमेयद्वयम् ।। १३।।

**सङ्क**— ननु ब्रह्मादीनां विष्णुवशत्वं कथं प्रकाशितमित्याशङ्क्य दृष्टान्तमेव हेतुत्वेन प्रदर्शयति— **यत इति** ।। न केवलं पाण्डवानां विष्णुवशत्वमुदितं किन्तु विष्णु: सर्वेषां ब्रह्मादीनां ज्ञानदाता यशोदातेति चोदितमित्याह— **सर्वेषामिति** ।। १३ ।।

**वरद**— अन्योऽपि शास्त्रार्थो भारते सदृष्टान्त ईरित इत्याह— **सर्वेषामिति** ।। सर्वेषां ब्रह्मादीनां ज्ञानदाता यशोदाता इति च विष्णुरीरित: ।। १३ ।।

**जना**— अन्योऽपि शास्त्रार्थ: सदृष्टान्त उक्त इत्याह— **सर्वेषामिति** ।। १३ ।।

**ताम्र**— भीमाद्या: भाविगत्या ब्रह्मादय इति प्रसिद्धम् । एतेन 'सर्वदेवैकवन्द्य' इत्यादिना प्रतिज्ञातं सर्वोत्कृष्टत्व-मुपपादितं भवति । ब्रह्मादीनां भगवान् ज्ञानद: कीर्तिद:। सकलशास्त्राभितं प्रमेयान्तरं व्यासेन भारतकृत्या प्रकाशितमित्याह— **सर्वेषामिति** ।। उदित उदितप्राय: । सूचित इति यावत् । ज्ञानदो भारतोपदेशेन ।। १३ ।।

**यस्माद् व्यासात्मना तेषां भारते यश[१] ऊचिवान् ।**
**ज्ञानदश्च शुकादीनां ब्रह्मरुद्रादिरूपिणाम् ।। १४ ।।**

**वादि**— ज्ञानदानादपि स्वभक्तानां यशोदाने हरेर्महातात्पर्यमिति सूचनाय द्वितीयप्रमेयस्य दृष्टान्तं प्रथममाह — **यस्मादिति** ।। यश: ऊचिवानिति उपलक्षणम् । कृष्णरूपेण सारथ्यादिकं कृत्वा यश: साधयामास चेति ग्राह्यम्। यशोदानादपि ग्रन्थरूपेण यश:प्रशंसनस्याचन्द्रार्कं तद्यशोविस्तृतिहेतुत्वेन प्रबलत्वात् यश:प्रशंसनमेव स्वपदेनोक्तम् । प्रथमप्रमेये दृष्टान्तमाह— **ज्ञानद इति** ।। शुकादीनां ज्ञानदाने ब्रह्मादीनां किमागतमित्यत उक्तम्— **ब्रह्मरुद्रादीति** ।। शुकस्य स्वयं रुद्ररूपत्वात्तत्र वायो: सन्निधानात् वैशम्पायनाख्ये शिष्ये ब्रह्मण: सन्निधानात् मध्वाख्यभाविब्रह्मण: स्वमुखेनैव साक्षात् ज्ञानदानाच्च ब्रह्मरुद्रादिरूपिणामित्युक्तम् ।। १४ ।।

**सङ्क**— ननु कथं विष्णुर्ब्रह्मादीनां यशोदातेत्यत आह— **यस्मादिति** ।। ननु तेषां ब्रह्मादीनां विष्णुर्ज्ञानद इति कथमवसीयत इत्यत आह— **ज्ञानद इति** ।। रुद्र: शुक एव तस्मिन् वायोरावेश:। वैशम्पायनं ब्रह्माविशत् । शेष: पैलमुनिमाविशत् । गरुड: सुमन्तुम् । शक्रश्च जैमिनिम् । एवं ब्रह्मरुद्रादिरूपिणां शुकादीनां ज्ञानद इत्यर्थ:।। १४ ।।

**वरद**— यस्मात् कारणात् व्यासस्वरूपेण विष्णु: तेषां ब्रह्मरुद्रादिरूपिणां भीमादीनां भारते यश ऊचिवान् यस्माच्च तेनैव रूपेण ब्रह्मरुद्रादिरूपिणां शुकादीनां ज्ञानदश्च तस्मादिति पूर्वेणान्वय:। ब्रह्मरुद्रादिरूपिणां शुकादीनामिति सामानाधिकरण्यं च शुके वायोरावेशसद्भावादुपपन्नम् ।। १४ ।।

---

१. कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा । कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् । अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम्।। आदि. ६२.३०-३१)

सर्वोत्तमत्वे रूपवद्भिर्ब्रह्मादिभिः सर्वैर्मुनिभिः सर्वैर्नृपैश्च आसीनराजसूयसभायामग्रपूजाग्रहणाख्यदृष्टान्तस्य दर्शितत्वात्। भीमस्य देवोत्तमत्वे बलाधिकत्वरूपदृष्टान्तस्य दर्शितत्वात् । द्रौपद्या लक्ष्मीव्यतिरिक्तनार्युत्तमत्वे लावण्याधिक्यस्य दृष्टान्तस्य दर्शितत्वात् । विष्णुपक्षीयसौभाग्ये धर्मराजसाम्राज्यस्यैव दृष्टान्तस्य दर्शितत्वात्। विष्णुविरोधिनां दौर्भाग्ये सहानुजदुर्योधननिधनस्यैव दृष्टान्तस्य प्रकटितत्वादित्यादयो दृष्टान्ता वक्ष्यमाणन्यायेन भारतकथाकथकैर्विद्वद्भिः स्वयमेवोत्प्रेक्षयितुं शक्यन्ते । तथा पुराणकृद् व्यासः स्वकृतभारताभिमतरहस्य–प्रमेयानि पृथक्पृथक् स्वयमेव प्रदर्श्य तत्र तत्रोचितदृष्टान्तांश्च स्वयमेव दर्शयति— **विष्ण्वित्यादिना** ।। १२ ।।

**सङ्क**— इतोऽपि भारतस्य वैशिष्ट्यमस्तीत्याह— **निर्णय इति** ।। भारते सर्वशास्त्राणां निर्णयः कृत इत्युक्तम् । कोऽसौ निर्णय इत्यत आह— **विष्णुवशत्वं हीति** ।। १२ ।।

**वरद**— सर्वशास्त्राणामिति भारतस्य सर्वशास्त्रनिर्णायकत्वमुक्तं दर्शयति— **निर्णय इति** ।। हि यस्मात् भारते सर्वशास्त्राणां निर्णयः सदृष्टान्तः निदर्शनसहितः कृतः तस्मान्निर्णायकत्वमित्यर्थः। कः शास्त्रार्थनिर्णयः कथं सदृष्टान्तः कृत इत्यत आह— **विष्णुवशत्वं हीति** ।। ब्रह्मादीनां विष्णुवशत्वं सर्वशास्त्रनिर्णीतार्थः । तद्भारते भीमादीनां कृष्णवशत्वकथनेन प्रकाशितं कृष्णस्य विष्णुत्वात् भीमादीनां ब्रह्मादित्वादित्यर्थः ।। १२ ।।

**जना**— इतोप्युत्तममित्याह— **निर्णय इति** ।। भारते सर्वशास्त्राणां निर्णयः निर्णीतिः सदृष्टान्तः दृष्टान्तो निदर्शनं तेन सहितः वर्तते हि तेन तस्योत्तमत्वमिति । सदृष्टन्तः निर्णयः कथं कृत इत्यत आह— **विष्ण्वति**।। यतः सर्वे भीमाद्याः सम्यक् कृष्णवशे ईरिता अतः ब्रह्मादीनां विष्णुवशत्वं प्रकाशितं कथितं हि । कृष्णस्य विष्णुत्वाद्भीमस्य ब्रह्मत्वादिति भावः ।। १२ ।।

**ताम्र**— भारतं सर्वशास्त्राणां निर्णय इत्युक्तम् । तत्र निर्णयः कथं कृत इत्यत आह— **निर्णय इति** ।। सदृष्टान्तः सोदाहरणम् । विष्णुरयं कृष्णः ब्रह्माद्या एव भीमादयः तद्वशाः इति शृङ्गिग्राहकतयेति यावत् । यद्वा दृष्टान्ते व्याप्तो हेतुः। किं तत् सकलशास्त्राणां प्रमेयं यद्भारते सहेतुकं सोदाहरणं निर्णीतमित्यतः आह — **विष्णुरिति** ।। १२ ।।

**यतः कृष्णवशे सर्वे भीमाद्याः सम्यगीरिताः ।**
**सर्वेषां ज्ञानदो विष्णुर्यशोदातेति चोदितः ।। १३ ।।**

**व्यास**— भीमाद्याश्च ब्रह्मादय इति प्रसिद्धं शास्त्राणां प्रमेयान्तरं च सलिङ्गं निर्णीतमित्याह— **सर्वेषामिति** ।। १३ ।।

**वादि**— भीमाद्याः ब्रह्मादय इति सुप्रसिद्धम् । ब्रह्मादीनां विष्णुवशत्वाख्यपरमप्रमेये कृष्णवशस्थिता भीमादय एव दृष्टान्ता इति भावः। सर्वेषां ब्रह्मादीनां ज्ञानदो यशोदातेति च भारते उदितः। इदं च भारते रहस्यभूतप्रमेयद्वयम् ।। १३।।

**सङ्क**— ननु ब्रह्मादीनां विष्णुवशत्वं कथं प्रकाशितमित्याशङ्क्य दृष्टान्तमेव हेतुत्वेन प्रदर्शयति— **यत इति** ।। न केवलं पाण्डवानां विष्णुवशत्वमुदितं किन्तु विष्णुः सर्वेषां ब्रह्मादीनां ज्ञानदाता यशोदातेति चोदितमित्याह— **सर्वेषामिति** ।। १३ ।।

**वरद**— अन्योऽपि शास्त्रार्थो भारते सदृष्टान्त ईरित इत्याह— **सर्वेषामिति** ।। सर्वेषां ब्रह्मादीनां ज्ञानदाता यशोदाता इति च विष्णुरीरितः ।। १३ ।।

**जना**— अन्योऽपि शास्त्रार्थः सदृष्टान्त उक्त इत्याह— **सर्वेषामिति** ।। १३ ।।

**ताम्र**— भीमाद्याः भाविगत्या ब्रह्मादय इति प्रसिद्धम् । एतेन 'सर्वदेवैकवन्द्य' इत्यादिना प्रतिज्ञातं सर्वोत्कृष्टत्व-मुपपादितं भवति । ब्रह्मादीनां भगवान् ज्ञानदः कीर्तिदः। सकलशास्त्राभितं प्रमेयान्तरं व्यासेन भारतकृत्या प्रकाशितमित्याह— **सर्वेषामिति** ।। उदित उदितप्रायः । सूचित इति यावत् । ज्ञानदो भारतोपदेशेन ।। १३ ।।

**यस्माद् व्यासात्मना तेषां भारते यश[१] ऊचिवान् ।**
**ज्ञानदश्च शुकादीनां ब्रह्मरुद्रादिरूपिणाम् ।। १४ ।।**

**वादि**— ज्ञानदानादपि स्वभक्तानां यशोदाने हरेर्महातात्पर्यमिति सूचनाय द्वितीयप्रमेयस्य दृष्टान्तं प्रथममाह — **यस्मादिति** ।। यशः ऊचिवानिति उपलक्षणम् । कृष्णरूपेण सारथ्यादिकं कृत्वा यशः साधयामास चेति ग्राह्यम्'। यशोदानादपि ग्रन्थरूपेण यशःप्रशंसनस्याचन्द्रार्कं तद्यशोविस्तृतिहेतुत्वेन प्रबलत्वात् यशःप्रशंसनमेव स्वपदेनोक्तम् । प्रथमप्रमेये दृष्टान्तमाह— **ज्ञानद इति** ।। शुकादीनां ज्ञानदाने ब्रह्मादीनां किमागतमित्यत उक्तम्— **ब्रह्मरुद्रादीति** ।। शुकस्य स्वयं रुद्ररूपत्वात्तत्र वायोः सन्निधानात् वैशम्पायनाख्ये शिष्ये ब्रह्मणः सन्निधानात् मध्वाख्यभाविब्रह्मणः स्वमुखेनैव साक्षात् ज्ञानदानाच्च ब्रह्मरुद्रादिरूपिणामित्युक्तम् ।। १४ ।।

**सङ्क**— ननु कथं विष्णुर्ब्रह्मादीनां यशोदातेत्यत आह— **यस्मादिति** ।। ननु तेषां ब्रह्मादीनां विष्णुर्ज्ञानद इति कथमवसीयत इत्यत आह— **ज्ञानद इति** ।। रुद्रः शुक एव तस्मिन् वायोरावेशः। वैशम्पायनं ब्रह्माविशत् । शेषः पैलमुनिमाविशत् । गरुडः सुमन्तुम् । शक्रश्च जैमिनिम् । एवं ब्रह्मरुद्रादिरूपिणां शुकादीनां ज्ञानद इत्यर्थः।। १४ ।।

**वरद**— यस्मात् कारणात् व्यासस्वरूपेण विष्णुः तेषां ब्रह्मरुद्रादिरूपिणां भीमादीनां भारते यश ऊचिवान् यस्माच्च तेनैव रूपेण ब्रह्मरुद्रादिरूपिणां शुकादीनां ज्ञानदश्च तस्मादिति पूर्वेणान्वयः। ब्रह्मरुद्रादिरूपिणां शुकादीनामिति सामानाधिकरण्यं च शुके वायोरावेशसद्भावादुपपन्नम् ।। १४ ।।

---

१. कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा । कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् । अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम्।। आदि. ६२.३०-३१)

**जना**— तदेवोपपादयति— **यस्मादिति** ।। तेषां भीमादीनां यश ऊचिवान् । अतः यशोदातेति भावः। ज्ञानदत्वं दृष्टान्तेनोपपादयति— **ज्ञानद इति** ।। ब्रह्मरुद्रादीनां रूपाणि येषु तेषाम् । वैशम्पायनं ब्रह्मा, शुकं वायुः, पैलं शेषः, सुमन्तुं गरुडः, जैमिनिं शक्रः विवेशेत्यादेः वक्ष्यमाणत्वात् शुकस्य च रुद्रत्वात् ।। १४ ।।

**ताम्र**— यद्वा यस्मात् भारते व्यासकथाप्रसङ्गे विष्णुः व्यासरूपेण भीमादीनां शुकादीनां च यश ऊचिवान् ज्ञानप्रदश्चेत्युदितस्तस्माद्विष्णुर्भारते ब्रह्मादीनां ज्ञानदो यशोदातेति चोदित इत्यर्थः। वायोः शुके, ब्रह्मणो वैशम्पायने, शेषस्य पैले, गरुडस्य सुमन्तौ प्रवेशात् ब्रह्मरुद्रादिऋषीणां शुकादीनामिति युक्तम् । एतेन 'परमगुरुरभीष्टद' इत्युक्तमुपपादितं भवति ।। १४ ।।

**राम**— '**ज्ञानदश्च शुकादीनां ब्रह्मरुद्रादिरूपिणाम्**' इत्यत्र प्रथमादिपदेन वैशम्पायनपैलादीनां ग्रहणम्। द्वितीयादिपदेन शेषवीन्द्रादीनां ग्रहणम् । तथा च रुद्ररूपिणः शुकस्य, ब्रह्मावेशरूपवतां वैशम्पायनादीनां ज्ञानद इत्यर्थः । तदुक्तं 'कृष्णस्य पादपरिसेवनोत्सुकाः सुरेश्वराः विविशुराशु तान् मुनीन्' इति । शुकवैशम्पा-यनपैलादीनां ब्रह्मरुद्रादिमूलरूपाणां ज्ञानद इति वा । 'तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः' इत्युक्तेः ।। १४-४३ ।।

**ब्रह्माधिकश्च देवेभ्यः शेषाद् रुद्रादपीरितः ।**
**प्रियश्च विष्णोः सर्वेभ्य इति भीमनिदर्शनात् ।। १५ ।।**

**व्यास**— अन्यच्च प्रमेयं शास्त्राणां सहेतुकं निर्णीतं भारत इत्याह— **ब्रह्मेति** ।। १५ ।।

**वादि**— प्रमेयान्तरं तत्त्वनिदर्शनं चाह— **ब्रह्मेति** ।। ईरितः भारते ईरित इत्यर्थः। भीमनिदर्शनादिति वदता भीमोऽत्र दृष्टान्त इति सूचितम् । अश्वत्थाम्नो मुखभङ्गात् शेषरूपबलरामासाध्यजरासन्धवधाच्च ब्रह्मणो भीमनिदर्शनेन शेषरुद्राभ्यामप्युत्तमत्वं दर्शितम् । इन्द्ररूपार्जुनादपि ज्यैष्ठ्यात् देवेभ्य उत्तमत्वं च दर्शितम् । सर्वेभ्योऽतिप्रियत्वं तु भीमार्थं प्राङ्मित्रीभूतसुग्रीवात्मककर्णवधेन प्राङ्निहतवाल्यात्मकार्जुनपरिग्रहेण चावगम्यते ।। १५ ।।

**सङ्क**— योऽयं निर्णयो भारदतादिवैशिष्ट्यकारणः सदृष्टान्तः समभिहितः तथा तदन्ये निर्णयाः कथं महाभारत-वैशिष्ट्यकारणाः सदृष्टान्ताः समभिहिता इत्यपेक्षयामाह— **ब्रह्मेति** ।। भीमदृष्टान्तेन शेषरुद्रादिदेवेभ्यो ब्रह्माधिकश्च विष्णोः सर्वेभ्यः प्रियः इत्यर्थः ।। १५ ।।

**वरद**— विष्णोः स्वातन्त्र्यमितरेषां तदधीनत्वमित्येषः निर्णयः सदृष्टान्त उक्तेत्यभिहितम् । इदानीं ब्रह्मादीनां तारतम्यं च सदृष्टान्तं निर्णीतमित्याह— **ब्रह्माधिकश्चेति** ।। ब्रह्मा देवेभ्यः शेषात् रुद्रादिभ्योऽप्यधिकः सर्वेभ्यः शेषरुद्रादिभ्यः सकाशात् विष्णोः प्रियश्चेति भीमनिदर्शनान्निर्णीतमित्यर्थः। ब्रह्मात्मकस्य भीमस्य शेषाद्यात्मक-बलभद्रापेक्षयाधिकत्वात् विष्णोः प्रियत्वाच्चेति भावः।। १५ ।।

**जना**— तारतम्यमपि सदृष्टान्तमुक्तमित्याह— **ब्रह्मेति** ।। ब्रह्मा देवेभ्यः शेषाद्रुद्रादप्यधिक इतीरितः विष्णोः सर्वेभ्यः पूर्वोक्तेभ्यः प्रियश्चेतीरितः। भीमनिदर्शनान्निदर्शनं प्राप्य । भीमदृष्टान्तेनेत्यर्थः। भीमस्य सर्वाधिका-तिप्रियत्वकथनादिति भावः। अत्र शेषाद्रुद्रादिति कथनं मनुष्येषु गरुडावताराभावात् ।। १५ ।।

**ताम्र**— मानद इति प्रतिज्ञातं वायोस्सर्वोत्तमत्वं भगवदिष्टतमत्वाख्यशास्त्रीयमन्यच्च प्रमेयं सहेतुकं भारतनिर्णीतमित्याह— **ब्रह्मेति** ।। ब्रह्मात्मकभीमस्य शेषरुद्रादिरूपबलभद्रद्रौण्याद्यपेक्षया बलाधिक्यकृष्ण-प्रियत्वयोरुक्तेरिति भावः ।। १५ ।।

**भारतश्री**— इति हेतोः सर्वे पञ्चरात्रभारताद्याः । भीमनिदर्शनात् निर्णीतमित्यर्थः।। १५ ।।

**भूभारहारिणो विष्णोः प्रधानाङ्गं हि मारुतिः ।**
**मागधादिवधादेव दुर्योधनवधादपि ।। १६ ।।**

**व्यास**— ब्रह्मा विष्णोः प्रिय इति भीमनिदर्शनेनापि कुतोऽवगतमित्यत आह— **भूभारेति** ।। यो यस्य कार्ये प्रधानाङ्गं स तस्य प्रिय इति प्रसिद्धम् । प्रधानाङ्गत्वं च कुतस्तस्येत्यत आह— **मागधेति** ।। १६ ।।

**वादि**— प्रमेयान्तरं दृष्टान्तान्तरं च प्रदर्शयति— **भूभारेति** ।। मारुतिर्वायोः कुमार इति प्रमेयम् । मागधादिवधादिति निदर्शनम् ।। १६ ।।

**सङ्क**— ननु भीमस्य सर्वाधिक्ये ब्रह्मापि सर्वाधिको भवेत्तदेव कुत इत्यत आह— **भूभारेति** ।। ननु मारुतेः विष्णोः प्रधानाङ्गत्वे को हेतुरित्यत आह— **मागधेति** ।। मागधदुर्योधनादिवधेन बलाधिकत्वं विष्णोः प्रधानाङ्गत्वे हेतुरित्यर्थः ।। १६ ।।

**वरद**— ननु भीमस्य सर्वाधिक्यमेव कथं ज्ञायते येन तदाधिक्यं ब्रह्माधिक्ये निदर्शनं स्यादित्यत आह— **भूभारेति** ।। भूभारं हर्तुं शीलमस्यास्तीति तथोक्तः। तस्य विष्णोर्मारुतिः प्रधानाङ्गं हि यस्मात् तस्मादितरापेक्षया भीमस्याधिक्यं ज्ञायत इत्यर्थः। ननु मारुतेः प्रधानाङ्गत्वमेव कुतः सिद्धमित्यत आह— **मागधादीति** ।। अनन्यसाध्यजरासन्धादिवधात् प्रधानाङ्गत्वं सिद्धमित्यर्थः ।। १६ ।।

**जना**— ननु भीमस्य प्रियत्वं कुत इत्यत आह— **भूभारेति** ।। मारुतिर्भीमः। प्रधानाङ्गं यो यस्य कार्ये प्रधानाङ्गं स तस्य प्रिय इति प्रसिद्धम् । प्रथमसाधनत्वात् प्रियो भवतु बलाधिकश्च कुत इत्यत आह— **मागधेति** ।। आदिपदात् कीचकादीनां ग्रहणम् । तेन भीमस्य बलाधिक्यं बलाधिकमागधादिवधात् सिद्धमिति भावः ।। १६ ।।

**ताम्र**— भीमस्य बलाधिक्यं प्रियत्वं च युक्त्या समर्थयते— **भूभारेति** ।। प्रधानाङ्गत्वप्रसिद्धिद्योतको हिशब्दः। यद्वा यो यस्य कार्ये प्रधानाङ्गः स तस्य प्रिय इति प्रसिद्धमिति हिशब्दः। बलाधिक्योपपादनाय

प्रधानाङ्गत्वं विवृणोति— **मागधेति** ।। ब्रह्मादिवरदर्पितरुद्राद्यसाध्यमागधादिवधात् तेभ्योऽप्याधिक्यं सिद्ध्यति ।। १६ ।।

**भारतश्री**— ननु भीमस्य सर्वाधिक्यमेव कुत इति ज्ञातव्यम् । येन तदाधिक्यं ब्रह्माधिक्ये निदर्शनं स्यात् इत्यत आह— **भूभारेति** ।। यद्धि यस्मात् मारुतिः भीमः प्रथमाङ्गं तस्मादितरापेक्षया भीमस्य आधिक्यं ज्ञायते इति भावः।। १६ ।।

**यो य एव बलज्येष्ठः क्षत्रियेषु स उत्तमः ।**
**अङ्गं चेद्विष्णुकार्येषु तद्भक्त्यैव न चान्यथा ।। १७ ।।**

**व्यास**— 'ब्रह्माधिकश्च' इति ब्रह्मणः सर्वाधिकत्वमुक्तम् । तद्व्याप्तिपूर्वकं समर्थयत— **यो य इति** ।। क्षत्रियेषु क्षत्रियादिषु ।। १७ ।।

**वादि**— 'ब्रह्माधिकश्च देवेभ्य' इति ब्रह्मा देवेभ्योऽधिकः । कैमुत्येन तदितरेभ्यश्चेति ब्रह्मणः सर्वाधिक्यमुक्तम् । तत्सयुक्तिकं समर्थयत— **यो य इति** ।। क्षत्रियेषु यो यो बलज्येष्ठः। तद्भक्त्यैव विष्णुभक्त्यैव । अङ्गं चेत्स उत्तमः। अन्यथा विष्णुभक्तिं विना । देवानाममृतमथनेऽसुरवत् स्वोदरपूरणार्थमङ्गं चेत् । न उत्तमो न च । तादृशाङ्गतया फलवांश्च नेति योजना ।। १७ ।।

**सङ्क**— ननु बलाधिक्यं सर्वाधिक्ये कारणं कथमित्यत आह— **यो य इति** ।। कीदृशबलं सर्वाधिक्ये कारणं भवतीत्यत आह— **अङ्गमिति** ।। १७ ।।

**वरद**— ननु जरासन्धादिवधात् भीमस्य बलाधिक्ये सिद्धेऽपि भक्तिर्ज्ञानाद्याधिक्यं कथं ज्ञातमित्यतो बलाधिक्ये सिद्धे तेन भक्त्याधिक्यमनुमेयमित्यभिप्रायेण तयोः व्याप्तिमाह— **यो य इति** ।। देवावतारेषु क्षत्रियेषु यो यो बलज्येष्ठः बलेनाधिकः स एवोत्तमः भक्त्यादिनाप्यधिकः। ब्राह्मणेष्वाधिक्येऽन्यदेव निमित्तं वक्ष्यत इति क्षत्रियेष्वित्युक्तम् । बलमपि विष्णुभक्त्या भूभारहरणे विष्णुकार्ये अङ्गं चेत् तदेव सर्वाधिक्यहेतुर्न बलमात्रमित्याह— **अङ्गं चेदिति** ।। तद्बलं विष्णोः कार्येषु तस्य विष्णोः भक्त्यङ्गं चेत् तर्ह्याधिक्यानुमापकम् । अन्यथा नैवानुमापकम्। बलमात्रस्य व्यभिचारादित्यर्थः ।। १७ ।।

**जना**— बलाधिकत्वेप्युत्तमत्वं कुत इत्यत अनुमानेन समर्थयितुं व्याप्तिमाह— **य इति** ।। वेनादिव्यावृत्त्यर्थ-मङ्गमिति । दुर्योधनादीनामप्यङ्गत्वं स्यादित्यत आह— **तदिति** ।। तदङ्गत्वं भक्त्यैवान्यथा विष्णुभक्त्यभावे न भवति ।। १७ ।।

**ताम्र**— अस्तु बलाधिक्यमुत्तमत्वं कुत इत्यत व्याप्तिं तावदाह— **य इति** ।। बलतोऽनधिकानामपि ऋष्यादीनमप्युत्तमत्वदर्शनादित्यत आह— **क्षत्रियेष्विति** ।। क्षत्रियत्वे सति बलाधिक्यं युधिष्ठिरा-दितो जरासुतादेरप्स्तीत्यत **अङ्गं चेदित्युक्तम्** ।। नन्वङ्गत्वविशिष्टः पूर्वो हेतुः क्रोधवशेष्वप्यस्ति

"अन्ते त्वधर्महरमन्युवशासुराद्याः'[१] इत्यतस्तद्भक्त्यैवेत्युक्तम् । न च क्रोधवशेषु क्षत्रियत्वाभावात् क्षत्रियत्व-विशेषणेनैव तद्व्युदास इति वाच्यम् । राक्षसस्य रावणस्य ब्राह्मण्यवत् क्रोधवशानां क्षत्रियत्वसम्भवात्। ***व्यासतीर्थीये*** तु क्षत्रियेषु क्षत्रियादिषु कलौ संहारप्रवृत्तस्य भगवतो दैत्यादयोऽप्यङ्गमित्यतो **तद्भक्त्यैवेत्युक्तमि**त्युक्तम् ।। १७ ।।

**भारतश्री**— ननु जरासन्धादिवधात् भीमस्य बलाधिक्ये सिद्धेऽपि भक्तिज्ञानाधिक्यं कथं ज्ञातव्यमित्यत बलाधिक्ये सिद्धे तेन बलाद्याधिक्यमनुमेयत इत्यभिप्रायेण तयोर्व्याप्तिमाह— **यो य इति** ।। देवावतारेषु क्षत्रियेषु यो यो बलज्येष्ठः स स एवोत्तमः भक्त्यादिनापि स एवाधिक इति व्याप्तिः। ब्राह्मणेषु ज्ञानस्य निमित्तस्य वक्ष्यमाणत्वात् क्षत्रियेष्वित्युक्तम् । बलमपि विष्णुभक्त्या भूभारहरणे विष्णुकार्ये अङ्गं चेत् तदेव सर्वाधिक्यहेतुः। न बलमात्रमित्याह— **अङ्गं चेदिति** ।। तस्य विष्णोः भक्त्या अङ्गं चेत् तदा ज्ञानाधिक्यमनुमापकं स्यात् । अन्यथा नेति ।। १७ ।।

### बलं नैसर्गिकं तच्चेद् वरास्त्रादेस्तदन्यथा ।
### अन्यावेशनिमित्तं चेद् बलमन्यात्मकं हि तत् ।। १८ ।।

**वादि**— तद्बलं नैसर्गिकं चेदाधिक्ये हेतुः। वरास्त्रादेः शिवादिदत्तवरेण शिवादिदत्तास्त्रेण शिवादिदत्त-पिशाचादिसहायेन वा तद्बलं चेत् । अन्यथा, आधिक्यादन्यथा नीचत्वे हेतुरित्यर्थः। अन्यावेशनिमित्तं चेत् नरावेशनिमित्तार्जुनबलवदन्यावेशनिमित्तं चेत् । आधिक्ये हेतुर्न । तद्बलमन्यात्मकं हि अन्यस्यैव स्वभावभूतं हीत्यर्थः ।। १८ ।।

**सङ्क**— न केवलमङ्गत्वमात्रेणालं तत्र बलं नैसर्गिकं चापेक्षितमित्याह— **बलमिति** ।। तदुभयं बलं च विष्णुभक्तिसहितमेव भवेदित्यर्थः। ननु बलस्य नैसर्गिकत्वे केन विशेषणेन किं व्यावर्त्यत इत्यत आह— **वरेति** ।। वरास्त्रादेः निमित्तात् यद्बलं तदन्यथा भवति वैशिष्ट्यकारणं न भवतीत्यर्थः। ननु वरशापास्त्रनिमित्तता-भावेऽप्यन्यावेशेन यद्बलं प्रतीयते तत्तस्य वैशिष्ट्ये कारणं किमित्यत आह— **अन्यावेशेति** ।। १८ ।।

**वरद**— ननु तथापि व्यभिचारः। अर्जुनेऽश्वत्थामापेक्षयाङ्गभूतस्य बलस्य सम्भवेऽपि स्वरूपाधिक्याभावा-दित्याशङ्क्य तस्मिन्नङ्गभूते बले स्वाभाविकत्वं च विशेषणं देयमित्याह— **बलं नैसर्गिकमिति** ।। विशेषण-व्यावर्त्यमाह— **वरास्त्रादेरिति** ।। आदिपदेनान्यावेशादिकं परिगृह्यते । यत् वरास्त्रादेर्निमित्ताज्जातं तत् बलं अन्यथा स्वरूपाधिक्ये कारणं न भवति । तदेवोपलक्षणतया स्पष्टं दर्शयति— **अन्यावेशेति** ।। अन्यावेशो निमित्तं यस्य तत् । तादृशं चेत् बलं तर्हि अन्यात्मकं यस्यावेशः स आत्मा स्वामी यस्य तत्तथा तदीयमिति यावत् । हि यस्मात्तस्मान्न व्यभिचार इत्यर्थः। अश्वत्थामापेक्षयार्जुनेऽधिकबलसद्भावेऽपि तद्बलमन्यात्मकं नरांशसम्पन्निमित्तकत्वात् न स्वाभाविकम् । स्वाभाविकत्वं च बले विशेषणं दत्तमिति न व्यभिचार इति भावः ।। १८ ।।

---

१. भा. २-७-३९ ।

**जना**— एवं चेत् द्रौणेरर्जुनस्य वरत्वं प्राप्तमित्यत: विशेषणान्तरमाह— **बलमिति** ।। नैसर्गिकं स्वाभाविकम् । तद्व्यावर्त्यमाह— **वरेति** ।। तद्बलं वरास्त्रादेश्चेत् अन्यथा उत्तमत्वसाधकं न भवति । बलमन्यावेशनिमित्तं चेदुत्तमत्वमन्यात्मकं यदावेशनिमित्तं बलं तदात्मकं तत्स्वरूपं हि प्रसिद्धम् । तेनार्जुनस्याधिक्यासिद्धिरिति भाव: ।। १८ ।।

**ताम्र**— ननूक्तो हेतु: शैनेयादिषु वर्तते नोत्तमत्वमित्यतो **बलं नैसर्गिकं तच्चेदित्युक्तम्**— वरास्त्रादे: प्राप्ततद्बलं अन्यथा उत्तमत्वोपयोगी न । नन्वर्जुनबाह्लिकादावुक्तो हेतुरस्ति न द्रौण्याद्युत्तमत्वमित्यत उक्तम् — **अन्यावेशेति** ।। १८ ।।

**भारतश्री**— तच्च नैसर्गिकं बलं चेदेवम् । अन्यथा स्वरूपाधिक्ये कारणं न भवतीति ।। १८ ।।

**देवेषु बलिनामेव भक्तिज्ञाने न चान्यथा ।**
**स एव च प्रियो विष्णोर्नान्यथा तु कथञ्चन ।। १९ ।।**

**व्यास**— कलौ संहारे प्रवृत्तस्य भगवतो वेनादयोऽप्यङ्गमिति न तदुत्तमत्वमित्याह— **देवेष्विति** ।। भक्तत्वे सति बलाधिक्यं विष्णोरतिप्रियत्वे च निमित्तमित्याह— **स इति** ।। १९ ।।

**ज्ञादि**— ननु ज्ञानाधिक्येन वा भक्त्याधिक्येन वा विष्णुप्रेमाधिक्येन वाधिक्यं वाच्यम् । केवलं बलाधिक्येन कथमाधिक्यम् । तथा सति उपदेष्टृगुरुसकाशादपि मल्लानामाधिक्यप्रसङ्गादित्यत आह— **देवेषु बलिनामेवेति** ।। मल्लादिमानुषेषु गजादिपशुषु च बलाधिक्येऽपि ज्ञानाधिक्यादर्शनात् कथं नियम इत्यत उक्तम्— **देवेष्विति** ।। तर्हि बलमेव कुतो गृहीतमिति न शङ्कनीयम् । परचित्तवृत्तिज्ञानादेरनुमापकत्वेन बलस्यैव ग्रहणसम्भवात् । वक्ष्यति चैतद्ग्रन्थकार: स्वयमेव । यत्र बलाधिक्यं तत्र ज्ञानादिगुणाधिक्यमिति नियमो देवेष्वेव । देवेष्वित्युपलक्षणम्। भारते देवावतारभूतभीमरूपक्षत्रिये बलाधिक्यदर्शनात् रामायणे देवावतारभूत–कपिरूपहनुमति च बलाधिक्यदर्शनात् देवावतारभूतक्षत्रियादिष्वेव चेत्यपि ग्राह्यम् ।। १९-२१ ।।

**सङ्क**— ननु क्षत्रियेष्वेवायं नियम: प्रदर्शित: देवेषु भक्तिज्ञानादिगुणवैशिष्ट्ये को नियम इत्याशङ्क्य तत्रापि बलिनामेव ज्ञानभक्त्यादिगुणवैशिष्ट्यनियम इत्याह— **देवेष्विति** ।। तथा तस्यैव विष्णो: प्रियत्वनियम इत्याह— **स एवेति** ।। १९ ।।

**वरद**— ननु क्षत्रियेष्वित्युक्त्या देवादिष्वन्यदेवाधिक्ये प्रयोजकं प्रतिभातीत्यत आह— **देवेष्विति** ।। देवेष्वपि बलमेवाधिक्ये प्रयोजकं नान्यदित्यर्थ:— **स एव चेति** ।। यो बली स एव विष्णो: प्रियश्चेत्यर्थ: ।। १९ ।।

**जना**— नानेन ब्रह्मण आधिक्यसिद्धि: । क्षत्रियेष्वतिव्याप्ते: सङ्कोचनात् ब्रह्मणश्च देवत्वादित्यत आह— **देवेष्विति** ।। देवेषु बलिनामेव प्रधाने भक्तिज्ञाने । अन्यथा बलाभावे भक्तिज्ञाने न । भक्तिज्ञाने अतिप्रियत्वे

प्रयोजके इत्याह— **स इति** ।। स एव भक्तिज्ञानवानेव । अत्र भक्तिशब्देन स्नेहमात्रं ग्राह्यम् । अथवा ज्ञानशब्देन जगज्ज्ञानं ग्राह्यम् । अन्यथा भक्त्यभावे कथञ्चन केनापि प्रकारेण न तु प्रियो नैव ।। १९ ।।

**ताम्र**— देवमानुषाणामुत्तमत्वे न बहुविशेषणविशिष्टं बलं हेतुरित्युक्तम् । देवेषु तु बलाधिक्यमेवोत्तमत्व-साधकमित्याह— **देवेष्विति** ।। यद्वा देवातिरिक्ते भक्तत्वे सति बलित्वमेव प्रियत्वे हेतुरित्याह— **स एवेति** ।। बलाधिक्यमेव भक्तत्वे च हेतुरित्याह— **स एव** ।। बल्येवेति ।। १९ ।।

**तस्माद्यो यो बलज्येष्ठः स गुणज्येष्ठ एव हि ।**
**बलं हि क्षत्रिये व्यक्तं ज्ञायते स्थूलदृष्टिभिः ।। २० ।।**

**व्यास**— व्याप्तिमुपपाद्योपसंहरति— **तस्मादिति** ।। क्षत्रियादाविति शेषः। ननु क्षत्रियादौ बलस्य ज्ञानादेश्च समव्याप्तेः बलेनेव ज्ञानादिना बलमनुमातुं शक्यं किमित्यत आह— **बलमिति** ।। तत्र न ज्ञानादिना बलमनुमेयं तस्य स्फुटमप्रतीतेरिति शेषः ।। २० ।।

**सङ्क**— 'यो य एव बलज्येष्ठ' इत्यादिनोक्तार्थमुपसंहरति— **तस्मादिति** ।। ननु क्षत्रियेषु ज्ञानभक्त्यादिगुणाः सन्ति चेत् बलवत्किमिति ते सर्वैर्न ज्ञायन्तेऽतस्तेषामभावात् 'यो य एव बलज्येष्ठः' इति नियमो ज्ञायते यस्मात्सूक्ष्मदृष्टिभिर्ज्ञानादयो गुणा ज्ञायन्ते यस्मात्तस्मात्तद्यत्र बलज्यैष्ठ्यं तत्रान्यगुणज्यैष्ठ्यमिति नियम इत्यर्थः ।। २० ।।

**वरद**— तस्मात् व्यभिचाराभावात् सिद्धो व्याप्तिरित्याह— **तस्माद्य इति** ।। ननु बलाधिक्यं भक्त्याद्याधिक्ये लिङ्गमिति कुतः, विपरीतं किं न स्यादित्यत आह— **बलं हीति** ।। हि यस्मात् स्थूलदृष्टिभिः पुरुषैः बलं व्यक्तं स्पष्टं ज्ञायते । क्षत्रियेष्वित्युक्तिः ब्राह्मणमात्रव्यावृत्यर्थं न तु देवव्यावृत्त्यर्थं क्षत्रियाणामपि देवावतारत्वात् क्षत्रियपदं देवसङ्ग्राहकमेव न तु व्यावर्तकमिति भावः ।। २० ।।

**जना**— क्षत्रियेष्वित्यादिना सिद्धां व्याप्तिमनुवदति— **तस्मादिति** ।। यो य एव सच्छत्रियत्वे सति स्वाभाविकबलज्येष्ठः स गुणज्येष्ठ इति । ननु क्षत्रियेष्विति किमर्थमुच्यते । सामान्येन यो यः सन् बलज्येष्ठः स गुणज्येष्ठ इति कुतो नोच्यते तेन देवग्रहणमपि स्यादित्यतः, सत्यम्, स्थूलदृष्टिभिः क्षत्रिये व्यक्तं स्फुटं बलं ज्ञायते । ततः क्षत्रिय इत्युक्तमित्याह— **बलमिति** ।। २८ ।।

**ताम्र**— मोक्षयोग्येषु वा व्यभिचाराभावात् सिद्धा व्याप्तिरित्याह— **तस्मादिति** ।। ननु बलाधिक्यं ज्ञानभक्त्याधिक्ये लिङ्गमित्युक्तम् । विपरीतं किं न स्यादित्यत आह— **बलमिति** ।। ज्ञायते शत्रुसंहारादिलिङ्गेन। तथा च ज्ञानादीनां स्थूलमतिभिरप्रतिभासात् ज्ञानादिना बलानुमानेऽज्ञायमानासिद्धिरिति भावः ।। २० ।।

**ज्ञानादयो गुणा यस्माज्ज्ञायन्ते सूक्ष्मदृष्टिभिः ।**
**तस्माद् यत्र बलं तत्र विज्ञातव्या गुणाः परे ।। २१ ।।**

**वरद**— ज्ञानादयस्तु सूक्ष्मदृष्टिभिरेव ज्ञायन्ते न स्थूलदृष्टिभिरित्यतः सर्वेषां हेतुज्ञानसम्भवादुक्तविध एव लिङ्गलिङ्गिभावो न वैपरीत्यमिति भावः। एवं व्याप्तिमभिधायानुमानमाह— **तस्मादिति** ।। २१ ।।

**जना**— अन्यगुणसत्वे किं मानमित्यत आह— **ज्ञानादय इति** ।। उक्तां व्याप्तिमुपसंहरति— **तस्मादिति** ।। २१ ।।

**देवेष्वेव न चान्येषु वासुदेवप्रतीपतः ।**
**क्षत्रादन्येष्वपि बलं प्रमाणं यत्र केशवः ।। २२ ।।**

**व्यास**— अयं नियमः केष्विति जिज्ञासायामाह— **क्षत्रादिति** ।। आधिक्ये प्रमाणम् ।। २२ ।।

**वादि**— अन्येषु दानवेषु दुर्योधनजरासन्धादिषु । वासुदेवप्रतीपतो वासुदेवप्रतीपत्वात् । न उक्तनियमो न । दुर्योधनादिष्वपि बलाधिक्येन ज्ञानाधिक्यानुमाने को दोष इति चेन्न । तेषां विष्णुविरोधित्वेन सर्वैरनुभूयमानत्वात् । पुनरेव बाह्यबलदर्शनिनान्तरज्ञानादिगुणानुमाने बाधितविषयमनुमानं स्यादिति सूचयितुं वासुदेवप्रतीपत इत्युक्तम् । देवेष्वेव वा देवावतारभूतक्षत्रियेष्वेव वा बलाधिक्यमाधिक्ये निमित्तमुक्तम् । तस्य क्वचिदपवादमाह— **क्षत्रादिति**।। यत्र यदा केशवः दुष्टनिधने तदैव शत्रुहननकाल एव । ज्ञानकार्ये दुष्टनिधनोपयुक्तास्त्रशस्त्रा–दिविषयकज्ञानकार्ये च प्रवृत्तस्तदा । क्षत्रात् देवरूपक्षत्रात् । अन्येषु देवरूपद्रोणादिब्राह्मणेषु । बलं बलाधिक्यम् । प्रमाणं ज्ञानादिगुणाधिक्ये प्रमाणम् । यदा भगवान् भूभारहरणे शक्तिस्तदुपयुक्तज्ञानदानयोग्यता चेति कार्यद्वयं लाघवादेकस्मिन्नेव भवेदिति मनश्चकार तदार्जुनादिषु विद्योपदेशाख्यज्ञानकार्याय बृहस्पतिरूपदेवमेव ब्राह्मणकुल उत्पाद्य भारतयुद्धे बहुतरसेनासंहाराय मूलरूपबलं च तस्मिन् व्यक्तीचकारेति भावः। अन्यत्र ज्ञानबलयोरेकीकरणावश्यम्भावादन्यत्र। सर्वेषां विष्णुकार्यतेत्यत्र विष्णोः कार्यं येभ्यस्ते विष्णुकार्यास्तेषां भावो विष्णुकार्यता । सर्वेषामपि क्षत्रियाणां बलं विष्णुकार्योपयोगित्वं च ज्ञानादिगुणाधिक्ये प्रमाणम् । यथा यथा क्षत्रियेषु बलं विष्णुकार्योपयोगित्वं चाधिकमधिकं स सर्वोऽपि क्षत्रियजातावधिकाधिकज्ञानादिगुणवानिति भावः ।। २२–२३ ।।

**सङ्क**— नन्वयं नियमः सार्वत्रिकः किमित्यत आह— **देवेष्विति** ।। सज्जनक्षत्रियादिषूपलक्षणार्थम् । वासुदेवप्रतीपत्वात् अन्येषु दैत्यादिषु बलज्यैष्ठ्यं अन्यगुणज्यैष्ठ्यकारणं न भवतीत्यर्थः। ननु देवेषु क्षत्रियेषु चायं नियमश्चेत् द्रोणकृपादिब्राह्मणेषु बलज्यैष्ठ्यं अन्यगुणज्यैष्ठ्ये कारणं न स्यात्तेषां क्षत्रियत्वाभावादित्यत आह— **क्षत्रादिति** ।। यत्र केशवः कृष्णरामादिस्वरूपो दुष्टनिधने प्रवृत्तस्तत्र क्षत्रादन्येष्वपि बलं अन्यगुणवैशिष्ट्ये प्रमाणं ज्ञापकमित्यर्थः ।। २२ ।।

**वरद**— तत्र च पूर्वोक्तविशेषणविशिष्टस्यैव लिङ्गत्वान्न क्वापि व्यभिचार इत्यभिप्रेत्य तद्व्रत्त्यैवेत्यादि विवृणोति— **देवेष्वेवेति** ।। देवेष्वेव अन्येषु दैत्येषु नास्ति । ननु तथापि क्षत्रियेष्विति विशेषणमनुपपन्नं तथात्वे द्रोणादीनां देवावताराणां बलाधिक्यस्य स्वरूपाधिक्ये कारणत्वाभावप्रसङ्गादित्यत आह— **क्षत्रादन्येष्विति** ।। यत्र कृष्णावतारादौ दुष्टनिधने कार्ये केशवः प्रवृत्तः तत्र क्षत्रादन्येषु द्रोणादिषु बलमेव

सर्वाधिक्ये प्रमाणमित्यर्थः। क्षत्रियपदं तु तदितरेषामस्वीकृतक्षात्रधर्माणां व्यावर्तकम् । द्रोणादीनां तु स्वीकृतक्षात्रधर्मत्वेन क्षत्रियपदेन तेषां सङ्ग्रह एवेति भावः ।। २२ ।।

**जना**— भक्त्या विष्णुकार्याङ्गमिति विशेषणात् सिद्धमर्थमाह— **देवेष्विति** ।। देवपदं सत्क्षत्रियस्याप्युप-लक्षकम् । विशेषणव्यावर्त्यानाह— **न चेति** ।। तत्रोक्तमेव हेतुमाह— **वासुदेवेति** ।। [1]यद्वा ज्ञानबलयोः समव्याप्तत्वात् क्षत्रिये बलपूर्वकव्याप्तिग्रहणे किं कारणमित्यत आह— **बलमिति** ।। तर्ह्यन्यगुणसत्त्वे किं मानमित्यत आह— **स्थूलेति** ।। सूचितमानं वदन् फलितां व्याप्तिमाह— **ज्ञानेति** ।। देवेष्वेव सत्स्वेवेयं व्याप्तिः। एवकारव्यावर्त्यमाह— **न चेति** ।। अन्येष्वसत्स्वियं व्याप्तिर्न च नैवेत्यर्थः। ननु बलं प्रमाणं क्षत्रियेषु चेत्तर्हि द्रोणद्रौण्यादीनां बलमुत्तमत्वसाधकं न स्यादित्यत आह— **क्षत्रादिति** ।। यत्र यस्मिन् देशे काले च केशवः दुष्टनिधने प्रवृत्तः तदा तत्र च क्षत्रादन्येष्वपि बलं प्रमाणं ज्ञापकम् ।। २२ ।।

**ताम्र**— यत्र बलं तत्र गुणाः इति व्याप्तेः असुरेषु व्यभिचारपरिहारं स्मारयति— **देवेष्विति** ।। तदवतारे क्षत्रियेष्विति क्षत्रियेष्वेव बलाधिक्यं ज्ञानाधिक्योपयोगीति न नियमः। द्रोणद्रौण्यादौ तददृष्टेः अतो अपवादमाह — **क्षत्रादिति** ।। भगवदङ्गेष्विति शेषः ।। २२ ।।

**भारतश्री**— अत्र द्रोणादिब्राह्मणेषु यत्र कृष्णावतारादौ केशवः दुष्टनिधने प्रवृत्तः तत्र क्षत्रादन्येषु द्रोणादिषु बलमेव सर्वाधिक्ये प्रमाणम् । क्षत्रियपदं अस्वीकृतक्षत्रियधर्माणां व्यावर्तकम् । तेषां क्षत्रियधर्मस्वीकारात् क्षत्रियपदेनैव ग्रहणमिति भावः।। २२ ।।

**प्रवृत्तो दुष्टनिधने ज्ञानकार्ये तथैव च ।**
**[2]अन्यत्र ब्राह्मणानां तु प्रमाणं ज्ञानमेव हि ।।**
**क्षत्रियाणां बलं चैव सर्वेषां विष्णुकार्यता।। २३ ।।**

**व्यास**— यदा भगवान् दुष्टनिधनज्ञानादिकार्ये च न प्रवृत्तः तदा क्षत्रादीनां आधिक्ये ज्ञापकमाह— **अन्यत्रेति**।। अन्यत्र बलज्ञानकार्यार्थप्रवृत्त्यभावे । ज्ञानबलयोः विशेषमाह— **सर्वेषामिति** ।। सर्वेषां बलज्ञानयोः विष्णुकार्यत्वं स्यादिति ।। २३ ।।

**सङ्क**— ननु केवलं केशवो यदा दुष्टनिधने प्रवृत्तस्तदा देवानां क्षत्रियाणां ब्राह्मणानां च गुणवैशिष्ट्ये विष्ण्वनुकूल–बलमेव प्रमाणमिति युक्तम् । यदा तु सज्जनार्थं ज्ञानाख्यकार्ये प्रवृत्तस्तदा तेषां गुणवैशिष्ट्ये किं ज्ञापकमित्यत आह— **ज्ञानेति** ।। तदेवेति ज्ञानमेव प्रमाणम् । यथा यथा ज्ञानप्रवर्तकत्वं तेषां दृश्यते तथा तथा तेषामन्यगुणाधिक्ये ज्ञानमेव प्रमाणमित्यर्थः। ननु यदा दुष्टनिधने प्रवृत्तः केशवः तदा बलमेव प्रमाणं यदा ज्ञानकार्ये प्रवृत्तः तदा ज्ञानमेव प्रमाणमित्युक्तम् । यदोभयकार्ये विष्णुः प्रवृत्तो न भवति तदा ब्राह्मणानां

---

१. सार्धश्लोकद्वयस्य प्रकारान्तरेण व्याख्यानम् । २. सभापर्वणि ४१/१७ 'ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः। वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः।। पूज्यतायाम्'।

क्षत्रियाणां च गुणवैशिष्ट्ये किं ज्ञापकमित्यत आह— **अन्यत्रेति** ।। श्रीविष्णोरुभयकार्यप्रवृत्तेरन्यत्रेत्यर्थः। किं बहुना देवानां क्षत्रियाणां ब्राह्मणानां चोभयथापि विष्णुप्रीत्यर्थमेव बलज्ञानयोः कार्यतेत्याह— **सर्वेषामिति** ।। २३ ।।

**वरद**— ननु यदा बलकार्ये विष्णुः प्रवृत्तः तदा तदङ्गबलाधिक्यं भगवद्भक्त्याद्याधिक्यज्ञापकमित्युक्तं यदा तु ज्ञानकार्ये भगवतः प्रवृत्तिः तदा देवावतारेषु भक्त्याद्याधिक्यज्ञापकं किमित्यपेक्षायामाह— **ज्ञानकार्य इति** ।। यदा ज्ञानकार्ये विष्णुः प्रवृत्तः तदा तदेव ज्ञानमेव स्वरूपाधिक्ये प्रमाणमिति चशब्दार्थः। इदानीं क्षत्रियेष्विति विशेषणव्यावर्त्यमाह— **अन्यत्रेति** ।। युद्धादिना बलाधिक्यमिव ज्ञानोपदेशादिना ज्ञानाधिक्यं लिङ्गस्य स्थूलदृष्टिभिरपि ज्ञातुं शक्यत्वादित्यर्थः। युद्धादौ प्रवृत्तेषु देवावतारेषु ज्ञानाधिक्यं स्थूलदृष्टिभिरपि ज्ञातुं न शक्यत इति पूर्वमुक्तमिति न विरोध इत्याशयेनाह— **क्षत्रियाणामिति** ।। तथा चोक्तं विशेषणं न विस्मर्तव्यमित्याह— **सर्वेषामिति** ।। सर्वेषां क्षत्रियाणां ब्राह्मणानां च सर्वेषां बलानां ज्ञानानां च विष्णुकार्यता- विशेषणमित्यर्थः। विष्णोः कार्यं एभ्यः तानि विष्णुकार्याणि तेषां भावस्तत्ता विष्णुकार्याङ्गत्वमिति भावः। नैसर्गिकत्वस्यापीदमुपलक्षणम् ।। २३ ।।

**जना**— प्रसङ्गादन्यदप्याह— **ज्ञानेति** ।। तथैव यदा ज्ञानकार्ये प्रवृत्तस्तदा क्षत्रियादौ ज्ञानमपि प्रमाणं ज्ञापकं भवति हि । ननु तर्हि ब्राह्मणेषु ज्ञानाधिकः क्षत्रियेषु बलाधिको गुणाधिक इति व्यवस्थायाः का गतिरित्यत आह— **अन्यत्रेति** ।। अन्यत्र दुष्टहननाख्यकार्यादन्यत्र ज्ञानमेव प्रमाणं ज्ञापकम् । अन्यत्र ज्ञानकार्यादन्यत्र क्षत्रियाणां बलं प्रमाणं ज्ञापकं भवति । सर्वेषां ब्राह्मणादीनां बलज्ञानादीनां च विष्णुकार्यता विष्णोः कार्यं येभ्यस्तस्य भावः ज्ञेया ।। २३ ।।

**ताम्र**— ननु ज्ञानमपि क्वचिद्गुणाधिक्ये लिङ्गं श्रूयते । तत्कथमयं नियम इत्यतो विषयभेदमाह— **ज्ञानकार्य इति** ।। यदा प्रवृत्तस्तदा तज्ज्ञानमेव प्रमाणमित्यनुकर्षणार्थश्चकारः। यदा भगवान् ज्ञानकार्ये दुष्टनिधने न प्रवृत्तः तदाधिक्ये किं ज्ञापकमित्यत आह— **अन्यत्रेति** ।। अन्यत्र अनवतारदशायां ज्ञानबलकार्यार्थं प्रवृत्यभावे । ज्ञानबलयोरुत्तमत्वज्ञापके च नारायणद्विट्तदनुबन्धिनिग्रहलक्षणविष्णुप्रियकार्यनिष्ठत्वमेवेत्याह— **सर्वेषामिति** ।। विष्णुकार्यता विष्णुप्रियकार्यनिष्ठतावश्यकीत्यर्थः। यद्वा सर्वेषां ब्रह्मादीनां बलज्ञानयोर्विष्णुविषये कार्यता तत्प्रीत्यर्थमेव कर्तव्येत्यर्थः ।। २३ ।।

**भारतश्री**— यदा नारायणः बलकार्ये प्रवृत्तः तदास्तु बलं देवावताराणां आधिक्यज्ञापकम् । यदा पुनः ज्ञानकार्ये प्रवृत्तः तदा तेषामाधिक्ये किं ज्ञापकमित्यत आह— **ज्ञानकार्येति** ।। यदा ज्ञानकार्ये प्रवृत्तः तदा तेषां ज्ञानमेव स्वरूपाधिक्ये ज्ञापकमिति चशब्दार्थः। अन्यत्र स्वीकृतक्षत्रधर्मादन्यत्र । अन्येषां सर्वेषां बलानां ज्ञानानां च । विष्णुकार्यता विष्णोः कार्यं येभ्यस्तानि विष्णुकार्याणि तेषां भावः तत्त्वम् ।। २३ ।।

**[१]कृष्णरामादिरूपेषु बलकार्यो जनार्दनः ।**
**दत्तव्यासादिरूपेषु ज्ञानकार्यस्तथा प्रभुः ।। २४ ।**

**व्यास**— 'प्रवृत्तो दुष्ट' इत्यत्र भगवान् बलकार्यो ज्ञानकार्यश्चेत्युक्तम् । केषु रूपेषु बलकार्यः केषु रूपेषु ज्ञानकार्यः यत् ज्ञाने इतरस्तत्र तथा स्यादिति जिज्ञासायामाह— **कृष्णेति** ।। उभयत्राप्यादिशब्दोक्ताः ।। २४ ।।

**वादि**— इदानीमवतारेष्वपि क्वचिन्निरवधिकबलमेव भगवदवतारत्वे प्रमाणम् । क्वचिन्निरवधिकज्ञानमेव भगवदवतारत्वे प्रमाणमिति भावेनाह— **कृष्णेति** ।। बलकार्यः बलस्यैव कार्यं दैत्यहननभूभारहरणादि-स्वावतारप्रयोजनं यस्य तथोक्तः। ज्ञानकार्यः ज्ञानस्यैव कार्यं वेदोपदेशवेदविभजनतदुपयुक्तशास्त्रकरणादिकार्यं यस्य तथोक्तः। उभयत्रापि ब्रह्मादिष्वसम्भावितमहाकार्यकरणेन भगवदवतारत्वं ज्ञातव्यमिति भावः।। २४ ।।

**सङ्क**— ननु केन केनावतारेण श्रीविष्णुर्बलकार्यो भवति केन केन अवतारेण ज्ञानकार्यो भवतीत्याकाङ्क्षायामाह — **कृष्णेति** ।। २४ ।।

**वरद**— ननु विष्णोः केष्ववतारेषु बलकार्ये प्रवृत्तिः केषु च ज्ञानकार्य इत्यत आह— **कृष्णरामादीति** ।। आदिपदेन नृसिंहादिरूपाणि गृह्यन्ते । बलस्य कार्यस्य दुष्टनिधनं यस्मात् स तथोक्तः। व्यासादीत्यादिपदेन कपिलवृषभादिरूपाणि गृह्यन्ते ज्ञानमेव कार्यं यस्य स तथोक्तः।। २४ ।।

**जना**— बलज्ञानकार्यता केन रूपेणेत्यत आह— **कृष्णेति** ।। २४ ।।

**ताम्र**— 'प्रवृत्तो दुष्टनिधने' इत्यत्र विष्णुर्बलकार्यो ज्ञानकार्यश्चेत्यर्थः। केषु रूपेषु बलकार्य केषु रूपेषु ज्ञानकार्यः इत्यत आह— **कृष्णेति** ।। २४ ।।

**मत्स्यकूर्मवराहाश्च सिंहवामनभार्गवाः ।**
**राघवः कृष्णबुद्धौ च कृष्णद्वैपायनस्तथा ।। २५ ।।**

**व्यास**— यत् ज्ञाने बलकार्यत्वं ज्ञानकार्यत्वं च स्पष्टं विज्ञायते चेति जिज्ञासायां अवतारमाह— **मत्स्येति** ।। रुचेः सुतो यज्ञः। वराहसिंहभार्गवराघवकृष्णवडवावक्त्रप्रभृतयो बलकार्याः। अन्ये ज्ञानकार्याः।। २५-२७ ।।

**वादि**— इदानीं पृथुनारदबलभद्रादीनामपि पुराणेषु भगवदवतारत्वोक्त्या तेषामपि मत्स्यकूर्मादिवत् स्वरूपावतारत्वभ्रमं निवर्तयितुं अवतारद्वैविध्यमाह— **मत्स्येत्यादिना** ।। २५ ।।

**सङ्क**— ननु श्रीकृष्णरामादीनां श्रीविष्णोः साक्षादवतारत्वे सिद्धे हीदं सर्वमुपपन्नं भवेत् एतदेव कुत इत्याशङ्क्य एतांश्च तत्प्रसङ्गादन्यांश्च साक्षादवतारान् दर्शयति— **मत्स्येत्यादिना** ।। २५ ।।

---

१. एतच्छ्लोकमारभ्य 'विशेषावेशिनो हरेः' पर्यन्तश्लोकाः पञ्चरात्रे वैष्णवतन्त्रे दृश्यन्ते इति वल्लभाचार्यकृतभागवतव्याख्याने भा.१-३-५ अस्ति ।

**वरद**— ननु कृष्णरामादीनां विष्णुत्वे सर्वमिदमुपपन्नं स्यात्तदेव कुत इत्यत आह— **मत्स्यकूर्मेत्यादिना** ॥ २५॥

**जना**— कृष्णादीनां विष्ण्ववतारत्वे इदं भवेदित्यतस्तदुपपादयति— **मत्स्येति** ॥ २५ ॥

**ताम्र**— कृष्णादीनामीश्वरत्वसिद्धौ उक्तमुपपद्यते सोऽपि कुत इति शङ्कां वारयन्नादिशब्दार्थमाह— **मत्स्येति** ॥ २५-२६ ॥

**भारतश्री**— साक्षादवतारानावेशांश्च दर्शयति— **मत्स्यकूर्मेत्यादिना** ॥ २५ ॥

**कपिलो दत्तवृषभौ [1]शिंशुमारो रुचेः सुतः ।**
**नारायणो हरिः कृष्णस्तापसो मनुरेव च ॥ २६ ॥**

**वादि**— रुचेः सुतो यज्ञः ॥ २६ ॥

**वरद**— रुचेः प्रजेश्वरस्य सुतो यज्ञनामा ॥ २६ ॥

**जना**— रुचेः सुतः यज्ञः ॥ २६ ॥

**भारतश्री**— रुचेः सुतः यज्ञः। नारायणो हरिः कृष्णः धर्मसुता एते ॥ २६ ॥

**महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान् ।**
**तथैव [2]वडवावक्त्रः कल्की [3]धन्वन्तरिः प्रभुः ॥ २७ ॥**

**वरद**— वडवाया अश्वाया वक्त्रमिव वक्त्रं यस्य स तथा। पूर्वोक्तः अश्ववक्त्र इति भावः ॥ २७ ॥

**जना**— स्त्रीरूपः नारायणीरूपः। वडवावक्त्रः वडवाग्निः समुद्रान्तर्वासी ।
'भूतादिभूतोऽम्बुनिधानमध्ये भूत्वा हरिः सर्वहरेति धाम्ना ।
अगाधमम्भो विदधाति भस्म यो वाडवाग्निर्नृहरिर्विचिन्त्यः ॥' इति ध्यानचक्रे ॥ २७ ॥

**भारतश्री**— वडवावक्त्रः अयमप्येको हयग्रीवावतारः ॥ २७ ॥

**इत्याद्याः केवलो विष्णुर्नैषां भेदः कथञ्चन ।**
**न विशेषो गुणैः सर्वैर्बलज्ञानादिभिः क्वचित् ॥ २८ ॥**

---

१. दोषस्य शर्वरीपुत्रः शिंशुमारो हरेः कला (भा.६-६-१४.) । २. 'नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव ।' (शान्ति. ३५१-६१.) । ३. धन्वन्तर्यवतारस्तु द्विवारम् । समुद्रमथनकाले तथा चन्द्रवंशे आयुपुत्रक्षत्रवृद्धवंशे 'धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्तकः। यज्ञभुक् वासुदेवांशः स्मृतमात्रार्तिनाशनः॥' (भा.९-१४-४२.)।

**व्यास**— कथञ्चनेति भेदाभेदौ वारयति । अभेदे इन्द्रार्जुनादाविव विशेषोऽस्ति किमिति जिज्ञासायामाह— **नेति** ।। २८ ।।

**सङ्क**— नन्वेषां केवलं श्रीविष्णुत्वं नोपपद्यते बहुत्वेन शिवादिवद्भेदसम्भवादित्याशङ्क्य आह— **नैषामिति** ।। तत्र हेतुमाह— **न विशेष इति** ।। बलज्ञानादिगुणैः सर्वेषामवताराणामविशेषेण परिपूर्णत्वात् भेदो नास्तीत्यर्थः ।। २८ ।।

**वरद**— इत्याद्या आद्यशब्देन पुरुषावतारादयो गृह्यन्ते केवलो विष्णुरित्यस्य व्यावर्त्यमाह— **नैषामिति**।। बलादितारतम्ये सति भेदोऽपि स्यादित्यतस्तदेव नास्तीत्याह— **न विशेष इति** ।। कदाचिदपि रूपविशेषे तारतम्यम् ।। २८ ।।

**जना**— केवलः भेदरहितः। अभेदेऽपि नेन्द्रार्जुनादिवत् विशेषोऽस्तीत्याह— **नेति** ।। एषां मत्स्यादीनां कथञ्चन भेदः सविशेषभेदः भेदाभेदो वा नेत्यर्थः। स्वाभेदेऽपि गुणैर्भेदस्स्यादित्यत आह— **नेति** ।। क्वचित् कस्मिंश्चिदवतारे ।। २८ ।।

**ताम्र**— ननु बहूनां नैकहर्यभेद इत्यत आह— **नेति** ।। कथञ्चनेति भेदाभेदनिषेधः। केनापि प्रकारेणेति वा । अभेदेऽपि नेन्द्रार्जुनादिवद्विशेष इत्याह— **न विशेष इति** ।। अत्र कूर्मवराहसिंहवामनभार्गवराघवकृष्णादयो बलकार्याः। अन्ये ज्ञानकार्या इति विवेकः ।। २८ ।।

**श्रीर्ब्रह्मरुद्रौ शेषश्च वीन्द्रेन्द्रौ काम एव च ।**
**कामपुत्रोऽनिरुद्धश्च सूर्यश्चन्द्रो बृहस्पतिः।। २९ ।।**

**व्यास**— ननु लक्ष्मीप्रभृतयोऽप्यवतारत्वेन श्रूयन्ते । ते कुतो न पठ्यन्ते । अनवतारत्वात् । अवतारत्वोक्तिः स्वावेशाभिप्रायेणेत्याह— **श्रीरित्यादि** ।। कामपुत्र इति भगवतोऽनिरुद्धस्य निवारणार्थम् । रौक्मिणेय इत्यपि तथा ।। २९-३२ ।।

**वादि**— भगवदवतारानिरुद्धव्यावर्तनाय कामपुत्र इत्युक्तम्। मूलरूपिकामादेव मूलरूप्यनिरुद्धोऽपि जातोऽस्ति स इत्यर्थः ।। २९ ।।

**सङ्क**— ननु श्रियो ब्रह्मरुद्रादीनां च पुराणादिषु श्रीविष्ण्ववतारत्वकथनेन 'इत्याद्याः केवलो विष्णुः' इति केवलशब्दस्यान्यव्यावर्त्याभावात् वैय्यर्थ्यमित्याशङ्क्य हरेः विशेषावेशित्वेनावतारत्वं न मुख्यत इति केवलशब्दः सार्थक इति परिहरति— **श्रीब्रह्मेत्यादिश्लोकपञ्चकेन** ।। २९ ।।

**वरद**— केवल इत्यस्य व्यावर्त्यान्तरमस्तीत्याह— **श्रीरित्यादिना** ।। कामपुत्रो अनिरुद्ध इत्येकः भगवद्रूप-व्यावृत्यर्थं कामपुत्र इति ।। २९ ।।

**जना**— श्रीब्रह्मादीनामवतारत्वेन श्रवणात्ते किमर्थं नोक्ता इत्यत आह— **श्रीति** ।। भगवद्रूपव्यावृत्त्यर्थं च कामपुत्र इति ।। २९ ।।

**ताम्र**— ननु महालक्ष्मीप्रभृतयोऽपि भगवदशंत्वेन श्रूयन्ते । कुतो न पठ्यन्ते । अनवतारत्वात् । अवतारत्वोक्ति–स्त्वावेशाभिप्रायेणेत्याह— **श्रीब्रह्मेति** ।। २९ ।।

**धर्म एषां तथा भार्या दक्षाद्या मनवस्तथा ।**
**मनुपुत्राश्च ऋषयो नारदः पर्वतस्तथा ।। ३० ।।**

**सङ्क**— एषां ब्रह्मादीनां भार्याः। स्वायम्भुवमन्वादयो मनवः ।। ३० ।।

**वरद**— धर्मो यमात्मकः। तथैषां ब्रह्मादीनां भार्याः सरस्वत्याद्याः। दक्षाद्याः प्रजेशाः। आद्यपदेन कर्दमादयो गृह्यन्ते । मनवः स्वायम्भुवाद्याः। मनुपुत्राः प्रियव्रताद्याः। ऋषयो मरीच्यादयः। पर्वतो हिमवान् तदभिमानी तन्नामा । यद्वा पर्वतनामा ऋषिः नारदस्य सखा ।। ३० ।।

**जना**— एषां ब्रह्मादीनां भार्याश्च । मनवः स्वायम्भुवादयः ।। ३० ।।

**[1]कश्यपः सनकाद्याश्च ब्रह्माद्याश्चैव देवताः ।**
**[2]भरतः कार्तवीर्यश्च वैन्याद्याश्चक्रवर्तिनः ।। ३१ ।।**

**सङ्क**— भरतो दुष्यन्तपुत्रः। वैन्यः पृथुः ।। ३१ ।।

**वरद**— सनकाद्याश्चत्वारः। ब्रह्माद्या इतरदेवताः। भरतो दौष्यन्तिः। वेनस्यापत्यं वैन्यः पृथुराद्यो एषां ते तथा अत्राद्यपदेन शशबिन्द्वादयः।। ३१ ।।

**जना**— वैन्यः पृथुः।। ३१ ।।

**गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनन्दनः ।**
**प्रद्युम्नो रौक्मिणेयश्च तत्पुत्रश्चानिरुद्धकः ।। ३२ ।।**

**वादि**— लक्ष्मणभरतशात्रुघ्ना इति त्रय इत्यर्थः। भगवदवतारप्रद्युम्नव्यावृत्त्यर्थं रौक्मिणेय इत्युक्तम् । कृष्णकुमारप्रद्युम्नपुत्रोऽप्येकोऽनिरुद्धोऽस्तीति भावेनोक्तं तत्पुत्र इति ।। ३२ ।।

**सङ्क**— लक्ष्मणभरतशत्रुघ्ना इति त्रयः ।। ३२ ।।

---

१. 'ममांशेन विजानीहि पृथिव्यां चक्रवर्तिनः। ऋषयश्च तथा ज्ञेया ममैवांशसमुद्भवाः।। यद्यद्विभूतिमत् सत्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ।।' इति । २. विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्तिनः। मन्वन्तरेषु सर्वेषु अतीतानागतेष्विह ।।' इति ब्रह्माण्ड/२अनुषङ्गपाद/२९अ/७८)। तथैव विष्णुधर्मोत्तरेऽपि (३खं/३५२/५५,५६)

**वरद**— गयो राजा प्रियव्रतवंशजः। लक्ष्मणाद्यास्त्रयः लक्ष्मणभरतशत्रुघ्नाः । रोहिणीनन्दनो बलभद्रः । रुक्मिण्या अपत्यं रौक्मिणेयश्च प्रद्युम्न इत्येकः। भगवद्रूपव्यावृत्त्यर्थं रौक्मिणेय इति विशेषणम् । तत्पुत्रः तस्य प्रद्युम्नस्य पुत्रोऽनिरुद्धः। अत्रापि भगवद्रूपव्यावृत्त्यर्थं विशेषणम् ।। ३२ ।।

**जना**— लक्ष्मणाद्यास्त्रयः। तद्गुणसंविज्ञानो बहुव्रीहिः। लक्ष्मणभरतशत्रुघ्नाः। रौक्मिणेयः रुक्मिणीपुत्रः प्रद्युम्न इत्याद्याः हरेर्विशेषावेशिनः। विशेषावेशित्वात्तथा व्यवहारः ।। ३२ ।।

**ताम्र**— गयस्य चक्रवर्तित्वेन प्रसिद्धत्वात् किञ्चिदाधिक्याद्वा पृथगुक्तिः ।। ३२ ।।

**भारतश्री**— लक्ष्मणाद्याः त्रयः लक्ष्मणभरतशत्रुघ्नाः ।। ३२ ।।

**नरः फल्गुन इत्याद्या विशेषावेशिनो हरेः ।**
**वालिसाम्बादयश्चैव किञ्चिदावेशिनो हरेः ।। ३३ ।।**

**व्यास**— एते विशेषावेशिन इत्युक्त्या केचिदल्पावेशिन सन्तीति प्राप्तमत के ते इति जिज्ञासायामाह— **वालीति** ।। ३३ ।।

**वादि**— नरः नरऋषिः।। ३३ ।।

**वरद**— नरः शेषात्मा । अत्राद्यपदेनोद्धवादयो गृह्यन्ते । एते विशेषावेशिनो विशेषत आवेशो येषु ते तथा विष्णोः स्वरूपाभिव्यक्तिविशेषवन्त इत्यर्थः। एतदभिप्रायेणैव लक्ष्मणादीनां भगवदवतारत्वोक्तिः पुराणेष्विति द्रष्टव्यम् । नन्वत्र मूलरूपग्रहणेनैव तदत्यन्ताभिन्नावताररूपेष्वपि विशेषावेशसिद्धेः किमर्थं लक्ष्मणाद्या इत्यादिना पुनरवतारग्रहणमित्यतो मूलरूपेषु विशेषावेशसद्भावेऽप्यवताररूपेषु सर्वत्र तत्सद्भावनियमाभावेन विशिष्यावतारग्रहणं युक्तमित्याह— **वालिसाम्बादय इति** ।। आदिपदेन कर्णादयो गृह्यन्ते ।। ३३ ।।

**जना**— विशेषावेशिन इत्यत्र विशेषपदव्यावर्त्यमाह— **वालीति** ।। ३३ ।।

**ताम्र**— ननु मूलरूपग्रहणेनैव तदत्यन्ताभिन्नावतारेष्वपि विशेषावेशसिद्धेः किमर्थं लक्ष्मणाद्या इति पुनरवतारग्रहणमित्यतो मूलरूपे विशेषावेशसद्भावेऽप्यवतारेषु सर्वत्र तद्भावनियमाभावेनावतारग्रहणम् । तत्रापि लक्ष्मणाद्या रोहिणीनन्दन इत्यवतारद्वयग्रहणं च युक्तमिति भावेनाह— **वालीति** ।। आदिपदेन युधिष्ठिरकर्णादयो गृह्यन्ते । तदुक्तं गीतातात्पर्यनिर्णये–

> [1]"ब्रह्मरुद्रौ शेषविपौ शक्राद्याः नारदस्तथा ।
> सनत्कुमारः कामभवोऽप्यनिरुद्धो विनायकः।।
> सुदर्शनाद्यायुधानि पृथ्वाद्याश्चक्रवर्तिनः।
> इत्याद्या विष्णुनाविष्टाः भिन्नास्संसारिणो हरेः।।

---

१. गी.ता. २-२५ ।

तेष्वेव लक्ष्मणाद्येषु त्रिष्वेवं च बलादिषु ।
नरार्जुनादिषु तथा पुनरावेश उच्यते ।
स्वल्पस्तु पुनरावेशो धर्मपुत्रादिषु प्रभो: ।।' इति ।। ३३ ।।

**तस्माद् बलप्रवृत्तस्य रामकृष्णात्मनो हरेः ।**
**अन्तरङ्गं हनूमांश्च भीमस्तत्कार्यसाधकौ[१] ।। ३४ ।।**

**व्यास**— बलकार्यानवतारान् विभज्य प्रदर्श्य तत्राङ्गजिज्ञासायां हनुमदादिरित्याह— **तस्मादिति** ।। ३४।।

**वादि**— इदानीं प्रकृतमुपसंहरन् प्रमेयान्तरं च दर्शयति— **तस्मादिति** ।। बलप्रवृत्तस्य बलकार्याय प्रवृत्तस्येत्यर्थः। हनूमान् भीमश्च अन्तरङ्गं यथा भवति तथा तत्कार्यसाधकाविति सम्बन्धः। अत्र भीमः प्रस्तुतः प्रासङ्गिको हनूमानिति ज्ञेयम् । प्राक् 'ब्रह्माधिकश्च देवेभ्य' इति प्रक्रान्तम् । अधुना हनुमद्भीमाभ्यामुपसंहारः क्रियते ।। ३४ ।।

**सङ्क**— 'भूभारहारिणो विष्णोः प्रधानाङ्गं हि मारुतिः' इत्यादिनोक्तार्थमुपसंहरति— **तस्मादिति** ।। ३४ ।।

**वरद**— 'भूभारहारिण' इत्यादिनोक्तमर्थमुपसंहरति— **तस्मादिति** ।। तत्कार्यसाधक इत्येतत् द्वाभ्यां सम्बध्यते ।। ३४ ।।

**जना**— 'प्रधानाङ्गं हि मारुतिः' इत्युक्तमर्थमुपसंहरन्नुपपादयति— **तस्मादिति** ।। बलकार्यप्रवृत्तस्य हनुमान् भीमश्चान्तरङ्गं यथा भवति तथा तस्य हरेः कार्यसाधकः ।। ३४ ।।

**ताम्र**— एवं बलज्ञानकार्यानवतारान् विभज्य 'प्रधानाङ्गं हि मारुतिः' इत्यादिनोक्तमुसंहरति— **तस्मादिति**।। श्रीब्रह्मेत्युक्तरीत्या श्रियोऽनन्तरमन्यातिशयेन भगवत्सन्निधिपात्रत्वाद्रामकृष्णाख्यहरेर्हनुमान् भीमश्चान्तरङ्गप्रियः । यतस्तत्कार्यसाधकः प्रधानाङ्गमतश्चान्तरङ्गप्रिय इति ।। ३४ ।।

**ब्रह्मात्मको यतो वायुः पदं ब्राह्ममगात् पुरा ।**
**वायोरन्यस्य न ब्राह्मं पदं तस्मात् स एव सः ।। ३५ ।।**

**व्यास**— सर्वेभ्यो देवेभ्यो ब्रह्माधिकः विष्णोः प्रियश्चेति साधनीयं न तु वायुः। अतः किं केन सङ्गतमित्यत आह— **ब्रह्मेति**।। वायोरिति व्यतिरेकः।। ३५ ।।

**वादि**— अतोऽसङ्गतिरित्याशङ्क्याह— **ब्रह्मेति** ।। यतः पुरा पूर्वकल्पे वायुर्मुख्यप्राणः । इदानीमस्मिन् कल्पे ब्रह्मात्मको ब्रह्मरूपी सन् ब्राह्मं पदमगात् । वायोरन्यस्य ब्राह्मं पदं न । तस्मात्स एव स वायुरेव ब्रह्मा । अतः वायुरूपहनुमद्भीमयोराधिक्येनोपसंहारे ब्रह्मण एवासावुपसंहार इति नासङ्गतिरिति भावः ।। ३५ ।।

---

१. 'तत्कार्यसाधकः' इति वरदराजीयपाठः ।

**सङ्क**— ननु मारुतेः सर्वाधिक्ये सति 'ब्रह्माधिकश्च देवेभ्यः' इत्यादेः किमायतमित्यत आह— **ब्रह्मात्मक इति** ।। 'वायुर्ब्रह्मात्मक' इति प्रतिज्ञातं तत्र हेतुमाह— **यतो वायुरित्यादिना** ।। ननु वायुवदन्यस्यापि ब्रह्मपदप्राप्तिरस्ति किमित्यत आह— **वायोरिति** ।। ३५ ।।

**वरद**— ननूक्तरीत्या मारुतेः सर्वाधिक्ये 'ब्रह्माधिकश्च' इत्येतत्कथं निदर्शितं स्यादित्यत आह— **ब्रह्मात्मक इति** ।। ब्रह्मात्मको वायुरिति प्रतिज्ञायां यत इत्यादिना हेतुरुक्तः। ब्राह्मं ब्रह्मसम्बन्धि । ननु तर्हि वायुरेव ब्रह्मेति न प्राप्नोति वायोरन्यस्यापि साधनानुष्ठाने सति ब्रह्मपदप्राप्तेः सम्भवेन ब्रह्मात्मकत्वसम्भवादित्याशङ्क्य अन्यस्य तत्प्राप्तियोग्यतैव नास्तीत्याह— **वायोरन्यस्येति** ।। स एव वायुरेव ब्रह्मा नान्य इत्यर्थः।। ३५ ।।

**जना**— वायोरन्तरङ्गत्वे सिद्धेऽपि 'ब्रह्माधिकश्च देवेभ्य' इत्यस्य कथं सिद्धिरित्यत आह— **ब्रह्मेति** ।। वायुर्ब्रह्मात्मकः ब्रह्माभिन्न इति प्रतिज्ञा । तत्र हेतुकथनम्— **यत इति** ।। पुरा पूर्वकल्पे । वायुः पश्चात् द्वितीयकल्पे ब्राह्मं पदं अगात् । तेन वायोराधिक्ये उपपादिते ब्रह्मण एवाधिक्यमुपपादितं भवति । नन्वन्यस्यापि ब्रह्मपदप्राप्तिर्भवत्वित्यत आह— **वायोरिति** ।। वायोरेवेति नियमान्नान्यस्य तत्पदप्राप्तिरिति भावः। निगमयति — **तस्मादिति** ।। स एव वायुरेव । सः ब्रह्मा ।। ३५ ।।

**ताम्र**— मारुत्याधिक्ये ब्रह्माधिक्ये किमायातमित्यत आह— **ब्रह्मात्मक इति** ।। अयं वायुरेष्यद्ब्रह्मात्मक इति प्रतिज्ञा । तत्र हेतुर्यतो वायुरिति । वायुत्वादिति यावत् । वायुः पदं ब्राह्ममगात् पुरेति दृष्टान्तः। पूर्वकल्पीय-वायुवदित्यर्थः। व्यतिरेकमप्याह— **वायोरिति** ।। निगमयति— **तस्मादिति** ।। ३५ ।।

**यत्र रूपं तत्र गुणाः भक्त्याद्याः स्त्रीषु नित्यशः ।**
**रूपं हि स्थूलदृष्टीनां दृश्यं व्यक्तं ततो हि तत् ।। ३६ ।।**

**व्यास**— श्रीः सर्वस्त्रीभ्यः वरेत्येतच्छास्त्रीयं तद् रुक्मिणीनिदर्शनेनोक्तमिति विवक्षावान् स्त्रीणामुत्तमत्वज्ञाने व्याप्तिलिङ्गमाह— **यत्रेति** ।। ३६ ।।

**वादि**— पूर्वं भीमस्य हरेः कार्येषु साक्षादङ्गत्वमुदितम् । इदानीं तत्पत्न्याः द्रौपद्या अपि भूभारहरणे साक्षादङ्गत्वं वक्तुं नारीज्यैष्ठ्ये कारणमाह— **यत्र रूपमिति** ।। ततस्तस्मात्कारणात् तत् रूपमेव गुणानां व्याप्यं लिङ्गम् ।। ३६ ।।

**सङ्क**— ननु देवानां क्षत्रियाणां ब्राह्मणानां पुरुषाणां ज्ञानभक्त्यादिगुणवैशिष्ट्ये बलमेव प्रमाणं चेत् स्त्रीषु ज्ञानादिगुणवैशिष्ट्ये किं ज्ञापकमित्यत आह— **रूपेति** ।। स्थूलदृष्टीनां रूपं व्यक्तं स्पष्टं दृश्यं न तु तथा ज्ञानादिकं यस्मात् ततः तद्रूपं ज्ञानादिगुणवैशिष्ट्ये ज्ञापकमित्यर्थः।। ३६ ।।

**वरद**— ननु 'देवादिषु बलज्ञाने एवाधिक्यज्ञापके' इत्युक्तं देवस्त्रीष्वाधिक्यज्ञापकं किम् ? बलमुत ज्ञानम्। नाद्यः तासां युद्धादिकरणाभावेन बलविशेषस्य ज्ञातुमशक्यत्वेन हेतोरज्ञानासिद्धिप्रसङ्गात् । न द्वितीयः तासां

बाहुल्येन ज्ञानप्रवर्तकत्वाभावेन ज्ञानविशेषस्य ज्ञातुमशक्यत्वेन पूर्वोक्तदोषानतिवृत्तेः । अतस्तासां तारतम्यज्ञानोपायः क इति जिज्ञासायामाह— **यत्र रूपमिति** ।। कुत इत्यतो लिङ्गज्ञानसम्भवादित्याह—**रूपं हीति** ।। हि यस्मात्स्थूलदृष्टीनां रूपं व्यक्तं दृश्यं द्रष्टुं योग्यं ततः कारणात् तद्रूपज्ञापकं भवत्येवेत्यर्थः ।। ३६ ।।

**जना**— ननु स्त्रीषु गुणवैशिष्ट्यज्ञापकं किम्? ज्ञानं बलं वा । नोभयमपि ज्ञातुं शक्यते प्रायेण । तज्ज्ञानोपायस्य व्याख्यानस्य युद्धस्य चाभावादित्यत आह— **यत्रेति** ।। रूपस्य हेतुत्वकथने निमित्तमाह— **रूपमिति** ।। यतः स्थूलदृष्टीनामिति षष्ठी तृतीयार्थे रूपं व्यक्तं स्फुटं यथा भवति तथा दृश्यं ज्ञेयम् । ततः स्फुटज्ञेयत्वात् तद्रूपं निमित्तमुक्तं हि ।। ३६ ।।

**ताम्र**— श्रियः सर्वाधिक्यं सर्वशास्त्रप्रमेयं भारते रुक्मिण्यादिरूपायाः सौन्दर्यातिशयोक्त्या ज्ञायत इति भावेन रूपित्वगुणाधिक्ययोर्व्याप्तिमाह— **यत्रेति** ।। नित्यशो नियताः। तास्वपि भक्तिज्ञानादिनैवोत्तमत्वानुमानं किं न स्यादित्यत आह— **रूपमिति** ।। हि यस्मात् ततस्तदेव लिङ्गमिति शेषः। ततो हि तत एव रूपादेव तद्भक्त्यादिकमिति वा । भक्तिज्ञानादिकं तु न लिङ्गं व्याख्यानादिष्वप्रवृत्तत्वेन अप्रतिभानात् । अन्यथा अज्ञायमानासिद्धिप्रसङ्गादिति भावः ।। ३६ ।।

**प्रायो वेत्तुं न शक्यन्ते भक्त्याद्याः स्त्रीषु यत्नतः ।**
**यासां रूपं गुणास्तासां भक्त्याद्या इति निश्चयः ।। ३७ ।।**

**व्यास**— रूपे दृश्यमानेऽपि भक्त्यादिगुणानामदर्शनान्नैषा व्याप्तिरित्यत आह— **यासामिति** ।। ३७ ।।

**वादि**— प्रायो वेत्तुं न शक्यन्ते स्वाध्यायप्रवचनादावप्रवृत्तत्वादित्यर्थः ।। ३७ ।।

**सङ्क**— तदेव प्रकटयति— **प्राय इति** ।। यत्र रूपमित्यादिनोक्तमर्थमुपसंहरति— **यासामिति** ।। ३७ ।।

**वरद**— ननु विपरीतं किं न स्यादित्याकाङ्क्षा पूर्ववदेव न कर्तव्येत्याह— **प्राय इति** ।। यत्नतः प्रयत्नेनापि अतो रूपमेव भक्त्यादीनां गमकमित्यर्थः ।। ३७ ।।

**जना**— तदेवोपपादयति— **प्राय इति** ।। यत्नतः प्रयत्नेन द्रौपद्याः धर्मकथनेन ज्ञानस्य सत्यभामायाश्च युद्धकरणेन बलस्याभिव्यक्तत्वात् प्राय इत्युक्तम् । उपसंहरति— **यासामिति** ।। ३७ ।।

**ताम्र**— ननु गार्गिमैत्रेय्यादीनां वादकथाप्रवृत्त्या ज्ञायत एवेत्यत उक्तम्— **प्राय इति** ।। भक्त्यादिगुणास्तेषु यत्नतः भक्तिमूलकप्रयत्नेन प्रायो वेत्तुं न शक्यन्ते । भक्त्यनुमापकस्य कथादिप्रयत्नस्य क्वाचित्कत्वात् प्रायो न भक्तिज्ञानादयो ज्ञायन्त इति भावः। व्याप्तिमुपसंहरति— **यासामिति** ।। ३७ ।।

**तच्च नैसर्गिकं रूपं द्वात्रिंशल्लक्षणैर्युतम् ।**
**नालक्षणं वपुर्मात्रं गुणहेतुः कथञ्चन ।। ३८ ।।**

**व्यास**— रूपं विशिनष्टि— **तच्चेति** ।। ३८ ।।

**वादि**— 'तच्च नैसर्गिकम्' इत्यत्र । द्वात्रिंशल्लक्षणैर्युतं तन्नैसर्गिकं रूपं गुणहेतुरिति सम्बन्धः।। ३८ ।।

**सङ्क**— ननु कीदृशं रूपं ज्ञानादिगुणवैशिष्ट्ये ज्ञापकमित्यत आह— **तच्चेति** ।। वैशिष्ट्यकारणं रूपं नैसर्गिकं द्वात्रिंशल्लक्षणैर्युतमपेक्षितमित्यर्थः। एतद्विपक्षं निषेधति— **नालक्षणमिति** ।। नन्वतिसुन्दरं रूपमनैसर्गिकं लक्षणरहितमपि गुणहेतुः किं न स्यादित्यत आह— **नालक्षणमिति** ।। अलक्षणमनैसर्गिकञ्चेति संयोज्यम् ।। ३८ ।।

**वरद**— अत्रापि रूपमात्रं नाधिक्यज्ञापकं असुरस्त्रीषु व्यभिचारात् किं तर्हि स्वाभाविकमेवेत्याह— **तच्चेति** ।। नैसर्गिकं स्वाभाविकं न तु रूपमात्रं स्थूलदृष्टिभिर्ज्ञातुं शक्यते न तु तदीयं स्वाभाविकत्वमप्यतः पुनरज्ञानासिद्धिरेव दोष इत्यत उक्तम्— **द्वात्रिंशदिति** ।। यद्रूपं द्वात्रिंशल्लक्षणैर्युतं तदेव नैसर्गिकमिति ज्ञातव्यमित्यर्थः। द्वात्रिंशल्लक्षणानि च पूर्वाध्याये गुरुलक्षणव्याख्यानावसरे दर्शितानि । द्रष्टुं शक्यन्त एवेति भावः। रूपे स्वाभाविकत्वविशेषण-कृत्यमाह— **नालक्षणमिति** ।। अलक्षणं द्वात्रिंशल्लक्षणरहितं वपुर्मात्रं रूपमात्रम् । स्वाभाविकमिति यावत् । तद्भक्त्यादिगुणहेतुर्न भवति ।। ३८ ।।

**जना**— व्यभिचाराद्धेतोः विशेषणमाह— **तच्चेति** ।। तद्रूपं नैसर्गिकं स्वाभाविकं यथा योग्यं द्वात्रिंशल्लक्षणोपेतं स्वाभाविकं यद्रूपं तदेव भक्त्यादि ज्ञापकमित्यर्थः। विशेषणव्यावर्त्यमाह— **नालक्षणमिति** ।। अलक्षणं द्वात्रिंशल्लक्षणरहितम् । वपुर्मात्रं कथञ्चन केनापि प्रकारेण गुणज्ञापनस्य हेतुः कारणं न ।। ३८ ।।

**ताम्र**— अतिसुन्दरदुर्योधनादिभार्यासु व्यभिचारवारणाय रूपं विशिनष्टि— **तच्चेति** ।। कीदृशं स्वाभाविकं तत्राह— **द्वात्रिंशदिति** ।। समग्रैः कैश्चिद्वेत्यर्थः। रूपे स्वाभाविकविशेषणकृत्यमाह— **नालक्षणमिति** ।। द्वात्रिंशल्लक्षणेष्वेकेनापि रहितमित्यर्थः ।। ३८ ।।

**आसुरीणां वरादेस्तु वपुर्मात्रं भविष्यति ।**
**न लक्षणान्यतस्तासां नैव भक्तिः कथञ्चन ।। ३९ ।।**

**व्यास**— विशेषणे निमित्तमाह— **आसुरीणामिति** ।। विशेषणस्यापि तत्र भावेऽतिव्याप्तिस्तदवस्थेत्यत आह— **नेति** ।। अतो नैजरूपाभावात् । भक्तिर्भक्त्याद्याः ।। ३९ ।।

**वादि**— वरादेरित्यत्रादिपदेन माया गृह्यते ।। ३९ ।।

**सङ्क**— नन्वनैसर्गिकलक्षणवपुर्मात्रस्य गुणहेतुत्वं कुतो नेत्यत आह— **आसुरीणामिति** ।। आसुरस्त्रीणां वरावेशनिमित्तमेव सुन्दरवपुर्मात्रं न नैसर्गिकं यतो अतश्च लक्षणानि न सन्ति अतस्तासां न भक्त्यादिगुणवैशिष्ट्-मित्यर्थः ।। ३९ ।।

**वरद**— आसुरीणां तु रूपं वरादिनिमित्तकं न स्वाभाविकमतस्तासां नाधिक्यमित्याह— **आसुरीणामिति** ।। वपुर्मात्रं न तु लक्षणोपेतं अतोऽस्वाभाविकमेवेत्यर्थः ।। ३९ ।।

**जना**— अनेन सिद्धमर्थमाह— **आसुरीणामिति** ।। वरावेशादेः सकाशाल्लक्षणानि न भविष्यन्ति । अतः लक्षणाभावाद्भक्तिः कथञ्चन न ।। ३९ ।।

**ताम्र**— नन्वासुरीणां रूपित्वे तत्कारणलक्षणान्यावश्यकानि अन्यथाकारणकार्योत्पादस्स्यादित्यत आह— **आसुरीणामिति** ।। आदिपदेनावेशग्रहणम् । वपुर्मात्रं शोभनाकारमात्रम् । 'वपुस्तु शोभनाकारः' इत्यभिधानात् ।। ३९ ।।

**तस्माद् रूपगुणोदारा जानकी रुग्मिणी तथा ।**
**सत्यभामेत्यादिरूपा श्रीः सर्वपरमा मता ।। ४० ।।**

**व्यास**— यदर्थं यत्र रूपमित्याद्युक्तं तदाह— **तस्मादिति** ।। रूपस्य भक्त्याद्यैः व्याप्तत्वात्तस्माच्छ्रीः सर्वस्त्रीभ्यो परमा मता ।। ४० ।।

**सङ्क**— नन्वेवं द्वात्रिंशल्लक्षणोपेतं नैसर्गिकं रूपमेव हेतुरित्युक्तं तदुभययुक्तत्वं मुख्यतः कासामित्यत आह — **तस्मादिति** ।। तस्मान्नैसर्गिकरूपलक्षणयोरेव गुणवैशिष्ट्यकारणत्वात् तयोश्चात्र विद्यमानत्वादित्यर्थः ।। ४० ।।

**वरद**— एवं नैसर्गिकस्य लक्षणोपेतस्य रूपस्य भक्त्यादिहेतुत्वे सिद्धे तत्तारतम्यात् देवतास्त्रीणां स्वरूपतारतम्यं सिद्धमित्याह— **तस्मादिति** ।। तस्मादुक्तलिङ्गोपेतत्वात् जानक्यादिरूपा श्रीः सर्वपरमा सर्वाभ्यः स्त्रीभ्य उत्तमा मतेत्यर्थः ।। ४० ।।

**जना**— द्वात्रिंशल्लक्षणोपेतनैसर्गिकरूपत्वात् भक्त्यादियुताः का इत्यतस्तामुदाहरति— **तस्मादिति** ।। श्रीरूपगुणोदारा रूपगुणैरुत्कृष्टा यतस्तस्मात्सर्वपरमा सर्वाभ्यः श्रेष्ठा उत्तमा मता ।। ४० ।।

**ताम्र**— एवं व्याप्तेर्व्यभिचाराभावमुक्त्वानुमानप्रकारमाह— **तस्मादिति** ।। व्यभिचाराभावादित्यर्थः। 'रूपगुणोदारा' इति हेतुगर्भविशेषणम् । रूपेण सौन्दर्येण तत्साध्यगुणैश्चोदारत्वात् सर्वपरमेत्यर्थः ।। ४० ।।

**ततः पश्चाद् द्रौपदी च सर्वाभ्यो रूपतो वरा ।**
**भूभारक्षपणे साक्षादङ्गं भीमवदीशितुः ।। ४१ ।।**

**व्यास**— श्रियोऽनन्तरं सरस्वती स्त्रीभ्यो वरेति शास्त्रीयं प्रमेयं तच्च भारते द्रौपदीनिदर्शनेन समर्थितमित्याह — **ततः पश्चादिति** ।। नैजरूपतो वरा ततः सर्वस्त्रीभ्यो वरा । नन्वेवं सति सैव भारतीति भारती सर्वस्त्रीभ्यो वरा स्यात् न तु सरस्वतीति चेत् न तस्या एव कल्पान्तरे सरस्वतीत्वात् भूभारक्षपणे भगवतो मुख्याङ्गत्वात् भगवतः प्रिया चेत्याह— **भूभारेति** ।। ४१ ।।

**सङ्क**— ननु श्रीदेव्यनन्तरं रूपगुणोदारत्वं कस्येत्यत आह— **ततः पश्चादिति** ।। ननु श्रीदेव्यनन्तरं द्रौपद्या एव गुणोदारत्वं केन कारणेनेत्यत आह— **भूभारेति** ।। ४१ ।।

**वरद**— ततः लक्ष्म्याः पश्चादनन्तरं द्रौपदी सर्वाभ्यो रूपतो वरा तत उत्तमेत्यर्थः। न केवलं रूपाधिक्यात् सर्वाधिक्यं किन्तु हरेर्भूभारहरणे कार्ये भीमवत् साक्षादङ्गत्वादपि सर्वाधिक्यं ज्ञातव्यमित्याह— **भूभारेति** ।। ४१ ।।

**जना**— 'परम' इत्यनेन सूचितपरापरभावमाह— **तत इति** ।। तस्या अङ्गत्वमाह— **भूभारेति** ।। ईशितुः हरेः भीमवद्भूभारस्य क्षपणे निरसने नाशन इति यावत् । साक्षादङ्गं भवति ।। ४१ ।।

**ताम्र**— महालक्ष्म्यनन्तरं भारती सर्वस्त्रीभ्यो वरेति शास्त्रीयं प्रमेयं द्रौपद्या रुक्मिण्याद्यनन्तरं रूपातिशयोक्त्या ज्ञायत इत्याह— **तत इति** ।। रूपतो वरा रूपेण वरा । रूपतः रूपातिशयाद्धेतोः तदनन्तरं द्रौपदी सर्व–स्त्रीभ्यो भक्त्यादिभ्यो वरेत्यर्थः। भूभारहरणे भीमवदव्यवधानाङ्गत्वाच्चोत्तमत्वमित्याह— **भूभारेति** ।। ४१ ।।

**हन्ता च वैरहेतुश्च भीमः पापजनस्य तु ।**
**द्रौपदी वैरहेतुः सा तस्माद् भीमादनन्तरा ।। ४२ ।।**

**व्यास**— 'भीमवत्' इत्युक्त्या तत्समकक्षया भगवतः प्रियेति प्राप्नोति अत आह— **हन्तेति** ।। ततः सरस्वत्या एव ब्रह्मणोऽनन्तरं भगवत्प्रियत्वमुक्तं भवति ।। ४२ ।।

**वादि**— बाल्ये लीलया धृतराष्ट्रपुत्राणां वृक्षाग्रपातनताडनादिना वैरहेतुरिति भावेनोक्तम्— **वैरहेतुरिति** । द्रौपदी वैरहेतुरित्यत्र दुर्योधनादीनुपेक्ष्य पाण्डवपरिग्रहेण दुर्योधनादीनां पत्नीभ्योऽपि कोटिगुणाधिकलावण्यवत्त्वेन हन्तव्यदुर्योधनादीनां मनसि वैरहेतुः। सभायां भीमस्य पुरतः तत्कृतकेशग्रहणादिना हन्तुर्भीमस्य मनसि वैरहेतुश्चेत्यर्थः। अतो भूभारदुर्योधनसंहारे द्रौपद्येव प्रधानाङ्गमिति भावः।। ४२ ।।

**सङ्क**— ननु द्रौपद्या भीमवदीशितुरङ्गत्वं चेदुभयोः साम्यमेव स्यादित्यत आह— **हन्ता चेति** ।। ४२ ।।

**वरद**— ननु साक्षादङ्गत्वाविशेषात् भीमसाम्यमेव प्राप्तमित्याशङ्क्य साक्षादङ्गत्वेऽपि विशेषोऽस्तीत्याह— **हन्ता चेति** ।। भीमस्य वैरहेतुत्वे सति दुर्योधनादिवैरिहन्तृत्वमप्यस्तीति द्रौपद्यास्तु वैरहेतुत्वमात्रमित्यतो विशेषान्न साम्यमिति भावः।। ४२ ।।

**जना**— साक्षादङ्गमिति प्राप्तभीमसाम्यं निवारयति— **हन्तेति** ।। भीमस्य वैरहननयोः कारणत्वाच्छ्रैष्ठ्यम् । द्रौपद्यास्तु वैरमात्रहेतुत्वात्तदानन्तर्यमित्यर्थः।। ४२ ।।

**ताम्र**— भीमसाम्यं प्रतिक्षिपति— **हन्तेति** ।। वैरहेतुः दुर्योधनादीनां हन्तव्यत्वोपयुक्तकृष्णभीमादिषु वैरहेतुः। तुशब्देनार्जुनादिभ्योऽतिशयेनेति सूचयति ।। ४२ ।।

**बलदेवस्ततः पश्चात् ततः पश्चाच्च फल्गुनः ।**
**नरावेशादन्यथा तु द्रौणिः पश्चात् ततोऽपरे ।। ४३ ।।**

**व्यास**— शेषादयो वाय्वाद्यनन्तरा इति शास्त्रीयं प्रमेयं बलदेवादिनिदर्शनेन समर्थितमित्याह— **बलदेव इति** ।। ४३ ।।

**वादि**— शेषस्य वायोरनन्तरं हरिकार्याङ्गत्वम् । तदनन्तरमिन्द्रस्य ततः पश्चादन्येषामिति यच्छास्त्ररहस्यं, तद्भारते बलरामादिनिदर्शनेन दर्शितमित्याह— **बलदेव इति** ।। ततः भीमद्रौपद्योः पश्चात् । बलदेवो हरिकार्याङ्ग–मित्यर्थः। ततः बलदेवपश्चात् नरावेशान्निमित्तात्फल्गुनः हरिकार्याङ्गम् । अन्यथा नरावेशमनपेक्ष्य स्वरूपविचारे। पश्चात् बलदेवात् पश्चात् । द्रौणिः हरिकार्याङ्गम् । द्रौणिबलदेवयोः शेषरुद्रत्वेन साम्येऽपि बलदेवे हरेः शुक्लकेश–सन्निधानादाधिक्यम् । ततः द्रौणेरनन्तरम् । अपरे फल्गुनाद्याः हरिकार्याङ्गमिति योजना ।। ४३ ।।

**सङ्क**— अधुना श्रीदेव्या अनन्तरं द्रौपद्या वैशिष्ट्यप्रसङ्गात् श्रीकृष्णावतारेऽङ्गभूतानां बलभद्रादीनामपि प्रकारान्तरेण वैशिष्ट्यप्रकारमाह— **बलदेव इति** ।। बलदेवानन्तरं द्रौणेः वक्तव्यत्वे फल्गुनः केन हेतुनोक्तः इत्यत आह— **नरावेशादिति** ।। अन्यथा तु द्रौणिरित्यस्य नरावेशाभावे द्रौणिर्वरः तदनन्तरं फल्गुन इत्यर्थः। ततो अर्जुनात्पश्चात् अपरे प्रद्युम्नानिरुद्धयुधिष्ठिरनकुलसहदेवाद्या यथायोग्यं वरा इत्यर्थः।। ४३ ।।

**वरद**— अङ्गत्वेनाधिक्यकथनप्रसङ्गात् कृष्णावतारेऽङ्गभूतानां तारतम्यमाह— **बलदेव इति** ।। ननु विशेषावतारात् बलदेवानन्तरमश्वत्थाम्नो वक्तव्यत्वे ततः पश्चाच्च फल्गुन इतीन्द्रावतारस्यार्जुनस्याभिधानं किं निमित्तमित्यत उक्तम्— **नरावेशादिति** ।। अन्यथा तु नरावेशाभावे तु बलदेवस्य पश्चात् द्रौणिरित्यर्थः। द्रौणिबल–भद्रयोः साम्येऽपि सामान्यावेशविशेषाभ्यां विशेषात् द्रौणिः पश्चादित्युक्तम् । ततः फल्गुनानन्तरमपरे द्रोणाद्याः ।। ४३ ।।

**जना**— तदनन्तरमङ्गभूतमाह— **बलेति** ।। ततः द्रौपद्याः पश्चाद्बलदेवः। ततः पश्चात् बलदेवानन्तरं फल्गुनः। फल्गुनस्याश्वत्थाम्नः सकाशाच्छ्रैष्ठ्ये कारणम्— **नरावेशादिति** ।। अन्यथा नरावेशाभावे द्रौणिः बलभद्रानन्तरम् अश्वत्थामा । यद्यपि भरतवालिनाविव द्रौणिबलदेवाविति वक्तव्यं समत्वात् । तथापि द्रौण्यपेक्षया बलदेवे विशेषावेशात्ततः पश्चादित्युक्तम् । तु विशेषतः द्रौण्यनन्तरमर्जुन इति । ततः पश्चाद्रौण्यर्जुनानन्तरं परे प्रद्युम्नानिरुद्धादयः ।। ४३ ।।

**ताम्र**— शेषादयो वाय्वनन्तरा इति शास्त्रीयं तत्त्वं 'नो मानद' इति विशिष्योक्त्या सूचितम् बलभद्रादिनिदर्शनेन समर्थितमित्याह— **बलदेव इत्यादिना** ।। द्रौणिस्ततोऽर्जुनात् पश्चात् । रुद्रावतारस्याश्वत्थाम्नो नार्जुनान्तर्यं युक्तमित्यत उक्तम्— **नरेति** ।। हरीरयुतशेषस्य नरत्वादिति भावः। बलभद्रे शुक्लकेशावेशप्राचुर्यादर्जुनोत्तमत्वो–पपत्तिः। अन्यथा नरावेशाभावे बलभद्रपश्चात् द्रौणिः नार्जुनात् पश्चादित्यर्थः।। ४३ ।।

**भारतश्री**— अपरे द्रोणाद्याः।। ४३ ।।

**रामवज्जाम्बवत्याद्याः षट् ततो रेवती तथा ।**
**लक्ष्मणो हनुमत्पश्चात् ततो भरतवालिनौ ।**
**शत्रुघ्नस्तु ततः पश्चात् सुग्रीवाद्यास्ततोऽवराः ।। ४४ ।।**

**व्यास**— मूलरामायणव्यवस्था चात्र कृतेत्याह— **लक्ष्मण इति** ।। ४४ ।।

**वादि**— रामायणकथातात्पर्यशोधनेऽपि वायुशेषादीनामनेनैव प्रकारेण हरिसेवाङ्गत्वे तारतम्यं हनुमदादिरूपेषु निदर्शितमित्याह— **लक्ष्मण इति** ।। हनुमत्पश्चात् हनुमतः पश्चात् । हनुमत्पश्चादिति वदन् हनुमतो मुख्यतो हरिकार्याङ्गत्वमित्यभिप्रैति । गिर्यानयनसमुद्रोल्लङ्घनादिना हनुमतो मुख्यतो हरिसेवाङ्गत्वमिति सुप्रसिद्धमिति सूचनाय पृथगुक्तम्—

'गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ।।'

इति कथासङ्ग्राहकसर्गेऽपि वाल्मीकेर्वचनम् । भरतस्य कामात्मकत्वेन वालिन इन्द्रात्मकत्वेन साम्यात् समतयैव हरिसेवाङ्गत्वमिति भावेन भरतवालिनावित्युक्तम् । वालिनः शीघ्रं मृतत्वेन हरिसेवाविच्छेदात् भरतस्य स्वर्गारोहणपर्यन्तमविच्छेदेन सेवकत्वादादौ ग्रहणम् ।। ४४ ।।

**सङ्क**— एवं तावत् कृष्णावतारेऽङ्गभूतानां बलभद्रादीनां तारतम्यमुक्त्वा इदानीं श्रीरामावतारेऽङ्गभूतानां यथायोग्यतया तारतम्यमाह— **लक्ष्मण इत्यादिना** ।। ४४ ।।

**वरद**— सिंहावलोकनेन षण्महिषीणां स्वरूपं दर्शयति— **रामवदिति** ।। रामवत् बलभद्रवत् जाम्बवत्याद्याः षट् हरेः स्त्रियो ज्ञातव्याः। 'जाम्बवत्याद्याः' इत्याद्यपदेन मित्रविन्दानीलाभद्रालक्षणाकालिन्द्यः पञ्च गृह्यन्ते । ततस्ताभ्य अनन्तरं रेवती बलभद्रस्य भार्या ज्ञातव्येत्यर्थः। एवं कृष्णावतारेऽङ्गभूतानां ब्रह्मादिरूपिणां भीमादीनां तारतम्यमुक्त्वा रामावतारेऽपि तद्रूपिणां हनुमदादीनां अङ्गताक्रमेण तारतम्यमाह— **लक्ष्मण इति** ।। आदौ हनूमान् तत्पश्चाल्लक्ष्मणः। ततो लक्ष्मणादनन्तरं भरतवालिनौ कामेन्द्रावतारत्वात् । ततस्ताभ्यां सकाशात् शत्रुघ्नः ततः शत्रुघ्नात् सुग्रीवाद्याः। आद्यपदेनाङ्गदादय अवताराः नीचा इत्यर्थः ।। ४४ ।।

**जना**— पुरुषेषूक्त्वा स्त्रीष्वप्याह— **रामवदिति** ।। जाम्बवत्याद्याः षण्महिष्यः । जाम्बवत्याः साक्षात् ग्रहणाज्जाम्बवती रामवदङ्गं अन्यास्तु किञ्चिन्न्यूना इति ज्ञातव्यम् । ततः षण्महिष्यनन्तरं रेवती बलदेवभार्या तथाङ्गमित्यर्थः। एवं वायुभारतीशेषरुद्रादीनां तारतम्यं कृष्णावतारेऽवतीर्णभीमद्रौपदी बलदेवद्रौणिपार्थादिभि-रुपपाद्येदानीं रामावतारस्थितहनुमदादिभिः तमेव तारतम्यक्रममाह— **लक्ष्मण इति** ।। हनुमत्पश्चाल्लक्ष्मणः ततः लक्ष्मणानन्तरं भरतवालिनौ समत्वात् द्विवचनेन निर्देशः कृतः। ततस्तयोः ततः शत्रुघ्नात् सुग्रीवाद्या अवराः ।। ४४ ।।

**ताम्र**— ।। **रामवदिति** ।। देव्यावेशकाल इति ज्ञेयम् । न कृष्णावतारे वाय्वादीनां क्रमिकमङ्गत्वं पाक्षिकमिति मन्तव्यम्, रामावतारेऽप्युक्तक्रमेणैवाङ्गत्वादिति भावेन भारतोक्तरामकथातात्पर्यमाह— **लक्ष्मण इति** ।। वाल्यपेक्षया भरतस्येषन्न्यूनत्वेऽप्यावेशाधिक्यविवक्षया प्रथमग्रहणम् ।। ४४ ।।

**भारतश्री**— 'रामवज्जाम्बवत्याद्याः' इत्यत्र जाम्बवती रामवत् अन्यास्तदपेक्षया किञ्चिन्न्यूना इति विशेषो ज्ञातव्यः।। ४४ ।।

**रामकार्यं तु यैः सम्यक् स्वयोग्यं न कृतं पुरा ।**
**तैः पूरितं तत् कृष्णाय बीभत्स्वाद्यैः समन्ततः ।। ४५ ।।**

**व्यास**— यदन्तरङ्गत्वं प्रियत्वे हेतुत्वेनोक्तं कस्मिंश्चिदवतारेऽनन्तरङ्गाणामन्तरङ्गत्वप्रतीतेः अन्तरङ्गाणां चानन्तरङ्गत्वस्येति शङ्कां विशेषं कथयन् वारयति— **रामेति** ।। ४५ ।।

**वादि**— वालिना बहुसेवा न कृता । कथं तस्य भरतसाम्येन हरिसेवाङ्गत्वमित्यत आह— **रामेति** ।। एवं चार्जितलक्षधनस्यार्जिष्यमाणलक्षधनस्य च यथा साम्यं तथा भरतवालिनोः साम्यमिति भावः। 'बीभत्स्वाद्यैः' इत्यत्राद्यपदेन द्रोणादयो गृह्यन्ते ।ताररूपेण वालिरूपेण च रामायणे स्वयोग्यसेवाया अकरणादर्जुनरूपेण द्रोणरूपेण च महती सेवा कृतेति भावः ।। ४५ ।।

**सङ्क**— ननु श्रीरामावतारे कृष्णावतारे चैते कार्यसाधनत्वेन योग्यतयाङ्गत्वं यल्लक्ष्मणादीनां चोक्तं तत्कथं निश्चीयते । वालिप्रमुखानां श्रीरामावतारे यथायोग्यतया तत्कार्यसाधकत्वाभावात् । कर्णादीनां श्रीकृष्णावतारे यथायोग्यतया तत्कार्यसाधकत्वाभावादित्याशङ्कायां सविस्तरं परिहरति— **रामकार्यमित्यादिना** ।। यैः पुरा रामकार्यं स्वयोग्यं न कृतं तैर्भारतादौ तत्कार्यं कृष्णाय परिपूरितम् । समन्ततः सर्वात्मना । यैश्च योग्यताया अधिकं तत्र रामावतारे श्रीरामकार्यं कृतं तैः पश्चाद्धरेः विप्रतीपं कृतम् । अत एव न्यूनत्वेऽन्यत्र स्वयोग्यताया आधिक्येन तदाधिक्यं न्यूनत्वपूर्त्यर्थमेव भवतीत्युभयत्रापि स्वयोग्यतायाः सममेव भवतीत्युभयत्रापि आधिक्ये पश्चाद्धरेः प्रतिपक्षकरणेन तदाधिक्यं गच्छति इत्युभयत्रापि स्वयोग्यतायाः साम्यमेवेति तेषामुभयत्र स्वयोग्यताया अङ्गत्वं निश्चीयत इत्यर्थः ।। ४५ ।।

**वरद**— नन्ववतारद्वये सेवातारतम्याद्योग्यतातारतम्यं ज्ञातव्यमित्युक्तम् । तदनुपपन्नम् । तथात्वे रामावतारे वाल्यपेक्षया सुग्रीवे सेवाधिक्यस्य प्रतीयमानत्वेन तदपेक्षया तस्याधिक्यापत्तेः, तथा कृष्णावतारे कर्णाद्यपेक्षया नकुलादिषु सेवाधिक्यस्य प्रतीयमानत्वेन तदपेक्षया तेषामाधिक्यापत्तेः। किञ्च कैश्चिदवतारद्वयेऽपि सेवाधिक्यस्य कृतत्वेन सर्वाधिक्यापत्तिरिति शङ्कात्रयं क्रमेण परिहरति— **रामकार्यमित्यादिना** ।। पुरा रामावतारे रामकार्ये सेवारूपं स्वयोग्यं यैः सम्यक् न कृतं वाल्याद्यैः बीभत्स्वाद्यैः अर्जुनादिरूपैः पुनः कृष्णावतारे कृष्णाय तत्सेवारूपं कार्यं पूरितं स्वयोग्यत्वानुसारेण पूर्णं कृतम् । समन्तत इति भूभारहरणाद्यनेकप्रकारेणेत्यर्थः।। ४५ ।।

**जना—** नन्ववतारेषु हरेः दुष्टवधादिनाङ्गत्वे वाल्यादीनां रामावतारे सेवाऽकरणादनुत्तमत्वं सुग्रीवादेः सेवाधिक्येनाधिक्यं तथा कर्णादीनामधमत्वं विविदादीनामुत्तमत्वं स्यात् । तथा च न स्वरूपनिर्णयः स्यादित्यत आह— **रामकार्यमिति** ।। समन्ततः सर्वात्मना ।। ४५ ।।

**ताम्र—** यो यदपेक्षयातिशयाङ्गं स तस्मादुत्तमः। य उत्तमो न भवति स तस्मादतिशयाङ्गं न भवतीति प्राचीनव्याप्तिरयुक्ता । सुग्रीवापेक्षयाल्पाङ्गेऽपि वालिकर्णादौ तदुत्तमत्वसद्भावेनाप्रयोजकत्वात् । वालिकर्णा-पेक्षयाधिकाङ्गेऽपि सुग्रीवादौ तदुत्तमत्वाभावेनान्वयव्यतिरेकव्यभिचार इत्यत आह— **रामकार्यमिति** ।। तत् ऊनं रामकार्यम् । कृष्णाय तत्प्रीतये पूरितम् । ततस्सममप्राप्तप्राप्त्योरिति शेषः।। ४५ ।।

**राम— 'रामकार्यं तु......वैशेष्यात्तत्र निर्णयः'** इत्यत्र पुरा रामावतारे । यैर्देवैः । तु । स्वस्वावतारैः स्वयोग्यं स्वैः स्वैः क्रियमाणं रामकार्यं सम्यक्कृतं तैस्तैर्देवैः स्वस्वावतारैः रामकार्यं अधिकं कृतं तैः स्वस्वावतारैः कर्णाद्यैः अत्र कृष्णावतारे ऊनं सम्यङ् न कृतमित्यर्थः । यैर्देवांशैः विविदाद्यैरवतारद्वयेऽपि स्वकरणीयसाधनापेक्षयाधिकं कृतं तैः पश्चात् कृष्णावतारे हरेः कृष्णस्य विप्रतीपं अतिविरुद्धं कृतं हि यस्मात्तस्मात् प्रादुर्भावद्वये सर्वेषां अधिकारिणां स्वस्वयोग्यज्ञानपूर्तिरिति निर्णयः कृतः शास्त्र इति शेषः । सर्वेषां स्वस्वयोग्यसाधनपूर्तिः रामकृष्णसेवयैव पूर्तिर्भवतु इति हरिणा निर्णयः कृत इति वा । तस्मादेतयोः रामकृष्णयोर्विषये करणीयं यत्किञ्चिच्छुभं वा अशुभं वा कर्म यदि न कृतं तर्हि स्वकरणीयं शुभाशुभं अन्यत्र इतरावतारे न पूर्यते । तस्मात् अत्रैव रामकृष्णावतार एव स्वयोग्यसाधनपूर्तिर्भवतीति निर्णयः। अत्राप्ययं विशेषो बोद्धव्यः। स्वयोग्यरामसेवायां किञ्चिन्न्यूनमपि कृष्णसेवया पूर्णं भवतीति । कुतः कृष्णावतारस्य पश्चात्तनत्वात् । अत्र कृष्णावतारे वैशेष्यात् कृष्णसेवया पूर्णं भवत्विति भगवत्सङ्कल्पविशेषादित्यर्थः । 'सैषानन्दस्यमीमांसा भवति। [1]'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः' इत्यादि तैत्तरीयश्रुत्युक्तानन्दः अपरोक्षज्ञानेनैव ।[2]"येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चित' इत्युक्तेः । तत्तदधिकारिणां पृथक्पृथगेतावदिति क्लृप्तो भवति । तद्वदेव अपरोक्षज्ञानानन्तरं अनुष्ठीयमानसाधनमपि क्लृप्तं भवति । अतस्तत्फलरूपं आनन्दवैचित्र्यं च क्लृप्तमेव इति ध्येयम् । तदपि उभयविधम् । सत्कर्मकरणेन प्राप्यम् । [3]कर्म अकरणेन प्राप्यं चेति । तदुभयमपि अनेकविधम् । तथा हि तात्त्विकदेवानां अधिदैवाधिभूताध्यात्मनियमनरूपविष्ण्वाज्ञाकरणेन प्राप्यं अवताररूपैरावेशरूपैश्च क्रियमाणश्रवणमननप्रवचनराजसूयादियज्ञकरणरामकृष्णाद्यवतारादिसेवादिना च प्राप्यं आनन्दवैचित्र्यं भिन्नभिन्नमेव । तथा गोहननसुरापानब्रह्महननस्वोच्चदारपरिग्रहविष्णुवैष्णवद्वेषाद्यनेकविधकर्माकरणेन प्राप्यानन्दवैचित्र्यं अनेकविधम् । शुभकर्मप्राप्यं यदानन्दवैचित्र्यं तदशुभकर्मकरणात् न नश्यति । [4]"देवानां नाशुभाद्ध्रासः' इत्युक्तेः किन्तु शुभकर्माकरणादेव तल्लभ्यते । तदेव [5]........ तदुक्तं ईशावास्यभाष्ये-

[6]"अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रासः आनन्दस्य भवेद्ध्रुवम् ।।

---

१. तै.उ. द्वितीयाध्यायः । २. सू.भा. ३-४-२५ । ३. अत्र कर्मशब्देन विकर्म विवक्षितम् । ४. भा.ता. ५-६-२ । ५. अन्तरितो भागः त्रुटितः । ६. ई.भा. द्वितीयमन्त्रः ।

अतोऽलेपेपिऽलेपस्यात् अतः कार्यैव सा सदा ।।' इति ।

श्रेष्ठपराधात् विकर्माकरणप्राप्यं यदानन्दवैचित्र्यं तच्छ्रेष्ठापराधादिकरणात् न लभ्यते । तदेव श्रेष्ठापराधाख्य दोषलेप इत्युच्यते । तदेतदुक्तं पञ्चमतात्पर्ये –

[1]"देवानां नाशुभाद्ध्रासः शुभात् काचित् सुखोन्नतिः ।
अशुभाभावजोन्नाहो महाधीकारिणामपि ।
अशुभे कृते न भवति तारतम्याच्च स स्मृत' ।। इति ।

एवं कल्यादीनां अपि अन्यथाज्ञानदार्ढ्यमेव अपरोक्षस्थानीयं भवति । तदनन्तरकृतहरिगुरुस्वोत्तमद्रोहादिना तमसि दुःखवैचित्र्यं भवतीति । एवं सत्यपि देवानां अवताररूपैश्च रामकृष्णयोः यावत् सेवा कार्या तत्सेवाकरणे सत्येव देवादेर्नियमनादिवैचित्र्यसम्पादकत्वं अन्यथा अधिदैवादिनियमनादिकस्वसाध्यवैचित्र्यासम्पादकं भवति। तत्रापि कश्चिद्विशेषः । कृष्णावतारस्य रामावतारानन्तरभावित्वात् रामसेवायां किञ्चिदूनमपि कृष्णसेवया तत्पूर्णं भवति इति । कुतः अत्र कृष्णसेवायां तादृशविशेषसद्भावात् अत एव उक्तं ईशावास्यभाष्ये– 'अज्ञस्य कर्मलिप्येत कृष्णोपास्तिमकुर्वतः' इति । अत्र सामान्यतो कृष्णोपास्तिरित्युक्त्या अयं विशेषो ज्ञायते । कृष्णमन्त्रध्यानश्लोके 'अखिलप्रदम्' इत्युक्तम् । अखिलानां भक्तानां अभीष्टप्रदम् । खिलं न्यूनं न भवति इत्यखिलं पूर्णं इत्यर्थः । साधनमिति शेषः । भक्तानां साधनं अखिलं पूर्णं कुर्वन्तं इति वा । अखिलैरनुष्ठिताखिलसाधनानां पूर्णत्वप्रद इति वा । यद्वा वैशेष्यात् तत्तद्योग्यताविशेषात् इत्यर्थः । तथा हि । उत्तमाधिकारिणां देवानां रामकृष्णोभयरूपसेवया साधनपूर्तिः मध्यमानां कृष्णसेवया अधमाधिकारिणां रामसेवैयैव साधनपूर्तिः इति । तदेतदुक्तम् 'पिपीलिकातृणान्तानां ददौ लोकाननुत्तमान्' इति ।

'पुरावताराय यदा स विष्णुः दिदेश सर्वान् अमरांस्तदैव ।
ममापि सेवा भवता प्रयोज्येत्येवं गरुत्मान् अवदत् वृषाकपिम् ।।
तमाह विष्णुर्न भुवि प्रजातिं उपैहि सेवां तव चान्यथाहम् ।
आदास्य एवात्र यथा यशस्स्यात् धर्मश्च कर्तव्य कृदेव च स्यात् ।।' इति ।
'द्रोणात्मकं नातितरां स्वसेवकं कुर्याद्धरिर्मामिति भूय एव ।
स तूद्धवात्मावततार यादवेष्वासेवनार्थं पुरुषोत्तमस्य ।।' इति ।
'तेषां वृद्धिः स्यात् पाण्डवार्थे हतानां मोक्षेऽपि सौख्यस्य...... ।।' इत्यादिना ।।

कल्यादीनामपि एवमेव अवतारैरावेशैश्च कृतकृष्णरामविषयकद्वेषादिना तदितरविषयकद्वेषाणामपि दुःखवैचित्र्यसम्पादकत्वमिति ज्ञेयम् । तदुक्तम् –

'यावदेव रमया रमेश्वरं नो वियोजथ सद्गुणार्णवम् ।
तावदुच्चमपि दुष्कृतं भवन् मोक्षमार्गपरिपन्थि नो भवेत् ।।' इति ।
'.........कमलजनिरुवाचाशु रामाभिषेकम् ।
भूत्वा दासी विलुम्प स्वगतिमपि ततः कर्मणा प्राप्स्यसे त्वम्

१. भा.ता. ५-६-३ ।

सेत्युक्ता मन्थरासीत् तदनुकृतवत्त्येवचैतत् कुकर्म ।।' इति ।
'सा ताटका चोर्वशी सम्प्रविष्टा कृष्णावध्यानात् निरयं सञ्जगाम' इति ।। ४५-६४ ।।

**अधिकं यैः कृतं तत्र तैरूनं कृतमत्र तत् ।**
**कर्णाद्यैरधिकं यैस्तु प्रादुर्भावद्वये कृतम् ।**
**विविदाद्यैर्हि तैः पश्चाद् विप्रतीपं कृतं हरेः ।। ४६ ।।**

**व्यास**— अश्विप्रभृतिनां प्रादुर्भावद्वये विविदनकुलादिरूपेणान्तरङ्गत्वप्रतीतेः विष्णोरतिप्रियत्वादिप्राप्तं तन्निवारयन्नाह— **अधिकमिति** ।। ४६ ।।

**वादि— अधिकं यैः कृतमित्यस्य** । यैर्लक्ष्मणाङ्गदादिभिः। अत्र ऊनम् । बलरामादिरूपेणाभिमन्यु–रूपेण च ऊनं कृतम् । अग्रजत्वेन कृष्णपादाभिवन्दनादेरकरणात् बलरामेणोनं कृतम् । शीघ्रमरणेनाभिमन्युनोनं कृतम् । कर्णाद्यैरित्यत्राद्यपदेन नकुलसहदेवयोर्ग्रहणम् । रामायणे सुग्रीवरूपेण भारते कर्णेन विद्याभ्यासदशायां परशुरामसेवाकरणेन भूभारहरणाङ्गत्वाच्च उभयत्राप्यधिका सेवा कृता । अश्विभ्यां रामायणे मैन्दविविदरूपेण भारते नकुलसहदेवरूपेण चाधिका सेवा कृता । विविदाद्यैरित्यत्राद्यपदेन कर्णादयो गृह्यन्ते । विविदेन नरकासुरसहाये स्थित्वा स्थूलाञ्जलिना लवणाम्बु क्षिप्त्वा कृष्णग्रामा नाशिताः[१] । कर्णेन च दुर्योधनपक्षपातात् कृष्णवचनोल्लङ्घन–द्रौपद्यधिक्षेपपाण्डवद्वेषादिदोषाः कृताः। तेनोभाभ्यामधिकस्य नाशः कृत इति भावः। 'एधमानद्विट्' इति श्रुतेः। भगवदंवतारेषु रामकृष्णावतारावेव भूभारहरणव्याजेन हरिसर्वोत्तमत्वदेवतातारतम्यादिसकलशास्त्रार्थनिर्णयाय प्रवृत्तौ । तत्रापि रामावतारानन्तरं कृष्णावतारस्य कृतत्वात् ततोऽपि बाहुल्येनायं सकलशास्त्रार्थनिर्णयाय प्रवृत्तः ।। ४६ ।।

**वरद**— तथा तत्र रामावतारे यैः सुग्रीवाद्यैरधिकं रामकार्यं कृतम् । तैरत्र कृष्णावतारे कर्णाद्यैः कर्णादिरूपैरून–मल्पकार्यं कृतं तथा यैस्तु प्रादुर्भावद्वयेऽवतारद्वये विविदाद्यैर्नकुलादिरूपैरधिकं कार्यं कृतं तैर्विविदाद्यैरत्र पश्चात् कृष्णावतारे हरौ विप्रतीपं वैरं कृतमित्यनेन क्रमेण शङ्कात्रयपरिहारः। अयमाशयः। नैकावतारमात्र–पर्यालोचनया सेवाधिक्यक्रमेण स्वरूपतारतम्यज्ञानं किं तर्हि अवतारद्वयपर्यालोचनया । अवतारद्वये पर्यालोचिते च स्पष्टमेव सेवातारतम्येन स्वरूपतारतम्यं ज्ञायत इति ।। ४६ ।।

**जना**— तत्र रामावतारेऽत्र कृष्णावतारे ऊनं न्यूनं कृतम् । यैः मैन्दविविदाद्यैः प्रादुर्भावद्वयेऽधिकं कृतं तैर्मैन्दविविदाद्यैः। विप्रतीपं विरोधः ।। ४६ ।।

**ताम्र**— कर्णाद्यैरित्यनन्तरमपि ततः सममिति सम्बध्यते । लाभहान्योरिति तत्र शेषः। अवतारद्वयेप्यावापो–द्वापाभ्यां यो यदपेक्षयातिशयाङ्गं स तस्मादुत्तम इति विवक्षितम् । तच्च सूर्यांशापेक्षयेन्द्रांशे चन्द्रांशापेक्षया सूर्यांशे चास्त्येवातो नाप्रयोजकता नापि सुग्रीवादौ व्यभिचारः। अवतारद्वयापेक्षयाधिकाङ्गत्वस्य हेतोरेवाभावादिति

---

१. भा. १०–८९– २–८ ।

भावः। नन्ववतारद्वयेऽपि विविदनकुलादिरूपेण सम्पूर्णसेवाकर्तृत्वं नासत्ययोरस्ति । न तु तदनुसार्युत्तमत्वं लब्ध्यम् । तथा चाप्रयोजकतेत्यत आह— **अधिकमिति** ।। ४६ ।।

**प्रादुर्भावद्वये ह्यस्मिन् सर्वेषां निर्णयः कृतः ।**
**नैतयोरकृतं किञ्चिच्छुभं वा यदि वाऽशुभम् ।**
**अन्यत्र पूर्यते क्वापि तस्मादत्रैव निर्णयः ।। ४७ ।।**

**व्यास**— इतोऽपि भारतं सकलसदागमार्थ इति वदंस्तदुपयुक्तमाह— **प्रादुर्भावेति** ।। सर्वेषां प्रमेयाणाम्। अकृतं असम्पूर्णम् ।। ४७ ।।

**वादि**— एवं च कृष्णावतारे स्वकृतसकलचरित्रवर्णनाय स्वयमेव रूपान्तरं गृहीत्वा कृतत्वात् भारतमेव सकलशास्त्रोत्तममिति भावेनाह— **प्रादुर्भावेति** ।। एतयोरवतारयोरकृतमनिर्णीतम्। शुभमशुभं वा । अन्यत्र क्वाप्यवतारान्तरे । न पूर्यते न निर्णीयत इति योजना ।। ४७ ।।

**सङ्क**— न केवलमयमेव निर्णयोऽस्मिन्नवतारद्वयेऽपेक्षितः किन्तु सर्वेषामप्यर्थानां निर्णयोऽस्मिन्नवतारद्वये कृत इत्याह— **नैतयोरिति** ।। यावत् शुभं वक्तव्यं तावदशुभं वक्तव्यम् । एतयोरकृतं तावदन्यत्रावतारेषु न पूर्यते यस्मात्तस्मादवतारद्वय एव सर्वनिर्णय इत्यर्थः ।। ४७ ।।

**वरद**— इदमेवाशयमुद्घाटयति— **प्रादुर्भावद्वये हीति** ।। प्रादुर्भावद्वयापेक्षो यतः सर्वेषां ब्रह्मादीनां स्वरूपनिर्णयः कृतोऽतो नैकैकं प्रादुर्भावमात्रमादाय शङ्का कार्येत्यर्थः। नन्वेतयोरवतारयोः परस्परापेक्षावदवतारान्तरापेक्षास्ति किं निर्णयकरण इत्यत आह— **नैतयोरिति** ।। एतयोरवतारयोः किञ्चिच्छुभं वा यदि वा अशुभं अकृतं न कृतं तत् । अन्यत्र अवतारे क्वापि न पूर्यते किं त्वत्रैव पूर्यते यस्मात् तस्मादत्रैवावतारद्वय एव निर्णयो ज्ञातव्यः ।। ४७ ।।

**जना**— अस्मिन् रामकृष्णाख्ये सर्वेषां ब्रह्मादीनां निर्णय उत्तमत्वनीचत्वनिर्णयः कृतः। ननु रामावतारेऽधिकं यैः कृतं तैः कृष्णावतारे न्यूनं कृतं यथा तथा वराहाद्यवतारेषु सेवादिनापि स्वरूपनिर्णयः स्यादित्यत आह— **नेति** ।। एतयोः रामकृष्णावतारयोः किञ्चिच्छुभं यदि वा अथवाऽशुभमन्यत्र वराहाद्यवतारेषु क्वापि कुत्रापि न पूर्यते पूर्णं न क्रियते तस्मादवतारद्वय एव निर्णयो भवति ।। ४७ ।।

**ताम्र**— ननु भारतस्य निखिलशास्त्रप्रमेयनिर्णायकत्वे रामकृष्णकथे कुतो वर्णनीये तूष्णीं शास्त्रीय-प्रमेयोपन्यासोपपत्तेः। न च तत्प्रमेयानां सदृष्टान्तं बुद्ध्यारोहायावतारपरिग्रहेण प्रवृत्तिरिति वाच्यम् । मत्स्याद्य-वतारपरिग्रहेणापि प्रवृत्त्युपपत्तेरित्यत आह— **प्रादुर्भावद्वयेति** ।। निर्णीयत इति निर्णयः। योग्यसाधनपूर्तिरित्यर्थः। यद्वा सर्वेषां सर्वैः निर्णयस्तत्त्वनिर्णय इत्यर्थः। यद्वा भारते प्रादुर्भावद्वयेन तमादाय निर्णयः कृत इत्यर्थः। तद्विवृणोति— **नेति** ।। ४७ ।।

**पश्चात्तनत्वात् कृष्णस्य वैशेष्यात् तत्र निर्णयः ।**
**प्रादुर्भावमिमं यस्माद् गृहीत्वा भारतं कृतम् ।। ४८ ।।**

**व्यास—** अवतारयोः प्रमेयनिर्णयहेतुत्वेऽपि कृष्णावतारे विशेषेण प्रमेयनिर्णये निमित्तमाह— **पश्चात्तनत्वादिति** ।। ४८ ।।

**वादि—** गृहीत्वा स्वग्रन्थविषयं कृत्वा । कृतं व्यासरूपेण स्वेनैव कृतम् ।। ४८ ।।

**सङ्क—** एवमवतारद्वयेऽपि सर्वनिर्णयोक्तावपि कृष्णावतारे वैशेष्यात्सर्वनिर्णय इति सयुक्तिकमाह— **पश्चात्तनत्वादिति** ।। उपक्रमोपसंहारयोर्मध्ये उपसंहारे विशेषतो निर्णयो भवतीति न्यायस्याप्यत्रावकाशास्तीति पश्चात्तनत्वादिति युक्तिरभिहितेत्यर्थः। नन्वेवं पश्चात्तनत्वेन कृष्णावतारे सर्वनिर्णया भवन्तु तथापि श्रीमहाभारतस्य सर्वार्थनिर्णायकत्वेन सर्वशास्त्रवैशिष्ट्ये प्रकृते किमायातमित्यत आह— **प्रादुर्भावमिति** ।। यस्मात् श्रीकृष्णावतारे सर्वनिर्णयाः समभिहिताः तस्मादिमं श्रीकृष्णावतारं गृहीत्वा श्रीमहाभारतं कृतमतः श्रीमहाभारतस्य सर्वशास्त्रवैशिष्ट्यमस्तीत्यभिप्रायः। इतोऽपि श्रीकृष्णावतारे सर्वनिर्णयाः समभिहिता इत्यङ्गीकार्यं इममवतारं गृहीत्वा सर्वशास्त्रोत्तमभारतस्य करणादिति वाह— **प्रादुर्भावमिति** ।। ४८ ।।

**वरद—** तत्रापि न समकक्षतयावतारद्वयस्य निर्णयहेतुत्वं किं तर्हि कृष्णावतारस्य वैशेष्यनिर्णयहेतुत्वमित्याह — **पश्चात्तनत्वादिति** ।। उपक्रमोपसंहारयोः निर्णयहेतुत्वेऽप्युपक्रमापेक्षयोपसंहारस्य पश्चात्तनत्वात् व्याख्यानरूपत्वेन विशेषतो निर्णयहेतुत्वात् । कृष्णस्य कृष्णावतारस्य पश्चात्तनत्वात् तत्र कृष्णावतारे वैशेष्याद्विशेषतो निर्णयहेतुर्भवतीत्यतो विशेषनिर्णयहेतुत्वमित्यर्थः। प्रादुर्भावद्वयापेक्षयैव सर्वेषां निर्णयो नावतारान्तरापेक्षस्तत्रापि विशेषनिर्णयः कृष्णावतारापेक्ष इत्युभयत्र ज्ञापकमाह— **प्रादुर्भावमिति** ।। यस्मात् कृष्णावतारे वैशेष्यात् निर्णयः तस्मादिमं प्रादुर्भावं कृष्णावतारं गृहीत्वा विस्तारेणाधिकृत्य भारतं कृतं भगवता व्यासेन अन्यथा तन्न स्यादित्यर्थः ।। ४८ ।।

**जना—** तत्रापि विशेषमाह— **पश्चात्तनत्वादिति** ।। कृष्णस्य पश्चात्तनत्वाच्चरमत्वात्तत्र कृष्णावतारे वैशेष्याद् विशेषेण निर्णयः। ननु कृष्णावतारस्य निर्णायकत्वे भारतस्य किमायातमित्यत आह— **प्रादुर्भावमिति** ।। इमं प्रादुर्भावं कृष्णावतारम् ।। ४८ ।।

**ताम्र—** ननु भवत्ववतारान्तरे निर्णयो दुर्ज्ञेयः तथापि रामावतारे सर्वदेवावतारभावात्तत्परिग्रहेणैव समग्रभारतप्रवृत्त्युपपत्तेः रामचरितमत्पग्रन्थे वर्णयित्वा कृष्णकथैव कुतो वर्णनीया । प्रथमातिक्रमे कारणाभावादित्यत आह— **पश्चात्तनत्वादिति** ।। कृष्णस्य पश्चात्तनत्वात् । रामावतारे स्वरूपादधिकार्जितस्य ह्राससम्भवाद् ऊनस्यार्जनसम्भवाच्च विशेषाकारेणात्रैव निर्णयः स्वरूपव्यवस्था ।। ४८ ।।

भावः। नन्ववतारद्वयेऽपि विविदनकुलादिरूपेण सम्पूर्णसेवाकर्तृत्वं नासत्ययोरस्ति । न तु तदनुसार्युत्तमत्वं लब्धम् । तथा चाप्रयोजकतेत्यत आह— **अधिकमिति** ।। ४६ ।।

**प्रादुर्भावद्वये ह्यस्मिन् सर्वेषां निर्णयः कृतः ।**
**नैतयोरकृतं किञ्चिच्छुभं वा यदि वाऽशुभम् ।**
**अन्यत्र पूर्यते क्वापि तस्मादत्रैव निर्णयः ।। ४७ ।।**

**व्यास**— इतोऽपि भारतं सकलसदागमार्थ इति वदंस्तदुपयुक्तमाह— **प्रादुर्भावेति** ।। सर्वेषां प्रमेयाणाम्। अकृतं असम्पूर्णम् ।। ४७ ।।

**वादि**— एवं च कृष्णावतारे स्वकृतसकलचरित्रवर्णनाय स्वयमेव रूपान्तरं गृहीत्वा कृतत्वात् भारतमेव सकलशास्त्रोत्तममिति भावेनाह— **प्रादुर्भावेति** ।। एतयोरवतारयोरकृतमनिर्णीतम्। शुभमशुभं वा । अन्यत्र क्वाप्यवतारान्तरे । न पूर्यते न निर्णीयत इति योजना ।। ४७ ।।

**सङ्क**— न केवलमयमेव निर्णयोऽस्मिन्नवतारद्वयेऽपेक्षितः किन्तु सर्वेषामप्यर्थानां निर्णयोऽस्मिन्नवतारद्वये कृत इत्याह— **नैतयोरिति** ।। यावत् शुभं वक्तव्यं तावदशुभं वक्तव्यम् । एतयोरकृतं तावदन्यत्रावतारेषु न पूर्यते यस्मात्तस्मादवतारद्वय एव सर्वनिर्णय इत्यर्थः ।। ४७ ।।

**वरद**— इदमेवाशयमुद्घाटयति— **प्रादुर्भावद्वये हीति** ।। प्रादुर्भावद्वयापेक्षो यतः सर्वेषां ब्रह्मादीनां स्वरूपनिर्णयः कृतोऽतो नैकैकं प्रादुर्भावमात्रमादाय शङ्का कार्येत्यर्थः। नन्वेतयोरवतारयोः परस्परापेक्षावदवतारान्तरापेक्षास्ति किं निर्णयकरण इत्यत आह— **नैतयोरिति** ।। एतयोरवतारयोः किञ्चिच्छुभं वा यदि वा अशुभं अकृतं न कृतं तत् । अन्यत्र अवतारे क्वापि न पूर्यते किं त्वत्रैव पूर्यते यस्मात् तस्मादत्रैवावतारद्वय एव निर्णयो ज्ञातव्यः ।। ४७ ।।

**जना**— अस्मिन् रामकृष्णाख्ये सर्वेषां ब्रह्मादीनां निर्णय उत्तमत्वनीचत्वनिर्णयः कृतः। ननु रामावतारेऽधिकं यैः कृतं तैः कृष्णावतारे न्यूनं कृतं यथा तथा वराहाद्यवतारेषु सेवादिनापि स्वरूपनिर्णयः स्यादित्यत आह— **नेति** ।। एतयोः रामकृष्णावतारयोः किञ्चिच्छुभं यदि वा अथवाऽशुभमन्यत्र वराहाद्यवतारेषु क्वापि कुत्रापि न पूर्यते पूर्णं न क्रियते तस्मादवतारद्वय एव निर्णयो भवति ।। ४७ ।।

**ताम्र**— ननु भारतस्य निखिलशास्त्रप्रमेयनिर्णायकत्वे रामकृष्णकथे कुतो वर्णनीये तूष्णीं शास्त्रीय-प्रमेयोपन्यासोपपत्तेः। न च तत्प्रमेयानां सदृष्टान्तं बुद्ध्यारोहायावतारपरिग्रहेण प्रवृत्तिरिति वाच्यम् । मत्स्याद्य-वतारपरिग्रहेणापि प्रवृत्त्युपपत्तेरित्यत आह— **प्रादुर्भावद्वयेति** ।। निर्णीयत इति निर्णयः। योग्यसाधनपूर्तिरित्यर्थः। यद्वा सर्वेषां सर्वैः निर्णयस्तत्त्वनिर्णय इत्यर्थः। यद्वा भारते प्रादुर्भावद्वयेन तमादाय निर्णयः कृत इत्यर्थः। तद्विवृणोति— **नेति** ।। ४७ ।।

**पश्चात्तनत्वात् कृष्णस्य वैशेष्यात् तत्र निर्णयः ।**
**प्रादुर्भावमिमं यस्माद् गृहीत्वा भारतं कृतम् ।। ४८ ।।**

**व्यास**— अवतारयोः प्रमेयनिर्णयहेतुत्वेऽपि कृष्णावतारे विशेषेण प्रमेयनिर्णये निमित्तमाह— **पश्चात्तनत्वादिति** ।। ४८ ।।

**वादि**— गृहीत्वा स्वग्रन्थविषयं कृत्वा । कृतं व्यासरूपेण स्वेनैव कृतम् ।। ४८ ।।

**सङ्क**— एवमवतारद्वयेऽपि सर्वनिर्णयोक्तावपि कृष्णावतारे वैशेष्यात्सर्वनिर्णय इति सयुक्तिकमाह— **पश्चात्तनत्वादिति** ।। उपक्रमोपसंहारयोर्मध्ये उपसंहारे विशेषतो निर्णयो भवतीति न्यायस्याप्यत्रावकाशा-स्तीति पश्चात्तनत्वादिति युक्तिरभिहितेत्यर्थः। नन्वेवं पश्चात्तनत्वेन कृष्णावतारे सर्वनिर्णया भवन्तु तथापि श्रीमहाभारतस्य सर्वार्थनिर्णायकत्वेन सर्वशास्त्रवैशिष्ट्ये प्रकृते किमायातमित्यत आह— **प्रादुर्भावमिति** ।। यस्मात् श्रीकृष्णावतारे सर्वनिर्णयाः समभिहिताः तस्मादिमं श्रीकृष्णावतारं गृहीत्वा श्रीमहाभारतं कृतमतः श्रीमहाभारतस्य सर्वशास्त्रवैशिष्ट्यमस्तीत्यभिप्रायः। इतोऽपि श्रीकृष्णावतारे सर्वनिर्णयाः समभिहिता इत्यङ्गीकार्यं इममवतारं गृहीत्वा सर्वशास्त्रोत्तमभारतस्य करणादिति वाह— **प्रादुर्भावमिति** ।। ४८ ।।

**वरद**— तत्रापि न समकक्षतयावतारद्वयस्य निर्णयहेतुत्वं किं तर्हि कृष्णावतारस्य वैशेष्यनिर्णयहेतुत्वमित्याह — **पश्चात्तनत्वादिति** ।। उपक्रमोपसंहारयोः निर्णयहेतुत्वेऽप्युपक्रमापेक्षयोपसंहारस्य पश्चात्तनत्वात् व्याख्यानरूपत्वेन विशेषतो निर्णयहेतुत्वात् । कृष्णस्य कृष्णावतारस्य पश्चात्तनत्वात् तत्र कृष्णावतारे वैशेष्याद्विशेषतो निर्णयहेतुर्भवतीत्यतो विशेषनिर्णयहेतुत्वमित्यर्थः। प्रादुर्भावद्वयापेक्षयैव सर्वेषां निर्णयो नावतारान्तरापेक्षस्तत्रापि विशेषनिर्णयः कृष्णावतारापेक्ष इत्युभयत्र ज्ञापकमाह— **प्रादुर्भावमिति** ।। यस्मात् कृष्णावतारे वैशेष्यात् निर्णयः तस्मादिमं प्रादुर्भावं कृष्णावतारं गृहीत्वा विस्तारेणाधिकृत्य भारतं कृतं भगवता व्यासेन अन्यथा तन्न स्यादित्यर्थः ।। ४८ ।।

**जना**— तत्रापि विशेषमाह— **पश्चात्तनत्वादिति** ।। कृष्णस्य पश्चात्तनत्वाच्चरमत्वात्तत्र कृष्णावतारे वैशेष्याद् विशेषेण निर्णयः। ननु कृष्णावतारस्य निर्णायकत्वे भारतस्य किमायातमित्यत आह— **प्रादुर्भावमिति** ।। इमं प्रादुर्भावं कृष्णावतारम् ।। ४८ ।।

**ताम्र**— ननु भवत्ववतारान्तरे निर्णयो दुर्ज्ञेयः तथापि रामावतारे सर्वदेवावतारभावात्तत्परिग्रहेणैव समग्रभारतप्रवृत्त्युपपत्तेः रामचरितमल्पग्रन्थे वर्णयित्वा कृष्णकथैव कुतो वर्णनीया । प्रथमातिक्रमे कारणाभावादित्यत आह— **पश्चात्तनत्वादिति** ।। कृष्णस्य पश्चात्तनत्वात् । रामावतारे स्वरूपादधिकार्जितस्य ह्राससम्भवाद् ऊनस्यार्जनसम्भवाच्च विशेषाकारेणात्रैव निर्णयः स्वरूपव्यवस्था ।। ४८ ।।

**उक्ता रामकथाप्यस्मिन् [१]मार्कण्डेयसमाख्यया ।**
**तस्माद् यद् भारते नोक्तं तद्धि नैवास्ति कुत्रचित् ।। ४९ ।।**

**व्यास**— 'लक्ष्मणो हनुमत्पश्चात्' इत्यादिना भारते रामायणप्रमेयं चात्र निरूपितं तत्क्वेति जिज्ञासायां स्थलं दर्शयति— **उक्तेति** ।। ४९ ।।

**वादि**— तर्हि रामकथाया अनुक्तत्वात् कथं स्वकृतभारतस्य सकलशास्त्रार्थनिर्णायकत्वमित्यत आह— **उक्तेति** ।। ४९ ।।

**सङ्क**— ननु सर्वार्थनिर्णयात्मकत्वे सर्वशास्त्रोत्तमत्वं श्रीमहाभारतस्य नोपपद्यते श्रीरामकथायाः तत्रानुक्तत्वादित्यत आह— **उक्तेति** ।। आरण्यकपर्वण्युक्तेत्यर्थः। एवं सर्वनिर्णयात्मकत्वाद्भारतस्य सर्वशास्त्रवैशिष्ट्यमस्तीत्युपसंहरति— **तस्मादिति** ।। ४९ ।।

**वरद**— अवतारद्वयापेक्षया एव निर्णय इत्यत्र ज्ञापकमुक्त्वा रामकथेत्यनेनोक्तं हि यस्मादस्मिन् भारते मार्कण्डेयसमाख्यया मार्कण्डेययुधिष्ठिरसंवादेनारण्यके पर्वणि रामकथोक्ता तस्मादवतारद्वयापेक्षयेति ज्ञायत इत्यर्थः। एवं भारतस्य सोदाहरणं सर्वशास्त्रनिर्णायकत्वेन सिद्धं सर्वशास्त्रोत्तमत्वमुपसंहरति— **तस्मादिति** ।। भारते यत्प्रमेयं नोक्तं तत्प्रमेयं कुत्रचित् ग्रन्थान्तरे नैवास्ति । अत्र भारते उक्तप्रमेयं सर्वशास्त्रेषु न सम्यगुदाहृतं हि यस्मात् एतस्मात् 'सर्वशास्त्रोत्तमं भारतं वेदानुक्तार्थभूषितम्' इत्यादिवचनादित्यर्थः।। ४९ ।।

**जना**— रामकथाभावात् पुनः कथं निर्णय इत्यत आह— **उक्तेति** ।। यद्वा नन्ववतारद्वये सर्वनिर्णयश्चेद्भारतस्य सर्वनिर्णायकत्वं कथमित्यत आह— **प्रादुर्भावमिति** ।। इमं प्रकृतं प्रादुर्भावं अवतारद्वयम् । तस्मादेतदवतार–द्वयप्रतिपादकत्वेन सर्वार्थनिर्णायकत्वमिति भावः। भारते पाण्डवप्रसङ्गेन हरिवंशे च कृष्णकथैवोक्ता रामकथा कुत्रोक्तेत्यत आह— **उक्तेति** ।। भारतस्य सर्वशास्त्रर्थत्वमुपसंहरति— **तस्मादिति** ।। नोक्तं न प्रतिपादितं तत्प्रमेयं कुत्रचित् कस्मिंश्चित् पुराणे नैवास्ति ।। ४९ ।।

**ताम्र**— 'लक्ष्मणो हनुमत्पश्चात्' इत्यादिना भारते रामकथावष्टम्भेन निर्णयः कृत इत्युक्तम् । तत्कथमुच्यते कृष्णावतारं गृहीत्वा भारतं कृतमिति जिज्ञासायामाह— **उक्तेति** ।। अरण्यपर्वणि मार्कण्डेयोपाख्यानेनेत्यर्थः। प्रासङ्गिकत्वान्न तादर्थ्यमिति भावः। 'निर्णयस्सर्वशास्त्राणां सदृष्टान्तो हि भारते' इत्युक्तमुपपाद्य भारतस्योत्तमत्व–मुपसंहरति— **तस्मादिति** ।। ४९ ।।

**अत्रोक्तं सर्वशास्त्रेषु न हि सम्यगुदाहृतम् ।**
**इत्यादि कथितं सर्वं ब्रह्माण्डे हरिणा स्वयम् ।। ५० ।।**

**सङ्क**— इतोऽपि सर्वार्थनिर्णयात्मकत्वेन श्रीमहाभारतस्य सर्वशास्त्रार्थवैशिष्ट्यमस्तीत्याह— **अत्रोक्तमिति** ।।५० ।।

---

१. 'मार्कण्डेयसमस्यया' इति पाठान्तरम् । तदा तन्नामकोपपर्वोक्तया आख्यायिकया इत्यर्थः ।

**वरद**— एवमुक्तं सर्वशास्त्रोत्तमत्वं भारतस्य न स्वकपोलकल्पितं किं तर्हि ब्रह्माण्डपुराणे हरिणा स्वयमेव कथितं चेत्याह— **इत्यादीति** ।। ५० ।।

**जना**— इतोऽपि विशेषमाह— **अत्रेति**।। अत्र भारते उक्तं प्रतिपादितं सर्वशास्त्रेषु अन्यशास्त्रेषु । सम्यक् स्पुटं विस्तृत्य । नोदाहृतं न कथितम् । स्वयं हरिणा व्यासेन ब्रह्माण्डपुराणे इत्यादि भारतस्योत्तमत्वादिकं सर्वैः कथितम् । अत: भारतस्य सर्वनिर्णयात्मकत्वादुत्तमत्वमित्यर्थ: ।। ५० ।।

**मार्कण्डेयेऽपि कथितं भारतस्य प्रशंसनम् ।**
**[१]"देवतानां यथा व्यासो द्विपदां ब्राह्मणो वर: ।। ५१ ।।**

**आयुधानां यथा वज्रमोषधीनां यथा यवा: ।**
**तथैव सर्वशास्त्राणां महाभारतमुत्तमम्" ।। ५२ ।।**

**व्यास**— भारतस्य सर्वशास्त्रनिर्णयात्मकत्वे प्रमाणान्तरं पठन्नाह— **मार्कण्डेयेऽपीति** ।। ५१-५२ ।।

**अभिनव**— **'मार्कण्डेयेऽपि कथितम्'** इत्यस्ति । तस्यार्थ:। मार्कण्डेयपुराणेऽपि भारतस्य प्रशंसनं कथितं कृतमित्यर्थ:। एतेन भारतस्य प्रशंसनं कथितं कृतमिति वक्तव्यम् । कथितमिति कथनमयुक्तमिति दूषणस्यानवकाश: । धातूनामनेकार्थत्वात् कथितमित्यस्य कृतमित्यर्थ इत्यभ्युपगमात् ।। ५१-५२ ।।

**सङ्क**— न केवलं ब्रह्माण्डपुराणे भारतस्य वैशिष्ट्यं कथितं किन्तु मार्कण्डेयपुराणे च श्रीमहाभारतस्य वैशिष्ट्यं कथितमित्याह— **मार्कण्डेयेऽपि इत्यादिना** ।। ५१-५२ ।।

**वरद**— मार्कण्डेयपुराणेऽपि भारतस्य सर्वशास्त्रोत्तमत्वमुक्तमिति प्रतिज्ञाय तद्वचनान्युदाहरति— **मार्कण्डेयेऽपी-त्यादिना** ।। स्पष्टमेतत् ।। ५१-५२ ।।

**जना**— भारतस्योत्तमत्वे प्रमाणान्तरमुदाहरति— **मार्कण्डेय इति** ।। मार्कण्डेयपुराणेऽपि । तदुदाहरति— **देवतानामिति** ।। द्विपदां ब्राह्मणक्षत्रियवैश्यशूद्रेति 'वर्णानां ब्राह्मणो गुरु:' इति वचनात् । इदं वर्णसाजात्यपक्षो । मानुषसाजात्यपक्षे मनुष्याणामिति । वज्रमुत्तमं चक्रं विनोत्तमं परिकीर्तितं इति शेष:। कथितमित्यस्यानुषङ्गो वा ।। ५१-५२ ।।

**ताम्र**— भारतस्य सर्वशास्त्रनिर्णायकत्वेनोत्तमत्वे मानान्तरमाह— **मार्कण्डेयेऽपीति** ।। कथितम् । यद्वा प्रशस्यत इति प्रशंसनं गुणजातम् कथितमित्यर्थ:। अन्यकर्तृकत्वेन कथितमिति वा । 'देवतानां विष्णु:' इति वाच्ये व्यासग्रहणम् विष्णुत्वं तस्य साधयितुम् ।। ५१-५२ ।।

---

१. अ१/४-५. त्रिदशानां यथा विष्णु: द्विपदां ब्राह्मणो यथा । भूषणानां च सर्वेषां यथा चूडामणिर्वर:।। यथायुधानां कुलिशमिन्द्रियाणां यथा मन:। तथेह सर्वशास्त्राणां महाभारतमुत्तमम् ।। इति इदानीमुपलभ्यमानपुस्तके पाठ: अस्ति ।

**वायुप्रोक्तेऽपि तत् प्रोक्तं भारतस्य प्रशंसनम् ।**
**[१]"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।**
**को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत्' ।। ५३ ।।**

**वादि**— 'कृष्णद्वैपायनं व्यासं' इति श्लोको न केवलं वायुप्रोक्तेऽस्ति । किन्तु भारतेऽप्यस्तीति ज्ञेयम् । ननु लक्षसङ्ख्याकश्लोककरणमात्रेण कथं व्यासस्य साक्षान्नारायणत्वसिद्धिरिति न शङ्कनीयम् । कुरुपाण्डववंशोत्पत्तेः पूर्वमेवोभयोर्वंशयोरुत्पत्तिप्रकारं, राजसूयाश्वमेधादियागमहिमानं, तदर्थं कृतदिग्विजयप्रकारं, जतुगेहनिर्गमन–प्रकारकौशलं, बकहिडिम्बयोर्हननं, द्रौपदीविवाहनिर्वाहशक्तिं, दुर्द्यूतोद्योगं, वनवासाज्ञातवासगोग्रहणादिबहुतरकथां, अष्टादशाक्षौहिणीसेनायामन्योन्यं कथ्यमानोक्तिप्रत्युक्तिप्रकारः, शरप्रतिशरसङ्ख्याबन्धनादिचातुरीं, व्यूह–प्रतिव्यूहकरणं, अस्त्रप्रत्यस्त्रप्रयोगपरिपाटीं,भीमार्जुनभीष्मद्रोणादिभिर्दिने दिने हन्यमानकरितुरगाद्यनेकसङ्ख्यादिकं च करतलमिलितामलकवत् दृष्ट्वा महाभारताख्यस्वग्रन्थे ग्रथयतो व्यासस्य निरवधिकजगन्निर्मातृनारायणवत् निरवधिकसार्वज्ञ्यसिद्धेः साक्षात्तदवतारत्वस्यापि प्रेक्षावद्भिरुत्प्रेक्षयितुं शक्यत्वात् । कथमन्यथा मत्स्यकूर्मादे–स्तदवतारत्वसिद्धिः। अतः साधूक्तं 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इति ।। ५३ ।।

**वरद**— वायुप्रोक्तग्रन्थेऽपि भारतस्य प्रशंसनं कृतमिति प्रतिज्ञाय तद्वचनान्युदाहरति— **कृष्णद्वैपायनमिति** ।। अत्र महाभारतकर्तृत्वान्यथानुपपत्त्या व्यासस्य नारायणावतारत्वोक्त्या भारतस्यानन्यसाध्यत्वलक्षणसर्व–शास्त्रोत्तमत्वं ज्ञायत इति भावः ।। ५३ ।।

**जना**— पुराणान्तरेणाप्युत्तमत्वमुपपादयति— **वायुप्रोक्त इति** ।। तत्प्रसिद्धं 'व्यासं' इत्यनूद्य नारायणमिति नारायणत्वं विधीयते । तत्र हेत्वाकाङ्क्षायां पुण्डरीकाक्षात् नारायणात् महाभारतकृत् को हि भवेन्न कोऽपीत्यर्थः। साक्षान्नारायणकृतत्वाच्छ्रैष्ठ्यम् । भारतस्य व्यासकृतत्वेन व्यासस्य नारायणत्वोपपादनाच्च ।। ५३ ।।

**ताप्र**— ननु 'वायुप्रोक्ते' इति वाक्ये कृष्णद्वैपायनमिति पूर्वार्धः प्रतिज्ञारूपः 'को ह्यन्य': इत्युत्तरार्धो व्यतिरेकव्याप्तेः प्रतिपादकः। अनुक्तो हेतुर्व्याप्तिवचनसामर्थ्यादूह्यः। तत्र न तावद् ग्रन्थकर्तृत्वं हेतुः ग्रन्थकर्तृत्वस्य नारायणादितरत्र कालिदासादावपि साम्यादनैकान्त्यप्रसङ्गात् । नापि भारतकर्तृत्वं ग्रन्थव्यक्तिविशेषकर्तृत्वेन नारायणत्वसाधनस्य कालिदासादावपि साम्यादतिप्रसङ्गात् तथा च कथं विवक्षितार्थलाभ इति चेत् । नारायणादन्येन कर्तुमशक्यकार्यकर्तृत्वस्य विवक्षितत्वात् । न चासिद्धिः। भारतस्य तथात्वात् । व्याप्तिवाक्यं च तदभिप्रायं मन्तव्यम् ।। ५३ ।।

**एवं हि सर्वशास्त्रेषु पृथक् पृथगुदीरितम् ।**
**उक्तोऽर्थः सर्व एवायं माहात्म्यक्रमपूर्वकः ।। ५४ ।।**

---

१. अयं श्लोकः भारते शान्तिपर्वणि (३५६-११) दृश्यते ।

**व्यास**— 'वायुप्रोक्तेऽपि' इति भारतस्य सर्वशास्त्रोत्तमत्वस्य सर्वशास्त्रार्थात्मकत्वेन विनानुपपत्तेः भारतस्य सर्वशास्त्रार्थात्मकत्वेन विनान्यस्य तदकरणानुपपत्तेः विष्णोः सर्वोत्तमत्वादिकं सर्वशास्त्राणां प्रमेयमित्युपपाद्य निर्णायकानि शास्त्रस्थितानि वचांसि प्रदर्शितानि प्रथमाध्याये । सकलशास्त्रनिर्णयात्मकभारतार्थनिर्णयेऽप्येषोऽर्थः सिद्ध्यतीति भावेन भारतार्थनिर्णयः प्रतिज्ञातद्वितीयादौ तस्य भारतस्य सकलशास्त्रार्थनिर्णयत्वसमर्थनेन व्यवस्थितत्वादुपक्रमादिना भगवत्परत्वं निर्णेतुं प्रतिजानीत— **उक्त इति** ।। योऽयं सर्वोऽपि माहात्म्यक्रमपूर्वक उक्तोऽर्थ अयं सर्वशोऽपि निर्णयो भारतेऽपि क्रमेण प्राप्यो उक्तो यथा तथेत्यन्वयः।। ५४ ।।

**सङ्क**— न केवलं स्थानत्रये भारतस्य प्रशंसनं कृतं किन्तु सर्वशास्त्रेष्वपीत्याह— **एवं हीति** ।। भारतस्य प्रशंसनमपीति शेषः। न केवलमुक्तस्थानत्रये सर्वशास्त्रेषु च भारतप्रशंसनमेवोक्तम् । किन्त्वुक्तः सर्वोऽयमर्थोप्युक्त इत्याह— **अर्थ इति** ।। उक्त इति शेषः ।। ५४ ।।

**वरद**— न केवलं ब्रह्माण्डपुराणादिस्थानत्रये भारतस्योत्तमत्वं कथितं किं तर्हि सर्वशास्त्रेष्वप्येवमेव कथितमित्याह— **एवं हीति** ।। एवं भारतस्य सर्वशास्त्रोत्तमत्वं प्रसाध्येदानीं सङ्क्षेपात् सर्वशास्त्रार्थं भारतार्थानुसारत इति प्रतिज्ञां स्मारयति— **उक्तोऽर्थ इति** ।। माहात्म्यक्रमः तारतम्यक्रमः पूर्वो यस्यार्थस्य सोऽयं सर्वार्थो यथाशास्त्रेषु उक्तः यथा च भारतेऽपि क्रमेण निर्णयः तारतम्यक्रमनिर्णयोऽयं पूर्वोक्तः तथा सर्वशो सर्वशास्त्रोक्तं भारतोक्तं च निर्णयं तद्वाक्यैः भारतवाक्यैः प्रदर्शयिष्यामः ।। ५४ ।।

**जना**— न हि पुराणत्रितय एवोत्तमत्वं कथितमपि तु सर्वत्रेत्याह— **एवं हीति** ।। एवं भारतस्योत्तमत्वमिति शेषः। न केवलं सर्वशास्त्रेषु भारतोत्तमत्वमुच्यतेऽपि तु मदुक्तनिर्णयोऽप्युच्यत इत्याह— **उक्त इति** ।। माहात्म्यक्रमपूर्वकः सर्व एवायमर्थः। सर्वशास्त्रेषूक्तः प्रोक्तोऽस्ति ।। ५४ ।।

**ताम्र**— 'अथ भारतवाक्यान्येतैरेवाध्यवस्यन्ते' इति यत्पुराणवाक्यैर्भारतवाक्यान्युक्तार्थत्वे तया निर्णीयन्त इति प्रतिज्ञातं तदुपपाद्य, एतैर्भारतवाक्यैर्भारतवाक्यान्यवध्यस्यन्त इति यत्प्रतिज्ञातं, यच्चोक्तार्थवत्तया 'भारतवाक्यानि' इति तच्चोपपादयितुं व्यवहितत्वात् पुनः प्रतिज्ञाय भारतोपक्रमवाक्यं पठित्वा व्याचष्टे— **उक्त इति** ।। यो माहात्म्यक्रमपूर्वकः प्रथमाध्यायोक्तार्थः ।। ५४ ।।

**भारतेऽपि यथा प्रोक्तो निर्णयोऽयं क्रमेण तु ।**
**तथा प्रदर्शयिष्यामस्तद्वाक्यैरेव सर्वशः ।। ५५ ।।**

**सङ्क**— उक्तः सर्वोऽयमर्थो भारतेऽप्युक्त इत्याह— **भारतेऽपीति** ।। भारतेऽप्युक्त इति शेषः। एवं तावद्भारतार्थानुसारतः सङ्क्षेपात्सर्वशास्त्रार्थं प्रदर्श्य तथा भारतेऽप्ययं सर्वनिर्णयोऽभिहित इत्युक्तम् । तत्कथं ज्ञायत इत्याशङ्कां परिहरन्नेव 'अथ भारतवाक्यान्यैतैरेवाध्यवस्यन्ते' इति प्रकृतमनुसरति— **भारतेऽपीति** ।। ५५ ।।

**जना**— न केवलमयमर्थः सर्वशास्त्रेषूक्त अपि तु भारतेऽपि कथित इत्याह— **भारतेऽपीति** ।। उक्तोऽर्थ इत्यावर्त्यान्वेतव्यं भारतेऽपि सर्वोऽप्ययमर्थ उक्त इत्यन्वयः। सकलशास्त्रार्थं पुराणवाक्यैरभिहितमित्यनूद्य

भारते अयमर्थ उक्त इत्युक्तं सोऽर्थः कथं ज्ञायत इत्याशङ्कां परिहरन् भारतवाक्यानि सन्दिग्धानि भारतवाक्यैरेव निर्णीयन्त इत्युक्तप्रतिज्ञां व्यवहितत्वात् स्मारयति— **यथेति** ।। उक्तमित्यर्थमनुवृत्त्यान्वेतव्यम् । योऽयं माहात्म्यक्रमपूर्वकः माहात्म्यं महिमा क्रमस्तारतम्यक्रमस्तौ पूर्वौ यस्य सः सर्वोर्थः मया उक्तः सोऽयं निर्णयः भारतेऽपि यथा येन प्रकारेण प्रोक्तस्तथा सर्वशस्तं प्रकारं तद्वाक्यैः भारतवाक्यैरेव प्रदर्शयिष्याम इति । यद्वा सर्व एवायं माहात्म्यक्रमपूर्वकः माहात्म्यं महिमा शास्त्रे प्रोक्तस्तथा भारतेऽपि यथाक्रमेणायं निर्णयः प्रोक्तस्तथा तद्वाक्यैः शास्त्रभारतवाक्यैः प्रदर्शियिष्याम इति ।। ५५ ।।

**ताम्र**— अयं सर्वोऽपि निर्णयः भारतेऽपि क्रमेण प्रोक्तो यथा तथेत्यन्वयः ।। ५५ ।।

**नारायणं सुरगुरुं जगदेकनाथं**
**भक्तप्रियं सकललोकनमस्कृतं च ।**
**त्रैगुण्यवर्जितमजं विभुमाद्यमीशं**
**वन्दे भवघ्नममरासुरसिद्धवन्द्यम् ।। ५६ ।।**

**व्यास**— तत्र भारताद्यवाक्यं पठति— **नारायणमिति** ।। ५६ ।।

**सङ्क**— प्रतिज्ञातार्थं दर्शयिष्यन् भारतवचनमुदाहरति— **नारायणमिति** ।। ५६ ।।

**वरद**— कानि तानि सर्वनिर्णयार्थानि भारतवाक्यानीत्यतस्तद्भारतोपक्रमवाक्यं पठति— **नारायणमिति**।। कथमस्योक्तानेकनिर्णयार्थत्वमित्यतः तद्वाक्यं यथावद्व्याचष्ट— **ज्ञानप्रद इत्यादिना** ।। तत्र मूलश्लोके नारायणं वन्दे इत्यन्वयः। नारायणस्यैव वन्द्यत्वे को हेतुरित्यत उक्तम्— **सुरगुरुमिति** ।। तत्र सुरशब्दोऽन्या-दिसाधारणपरः, गुरुत्वं च ज्येष्ठत्वादिना इत्यन्यथाप्रतीतिनिरासाय तत्पदं तात्पर्यतो व्याचष्ट— **ज्ञानप्रद इति**।। अत्र गुरुत्वं न ज्येष्ठत्वादिमात्रेण किन्तु ज्ञानप्रदत्वेन । सुरशब्दोऽपि न साधारणदेवपरः किन्तु पद्मापद्मभवाद्य-शेषचेतनपर इति व्याख्यातं भवति । मूले रमादिसर्वसुरगुरुत्वमेव कथमित्याकाङ्क्षायामुक्तम्— **जगदेकनाथमिति**।। तत्र राजादिवत्स्वामित्वमात्रं प्रतीयते । तेन च न गुरुत्वसाधनमित्यतस्तात्पर्यमाह— **निखिलाद्वरिष्ठ इति** ।। निखिलाद्रमादिचेतनवर्गाद्वरिष्ठः। अतिशयेनोत्तमः अतः सुरगुरुत्वं युक्तमिति भावः। सुरगुरुपदोक्तं ज्ञानप्रदत्वं न लाभाद्युपाधिना किं तर्हि स्वभावतो भक्तप्रियत्वादित्यभिप्रायेणोक्तं मूले— **भक्तप्रियमिति** ।। तदभिप्रायं स्पष्टयति— **भक्त्यैवेति** ।। नन्वत्र ग्रन्थसमाप्त्याद्यभीष्टफलावाप्त्यर्थं नारायणवन्दनं क्रियते । तत्प्राप्तिश्चान्यवन्दनेनापि भवत्यतः किं तद्वन्दनेनेत्यतो मूले सकललोकनमस्कृतमित्युक्तम् । तत्रोक्तशङ्कापरिहारः स्पष्टं न प्रतीयत इत्यतः तात्पर्यमाह— **हरिप्रवणत्वमेव सर्वस्य धर्म इति** ।। हरिप्रवणत्वं हरौ प्रह्वीभाव एव सर्वस्य धर्मो नान्यप्रवणत्व-मित्यतोऽभीष्टसिद्ध्यर्थमप्यन्यो न स्वातन्त्र्येण वन्द्य इति ज्ञानप्रद इत्याद्युक्तोऽर्थः पूर्वविभागसंस्थः। श्लोकस्य पूर्वार्ध उक्तोऽस्तीत्यर्थः ।। ५६ ।।

**जना**— तत्र विष्णोः सर्वोत्तमत्वप्रतिपादकवाक्यमुदाहरति— **नारायणमिति** ।। ५६ ।।

**भारतश्री**— कानि तानि भारते निर्णायकानि वाक्यानीत्यत आह । तावद्भारतोपक्रमवाक्यं पठति— **नारायणमिति** ।। ५६ ।।

**ज्ञानप्रदः स भगवान् कमलाविरिञ्च-**
**शर्वादिपूर्वजगतो निखिलाद्वरिष्ठः ।**
**भक्त्यैव तुष्यति हरिप्रवणत्वमेव**
**सर्वस्य धर्म इति पूर्वविभागसंस्थः ।। ५७ ।।**

**व्यास**— विशेषणपदानि भगवत्परत्वं स्पष्टयन् व्याचष्टे— **ज्ञानेत्यादिना** ।। ज्ञानेति सुरगुरुं जगदेकनाथमिति स्पष्टितम् । भक्तप्रियं सकललोकनमस्कृतं चेति विशेषणद्वयं विशदितं भक्त्यैवेति । नमनं च मनोवाक्कायकर्मभिः हरिप्रवणत्वमेवातो भवतीदं व्याख्यानम् ।। ५७ ।।

**वादि**— अधुना भारताद्यपद्य एव हरिसर्वोत्तमत्वादिसकलमहिम्नः निरूपितत्वादुपक्रमानुसारेण सर्वग्रन्थस्य योजनीयत्वात् लक्षभारतवाक्यान्यपि भगवन्माहात्म्यपराणीति भावेन लोकशिक्षणाय भारतादौ विरचितमङ्गलपद्यं पठति— **नारायणमिति** ।। सुरगुरुमित्यस्यार्थकथनं 'कमलाविरिञ्चशर्वादिपूर्वजगतो ज्ञानप्रद' इति । 'गृ निगरणे' इति धातोर्ज्ञानिप्रदो हि गुरुः। सुष्ठु रमयतीति व्युत्पत्तेर्देवरूपत्वाच्च श्रीरपि सुरपदेनोच्यत इति भावः। नारायणस्यैव सुरगुरुत्वे को हेतुरित्याशङ्क्य तस्यैव सर्वोत्तमत्वादिति भावेन प्रयुक्तजगदेकनाथ-मित्यस्यार्थकथनं **निखिलाद्वरिष्ठ** इति । एकनाथो मुख्यस्वामीत्यर्थं सूचयितुं **वरिष्ठ** इत्युक्तम् । अतिशयेन वरो हि वरिष्ठः। तर्हीदृशस्य महामहिम्नः प्रसादनं न सुकरमिति शङ्कापरिहारायोक्तभक्तप्रियपदस्यार्थमाह— **भक्त्यैवेति** ।। 'सर्वं वाक्यं सावधारणम्' इति न्यायादभक्तेष्वसुरेषु प्रीत्यभावाच्च नारायणो भक्तस्यैव प्रिय इति लभ्यते । हेतुगर्भविशेषणबलात् भक्त्यैव तुष्यतीत्यर्थः सिद्ध्यतीति भावः। भगवत्प्रियाणां ब्रह्मादीनां हृदिस्था भक्तिः कथं ज्ञातव्येति शङ्कापरिहाराय तत्परिवारतया सदा शिरसि धृताञ्जलिपुटानां तेषां नमनेनैव अनुमेयेति भावेन प्रयुक्तसकललोकनमस्कृतं चेति पदस्य तात्पर्यमाह— **हरिप्रवणत्वमेव सर्वस्य धर्म इति** ।। धर्म इति वदता यथा सन्ध्यावन्दनाकरणे प्रत्यवायो एवं हरेर्नमस्काराकरणेऽपि प्रत्यवायोऽस्तीति सूचितं भवति । नतमित्यनुक्त्वा नमस्कृतमिति वदता नमसः करणीयत्वस्यापि सूचितत्वात् नमसो धर्मत्वं लभ्यते । श्रुत्या करणीयत्वेन विहितं कर्म हि धर्मः। अत एव [1]"भूयिष्ठान्ते नम उक्तिं विधेम' इति श्रुतिः। तत्रापि हरेर्नमनमेव मुख्यो धर्म इति भावेन हरिप्रवणत्वमेवेत्युक्तम् । नमनस्य यागादिवदधिकारिविशेषानुक्तेः स्त्रीशूद्रचण्डालादीनामपि योग्यत्वात् सर्वस्य धर्म इत्युक्तम् ।। ५७ ।।

**सङ्क**— अस्यार्थमाह भगवानाचार्यो— **ज्ञानप्रद इत्यादिना** ।। नारायणस्य नम्यत्वे को हेतुरित्यत उक्तस्य सुरगुरुपदस्य ब्रह्मादिविषयतया स्वल्पार्थताप्रतीतिनिरासायार्थमाह— **ज्ञानप्रद इत्यादिना** ।। कुतो रमादिसुरगुरुत्वमस्येत्यत उक्तस्य जगदेकनाथपदस्य तच्चोद्यपरिहारकतया तात्पर्यमाह— **निखिलाद्वरिष्ठ**

---

१. ई.उ. १८ ।

**इति** ।। ग्रन्थादावभीष्टसिद्ध्यर्थमन्यो वन्द्यः किं न स्यादित्यत उक्तस्य सकललोकनमस्कृतपदस्य तात्पर्यार्थमाह- हरिप्रवणत्वमेव सर्वस्य धर्मो न त्वन्यप्रवणत्वं धर्म इति ग्रन्थादावभीष्टसिद्ध्यर्थमन्यो वन्द्यो नेत्यर्थः।। ५७ ।।

**जना**— तं श्लोकं व्याख्याति— **ज्ञानेति** ।। नारायणशब्दार्थमाह— **स इति** ।। नरैः प्रार्थ्यमैश्वर्यादि तस्य स्वातन्त्र्येणाश्रय इत्यस्य तात्पर्यकथनं **स भगवानिति** वन्द्यत्वे हेतुः। सुरगुरुमित्यस्य तात्पर्यकथनं **कमलेति** सुष्ठु रमन्ते रमयन्तीति वा सुरास्तेषां तस्यार्थाः कमलाविरिञ्चशर्वादिपूर्वजगत इति । न ज्येष्ठत्वमात्रेण गुरुत्वमपि तु ज्ञानप्रदत्वादिति । गुरुरित्यस्य व्याख्यानं **ज्ञानप्रद इति** । अत्र लक्ष्म्याः ज्ञानदत्वं नाम तत्स्फूर्तेस्तदधीनत्वं तदुक्तमीशावास्यभाष्ये –

[1]"यस्माद् ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः ।।' इति ।

ज्ञानस्फूर्तिः ज्ञातव्यार्थप्रतिभाविशेषप्राप्तिरप्युक्तैतरेयभाष्ये । [2]"जानन्त्या अपि देव्याः लोकानुग्रहार्थं विशेषज्ञानार्थं च 'कोऽयमात्मा' इति पृष्टः स भगवान् आह । 'कतरः स आत्मा' इति । 'कतर आनन्दतम' इति । सुरगुरुत्वे हेतुकथनपरं जगदेकनाथमिति । तत्तत्पर्यायतो व्याचष्टे— **निखिलादिति** ।। जगत इत्यस्य निखिलादित्येक- नाथः मुख्यस्वामीति । नेदं गुरुत्वोपपादकं राजादिवत् इत्यतोऽतिशयेन वरो वरिष्ठ इति । यद्वा कमलाविरिञ्चादीत्यादि अत्रापि सम्बन्धनीयम् । ननु एतादृशस्य प्राप्तिरेव दुर्लभ इत्यतस्तत्प्राप्तिसाधनमाह— **भक्तेति** ।। तत्तात्पर्यमाह— **भक्त्यैवेति** ।। भक्तिमान् भक्त इति । भक्तविशेषणभूता भक्तिर्लभ्यत इत्यभिप्रेत्योक्तं भक्त्यैवेति । वन्द्यत्वे हेत्वन्तरं सकललोकनमस्कृतमिति । तस्य तात्पर्यकथनं **हरीति** । 'णमु प्रह्वत्वे शब्दे च' इति धातुव्याख्यानात् प्रवणत्वमित्युक्तम् । किं सम्बन्धीत्यतः हरीति नमस्कृतमिति न सिद्धानुवाद अपि तु विधिबोधकमित्याह— **सर्वस्य धर्म इति** ।। हरिप्रवणत्वं न श्रवणादिवत् नियताधिकारिकमपि तु स्त्रीशूद्रादिसर्वसाधारणमिति भावः। इत्यनेन प्रकारेण पूर्वविभागे पूर्वार्धसंस्थस्तात्पर्यार्थ उक्तः।। ५७ ।।

**ताम्र**— वन्द्यत्वप्रयोजकमिष्टत्वं वक्तुं सुरगुरुमित्युक्तम् । तत् बृहस्पतेः सुरगुरुत्ववत् नेति भावेन व्याचष्टे —**ज्ञानप्रद इति**।। कमलाविरिञ्चशर्वादयो येषां देवानां ते सुराः पूर्वे यस्य जगतः इति विग्रहः । विशिष्टत्वोपपादकं जगदेकनाथमिति पदमेकशब्दार्थं वदन् व्याचष्टे— **निखिलादिति** ।। कमलाविरिञ्चशर्वादि-पूर्वजगत इति पञ्चम्यन्तमत्रापि सम्बध्यते । अतिशयेन वरीयान् वरिष्ठः। न राजादिवदुपचार इत्यर्थः। ज्ञानप्रदत्वं नोपाधिनिमित्तं किन्तु स्वभावतः भक्तप्रियत्वादिति भावेन प्रवृत्तपदार्थमाह— **भक्त्यैवेति** ।। सुरगुरुमिति विशेष्याभिधाने निमित्तमाह— **भक्तेति** ।। तद्व्याख्याति— **भक्त्यैवेति** ।। ग्रन्थादावभीष्टसिद्ध्यर्थं अन्यो वन्द्यः किं न स्यादित्यतः प्रवृत्तसकललोकेतिपदतात्पर्यमाह— **हरिप्रवणत्वमेव सर्वस्य धर्मो** न त्वन्यप्रवणत्वं धर्म इति ।। 'णमु प्रह्वत्वे' इति धातोः प्रवणत्वमिति व्याख्यातम् । निर्दोषतया च विशिष्टत्वमित्याह— **त्रैगुण्येति** ।। त्रिगुण- समुदायस्त्रैगुण्यम् ।। ५७ ।।

---

१. ई.भा. मङ्गलाचरणम् । २. ऐ.भा. २-५ ।

**भारतश्री**— कथमस्योक्तनिर्णयार्थत्वमित्यत तद्वाक्य स्वयमेव व्याचष्टे— **ज्ञानप्रद इत्यादिना** ।। 'ज्ञानप्रदस्स भगवान् कमलाविरिञ्चशर्वादिपूर्वजगत:' इत्यनेन 'भक्तप्रियम्' इत्येतद्व्याख्यातम् । 'हरिप्रवणत्वमेव' इत्यनेन 'सकललोकनमस्कृतं च' इत्युक्ततात्पर्यम् ।। ५७ ।।

**निर्दोषक: सृतिविहीन उदारपूर्ण–**
**संविद्गुण: प्रथमकृत् सकलात्मशक्ति: ।**
**मोक्षैकहेतुरसुरूपसुरैश्च मुक्तै-**
**र्वन्द्य: स एक इति चोक्तमथोत्तरार्द्धे ।। ५८ ।।**

**व्यास**— दोषा: खलु त्रिगुणनिमित्ता: त्रिगुणसमुदायलक्षणाभावे दोषाभाव: स्वतस्सिद्ध इति भवतीदं व्याख्यानं निर्दोषत्वं लेशतो दर्शयति— **सृतिविहीन इति** ।। विभु: पूर्ण इति निर्विशेष: निर्विशेषेण पूर्त्युक्तेरुदारेति भवति । तद्व्याख्यानं उदार: प्रत्येकमपि पूर्णा:। आद्यस्य खलु प्रथमस्रष्टृत्वम् । ईशत्वं ऐश्वर्यं सकलात्मक- शक्तित्वम् । अमराश्च ते असुराश्च सिद्धाश्च तैर्वन्द्यमिति पदमपूर्वार्थतया व्याचष्टे— **असुरूपेति** ।। ५८ ।।

**वादि**— 'त्रैगुण्यवर्जितम्' इत्यस्यार्थकथनं **निर्दोषक इति** । अज्ञानरागद्वेषनिद्रालस्यदु:खबन्धादिदोषाणां गुणत्रयमूलत्वात् त्रैगुण्यवर्जितत्वे निर्दोषकत्वमेव सेत्स्यतीति भाव:। जननं पुन:पुनर्जननं पुनर्भवाख्य: संसार इति यावत् । तद्रहितमिति व्युत्पत्त्या अजपदेन सृतिविहीनत्वमेवोच्यत इति भाव:। 'भू प्राप्तौ' इति धातो:। प्राप्त्यर्थानां च ज्ञानार्थकत्वात् भवनं ज्ञानम् । भूर्भूमित्वं सर्वाधारत्वम् । 'भा दीप्तौ' इति धातोर्भवनं दीप्ति:। भवनमभिभवनं शत्रूणां पराभव:। 'भू सत्तायां' इति धातोर्भवनं सर्वदा विद्यमानत्वम् । सर्वत्र भवतीति भवनं व्याप्ति:। भवनं तिरोभवनमदृश्यत्वम् । भवनमाविर्भाव: प्रसन्नत्वमित्यादिव्युत्पत्त्या भूपदेन संविदादिसद्गुणा: कथ्यन्ते । वि उत्कृष्टा: सर्वोत्तमा:, वि पूर्णा: संविदादिगुणा: यस्य स विभुरिति व्युत्पत्त्या विभुपदेन उदारसंविद्गुणत्वमेवोक्तं भवति । संविदादयो गुणा: संविद्गुणा:। संविच्च गुणाश्चेति वा विग्रह:। आदौ स्वोदरात् जगद्यापयतीति व्युत्पत्त्याद्य: प्रथमकृदित्यर्थ:। 'ईशल शक्तौ' इति धातो: सङ्कोचे कारणाभावात् वरादिना शक्तिप्रदस्यान्यस्याभावाच्च सकला सर्वा आत्मा स्वभावभूता शक्तिर्यस्येतीशपदस्यार्थ उक्त:। भवघ्नमित्यस्यार्थकथनं मोक्षैकहेतुरिति । मोक्षैकहेतुर्मुख्यकारणम् । भवं हन्तीति भवघ्न:। हनने कर्मणि हन्तैव मुख्य: अन्यत्सर्वं सहकारि । अतो मोक्षस्य मुख्यहेतुरिति भवघ्नपदस्यार्थ उक्त:। असून् रमयन्ति हर्षयन्तीति असुरास्तत्त्वाभिमानिन:। असून् रूपयन्तीत्यसुरूपेति फलितार्थकथनम् । सिद्धा: मुक्ताश्च ते असुरास्तत्वाभिमानिनश्च तेऽमराश्चामरासुरसिद्धा:। अग्न्याहितादिवदुत्तरपदपूर्वक: समास:। तैर्वन्द्य इत्यस्यार्थकथनमसुरूपसुरैश्च मुक्तैर्वन्द्य इति । सकललोक- नमस्कृतमित्यनेन संसारिसर्वलोकवन्द्यत्वमुच्यते । अत्र तु सिद्धपदमहिम्ना मुक्ता एवोच्यन्त इति न पौनरुक्त्यम् । 'अनानुभूतीरवधून्वान:' इति श्रुतेरसुराणां मुक्त्यभावादुक्तव्युत्पत्त्यासुरास्तत्वाभिमानिनो देवा:। तत्त्वाभिमानि- देवैरन्नपानादिना सौख्यदानेऽसूनां हर्ष:। अन्यथा दैर्घ्यमान्द्यश्वासादिरूपेण तेषामपि सम्यक् सञ्चारो नास्ति । अतोऽसुरपदेन तत्त्वाभिमानिनो देवा: सर्वेऽप्युच्यन्त इति भाव:। 'क्वचिदन्तरितानपि' इति वचनादिदमाद्यं

पद्यमसहमानाः केचिदादौ न लिखान्ति । केरळदेशस्थपुरातनपुस्तकेष्वद्यापि दृश्यते । कथमन्यथा लोकाचार्यो व्यासः लक्षपरिमितं ग्रन्थं कुर्वन् ग्रन्थादौ लोकशिक्षणाय मङ्गलं पद्यं न रचयेत् । यतोऽल्पीयसि ग्रन्थे भागवते हरिवंशादौ च 'सत्यं परं धीमहि' इति, 'सोऽनादिर्वासुदेवः शमयतु दुरितं जन्मजन्मार्जितं नः' इति च लोकशिक्षणार्थं मङ्गलमकरोत् । अतोऽस्मिन् महाग्रन्थे सकलशिष्टानां गुरुर्व्यासो मङ्गलमाचरदेवेति ज्ञेयम् ।। ५८ ।।

**अभिनव**— तत्रैव 'निर्दोषकः' इति श्लोके प्रथमकृदित्यस्य प्रथमौ सर्वजीवोत्तमौ ब्रह्मवायू करोतीत्यर्थः। अनेन आ सम्यक् आद्यौ सर्वजीवोत्तमौ ब्रह्मवायू यस्मात् भवतः स आद्यः इति व्युत्पत्तिमङ्गीकृत्य आद्यशब्दार्थ उक्तो भवति । ब्रह्मवाय्वतिरिक्तसर्वजीवोत्तमत्वं रुद्रस्यापि वर्तते । तद्व्युदासार्थं असंकुचितसर्वजीवोत्तमत्वं वक्तुं आ इत्यनेन सम्यक्त्वमुक्तम् । 'निर्दोषकस्सृतिविहीन' इति श्लोक एव असुरूपसुरैश्च मुक्तैर्वन्द्य इत्यस्ति । तस्यार्थः परमेश्वरवाचकाशब्देन तत्सादृश्यं गृह्यते । परमेश्वरवत् सुरूपं समीचीनानन्दादिस्वरूपं येषां ते असुरूपाः । असुरूपाश्च सुराश्च असुरूपसुराः । मुक्तैरित्यनेनोक्तं मुक्तत्वं सुराणामेव बुद्ध्या विवेकेन विशेषणम्। मुक्ताश्च तैर्वन्द्य इति । अनेन 'अमरासुरसिद्धवन्द्यम्' इत्यस्य ये अमराः देवाः असुरेत्यत्र सुखवाचकेन रशब्देन ज्ञानादिकं लक्ष्यते । असुराः परमेश्वरवत् समीचीनानन्दज्ञानादिरूपाः सिद्धाः मुक्ताश्च तैर्वन्द्यः इत्यर्थः उक्तो भवति । मुक्तानामानन्दादिना परमेश्वसाम्यं 'निरञ्जनः परमं साम्यमुपैति' इत्यादिश्रुतिसिद्धम् ।। ५८ ।।

**सङ्क**— इतोऽपि नारायण एव वन्द्य इत्यर्थप्रतिपादकं त्रैगुण्यवर्जितपदं तात्पर्यतो व्याचष्टे— **निर्दोषक इति** ।। त्रैगुण्यवर्जितत्वे हेतुतयोक्ताजशब्दार्थमाह— **सृतिविहीन इति** ।। अजत्वप्रतिपादकविभुशब्दतात्पर्यमाह — **उदरपूर्णसंविद्गुण इति** ।। उदारपूर्णसंविद्गुणत्वेन संसृतिकारणाज्ञानाभावादज इत्यभिप्रायः। अजत्वे हेत्वन्तरवाचकाद्यपदतात्पर्यमाह— **प्रथमकृदिति** ।। सर्वस्य जगतः प्रथमकर्तृत्वेन स्वस्य कर्तुरभावात् अज इति भावः। हेत्वन्तरेणाजत्वप्रतिपादकेशपदार्थमाह— **सकलात्मशक्तिरिति** ।। वन्दनफलाभिधायक-भवघ्नपदतात्पर्यमाह— **मोक्षैकहेतुरिति** ।। वन्दनं च भक्तियुक्तमेव मोक्षहेतुर्न वन्दनमात्रमित्यर्थप्रतिपादकं भक्तप्रियपदं तदर्थप्रतिपादकं यथा भवति तथा तात्पर्यमाह— **भक्त्यैव तुष्यतीति** ।। नारायणस्य हेत्वन्तरेण वन्द्यत्वप्रतिपादकममरासुरसिद्धवन्द्यमिति पदमन्यथाप्रतीतिनिरासाय व्याख्याति— **असुरूपसुरैरित्यादिना** ।। ५८ ।।

**वरद**— इतोऽपि नारायण एव वन्द्य इति हेत्वन्तरं वक्तुं त्रैगुण्यवर्जितमित्युत्तरार्धे प्रोक्तस्य तात्पर्यमाह— **निर्दोष इति** ।। सत्त्वादिगुणसम्बन्धस्य जननादिदोषमूलत्वात्तदभावे सर्वदोषाभाव एवोक्तो भवतीत्यर्थः। त्रैगुण्यवर्जितत्वमेव कथं ज्ञातमित्याकाङ्क्षायामजमित्युक्तं मूले तत्र स्वरूपतो जनननिषेधमात्रप्रतीतिनिरासार्थं व्याचष्टे— **सृतिविहीन इति** ।। देहतोऽपि जननाभावस्तदर्थः। तथा च नित्यमुक्तत्वमेवोक्तं भवतीति भावः। इदं तु रमासाधारणमित्यतो मूल— **विभुमित्युक्तम्** ।। तत्र देशतः कालतश्च व्याप्तत्वं विभुत्वं प्रतिभाति । तदपि रमासाधारणमेवेत्यतो गुणतोऽपि व्याप्तिस्तदर्थ इत्यभिप्रायेण तद्व्याख्याति— **उदारेति** ।। उदारा उत्कृष्टा पूर्णाः प्रत्येकं पूर्णाः संविदात्मकाः चिद्रूपा गुणा यस्येति विग्रहः। तथा च रमाव्यावृत्तिरिति भावः। अजशब्दोक्तनित्य-मुक्तत्वे हेतुत्वेन मूले आद्यमित्युक्तम् । तत्रादौ जातमित्याङ्क्षायां मूले— **ईशमित्युक्तम्** ।। तत्रादौ जातमित्यर्थस्य

विरुद्धत्वात्तत्तात्पर्यार्थमाह— **प्रथमकृदिति** ।। तथा च सर्वस्य जगत: प्रथमकर्तृत्वेन स्वस्य कर्तुरभावादजत्वं युक्तमिति भाव:। कथमाद्यत्वमित्याङ्कायां मूले ईश इत्युक्तम् । तत्र हेतुहेतुमद्भावस्य स्पष्टमप्रतीते: व्याचष्टे— **सकलात्मशक्तिरिति** ।। सकलसज्जनविषया स्वरूपशक्तिर्यस्यासौ तथोक्त:। तथा च प्रथमकर्तृत्वं युक्तमिति भाव:। इतोऽपि नारायण एव वन्द्य इति हेत्वन्तरं वक्तुं मूले 'भवघ्नम्' इत्युक्तं संसारनिवृत्तिमात्रहेतुत्वप्रतीतिनिरासार्थं तत्तात्पर्यमाह— **मोक्षैकहेतुरिति** ।। आवरणनिवृत्त्या स्वरूपानन्दाविर्भावो मोक्षशब्दार्थ:। तत्र एको मुख्यो हेतुरित्यर्थ:। अतस्तस्यैव वन्द्यत्वं युक्तमिति भाव:। अनेन मुमुक्षुभिर्वन्द्यत्वे लब्धे प्राप्ते मुक्तै:वन्द्यो न स्यात् प्रयोजनाभावादित्याशङ्कानिरासार्थं मूले अमरासुरसिद्धवन्द्यमित्युक्तमिति तत्रासुरशब्दस्य प्रसिद्धार्थप्रतीतिनिरासार्थं तदक्षरार्थं वदन् व्याचष्टे— **असुरूपेति** ।। अत्रासुरत्वस्यामरविशेषत्वात् पूर्वनिपातापेक्षयामरासुर-सिद्धेत्यस्यासुरूपसुरैरिति वैपरीत्येन योजनं कृतं असुभि: स्वरूपेन्द्रियै: चिन्मात्रै: रमन्ते स्वरूपानन्दमनुभवन्तीति असुरा: ते च ते सिद्धा: मुक्ताश्चेति असुरशब्दवाच्यानामिन्द्रियाणां चिन्मात्रत्वं वक्तुं असुरूपेत्युक्तम् । अमरपदव्याख्यानं सुरैश्चेति सिद्धपदार्थकथनम्— **मुक्तैरिति** ।। स नारायण एक एव वन्द्य इत्यनेननोभयत्र वन्द्यत्वोक्त्या पूर्वोत्तरार्धयो: भिन्नविषयत्वशङ्कां निवारयति— **इतीति** ।। इति श्लोकस्योत्तरार्धे निर्दोषक इत्यादिप्रमेयमुक्तमित्यर्थ: ।।५८।।

**जना**— क्रोधादियुक्तस्य वन्दनमशक्यमित्यत: वन्द्यत्वोपयोगिक्रोधाद्यभावमाह। तत्तात्पार्यर्थमाह— **निर्दोषक इति** ।। तेन त्रिगुणानामेव दोषकारणत्वात् कारणाभावादेव क्रोधादिकार्याभावे सिद्धे वन्द्यत्वं सिद्धमिति भाव:। दोषाभावमुपपादयति— **अजमिति** ।। न जायत इत्यज इतीदं जीवसाधारणमित्यत: न जायते देहो यस्येत्यजस्तेन देहस्याप्यप्राकृतत्वात् नित्यमुक्त इत्यर्थ:। तत्तात्पर्यमाह— **सृतिविहीन इति** ।। तेन रमासाम्यं प्राप्तमित्यत आह— **विभुमिति** ।। तत्तात्पर्यमाह— **उदारेति** ।। संविज्ज्ञानं गुणा आनन्दादयश्च संविदाख्या: गुणा: संविद्गुणा: बहुवचनं आद्यर्थे इति वा । उदारा उत्कृष्टा: पूर्णा: प्रत्येकं पूर्णा: संविद्गुणा: यस्य स इति लक्ष्म्या: पूर्णगुणाभावान्न साम्यम् । अजत्वे हेत्वन्तरमाह— **आद्यमिति** ।। तदर्थमाह— **प्रथमकृदिति** ।। आदौ यापयति स्वोदराद्बहिर्जगदिति आद्य: तेनास्य प्रथमकर्तृत्वात् एतस्मादादौ कर्त्रन्तरस्याभावान्न जन्मेति भाव:। अन्यत्रादृष्टं प्रलयवर्तित्वं कथमित्यत ईशमित्युक्तं तत्तात्पर्यार्थमाह— **सकलेति** ।। सकला सर्वकार्यविषयात्मस्वरूपभूता शक्तिर्यस्येति। वन्द्यत्वप्रयोजकमिष्टप्रदत्वमाह— **भवघ्नमिति** ।। इदमपि तात्पर्यतो व्याख्याति— **मोक्षैकहेतुरिति** ।। अत्र मोक्षपदेन लिङ्गभङ्गं स्वरूपभूतदु:खानन्दानुभवं चाह । तस्य मुख्यहेतुरित्यर्थ:। वन्द्यत्वे हेत्वन्तरमाह— **अमरेति** ।। अथवा पूर्वं वन्द्यत्वे भवघ्नमिति प्रयोजकमुक्तम् । तथा च प्राप्तफलै: न वन्द्य इति प्राप्ते आह— **अमरेति** ।। वन्द्यत्वं नाम स्वनीचत्वज्ञानपूर्वं वन्द्यस्योत्तमत्वज्ञानपूर्वं तस्मिन् स्नेहविशेष:। अयमेव भक्ति:। भक्त्या च मोक्ष:। तथात्वे नासुराणां तथा मुक्तिरिति वाक्यविरोध इत्यतस्तदर्थमाह— **असुरूपेति** ।। न विद्यते सुष्ठुरूपं वपुर्येषां निर्ऋतिप्रह्लादाद्या: ये सुशोभने रमन्ते ते सुरास्तै: वन्द्य इत्यर्थ: । तथा चामरा: ब्रह्माद्या-श्चासुरा: प्रह्लादाद्याश्च ते च ते सिद्धा: मुक्ताश्च तैर्वन्द्य इत्यर्थ:। यद्वा अमरा: सामान्यतो देवाश्चासुरा असूनी-न्द्रियाणि रमयन्ति ते असुरास्तत्त्वमानिनो देवाश्च ते च ते सिद्धा: मुक्ताश्च तैर्वन्द्य इत्यर्थ:। अत एव

असुरूपसुरैरित्युक्तम् । असवः रूपं प्रतिमा येषां तेऽसुरूपा इति। अथवा असवः रूपं स्वरूपं येषां ते असुरूपाः स्वरूपभूतचिन्मात्रेन्द्रिया इत्यर्थः। असुरूपाश्च ते सुराश्च । तेनामरासुरेत्यत्र [1]"कडाराः कर्मधारये' इति परनिपातः। इदं च मुक्तस्वरूपकथनपरम् । ते च ते सिद्धाश्च मुक्ताश्चेति । केचित्तु असुरूपाः चिन्मात्रेन्द्रियाः सिद्धा इति असुरूपेति सिद्धविशेषणम् । तेनामराश्च ते असुरसिद्धाश्चेति समास इत्याहुः । इदमसुरूपसुरैश्चेत्यनुवादाननुरूपमिवाभाति । एकवचनाभिप्रायमाह— **स एक इति** ।। तेन मोक्षप्रदसृष्टिकर्त्रादिमूर्तीनां भेद इति प्राप्ते अभेदप्रतिपादकमेकवचनं तस्यार्थः सः सृष्ट्यादिकर्ता नारायण एक एव स्वगतभेदरहित इति । उत्तरार्ध इति चापि उक्तम् । अथ तस्माद्विष्णोः सर्वोत्तमत्वमुक्तं मङ्गलम् ।। ५८ ।।

**ताम्र—** यद्वा त्रिगुणानामिदं त्रैगुण्यं त्रिगुणकार्यमिति मत्वाह— **निर्दोषक इति** ।। कामादिदोषा खलु त्रिगुणनिमित्ताः कथं वा तदभावे स्युरिति भावः। कथं च त्रैगुण्यवर्जनं तत्प्रयुक्तदुःखादिदोषाभावश्चेत्यत आह— **अजमिति** ।। अजत्वं न तत्र हेतुरित्यतस्तदभिप्रायमाह— **सृतीति** ।। न हि नित्यमुक्तस्य दोषा भवेयुरिति भावः। नित्यमुक्तत्वे दोषाभावेऽकार्यलिङ्गमाह— **अजमिति** ।। तद्व्याचष्टे— **सृतीति** ।। विरोधिगुणसद्भावाच्च न दोषा इत्याह— **विभुमिति** ।। तद्व्याचष्टे— **उदारेति** ।। यद्वा हेतुमाह— **विभुमिति** ।। विभुमिति व्याप्तत्वं न संसाराभावोपपादकमित्यतो व्याचष्टे— **उदारेति** ।। 'भू बहौ, बहुः पूर्णतायाम्' इति धातुः। पूर्णत्वं च ज्ञानादिगुणैः। तथा च निर्दुष्टनिरवधिकज्ञानदिगुणवतो न संसारसंभवः। [2]"यद्यद्भवन्ति तत्तदा भवन्ति' इत्यज्ञानस्यैव संसारहेतुत्वश्रवणादिति भावः। एतेन विशिष्टत्वाच्च नम्यत्वमित्युक्तं भवति । संसाराभावे हेत्वन्तरं वदन्विशिष्टत्वमाह— **आद्यमिति** ।। आदौ विद्यमानमित्यर्थः। तत्तात्पर्यं प्रथमकृदिति । तस्य सर्वजगत्प्रधान-कर्तृत्वेन स्वस्योत्पत्त्यादिकर्तुरभावात् संसाराभावादिति भावः। दोषास्पृष्टौ गुणपूर्तौ च शक्तिर्हेतुरित्याह— **ईशमिति** ।। तद्व्याचष्टे— **सकलेति** ।। सर्वसम्पादनविषये निस्सीमस्वरूपभूतशक्तिमानित्यर्थः। न केवलं ज्ञानप्रदत्वादिष्टत्वं किन्त्वावरणनिवृत्तिद्वारा परमानन्दप्रदत्वाच्चेति भावेन प्रवृत्तभवघ्नविशेषणस्य वाय्वादिसाधारण्यं निवर्तयन् व्याचष्टे— **मोक्षेति** ।। मुक्तैरपि वन्द्यत्वात् मुमुक्षुभिर्वन्द्यत्वे का कथेत्यभिप्रायेणामरासुरेत्याद्युक्तम् । तदन्यथाप्रतीतेरपूर्वार्थतया व्याचष्टे— **असुरूपेति** ।। असुरूपा इन्द्रियाभिमानिनः। तेनासुरशब्दस्य असुषु रमन्त इत्यसुरा इत्यर्थः। सिद्धपदं मुक्तपरम् । विशेषणविशेष्यभावस्य कामचारित्वात्सिद्धाश्च ते असुराश्च ते अमराश्च तैर्वन्द्यमिति विग्रह इत्युक्तं भवति । नारायणं सकललोकनमस्कृतमजमीशममरासुरसिद्धवन्द्यमित्युक्त्या प्राप्तं पूर्वोत्तरार्धयोर्नारायणचतुर्मुखरुद्रलक्षणमर्थभेदं वारयत्येक इति ।। ५८ ।।

**भारतश्री—** विभुमिति मूलस्थं पदं व्याचष्टे— **उदारपूर्णसंविद्गुण इति** ।। उदाराः उत्कृष्टाः पूर्णाः संविदात्मकाः चिद्रूपाः गुणा यस्येति विग्रहः। असुरशब्दार्थमाह— **असुरूपसुरैरिति** ।। असवः प्राणाः इन्द्रियाणि वा रूपं प्रतिमा अधिष्ठानं अभिमन्यमानमिति यावत् येषां ते तथा । ते च ते सुराश्चेति । अमराः मुक्ता इत्यर्थः। पूर्वं सकललोकनमस्कृतमित्युक्तत्वात् इदानीं मुक्ता इत्युक्तम् ।। ५८ ।।

---

१. पा.सू. २-२-३८ । २. छा.उ. ६-३-७,९ ।

**नम्यत्वमुक्तमुभयत्र यतस्ततोऽस्य**
**मुक्तैरमुक्तिगगणैश्च विनम्यतोक्ता ।**
**इत्थं हि सर्वगुणपूर्तिरमुष्य विष्णोः**
**प्रस्ताविता प्रथमतः प्रतिजानतैव ।। ५९ ।।**

**व्यास**— प्रसिद्धदेवाद्यर्थत्वं विहाय मुक्तपरतया व्याख्याने किं निमित्तमित्याह— **नम्यत्वमिति** ।। उभयत्र उभयोरप्यर्धयोः पूर्वार्धसिद्धवन्द्यत्वसिद्धे द्वितीयं व्यर्थमिति भावः। प्रस्ताविता भारतप्रतिपाद्यत्वेन । ननु मङ्गलाचरणवाक्येन ग्रन्थप्रतिपाद्यो निश्चेतुं शक्यः तस्याविघ्नपरिसमाप्त्यर्थत्वेनापि प्रवृत्युपपत्तेरित्यत उक्तं प्रतिजानीते । भारतस्य शास्त्रत्वात् । शास्त्रस्य च प्रतिज्ञावाक्यार्थं प्रतिपादनरूपत्वादुक्तं सूक्तमिति भावः ।।५९ ।।

**वादि**— उत्तरपूर्वार्धयोर्मुक्तामुक्तग्रहणे को हेतुरित्यतो वक्ति— **नम्यत्वमिति** ।।५९ ।।

**सङ्क**— ननु 'सकललोकनमस्कृतं' 'अमरासुरसिद्धवन्द्यम्' इति पूर्वोत्तरार्धयोर्नम्यत्वमुक्तमतः पुनरुक्तिदोषः स्यादित्यत आह— **नम्यत्वमिति** ।। **तत इति** ।। उभयत्र नम्यत्वोक्तेरेवेत्यर्थः। न चैवं व्याख्यातेऽस्मिन् श्लोके कःफलितार्थः सिद्ध इत्यत आह— **इत्थं हीति** ।। प्रस्ताविता उपक्रान्ता । प्रतिजानता प्रतिज्ञां कुर्वन्नित्यर्थः ।।५९ ।।

**वरद**— ननु पूर्वार्धे सकललोकनमस्कृतमित्युक्तत्वात्पुनर्द्वितीयार्धे अमरासुरसिद्धवन्द्यमित्यनेनोच्यमानं वन्द्यत्वं पुनरुक्तमित्याशङ्क्य परिहरति— **नम्यत्वमिति** ।। उभयत्र पूर्वार्धे उत्तरार्धे चास्य नारायणस्य नम्यत्वमुक्तं यतः ततः कारणादस्य नारायणस्यामुक्तकगणैर्मुक्तैश्च विनम्यता यथाक्रममुक्ताऽतो न पौनरुक्त्यमित्यर्थः। अन्यथा पौनरुक्त्यप्रसङ्गादेवेति भावः। नन्वेवं व्याख्यातेऽस्मिन् श्लोके कः फलितार्थः सिद्ध इत्यत आह— **इत्थं हीति** ।। अमुष्य विष्णोः सर्वगुणपूर्तिप्रतिजानता व्यासेनेत्थं सर्वगुणपूर्तिः प्रस्ताविततोपक्रान्ता ।। ५९ ।।

**जना**— अमरासुरसिद्धवन्द्यमित्यस्येवं व्याख्याने किं बीजमित्यतः पुनरुक्तिपरिहारार्थमेवं व्याख्यानमित्याह — **नम्यत्वमिति** ।। उभयत्र पूर्वार्धे उत्तरार्धे च । यतः नम्यत्वमुक्तं ततः उभयत्र नम्यत्वोक्तेः अस्य हरेः मुक्तैरमुक्तगणैश्च विनम्यतोक्ता भवति । तेन पुनरुक्तिपरिहार इत्यर्थः। फलितमाह— **इत्थं हीति** ।। प्रथमतः प्रथमवाक्य एव । इत्थमनेन प्रकारेणामुष्य विष्णोः सर्वगुणपूर्तिः प्रस्ताविता उपक्रान्ता व्यासेनेति शेषः। ननु मङ्गलाचरणवाक्यं नार्थनिश्चायकं तस्येष्टदेवतास्तुत्यर्थस्य प्रतिपाद्यार्थानिश्चायकत्वादित्यत उक्तम्— **प्रतिजानतेति** ।। प्रतिज्ञां कुर्वता । भारतस्य शास्त्रत्वात् शास्त्रस्य प्रतिज्ञातार्थप्रतिपादकत्वादन्यस्य प्रतिज्ञावाक्यस्याभावादिदमेव मङ्गलप्रतिपादकं प्रतिज्ञावाक्यं चेत्तस्मादुक्तं युक्तमित्यर्थः।। ५९ ।।

**ताम्र**— प्रसिद्धदेवाद्यर्थत्वं विहाय मुक्तपरतया व्याख्याने किं निमित्तमित्यत आह— **नम्यत्वमिति** ।। अन्यथा पुनरुक्तेरिति भावः। प्रस्ताविता भारतप्रतिपाद्यत्वेनोपक्रान्ता । नन्वाद्यश्लोके मङ्गलमारचयता

शिष्टत्वाद्युपपादनाय तच्छेषतया गुणपूर्तिरूक्ता । न तु क्रियमाणभारतप्रतिपाद्यतयोपक्रान्तेत्यत उक्तं प्रतिजानीते । यथा हि मीमांसोपक्रमस्थं 'अथातो ब्रह्मजिज्ञासा' इति वाक्यं चतुरध्यायात्मकशास्त्रस्य प्रतिज्ञारूपं यावच्छास्त्रार्थ-प्रतिपादकं च तथा भारतस्यापि शास्त्रत्वेन यस्य कस्यचिदर्थस्य साधनाय प्रवृत्तत्वात् प्रतिज्ञातस्यैव साधन-योगादिदमपि पद्यं शास्त्रार्थप्रतिज्ञारूपमत एव यावद्भारतार्थसङ्ग्राहकमिति न मङ्गलमात्रतात्पर्यकमिति भावः ।। ५९ ।।

**भारतश्री**— तदेवाह— **नम्यत्वमिति** ।। प्रतिजानता प्रतिज्ञास्यता ।। ५९ ।।

**[1]कृष्णो यज्ञैरिज्यते सोमपूतैः**
**कृष्णो वीरैरिज्यते विक्रमद्भिः ।**
**कृष्णो वन्यैरिज्यते सम्मृशानैः**
**कृष्णो मुक्तैरिज्यते वीतमोहैः ।। ६० ।।**

**वादि**— मुक्तामुक्तवन्द्यत्वे स्पष्टं भारतवचनं पठति— **कृष्ण इति** ।। सोमपूतैर्यज्वभिः। विक्रमद्भिः विक्रमं कुर्वद्भिः। वीरैर्नृपैः। इज्यते 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इति वचनात् युद्धाख्य-स्वधर्मेणेज्यत इत्यर्थः। सम्मृशानैः सम्यक् वेदादिशास्त्रविचारं कुर्वद्भिः। वन्यैर्वनस्थैः सन्यासिभिर्वानप्रस्थैश्च । इज्यते ज्ञानयज्ञेनेज्यते । वीतमोहैर्मुक्तैरिज्यते [2]"ऋचां त्वः पोषमास्ते' इत्यादिश्रुतेः ऋक्पोषणसामगानभागवतादि-पौरुषेयग्रन्थाभ्यसनाध्ययनादिना पूज्यत इत्यर्थः ।। ६० ।।

**सङ्क**— 'कृष्णो यज्ञैरिज्यते' 'सृष्टा ब्रह्मादयः' 'नमो भगवते तस्मै' 'वासुदेवस्तु' 'नास्ति नारायणं समं' इति श्रीमहाभारतश्लोकपञ्चकपर्यालोचनया भारतस्यापि हरेः सद्गुणनिर्णयात्मकत्वं प्रतीयते इत्याह— **कृष्ण इत्यादिना** ।। सोमपूतैः सोमपानेन पूतैः विशुद्धैः। धर्मार्थयुद्धे विक्रमद्भिः पराक्रमिभिरिति क्षत्रियैः। वन्यैः वनस्थैः। संमृशानैः सम्यक् विचारशीलैः। वीतमोहैः मुक्तैश्च । कृष्णः परं ब्रह्म इज्यते इत्युक्त्या श्रीविष्णुः सर्वगुणोत्तमः इति प्रतीयतेत्यर्थः।। ६० ।।

**वरद**— नोपक्रममात्रस्य तात्पर्यनिश्चायकत्वमित्यतः उपसंहारवाक्येऽपि भगवतो गुणपूर्तिरिवोच्यत इत्युपक्रमोपसंहारैकरूप्यमस्तीत्यभिप्रायेण उपसंहारवाक्यानि पठति— **कृष्णो यज्ञैरित्यादि** ।। कृष्णः परं ब्रह्म सोमपूतैः सोमपानेन शुद्धैः। कर्तृभिः यज्ञैः करणैः इज्यते । विक्रमद्भिः विक्रमं पराक्रमं कुर्वद्भिः वीरैः युद्धाख्यैः यज्ञैः कृष्ण एवेज्यते। एवं संमृशानैः सम्यग्विचारणशीलैः। वन्यैर्वनस्थैः तपस्विभिः कृष्ण एवेज्यते । किं बहुना वीतमोहैरपगताज्ञानैः मुक्तैरपि कृष्ण एवेज्यते इति श्लोकार्थः। अनेन सर्ववर्णाश्रमोपेतमुक्तामुक्त-पूज्यत्वोक्त्या सर्वोत्कृष्टत्वमेवोच्यते ।। ६० ।।

---

१. म.भा.अनुशासनपर्वणि व्यासवाक्यमेतत्, १८-६ । २. ऋ.सं. १०-७१-११ ।

**जना**— भारतवाक्यानि भारतवाक्यैर्निर्णीयन्त इत्युक्तम् । तद्दर्शयितुमत्रोक्तं मुक्तामुक्तवन्द्यत्वरूपमर्थं स्फुटं प्रतिपादयद्वाक्यं पठति— **कृष्ण इति** ।। कृष्णः नारायणः सोमपूतैः सोमपानेन पूतास्तैः सोमपानेन शुद्धिमिच्छुभिर्वा यज्ञैर्यजन्ति । ते यज्ञाः यजमानास्तैः। तेन न प्रायपाठविरोधः। अत्र यज्ञः करणं सोमपानेच्छवः कर्तार इत्यर्थात्सिद्ध्यति । इज्यते पूज्यते । विक्रमन्ति पराक्रमं कुर्वन्ति ते विक्रमन्तस्तैः विक्रमः साधनं वीराः कर्तारः। वन्यैर्वानप्रस्थैर्यतिभिर्वा । संमृशानैः सम्यक् विष्णुविचारशीलैः। अत्र विचारः करणम् । वीतमोहैः गतहरिज्ञानप्रतिबन्धकाज्ञानैः लक्षणया प्रतिबन्धकनिवृत्तौ स्वत एवाविर्भूतज्ञानवत्त्वाद्वा ज्ञानवन्त उच्यन्ते । तेन ज्ञानं करणम् । पूर्वोक्तास्त्रयः अमुक्ताः। तथा च मुक्तामुक्तपूज्यत्वस्योपसंहारे उक्तत्वादुपक्रमे च तदेव ज्ञेयमिति भावः।। ६० ।।

**ताम्र**— कृष्णो यज्ञैः, सृष्टा ब्रह्मादयः, नमो भगवते, वासुदेवस्तु भगवानिति भारतोपक्रमश्लोकचतुष्टय पर्यालोचनया भारतस्य हरिसद्गुणनिर्णयात्मकत्वं प्रतीयत इति भावेन तानि पठति— **कृष्ण इत्यादिना** ।। सोमपूतैः सोमपानशुद्धैः कर्तृभिः। यज्ञैः करणैः। विक्रमद्भिः विक्रमं कुर्वद्भिः युद्धाख्ययज्ञैः करणैः। संमृशानैः सम्यग् ब्रह्मविचारशीलैः। वन्यैरगृहस्थैः यतिभिर्वानप्रस्थैश्च । किं बहुना वीतरागैर्मुक्तैरपि स एवेज्यते इत्यर्थः ।। ६० ।।

**भारतश्री**— उपसंहारवाक्यस्य तात्पर्यनिश्चायकत्वात् उपसंहारवाक्यानि पठति— **कृष्ण इत्यादिना** ।। कृष्णः सोमपूतैः सोमपानेन शुद्धैः कविभिः यज्ञैः करणैः इज्यते । विक्रमद्भिः पराक्रमं कुर्वद्भिः युद्धाख्ययज्ञैः। संमृशानैः सम्यग्विचारणशीलैः। वन्यैः तपस्विभिः। कृष्ण एव इज्यते । ज्ञानादियज्ञेनेति शेषः। किं बहुना वीतमोहैः अपहृताज्ञनैर्मुक्तैरपि कृष्ण एवेज्यते ।। ६० ।।

**सृष्टा ब्रह्मादयो देवा निहता येन दानवाः ।**
**तस्मै देवाधिदेवाय नमस्ते शार्ङ्गधारिणे ।। ६१ ।।**

**व्यास**— उपक्रमवाक्यान्तरं पठति— **सृष्टा इति** ।। ६१ ।।

**जना**— भवघ्नमित्येतत् द्विविध मोक्षदत्वेन व्याख्यातं तद्भारतवाक्येन द्रढयति— **सृष्टा इत्यनेनोत्तरार्धेन** ।। जगदेकनाथमित्येतदुपपादयति— **देवाधिदेवायेत्यनेन** ।। ६१ ।।

**स्त्रष्टृत्वं देवानां मुक्तिस्त्रष्टृत्वमुच्यते नान्यत् ।**
**उत्पत्तिर्दैत्यानामपि यस्मात् सम्मिता विशेषोऽयम् ।। ६२ ।।**

**व्यास**— सृष्टहतशब्दावपूर्वार्थतया व्याकुर्वन् प्रसिद्धार्थताङ्गीकारे बाधकं चाह— **स्त्रष्टृत्वमिति** ।। अन्यत् देहयोगलक्षणम् । तस्मादयं विशेषार्थो उक्तः। इयं च समेति शेषः।। ६२ ।।

**वादि**— सृष्टनिहतशब्दावपूर्वार्थतया व्याकुर्वन् प्रसिद्धार्थग्रहणे बाधकं चाह— **स्त्रष्टृत्वमिति** ।। मुक्तेः स्त्रष्टृत्वं मुक्तिस्त्रष्टृत्वम् । एवं च बन्धध्वंसाख्यमुक्तिसृष्टिमन्तः कृता इति मूलस्यार्थः सूचितो भवति । अन्यत्

देहयोगलक्षणं स्रष्टृत्वं न यस्मात् । उत्पत्तिः देहोत्पत्तिर्दैत्यानामपि सम्मिता । तस्मादयं पूर्वोक्तो विशेषो मुक्तिस्रष्टृत्वरूपविशेष एव ग्राह्यः। अनेन यथास्थितार्थग्रहणे ब्रह्मादयो देवाः सृष्टा इति विशिष्योक्तिर्न घटत इति बाधकं सूचितम् ।। ६२ ।।

**सङ्क**— 'सृष्टा ब्रह्मादय' इत्यस्य श्लोकपूर्वार्धस्यान्यथाप्रतीतिनिरासायार्थमाह— **स्रष्टृत्वमिति** ।। अन्यथाप्रतीतिं निराचष्टे—**नान्यदिति** ।। देहसङ्गेनोत्पत्तिर्नेत्यर्थः। ननु देवानां स्रष्टृत्वं नाम देहसंयोगरूपेणोत्पत्तिरेव किं न स्यादित्यत आह— **उत्पत्तिरिति** ।। उत्पत्तिर्दैत्यानामपि सम्मिता समाना यस्मात् देहसंयोगोत्पत्तिर्देवाना-मेवेयमविशेषोऽर्थः न भवतीत्यतो देहोत्पत्तिर्नेत्यर्थः।। ६२ ।।

**वरद**— 'सृष्टा ब्रह्मादय' इति श्लोके पूर्वार्धेऽन्यथाप्रतीतिनिरासार्थं सयुक्तिकं व्याचष्टे— **स्रष्टृत्वं देवानामिति** ।। ब्रह्मादिदेवानां यत्स्रष्टृत्वं सृष्टा ब्रह्मादय इत्यनेनोच्यते तन्मुक्तिस्रष्टृत्वं मुक्तिदातृत्वमेवोच्यते न तूत्पत्त्यादिकर्तृत्वरूपं स्रष्टृत्वमुच्यते कुत इत्यत आह— **उत्पत्तिरिति** ।। यस्मात्कारणादुत्पत्तिः दैत्यानामपि संमिता समाना तस्मादत्र मुक्तिरेव सृष्टिरित्ययं विशेषो विशेषार्थोऽपूर्वार्थो ज्ञायत इत्यर्थः। यद्वा अविशेषोऽयमिति पदच्छेदः। यस्मात् दैत्यानामप्युत्पत्तिः संमिता तस्मात् ब्रह्मादयः सृष्टा इति विशेषोक्तिर्न स्यात् तस्मात्तद्बलादपूर्वार्थो लभ्यत इति ।। ६२ ।।

**जना**— अत्र स्रष्टृत्वं हन्तृत्वं न देहयोगवियोगपरमपि तु विशेषार्थपरमिति । तं श्लोकं व्याख्याति श्लोकद्वयेन— **स्रष्टृत्वमिति** ।। देवानां स्रष्टृत्वं नाम देवानां मुक्तिप्रदत्वमुच्यते । अन्यद्देहोत्पत्तिः न । कुतो नेत्यत उक्तम्— **उत्पत्तिरिति** ।। दैत्यानामप्युत्पत्तिः संमिता सम्मता तस्मादयं विशेषः मोक्षदत्वरूपः कथित इत्यर्थः। यद्वा अविशेषोऽयमिति पदच्छेदः। यस्माद्दैत्यानामप्युत्पत्तिः संमिता समाना तस्मादत्र मुक्तिरेव सृष्टिरुत्पत्तिः संमिता समाना यस्माद् ब्रह्मादयः सृष्टा इति विशेषोक्तिर्न स्यात् तस्मादपूर्वार्थो लभ्यत इत्यर्थः ।। ६२ ।।

**ताम्र**— सृष्टहतशब्दावपूर्वार्थतया व्याकुर्वत् प्रतीतार्थे बाधकमाह— **स्रष्टृत्वमिति** ।। अन्यत् देहयोगलक्षणम् । तत्र हेतुरुत्पत्तिरिति । यस्माद्दैत्यानामप्युत्पत्तिः संमिता तस्मादिति पूर्वेणान्वयः।। ६२ ।।

**भारतश्री**— अप्रतीते स्वयं व्याचष्टे— **स्रष्टृत्वमित्यादिना** ।। अयं विशेषो विशेषार्थः पूर्वार्धे ज्ञायते इत्यर्थः ।। ६२ ।।

**अथ च दैत्यहतिस्तमसि स्थिरा**
**नियतसंस्थितिरेव न चान्यथा ।**
**तनुविभागकृतिः सकलेष्वियं**
**न हि विशेषकृता सुरदैत्यगा ।। ६३ ।।**

**व्यास**— विशेषकृता विशेषकारणकृता ।। ६३ ।।

**वादि**— यस्मादियं तनुविभागकृतिः तनुविभागकृतिरूपहननं सकलेषु समा। सुरदैत्यगा सुरेषु दैत्येषु च विद्यमाना विशेषकृता न हि । अथ तस्मात्कारणात् दैत्यहतिस्तमसि स्थिरा नियतसंस्थितिरेव तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातनिपतनैरुद्गमनप्रतिरोधे सति नियमं प्रापिता अत एव स्थिरेत्युक्तम् । अनेन 'निहता येन दानवा' इत्यस्यार्थः समर्थित इति ज्ञेयम् ।। ६३ ।।

**सङ्क**— अन्यथाप्रतीतिनिरासायोत्तरार्धस्यार्थमाह— **अथेति** ।। अन्यथाप्रतीतिनिरासाय व्याचष्टे— **न चान्यथेति** ।। निहतशब्दो देहवियोगवाची नेत्यर्थः। ननु निहतशब्दो देहवियोगवाची किं न स्यादित्याशङ्कां परिहरति— **तनुविभागकृतिरिति** ।। इयं तनुविभागकृतिः सकलेषु देवादिष्वपि मुक्तिपर्यन्तमस्तीति यस्मात् तस्मात् तदियं सुरेषु नास्ति दैत्येष्वस्तीति विशेषकृता नहि अतो निहतिशब्दो देहवियोगवाची नेत्यर्थः।। ६३ ।।

**वरद**— एवं येन दानवाः निहता इत्यत्रापि या दैत्यहतिः दैत्यानां हननं यदुच्यते सा तमसि स्थिरा अपर्यवसिता नियता कलिमारभ्य यथायोग्यास्थितिरेवोक्ता न चान्यथा न तु तनुविभागकृतिरूपा हतिरत्रोक्ता । कुत इत्यत आह— **तनुविभागेति** ।। इयं निहतशब्दार्थपर्यालोचनया प्रतीयमाना तनुविभागकृतिः देहवियोग करणलक्षणा हतिः सकलेषु देवेषु दैत्येषु च समाना हि यस्मात् तस्मात्सुरदैत्यगा देवेषु दैत्यषु च विद्यमाना तनुविभागकृतिर्न विशेषकृता येन दानवाः निहता इति विशेषोक्तिः तनुविभागकरणविषया न भवति किन्तूक्तविषयेत्यर्थः ।। ६३ ।।

**जन्ना**— दैत्यहतिशब्दार्थमाह— **अथेति** ।। अथ च तस्मादेव दैत्यहतिर्दैत्यहननं नाम तमसि स्थिरा नित्या नियता संस्थितिः नियमेनावस्थानमेव अन्यथा देहवियोगो न । कुतो नेत्यत उक्तम्— **तन्विति** ।। इयमित्यस्यैव व्याख्यानं तनुविभागकृतिः देहवियोगकारणम् । सकलेषु देवमनुष्यदैत्येषु वर्तते हि । इयमित्यग्रे वा सम्बध्यते सुरदैत्यगेयं हतिः। विशेषकृता प्रीतिः द्वेषरूपविशेषनिमित्ता न भवति अतः सृतिहतिशब्दार्थावुक्तावेव ग्राह्यौ ।। ६३ ।।

**ताम्र**— सर्वसाधारणस्याप्युक्तिः किं न स्यादित्यत आह— **अयं च विशेष इति** ।। देवदानवा इति च विशेष उच्यते। अतो न साधारण्येनोच्यत इत्यर्थः। यद्वा विशेषोऽयमिति पदच्छेदः। यस्माद्दैत्यानामप्युत्पत्तिः समा तस्माद्ब्रह्मादयः सृष्टा इति विशेषोक्तिर्न स्यादित्यर्थः। तमसि स्थिरा पुनरावर्तिरहिता । नियता कलिमारभ्य यथायोग्यं क्लृप्ता संस्थितिरेव दैत्यहतिशब्दोक्ता । कुतः। इयं प्रसिद्धा तनुविभागकृतिः मुक्तिपर्यन्तं देवादिष्वपि समा हि यस्मात्तस्मात्सुरदैत्यगा तनुविभागकृतिर्विशेषकृता दैत्येष्वस्ति न देवेष्विति । विशेषत्वेन कृता न हीत्यर्थः। यद्वा विशेषकारणकृता न भवति । किन्तु साधारणहेतुरेकेत्यर्थः। तनुविभागलक्षणहतेः सर्वसाधारणत्वेन दानवा निहता इति विशिष्योक्तिर्न स्यादिति भावः।। ६३ ।।

**तमिममेव सुरासुरसञ्चये**
**हरिकृतं प्रविशेषमुदीक्षितुम् ।**
**प्रतिविभज्य च भीमसुयोधनौ**
**स्वपरपक्षभिदा कथिता कथा ।। ६४ ।।**

**व्यास**— न केवलमस्मद्व्याख्यानमुपपत्तिसिद्धं किन्तु भगवान् देवानामिष्टसाधकोऽसुराणामनिष्टसाधक इत्येतत् स्पष्टं भारतसिद्धं चेत्याह— **तमिति** ।। उदीक्षयितुम् । भीमसुयोधनलक्षणस्वपरपक्षभिदा तन्निमित्ता कथा ।। ६४ ।।

**वादि**— न केवलमस्मद्व्याख्यानमुपपत्तिसिद्धं किन्तु भगवान् देवानामिष्टसाधकोऽसुराणामनिष्टसाधक इत्येतद्भारतकथापर्यालोचनायामपि स्पष्टं सिद्धमित्याह— **तमिममिति** ।। उदीक्षितुं उदीक्षयितुम् । अन्तर्णीतो णिच् । दुर्योधनसङ्कटस्य भीमहर्षस्य च दर्शने व्यासस्यापि रुचिरस्तीति सूचयितुमणिजन्तप्रयोगः। भीमसुयोधनौ प्रतिविभज्य प्रतिप्रति स्थिततया विभज्य । स्वपरपक्षभिदा स्वपरपक्षयोर्भिदा । जयपराजयाख्यफलभेदो यस्यां सा कथा कथितेत्यर्थः।। ६४ ।।

**सङ्क**— इतोऽपि 'सृष्टा ब्रह्मादय' इत्यस्य श्लोकस्याप्ययमेवार्थो भवेत् । दुःखं नत्वादित्याह— **तमिममेवेति** ।। सुरसञ्चयस्य मोक्षो असुरसञ्चयस्यान्धंतम इति यो विशेषो तमिमं हरिकृतं विशेषं सुरासुरसञ्चय उदीक्षितुं दर्शयितुमेव भीमसुयोधनौ प्रतिविभज्य मदीयोऽयं पक्षः परपक्षः सः इति भेदकेन श्रीवेदव्यासेन श्रीमहाभारतकथा कथिता इति उपपन्नत्वं प्रतीयते इति सर्वस्वातन्त्र्येण सर्वकर्तृत्वात् श्रीविष्णुः सर्वगुणोत्तम इति प्रतीयते इति सिद्धमित्यर्थः। 'नमो भगवते' इत्यादि श्लोकत्रयस्य स्पष्टोऽर्थः।। ६४ ।।

**वरद**— ननु परचित्तवृत्तेरप्रत्यक्षत्वात् भगवतो व्यासस्यायमेवाभिप्राय इति कथं ज्ञायत इत्यत आह— **तमिममिति** ।। सुरासुरसञ्चये देवदैत्यसमुदाये हरिकृतं हरिणा व्यासेन कृतं विवक्षितं प्रविशेषं प्रकृष्टं विशेषं देवानां मुक्तिदातृत्वं दैत्यानां तमोदातृत्वमित्येवं रूपं विशेषमुदीक्षितुं अन्तर्णीतण्यर्थत्वात् प्रदर्शयितुं स्वपरपक्षभिदा स्वपक्षपरपक्षौ भिनत्ति विवेचयतीति स्वपरपक्षभित् तेन भगवता व्यासेन भीमसुयोधनौ प्रतिविभज्य भीमो मदीयपक्षः सुयोधनः परपक्ष इति विभागं कृत्वा भारतकथा कथिता तस्मादयं विशेषो व्यासस्याभिप्रेत इति ज्ञायत इत्यर्थः। तथा च ब्रह्मादीनां मुक्तिदातृत्वेन कल्यादीनां तमोदातृत्वेन च भगवतो महामाहात्म्यमेव भारतवाक्ये अवगम्यत इति भावः।। ६४ ।।

**जना**— न केवलमस्मद्व्याख्यानमुपपत्तिसिद्धमित्यतः सृष्टिहतिशब्दार्थः मुक्तितमःप्रदानार्थकः। अपि तु भारतकथापर्यालोचनेनापि देवेष्टसाधक असुरानिष्टसाधक इति सिद्धेऽर्थादेवायमर्थः सिद्ध इत्याह— **तमिति** ।। सुरासुरसञ्चये हरिकृतं तमिमं पूर्वोक्तं प्रविशेषमुदीक्षितुमुदीक्षयितुमन्तर्णीतो णिच् । स्वश्चासौ परश्च स्वपरौ तौ च तौ पक्षौ च स्वपरपक्षाविति भिदा स्वपक्षः परपक्ष इति भेदेन भीमसुयोधनौ विभज्य भारते प्रतिस्थिता कथा कथिता । अतः पूर्वोक्त एव सृतिहतिशब्दार्थ इति भावः ।। ६४ ।।

**ताम्र**— न केवलमस्मद्व्याख्यानमुपपत्तिसिद्धं किन्तु भगवान् देवानामिष्टप्रदोऽसुराणामनिष्टप्रद इत्येतत्स्पष्ट-मुपरिकथासिद्धं चेत्याह— **तमिममिति** ।। तमिममुपक्रान्तं सुरासुरसञ्चये हरिकृतं विशेषं निदर्शनेनो-दीक्षयितुं स्वपरपक्षभिदा भीमादयः कृष्णपक्षीयाः, दुर्योधनादयः कृष्णस्य शत्रुपक्षा इति भेदेन कथा व्यासेन कथितेत्यर्थः ।। ६४ ।।

**भारतश्री—** तमिमं देवानां मुक्तिदातृत्वं दैत्यानां तमोदातृत्वं च विशेषणं हरिकृतं हरेः कर्म उदीरितुं प्रदर्शयितुं स्वपरपक्षौ भिनत्तीति भिदा कथिता । व्यासेनेति शेष:।। ६४ ।।

**[१]नमो भगवते तस्मै व्यासायामिततेजसे ।**
**यस्य प्रसादाद् वक्ष्यामि नारायणकथामिमाम् ।। ६५ ।।**

**व्यास—** वैशम्पायनीयं भारतादिवाक्यं पठति— **नम इति** ।। ६५ ।।

**वादि—** इदानीं ग्रन्थादाववान्तरवक्त्रा वैशम्पायनेन कृतनमस्कारवस्तुनिर्देशात्मकमङ्गलप्रतिपादकवाक्यानि पठति— **नमो भगवत** इत्यारभ्य **सर्वार्थान्साधयाम्यहमित्यन्तेन** ग्रन्थेन ।। ६५ ।।[२]

**वरद—** भारते वैशम्पायनाद्यनुष्ठितमङ्गलाचरणश्लोकेऽपि सर्वस्य भारतस्य नारायणपदवाच्यनिर्दोषा-शेषसद्गुणपूर्णत्वप्रतिपादकत्वमेव प्रतीयत इति भावेन तं श्लोकमुदाहरति— **नम इति** ।। अत्र भारतमुद्दिश्येमां नारायणकथामिति नारायणकथात्वविधानात्तत्प्रतिपादकत्वमवगम्यत इति भाव:।। ६५ ।।

**जना—** सुरगुरुं विभुमीशमित्येतद्वैशम्पायनकृताद्यपद्येनोपपादयति— **नम इति** ।। भगवत इत्युत्कृष्टगुणवत्त्वं अमिततेजस इति सकलात्मशक्तित्वमुक्तं भवति । यस्य प्रसादादिमां नारायणकथां वक्ष्यामीत्यनेन 'सुरगुरुम्' मित्येतत्प्रतिपादितं भवति ।। ६५ ।।

**भारतश्री—** भारते वैशम्पायनाद्युक्तं अनुष्ठितमङ्गलाचरणश्लोकेऽपि सर्वस्य भारतस्य नारायणपदवाच्य-निर्दोषाशेषसद्गुणपूर्णत्वादिप्रतिपादकत्वमेव प्रतीयते इति भावेन तं श्लोकं पठति— **नम इति** ।। तत्र भारतमुद्दिश्य इमां इति नारायणकथात्वविधानात् भारतस्य नारायणप्रतिपादकत्वमेव गम्यते इति ।। ६५ ।।

**[३]वासुदेवस्तु भगवान् कीर्त्यतेऽत्र सनातन: ।**
**प्रतिबिम्बमिवादर्शे यं पश्यन्त्यात्मनि स्थितम् ।। ६६ ।।**

**व्यास—** नारायणकथा किमर्थमुच्यत इति जिज्ञासायामाह— **प्रतिबिम्बमिति** ।। ६६ ।।

**वरद—** वासुदेवस्त्विति भारतश्लोकेऽपि अत्र भारते सनातनो भगवान् वासुदेव: कीर्तित इत्युक्त्या अशेषभारतस्यानादिनित्यत्वपरमैश्वर्याद्यनन्तमहिमोपेतत्वेन भगवत्प्रतिपादकत्वमवगम्यते ।। ६६ ।।

**जना—** विष्णो: सर्वभारतप्रतिपाद्यत्वे भारतवाक्यमुदाहरति— **वासुदेव इति** ।। स: सनातन: भगवान् वासुदेव: अत्र भारते कीर्त्यते। स क इत्यत: दृष्टान्तपूर्वकं तमाह— **प्रतीति** ।। ऋषय आत्मनि जीवे स्थितं यमादर्शे प्रतिबिम्बमिव पश्यन्ति । इदमुक्तं काठकभाष्ये-

---

१. म.भा. आदिपर्वणि १-३२ ; शान्तिपर्वणि ३५३-३० । २. श्लोकोऽयं इदानीन्तनपुस्तकेषु वैशम्पायनवचनत्वेन शान्तिपर्वणि, सौतिवचनत्वेन आदिपर्वणि च दृश्यते । ३. म.भा. आदिपर्वणि पूर्वार्ध: १-२८२, उत्तरार्ध: १-२८६ श्लोके वर्तते ।

[1]"जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः।
आदर्शे मुखवत्सम्यक् ....................।।' इति ।

ज्ञानदृष्टिभिः ऋषिभिः [2]"ऋषयोऽन्तःप्रकाशा' इति श्रुतेः इति व्याख्यानात् ।। ६६ ।।

**ताम्र**— ननु [3]"यतो वाचो निवर्तन्ते' इत्यादौ वासुदेवपदोक्तब्रह्मणोऽवाच्यत्वोक्तेः कीर्त्यत इति कथमुच्यत इत्यत ईक्षणीयत्वाद्वाच्यमेव ब्रह्मेति भावेनाह— **प्रतिबिम्बमिति** ।। साकल्येनावाच्यतापरा श्रुतिरिति भावः। यद्वा ननु यद्यत्र भारते वसुदेवपुत्रः कीर्त्यते तर्हि नास्याध्यात्मविद्यात्वमित्यत आह— **प्रतिबिम्बमिति** ।। यं वासुदेवमेव ब्रह्मविदः आत्मन्युपास्य पश्यन्तीत्यर्थः। ननु [4]"प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम्' इति तैत्तरीयभाष्योक्तेः यं पश्यन्तीति कथं बहूनां दर्शनमिति चेत् शिवस्य प्रथमापरोक्षेऽयं नियम उक्तः तदितरेषामपि द्वितीयाद्यपरोक्षेषु स्थानविशेषे तथाऽपरोक्षोपपत्तेः। अत एवात्मनि जीव इत्युक्तम् । उक्तं च काठकभाष्ये –

'जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः।
आदर्शे मुखवत्सम्यक्........... ।।' इति ।। ६६ ।।

**भारतश्री**— ।। **वासुदेवस्त्विति** ।। भारतश्लोकेऽपि अत्र भारते सनातनः भगवान् वासुदेवः कीर्तित इत्युक्त्वाशेषभारतस्य अनादिनित्यत्वे परमैश्वर्याद्यनन्तमहिमोपेतत्वेन भगवत्प्रतिपादकत्वमवगम्यते ।। ६६ ।।

**राम**— 'प्रतिबिम्बमिवादर्शे यं पश्यन्त्यात्मनि स्थितम्' इत्यत्र आत्मनि स्थितं यं परमात्मानं आदर्शे दर्पणे प्रतिबिम्बमिव प्रतिफलितप्रतिमुखमिव पश्यन्ति । स्पष्टत्वे दृष्टान्तः । 'प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् ' इत्युक्तेः । रुद्रपदयोग्याः उपासनाकाले एव पश्यन्तीति ज्ञेयम् ।। ६६-१३८ ।।

**[5]नास्ति नारायणसमं न भूतं न भविष्यति ।**
**एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ।। ६७ ।।**

**व्यास**— उपसंहारवाक्यं पठति— **नास्तीति** ।। ६७ ।।

**वरद**— ।। **नास्ति नारायणसममिति** ।। भारतप्रतिज्ञाश्लोकेऽपि नारायणस्य समवस्तु नास्तीत्यादिरूपप्रमेय-मधिकृत्येतरान् सर्वार्थान् साधयामीति प्रतिज्ञा हरेः सर्वोत्कृष्टत्वमेव भारतस्य मुख्यः साध्योऽर्थ इतरे त्वर्थास्तदर्थत्वेन साध्या इत्यवगम्यन्त इति भावः ।। ६७ ।।

**जना**— विष्णुसर्वोत्तमत्वे आद्यन्तयोर्विद्यमानं पद्यं पठति— **नास्तीति** ।। अहं व्यासः। नारायणस्य समं नास्ति वर्तमानकाले भूतं पूर्वं जातं न अग्रेऽपि न भविष्यतीत्येतेन सत्यवाक्येन यथावस्थितार्थप्रतिपादकेन सर्वार्थान् विष्णुसर्वोत्तमत्वाद्यर्थान् साधयामि । यद्वा एतेन एतदानुकूल्येन सर्वार्थान् सर्वेषु शास्त्रेषु सर्वस्य

---

१. का.भा. २-३-५ । २. सू.भा. ४.३.१६ उदाहृतचतुर्वेदशिखायाम् । ३. तै.उ. ब्रह्मवल्ली । ४. तै.भा. भृगुवल्ली । ५. म.भा.आदिपर्वणि १-३४ ।

शास्त्रजातस्य वार्थान् साधयामि प्रतिपादयामि । विष्णुसर्वोत्तमत्वस्यैव सर्वशास्त्रार्थत्वात् एतज्ज्ञानेन सकलपुरुषार्थ प्राप्तेर्वा साधयामि ।। ६७ ।।

**ताम्र**— उपसंहारवाक्यं पठित्वोपक्रमोपसंहारवाक्योदाहरणेन भारतस्य भगवत्परत्वे किमायातमित्यत आह — **नास्तीति** ।। एतेनेति सत्यवचनफलत्वेन सर्वपुरुषार्थान् साधयामि । यद्येदं सत्यवचनं चेन्ममार्थाः सिद्ध्यन्तु अन्यथा नेति शपथरूपवचनेन सर्वार्थान् साधयामीत्यर्थः।। ६७ ।।

**भारतश्री**— ।। नास्तीति ।। भारतप्रतिज्ञाश्लोकेऽपि नारायणस्य समं वस्तु नास्तीत्यादिरूपप्रमेयमधि-कृत्येतरान् सर्वार्थान् साधयामीति प्रतिज्ञया हरेः सर्वोत्कृष्टत्वमेव भारतस्य मुख्यसाध्यमित्यर्थः । इतरस्त्वर्थः तदर्थत्वेन साध्य इत्यवगम्यते इति भावः ।। ६७ ।।

**आद्यन्तयोरित्यवदत् स यस्मा-**
**द्व्यासात्मको विष्णुरुदारशक्तिः ।**
**तस्मात् समस्ता हरिसद्गुणानां**
**[1]निर्णीयते भारतगा कथैषा ।। ६८ ।।**

**व्यास**— उपक्रमोपसंहारवाक्योदाहरणेन भारतस्य भगवत्परत्वे किमायतमित्यत आह— **आद्यन्तयोरिति** ।। ६८ ।।

**वादि**— अधुना ग्रन्थोपक्रमे मङ्गलपद्यैः प्रस्तावितप्रमेयानुकूलप्रमेयमेवोत्तरग्रन्थे विस्तरेण दर्शनीयं न तु तद्विरुद्धम् । तस्माल्लक्षभारतश्लोकानामपि हरेः सर्वोत्तमत्वे तात्पर्यमिति भावेनाह— **आद्यन्तयोरिति** ।। आद्यन्तयोः मङ्गलपद्यानामादावन्ते चेत्यर्थः। इदं चोपलक्षणम् । आदौ 'नास्ति नारायणसमं' इत्यन्तैः पद्यैः हरिसर्वोत्तमत्वमुपक्रम्य मध्ये मध्ये च

[2]'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।।'
[3]'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।।'
[4]'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।।'
[5]'ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ।।'
'विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।'
'पूतात्मा परमात्मा च मुक्तानां परमा गतिः।'

१. 'निर्णीतये' इति क्वचिद् पाठः । २. भ.गी. ७-७ । ३. भ.गी. ७-७ । ४. भ.गी. १५-१८ । ५. म.भा. अनुशासनपर्वणि २५४-१३७ ।

'एष निष्कण्टकः पन्था यत्र सम्पूज्यते हरिः।
कुपथं तं विजानीयाद्गोविन्दरहितागमम् ।।'
'अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयोः।'
[५]"रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः।।'

इत्यादिना हरिसर्वोत्तमत्वस्यैव प्रपञ्चितत्वात् ।

'सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परं ।।' इति ।

अन्ते आश्चर्यपर्वणि च सदृष्टान्तं शपथपूर्वकं उच्छ्रितबाहुयुगं यथा भवति तथा हरिसर्वोत्तमत्वस्यैवोपपादितत्वाच्च। आदिमध्यावसानपद्यानुसारेण सर्वस्यापि ग्रन्थस्य योजनीयत्वात् । पादाधिकलक्षभारतवाक्यान्यपि हरेः सर्वोत्तमत्व एव तात्पर्यवन्ति । उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तीनां महातात्पर्यनिर्णायकत्वस्य सकलविद्वज्जनसम्मतत्वादित्यपि ज्ञेयम् ।। ६८ ।।

**सङ्क**— अत्र फलितार्थमुपसंहारमुखेन दर्शयति— **आद्यन्तयोरिति** ।। ६८ ।।

**वरद**— यदर्थं वाक्योदाहरणं तद्दर्शयति— **आद्यन्तयोरिति** ।। यद्यस्मात्स उदारशक्तिः व्यासात्मको विष्णु— राद्यन्तयोर्भारतस्यादौ अन्ते च इत्युक्तरीत्यावदत् । तस्मादुपक्रमोपसंहारैकरूप्यादेषा भारतगा कथा हरिसद्गुणानां निर्णीतये निर्णयार्थं प्रवृत्तेत्यर्थः। अवगम्यत इत्यर्थः।। ६८ ।।

**जना**— अनेन हरेर्भारतप्रतिपाद्यत्वं स्फुटं सिद्धमित्याह— **आद्यन्तयोरिति** ।। आद्यन्तयोरादावन्ते चोदारशक्तिः सः व्यासात्मको विष्णुरितीमं श्लोकमवदत् यस्मात्तस्मादेषा समस्ता भारतगा कथा हरिसद्गुणानां प्रतिपादकेति निर्णीयते निर्णयः क्रियते । व्यासेनेति शेषः। यद्वा हरिसद्गुणानामेषा समस्ता कथा नित्यत्वा— परिच्छिन्नत्वादिप्रबन्धरूपा भारतगा भारतगता प्रतिपादकत्वेनेति निर्णीयते । क्वचित्तु निर्णीतय इति पाठस्तत्र निर्णयाय भवतीति सुगमः ।। ६८ ।।

**भारतश्री**— यदर्थं वाक्योदाहरणं तद्दर्शयति— **आद्यन्तयोरिति** ।। निर्णीतये निर्णयार्थम् ।। ६८ ।।

**[२]सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।**
**वेदशास्त्रात् परं नास्ति न दैवं केशवात् परम् ।। ६९ ।।**

**व्यास**— भगवतः सर्वोत्तमत्वादिकं भारतप्रतिपाद्यमित्येतत् मध्यगतान्यपि वाक्यान्युदाहृत्य दर्शयति— **सत्यमित्यादिना** ।। प्रतिपादकेषु प्रतिपाद्येष्विति शेषः ।। ६९ ।।

---

५. म.भा. आश्वमेधिकपर्वणि ११८-३८ । २. पाद्मसंहिता ज्ञानपाद १-९६ ।

**सङ्क**— न केवलं उक्तवचनार्थपर्यालोचनया समस्तैषा भारतगा कथा हरिसद्गुणानां निर्णीतये एव भवति किन्तु सत्यं सत्यमित्यादि श्रीमहाभारतगतबहुवाक्यपर्यालोचनया श्रीमहाभारतस्यायमेवार्थः सिद्ध इति सविस्तरमाह— **सत्यमिति** ।। सत्यमित्यादिश्लोकत्रयस्य स्पष्टोऽर्थः ।। ६९-७१ ।।

**वरद**— न केवलमुपक्रमोपसंहारैकरूप्यसद्भावात् भारतस्य विष्णूत्कर्षतात्पर्यं किं तर्हि अभ्यासादीतरलिङ्ग-सद्भावादपि तत्रैव तात्पर्यमवगम्यत इत्यभिप्रेत्य मध्यस्थानि बहूनि भारतवाक्यानि पठति— **सत्यमित्यादिना**।। उक्तस्य दार्ढ्यार्थं शपथत्वेन सत्यमित्यादित्रिरुक्तिः । शपथोऽयं क्रियत इति द्योतनाय भुजद्वयमुद्धृत्योच्यत इत्युक्तम् । किमुच्यत इत्यतः शपथविषयं दर्शयति— **वेदशास्त्रादिति** ।। परं प्रमाणमिति शेषः। वेदाः ऋगादयः शास्त्राणि तन्मीमांसारूपाणि च द्वंद्वैकवद्भावः वेदरूपाच्छास्त्रादिति वा ।। ६९ ।।

**जना**— विष्णुसर्वोत्तमत्वे भारतमध्यगतवाक्यमुदाहरति— **सत्यमिति** ।। भुजमुद्धृत्य सत्यं सत्यं पुनः सत्यमुच्यते । शपथदार्ढ्यार्थं त्रिः सत्यमिति भुजमुद्धृत्येति चोक्तम् । किमुच्यत इत्यत उक्तम्— **वेदेति** ।। वेदाः ऋगाद्याः शास्त्रं मीमांसाशास्त्रं ततः द्वंद्वैकवद्भावः। वेदरूपं शास्त्रं च प्रतिपादकेषु वेदशास्त्रात्परं नास्ति । प्रतिपाद्येषु केशवात्परं दैवं प्रतिपाद्यं नास्ति ।। ६९ ।।

**ताम्र**— उक्तार्थे मध्यगतवाक्यान्यप्युदाहरति— **सत्यमित्यादिना** ।। ६९ ।।

**भारतश्री**— न केवलमुपक्रमोपसंहारतदैकरूप्यसद्भावात् भारतस्य विष्णूत्कर्षतात्पर्यम् । किं तर्हि अभ्यासादीतरलिङ्गसद्भावादपि तत्रैव तात्पर्यमवगम्यते इत्यभिप्रेत्य मध्यस्थानि बहूनि भारतवाक्यानि पठति — **सत्यमित्यादिना** ।। परं उत्तमम् ।। ६९ ।।

**[१]आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।**
**इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।। ७० ।।**

**व्यास**— आलोडनमेव दर्शयति— **विचार्येति** ।। ७० ।।

**वरद**— विष्णुसर्वोत्कर्षस्य शास्त्रैकसमधिगम्यत्वात्तत्सिद्ध्यर्थमेव शास्त्रस्य सर्वोत्तमप्रामण्यविषये शपथः क्रियते अत एवोक्तम्— **आलोड्य सर्वशास्त्राणीति** ।। आलोडने इतिकर्तव्यतां दर्शयति— **विचार्येति** ।। उपक्रमादिभिरिति शेषः। विचारफलमाह— **इदमिति** ।। कस्यायं परामर्श इत्यत आह— **ध्येय इति** ।। सर्वोत्कृष्टेनेति पूरणीयम् ।। ७० ।।

**जना**— तत्रैवान्यद्वाक्यमुदाहरति— **आलोड्येति** ।। सर्वशास्त्राणीत्युभयत्र सम्बध्यते । आलोड्य सामान्यतो दृष्ट्वोपक्रमोपसंहाराद्यैर्लिङ्गैर्विचार्य च । यद्वा आलोड्य मथित्वा । तदेव स्पष्टयति । पुनः पुनः सर्वशास्त्राणि

१. म.भा. अनुशासनपर्वणि १८६-११; ग.पु. आचारकाण्डे २३०-१ ।

विचार्यैव । मया सदा नारायणो ध्येय इतीदमेकं मुख्यं सुनिष्पन्नं सुनिष्पादितं निश्चितमित्यर्थः। यद्वा विचार्यस्थितस्येति ।। ७० ।।

**ताम्र**— आलोडनं मथनम् । तत्रेतिकर्तव्यं दर्शयति— **विचार्येति** ।। उपक्रमादिविचारपूर्वकं शास्त्रं मथित्वे-त्यर्थः ।। ७० ।।

**[1]स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।**
**सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ।। ७१ ।।**

**व्यास**— किंकराः अङ्गानि । ज्योतिष्टोमादिविधानं भगवत्स्मरणाङ्गत्वं सुरापानादिनिषेधाः भगवदाज्ञानिषेधाः स्मरणनिषेधपराः।। ७१ ।।

**वादि**— अधुना भारतमध्यगतैर्बहुभिर्वाक्यैरवतारादिषु क्वचित्क्वचित् प्रदर्शितच्छेदवेधमोहादिदोषाणामसुरजन-मोहार्थत्वप्रतिपादकवाक्यैश्च हरेः सर्वोत्तमत्वादिमाहात्म्यं जननमरणादिसकलदोषातिदूरतां च दृढीकर्तुमुत्तरो ग्रन्थसन्दर्भः। 'सर्वे विधिनिषेधा' इत्यस्य सर्वे विधिनिषेधाः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादयः 'ब्राह्मणो न हन्तव्य' इत्यादयश्च सर्वे विधिनिषेधाः। एतयोः विष्णुः सततं स्मर्तव्यो जातुचिदपि न विस्मर्तव्य इति विधिनिषेधयोः किङ्करा दासीभूताः। अनयोर्विधिनिषेधयोः साक्षान्मोक्षाङ्गत्वात् । अन्येषां विधीनां एतद्विधिविहित-स्मरणयोग्यचित्ताख्यगृहशोधकत्वेन किङ्करत्वात् । निषेधानां च एतन्निषेधप्रतियोगिभूतविस्मरणसहकारिदोष-निवारकत्वेन साक्षाद्रामविरोधिरावणसहायभूतदैत्यकटकमुखमोटककपिकटकवत् परम्परया एतन्निषेधकिङ्करत्वादिति भावः ।। ७१ ।।

**वरद— स्मर्तव्य इति** श्लोके 'प्रातरुत्थाय अहरहः सन्ध्यामुपासीत' इत्यादिसर्वविधिशास्त्रस्य विष्णुः सततं स्मर्तव्य इति प्रधानविधिशेषत्वं तथा 'न सुरां पिबेत्' इत्यादिनिषेधशास्त्रस्य विष्णुर्जातुचित् कदाचिदपि न विस्मर्तव्य इति प्रधाननिषेधशेषत्वमित्युक्त्या सर्वस्य विधिनिषेधरूपशास्त्रस्य विष्णुरेव सर्वोत्तमत्वेन सर्वैरादरणीय इत्यत्र तात्पर्यं नान्यत्रेत्यवगम्यते ।। ७१ ।।

**जना**— विष्णुस्मरणास्मरणाभ्यामपि सर्वविधिनिषेधसिद्धिः 'विष्णुः सर्वोत्तमः' इत्यर्थप्रतिपादकं वचनं पठति— **विष्णुः सततं स्मर्तव्यः जातुचित् कदाचिदपि विष्णुर्न विस्मर्तव्य इति** ।। एतयोरेव विधानं कुत इत्यत आह— **सर्वेति** ।। एतयोः स्मरणविस्मरणयोः सर्वे विधिनिषेधाः स्नानसन्ध्यावन्दनादिविधयः पलाण्डुभक्षणादिनिषेधाः किंकरा इव । किङ्करा अङ्गान्येव न साक्षाद्विष्णुप्रीत्यप्रीतिजनकानि । यस्य स्मरणमपि पुरुषार्थजनकं विस्मरणमनर्थापादकं स उत्तम इति किमु वक्तव्यमित्यर्थः।। ७१ ।।

**ताम्र**— किङ्कराः अङ्गानि । अयमाशयः। 'प्रातरुत्थाय सन्ध्यामुपासीत' इत्यादिविधिः 'न पलाण्डुं भक्षयेत्' इत्यादिनिषेधश्च न तावत्साक्षान्मोक्षार्थः। तस्य ज्ञानैकसाध्यत्वात् । किन्तु अन्तःकरणशुद्धिद्वारा हरिस्मृत्युपयोगित्वेनेति

१. पा.पु. उत्तरखण्डे ७१-१०० ।

तदङ्गत्वम् । तथा च 'स्मर्तव्यः सततं विष्णुः' इति स्मृतिशेषत्वेन विधिनिषेधात्मकानन्तशास्त्रस्य भगवत्परतेति ।। ७१ ।।

**को हि तं वेदितुं शक्तो यो न स्यात् तद्विधोऽपरः ।**
**तद्विधश्चापरो नास्ति तस्मात् तं वेद सः स्वयम् ।। ७२ ।।**

**व्यास—** संवेदितुं सर्वात्मना वेत्तुं को हि शक्तः न कोऽपि । कुतो कोऽपीत्यत उक्तम्— **यो परस्तद्विधः स्यादिति** ।। तद्विधो परोऽस्त्वित्यत आह— **तद्विध इति** ।। प्रमाणाभावादिति भावः।। ७२ ।।

**वादि— को हि तं वेदितुमित्यस्य** योऽपरो ब्रह्मादिः। तद्विधस्तस्य समो न स्यात् । स अपरः। तं वेदितुं कः शक्तः। न कोऽपि । तस्य विष्णोः सकाशादतिनीचत्वेन तद्वेदनसामर्थ्याभावात् । तर्हि ब्रह्मादितोऽप्युत्तमः कश्चित्तद्विधो वेत्तुं शक्तः स्यादित्यत आह— **तद्विध इति** ।। अपरश्च ब्रह्मादितोऽप्यपरश्च । तद्विधः नारायणसमः नास्ति । यस्त्वौद्धत्येनाशङ्कितः सोऽपि नास्तीति भावः। तस्मादन्यस्य वेत्तुरभावात् सर्वथाऽवेद्यस्या-वस्तुत्वप्रसङ्गाच्च । तं नारायणम् । सः नारायणः स्वयमेव वेदेति योजना ।। ७२ ।।

अभिनव— तत्रैव '**को हि**' इति श्लोकः। तस्यार्थः यः तद्विधः विष्णुसदृशः न स्यात् न भवति, स कः तं विष्णुं वेदितुं शक्तः, न कोऽपीत्येतत् हि प्रमाणप्रसिद्धम् । यस्मात् विष्णोः अपरः परः अन्यो न भवति इत्यपरः अनन्यः मत्स्यादिः तद्विधः विष्णुसदृशो भवति । विष्णोरपरः विष्णोरन्यः ब्रह्मादिः तद्विधः विष्णुसदृशः न चास्ति नैव भवति । तस्मात् कारणात् सः मत्स्यादिरूपो विष्णुरेव तं विष्णुं स्वयं मुख्यतः साकल्येनेति यावत् वेद । ब्रह्मादिः तं विष्णुं साकल्येन न वेदेति । एतेन यः विष्णुसदृशो न भवति सः को वेदेत्यनेनैव पूर्णत्वात् तद्विधोऽपरः इत्यत्र अपर इत्येतत् व्यर्थमिति दूषणं परास्तम् । विष्ण्वभिन्नस्यैव विष्णुसादृश्यमिति वक्तुं तद्विधोऽपर इत्यत्र अपरशब्देन ऐक्यमुच्यत इत्यङ्गीकारात् । विष्ण्वभिन्नमत्स्यादिरूपाणां विष्णुसाम्यं 'अथ समानि ब्रह्मणो रूपाणि', यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवं तद्भवति' इत्यादिश्रुतिसिद्धम् ।। ७२ ।।

**सङ्क—** '**को हि तम्**' इत्यादिश्लोकत्रयस्य अयमर्थः। यो परो विष्णोरन्यः तद्विधो विष्णुसदृशो न स्यात् । स पुमान् तं विष्णुं वेदितुं कः शक्तोऽस्ति न कोऽपीति । नन्वपरः कश्चित् विष्णुसदृशश्चेत् तं वेदितुं शक्तः किं न स्यादित्यत आह— **तद्विध इति** ।। ७२ ।।

**वरद—** '**को हि तम्**' इत्यत्र विष्णोरपरो अन्यो यः कश्चित् यदि तद्विधो विष्णुसदृशो न स्यात्तर्हि विष्णुं वेदितुं साकल्येन ज्ञातुं को हि शक्तः स्यान्न कोऽपीत्यर्थः। ननु विष्णुसदृशस्यान्यस्य सम्भवे स एव वेदितुं शक्तः स्यादित्यतो विपर्यये पर्यवसानमाह— **तद्विधश्चेति** ।। ननु प्रमाणागोचरस्य शशविषाणादिवदत्यन्ता-सत्वमापाद्यत इत्यत आह— **तस्मादिति** ।। स विष्णुस्तं विष्णुं स्वात्मानं स्वयमेव वेद । इतरज्ञानाविषयत्वेऽपि स्वज्ञानविषयत्वान्न प्रमाणागोचरत्वमिति भावः।। ७२ ।।

**जना**— साकल्येनान्याज्ञेयत्वे भारतवाक्यद्वयमुदाहरति— **को हीति** ।। यः अपरः ब्रह्मादिस्तद्विधस्त- त्सदृशस्तत्सम इति यावत् न स्यात्स कः तं वेदितुं ज्ञातुं शक्त न कोऽपीत्यर्थः। ब्रह्मादिषु तत्समाभावेऽप्यान्यः कश्चित्स्यादित्यत आह— **तद्विध इति** ।। अपरः अन्यः तद्विधश्च तत्सदृशोऽपि नास्ति । अन्य उत्तमो नास्तीति किमु वक्तव्यमिति भावः। सर्वैः सर्वथा वेद्यस्यावस्तुत्वं स्यादित्यत आह— **तस्मादिति** ।। तस्मादन्यस्य वेत्तुरभावात्स स्वयं तं नारायणं वेद ।। ७२ ।।

**ताम्र— 'को हि तम्'** इत्यादिश्लोकचतुष्टये विष्णोः साम्यराहित्यसर्वोत्तमत्वाप्रमेयत्वानन्तगुणाकरत्वानि उच्यन्त इति भेदः।। ७२-७३ ।।

**भारतश्री**— सः परः अन्यः यः कश्चिदादि तद्विधो न स्यात् । विष्णुसदृशो न स्यात् । विष्णुं साकल्येन वेदितुं को हि शक्तः स्यात् न कोऽपीत्यर्थः । विष्णुसदृशस्य सम्भवे स वेदितुं शक्तः स्यात् इत्यतो विपर्यये पर्यवसानमाह— **तद्विधश्चापरो नेति** ।। ७२ ।।

**[१]को हि तं वेदितुं शक्तो नारायणमनामयम् ।**
**ऋते सत्यवतीसूनोः कृष्णाद् वा देवकीसुतात् ।। ७३ ।।**

**सङ्क**— तमेवार्थमुत्तरश्लोकत्रयेण प्रकटयति— **को हीत्यादिना** ।। अत्राप्रमेयत्वश्रवणात् देशतः कालतः गुणतश्च श्रीविष्णोरानन्त्यमेव ज्ञायते इति फलितार्थः।। ७३ ।।

**वरद**— एतदेव वाक्यान्तरेण दर्शयति— **को हीति** ।। अत्र मध्यमदीपिकान्यायेन कृष्णादित्येतदुभयत्र सम्बध्यते । अत्रापि स्वस्य स्वयमेव वेत्तेत्युक्त्या तत्सदृशस्यान्यस्याभाव एव प्रतीयते ।। ७३ ।।

**जना**— अनामयं निर्दोषं तं नारायणं वेदितुं ज्ञातुं कः शक्तो हि न कोऽपीत्यर्थः । सत्यवतीसूनोः कृष्णात् देवकीसुतात् कृष्णाद्वा । ऋते इति सम्बन्धः ।। ७३ ।।

**अप्रमेयोऽनियोज्यश्च स्वयं कामगमो वशी ।**
**मोदत्येष सदा भूतैर्बालः क्रीडनकैरिव ।। ७४ ।।**

**व्यास**— अप्रमेयत्वेन सर्वगुणपूर्णत्वसर्वोत्तमत्वादिकमाह— **अप्रमेय इत्यादि** ।। पारतन्त्र्याभावादिकमाह। क्रीडनकैः क्रीडासाधनैः। प्रमातुं परिमितत्वेन ज्ञातुम् ।। ७४ ।।

**वादि**— स्वयं कामगम इत्यस्य स्वयमेवेच्छया गच्छतीति स्वयंकामगमः स्वतन्त्र इत्यर्थः ।। ७४ ।।

**वरद**— अप्रमेय इत्यत्रापि अचिन्त्यमहिमत्वादिकमेव प्रतीयते । अनियोज्यः अनन्यप्रेर्यः। कामगमः स्वेच्छाचारी । वशी स्वतन्त्रः। अत्र पूर्वोक्ते उत्तरोक्तं हेतुत्वेन योज्यम् । एषः भूतैर्ब्रह्मादिभिर्जीवैः मोदति क्रीडते।

---

१. म.भा. सभापर्वणि ६१-३१; इदं श्लोकद्वयं वायुपुराणे उत्तरार्धे अपि दृश्यते ३६-९३,९४ ।

**कैरिव क्रीडनकैः** पुत्तलिकाभिर्बाल इव ।। ७४ ।।

**जना**— स्वातन्त्र्याद्यर्थे वाक्यं पठति— **अप्रमेय इति** ।। अप्रमेयः साकल्येनाज्ञेयः। अनियोज्यः अन्याप्रेर्यः। स्वयं स्वतन्त्रः। कामगमः स्वेच्छागामी । वशी इन्द्रियनिग्रहवान् । **भूतैर्निमित्तैः** भूतसर्जनविनाशादिकुर्वन्नित्यर्थः। सदा मोदति न कदाचिदेवेत्यर्थः। सर्जनादौ क्लेशाभावे दृष्टान्तमाह— **बाल इति** ।। **क्रीडनकैः** क्रीडासाधनैः।। ७४ ।।

**न प्रमातुं महाबाहुः शक्योऽयं मधुसूदनः ।**
**परमात् परमेतस्माद् विश्वरूपान्न विद्यते ।। ७५ ।।**

**व्यास**— विश्वरूपात् पूर्णरूपात् ।। ७५ ।।

**वरद**— 'न प्रमातुं' इत्यत्रापि सर्वोत्कृष्टेनाचिन्त्यमहिमत्वमेवोच्यते— **न प्रमातुमिति** ।। प्रमातुं स्वप्रमायाः विषयीकर्तुं विश्वरूपात् परिपूर्णरूपात् अत एव परमादुत्कृष्टात् एतस्मात् परं उत्तमं न विद्यते ।। ७५ ।।

**जना**— अज्ञेयत्वे सर्वोत्तमत्वे च प्रमाणं पठति— **नेति** ।। प्रमातुं ज्ञातुं एतस्माद्विश्वरूपात्परं न विद्यते ।। ७५ ।।

**ताम्र**— ननु मधुसूदनः सगुणः स च प्रमेय एव निर्गुणं ब्रह्म ततोऽन्यत्तदेवाप्रमेयमित्यत आह— **परमादिति** ।। विश्वरूपात् पूर्णरूपात् ।। ७५ ।।

**वसुदेवसुतो नायं नायं गर्भेऽवसत् प्रभुः ।**
**नायं दशरथाज्जातो न चापि जमदग्नितः ।। ७६ ।।**

**व्यास**— वसुदेवसुत इत्यादिजननाभावाद्यर्थं स्पष्टम् ।। ७६ ।।

**सङ्क**— ननु श्रीकृष्णादीनां वसुदेवादिभ्यः जातत्वश्रवणात् वेध्यत्वादिश्रवणात् हरेः सर्वगुणनिर्णयः भारतस्य कथं युज्यते इत्याशङ्क्य सोपपत्तिकं सविस्तरं परिहरति— **वसुदेवसुत इत्यादिना** ।। ७६ ।।

**वरद**— ननु कथमेतत् कृष्णादिरूपेण जननदर्शनादित्यतः तद्भ्रान्तिरेवेत्याह— **वसुदेवेति** ।। अयं परमात्मा वसुदेवसुत इत्यज्ञप्रसिद्धिरेवेत्यर्थः। ननु कथं तर्हि देवक्याः गर्भे वास इत्यतस्तदपि तादृगेवेत्याह— **नायं गर्भेति** ।। उभयत्र हेतुः— **प्रभुरिति** ।। वसुदेवेति विशेषोक्त्या अन्यावतारेषु जननं प्रतीयत इत्यतः सर्वावतारेष्वप्येवमेवेत्याह— **नायं दशरथादिति** ।। ७६ ।।

**जना**— जननादिदोषदर्शनात्कथं निर्दोषत्वमित्यत आह— **वसुदेवेति** ।। ७६ ।।

**ताम्र**— ननु कृष्णाद्या उत्पद्यन्ते च म्रियन्ते च कथमेषां निर्गुणत्वमित्यत आह— **वसुदेवेति** ।। ७६ ।।

[1]जायते नैव कुत्रापि म्रियते कुत एव तु ।
न वेध्यो मुह्यते नायं बध्यते नैव केनचित् ।
कुतो दुःखं स्वतन्त्रस्य नित्यानन्दैकरूपिणः ।। ७७ ।।

**सङ्क**— ननु वसुदेवादिभ्यः जातत्वाभावेऽपि श्रीविष्णोरनन्तावतारत्वात् यत्र क्वापि जननं किं न स्यादित्यत उक्तम्— **जायत इति** ।। ननु श्रीकृष्णाद्यवताराणां देहत्यागश्रवणान्यथानुपपत्त्या जननं किं न स्यादित्यत उक्तस्य 'म्रियते कुतः एव तु' इत्यस्याक्षेपस्य कुतो म्रियते नैव कुतोऽपि मरणकारणाभावादित्यस्य देहत्यागान्यथानुपपत्त्या जननं नेत्यर्थः। कुतो दुःखमित्यनेन वेधादिदुःखाभावे युक्तिरुक्ता ।। ७७ ।।

**वरद**— उक्तरीत्या जननाभावे मरणं दूरोत्सारितमित्याह— **जायत इति** ।। कुत एव कारणादित्यर्थः। सर्वत्र चेतनेषु देहयोगवियोगयोरेव जननमरणशब्दार्थत्वाद्देहयोगरूपजननाभावे तद्वियोगरूपमरणं कथं स्यादिति भावः। ननु स्वयं न म्रियते चेदन्येन वध्यः स्यादित्यत आह— **न वध्य इति** ।। एवं प्राकृतदेहयोगाभावे मोहादिदोषाः कथमेव स्युरित्यत आह— **मुह्यत इत्यादिना** ।। देहयोगवियोगमोहाद्यभावे दुःखशङ्कैव न कार्येत्याह— **कुत इति** ।। किञ्च परमात्मन्यपि दुःखमाशङ्कमानेन किं परमात्मा स्वयमेव स्वस्मिन् दुःखमुत्पादयतीत्युच्यते अन्य एव कश्चित् तत्रोत्पादयन्तीति वा । नाद्यः। दुःखस्य नित्यं प्रतिकूलवेद्यस्वभावत्वेन स्वयमनपेक्षितत्वात् । न द्वितीय इत्याह— **स्वतन्त्रस्येति** ।। किञ्च नित्यानन्दस्वरूपत्वेन दुःखस्यावकाश एव नास्तीत्यभिप्रेत्याह— **नित्यानन्देति** ।। ७७ ।।

**जना**— जननमरणवेधाद्यभावे वाक्यं पठति— **जायत इति** ।। कुत्रापि देवक्यादौ । कुतः शरादिकारणान्नैव म्रियते । शरादिना वेध्यो नतु नैव । अयं मुह्यते मोहं प्राप्नोतीति न केनचित्पुरुषेण वध्यते नैव । अत्र हेतुमाह — **कुत इति** ।। नित्यानन्दैकरूपिणः स्वतन्त्रस्य दुःखं कुतः न कुतोऽपीत्यर्थः।। ७७ ।।

[2]ईशन्नपि हि देवेशः सर्वस्य जगतो हरिः ।
कर्माणि कुरुते नित्यं कीनाश इव दुर्बलः ।। ७८ ।।

**व्यास**— ईशन्नपि ईश्वरोऽपि सन् । कीनाशः कृषिकः।। ७८ ।।

**वादि**— '**कर्माणि कुरुत**' इत्यस्य । कर्माणि अर्जुनदौत्यबलियाचननारदवन्दनसन्ध्यावन्दनादीनीत्यर्थः ।।७८ ।।

**सङ्क**— ननु तर्हि श्रीविष्णुः नित्यं दुर्बलवत् कर्माणि किमर्थं कृतवान् अज्ञानमोहदुःखसीतामार्गणादीनि देहत्यागादिकं च किमर्थं दर्शितवानित्याशङ्कां परिहरति— **ईशन्नपीत्यादिना** ।। कीनाश इव कर्षक इवेत्यर्थः ।।७८ ।।

---

१. 'न जायते जनित्रायमजस्तस्मादनीकजित्' म.भा. उद्योगपर्वणि ६९-८ । २. म.भा. उद्योगपर्वणि ६७-१४ ।

**वरद**— नन्वीश्वरोऽपि कर्माणि करोत्येव तावत् कर्मणां "[1]कर्मणा बध्यते जन्तुः' इति वचनत्वेन तत्कर्तुं दुःखादिप्राप्तिरवर्जनीत्यत आह— **ईशन्नपीति** ।। ईशतापीत्यर्थः। कीनाशः कर्षकः कृषीवल इति यावत् । ईशन्नपि हीति हिशब्देन [2]'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुतिप्रसिद्धिमाह ।। ७८ ।।

**जना**— दोषदर्शनस्यान्यथासिद्धिमाह— **ईशन्निति** ।। कुलकमिदम् । देवेशः सर्वस्य जगत ईशन्नपि ईश्वरोऽपि हरिः। दुर्बलः कीनाशः कर्षक इव क्षुद्रो वा । कर्माणि नित्यं कुरुते । 'कीनाशो कर्षके क्षुद्रे' इत्यभिधानात् ।। ७८ ।।

**ताम्र**— ननु रामकृष्णादिभिः कर्मकरणात्तेषां च बन्धकत्वात् बन्धस्य च जननमरणदुःखभावात् कथं तदभावः स्वातन्त्र्यं चेत्यत आह— **ईशन्निति** ।। ईशन्नपीश्वरोऽपि सन् कीनाशः कर्षकः। हिशब्देन 'न कर्मणा वर्धते नो कनीयान्' 'न मे मोक्षो न बन्धनम्' इत्यादिश्रुतिस्मृतिप्रसिद्धिमाह । नन्वज्ञवत् सीतामार्गणादिकर्मकरणात् कथं स्वातन्त्र्यं दुःखाभावो नित्यानन्दरूपत्वं चेत्यतो वाह— **ईशन्नपीति** ।। सर्वज्ञोऽपीति ग्राह्यम् ।। ७८ ।।

**भारतश्री**— कीनाशः कर्षकः ।। ७८ ।।

**नात्मानं वेद मुग्धोऽयं दुःखी सीतां च मार्गते ।**
**बद्धः शक्रजितेत्यादि लीलैषासुरमोहिनी ।। ७९ ।।**

**व्यास**— नात्मानमित्यादि अज्ञानाभावमाह ।। ७९ ।।

**वरद**— एवं कर्मणामबन्धत्वेनाज्ञानादिदर्शनं दैत्यमोहनार्थमेव कृतमित्याह— **नात्मानं वेद इत्यादिना** ।। मार्गते अन्वेषयति । इत्यादिरूपा लीला । असुरमोहिनी दैत्यानां मोहनजननार्थम् ।। ७९ ।।

**जना**— मुग्धः मोहयुक्तः। आत्मानं न वेद । अयं दुःखी सीतां च मार्गते विचारयति । शक्रजिता **बद्धः** एषः इत्यादि लीलासुरमोहिनी ।। ७९ ।।

**ताम्र**— तर्हि किमर्थं तथा करोतीत्यत आह— **नात्मानमिति** ।। ७९ ।।

**मुह्यते शस्त्रपातेन भिन्नत्वग्रुधिरस्त्रवः ।**
**अजानन् पृच्छति स्मान्यांस्तनुं त्यक्त्वा दिवं गतः ।। ८० ।।**

**सङ्क**— एतदेव सदृष्टान्तं दर्शयति— **मुह्यत इत्यादिना** ।। ८० ।।

**वरद**— मुह्यते नरकासुरयुद्धे शस्त्रपातेनेत्येतदुभयत्र सम्बध्यते । भिन्नत्वगिति भिन्नं पदम् । रुधिरस्य स्त्रवः स्त्रवणं यस्मादिति स तथोक्तः।। ८० ।।

---

१. म.भा. शान्तिपर्वणि २३३-७, सन्न्यासोपनिषत् २-२८ । २. इतिहासोपनिषत् २० ।

**जना**— शस्त्रपातेन शस्त्रप्रहारेण । भिन्ना त्वक् यस्येति । रुधिरस्य स्रवः स्रवणं यस्येति । मुह्यते मोहं प्राप्नोति । स्वयमजानन्नन्यान् पृच्छति स्म । तनुं देहम् । दिवं स्वर्गम् ।। ८० ।।

**इत्याद्यसुरमोहाय दर्शयामास नाट्यवत् ।**
**अविद्यमानमेवेशः कुहकं तद्विदुः सुराः ।। ८१ ।।**

**व्यास**— नाट्यवत् नटवत् इत्याद्यविद्यमानमिति सम्बन्धः। वेधभेदादिदर्शनं न केवलमसुरमोहाय सुराणामपि स्यादित्यत उक्तम्— **ईशः कुहकमिति** ।। ८१ ।।

**सङ्क**— इत्यादि अविद्यमानमेव ईशो असुरमोहाय नाटकवत् दर्शयामास । तत्सुराः कुहकं विदुः न यथार्थमित्यर्थः।। ८१ ।।

**वरद**— नाट्यवत् ऐन्द्रजालवत् । अविद्यमानमेवेशः प्रदर्शयामास । एवं प्रदर्शितमप्यसुराणामेव भ्रान्तिरुत्पन्ना न देवानामित्याह— **कुहकमिति** ।। तदेतत्प्रदर्शितं सर्वं देवाः कुहकं मृषैवेति विदुः।। ८१ ।।

**जना**— इत्यादि एतदादिकमविद्यमानमेव नाट्यवत् नटनवान् नाट्यस्तद्वन्नाट्यवत् ईशः दर्शयामास । सुरास्तत्पूर्वोक्तं कुहकं कपटमिति विदुः ।। ८१ ।।

**ताम्र**— नाट्यवदैन्द्रजालिकमिवाविद्यमानमेव प्रदर्शयामास । नाट्यवन्नटवदित्याहुः। तर्हि देवानामप्यन्यथा ज्ञानं स्यादित्यत उक्तम्— **कुहकमिति** ।। छद्मना प्रदर्शितमित्यर्थः।। ८१ ।।

**[१]प्रादुर्भावा हरेः सर्वे नैव प्राकृतदेहिनः ।**
**निर्दोषा गुणसम्पूर्णा दर्शयन्त्यन्यथैव तु ।। ८२ ।।**

**सङ्क**— ननु हरेः प्रादुर्भावादीनां देहत्यागोत्पत्यादिकं च यथार्थमेव किं न स्यात् प्राकृतत्वात्तेषामिति चोदिते 'म्रियते कुत एव तु' इति प्रतिज्ञा मरणकारणाभावप्रदर्शनपरतया परिहरति— **प्रादुर्भावा इति** ।।

---

१. ब्रह्मवैवर्ते ४श्रीकृष्णजन्मखण्ड/८७अ/ सनत्कुमार उवाच – भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् । कृष्णस्य कुशलप्रश्नं शिवबीजस्य निष्फलम् ।। साम्प्रतं कुशलं वश्च दर्शनं परमात्मनः। निर्गुणस्य निरीहस्य सर्वबीजस्य तेजसः।। भारावतरणायैव चाविर्भूतस्यासाम्प्रतम् । श्रीकृष्ण उवाच – शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् । तत्कथं कुशलप्रश्नं मयि विप्र न विद्यते ।। सनत्कुमार उवाच – शरीरे प्राकृते नाथ सन्ततश्च शुभावहम् । नित्यदेहे क्षेमबीजे शिवप्रश्नमनर्थकम् ।। श्रीकृष्ण उवाच– यो यो विग्रहकारी च स च प्रकृतिकः स्मृतः। देहो न विद्यते विप्र तां नित्यां प्रकृतिं विना ।। सनत्कुमार उवाच–रक्तबिन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः। कथं प्रकृतिनाथस्य बीजस्य प्राकृतं वपुः।। ..... श्रीकृष्ण उवाच–साम्प्रतं वासुदेवोऽहं रक्तवीर्याश्रितं वपुः। कथं न प्राकृतो विप्र शिवप्रश्नमभीप्सताम् ।। सनत्कुमार उवाच– वासुः सर्वनिवासश्च विश्वानि यस्य लोमसु । तस्य देवः परं ब्रह्म वासुदेव इतीरितः।। वासुदेवेति तन्नाम वेदेषु च चतुर्षु च । पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ।। रक्तवीर्याश्रयो देहः क्व ते वेदे निरूपितः। साक्षिणो मुनयश्चैव धर्मः सर्वत्र एव च ।। साक्षिणो मम वेदाश्च रविचन्द्रौ च साम्प्रतम् ।।' इति । 'न तस्य प्राकृतामूर्तिः मांसमेदोऽस्थिसम्भवा' । ...इति वराहपुराणे.७५अ–४४ ।

प्राकृतदेहिनामेव देहत्यागादिकं यथार्थं भवेत् । न तथा हरेः प्रादुर्भावाः प्राकृतदेहिनः। अतो देहत्यागादिकं यथार्थं न भवेदित्यभिप्रायः ।। ८२ ।।

**वरद**— ननु मूलरूपस्य नित्यानन्दैकस्वरूपत्वेऽप्यवतारेषु प्राकृतदेहसम्बन्धात् दुःखादिदोषाः स्युरित्यत आह— **प्रादुर्भावा इति** ।। अत्र सर्वत्रैकस्मिन्नर्थे प्रमाणसंप्लवमङ्गीकृत्य भारतस्थानि भिन्नप्रकारेणोक्तान्यनेकानि वाक्यान्येकस्मिन्नर्थे उदाहृतानीति न पौनरुक्त्यमाशङ्कनीयम् । प्राकृतदेहाभावे कथं तत्प्रतीतिरित्यत आह — **दर्शयन्तीति** ।। ८२ ।।

**जना**— सर्वे हरेः प्रादुर्भावा अवताराः प्राकृतः प्रकृतिजन्यः देहो येषां ते नैव भवन्ति । निर्दोषगुणसम्पूर्णाश्च भवन्ति । अन्यथा प्राकृतदेहवत्त्वेन दोषित्वेनापूर्णगुणवत्त्वेन दर्शयति ।। ८२ ।।

**ताम्र**— ननु दुःखमरणजराद्यभावोऽयुक्तः रामाद्यवतारेषु प्राकृतविग्रहवत्वादित्यत आह— **प्रादुर्भावा इति** ।। ८२ ।।

**दुष्टानां मोहनार्थाय सतामपि तु कुत्रचित् ।**
**यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः ।। ८३ ।।**

**सङ्क**— न केवलं दुष्टानां मोहनार्थायान्यथा दर्शयन्ति किन्तु सतामपि कुत्रचिदन्यथा दर्शयन्ति इत्याह— **सतामपि इति** ।। सन्तो यदा कदाचित् स्वयोग्यताया अतिशयं कुर्वन्ति तदा प्रादुर्भावेष्वन्यथा दर्शनात् स्वातिशयनाशेन यथायोग्यफलप्राप्तिर्भवति इत्यर्थः।। ८३ ।।

**वरद**— किमर्थमन्यथा दर्शयतीत्यतः प्रयोजनद्वयोक्त्या घटयते— **दुष्टानामिति** ।। कुत्रचित् सतामपि मोहनार्थाय तस्यानुकर्षणार्थश्चशब्दः। ननु दुष्टानां तमोयोग्यत्वेन तत्साधनमिथ्याज्ञानसिद्ध्यर्थं तन्मोहनं युक्तं सतामपि मोहनं किमर्थमित्यत उक्तम्— **यथायोग्यफलप्राप्त्या इति** ।। [1]स्वयोग्यताया अधिकसाधनं परिहृत्य तदनुसारिफलार्थमित्यर्थः। नन्वेतादृग्विचित्रकर्मकरणे हरेः कथं न क्लेश इत्यत उक्तम्— **लीलेति** ।। केवलमानन्दोद्रेकेण लीलैवेयं न क्लेशरूपमित्यर्थः।। ८३ ।।

**जना**— दर्शनफलमाह— **दुष्टानामिति** ।। सतामपि कुत्रचित् मोहनाय । दुष्टानां मोहनं तमःप्राप्त्यै सतां मोहनं किमर्थमित्यत आह— **यथेति** ।। स्वयोग्यतायाः अधिककृतसुकृतक्षयेन यथायोग्यफलप्राप्त्यै एषा परमात्मनः लीला ।। ८३ ।।

**ताम्र**— अन्यथा प्रदर्शनप्रयोजनमाह— **दुष्टानामिति** ।। न दुष्टमोहनवत् सतां मोहनं सार्वत्रिकमित्यत उक्तम्— **कुत्रचिदिति** ।। सतां मध्ये केषुचिदित्यर्थः। कालविशेषे इति वा । सन्मोहनप्रयोजनमाह— **यथायोग्येति**

---

१. सद्भिरपि स्वयोग्यतातिरेकेण साधनातिशयेऽनुष्ठिते सति प्रादुर्भावेष्वन्यथात्वज्ञानेन तद्विनाशार्थं सतामपि मोहनं क्रियत इत्यर्थः।-इत्यधिकपाठः ।

।। सद्भिः स्वयोग्यादधिकशुभाचरणे तद्विनाशेन यथायोग्यफलप्राप्त्यै । अस्तु सदसतोर्मोहने यथायोग्यफलप्राप्तिः। स्वस्य किं प्रयोजनमित्यत आह— **लीलेति** ।। [१]''सा च क्रीडा स्वभावोऽस्य' इति हृदयम् ।। ८३ ।।

**भारतश्री**— ननु दुष्टानां मोहनं युक्तं सतां मोहनेन किमित्यत आह— **यथायोग्येति** ।। स्वयोग्यतातिरेकेण साधनातिशयेऽनुष्ठिते सति प्रादुर्भावान्यथाज्ञानेन तद्विनाशार्थं सतां मोहनं क्रियते इत्यर्थः। अत्र सर्वत्रच एकस्मिन्नर्थे प्रमाणसम्प्लवमङ्गीकृत्य भारतस्थानि भिन्नभिन्नप्रकरणोक्तानि अनेकानि वाक्यानि एकस्मिन्नर्थे उदाहृतानीति न पौनरुक्त्यमाशङ्कनीयम् ।। ८३ ।।

**[२]ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।। ८४ ।।**

**व्यास**— ज्ञानं ज्ञेयम् । विज्ञानं विशेषज्ञेयम् ।। ८४ ।।

**वादि**— '**ज्ञानं तेऽहं सविज्ञानं**' इत्यत्र ज्ञानं सामान्यतः स्वमहिमज्ञानप्रकारं सामान्यतो विशेषतश्च ज्ञातव्यं स्वस्वरूपं वा । तद्यथा । 'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' इति यत्सर्वेश्वरत्वेनार्जुनं प्रति सामान्येनोपदिश्यमानं स्वस्वरूपं तत् ज्ञानं सामान्यतः स्वमहिमज्ञानं वा ज्ञानमित्युच्यते। 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति यत् सर्वेश्वरत्वोपपादकं सकलजगत्स्रष्टृत्वसंहर्तृत्वादिगुणवत्तयोपदिश्यमानं स्वस्वरूपं तत् विज्ञानम् । उक्तरीत्या विशिष्य स्वगुणज्ञानं वा विज्ञानम् । 'अवजानन्ति मां' इत्याद्यपि विज्ञानम्। स्वावमन्तॄणामाशाविघटकस्वस्वरूपस्य निरूपणात् स्वभजकानां तु महामाहात्म्यसत्यसङ्कल्पत्वादिमहिमा-प्रदर्शकस्वस्वरूपस्य निरूपणात् ।। ८४ ।।

**सङ्क**— ।। **ज्ञानं तेऽहं सविज्ञानमित्यादि** ।। वचनपर्यालोचनया च भारतस्य हरिसद्गुणनिर्णयात्मकं प्रतीयतेत्याह— **ज्ञानमिति** ।। ८४ ।।

**वरद**— [३]'भारते गीतिका वरा' इति वचनात् भारतेऽपि गीताभागस्योत्कृष्टत्वावगमात्तत्रत्यान्यपि बहूनि वाक्यान्युक्तार्थं प्रतिपादयन्तीत्यभिप्रेत्य तान्युदाहरति— **ज्ञानं तेऽहमित्यादिना** ।। अत्र गीतायां ज्ञानं तेऽहमिति विज्ञानसहितं ज्ञानं प्रवक्ष्यामीति प्रतिज्ञायोत्तरत्र 'अहं सर्वस्य प्रभव' इति प्रतिज्ञातं ज्ञानमुच्यते । ज्ञानविज्ञानशब्दाभ्यां च तद्विषयभूतं भगवन्माहात्म्यमुच्यते । यज्ज्ञात्वेति वाक्यशेषपर्यालोचनया तथावगमात् । न हि ज्ञानं विज्ञानं वा ज्ञात्वा मुच्यत इति सम्भवति किन्तु ज्ञेयं ज्ञात्वेति । ततो ज्ञानविज्ञानशब्दौ ज्ञेयविज्ञेयपरौ ।। ८४ ।।

**जना**— इदानीं भारते गीतायाः वरत्वात् गीतागतानि वाक्यानि सर्वोत्तमत्वादिविषये उदाहरति— **ज्ञानमिति** ।। अहं इदं भजते यो मामिति प्रकृतम् । मत्सम्बन्धित्वेन प्रकृतमिदं ज्ञानं सामान्यं ज्ञानं ज्ञेयम् । विज्ञानेन सहितं सविज्ञानं विशेषं ज्ञानं मुक्तियोग्यं विज्ञानं विज्ञेयम् । अशेषतः समग्रं वक्ष्यामि । यज्ज्ञात्वा इह भूयः पुनः अन्यज्ज्ञातव्यं नावशिष्यते ।। ८४ ।।

---

१. मा.मा. १-१-१५ । २. भ.गी. ७-२ । ३. गी.भा. उपोद्घातः ।

**ताम्र**— भारतपारिजातमधुभूतगीतायामपि भगवतः सर्वोत्कृष्टत्वं, सर्वशास्त्रप्रतिपाद्यत्वं, अवताराणामपि निर्दोषगुणपूर्णत्वमित्यादि प्रतिपाद्यत इति भावेन तद्वाक्यान्युदाहरति— **ज्ञानमित्यादिना** ।। ज्ञानविज्ञानशब्दौ ज्ञेयविज्ञेयपरौ ।। ८४ ।।

**भारतश्री**— 'भारते गीतिका वरा' इत्युक्त्या भगवद्गीतायाः उत्कृष्टतावगमात् उक्तार्थे तत्रत्यानि बहूनि तानि वाक्यानि उदाहरति— **ज्ञानमित्यादिना** ।। तत्र ज्ञानविज्ञानशब्दाभ्यां तद्विषयभूतं भगवन्माहात्म्यमुच्यते । यज्ज्ञात्वेति वाक्यशेषात् । न हि ज्ञानं ज्ञात्वा मुच्यते इति सम्भवति किन्तु ज्ञेयं ज्ञात्वेति ।। ८४ ।।

**[१]अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।**
**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।। ८५ ।।**

**व्यास**— प्रतिज्ञातं विज्ञानमाह— **अहमिति** ।। प्रभवः उत्पादकः। प्रलयः नाशकर्ता । मत्तोऽन्यदस्ति तदन्यापेक्षया परं च तत्परतरं सर्वोत्तमं नास्तीत्यर्थः ।। ८५ ।।

**वरद**— तत्र ज्ञेयस्वरूपमुक्तम्— **अहं कृत्स्नस्येति** ।। प्रभवत्यस्मादिति प्रभवः कारणम् । प्रलीयत अस्मिन्निति प्रलयो विनाशकारणं चाहमेवेत्यर्थः। तस्मान्मत्तः परतरमत्युत्कृष्टं किञ्चिन्नास्तीत्यर्थः। अनेन जगदुत्पत्त्यादिकारणत्वं सर्वोत्कृष्टत्वं च भगवन्माहात्म्यं ज्ञेयमित्यर्थः।। ८५ ।।

**जना**— प्रतिज्ञातं विज्ञानमाह— **अहमिति** ।। अहं कृत्स्नस्य जगतः प्रभव उत्पत्तिः। सत्ता प्रतीत्यादिकारणत्वात्तद्भोक्तृत्वाच्च प्रभवः। एवं प्रलयः प्रभवादिभोक्तृत्वं च । यथा पुत्रादिप्रभवो रिपुप्रलयश्चोपलब्धः सुखहेतुरित्युपलब्धः पित्रादेस्तद्भोक्तृत्वं तथान्यत् किञ्चिज्ज्ञेयम् । धनञ्जय मत्तोऽन्यत्परतरं नास्ति परतरस्तु अहमेवेत्यर्थः। इदं च सर्वोत्तमत्वे प्रमाणम् ।। ८५ ।।

**ताम्र**— प्रभवादेः सत्ताप्रतीत्यादिकारणत्वाद् भोक्तृत्वाच्च प्रभव इत्यादि । अहमेव परतरः मत्तोऽन्यन्न किञ्चिदपि परमित्यर्थः। अत्र ज्ञानमिति प्रतिज्ञाय वक्ष्यमाणप्रमेयस्य सर्वशास्त्रार्थत्वाभिप्रायेण ततोऽतिरिक्तज्ञातव्याभावमुक्त्वा कृष्णावतारस्य निरतिशयोत्कर्षोक्त्या विवक्षितसिद्धिः ।। ८५ ।।

**भारतश्री**— प्रतिज्ञातं ज्ञानमुच्यते— **अहं सर्वस्य प्रभव** इत्यादिना ।। प्रभवति अस्मादिति प्रभवः । प्रलीयते अस्मिन्निति प्रलयः । परतरं उत्कृष्टम् । अहमेव अत्युत्कृष्टः इत्यर्थः । अनेन जगदुत्पत्यादिकारणत्वं भगवन्माहात्म्यं ज्ञेयमित्युक्तं भवति ।। ८५ ।।

**[२]अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ।। ८६ ।।**

---

१. भ.गी. ७-६ । २. भ.गी. ९-११ ।

**व्यास—** ननु भगवतो दोषदूरत्वात् कथं त्वामनुजानीयुरित्यत उक्तम्— **मानुषीमिति** ।। मनुष्यदृशां न तु मानुषीमिति । न तु सादृश्यमात्रेण भ्रान्त्युपपत्तिरपि तु अधिष्ठानयाथात्म्यज्ञानाभावे सतीत्यत उक्तम्— **परमिति**।। परं सर्वोत्तमं भावं स्वरूपम् । मिथ्याज्ञानवत्त्वात् ।। ८६ ।।

**वादि—** 'परम्भावम्' इत्यस्य परमुत्तमं भावम् । भवतीति कर्तृव्युत्पत्त्या सर्वदा विद्यमानं स्वरूपमित्यर्थः। विचेतस इत्यस्य तत्त्वज्ञानविरुद्धचेतस इत्यर्थः ।। ८६ ।।

**सङ्क—** इतोऽपि श्रीकृष्णरामादिप्रादुर्भावानां प्राकृतदेहत्वाभावेन देहत्यागादिदोषो नास्ति इति विज्ञायते । तत्र दोषज्ञानिनां अवज्ञत्वोक्तेरित्याह— **अवजानन्ति इति** ।।

''ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।।
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ।।
सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् ।
अवरं याति च तमः प्रादुर्भावगतोऽप्यतः।।
ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुणः।।'

इति भविष्यत्पर्ववचनाद् अवजानन्ति इत्यस्यार्थो द्रष्टव्यः।। ८६ ।।

**वरद—** अत्र भगवदवतारस्यैव कृष्णस्यैव माहात्म्यमुच्यत इत्यतः प्रकृतसङ्गतिः। गीतायां भगवदवतारेषु दोषदर्शनं निन्दाश्रवणाच्चावताराणां निर्दोषत्वं ज्ञायत इत्याह— **अवजानन्तीत्यादिना** ।। मानुषीं तनुमाश्रित्य तन्नियामकत्वेन स्थितं मामवजानन्ति अवज्ञां कुर्वन्ति । अत्र हरेरवज्ञानं नाम

'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।।
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ।।' इति ।

गीतातात्पर्योदाहृतभविष्यत्पर्ववचनादनेकविधं ज्ञातव्यम् । कुतोऽवजानन्तीत्यत उक्तम्— **मूढा इति** ।। तदेव विवृणोति— **परं भावमिति** ।। मम भूतमहेश्वरं भूतानां ब्रह्मादीनां महेश्वरं परं भावं स्वरूपमजानन्त इत्यर्थः।। ८६ ।।

**जना—** यदि त्वमेवं विधः जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कथं केचित् त्वामवजानन्ति का च तेषां गतिरित्यत आह— **अवजानन्तीति** ।। मूढाः मानुषीं तनुं मानुषवत्प्रतीतामाश्रितं अनन्यभूततनुरपि स्वाधीनत्वेनाश्रितमित्युच्यते । तदुक्तम्— 'तन्वा विष्णुरनन्योऽपि स्वाधीनत्वात्तदाश्रितः' इति । मामवजानन्ति अधमतया जानन्ति । नैतावदेव,

---

१. गी.ता. ९-११ ।

'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।।
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ।।'

इत्येतत्सर्वं ज्ञेयम् । तत्र कारणान्तरमाह— **परमिति** ।। भूतः अनाद्यनन्तः कालानन्त्यमांश्चासौ महान् परिपूर्ण–रूपश्चासौ ईश्वरः वराणां ब्रह्मादीनां ईशश्चेति भूतमहेश्वरः। षष्ठ्यः परनिपातः। तं परं भावं याथार्थ्यस्वरूपमजानन्त इति ।। ८६ ।।

**ताम्र**— मानुषीं मनुष्यसदृशीं तनुमाश्रितं मां 'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता' इत्यादि गीतातात्पर्योक्तरीत्या अवजानन्तीत्यर्थः। सादृश्यमात्रेण कथं भ्रान्तिरित्यतोऽधिष्ठानयाथात्म्यज्ञानमपि नास्तीत्याह— **मूढा इति** ।। तद्विवरणम्— **परमिति** ।। भावं स्वरूपम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् ।। ८६ ।।

**भारतश्री**— मूलरूपस्य जगत्कारणत्वेन अवतारस्य किमायातमित्यतः मूलरूपस्य अवतारस्य च भेदादिदोषदर्शिनां निन्दां करोति— **अवजानन्तीति** ।। मानुषीं तनुं आश्रितम् । मानुषीं मनुष्यसदृशीम् । 'तन्वा विष्णुरनन्योऽपि स्वाधीनत्वात् तदाश्रितः' इति गीतातात्पर्ये । 'मूढानां मानुषवत् प्रतीतां तनुम् । न तु मनुष्यरूपाम्' इति गीताभाष्यम् । अवज्ञानं नाम 'ब्रह्मरुद्रादीनां साम्यदृष्टिरनन्यता' इत्यादिप्रमाणानुसारेण द्रष्टव्यम् । परं भावं उत्तमसामर्थ्यम् । उत्तमं स्वरूपम् इति वा ।। ८६ ।।

**[1]मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः ।। ८७ ।।**

**व्यास**— मोघाशाः। प्रकृतिं स्वभावम् । मोहिनीं पैशाचीम् ।। ८७ ।।

**वादि**— **प्रकृतिं मोहिनीं श्रिता** इत्यत्र प्रकृतिं स्वभावमित्यर्थः ।। ८७ ।।

**वरद**— तेषां फलमाह— **मोघाशा इति** ।। तेषामामुष्मिकफलाशा व्यर्थेत्यर्थः। एवं कर्मज्ञानयोरपि आमुष्मिकफलविषये मोघत्वं द्रष्टव्यम् । ऐहिकयुद्धादिकर्मणां फलत्वदर्शनादिति भावः। अवज्ञाने मूलकारणमाह— **राक्षसीमिति** ।। मोहजनकं राक्षसासुरस्वभावमाश्रिता यत इत्यर्थः।। ८७ ।।

**जना**— तेषां फलमाह— **मोघाशा इति** ।। मोघाशा भगवद्द्वेषिभिराशंसितमामुष्मिकं न किञ्चिदाप्यत इति वृथाशाः। मोघकर्माणः युद्धादिकर्मणः साफल्येऽपि तेषां यज्ञादिकर्माणि वृथैवेति व्यर्थकर्माणः। मोघज्ञानाः ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित्पुरुषार्थः आमुष्मिकस्तैराप्यत इति व्यर्थज्ञानाः। विचेतसः विरुद्धमिथ्याज्ञानिनः। द्वेषमूलकारणमाह— **राक्षसीमिति** ।। मोहिनीं मोहजनकाम् । राक्षसीं प्रकृतिं स्वभावमासुरीं प्रकृतिमाश्रिताः ।। ८७ ।।

---

१. भ.गी. ९-१२ ।

**ताम्र**— तेषां फलमाह— **मोघाशा इति** ।। वृथाशाः भगवद्द्वेषिभिराशासितमामुष्मिकं न किञ्चिदाप्यते । द्वेषकारणमाह— **राक्षसीमिति** ।। ८७ ।।

**[१]महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। ८८ ।।**

**व्यास**— तव दोषित्वादेव ते त्वामवजानन्तीति किं न स्यादित्यत आह— **महात्मान इति** ।। ८८ ।।

**सङ्क**— महात्मानस्त्वित्यादिवचनेष्वपि श्रीविष्णोः सर्वगुणपरिपूर्णत्वं स्पष्टं प्रतीयते इत्याह— **महात्मान इति** ।। ८८ ।।

**वरद**— दैवस्वभावस्तु नैवमित्याह— **महात्मानस्त्विति** ।। न विद्यते भगवतोऽन्यत्र स्वतन्त्रमिदमिति मनो येषां ते अनन्यमनस इत्यर्थः। भूतानां ब्रह्मादीनां आदिं स्वयमनादिं अव्ययं नाशरहितं ज्ञात्वा भजन्तीत्यन्वयः ।। ८८ ।।

**जना**— भगवतो दोषित्वादेवावजानन्तीति किं न स्यादित्यत आह— **महात्मान इति** ।। दैवीं देवतासम्बन्धिनीं प्रकृतिं स्वभावमाश्रिता अनन्यमनसः महात्मानः भूतादिं सर्वजनकमव्ययं मां ज्ञात्वा भजन्तीत्यन्वयः। तथात्वे दैवप्रकृतयोऽप्यवज्ञां कुर्युः। न च तदस्तीत्यतः त एव दुष्टा इति भावः।। ८८ ।।

**ताम्र**— तव दोषित्वादेव त्वामवजानन्तीति किं न स्यादित्यतः नेतरो द्विषन्तीति देवानाह— **महात्मान इति** ।। ८८ ।।

**[२]पिताऽसि लोकस्य चराचरस्य**
**त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो**
**लोकत्रयेऽप्यप्रतिमप्रभाव ।। ८९ ।।**

**वरद**— पितासीत्यत्रापि भगवदवतारस्य कृष्णस्य सर्वोत्कृष्टत्वादिकमेव ज्ञायते लोकत्रयेऽपि अन्यस्त्वत्समो नास्ति अधिकः कुतो न कुतोऽपीत्यर्थः। अत्र हेतुत्वेनाप्रमितप्रभावेति सम्बध्यते ।। ८९ ।।

**जना**— सर्वोत्तमत्व एव प्रमाणान्तरमाह— **पितेति** ।। चराचरस्य लोकस्य त्वं पिता पूज्यश्च गरीयान् गुरुर्हितोपदेष्टासि । हे अप्रतिमप्रभाव अप्रतिमः असदृशः प्रभावः सामर्थ्यं यस्य तस्य सम्बोधनम् । हेतुगर्भं लोकत्रयेऽपि त्वत्समोऽन्यो नास्ति । अभ्यधिकः कुतः न कुतोऽपीत्यर्थः।। ८९ ।।

**भारतश्री**— पितासीत्यत्रापि भगवदवतारस्य सर्वोत्कृष्टत्वरूपं माहात्म्यं ज्ञायते ।। ८९ ।।

---

१. भ.गी. ९-१० । २. भ.गी. ११-४३ ।

**[१]परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ।। ९० ।।**

**जना**— प्रकृत्युत्तमत्वे प्रमाणमाह— **परमिति** ।। ज्ञानानां ज्ञेयानां परमुत्तममतिशयेनोत्तमं ज्ञानं ज्ञेयं वक्ष्यामि। सर्वे मुनयः यज्ज्ञात्वा इतः संसाराज्ज्ञानाद्वा परां सिद्धिं गताः ।। ९० ।।

**भारतश्री**— परं भूयः इत्यत्रापि भगवन्माहात्म्यातिशयमेव ज्ञायते ।। ९० ।।

**[२]मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ।। ९१ ।।**

**व्यास**— योनिर्भार्या । महद्ब्रह्म मूलप्रकृतिः ।। ९१ ।।

**वादि**— **मम योनिर्महद्ब्रह्मे**त्यत्र युज्यतेऽनया पुमानिति योनिर्भार्या न तु कारणमित्यर्थः। 'तस्मिन् गर्भं दधाम्यहं' इति उत्तरविरोधात् । महद्ब्रह्म महद्ब्रह्मपदवाच्या महालक्ष्मीः। 'प्रकृतिः परमं ब्रह्म' इति वचनात् । इदमपि विशेषज्ञानम् ।। ९१ ।।

**वरद**— 'परं भूयः' इत्यत्रापि ज्ञानानां मध्ये उत्तमं ज्ञानं भूयः प्रवक्ष्यामीति प्रतिज्ञाय प्रतिज्ञातं ज्ञानमुच्यत— **मम योनिरिति** ।। महद्ब्रह्म प्रकृतिर्महालक्ष्मीर्मम योनिर्भार्या तस्मिन् महद्ब्रह्मणि गर्भं दधामि ततो गर्भात् सर्वभूतानां ब्रह्मादीनां सम्भवः उत्पत्तिर्भवतीत्यर्थः। अनेन रमाब्रह्मादिसर्वचेतनोत्कृष्टत्वमुक्तं भवति ।। ९१ ।।

**जना**— प्रतिज्ञातं ज्ञेयमाह— **ममेति** ।। महद्ब्रह्म प्रकृतिः मम गर्भाधानार्था 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इति शब्दनिर्णये । अहं तस्मिन् गर्भं दधामि । ततः प्रकृतेः ।। ९१ ।।

**ताम्र**— महद्ब्रह्म प्रकृतिः। योनिर्भार्या ।। ९१ ।।

**भारतश्री**— महद्ब्रह्म प्रकृतिः । योनिः भार्या ।। ९१ ।।

**[३]द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। ९२ ।।**

**व्यास**— द्वावेव इमौ प्रमाणसिद्धौ । कूटवदाकाशवन्निर्विकारत्वेन तिष्ठतीति ।। ९२ ।।

**वरद**— 'द्वाविमौ पुरुषौ' इत्यादिनापि भगवता कृष्णेन स्वस्य सर्वोत्तमत्वकथनादप्युक्तार्थः सिद्ध्यतीत्युच्यते । लोके अवलोकने सति द्वाविमौ प्रमितौ पुरुषौ चेतनौ अथवा द्वावेवेत्युक्त्यान्यपुरुषव्यावृत्तिः प्रतीयते । सानुपपन्ना । परमपुरुषस्यापि विद्यमानत्वादित्यतो द्वावेवेत्युक्तिघटनार्थे परमपुरुषं व्यावर्तयितुं लोके इत्युक्तम । लोके इति

---

१. भ.गी. १४-१ । २. भ.गी.१४-३ । ३. भ.गी. १५-१६ ।

ईशितव्यवर्गे इत्यर्थः। इमौ कावित्यत उक्तम्— **क्षरश्चेति** ।। **चशब्दौ** परस्परसमुच्चयार्थौ क्षरश्चाक्षरश्चेति द्वावेवेति सम्बन्धः। तत्र क्षराक्षरशब्दार्थमाह— **क्षरस्सर्वाणीति** ।। सर्वाणि भूतानि ब्रह्मादयो जीवाः क्षराः क्षरशब्दवाच्याः। कूटस्थो महालक्ष्मीरक्षरः अक्षरशब्दवाच्या उच्यते श्रुताविति शेषः। अत्र

[1]"ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात्क्षराः।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः।।'

इत्येवं जातीयका श्रुतिर्द्रष्टव्या ।। ९२ ।।

**जना**— आदरात्तत्रैव प्रमाणमाह— **द्वाविति** ।। इमौ प्रसिद्धौ पुरुषौ चेतनौ क्षरश्चाक्षरश्चेति लोके ईशितव्यवर्गे द्वावेव सर्वाणि भूतानि ब्रह्मादयो जीवाः क्षरः शरीरक्षरणात् । कूटस्थः पुरुषो महालक्ष्मीः। अक्षरः शरीरक्षरणाभावात् ।। ९२ ।।

**ताम्र**— 'द्वाविमौ' इति गीतायामपि तत्त्वसारोपसंहारग्रन्थस्यायमर्थः। लोकेऽवलोके विचार्यमाणे सतीति यावत् । इमौ प्रमितौ । पुरुषौ चेतनौ । द्वावेवेत्येवकारसम्बन्धः। तद्घटनाय परमपुरुषं व्यावर्तयितुं च लोके अस्वतन्त्रवर्ग इत्युक्तम् । कूटस्थो महालक्ष्मीः।। ९२ ।।

**भारतश्री**— द्वाविमौ इत्यत्र विष्णोः सर्वोत्तमत्वमुच्यते । पुरुषौ चेतनौ । कूटस्थः लक्ष्मीः ।। ९२ ।।

**[2]उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।। ९३ ।।**

**व्यास**— उत्तमः पुरुषस्तु क्षराक्षराभ्यामन्यः न त्वेतयोरेकः। तत्सद्भावे आगमं प्रमाणमाह— **परमात्मेति**।। अनुमानं चाह— **य इति** ।। भूभूधरादिकं केनचित् प्रयत्नवता धृतं संयोगप्रयत्नाभावे गुरुत्वे सत्यपातितत्वात् करतलामलकवदिति भगवतो जगत्यावेशे कपोलनिविष्टौदुम्बरान्तर्गतमदावेव जगन्नाशे नाशः स्यादित्यत उक्तम्— **अव्यय इति** ।। अव्ययत्वं कुत इत्यत उक्तम्— **ईश्वर इति** ।। ९३ ।।

**वरद**— यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह— **उत्तम इति** ।। अन्यः क्षराक्षराभ्यां न पुनरेतयोरेव मध्ये कश्चित्पुरुषोत्तमः कल्पनीयः। तुशब्देनैतत्पुरुषद्वयापेक्षया तस्य महान्विशेषोऽस्तीति दर्शयति । तत्र श्रुत्यादिसम्मतिमाह— **परमात्मेति** ।। आत्मशब्दः चेतनपर्यायः ततश्च श्रुत्यादौ परमात्मा क्षराक्षरात्मकनिखिल–चेतनोत्कृष्ट इत्युदाहृत इत्यर्थः। तस्य पुरुषोत्तमत्वे युक्तिरप्यस्तीत्याह— **य इति** ।। अत्र यत इत्युपस्कर्तव्यम् । लोकत्रयशब्दः सर्वोपलक्षणम् । तथा च यस्मात् लोकत्रयमाविश्य बिभर्ति तस्मात्तदपेक्षयोत्तमः यो हि यस्य धारणपोषणादिकर्ता स तस्मादुत्तमो युक्त इति व्याप्तेरिति युक्तिरुक्ता भवतीति द्रष्टव्यम् । लोकत्रयाविष्टस्य प्रलये लोकत्रयनाशे नाशप्रसङ्गं निवारयति— **अव्यय इति** ।। नन्वेतद्विरुद्धं गृहाविष्टस्य देवदत्तस्य गृहदाहे तद्दाहनियमदर्शनादित्यतो अचिन्त्यैश्वर्ययोगान्न विरोध इत्याह— **ईश्वर इति** ।। ९३ ।।

---

१. विष्णुतत्त्वनिर्णयोदाहृतपरमश्रुतिः । २. भ.गी. १५-१७ ।

**जना**— तदनेनोत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृत्वा प्रकृतमाह— **उत्तम इति** ।। क्षराक्षराभ्यां अन्यस्तु अन्य एव पुरुष उत्तमः। न त्वनयोरेवैकः पुरुषोत्तमः कथ्यत इति भावः। अन्यस्य पुरुषोत्तमत्वे श्रुत्यादिसंमतिमाह— **परमात्मेति** ।। [1]''परमात्मा व्यवस्थितः' 'आत्मा नारायणः परः' इत्यादि श्रुतिषु अयं पुरुषोत्तमः परमात्मेत्युदाहृत उक्तः। युक्तिं चाह— **य इति** ।। यः लोकत्रयमाविश्य बिभर्ति धारणं पोषणं च करोति । यो हि यस्य धारणपोषणकर्ता सः तस्मादुत्तम इति सुप्रसिद्धः। आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह— **अव्यय इति** ।। तत्कथमित्यत ऐश्वर्यादित्याह— **ईश्वर इति** ।। ९३ ।।

**ताम्र**— उत्तमः पुरुषस्त्वन्यः क्षराक्षराभ्याम् । न त्वनयोरेवैकः। अन्यस्योत्तमत्वे श्रुत्यादिसम्मतिमाह— **परमात्मेति** ।। आत्मशब्दोऽत्र चेतनपर्यायः। युक्तिं चाह— **य इति** ।। यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः। आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह— **अव्यय इति** ।। तत्कथमैश्वर्यादित्याह— **ईश्वर इति** ।। ९३ ।।

**[2]यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। ९४ ।।**

**व्यास**— उत्तमपुरुषस्त्वन्य इत्युक्त्या कृष्णादन्यः परमात्मा प्राप्तः अत आह— **यस्मादिति** ।। क्षरं चातीतः अक्षरादप्युत्तमः। लोके पौरुषेये ग्रन्थे ।। ९४ ।।

**वरद**— अन्य इति सामान्येनोक्तः सोऽन्य क इति विशेषजिज्ञासायां सप्रमाणकमहमेवेत्याह— **यस्मादिति** ।। चशब्दः क्षरमित्यनेन सम्बध्यते । यस्मात् कारणात् अहं क्षरं चातीतो अक्षरादप्युत्तम अतः लोके पौरुषेयागमे वेदे च पुरुषोत्तमः प्रथितः प्रसिद्ध इत्यर्थः।। ९४ ।।

**जना**— स च क इत्यत अहमेवेति सप्रमाणमाह— **यस्मादिति** ।। यस्मादहं क्षरं चातीतः अक्षरादप्युत्तम अतस्तस्माल्लोके पौरुषेयागमे वेदेऽपौरुषेयागमे च पुरुषोत्तम इति प्रथितः ।। ९४ ।।

**ताम्र**— स च क इत्यतोऽहमेवेति सप्रमाणकमाह— **यस्मादिति** ।। अक्षरं चातीत इति चशब्दान्वयः। अक्षरादप्युत्तम इत्यपिशब्दसम्बन्धः। लोके पौरुषेयागमे।। ९४ ।।

**[3]यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद् भजति मां सर्वभावेन भारत ।। ९५ ।।**

**व्यास**— सर्ववित् सर्वशास्त्रार्थवित् । सर्वभावेन सर्वप्रकारेण ।। ९५ ।।

**वरद**— स्वोक्तपुरुषोत्तमत्वे स्वस्य तात्पर्यं द्योतयितुं पुरुषोत्तमत्वं जानतः फलमाह— **यो मामिति** ।। य एवमुक्तरीत्या न त्वश्वकर्णादिशब्दवत् संज्ञात्वेनेत्यर्थः। असंमूढः एतत्पुरुषोत्तमत्वमपारमार्थिकमिति संमोहवर्जितः

---

१. महानारायणोपनिषत् । २. भ.गी. १५-१८ । ३. भ.गी. १५-१९ ।

मां पुरुषोत्तमं जानाति स सर्ववित् सर्वज्ञ इत्युच्यते । अस्यैव सर्वशास्त्रार्थत्वादिति भावः। एवं जानन् मामेव सर्वभावेन सर्वप्रकारेण भजतीत्यर्थः। भारतेत्यर्जुनं प्रति सम्बोधनम् ।। ९५ ।।

**जना**— तात्पर्यद्योतनाय वेत्तुः फलमाह— **यो मामिति** ।। य एवं क्षराक्षरातीतत्वेन पुरुषोत्तमं मां जानाति स सर्वविद्भवति । अस्यैव सर्वशास्त्रार्थत्वात् । हे भारत सर्वभावेन सर्वप्रकारेण मां भजति च । ननु क्षराक्षरा-तीतत्वरूपेणोक्तेन प्रकारेण न पुरुषोत्तमत्वम् । क्षराक्षरातीतत्वे मानाभावात् । न च पुरुषोत्तमशब्दावयव-शक्तिपर्यालोचनया तत्सिद्धिरिति वाच्यम् । तस्याश्वकर्णादिशब्दवत्संज्ञात्वेनाप्युपपत्तेः। तस्मादेवमित्येतन्नोपपद्यत इत्यत आह— **असंमूढ इति** ।। अश्वकर्णादिशब्दवन्न संज्ञामात्रमपि तु

'ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः।।'

इति श्रुतिसिद्धयोगमसंमूढो जानाति ज्ञास्यतीति भावः ।। ९५ ।।

**ताम्र**— तात्पर्यद्योतनाय वेत्तुः फलमाह— **य इति** ।। असंमूढः अश्वकर्णादिवत् संज्ञामात्रेण पुरुषोत्तमत्वमिति संमोहवर्जितः। एवं क्षराक्षरोत्तमतया पुरुषोत्तमं मां यो जानाति सः सर्वा अस्यैव सर्वशास्त्रार्थत्वात् सर्वभावेन सर्वदा सर्वप्रकारेणापि मनआदिभावेन ।। ९५ ।।

**भारतश्री**— सः सर्ववित् । तस्यैव सर्वशास्त्रार्थत्वात् ।। ९५ ।।

**[1]इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।। ९६ ।।**

**[2]इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।। ९७ ।।**

**व्यास**— परोक्षतो बुद्धः। बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः। अत्र भेदः सर्वोत्तमत्वादि च प्रतीयते ।। ९७ ।।

**वरद**— एतच्चायोग्याय नोपदेष्टव्यमित्याह— **इतीति** ।। गुह्यतमं शास्त्रमित्यनेन भगवतः पुरुषोत्तमत्वमेव सर्वशास्त्रप्रमेयमित्यभिप्रैति । अत एव सर्वविदित्युक्तम् । ननु सर्वविद्भवति, मामेव च सर्वभावेन भजतीति फलद्वयमुक्तं तस्य कथं फलत्वमिष्टप्राप्त्यादिरूपत्वाभावादित्यतस्तत्साध्यं फलमाह— **बुद्धिमान् कृतकृत्यश्चेति**।। बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः। अत्र सर्वविदिति इदं शास्त्रमिति चोक्तत्वात् सर्वेषां पौरुषेयागमानां विष्णोः सर्वोत्तमत्व एव महातात्पर्यमित्यादिस्फुटं प्रतीयत इत्युक्तं भवति ।। ९७ ।।

---

१. भ.गी. १४-२ । २. भ.गी. १५-२० ।

**जना**— एतच्च यस्मै कस्मै न वाच्यमित्याशयेनाह— **इतीति** ।। हे अनघ इतीदं शास्त्रं गुह्यतमं मयोक्तं तस्मादयोग्याय नाख्येयमित्यर्थः। 'स सर्वविद्' इत्याद्युक्तं ततः किमित्यत आह— **एतदिति** ।। एतत्पूर्वोक्तं बुद्ध्वा परोक्षतो ज्ञात्वा बुद्धिमानपरोक्षज्ञानी यस्मात् । ततः कृतकृत्यः मुक्तश्च स्यादित्यन्वयः ।। ९७ ।।

**ताम्र**— इति मया मम पुरुषोत्तमत्वमुक्तं इदं गुह्यतमं शास्त्रं तात्पर्येण सर्वशास्त्रप्रतिपाद्योऽर्थो इति यावत् । बुद्धिमानपरोक्षज्ञानी । कृतकृत्यो मुक्तः ।। ९७ ।।

**[1]द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।। ९८ ।।**

**व्यास**— सर्गौ स्वभावौ ।। ९८ ।।

**वादि**— **द्वौ भूतसर्गावित्यत्र** सर्गौ निसर्गौ स्वभावाविति यावत् ।। ९८ ।।

**सङ्क**— नन्वहं कृत्स्नस्य जगत इत्यादिना यत्सर्वोत्तमत्वं जगत्स्रष्टृत्वादिधर्मविशिष्टत्वं श्रीविष्णोः उक्तं तत् पारमार्थिकं नोपपद्यते । जगतोऽसत्यत्वाप्रतिष्ठत्वानीश्वरत्वादेः उक्तत्वात् इत्याशङ्क्य तेषां असुरत्वेन निन्द्यत्वात् अधःपातोक्त्या तन्मतस्य हेयत्वात् श्रीविष्णोः सर्वोत्तमत्वजगत्स्रष्टृत्वादिधर्मविशिष्टत्वं वा सूचितमेवेति परिहरति— **द्वौ भूतसर्गावित्यादिना** ।। ९८ ।।

**जना**— द्वेषस्य नरकहेतुत्वे प्रमाणमाह— **द्वाविति** ।। अस्मिन् लोके भूतसर्गौ प्राणिस्वभावौ द्वौ तौ निर्दिशति— **दैव इति** ।। दैवः देवतास्वभावः विस्तरशः विस्तरेण प्रोक्तः। हे पार्थ! आसुरं असुरस्वभावं मे मत्तः श्रृणु । ननु भूतस्वभावानामतिबहुत्वात् 'द्वौ भूतसर्गौ' इति कथमित्याशङ्का

[2]"सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिकौ ।
देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तराः।
मुक्तिगा एव विज्ञेया देवा एव विमुक्तिगा ।।'

इत्यनेन परिहर्तव्या । इदं व्याख्यातं जयतीर्थैः। 'सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिक्यविवक्षया द्वावित्युक्तमिति भावः। गन्धर्वमनुष्याधमादीनामपि शुभाशुभफलाधिकत्वात् को विशेषो देवादीनामित्यत आह— गन्धर्वेति ।। उभयफलान्तर्वर्तमाना इत्यर्थः। तद्विवृणोति— मुक्तिगा इति ।। एवं तमोगा एवेति द्रष्टव्यम् । तर्हि देवानामपि मुक्त्यादिमत्त्वादेतेभ्यः को विशेष इत्यत आह— देवा इति ।। एवमसुरा एवातिदारुणतमोगा इति द्रष्टव्यम्' इति ।। ९८ ।।

**ताम्र**— ननु 'अहं कृत्स्नस्य जगत' इत्यादिना यत्सर्वोत्तमत्वादिकमुक्तं तदपरमार्थिकं कैश्चिद्वादिभि-स्तथोक्तेरित्यत तेषां निन्दावाक्यं प्रागुक्तयोग्यताभेदव्यापकं पठति— **द्वौ भूतसर्गौ इति** ।। ९८ ।।

---

१. भ.गी. १६-६ । २. गी.ता.१६-६ ।

**[१]असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ।। ९९ ।।**

**व्यास—** असत्यं सन्न । अप्रतिष्ठं बाध्यम् । सत्यं न चेत्किमसदेव, परस्परसम्भूतं न चेत् किं नित्यमेव, अन्यत् सदसद्विलक्षणं कामोपलक्षिताविद्याहेतुकम् । अत्र जगत्सत्वादि ।। ९९ ।।

**वादि—** '**असत्यमप्रतिष्ठं ते**' इत्यत्र प्रतिष्ठा बहुकालमवस्थितिः। तद्रहितं ब्रह्मज्ञानबाध्यमित्यर्थः। अपरस्परसम्भूतं मृत्पिण्डाद् घटः, तन्तुभ्यः पट इत्याद्याकारेण परस्परसम्भूतं न भवति । तर्हि किं कीदृशं जगदिति प्रश्नस्य अन्यत् सदसतोरन्यत् सदसद्विलक्षणमित्युत्तरम् । कामहैतुकम् । अनेन कामयन्ति दुर्विषयानिति कामः अज्ञानम् । तद्धेतुकं अज्ञानकल्पितमित्यर्थः।। ९९ ।।

**सङ्क-** [२]"येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।
मिथ्याजगदिदं सर्वं भ्रमजत्वात् न तिष्ठति ।।
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।
स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते ।।
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः।।' इति ।

ब्रह्मवैवर्तवचनात् । 'असत्यमप्रतिष्ठं ते' इत्यादि वचनानां अर्थो अधिगन्तव्यः।। ९९ ।।

**वरद—** 'द्वौ भूतसर्गौ' इत्यत्रापि दैवासुरविभागेन सृष्टिद्वयमुक्त्वा असुरसर्गं स्वभावं श्रुण्विति प्रतिज्ञाय असुराणां मतमुच्यते— **असत्यमित्यादिना** ।। तेऽसुरा असत्यं जगदाहुः कथमसत्यं यतो अप्रतिष्ठं ज्ञानबाध्यं जगतो अपारमार्थिकत्वमङ्गीकृत्य तत्साधनार्थं ज्ञानबाध्यत्वं हेतुमाहुरित्यर्थः। नन्वीश्वरनिमित्तकारणत्वात् कथमसत्यं जगदाहुरित्यत उक्तम्— **अनीश्वरमिति** ।। ईश्वरनिमित्तकं न भवतीत्याहुरित्यर्थः। नन्वीश्वराधिष्ठितादव्यक्तात् महत् महतोऽहङ्कार इत्यादिक्रमेण जगत उत्पत्तेः कथमनीश्वरत्वमित्यत उक्तम् — **अपरस्परसम्भूतमिति** ।। महतोऽहङ्कार इत्यादिक्रमेणैकस्मादेकस्योत्पत्तिं नाङ्गीकुर्वन्तीत्यर्थः। ननु जगत्सत्यं न भवति चेत् किमत्यन्तासदेवेति पृच्छति— **किमिति** ।। उत्तरमाह— **अन्यदिति** ।। सदसद्भ्यामिति शेषः। सदसद्विलक्षणत्वादसत्यमाहुरित्यर्थः। ननु परस्परसम्भूतं न चेत् किं नित्यमेवोत स्वतो जातमिति प्रष्टुं किमित्येतदावर्तनीयम् । तस्याप्युत्तरमाह— **कामहैतुकमिति** ।। काम इति तत्कारणमविद्योपलक्ष्यते। कामोऽविद्या हेतुरुपादानं यस्य तत्कामहैतुकं अविद्याकल्पितमिति यावत् ।। ९९ ।।

**जना—** प्रतिज्ञातमासुरमतमाह— **असत्यमिति** ।। ते असुरा जगदसत्यं मिथ्या असत्यत्वादप्रतिष्ठं ज्ञानबाध्यं तत एवानीश्वरं ईश्वरः स्वामी तद्रहितम् । न च यस्माज्जातं स एवेश्वरः तथा चेश्वरवत्त्वादनीश्वरं कथमित्यत उक्तम्— **अपरस्परसम्भूतमिति** ।। एकस्मादेकस्य नोत्पत्तिरिति यावत् । किमिति शङ्कते सत्यं न चेत्किमसदेव अपरस्परसम्भूतं न चेत्किं नित्यं स्वतो वा जातामिति । तत्राद्यस्योत्तरमाह— **अन्यदिति** ।। सदसद्भ्यामिति

---

१. भ.गी. १६-८ । २. गी.ता.१६-२० ।

शेषः। सदसद्विलक्षणमित्यर्थः। द्वितीयस्योत्तरमाह— **कामहेतुकमिति** ।। काम इति तत्कारणमविद्योपलक्ष्यते । अविद्याहेतुकमित्यर्थः। जगदसत्यतावादिनामासुरत्वाद्युक्त्या विश्वसत्यता प्रतिपादकम्।

'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ।
मिथ्यात्वान्नेश्वरोऽप्यस्ति परेभ्यो न च जायते ।।' इति ।

ब्रह्मवैवर्तवचनाद्धेतुहेतुमद्भावो ज्ञेयः। यद्वा जगतः असत्यं अप्रतिष्ठं ईश्वरश्च विष्णुः तद्वैपरीत्येनाहुः। न विद्यते सत्यमस्येत्यादि समासो ज्ञेयः। अनेन न केवलं जगतो मिथ्यात्वादिवदतामसुरत्वमपि तु जगज्जन्मादिकारणं विष्णुं न मन्यन्ते तेषामपि असुरत्वमिति भावः ।। ९९ ।।

**ताम्र—** 'एष ह्येवैतत्कारयति यमयति च' इति श्रुतेः जगतः सत्यं प्रतिष्ठेश्वरश्च विष्णुस्तद्वर्जितं जगत् । असुरा आहुः। 'अन्नाद्भूतानि' इत्यादिनोक्तः परस्परसम्भवोऽस्य नास्तीत्यपरस्परसम्भूतम् । अन्यत्कारणं किमस्ति न किञ्चिदपीत्यर्थः। किं तर्हि कारणमित्यत उक्तम्— **कामहैतुकमिति** ।। हेतुतः प्राप्तं हैतुकम् । कामेन हेतुकं कामहैतुकम् । स्त्रीपुंप्रसङ्गैककारणमित्यर्थः। अथवा जगदसुराः सत्यं न भवतीत्याहुः। अत एवाप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । न च यतो यतो जातं असावसावीश्वर इति वाच्यम् । यतो अपरस्परसम्भूतं परमेश्वराधिष्ठितात् प्रकृतेर्महान् महतोऽहङ्कार इत्यादि परस्परसम्भूतं न भवति । सत्यं न चेत् किं अन्यत् सदसद्भ्यामिति शेषः। परस्परसम्भूतं न चेत् किं कामहेतुकम् । काम इच्छाकार्येण कारणाविद्या लक्ष्यते । अनिर्वाच्याविद्योपादनकमित्यर्थः ।। ९९ ।।

**भारतश्री—** द्वौ भूतसर्गौ इत्यत्रापि देवासुरविभागेन सृष्टिद्वयमुक्त्वा असुरसर्गं शृण्विति प्रतिज्ञाय असुराणां मतमुच्यते— **असत्यमित्यादिना** ।। असत्यं अप्रतिष्ठम् आधाररहितम् । तर्हि शून्यं किमिति पृच्छते आह — **अन्यदिति** ।। सदसद्विलक्षणमित्यर्थः । कामहैतुकं कामशब्देन अविद्या उपलक्ष्यते । अविद्याकल्पितमिति यावत् ।। ९९ ।।

**[1]एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। १०० ।।**

**वादि—** 'दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।', 'दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।' इत्यारभ्य, 'असत्यमप्रतिष्ठं ते' 'ईश्वरोऽहमहं भोगी' इत्यादिना जगन्मिथ्यात्वस्य ब्रह्मैक्यस्य चासुरयोग्यदुर्मतत्वोक्त्या प्रेक्षावद्भिर्न तन्मतमनुसरणीयमिति प्रतिपादितमित्याह । नितरां बन्धो निबन्धः। तमस्यनुभूयमानं दुःखं न तु संसारः। मोक्षप्रतियोगिफलत्वस्य तत्रैवौचित्यात् । अत एव 'ततो यान्त्यधमां गतिं' इति वक्ष्यति च ।। १०० ।।

---

१. भ.गी. १६-९ ।

**[१]असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ।। ९९ ।।**

**व्यास**— असत्यं सन्न । अप्रतिष्ठं बाध्यम् । सत्यं न चेत्किमसदेव, परस्परसम्भूतं न चेत् किं नित्यमेव, अन्यत् सदसद्विलक्षणं कामोपलक्षिताविद्याहेतुकम् । अत्र जगत्सत्वादि ।। ९९ ।।

**वादि**— **'असत्यमप्रतिष्ठं ते'** इत्यत्र प्रतिष्ठा बहुकालमवस्थितिः। तद्रहितं ब्रह्मज्ञानबाध्यमित्यर्थः। अपरस्परसम्भूतं मृत्पिण्डाद् घटः, तन्तुभ्यः पट इत्याद्याकारेण परस्परसम्भूतं न भवति । तर्हि किं कीदृशं जगदिति प्रश्नस्य अन्यत् सदसतोरन्यत् सदसद्विलक्षणमित्युत्तरम् । कामहैतुकम् । अनेन कामयन्ति दुर्विषयानिति कामः अज्ञानम् । तद्धेतुकं अज्ञानकल्पितमित्यर्थः।। ९९ ।।

**सङ्क**- [२]'येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।
मिथ्याजगदिदं सर्वं भ्रमजत्वात् न तिष्ठति ।।
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।
स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते ।।
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः।।' इति ।
ब्रह्मवैवर्तवचनात् । 'असत्यमप्रतिष्ठं ते' इत्यादि वचनानां अर्थो अधिगन्तव्यः।। ९९ ।।

**वरद**— 'द्वौ भूतसर्गौ' इत्यत्रापि दैवासुरविभागेन सृष्टिद्वयमुक्त्वा असुरसर्गं स्वभावं श्रुण्विति प्रतिज्ञाय असुराणां मतमुच्यते— **असत्यमित्यादिना** ।। तेऽसुरा असत्यं जगदाहुः कथमसत्यं यतो अप्रतिष्ठं ज्ञानबाध्यं जगतो अपारमार्थिकत्वमङ्गीकृत्य तत्साधनार्थं ज्ञानबाध्यत्वं हेतुमाहुरित्यर्थः। नन्वीश्वरनिमित्तकारणत्वात् कथमसत्यं जगदाहुरित्यत उक्तम्— **अनीश्वरमिति** ।। ईश्वरनिमित्तकं न भवतीत्याहुरित्यर्थः। नन्वीश्वराधिष्ठितादव्यक्तात् महत् महतोऽहङ्कार इत्यादिक्रमेण जगत उत्पत्तेः कथमनीश्वरत्वमित्यत उक्तम् — **अपरस्परसम्भूतमिति** ।। महतोऽहङ्कार इत्यादिक्रमेणैकस्मादेकस्योत्पत्तिं नाङ्गीकुर्वन्तीत्यर्थः। ननु जगत्सत्यं न भवति चेत् किमत्यन्तासदेवेति पृच्छति— **किमिति** ।। उत्तरमाह— **अन्यदिति** ।। सदसद्भ्यामिति शेषः। सदसद्विलक्षणत्वादसत्यमाहुरित्यर्थः। ननु परस्परसम्भूतं न चेत् किं नित्यमेवोत स्वतो जातमिति प्रष्टुं किमित्येतदावर्तनीयम् । तस्याप्युत्तरमाह— **कामहैतुकमिति** ।। काम इति तत्कारणमविद्योपलक्ष्यते। कामोऽविद्या हेतुरुपादानं यस्य तत्कामहैतुकं अविद्याकल्पितमिति यावत् ।। ९९ ।।

**जना**— प्रतिज्ञातमासुरमतमाह— **असत्यमिति** ।। ते असुरा जगदसत्यं मिथ्या असत्यत्वादप्रतिष्ठं ज्ञानबाध्यं तत एवानीश्वरं ईश्वरः स्वामी तद्रहितम् । न च यस्माज्जातं स एवेश्वरः तथा चेश्वरवत्त्वादनीश्वरं कथमित्यत उक्तम्— **अपरस्परसम्भूतमिति** ।। एकस्मादेकस्य नोत्पत्तिरिति यावत् । किमिति शङ्कते सत्यं न चेत्किमसदेव अपरस्परसम्भूतं न चेत्किं नित्यं स्वतो वा जातामिति । तत्राद्यस्योत्तरमाह— **अन्यदिति** ।। सदसद्भ्यामिति

१. भ.गी. १६-८ । २. गी.ता.१६-२० ।

शेषः। सदसद्विलक्षणमित्यर्थः। द्वितीयस्योत्तरमाह— **कामहैतुकमिति** ।। काम इति तत्कारणमविद्योपलक्ष्यते । अविद्याहेतुकमित्यर्थः। जगदसत्यतावादिनामासुरत्वाद्युक्त्या विश्वसत्यता प्रतिपादकम्।

'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ।
मिथ्यात्वान्नेश्वरोऽप्यस्ति परेभ्यो न च जायते ।।' इति ।

ब्रह्मवैवर्तवचनाद्धेतुहेतुमद्भावो ज्ञेयः। यद्वा जगतः असत्यं अप्रतिष्ठं ईश्वरश्च विष्णुः तद्वैपरीत्येनाहुः। न विद्यते सत्यमस्येत्यादि समासो ज्ञेयः। अनेन न केवलं जगतो मिथ्यात्वादिवदतामसुरत्वमपि तु जगज्जन्मादिकारणं विष्णुं न मन्यन्ते तेषामपि असुरत्वमिति भावः ।। ९९ ।।

**ताम्र**— 'एष ह्येवैतत्कारयति यमयति च' इति श्रुतेः जगतः सत्यं प्रतिष्ठेश्वरश्च विष्णुस्तद्वर्जितं जगत् । असुरा आहुः। 'अन्नाद्भूतानि' इत्यादिनोक्तः परस्परसम्भवोऽस्य नास्तीत्यपरस्परसम्भूतम् । अन्यत्कारणं किमस्ति न किञ्चिदपीत्यर्थः। किं तर्हि कारणमित्यत उक्तम्— **कामहैतुकमिति** ।। हेतुतः प्राप्तं हैतुकम् । कामेन हेतुकं कामहैतुकम् । स्त्रीपुंप्रसङ्गैककारणमित्यर्थः। अथवा जगदसुराः सत्यं न भवतीत्याहुः। अत एवाप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । न च यतो यतो जातं असावसावीश्वर इति वाच्यम् । यतो अपरस्परसम्भूतं परमेश्वराधिष्ठितात् प्रकृतेर्महान् महतोऽहङ्कार इत्यादि परस्परसम्भूतं न भवति । सत्यं न चेत् किं अन्यत् सदसद्भ्यामिति शेषः। परस्परसम्भूतं न चेत् किं कामहैतुकम् । काम इच्छाकार्येण कारणाविद्या लक्ष्यते । अनिर्वाच्याविद्योपादनकमित्यर्थः ।। ९९ ।।

**भारतश्री**— द्वौ भूतसर्गौ इत्यत्रापि देवासुरविभागेन सृष्टिद्वयमुक्त्वा असुरसर्गं शृण्विति प्रतिज्ञाय असुराणां मतमुच्यते— **असत्यमित्यादिना** ।। असत्यं अप्रतिष्ठम् आधाररहितम् । तर्हि शून्यं किमिति पृच्छते आह — **अन्यदिति** ।। सदसद्विलक्षणमित्यर्थः । कामहैतुकं कामशब्देन अविद्या उपलक्ष्यते । अविद्याकल्पितमिति यावत् ।। ९९ ।।

**[1]एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। १०० ।।**

**वादि**— 'दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।', 'दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।' इत्यारभ्य, 'असत्यमप्रतिष्ठं ते' 'ईश्वरोऽहमहं भोगी' इत्यादिना जगन्मिथ्यात्वस्य ब्रह्मैक्यस्य चासुरयोग्यदुर्मतत्वोक्त्या प्रेक्षावद्भिर्न तन्मतमनुसरणीयमिति प्रतिपादितमित्याह । नितरां बन्धो निबन्धः। तमस्यनुभूयमानं दुःखं न तु संसारः। मोक्षप्रतियोगिफलत्वस्य तत्रैवौचित्यात् । अत एव 'ततो यान्त्यधमां गतिं' इति वक्ष्यति च ।। १०० ।।

१. भ.गी. १६-९ ।

**वरद—** एतां दृष्टिमवष्टभ्य अवलम्ब्य नष्टात्मनो दुष्टचित्ता अत एवाल्पबुद्धयः। क्षुद्रज्ञाना उग्रकर्मणो भस्मधारणाद्यवैदिककर्मकर्त्तारः कलियुगादौ जगतः क्षयकारकाः अहितकारकाः स्वयं नष्टाः परान्नाशयन्तः प्रभवन्ति जायन्त इत्यर्थः।। १०० ।।

**जना—** एतां दृष्टिं इदं ज्ञानम् । अवष्टभ्याश्रित्य । नष्टात्मनः नष्टज्ञानाः । अल्पेषु विषयेषु बुद्धिर्येषां ते । उग्रं क्रूरं कर्म भस्मधारणादि येषां ते । अत एव जगतः अहिताः मोहकाः । जगतः क्षयाय नाशाय प्रभवन्ति समर्थाः भवन्ति ।। १०० ।।

**ताम्र—** नष्टात्मानो दुष्टचित्ताः। अल्पबुद्धयः अधिष्ठानमात्रविषये यथार्थज्ञानाः ।। १०० ।।

**[१]ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।**
**[२]आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।। १०१ ।।**

**वरद—** पुनः किं विधमासुरमतमित्यत आह— **ईश्वर इति** ।। अभिमानेनाहमेवेश्वरः न मत्तोऽन्य ईश्वरः परमार्थतोऽस्तीत्यादि मन्यन्त इत्यर्थः।। १०१ ।।

**जना—** पुनः आसुरं भावमाह— **ईश्वर इति** ।। अहमित्यस्य बलवानित्यत्रापि सम्बन्धो ज्ञेयः। मया सदृशः अन्यः कोऽस्ति न कोऽपीत्यन्वयः।। १०१ ।।

**ताम्र—** सिद्धो मुक्तः । अभिजनवान् अभिजात्यवान् परिजनवान् वा । कोऽन्योऽस्ति सदृशो मयेति अस्येत्यज्ञानविमोहिता इत्यन्वयः।। १०१ ।।

**[३]मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।**
**[४]तानहं द्विषतः क्रूरान् संसारेषु नराधमान्**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।। १०२ ।।**

**वादि—** **मामात्मपरदेहेष्वित्यत्र** आत्मदेहेषु द्वेषो नामाहं ब्रह्मास्मीति दुराग्रहः। परदेहेषु द्वेषो नाम 'त्वं ब्रह्मासि' इत्युपदेशः। इदं च भगवद्द्वेषिणां मोक्षो भवतीति भ्रमनिवृत्त्यर्थं सङ्गृहीतम् । 'अजस्रमशुभान्', 'आसुरीष्वेव योनिषु', 'मूढा जन्मनि जन्मनि', 'मामप्राप्यैव कौन्तेय' इति चतुर्भिर्विशेषणैरूर्ध्वलोकाप्राप्तिनियमस्य 'ततो यान्त्यधमां गतिं' इत्यधोलोकगमनस्य निर्णीतत्वात् ।। १०२ ।।

**वरद—** आत्मदेहेषु परदेहेषु चान्यो नियामकोऽस्तीत्युक्ते तदसहमानाः नास्त्येवान्यो नियामक इति मां प्रद्विषन्तः। तत्र हेतुः अभ्यसूयका इति । अभितः सर्वतः असूया येषां ते तथा । नन्वेवं द्विषत्सु तेषु उपेक्षैव

---

१. भ.गी. १६-१४ । २. भ.गी. १६-१५ । ३. भ.गी. १६-१८ । ४. भ.गी. १६-१९ ।

त्वया क्रियते किमित्यत आह— **तानहमिति** ।। संसारेषु क्षिपामीति सम्बन्धः। तत्रापि आसुरीष्वेव योनिषु क्षिपामीत्यर्थः ।। १०२ ।।

**जना—** द्वेषिस्वभावानुवादपूर्वकं द्वेषिणां गतिमाह— **मामिति** ।। आत्मपरदेहेषु विद्यमानं मां प्रद्विषन्तः अभ्यसूयकाश्च ये । द्वेषप्रकारश्चायं विष्णुर्न कारयिता यदि कारयिता स्यात्तर्हि इदानीमकुर्वाणमपि कारयतु कुर्वाणमभिवारयत्विति द्विषन्तः क्रूरान् तान् नराधमानशुभान् संसारेष्वजस्रं क्षिपामि । संसारेपि विशेषमाह— **आसुरीष्विति** ।। आसुरीषु योनिषु क्षिपामि ।। १०२ ।।

**ताम्र—** आत्मदेहे परदेहेषु च नियामकत्वेन स्थितं मां न कस्यचिद्विष्णुः कारयति । यदि स्यात् ममापीदानीं कारयत्वित्यादिप्रकारेण प्रद्विषन्त इत्यर्थः।। १०२ ।।

**[1]आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।। १०३ ।।**

**वरद—** आसुरयोनिक्षेपणेन सिद्धं फलं दर्शयति— **जन्मनि जन्मनि मूढा इति** ।। ततोऽपि किमित्यत आह— **मामप्राप्यैवेति** ।। ततोऽधमां निकृष्टां गतिं तमोलक्षणां यान्तीत्यर्थः। अत्र

'येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।
मिथ्याजगदिदं सर्वं भ्रमजत्वात् न तिष्ठति ।।
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।
स्वस्मिन्नपि तथान्यस्मिन् नियन्तान्य इतीरिते ।।
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरन्तम ।।' इति ।

ब्रह्मवैवर्तवचनमपीममेवार्थं संवादयतीति प्रच्छन्नबौद्धानां मायिनामेव मतं निन्द्यत इति निश्चितमिति भावः ।। १०३ ।।

**जना—** तद्गतिमाह— **आसुरीमिति** ।। अधमां गतिं नित्यनरकं यान्ति ।। १०३ ।।

**[2]सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ।। १०४ ।।**

**व्यास—** सर्वभूतेष्विति भगवद्रूपाणामभेदः ।। १०४ ।।

**वादि—** **सर्वभूतेषु येनैकमित्यत्र** विभक्तेषु सर्वभूतेष्वविभक्तमेकं मुख्यं भावं सदा भवतीति व्युत्पत्त्या ब्रह्माख्यं पदार्थं येन सत्त्वगुणनिबन्धनज्ञानेनेक्षते तज्ज्ञानं सात्विकं विद्धीति योजना । अनेन सर्वजीवानां परस्परभेदः

---

१. भ.गी. १६-२० । २. भ.गी. १८-२० ।

सर्वान्तर्यामिणो नारायणस्य स्वगतरूपेषु परस्परं न भेद इति च सिद्धम् । अत एव हि [1]'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रम् ।। १०४ ।।

**सङ्क**— ननु 'असत्यं अप्रतिष्ठं ते' इत्यादिकं 'ईश्वरोऽहमहं' इत्यादिकं चाज्ञानविमोहितानां मतं चेत् सम्यज्ज्ञानं कीदृशमित्यत आह— **सर्वभूतेष्विति** ।। 'भू सत्तायां' इति धातोः अस्तित्वात् भूतशब्दवाच्येषु विभक्तेषु श्रीविष्णोः भिन्नेषु परस्परं भिन्नेषु जडेभ्योऽपि भिन्नेषु जीवेषु जडभूतेषु च नियामकत्वेन स्थितमेकं श्रीविष्ण्वाख्यं पदार्थं अविभक्तं स्वावतारेषु भेदरहितं जीवजडेभ्योऽत्यन्तभिन्नं येन ज्ञानेन ईक्षते तज्ज्ञानं सात्त्विकं विद्धि इत्यर्थः। सर्वभूतेषु इत्यादि श्लोकत्रयपर्यालोचनयापि श्रीविष्णोः सर्वोत्तमत्वं जगत्स्रष्टृत्वादिधर्मवैशिष्ट्यं पारमार्थिकमेवोपपन्नमिति सर्वभूतेष्वित्यादेः सम्बन्धः ।। १०४ ।।

**वरद**— नन्वेतदसुरमतं चेत् सात्त्विकमतं कीदृशमित्यत उच्यते— **सर्वभूतेष्विति** ।। विभक्तेषु विष्णुना परस्परं चात्यन्तविलक्षणेषु सर्वेषु विद्यमानेषु जीवजडात्मकेषु पदार्थेषु नियामकत्वेन विद्यमानम् । अविभक्तं स्वगतभेदरहितं अव्ययं भावं पदार्थं ये ज्ञानेन ईक्षन्ते विषयीकुर्वन्ति तज्ज्ञानं सात्त्विकं विद्धीत्यर्थः ।। १०४ ।।

**जना**— स्वगतभेदराहित्ये जडजीवभेदे च प्रमाणमुदाहरति— **सर्वभूतेष्विति** ।। येन ज्ञानेन । **विभक्तेषु** परस्परं जडेभ्यश्च भिन्नेषु । अविभक्तं व्याप्तं । प्रादुर्भावान्तर्यामिरूपेषु अविभक्तं भेदशून्यम् । सर्वभूतेषु जीवेषु जडेषु च भावं विद्यमानमेकं सर्वोत्तममीक्षते पश्यति तज्ज्ञानं सात्त्विकं विद्धि ।। १०४ ।।

**ताम्र**— 'सर्वभूतेषु येनैकं भावमव्ययमीक्षते' इति पञ्चभेदतारतम्यजीवास्वातन्त्र्येश्वरगुणाद्यभेदविषयकज्ञानस्य सात्त्विकत्वेन मोक्षहेतुत्वस्य, 'यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकमिति' जीवैश्वरैक्यनिर्गुणत्वाद्यवगाहिज्ञानस्य तमःसाधनत्वस्य चोक्तेरिदमेव प्रमेयं भारताभिप्रेतमित्याह— **सर्वेति** ।। भवन्ति सर्वदा सन्तीति भूताः जीवाः । तेषु विभक्तेषु जडेश्वराभ्यां परस्परं विभक्तेषु तथा भारतस्य लक्षणविभागवत्सु तथा विभक्तेष्वल्पशक्तिषु जडेषु चाविभक्तं परस्परं भेदतारतम्यरहितं जीवजडापेक्षयात्यन्तभिन्नं च । तेष्वित्यधिकरणत्वोक्त्या तत्सिद्धेः। अव्ययं दुःखविकारादिनाशरहितं एकं सर्वोत्तमं भावं भगवत्स्वरूपं येन ज्ञानेनेक्षते तत्सात्त्विकं विद्धीत्यर्थः। स्पष्टं चैतत् । 'अस्तित्वाद्भूतनामभ्यः सर्वजीवेभ्य एव तु' इत्यादि गीतातात्पर्यनिर्णये ।। १०४ ।।

**भारतश्री**— ननु एतदासुरं मतं चेत् सात्त्विकमतं कीदृशमित्यत उच्यते— **सर्वभूतेष्विति** ।। सर्वभूतेषु विद्यमानं येन ज्ञानेन ईक्षते विषयीकरोति । अविभक्तं स्वगतभेदशून्यम् ।। १०४ ।।

**[2]सर्वगुह्यतमं भूयः श्रृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।। १०५ ।।**

---

१. ब्र.सू. ३-२-११ । २. भ.गी. १८-६४ ।

**जना**— विष्णोः सर्वोत्तमत्वात्सर्वकर्म विष्णुप्रीत्यै एव कार्यमित्यत्र गीतावाक्यामुदाहरति— **सर्वेति** ।। मे सर्वं गुह्यतमं परमं वचः भूयः श्रृणु ।

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणम् ।।'

इत्यनेनोक्तत्वात् भूय इत्युक्तम् । दृढं यथा भवति तथा । मे इष्टोऽसि इति । तत एव तस्मात् कारणात्ते हितं वक्ष्यामि ।। १०५ ।।

**ताम्र**— **'सर्वगुह्यतमम्'** इति साधनसारोपसंहारेऽपि कृष्णोपासनाभक्त्यादीनामेव मोक्षसाधनत्वोक्त्या विवक्षितसिद्धिः।। १०५ ।।

**भारतश्री**— **'सर्वगुह्यतमम्'** इत्यत्रापि विष्णोः सर्वोत्तमत्वं ज्ञायते ।। १०५ ।।

**[१]मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।। १०६ ।।**

**वरद**—**'सर्वगुह्यतमम्'** इत्यत्र ते हितं गुह्यतमं वचो वक्ष्यामि तच्छृण्विति प्रतिज्ञाय तदुच्यते— **मन्मना इति** ।। अत्र मन्मनस्कत्वादिना मत्प्राप्तिरेव भविष्यतीत्युक्त्या विष्णोः सर्वोपास्यत्वसर्वप्राप्यत्वादि महन्माहात्म्यमेवोच्यत इति प्रकृतोपयोगः। एवं ज्ञानं तेऽहमित्याद्युदाहृतगीतावाक्यपर्यालोचनया अशेषभारतस्य भगवदुत्कर्ष एव तात्पर्यमित्यवगम्यत इत्युक्तम् ।। १०६ ।।

**जना**— वक्तव्यमाह— **मन्मना इति** ।। मामुद्दिश्य यजतीति मद्याजी । एष्यसि प्राप्स्यसि । यतः मे प्रियोऽसि । ततस्ते त्वद्विषये सत्यं प्रतिजाने ।। १०६ ।।

**भारतश्री**— सर्वप्राप्यत्वात् मामेवैष्यसीत्यर्थः ।। १०६ ।।

**[२]पञ्चरात्रस्य कृत्स्नस्य [३]वक्ता नारायणः स्वयम् ।
सर्वेष्वेतेषु राजेन्द्र ज्ञानेष्वेतद् विशिष्यते ।। १०७ ।।**

**व्यास**— जनमेजयः

[४]साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् ।।

वैशम्पायनः

---

१. म.गी. १८-६५ । २. म.भा. शान्तिपर्वणि ३५९-६८ । ३. 'महाभारते शान्तिपर्वणि (३५८अ.) पञ्चरात्रोत्पत्तिप्रकारो लोके तत्प्रचारप्रकारश्च सम्यङ्निरूपितः । ४. म.भा. शान्तिपर्वणि ३५९-१ ।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।

वेदारण्यकं वेदपञ्चरात्रादि । ज्ञानेषु शास्त्रेष्वेतत् विशिष्टम् । अप्रमाणं तदन्यत् अवशिष्टमप्रमाण् ।। १०७ ।।

**वादि**— जनमेजयः—

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम् ।।'

ज्ञानानि ज्ञानसाधनत्वात् ज्ञानपदवाच्यानि शास्त्राणि भिन्नानि परस्परविरुद्धार्थप्रतिपादकानीत्यर्थः। अन्यथा स्वरूपभेदस्य स्वतः सिद्धत्वेन प्रश्नायोगात् । वैशम्पायनः।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।'

इति ज्ञानानां परस्परविरुद्धार्थकतामङ्गीकृत्य पञ्चरात्रस्यैवोत्तमतामाह— **पञ्चरात्रस्येति** ।। एतेषु ज्ञानेषु ज्ञान-साधनत्वात् ज्ञानपदवाच्येषु साङ्ख्ययोगपाशुपतवेदारण्यकाख्यशास्त्रेष्वेतत् पञ्चरात्राख्यं शास्त्रं विशिष्यते। वेदपञ्चरात्रयोरेकविधत्वात् ग्रन्थत्रयादिदं शास्त्रमुत्तममित्यर्थः। अत एव वेदारण्यकपदेन पञ्चरात्रमप्युपलक्ष्यते । अन्यथा एतेभ्यो विशिष्यत इत्येव स्यान्न त्वेतेष्विति निर्धारणे सप्तमी। सा हि 'गोषु कृष्णा सम्पन्नक्षीरतमा' इत्यादौ विशेष्यमाणकृष्णाया अपि गोः गोत्वेन गोषु प्रवेशवत् । पञ्चरात्रस्यापि मुख्यतो लक्षणया वा उक्तेषु प्रवेशो सत्येव स्यादिति ज्ञेयम् ।। १०७ ।।

**सङ्क**— इतोऽपि भारतस्य श्रीविष्णोः सर्वगुणपरिपूर्णतापरत्वमेव विज्ञायते । यतः श्रीविष्णोरेव सर्वोत्तमत्वादि-गुणवैशिष्ट्यप्रतिपादकपञ्चरात्रप्रशंसात्मकत्वेन तदर्थस्वीकारात् इत्याह— **पञ्चरात्रस्येति** ।। अयमर्थः। साङ्ख्यस्य शास्त्रस्य वक्ता श्रीविष्णोरन्यः कपिलः। योगशास्त्रस्य वक्ता हिरण्यगर्भः। पाशुपतशास्त्रवक्ता शिव इति पूर्वमुक्त्वानन्तरं पञ्चरात्रस्य वक्ता परो नारायणः इत्याह । नन्वेषु शास्त्रेषु विशिष्टं शास्त्रं किमित्यत आह— **सर्वेष्विति** ।। राजेन्द्रेति जनमेजयं प्रति वैशम्पायनेन सम्बोधनं क्रियते । स्वाभिप्रेतार्थान् ज्ञापयन्तीति ज्ञानशब्दवाच्येष्वेतेषु शास्त्रेष्वेतत्पञ्चरात्राख्यं शास्त्रं विशिष्यते विशिष्टत्वेनावगम्यते ।। १०७ ।।

**वरद**— इदानीं मोक्षधर्मे भगवदेकनिष्ठत्वं पञ्चरात्रप्रशंसाकरणान्यथानुपपत्त्या भारतस्यापि तदेकनिष्ठत्व-मवसीयत इत्यभिप्रेत्य मोक्षधर्मवचनान्युदाहरति— **पञ्चरात्रस्येति** ।।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।' इति ।

अन्यकपिलहिरण्यशिवप्रणीतानां पाशुपतादीनां वेदारण्यकशब्दवाच्यानां वेदपञ्चरात्राद्यशेषसदागमानां च ज्ञानसाधनत्वेन ज्ञानशब्दवाच्यानां भिन्नानीति परस्परविरोधित्वमुक्त्वा 'पञ्चरात्रस्य कृत्स्नस्य' इत्यनेन पञ्चरात्रस्य पाशुपताद्यपेक्षया वैशिष्ट्यलक्षणं प्रामाण्यमुच्यते । तत्र हेतुः पञ्चरात्रस्येति पूर्वार्धेनोच्यते । यस्मादित्युप-

---

१. म.भा. शान्तिपर्वणि ३५९-६४ ।

स्कर्तव्यम् । तस्मादेतेषु सर्वेषु ज्ञानेषु पाशुपतादिषु एतत्पञ्चरात्राख्यं ज्ञानं विशिष्यत इति साध्यं द्वितीयार्धे । अत्र विरोधिस्तुत्येतरनिन्दाप्यर्थतो लभ्यते । राजेन्द्रेति जनमेजयं प्रति वैशम्पायनस्य सम्बोधनम् ।। १०७ ।।

**जना**— इदानीं विष्णोरुत्कर्षे मोक्षधर्मवाक्यं पठति— **पञ्चरात्रेति** ।। जनमेजयेन

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि उताहो नेति वाच्यताम् ।।'

इति **पृष्टे** वैशम्पायनेनोक्तम्—

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।'

इति शास्त्राणां परस्परविरुद्धतार्थमुक्त्वा वेदारण्यकपञ्चरात्रादीन्येकार्थप्रतिपादकत्वेनैकपद्येनानूद्य पञ्चरात्रस्याधिक्ये उक्तेऽर्थादुक्तशास्त्रेभ्यः वेदादिशास्त्रस्योत्तमत्वं सेत्स्यतीत्यभिप्रेत्य वेदारण्यकान्तर्गतपञ्चरात्रस्य वैशिष्ट्यं पञ्चरात्रस्य कृत्स्नस्य इत्यनेनाह । यतः स्वयं नारायणः कृत्स्नस्य पञ्चरात्रस्य वक्ता अतः एतेषु पूर्वोक्तेषु सर्वेषु ज्ञानेषु ज्ञानसाधनेषु शास्त्रेषु एतत्पञ्चरात्रं विशिष्यते । अनेन वेदारण्यकपदेन पञ्चरात्रग्रहणं सूचितम् । पूर्वमकथने एतेष्विति एतदित्यपि असङ्गतं स्यात् । अनेन नारायणाख्याप्तोक्तत्वेन पञ्चरात्रप्रामाण्यकथने तस्य सर्वोत्कर्षः सिद्ध्यतीति भावः ।। १०७ ।।

**ताप्र**— भारतरहस्ये मोक्षधर्मेऽपि भगवदेकनिष्ठपञ्चरात्रस्य प्रशंसाकरणान्यथानुपपत्या भारतस्यापि तदेकनिष्ठतावगम्यते । अन्यथा शिवादिपरपाशुपतादिप्रशंसा क्रियतेति भावेन तद्वाक्यं पठति— **पञ्चरात्रेति** ।।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानन्येतानि भिन्नानि उताहो नेति चोच्यताम् ।।' इति जनमेजयप्रश्ने
'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा ।।'

इति भिन्नमतत्वं प्रदश्र्य विरुद्धानामनेकेषां प्रामाण्यायोगात् किं प्रमाणमिति जिज्ञासायाम्

[1]'साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।।
हिरण्यागर्भो योगस्य वक्ता चैव चतुर्मुखः।
उमापतिः भूतपतिः श्रीकण्ठो ब्रह्मणस्सुतः ।।
उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः।।' इति

साङ्ख्यदीनामनाप्तकृतत्वेनाप्रामाण्यमभिधाय वेदपञ्चरात्रयोरैक्यभिप्रायेण पञ्चरात्रप्रामाण्यसाधनार्थं 'पञ्चरात्रस्य कृत्स्नस्य' इत्येतत्प्राप्तम् । कपिलवन्नारायणोऽप्यन्यो नेति सूचनाय साक्षाद्ग्रन्थप्रतिपाद्य इत्युक्तम् । पञ्चरा त्रेऽपि जीवजननादिभागस्याप्रामाण्यं वारयितुम्— **कृत्स्नस्येति** ।। १०७ ।।

---

१. म.भा. शान्तिपर्वणि ३५९-६५,६७ ।

**[१]ज्ञानेष्वेतेषु राजेन्द्र साङ्ख्यपाशुपतादिषु ।**
**यथायोगं यथान्यायं निष्ठा नारायणः परः ।। १०८ ।।**

**व्यास**— किं तर्हीत्यत आह— **ज्ञानेष्विति** ।। यथायोगं योगवृत्तिमनुसृत्य निष्ठा प्रतिपाद्यः।। १०८ ।।

**वादि**— तर्हि साङ्ख्यादिशास्त्राणि किं सर्वथाप्रमाणानीत्यत आह— **ज्ञानेष्विति** ।। यथायोगं पञ्चरात्रोक्तोपायमनतिक्रम्य यथान्यायं पञ्चरात्रोक्तन्यायमनतिक्रम्य क्वचित् क्वचित् नारायणः पर इति प्रतिपादने 'निष्ठोत्कर्षे व्यवस्थायां' इत्यनुशासनात्तस्मिन्नंशे निष्ठा उत्कर्षः प्रामाण्यमिति यावत् । अस्तीति योजना । तेषु शास्त्रेषु प्रकृतिज्ञानात् प्राणायामादिना श्वासनिरोधात् पशुपतिज्ञानाद्वा मोक्ष इति प्रायशः प्रतिपाद्यते । अन्यथा उक्तज्ञानभेदायोगात् । पञ्चरात्रन्यायमनुसृत्य क्वचित्क्वचिद्भागे भक्त्या वा हरिभक्तानामपि स्वग्रन्थे रुच्युत्पादनाय वा भगवन्माहात्म्यमुच्यते । तदा तस्यांशस्य प्रामाण्यमङ्गीक्रियत इति भावः ।। १०८ ।।

**सङ्क**— नन्वेवं पञ्चरात्रस्य वैशिष्ट्ये साङ्ख्ययोगपाशुपतेषु शास्त्रेषु किमुपादेयमस्तीत्यत आह— **ज्ञानेष्विति** ।। यथायोगं सर्वशब्दानां ब्रह्मणि योगवृत्या यथान्यायं यथा विष्णौ तात्पर्योपपत्त्या च एतेषु साङ्ख्ययोग-पाशुपतादिशास्त्रेषु नारायणः पुनः सर्वोत्तम इति निष्ठा पर्यवसितिः।। १०८ ।।

**वरद**— नन्वेवं पञ्चरात्रस्यैव वैशिष्ट्ये साङ्ख्यादीनां अप्रामाण्ये च साङ्ख्याद्युक्तं किमप्युपादेयं न स्यात् । न चैवं वक्तुं शक्यं साङ्ख्यादिष्वपि प्रदेशविशेषेषु विष्णूत्कर्षस्य प्रतीयमानत्वादित्यत आह— **ज्ञानेष्वेतेष्विति** ।। 'एषां यत्र विरोधि स्यात्तत्रोक्तं तत्र वार्यते ।' 'अन्यशास्त्रेषु परमो विष्णुरुच्यते' इति पूर्वाध्यायोदाहृतवाक्यबलात् साङ्ख्यादिष्वपि योंऽशो विष्णौ योजयितुं शक्यते यश्चोपक्रमादिन्यायोपेतः तत्र नारायण एव पर इति तदंशस्य नारायणस्यैव सर्वोत्कृष्टत्वेन निर्णये पर्यवसानमित्यर्थः। यद्वा अयोग्यजनमोहनाय प्रणीतानामेषां तन्मात्रे पर्यवसानात् भगवदुत्कर्षविरोधित्वमेव नास्तीत्यर्थः। तत्वज्ञानयोग्येषु विपरीतज्ञानाजनकत्वेन तत्त्वमेव गृहीतमिति भगवन्माहात्म्यमेव प्रकटितं स्यादिति भावः।। १०८ ।।

**जना**— तर्हि तानि सर्वदानुपादेयानि किमित्यत आह— **ज्ञानेष्विति** ।। आदिपदेन योगो ग्राह्यः। तद्गुणसंविज्ञान-बहुव्रीहिणा बहुवचनम् । अक्षपादोक्ततर्कपूर्वमीमांसाशाक्तसौरगाणपत्याद्यनुवादपूर्वकं वादिपदम् । एतेषु ज्ञानेषु शास्त्रेषु यथायोगं योगमनतिक्रम्य यथान्यायमुपक्रमादिन्यायैरपि नारायणः पर उत्कृष्ट इति निष्ठा व्यवस्था भवति । 'निष्ठोत्कर्षे व्यवस्थायाम्' इत्यभिधानम् । न्यायैः योगेन च तेषामपि विष्णुपरता ज्ञेयेति भावः।। १०८ ।।

**ताम्र**— ननु भगवत्कृतत्वात् तत्परत्वाच्चेतरेभ्यः पञ्चरात्रस्यातिशय इति वक्तव्यम् । तदयुक्तम् । भगवत्कृतत्वस्य बौद्धादिषु व्यभिचारात् भगवत्परत्वस्य पाशुपतादावपि भावात् । अन्यथान्यशास्त्रेषु परमो विष्णुरुच्यत इत्यादिविरोधादित्यत आह— **ज्ञानेष्विति** ।। यथायोगं रुद्रादिपदानां भगवति योगवृत्तिमनतिक्रम्य यथान्यायं उपक्रमादितात्पर्यलिङ्गमनतिक्रम्य नारायणः परः इति निष्ठा पर्यवसानम् ।। १०८ ।।

---

१. म.भा. शान्तिपर्वणि ३५९-६९ ।

**भारतश्री**— इदानीं मोक्षधर्मे भगवदेकनिष्ठपञ्चरात्रप्रशंसाकरणान्यथानुपपत्त्या भारतस्यापि तदेकनिष्ठत्वं अवसीयते इत्यभिप्रेत्य मोक्षधर्मवचनानि उदाहरति । ज्ञानेषु ज्ञानसाधनेषु । यथायोगम् । योंऽशः विष्णौ नियोजयितुं शक्यते । यः सोपक्रमादिन्यायोपेतः तत्र नारायण एव परो निष्ठा तदंशस्य नारायण एव प्रतिपाद्यः ।। १०८ ।।

**[१]पञ्चरात्रविदो मुख्या यथाक्रमपरा नृप ।**
**एकान्तभावोपगता वासुदेवं विशन्ति ते ।। १०९ ।।**

**सङ्क**— एवमपि पञ्चरात्रविदामेव वैशिष्ट्यमस्तीत्याह— **पञ्चरात्रविद इति** ।। पञ्चरात्रविदो यथाक्रमपरा यथोक्तदेवतातारतम्यक्रमपरा एकान्तभावोपगता एक एव विष्णुः सर्वोत्तम इति भावं भक्तिं उपगता अत एव मुख्यास्ते वासुदेवं विशन्तीति ।। १०९ ।।

**वरद**— पञ्चरात्रस्यैव वैशिष्ट्ये हेतुमाह— **पञ्चरात्रविद इति** ।। यथाक्रमपरदेवतातारतम्ये तात्पर्यवन्तः एकान्तभावेनाव्यभिचरितभक्त्योपगता अत एव मुख्या भवन्तीत्यर्थः। माहात्म्यज्ञानपूर्वकं दृढस्नेहजननद्वारा मोक्षहेतुत्वात्पञ्चरात्रस्य वैशिष्ट्यमिति भावः।। १०९ ।।

**जना**— इदानीं पञ्चरात्रविदां मोक्षकथनात्तस्योत्तमत्वमित्याह— **पञ्चरात्रेति** ।। यथाक्रमपराः देवता तारतम्यासक्ताः। एक एवान्तः सर्वोत्तम इति भावं भक्तिमुपगताः प्राप्ताः। एकान्तोऽव्यभिचरितः भावो भक्तिस्तमुपगता इति वा । अतः मुख्याः श्रेष्ठास्ते पञ्चरात्रविदः वासुदेवं विशन्ति मुक्तिं प्राप्नुवन्तीत्यर्थः ।। १०९ ।।

**ताम्र**— पञ्चरात्रविदस्तु मुख्याः कुतः यथाक्रमपराः यथोक्तदेवतातारतम्यक्रमपराः। एक एव विष्णुः अन्ते काष्ठे अतिभक्तिमुपगताः वासुदेवं विशन्तीति यत इति । पाशुपतादिषु कुत्रचिदेव भगवदुत्कर्ष उच्यते । पञ्चरात्रे तु देवतातारतम्यपूर्वं भक्त्यर्थं च भगवन्महिमा प्रतिपदं स्पष्टमुच्यत इत्याशयः। मोक्षधर्मवचनार्थस्तु । [२]"ज्ञापयन्तीति ज्ञानानि । 'परमर्षि स उच्यते' न तु परमर्षिः परमज्ञानी । प्राचीना ब्रह्मादयो यस्य गर्भाः स प्राचीनगर्भः तं प्राचीनगर्भं केचिदज्ञाः प्रवदन्ति । यद्यपि मिथ्यावचनं व्यग्रताहेतुरस्ति । तथापि परमाज्ञया मोहनार्थमुक्तवान् । साङ्ख्यपाशुपताभ्यां योगो विशिष्यते । वक्तृनिर्दोषत्वसूचनात् । न च तत्र विष्णोरुत्तमत्वनिषेधः यथायोगं सर्वशब्दानां ब्रह्मणि योगवृत्त्या । यथान्यायं यथा विष्णावेव तात्पर्योपपत्तिः। निस्संशयेषु यथा निश्चितार्थेषु । हेतुबलात् हेतुमात्रबलात् । यथाक्रमपराः अथोक्तदेवतातारतम्यक्रमपरा" इति तत्त्वप्रदीपे स्पष्टः।। १०९ ।।

**भारतश्री**— पञ्चरात्रस्य मुख्यत्वे हेतुमाह— **पञ्चरात्रविद** इति ।। १०९ ।।

**जनमेजय उवाच—**
**[३]बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
**को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।। ११० ।।**

---

१. म.भा. शान्तिपर्वणि ३५९-७२ । २. तत्त्वप्रदीपः १-१-३ । ३. म.भा. शान्तिपर्वणि ३६०-१ ।

**व्यास**— भेदवाक्यमनुसृत्य बहवः पुरुषाः उताहो ऐक्यमनुसृत्य एकश्चेतनः। नैकश्चेतनः बहूपप्लवप्रसङ्गात् अतश्चेतनाः बहवः ऐक्यवाक्यं तु प्रधानविवक्षया प्रवृत्तमिति निश्चित्यात्र चेतनेषु पुरुषश्रेष्ठः कः कथं श्रेष्ठ इति पृच्छति— **बहव इति** ।। ११० ।।

**सङ्क**— इतोऽपि जगतो असत्यत्वाप्रतिष्ठत्वानीश्वरत्वाभावेन श्रीविष्णोः सर्वोत्तमत्वजगत्स्रष्टृत्वादिधर्मवैशिष्ट्यं वास्तवमेवाङ्गीकार्यं यतः जनमेजयंवैशम्पायनप्रश्नप्रतिवचनाभ्यां तथा निर्णीतत्वादित्याह— **बहव इति** ।। हे ब्रह्मन् पुरुषा बहवो भिन्नाः सन्ति आहोस्वित् परमार्थत एक एव पुरुषः ततोऽन्यो न विद्यते इति विकल्पम् । जनमेजयः सर्वैक्यपक्षमसहमानः पुनरेवाह— **को हीति** ।। ११० ।।

**वरद**— भारतस्थवाक्यान्तरपर्यालोचनयापि अशेषभारतस्य विष्णोः सर्वोत्तमत्वे तात्पर्यमवसीयत इत्यभिप्रेत्य वाक्यान्तराण्युदाहरति— **बहवः पुरुषा इत्यादिना** ।। तत्र वैशम्पायनं प्रति जनमेजयस्य प्रश्नः हे ब्रह्मन् वैशम्पायन पुरुषा आत्मानः किं बहवो भिन्ना उत आहो एक एव आत्मेति तत्रैकात्म्यमतं अप्रामाणिकमनुभवविरुद्धं चेति । द्वितीयपक्षं स्वयमेव परिहृत्य प्रामाणिकत्वादाद्यमङ्गीकृत्य तत्रापि जनमेजयः पृच्छति— **को हीति** ।। अत्र बहुषु पुरुषेषु अङ्गीक्रियमाणेष्वपि कः पुरुषः श्रेष्ठः तं श्रेष्ठपुरुषं विविच्य भवान् वक्तुमर्हतीति ।। ११० ।।

**जना**— उत्तमत्वे प्रमाणान्तरमाह— **जनमेजय इति** ।। ब्रह्मन् किं पुरुषाः बहवः उत एक एव च । अत्र बहुत्वे श्रेष्ठः पुरुषः कस्तं भवान् वक्तुमर्हति ।। ११० ।।

**ताम्र**— मोक्षधर्मे विवादपूर्वं विष्णूत्कर्षार्थं भेदगुणपूर्णत्वादीनां निर्णीतत्वात् तत्रैव भारततात्पर्यमिति भावेनोदाहरति— **बहव इति** ।। 'द्वा सुपर्णा' इत्यादिभेदवाक्यमनुसृत्य बहवः पुरुषा उतैकमेतं वक्तुं अर्हसि ।। ११० ।।

**भारतश्री**— तथा भारते जनमेजयवैशम्पायनप्रश्नपरिहाराभ्यां अशेषभारतस्य विष्णोः सर्वोत्तमत्वे तात्पर्यं अवसीयते इत्यभिप्रेत्य तद्वाक्यं पठति— **जनमेजय** इत्यादिना ।। पुरुषाः आत्मानः । बहवः भिन्ना उत आहो एक एव आत्मा इति । तत्र ऐकात्म्यमतमप्रामाणिकमिति द्वितीयपक्षं स्वयमेव परिहृत्य प्रामाणिकत्वात् आद्यपक्षमङ्गीकृत्य तत्रापि जनमेजयः पृच्छति— **को हि** इति ।। अत्र बहुषु पुरुषेषु अङ्गीक्रियमाणेषु कः पुरुषः श्रेष्ठः तं पुरुषश्रेष्ठम् ।। ११० ।।

**[१]वैशम्पायन उवाच—**
**नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
**बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।**
**तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।। १११ ।।**

---

१. म.भा. शान्तिपर्वणि ३६०-३ ।

**व्यास**— एकं पुरुषं वदन्तीत्येतद्विद्वांसो नेच्छन्ति किं तु बहवः पुरुषाः इति बहूनां पुरुषाणां एका योनिः मुख्यं कारणमुच्यते शास्त्रे तथा विश्वं पूर्णं गुणाधिकं पुरुषमाह ब्रह्मेति ।। १११ ।।

**वादि**— 'बहवः पुरुषा ब्रह्मन्' इति श्लोकद्वयं प्राचीनाध्याये व्याख्यातम् ।। १११ ।।

**सङ्क**— जनमेजयेनोपेक्षितविकल्पस्यापि परिहारं लोके ख्यापनाय वदन्वैशम्पायनः कोऽहीति प्रश्नस्य परिहारमाह— **नैतदिच्छन्तीति**।। भो कुरुकुलोद्वह परमार्थत एकं पुरुषमिच्छन्ति ततो व्यतिरिक्तं नेच्छन्ति केचित्तु वादिन इति च तदेतदुपपन्नं न भवति किं तर्हि परमार्थतो बहवः पुरुषाः सन्ति तेषां बहूनां पुरुषाणां यथैका योनिः एक एव पुरुषः कारणं भवति तथा सर्वगुणाधिकं तं पुरुषमारभ्य व्याख्यास्यामीत्यर्थः ।। १११ ।।

**वरद**— एवं पृष्टवन्तं राजानं प्रति वैशम्पायनः परिहारं वदिष्यन् राज्ञानङ्गीकारे प्रामाणिकसंमतिं दर्शयति — **नैतदिच्छन्तीति** ।। एकमेव पुरुषमिच्छन्तीति यत्तदेतन्न युक्तमित्यर्थः। यद्वा प्रामाणिका एव एतत् द्वितीयपक्षोक्तं नेच्छन्ति नाङ्गीकुर्वन्ति । एतदिति सामान्यतः परामृष्टं विशिष्य दर्शयति— **पुरुषमेकमिति** ।। एक एवात्मेत्येतन्मतं प्रामाणिकाः नाङ्गीकुर्वन्तीति भावः। किं तर्हि बहवः पुरुषाः सन्ति तेषां बहूनां पुरुषाणां यथैका योनिरेक एव पुरुषः कारणं भवति । तथा तं सर्वगुणाधिकं पुरुषमाख्यास्यामीत्याह— **बहूनां पुरुषाणामिति** ।। १११ ।।

**जना**— इति जनमेजयेन पृष्टः वैशम्पायनो वदति— **नैतदिति** ।। द्वितीयपक्षं दूषयति— **वैशम्पायन इति**।। एकं पुरुषमित्येतन्नेच्छन्ति । प्रथमपक्षे पृष्टस्योत्तरमाह— **बहूनामिति** ।। योनिरुत्पत्तिकारणं यथैको-च्यते । तथा तं सर्वोत्पत्तिकारणं विश्वं पूर्णं गुणाधिकं पुरुषं विष्णुमाख्यास्यामि । अत्र प्रश्नपूर्वकं पृष्ट्वा-दुक्तं जगत्कारणत्वं पूर्णत्वं सर्वोत्तमत्वं यथार्थमिति भावः ।। १११ ।।

**ताम्र**— एतत् एतस्मिन् जगति । किन्तु बहवः। तेषां बहूनां पुरुषाणां या योनिः यः कारणभूतः श्रेष्ठः। यथा च श्रेष्ठः तं पुरुषं तथाख्यास्यामि । विश्वं व्याप्तम् ।। १११ ।।

**भारतश्री**— द्वितीयपक्षस्य राज्ञा अनङ्गीकारे प्रामाणिकसंमतिं दर्शयति— **नैतदिति** ।। प्रामाणिका इति शेषः । योनिः कारणम् ।। १११ ।।

**[१]आह ब्रह्मैतमेवार्थं महादेवाय पृच्छते ।**
**तस्यैकस्य ममत्वं हि स चैकः पुरुषो विराट् ।। ११२ ।।**

**वादि**— **तस्यैकस्य ममत्वं हीत्यत्र** सकलं जगत् मम वशे वर्तत इत्याकारेण यद्वशित्वापरपर्यायं ममत्वं न तु रागबद्धपुरुषस्य स्वावशेऽपि देहगेहादाविव ममत्वं तस्यैकस्यैव न त्वन्यस्य तद्वशित्वरूपैश्वर्यस्या-न्यत्राभावादिति भावः। वशीकरणशक्तिर्हि वशित्वम् ।। ११२ ।।

---

१. म.भा. शान्तिपर्वणि ३६१-९ ।

**सङ्क—** ननु यदेतद्विष्णोः सम्पूर्णमाहात्म्यमुक्तं तद्विष्णोरन्येषां ब्रह्मादीनामस्ति चेत् विष्णोः वैशिष्ट्याभावेनोक्तं सर्वमनुपपन्नमेवेत्याशङ्क्यां सविस्तरं परिहरति— **आह ब्रह्मेत्यादिना** ।। अहं एक एव स्वतन्त्रो मदधीनत्वेन मदीयं इदं सर्वमिति तस्यैकस्य श्रीविष्णोर्ममत्वमित्यर्थः।। ११२ ।।

**वरद—** किञ्च परमाप्तेन ब्रह्मणा शिवायायमेवार्थो उक्तस्ततोऽर्थसमाख्ययापि भारतस्य तत्रैव तात्पर्यमवसीयत इत्याह— **आहेति** ।। इममेवार्थं पृच्छते महादेवाय ब्रह्मा चतुर्मुख एतमेवार्थमाह । तमेवार्थं दर्शयति— **तस्येति** ।। तस्य विष्णोरेकस्यैव ममत्वमहमेकः स्वतन्त्र इतरत् सर्वं विश्वं मम मदीयमिति ममत्वं विद्यते नान्यस्य अस्वतन्त्रत्वादित्यर्थः। तस्यैकस्यैव ममत्वं कुत इत्यत आह— **स चैक इति** ।। स एक एव पुरुषः पूर्णषड्गुण अत एव स्वतन्त्रो यस्मादित्यर्थः ।। ११२ ।।

**जना—** ब्रह्मरुद्रयोरितिहासेनाप्युक्तमत्वं हरेः साधयति— **आहेति** ।। एकस्य तस्य ममत्वं मदीयमिति बुद्धिर्हि स चैकः पुरुषः विराट् विशेषेण राजत इति विराट् सर्वोत्तमः।। ११२ ।।

**ताम्र—** ममत्वं ममेदं जगदिति भावः। विराट् स्वतन्त्रः।। ११२ ।।

**[१]अहं ब्रह्मा चाद्य ईशः प्रजानां**
**तस्माज्जातस्त्वं च मत्तः प्रसूतः ।**
**मत्तो जगत् स्थावरं जङ्गमं च**
**सर्वे वेदाः सरहस्याश्च पुत्र ।। ११३ ।।**

**वादि— अहं ब्रह्मा चेत्यत्र** प्रजानामीशो आद्यो ब्रह्मा ब्रह्मपदवाच्यः, अहं तस्माज्जात इति योजना ।। ११३ ।।

**सङ्क—** ब्रह्मनामकोऽहमपि तस्माद्विष्णोर्जात इत्यर्थः।। ११३ ।।

**वरद—** न केवलमेतावत् किन्तु ब्रह्मा ब्रह्मनामकः प्रजानामाद्य ईशश्चाहं तस्माद्विष्णोः जात उत्पन्नः। ननु विष्णोस्त्वं जात इत्येतावता किं विष्णोर्महत्वमागतमित्यत उक्तम्— **त्वं चेति** ।। न केवलं त्वं प्रसूतः किन्तु स्थावरजङ्गमात्मकं जगत्सरहस्या सर्वे वेदाश्च मत्त एव प्रसूता इत्यर्थः। पुत्रेति ब्रह्मकृतसम्बोधनं महादेवं प्रति ।। ११३ ।।

**जना—** ब्रह्मा ब्रह्मनामकः प्रजानामाद्य ईशश्चाहं तस्माद्धरेर्जातः मत्तश्च त्वं प्रसूत उत्पन्नः। मत्तः स्थावरजङ्गमं जगच्च प्रसूतम् । हे पुत्र सरहस्याः सोपनिषदः सर्वे वेदाश्चोत्पन्नाः।। ११३ ।।

---

१. म.भा. शान्तिपर्वणि ३६१-२०,२१ ।

**तथैव भीमवचनं धर्मजं प्रत्युदीरितम् ।**
**ब्रह्मेशानादिभिः सर्वैः समेतैर्यद्गुणांशकः ।।**
**नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ।। ११४ ।।**

**व्यास**— तथैव भीमवचनमित्यादिस्ववाक्यमुदाह्रीयमाणं वक्तृश्रोतृप्रतीतिनिवृत्त्यर्थम् (श्रोत्रन्यथा-प्रतीतिनिवृत्त्यर्थमिति पाठेन भाव्यम्)।। ११४ ।।

**सङ्क**— एतावानेव इत्यवसाययितुं न शक्य इत्यर्थः। एवं श्रीविष्णोर्ब्रह्मादिस्रष्टृत्वोक्ते ब्रह्मादिभिरगणितगुण-गणत्वोक्तेः ब्रह्माद्याश्रयत्वोक्तेश्चोक्तं वैशिष्ट्यं श्रीविष्णोरेवोपपन्नमिति भावः।। ११४ ।।

**वरद**— तथैतदर्थप्रतिपादकं भीमवचनं विष्णोः सर्वोत्तमत्वे प्रमाणमस्तीत्याह— **तथैवेति** ।। तदेव वचनं दर्शयति— **ब्रह्मेति** ।। सर्वदा समवेतैर्व्याचक्षाणैः समेत्य मिलित्वा व्याकुर्वद्भिर्ब्रह्मादिभिः यद्गुणांशकः यस्य कृष्णस्य गुणैकदेशोऽवसाययितुं एतावानिति निश्चाययितुं न शक्य इत्यर्थः ।। ११४ ।।

**जना**— ब्रह्माद्यवेद्यत्वे तदाश्रयत्वे वचनं पठति— **तथेति** ।। सर्वदा व्याचक्षणैर्व्याख्यानं कुर्वद्भिः समेतैर्युक्तैः ब्रह्मेशानादिभिर्देवैः यस्य हरेर्गुणांशकः गुणैकदेशः अवसाययितुं समापयितुं न शक्यः।। ११४ ।।

**ताम्र**— यद्गुणांशको नावसाययितुं शक्यः ।। ११४ ।।

**स एष भगवान् कृष्णो नैव केवलमानुषः ।**
**[१]यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।। ११५ ।।**

**अभिनव**— स एष इत्यस्ति । तस्यार्थः स भगवान् कृष्णः एषः प्रसिद्धः मानुषः दुष्टमानुष इति यावत् । नैव किन्तु केवलमानुषः शुद्धमानुषः निर्दुष्टमानुष एवेति । एतेन भगवतः शुद्धमानुषत्वस्य वक्तव्यत्वात् केवलमानुषो नैवेति शुद्धमानुषत्वाभावकथनमयुक्तमिति दूषणं निरस्तम् ।। ११५ ।।

**वरद**— स एव कृष्णो भगवान् केवलं मानुषो मनुष्यमात्रं न भवतीत्यर्थः। अनेन ब्रह्माद्यविदितानन्त-गुणत्वमप्राकृतविग्रहत्वादिकं च महत्वमस्तीत्युक्तं भवति । तथास्य कृष्णस्य ब्रह्माद्युत्पादकत्वमप्यस्तीत्याह— **यस्येति** ।। यस्य कृष्णस्य प्रसादजः प्रसादाज्जातो ब्रह्मा रुद्रश्च क्रोधसम्भवः क्रोधात् सम्भवः उत्पत्तिः यस्यासौ तथोक्तः।। ११५ ।।

**जना**— यद्गुणलेशं व्याख्यातुं अशक्ताः स एव भगवान् कृष्णः केवलं मनुष्यो न शुद्धमनुष्यो न । अपि तु मनुष्यसदृशः। पुनः स कः । यस्य प्रसादतः ब्रह्मा । रुद्रश्च क्रोधात् सम्भवो यस्येति ।। ११५ ।।

---

१. म.भा. शान्तिपर्वणि ३५०-१२ ।

**ताम्र—** 'यस्य प्रसादजो ब्रह्मा' 'स एष भगवान् कृष्ण' इति पूर्वोत्तरयच्छब्दाभ्यां मध्यगततच्छब्दस्य सम्बन्धः ।। ११५ ।।

**वचनं चैव कृष्णस्य ज्येष्ठं कुन्तीसुतं प्रति ।**
**[1]रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**
**ब्रह्मा मामाश्रितो नित्यं नाहं [2]कश्चिदुपाश्रितः ।। ११६ ।।**

**वरद—** एवं भगवता श्रीकृष्णेनापि स्वयं ब्रह्माद्याधारत्वे सति अनन्याधारत्वमुक्तमस्तीति प्रतिज्ञाय तद्वाक्यमुदाहरति— **वचनं चेत्यादिना** ।। देवा इन्द्राद्याः स्पष्टोऽर्थः ।। ११६ ।।

**जना—** ब्रह्मादिसर्वमुक्ताश्रयत्वे वचनं पठति— **वचनमिति** ।। कुन्तीसुतं प्रति अस्तीति शेषः। कश्चित् पुरुषम् ।। ११६ ।।

**यथाश्रितानि ज्योतींषि ज्योतिःश्रेष्ठं दिवाकरम् ।**
**एवं मुक्तगणाः सर्वे वासुदेवमुपाश्रिताः ।। ११७ ।।**

**वरद—** ननु संसारे भेदसद्भावेन ब्रह्माद्याधारत्वेऽपि मुक्तौ भेदाभावात् न तदाधारत्वमित्याशङ्क्य तत्रापि ब्रह्मादिमुक्तगणानां भगवानेव आधार इति सदृष्टान्तमाह— **यथेति** ।। ११७ ।।

**जना—** संसारिषु अभावेऽपि मुक्तेषु स्यादाश्रय इत्यत आह— **यथेति** ।। ११७ ।।

**भविष्यत्पर्वगं चापि वचो व्यासस्य सादरम् ।**
**वासुदेवस्य महिमा भारते निर्णयोदितः ।। ११८ ।।**

**सङ्क—** 'तस्मात् समस्ता हरिसद्गुणानाम्' इति यदुक्तं तन्मुख्यत एव भविष्यत्पर्वणि व्यासेन सादरमुक्तमिति पूर्वोक्तं सर्वं पारमार्थिकमेवेति दार्ढ्याय पुनराह— **भविष्यत्पर्वगमिति** ।। ११८ ।।

**वरद—** तथा भविष्यत्पर्वण्यपि व्यासस्य सतात्पर्यं विष्णोः सर्वोत्तमत्वप्रतिपादकं वचनमस्त्यतोऽशेषभारतस्य तत्रैव तात्पर्यमवगम्यत इत्याह— **भविष्यदित्यादिना** ।। यस्मान्मया वासुदेवस्य महिमा महत्वं सर्वोत्कृष्टत्वमिति यावत्। भारते निर्णयेनोदितः।। ११८ ।।

**जना—** भारतस्य सर्वनिर्णायकत्वे भविष्यत्पर्ववचनस्योदाहृतत्वेऽपि पुनरादरार्थं स्थानान्तरस्थं व्यासवाक्य-मनुवदति— **भविष्यदिति** ।। सादरं सतात्पर्यं यथा भवति तथास्ति । मया निर्णयेन उदितः प्रोक्तः।। ११८ ।।

---

१. म.भा.आश्वमेधिकपर्वणि ११८-३७ । २. 'किश्चित्' इति पाठान्तरम् ।

**तदर्थास्तु कथाः सर्वा नान्यार्थं वैष्णवं यशः ।**
**तत्प्रतीपं तु यद् दृश्येन्न तन्मम मनीषितम् ।। ११९ ।।**

**व्यास**— कथं भगवन्महिमा निर्णयोदितः । कथानामुक्तत्वादित्यत आह— **तदर्था इति** ।। यथा भगवन्महिमार्थ अन्या कथाः तथा किं भगवद्यशोवर्णनमपीत्यत आह— **नेति** ।। ननु भारते भगवन्महिमा विरुद्धमुच्यते तत्कथं भारते निर्णयोदित इत्युक्तिरित्यत आह— **तदिति** ।। ११९ ।।

**वादि**— **तदर्थास्तु कथाः सर्वा** इत्यत्र सर्वाः कथाः राजसूयवनवासयुद्धादिवर्णनकथाः तदर्थाः वासुदेवमहिमानिर्णयाय कथिता । विष्णौ भक्तिभरितत्वात्पाण्डवैः राजसूययागः कृतः वनवासे युद्धे च सर्वे शत्रवः पराजिताः धर्मेण राज्यं कृतमित्यादिकथावर्णने विष्णोरेव महिमा निर्णीतो भवतीति भावः। वैष्णवं विष्णुसम्बन्धियशः। विष्णुमहिमोत्कीर्तनमिति यावत् । अन्यार्थं नेति योजना । तत्प्रतीपं विष्णुमहिमप्रतीपं यद्वचनं क्वचित् दृश्येत् तत् मम मनीषितं न मया मनःपूर्वकमुक्तं न, किन्तु परदर्शनस्था एवं वदन्तीति दर्शन-भाषया परमतानुवाद एव कृतः न तु तन्मम मतमिति व्यासः स्वाभिसन्धिं स्वयमेवोद्घाटितवानित्यर्थः ।। ११९ ।।

**सङ्क**— ननु तर्ह्यन्यविषया कथा किमर्थमुच्यत इत्यत आह— **तदर्था इति** ।। श्रीविष्णोः सर्वोत्तमत्वादि-गुणवैशिष्ट्यसिद्ध्यर्थमेवान्येषां वैशिष्ट्यकथा उच्यन्ते इत्यर्थः। नन्वन्यवैशिष्ट्यकथनं विष्णुवैशिष्ट्यसिद्ध्यर्थश्चेत् विष्णुवैशिष्ट्यकथनं अन्यवैशिष्ट्यसिद्ध्यर्थं किं न स्यादित्यत आह— **नान्यार्थमिति** ।। ननु मुख्यत एवान्येषां हरेः सकाशादप्युत्तमत्वकथनात् विष्णुवैशिष्ट्यसिद्ध्यर्थं अन्यवैशिष्ट्यकथनं कथं सिद्ध्यतीत्यत आह— **तत्प्रतीपमिति** ।। ११९ ।।

**वरद**— यस्माच्चान्यकथाः सर्वाः तदर्थाः भगवन्महिमार्थाः वैष्णवं तु यशो नान्यार्थं किन्तु स्वप्रधानमेव । तस्मात्तत्प्रतीपं तस्य विष्णुसर्वोत्कृष्टत्वस्य यत्प्रतीपं विरुद्धं दृश्येत् आपाततो प्रतीत्यावगतं तन्मनीषितं अभिप्रेतं न भवेत् । भाषाद्यपरिज्ञानापराधेन आपाततः प्रतीयमानोप्यर्थो न मदभिप्रायविषय इत्यर्थः ।। ११९ ।।

**जना**— ननु तर्ह्यन्यविषयाः कथाः किमर्थमुच्यन्त इत्यत आह— **तदर्था इति** ।। सर्वाः कथाः पाण्डवादिकथास्तु अपि तदर्थाः स उत्कर्ष एवार्थः प्रयोजनं यासां ताः। एवं विष्णूत्कर्षकथनमपि अन्योत्कर्षार्थं किं न स्यादित्यत आह— **नेति** ।। साक्षाद्विरोधदर्शनात् कथमित्यत आह— **तदिति** ।। तस्य विष्णूत्कर्षस्य प्रतीपं विरुद्धं यत् दृश्येत्तन्मम मनीषितं संमतं न ।। ११९ ।।

**ताम्र**— कथं भगवन्महिमा निर्णयोदितः। कथानामुक्तत्वादित्यत आह— **तदर्था इति** ।। 'चरितं वैष्णवाणां तु विष्णूद्रेकाय कथ्यते' इति वक्ष्याम इति भावः। वैपरीत्यं किं न स्यादित्यत आह— **नान्येति** ।। ननु भारते भगवन्महिमाविरुद्धमप्युच्यते तत्कथं भारते निर्णयोदित इत्यत आह— **तत्प्रतीपमिति** ।। ११९ ।।

**भाषास्तु त्रिविधास्तत्र मया वै सम्प्रदर्शिताः ।**
**उक्तो यो महिमा विष्णोः स तूक्तो हि समाधिना ।। १२० ।।**

**व्यास**— कथं तत्तव न मनीषितमित्यतः निषेधार्थं दर्शनभाषयोक्तमिति भावेन भाषात्रैविध्यमाह— **भाषा इति** ।। १२० ।।

**वादि**— भाषास्त्रिविधाः। समाधिगुह्यदर्शनभाषाभेदेन त्रिविधाः। तत्र समाधिभाषां दर्शयति— **उक्त इति**।। यो विष्णोर्महिमा उक्तः स्पष्टमुक्तः स तु समाधिना उक्तः। समाहितमनसा चित्तैकाग्रतया कथितत्वात् यथा 'नास्ति नारायणसमम्' 'रुद्रं समांश्रिता देवाः' 'सत्यं सत्यं पुनः सत्यं' इत्यादिकम् ।। १२० ।।

**सङ्क**— ननु सर्वस्मादप्यन्येषां वैशिष्ट्यं श्रीविष्णुवैशिष्ट्यप्रतीपं मनीषितं न भवतीति कथं निश्चीयते इत्यत आह— **भाषा इति** ।। ननु कास्ताः भाषाः किं लक्षणकाश्चेत्यत आह— **उक्त इति** ।। यो विष्णोर्महिमोक्तः स तु समाधिभाषयोक्त इति विष्णोरेव महिमाप्रतिपादकत्वं समाधिभाषालक्षणमिति ज्ञातव्यम् ।। १२० ।।

**वरद**— ननु तत्र प्रतीपदर्शनमेव कथं स्यादित्यत आह— **भाषा इति** ।। भाषात्रयेण मया भारतं प्रवर्तितं तत्र भाषापरिज्ञानाभावे आपाततः अन्यथाप्रतीतिसम्भवादिति भावः। तत्र कया भाषया किमुक्तमिति दर्शयिष्यन् भाषात्रयस्वरूपं निर्धारयति— **उक्त इति** ।। यो विष्णोः महिमा सर्वोत्कर्षः सुष्ठु समाधिभाषयोक्त इति ज्ञातव्यमित्यर्थः। अनेन विष्णुमहिमाप्रतिपादकभाषा समाधिभाषेत्युक्तं भवति ।। १२० ।।

**जना**— तव संमतं न चेत्तर्हि कथं कथितमित्यतः भाषात्रयेण भारतकथनान्न सोऽर्थ इत्याह— **भाषा इति** ।। मया व्यासेन त्रिभाषाभिः कथनेऽपि स्फुटमुक्तस्य का गतिरित्यतः भाषाविवेचनेन तद्गतिमाह— **उक्त इति** ।। विष्णोर्यो महिमोक्तः स तु समाधिना समाधिभाषयोक्तः।। १२० ।।

**ताम्र**— तर्हि पाशुपतादिवदप्रमाणं स्यादित्यतस्तन्मोहनार्थं कृतं इदं तु भाषाभेदेन प्रवृत्तमित्याह— **भाषा इति** ।। त्रय इत्यनुक्त्वा त्रिधेत्युक्तिरवान्तरबाहुविध्यद्योतनार्था। कया भाषया किमुक्तमित्यतस्तद्वदन् भाषालक्षणं सूचयति— **उक्त इति** ।। स्पष्टं 'विष्णुः परमः' इत्यादिरूपेण भगवन्महिमापरा समाधिभाषेति भावः ।। १२० ।।

**भारतश्री**— महिमा सर्वोत्कर्षः ।। १२० ।।

**शैवदर्शनमालम्ब्य क्वचिच्छैवी कथोदिता ।**
**समाधिभाषयोक्तं यत् तत् सर्वं ग्राह्यमेव हि ।। १२१ ।।**

**व्यास**— शैवीकथा दर्शनभाषयोक्तज्ञानग्राह्येति शेषः ।। १२१ ।।

**सङ्क**— शैवशाखामालम्ब्य क्वचिच्छिवसम्बन्धिनी या कथोक्ता सा दशर्नभाषयोक्तेति दर्शनभाषालक्षणं ज्ञातव्यम्। नन्वेवं अस्तु भाषाद्वयलक्षणं ततश्च किमित्यत आह— **समाधीति** ।। १२१ ।।

**वरद**— दर्शनभाषया किमुक्तमित्यत आह— **शैवीति** ।। शैवी शिवस्य विद्यमाना कथा तस्योत्तमत्वप्रतिपादिका कथा उक्ता सा दर्शनभाषेति वाक्यशेषः। उक्तित्वाविशेषादुभयमपि ग्राह्यमित्यागतमित्यत आह— **समाधीति** ।। १२१ ।।

**जना**— शैवी शिवसम्बन्धिनी तदुत्कर्षप्रतिपादिनी सा दर्शनभाषेति कथितेति शेष:। दर्शनादिभाषोक्तस्य ग्राह्याग्राह्यत्वादिना तद्गतिमाह— **समाधीति** ।। समाधिभाषया यत्प्रोक्तं तत्सर्वं ग्राह्यमेव हि ।। १२१ ।।

**अविरुद्धं समाधेस्तु दर्शनोक्तं च गृह्यते ।**
**आद्यन्तयोर्विरुद्धं यद् दर्शनं तदुदाहृतम् ।। १२२ ।।**

**वादि**— आद्यन्तयोर्विरुद्धमित्यस्यादावुक्तकृष्णमहिमाख्यप्रमेयस्यान्ते वक्ष्यमाणकृष्णोत्कर्षाख्य-प्रमेयस्य च विरुद्धं दर्शनान्तरसिद्धं वैष्णवदर्शनविरुद्धपाशुपतादिदर्शनान्तरसिद्धं यत्कृष्णस्य शिवार्चकत्वादिप्रमेयं मध्ये क्वचिदज्ञजनमोहनाय कथ्यते तद्दर्शनं दर्शनभाषयोक्तमित्यर्थ: ।। १२२ ।।

**सङ्क**— समाधिभाषयोक्तं सर्वं ग्राह्यं इत्युक्त्या दर्शनभाषयोक्तमपि किञ्चिद् ग्राह्यमस्तीति सूचितं तत्स्पष्टमाह— **अविरुद्धमिति** ।। समाधिभाषयोक्तं च ग्राह्यं अन्यत्र ग्राह्यमित्युक्त्या तत्प्रतीपन्तु यद्दृश्येत् तत् मम मनीषितं न भवत्यतो न ग्राह्यं किन्तु तद्भगवन्महिमैव ग्राह्यमिति तत्प्रतीपं तु यद्दृश्येदित्यस्याभिप्रायो वर्णितो भवति । दर्शनशब्दस्यानेकार्थत्वात् विवक्षितार्थमाह— **आद्यन्तयोरिति** ।। शिवस्य सर्वाधिक्यमुपक्रम्य उपसंहारे श्रीविष्णो: सर्वाधिक्यं [१]उपक्रम्य उपसंहारे शिवस्य सर्वाधिक्यप्रतिपादकं इत्याद्याद्यन्तयोर्विरुद्धं तथैव दर्शनान्तरसिद्धं यत् तद्दर्शनशब्दवाच्यमित्यर्थ:।। १२२ ।।

**वरद**— सर्वं ग्राह्यमित्युक्त्या दर्शनभाषयोक्तं किञ्चिद् ग्राह्यमिति प्रतीतं तत्स्पष्टयति— **अविरुद्धमिति** ।। समाधिभाषयोक्तस्य अविरुद्धं चेत् दर्शनभाषयोक्तं अपि ग्राह्यमेव तद्विरुद्धं तु न ग्राह्यम् पूर्वोत्तरविरुद्धत्वात् । अनेन पूर्वोत्तराविरुद्धार्थप्रतिपादकभाषा दर्शनभाषेति सूचितं लक्षणं स्पष्टमाह— **आद्यन्तयोरिति** ।। आदौ उपक्रमे विष्णो: सर्वोत्तमत्वं अन्ते उपसंहारे च तदेव मध्ये च । एतद्विरुद्धं शिवस्योत्तमत्वं उच्यते । तद्दर्शनभाषयोक्तमिति अवगन्तव्यमित्यर्थ:।। १२२ ।।

**जना**— समाधे: समाधिभाषयोक्तस्याविरुद्धं दर्शनोक्तं दर्शनभाषयोक्तं च गृह्यते इदमेवोक्तं द्वाविंशेऽध्याये-

'परदर्शनभाषासु ज्ञेयं तद्दर्शनं तथा ।
ग्राह्यो नार्थो वैदिकं तु दर्शनं ग्राह्यमेव च ।।' इति ।

वैदिकं वेदानुकूलम् ।

'लोकदर्शनमाश्रित्य देवाश्च मुनयस्तथा ।
ब्रूयु: कथास्तत्र शिक्षा: ग्राह्यो नार्थ: कथञ्चन ।।'

इति वक्ष्यमाणत्वाल्लोकदर्शनभाषापि ज्ञेया । दर्शनभाषालक्षणमाह— **आद्यन्तयोरिति** ।। आद्यन्तयोरुपक्रमे विष्णूत्तमत्वं अन्ते शिवोत्तमत्वं अथवा आदौ शिवोत्तमत्वं अन्ते विष्णूत्तमत्वं वा यत्रोक्तं तद्दर्शनभाषेत्युक्तं तेन आद्यन्तयोर्विरुद्धार्थप्रतिपादकं दर्शनमित्येकं लक्षणम् ।। १२२ ।।

---

१. अत्र पुन: 'श्रीविष्णो: सर्वाधिक्यं' इति भाव्यमिति भाति ।

**ताम्र**— समाध्युक्तं सर्वं ग्राह्यमित्युक्त्या दर्शनोक्तं किञ्चिदग्राह्यमिति सूचितम् । तत्स्पष्टयति— **अविरुद्धमिति**।। दर्शनोक्तं दर्शनभाषाप्रचुरशास्त्रोक्तं इन्द्रादिवन्द्यत्वत्रिपुरहरत्वादिकमित्यर्थः। दर्शनभाषालक्षणद्वयमाह— **आद्यन्तयोरिति** ।। उपलक्षणमेतत् बहुश्रुतिविरुद्धं चेति ग्राह्यम् ।। १२२ ।।

**दर्शनान्तरसिद्धं च गुह्यभाषान्यथा भवेत् ।**
**तस्माद्विष्णोर्हि महिमा भारतोक्ता यथार्थतः ।। १२३ ।।**

**व्यास**— गुह्यभाषा यथा 'अन्धो मणिमविन्दत' इतिरूपा । गुह्यभाषान्यथा भवेत् ।। १२३ ।।

**वादि**— अन्यथा दर्शनभाषातोऽन्यथा स्पष्टार्थकसमाधिभाषातोऽन्यथा । यद्भवेत् क्वचिदुच्यमानं भवेत् ।

"अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ।।'

इत्यादाविव गूढार्थकपदघटनयोच्यत इति यावत् । सा गुह्यभाषेत्यर्थः।। १२३ ।।

**सङ्क**— गुह्यभाषालक्षणमाह— **गुह्येति** ।। मुख्यतः प्रतीयमानार्थादन्यार्थप्रतिपादिका गुह्यभाषा भवेदित्यर्थः। तत्रोदाहरणं 'उच्छिष्टं शिवनिर्माल्यम्' इत्यादि । अधुना 'वासुदेवस्य महिमा भारते निर्णयोदित' इति प्रतिज्ञातार्थमुपसंहरति— **तस्माद्विष्णोरिति** ।। १२३ ।।

**वरद**— दर्शनान्तरसिद्धं च इत्यनेन दर्शनभाषायाः लक्षणान्तरमुच्यते यया भाषयोक्तं प्रमेयं विरोधिदर्शनान्तर-सिद्धं सापि दर्शनभाषेत्यर्थः। गुह्यभाषा स्वरूपमाह— **गुह्येति** ।। अन्यथा प्रतीयमानार्थादन्यथा अन्यार्थप्रतिपादिका भाषा गुह्यभाषेत्यर्थः। स यथा ।

'उच्छिष्टं शिवनिर्माल्यं वमनं मृतकर्पटम् ।
काकविष्टासमायुक्तं पञ्चपूतानि भारत ।।' इति ।

अत्रोच्छिष्टं पूतमित्यापाततः प्रतीयते तच्च विरुद्धं अतः वत्सोच्छिष्टं वत्सपीतं क्षीरं पीतमिति प्रतीयमानार्थाद-न्यार्थप्रतिपादनं गुह्यभाषाकृतं तथा शिवनिर्माल्यस्याग्राह्यत्वेऽपि तच्छब्देन गङ्गाद्युदकमेव गृह्यते तथा वमनं मध्वेव गृह्यते तथा मृतकर्पटं कौशेयमेव गृह्यते तथा काकविष्टासमायुक्तं अश्वत्थादिकमेव ग्राह्यं नान्यदिति द्रष्टव्यम् । एवं 'वासुदेवस्य महिमा भारते निर्णयोदितः' इत्युक्तमुपपाद्योपसंहरति— **तस्मादिति** ।। १२३ ।।

**जना**— द्वितीयलक्षणमाह— **दर्शनेति** ।। दर्शनान्तरेषु शैवादिशास्त्रेषु सिद्धं प्रतिपादितं यद्दर्शनं तेन दर्शनान्तरसिद्धं दर्शनमिति । गुह्यभाषालक्षणमाह— **गुह्येति** ।। अन्यथा प्रदृश्यमानादर्थादन्यार्थप्रतिपदिका गुह्यभाषेति । उपसंहरति— **तस्मादिति** ।। तस्माद्विष्णोर्महिमा भारते प्रोक्त इति यत्तद्यथार्थतः यथार्थं सत्यमित्यर्थः। उक्तमेतद्भाषाविवेके –

---

१. अट्टमन्नं शिवो वेदो ब्राह्मणश्च चतुष्पथः । केशो भग इति प्रोक्तः शूलो विक्रय उच्यते ।। इति महाभारतव्याख्यनकाराः।

[1]"गुह्यदर्शनभाषे च भाषा चैव समाधिका ।
तिस्रस्तु मूलभाषाः स्युरेकैका तु त्रिधा पुनः ।।
गुह्यदर्शनसंज्ञा तु गुह्यगुह्या तथा परा ।
एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः ।।
भाषास्तत्र च गुह्या च प्रसिद्धार्थेष्वनन्विता ।
गुह्यार्थतत्परैवान्धो मणिमित्यादिका च सा ।।
दर्शनान्यवलम्ब्यैव पशुपत्यादिनां तु या ।
बहुश्रुतिविरुद्धं तु वदेत्सा दर्शनात्मिका ।।
अन्ते निषेधसंयुक्ता भस्मस्नानादिका च सा ।
यथा प्रदृश्यमानार्था समाधिः सा प्रकीर्तिता ।।
विष्णुः परम इत्याद्या सा च विद्वद्भिरीरित ।।' इति ।

भस्मस्नानशब्देन तद्विधानं ग्राह्यम् ।

[2]"भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम् ।।
भस्मस्नानं ततो ग्राह्यं विधानं तु नृसिंहगम् ।।' इति स्कान्दवचनात् ।। १२३ ।।

**ताम्र**— गुह्यभाषा त्वन्यथा । समाधिदर्शनाभ्यां समाधिवन्न विस्पष्टम् ब्रह्मपरा । नापि दर्शनान्तरमूला । किन्तु प्रसिद्धार्थोऽन्वययोग्यतारहिता 'अन्धो मणिमविन्दत' इत्यादिका । उक्तं च भगवत्पादैरेकादशस्कन्ध-तात्पर्यनिर्णये—

'गुह्यदर्शनभाषे च भाषा चैव समाधिका ।
तिस्रस्तु मूलभाषाः स्युरेकैकापि त्रिधा पुनः।।
गुह्यदर्शनसंज्ञा च गुह्यगुह्या तथा परा ।
एवमादिक्रमेणैव त्वेकाशीतिप्रभेदिताः।।
भाषास्तत्र च गुह्या च प्रसिद्धार्थेष्वनन्विता ।
गुह्यार्थतत्परैवान्धो मणिमित्यादिका च सा ।।
दर्शनान्यवलम्ब्यैव पशुपत्यादिनां तु या ।
बहुश्रुतिविरुद्धं च वदेत्सा दर्शनात्मिका ।।
अन्ते निषेधसंयुक्ता भस्मस्नानादिका च सा ।
यथाप्रदृश्यमानार्था समाधिस्सा प्रकीर्तिता ।।
विष्णुः परम इत्याद्या सा च विद्वद्भिरीरिता ।।' इति भाषाविवेके इति ।। १२३ ।।

**भारतश्री**— अन्यथा प्रतीयमानार्थादन्यार्थप्रतिपादिका । यथा

'उच्छिष्टं शिवनिर्माल्यं वमनं मृतकर्पटम् ।

१. भा.ता. ११-२१-४० । २. भा.ता. ११-२१-४० ।

काकविष्टासमायुक्तं पञ्च पूतानि भारत ।।'

उच्छिष्टं वत्सोच्छिष्टं क्षीरम् । शिवनिर्माल्यं गङ्गोदकम् । वमनशब्दो वान्तपरः । वान्तं मधु । मृतकर्पटं कौशेयवस्त्रम् । काकाविष्ठाशब्देन अश्वत्थमुच्यते इत्यादि द्रष्टव्यम्[1] ।। १२३ ।।

**तस्याङ्गं प्रथमं वायुः प्रादुर्भावत्रयान्वितः ।**
**प्रथमो हनुमान् नाम द्वितीयो भीम एव च ।**
**पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ।। १२४ ।।**

**व्यास**— 'तदर्थास्तु कथाः' इतीतरकथानां भगवन्महिमार्थत्वमुक्तं तत्कथं स्यादित्यत तत्प्रकारं दर्शयन्नाह — **तस्येत्यादिना** ।। १२४ ।।

**अभिनव**— तस्याङ्गं इति सार्धश्लोकद्वयम् । तस्यार्थः । प्रादुर्भावत्रयान्वितः प्रादुर्भूतरूपत्रयान्वितः वायुः तस्य परमेश्वरस्य प्रथमं अङ्गम् । तस्याङ्गमित्युक्तं विवृणोति— **प्रथम इति** ।। यस्य हनुमानिति नाम, सः भगवत्कार्यसाधकः प्रथमः प्रथमप्रादुर्भावः । यस्य भीम इति नाम, स द्वितीयः प्रादुर्भावः । यस्य पूर्णप्रज्ञ इति नाम, स तु भगवत्कार्यसाधकः तृतीयः प्रादुर्भावः । भगवत्कार्यसाधकत्वोपयुक्तज्ञानभक्त्यादिविशेषणसमुच्चये चशब्दः । प्रथमो हनुमन्नामेत्युक्तं विवृणोति— **त्रेताद्येष्विति** ।। वायुः केशवाज्ञया त्रेताद्येषु त्रिषु युगेषु पृथक् भगवत्कार्य-करणार्थं एकैकशः एकैकेन रूपेण एवं प्रथमो हनुमन्नामेत्युक्तरीत्या सम्भूतः । सरस्वती द्वितीयाङ्गं इति ।। १२४ ।।

**सङ्क**— एवं श्रीविष्णोर्महिमानं निरतिशयमुक्त्वा वाय्वादीनां तदन्तरङ्गभूतानां तारतम्यक्रमेण स्वरूपनिर्णयमाह — **तस्याङ्गमित्यादिना** ।। प्रादुर्भावत्रयान्वित इत्युक्तावतारत्रयमाह— **प्रथम इत्यादिना** ।। अङ्गत्वे युक्तिमाह— **भगवत्कार्यसाधक इति** ।। १२४ ।।

**वरद**— एवं तावन्निर्णयान् वच्मीति वक्तव्यत्वेन प्रतिज्ञातेषु निर्णयेषु विष्णोः सर्वोत्कृष्टस्वरूपनिर्णयः कृतः। इदानीं वाय्वादीनामङ्गभूतानां तारतम्यक्रमेण स्वरूपनिर्णयमाह— **तस्याङ्गमित्यादिना** ।। वायुस्तस्य हरेः प्रथममङ्गं प्रधानसाधनम् । न केवलं मूलरूपेण प्रधानाङ्गत्वं किन्त्ववताररूपेणापीत्याह— **प्रादुर्भावेति** ।। तदवतारत्रयं दर्शयति— **प्रथम इति** ।। अङ्गस्वरूपकथनार्थमुक्तं भगवत्कार्यसाधक इति सर्वत्र सम्बध्यते । भगवति बलकार्ये ज्ञानकार्ये च प्रवृत्ते सति तत्र प्रधानसाधनत्वात् सर्वाधिकार्युत्तमो वायुरेवेत्यर्थः ।। १२४ ।।

**जना**— वाय्वादयः विष्णोरङ्गभूता इत्यर्थे भविष्यत्पर्वपुराणवचनमाह— **तस्येति** ।। तस्य हरेः प्रादुर्भाव-त्रयान्वितो वायुः प्रथममङ्गम् । अवतारत्रयमाह— **प्रथम इति** ।। अङ्गत्वविवरणार्थमुक्तं भगवत्कार्यसाधक इति । भगवत्कार्यसाधकः वायुः।। १२४ ।।

**ताम्र**— 'तदर्थास्तु कथा' इति इतरकथानां भगवन्महिमार्थत्वमुक्तं तत्कथं स्यादित्यतो हनुमदादीनां भगवत्परिवाराणामपि यदा लङ्कादहनरावणसमाक्षकुमारहननगन्धमादनाद्यानयनाद्यलौकिकमहामाहात्म्यं तदा किमु स्वतन्त्रेश्वरस्येति भगवदुत्कर्षार्थत्वमिति भावेन तत्प्रकारं दर्शयति— **तस्येत्यादिना** ।। १२४ ।।

१. अत्र ग्रन्थपातः ।

**त्रेताद्येषु युगेष्वेषः सम्भूतः केशवाज्ञया ।**
**एकैकशस्त्रिषु पृथग् द्वितीयाङ्गं सरस्वती ।। १२५ ।।**

**व्यास**— एकैकशः एकस्मिन् एकस्मिन्युगे त्रेताद्येषु त्रिष्विति सम्बन्धः ।। १२५ ।।

**वादि— सम्भूतः केशवाज्ञयेत्यत्र** त्रिषु रूपेषु एकैकशः एकैकं प्रति पृथक् पृथक् केशवाज्ञयैव त्रेताद्येषु युगेषु सम्भूत इति योजना ।। १२५ ।।

**सङ्क**— ननु कदा कथं प्रादुर्भावत्रयं कृतवानित्यत आह— **त्रेताद्येष्विति** ।। त्रेताद्येषु युगेषु **एकैकशः** एकैकस्मिन्युगे पृथग्विभागेन अमिलित्वैव केशवाज्ञया सम्भूतेत्यर्थः।। १२५ ।।

**वरद**— नन्वेतदवतारत्रयं वायुना कदा कृतमित्यत आह— **त्रेताद्येष्विति** ।। त्रेताद्येषु त्रिषु युगेषु एकशः एकैकस्मिन् युगे पृथक् एकैकावतारक्रमेण केशवाज्ञया सम्भूत इत्यर्थः। एवं प्रधानाङ्गत्वेन वायुं उक्त्वा तदनन्तरं साधनत्वेन सरस्वतीमाह— **द्वितीयाङ्गमिति** ।। अत्र सरस्वतीग्रहणेन भारतीमप्युपलक्षयति। अत एव पूर्वं वायुशब्देन ब्रह्मापि ग्राह्य इति सूचितम् ।। १२५ ।।

**जना**— त्रेताद्येषु युगेषु एकैकशः एकैकेन रूपेण पृथक् नाम्ना समुद्भूतः। सरस्वती द्वितीयाङ्गं प्रकीर्तिता ।। १२५ ।।

**ताम्र**— त्रेताद्येषु त्रिषु युगेषु सम्भूत इत्युक्ते एकैकस्मिन्युगेष्वप्यवतारत्रयभ्रान्तिः स्यादत **एकैकदा** एकैकस्मिन्युगे पृथक्पृथगेकैकावतारक्रमेण सम्भूत इत्युक्तम् ।। १२५ ।।

**शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते ।**
**सैव च द्रौपदी नाम काली चन्द्रेति चोच्यते ।। १२६ ।।**

**व्यास**— सरस्वत्याः द्वितीयाङ्गत्वं कथं तस्याः श्रीरूपत्वादित्यत आह— **शंरूप इति** ।। शंरूपे वायौ रन्तृत्वादेव श्रीः न तु श्रीरूपत्वादित्यर्थः।। १२६ ।।

**वादि**— भारते क्वचित् क्वचित् द्रौपदी श्रीरित्युच्यते । तस्यार्थमाह— **शंरूप इति** ।। शकारेण शंरूपो वायुः कथ्यते । रेफेण च तस्मिन् रमते इत्यर्थे सिद्धे स्त्रीलिङ्गतया नदीसञ्ज्ञायां ङीपि च कृते श्रीरिति शब्दनिष्पत्तिर्भवति ।। १२६ ।।

**सङ्क**— ननु क्वचित् सरस्वत्याः द्वितीयाङ्गत्वं क्वचिच्छ्रियो द्वितीयाङ्गत्वमुच्यते अतो विरोध इत्यत आह— **शंरूप इति** ।। सैव श्रीरिति विरोधो नेत्यर्थः।। १२६ ।।

**वरद**— ननु द्वितीयाङ्गत्वेन श्रीः कुत्रचिदभिधीयते तस्य का गतिरित्याशङ्क्य तत्रत्यश्रीशब्दार्थमाह— **शंरूप इति** ।। शंरूपे सुखरूपे वायौ रतेः रमणान्निमित्तात्सरस्वत्येव श्रीरिति कीर्त्यते । तत्र श्रियो द्वितीयाङ्गत्वाभिधायकवचनेषु श्रीशब्देन सरस्वत्युच्यते । अतो न विरोध इत्यर्थः। यथा च वायोरवताररूपेणापि

प्रधानाङ्गत्वं तथा भारत्या अपि अवताररूपेणापि द्वितीयाङ्गत्वं पूर्वोक्तरीत्या वैराद्युत्पत्तिहेतुत्वादित्यभिप्रेत्याह — **सैव चेति** ।। १२६ ।।

**जना**— ननु श्रीः द्वितीयाङ्गमिति श्रूयते तत्कथं सरस्वती द्वितीयाङ्गमित्यत आह— **शमिति** ।। सुखस्वरूपे वायौ रतेः रमणात्सैव सरस्वत्यैव् श्रीरिति कीर्त्यते सैव श्रीरेव ।। १२६ ।।

**ताम्र**— ननु श्रीरूपत्वेनोक्ताया सरस्वत्या कथं द्वितीयाङ्गत्वं तत्राह— **शंरूप इति** ।। एवकारस्य शंरूपे सुखरूपे वायौ रतेरेव न तु लक्ष्मीस्वरूपत्वादित्यर्थः। सैव श्रीशब्दवाच्या सरस्वत्येव द्रौपदीत्यादिनामभिरुच्यते। द्रौपद्या एवोत्तरत्र सरस्वतीत्वान्नानुपपत्तिः ।। १२६ ।।

**तृतीयाङ्गं हरेः शेषः प्रादुर्भावसमन्वितः ।**
**प्रादुर्भावा नरश्चैव लक्ष्मणो बल एव च ।। १२७ ।।**

**वरद**— एवं भूतपूर्वगत्या भारत्यादिरूपायाः सरस्वत्याः द्वितीयाङ्गत्वमुक्त्वा तदनन्तरत्वेन तृतीयसाधनत्वेन शेषमाह— **तृतीयाङ्गमिति** ।। शेषस्य प्रादुर्भावानाह— **प्रादुर्भावा इति** ।। तथा च पूर्ववदेव मूलरूपवदवताररूपाणामपि तृतीयाङ्गत्वमस्तीति ।। १२७ ।।

**जना**— तृतीयाङ्गमाह— **तृतीयाङ्गमिति** ।। अवतारानाह— **प्रादुर्भावा इति** ।। १२७ ।।

**[1]रुद्रात्मकत्वाच्छेषस्य शुको द्रौणिश्च तत्तनू ।**
**[2]इन्द्रो नरांशसम्पत्त्या पार्थोऽपीषत् तदात्मकः ।। १२८ ।।**

**सङ्क**— न केवलमवतारत्रयं शेषस्येत्याह— **रुद्रात्मकत्वाच्छेषस्येति** ।। शुकस्य द्रौणेश्च शेषावतारत्व-प्रसिद्धेः भूतपूर्वगत्या शुको द्रौणिश्च शेषतनुरित्यर्थः। अर्जुनोऽपि प्रकारान्तरेण तदात्मक इति सयुक्तिकमाह— **इन्द्र इति** ।। १२८ ।।

**वरद**— न केवलमेतदवतारत्रयेण किन्तु कयाचिद्विवक्षयावतारेणापि तृतीयाङ्गत्वं शेषस्येत्याह— **रुद्रात्मकत्वादिति** ।। रुद्रस्य सतः उत्तरकल्पे शेषत्वात् भाविभावेन वा इदानीं शेषस्य सतः पूर्वं रुद्रत्वाद्वा भूतपूर्वगत्यां शुकाश्वत्थाम्रोरपि शेषावतारत्वेन तृतीयाङ्गत्वमेवेति भावः । क्वचिदर्जुनस्यापि तृतीयाङ्गत्वोक्तिरस्ति तस्या अभिप्रायमाह— **इन्द्र इति** ।। इन्द्रः इन्द्रावतारः पार्थोऽपि ईषत् तदात्मकः किञ्चित् शेषावतारत्वेन तृतीयाङ्गत्वमिति भावः।। १२८ ।।

---

१. 'भाविजन्मनि शेषत्वप्राप्त्यर्थं वा महत्तपः। करोमीत्यपि वैराग्याच्छम्भुः कैलासगोऽभवत् ।।' आदित्य.पु.वें.मा. २-२३ । २. 'इन्द्रे' इति ताम्रपर्णीये पाठान्तरम् ।

**जना**— अन्यावतारानाह— **रुद्रेति** ।। अतीतरुद्रात्मकत्वाच्छेषस्य शुको द्रौणिश्च तत्तनू तदवतारौ अन्यं विशेषमाह— **इन्द्र इति** ।। इन्द्रः इन्द्राभिन्नः इन्द्रावतारोऽपि पार्थः अर्जुन ईषत्तदात्मकः तस्य शेषस्य आत्मकः स्वरूपस्तेन तृतीयाङ्गमिति भावः।। १२८ ।।

**ताम्र**— नरादिरूपशेषस्य तृतीयाङ्गत्वेन शुकादिरूपस्य रुद्रस्य तदुक्तिविरोध इत्यत आह— **रुद्रेति** ।। भूतपूर्वगत्या भाविगत्या वा रुद्रशेषयोरैक्यात्तत्तनू रुद्रतनू शुको द्रौणिश्च तत्तनू शेषावतारावित्यर्थः । अर्जुनस्य तृतीयाङ्गत्वोक्तिविरोधं परिहरति— **इन्द्र इति** ।। इन्द्रः इन्द्रावतारभूतः पार्थः नरावेशाच्छेषात्मकः। ईषदिति बलभद्रादिसाम्यं व्यावर्तयितुमुक्तम् । तद्विवक्षया तृतीयाङ्गत्ववचनमित्यर्थः । 'इन्द्रे नरांशसम्पत्त्या' इति पाठे इन्द्रे पार्थे नरावेशेनेत्यर्थः ।। १२८ ।।

**प्रद्युम्नाद्यास्ततो विष्णोरङ्गभूताः क्रमेण तु ।**
**चरितं वैष्णवानां तद्विष्णूद्रेकाय कथ्यते ।। १२९ ।।**

**व्यास**— ततः अर्जुनानन्तरम् । तथा च प्रकृते किमायातमित्यत आह— **चरितमिति** ।। उद्रेकाय उत्कर्षाय ।। १२९ ।।

**सङ्क**— अधुना चतुर्थादिक्रमेण विष्णोरङ्गभूतानाह— **प्रद्युम्नाद्या इति** ।। ननु श्रीविष्णोर्महिमैव सर्वत्रोच्यतां किमित्यन्येषां तदङ्गभूतानां महिमा कथ्यते इत्यत आह— **चरितमिति** ।। 'तदर्थास्तु कथाःसर्वाः' इत्युक्तस्य विवरणरूपत्वाच्चरितमिति न पुनरुक्तम् । वैष्णवानां चरितं विष्णूद्रेकाय कथ्यते श्रीविष्ण्वधीनत्वात्तेषां महिम्न इत्यर्थः ।। १२९ ।।

**वरद**— अन्यथा तु पार्थाद्यात्मना प्रादुर्भूता इन्द्राद्या हरेश्चतुर्थाङ्गत्वेन द्रष्टव्या इत्याह— **प्रद्युम्नाद्या इति** ।। अत्र प्रद्युम्नस्य कामावतारत्वात्तद्ग्रहणेन इन्द्रोऽपि गृहीत एवेति द्रष्टव्यम् । ततः पञ्चमत्वादिना यथाक्रममनिरुद्धाद्या द्रष्टव्या इत्याह— **क्रमेण त्विति** ।। ननु विष्णोः सर्वोत्तमत्व एव सर्वशास्त्रप्रामाण्ये सर्वेषु शास्त्रेषु तदेव वक्तव्यं तत्र तत्र तारतम्यक्रमेणाङ्गभूतानां देवानां महिमाक्रमः किमर्थं कथ्यत इत्यत आह— **चरितमिति**।। विष्णुसम्बन्धिनां देवानां गुणकर्मादिवर्णनस्यापि भगवन्महिमावर्णनोपियोगितया तत्रैव तात्पर्यमिति भावः। अनेन 'तदर्थास्तु कथाः सर्वाः' इत्येतद्विवृतं भवति ।। १२९ ।।

**जना**— ततस्तदनन्तरं प्रद्युम्नाद्याः प्रद्युम्नानिरुद्धाद्याः क्रमेण विष्णोरङ्गभूताः। ननु भारते कृष्णकथामेवानुक्त्वा पाण्डवकथाकथनेन किमित्यत आह— **चरितमिति** ।। १२९ ।।

**ताम्र**— अस्तु वायुप्रभृतीनां विष्ण्वङ्गत्वं तन्महिमावर्णनस्य कथं तदर्थत्वमित्यत आह— **चरितमिति** ।। उद्रेकायोत्कर्षज्ञानाय ।। १२९ ।।

**तथा भागवतेऽप्युक्तं हनूमद्वचनं परम् ।। १३० ।।**

**सङ्क**— नात्मानं वेदेत्यादिना श्रीरामावतारस्य यन्निर्दोषत्वमभिहितं तदेव श्रीभागवतवचनैरतिदार्ढ्याय दर्शयितुमाह— **तथा भागवत इति** ।। १३० ।।

**वरद**— एवं तस्याङ्गत्वमित्यादिना वाय्वादीनां अङ्गभूतानां स्वरूपं निरूप्य पुनर्भगवदवतारेषु निर्दोषत्वं यत्प्रतिज्ञातं तदेव श्रीभागवतादिवचनेनापि द्रढयति— **तथा भागवतेऽपीति** ।। १३० ।।

**जना**— दुःखाद्यभावे भागवतमुदाहरति— **तथेति** ।। तथाशब्दः समुच्चये ।। १३० ।।

**ताम्र**— भाषात्रयात्मकत्वेन दुर्गमार्थत्वात् तदर्थविशिष्टग्रन्थं कुर्विति नारदप्रार्थितव्यासकृतभागवतस्य भगवन्निर्दोषगुणपूर्तिपरत्वाच्च भारतस्य भगवत्परत्वं ज्ञायत इत्याशयेन तद्वाक्यमुदाहर्तुमाह— **तथेति** ।। यथा भारते निर्दोषगुणपूर्णत्वमुक्तं तथा भागवतेऽप्युक्तम् । तच्च परमुत्तमं हनुमद्वचनमित्यर्थः। यद्वा हनुमदादिवैष्णवचरितं विष्णुनिर्दोषगुणपूर्णत्वादिमहिमागर्भत्वात् तदर्थं कथ्यत इत्युक्तम् । तत्तावद्धनुमत उपदेशरूपचरितं लेशत उदाहरति — **तथेति** ।। यथा परं उत्तमं किम्पुरुषखण्डस्थान् प्रत्युपदेशरूपं हनुमद्वचनं भगवदुत्कर्षगर्भं तथा भागवते पञ्चमस्कन्धे उक्तं चेत्यर्थः। एतेन 'तथा प्रदर्शयिष्यामस्तद्वाक्यैरेव' इति प्रतिज्ञाविरोध इत्यपास्तम् । प्रायिकत्वाभिप्रायेण वा तद्वाक्यैरित्युक्तम् ।। १३० ।।

> **[१]मर्त्यावतारस्त्विह मर्त्यशिक्षणं**
> **रक्षोवधायैव न केवलं विभोः ।**
> **कुतोऽन्यथा स्यू रमतः स्व आत्मन्**
> **सीताकृतानि व्यसनानीश्वरस्य ।। १३१ ।।**

**व्यास**— भारतस्य भगवन्निर्दोषादिपरत्वं भाषात्रयात्मकत्वे दुर्गमार्थत्वात्, भारतार्थवत्स्पष्टनिबन्धनं कुर्विति नारदप्रार्थितव्यासकृतभागवतस्य भगवत्परत्वावगतेश्च ज्ञायत इति भावेन तद्गतवाक्यान्युदाहरन्नाह— **मर्त्येति**।। मर्त्येष्ववतारः मर्त्यावतारः ।। १३१ ।।

**वादि**— विष्णोः सर्वोत्तमत्वे वाय्वादीनां क्रमेण तदङ्गत्वे च विष्णोः साक्षादवतारो रामः कुतः सीतावनकृते अज्ञजनवत् सीतान्वेषणादिकं कृतवान् रक्षोवधमात्रफलायेत्यपि न किन्तु दशरथाज्ञापरिपालनसीता-न्वेषणप्राप्तव्यसनशरणागतसुग्रीवाभीष्टकरणविभीषणराज्यदानादिना गुर्वाज्ञापरिपालनप्राप्तव्यसनशरणागत-परिपालनाभीष्टदानादिकं च कर्तव्यमिति मर्त्यशिक्षार्थं च कृतवान् । एतदुभयोपपादनायैव विभोरिति विशेषणम् । अन्यथा मर्त्यशिक्षणार्थं मर्त्यावतारः न कृतश्चेत् स्वे स्वतन्त्रे आत्मन् आत्मनि रमतः रामस्य सीताकृतानि व्यसनानि कुतः स्युरिति योजना ।। १३१ ।।

**अभिनव**— 'मर्त्यावतार', 'न वै स' इति श्लोकद्वयम् । तस्यार्थः । विभोः रामचन्द्रस्य इह भूमौ मर्त्या-वतारः न केवलं रक्षोवधायैव रावणादिरक्षोवधायैव किन्तु मर्त्यशिक्षणं मत्यशिक्षणाय च । रामावतारेण

१. भा. ५-१९-५ ।

मर्त्यशिक्षणं कथं जातमित्यतो विपक्षबाधकप्रदर्शनपूर्वकं मर्त्यशिक्षणप्रकारं सूचयति— **कुत इति** ।। अन्यथेति शेषः। अन्यथा मर्त्यावतारस्य मर्त्यशिक्षणार्थत्वाभावे अस्य रामचन्द्रस्य व्यसनानीत्यतः परं दर्शनीयानीति शेषः । सीताकृतानि व्यसनानि कुत प्रदर्शनीयानि स्युः । सीताकृतव्यसनाभावेऽपि रामचन्द्रः सीताकृतानि व्यसनानि प्रदर्शितवान् । तेन ज्ञायते भार्यासक्त्या बहूनि व्यसनानि भवन्ति । अतो भार्यासक्तिः न कर्तव्येति मर्त्यानां शिक्षणं कृतवानिति । अन्यथा सीताकृव्यसनप्रदर्शनं व्यर्थं स्यादिति भावः । रामचन्द्रस्य सीताकृतानि व्यसनानि न सन्तीत्येतत् कुत इत्यतोऽप्याह— **कुत इति** ।। स्वे आत्मन् आत्मनि । रमतः रममाणस्य ईश्वरस्य अस्य रामचन्द्रस्य सीताकृतानि व्यसनानि कुतः स्युः कथं स्युः । न कथमपि स्युः इत्येतत् हि प्रमाणप्रसिद्धम् । न केवलं स्वरमणत्वादिहेतुबलात् रामचन्द्रस्य व्यसनानि न सन्तीति अङ्गीकर्तव्यम् । किन्तु श्रुत्यादिप्रमाणबलाच्चेत्याह— **न वा इति** ।। आत्मवतां जीवनियमकानां ब्रह्मादीनां आत्मा अन्तर्यामी अधीश्वरः मुख्यस्वमी भगवान् वासुदेवः दुःखं नैव भुङ्क्ते इत्येतत् हि श्रुत्यादिप्रमाणसिद्धम् । ननु सीताप्रयुक्तचिन्तया क्लेशोऽवर्जनीय इत्यत आह— **न स्त्रीकृतमिति** ।। रामचन्द्रः स्त्रीकृतं कश्मलं चिन्तां च नाश्नुवीत न प्राप्नोति । ननु लक्ष्मणत्यागप्रयुक्तक्लेशोऽवर्जनीय इत्यत आह— **न लक्ष्मणमिति** ।। रामचन्द्रः कर्हिचित् कदापि लक्ष्मणमपि न जहाति । सर्वगतत्वादिति शेष इति । एतेन मर्त्यावतारः मर्त्यशिक्षणायेति वक्तव्ये मर्त्यशिक्षणमिति कथनमयुक्तमिति दूषणं परास्तम् । 'मर्त्यशिक्षणम्' इति प्रथमा चतुर्थ्यर्थे इत्यङ्गीकारात् । एतेनैव मर्त्यावतारः मर्त्यशिक्षणार्थमित्यस्योपपादनं विना 'कुतो हि स्युः रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य' इति रामचन्द्रस्य व्सनाभावकथनमसङ्गतमिति दूषणं परास्तम् । अन्यथेति शेषमङ्गीकृत्य रामचन्द्रस्य मर्त्यावतारः मर्त्यशिक्षणार्थमित्यस्योपपादनार्थं 'कुतो हि स्युः' इत्यस्य प्रवृत्तिरित्यङ्गीकारात् । एतेनैव 'कुतोऽस्य हि स्युः' इत्यनेन रामचन्द्रस्य दुःखानि न सन्तीत्येतदुक्तत्वात् 'न वै स आत्मात्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान् वासुदेवः' इत्येतत् पुनरुक्तमित्येतत् दूषणं परास्तम् । 'कुतोऽस्य हि' इत्यनेन रामचन्द्रस्य दुःखाभावे स्वरमणत्वादि-रूपो हेतुरुक्तः । 'न वै स आत्मा' इत्यनेन तु रामचन्द्रस्य दुःखाभावे श्रुत्यादिकमस्तीत्युच्यते इत्यङ्गीकारात् । एतेनैव 'विसृज्य लक्ष्मणं राम' इत्यादिवाक्येन रामायणादौ लक्ष्मणत्यागस्योक्तत्वात् लक्ष्मणं कदापि न जहाति इति कथनमनुपपन्नमिति दूषणं परास्तम् । रामचन्द्रस्य सर्वगतत्वेन लक्ष्मणत्यागस्य बाधितत्वात् । रामायणादेः मन्दप्रत्यक्षसिद्धलक्षमणत्यागानुवादपरत्वमित्यङ्गीकारात् ।। १३१ ।।

**वरद**— तदेव किम्पुरुषखण्डस्थान् प्रत्युपदिष्टं हनुमद्वचनं पठति— **मर्त्यावतारस्त्विति** ।। विभोर्नारायणस्य इह लोके मर्त्येषु अवतारो न केवलं रक्षसां रावणादीनां वधायैव जातः किं तर्हि मर्त्यशिक्षणं प्रयोजनमुद्दिश्यापि विषयासक्त्या तद्वियोगजन्यं महद्दुःखं स्यात् । अतो भार्यादिविषयेष्वासक्तिर्न कर्तव्येति मनुष्यान् शिक्षयितुं च अवतारः कृत इति भावः। अत एव सीतावियोगजसन्तापादिकं जातमिति अज्ञानां प्रदर्शितम् । वस्तुतस्तु तन्नास्त्येव इत्याह— **कुत इति** ।। स्वे आत्मन् स्वरूपे रमतो नारायणस्य रामस्य सीताकृतानि सीतावियोगज-सन्तापादिरूपाणि व्यसनानि कुत एव स्युर्न कुतोऽपीत्येतत्प्रदर्शनस्य मर्त्यशिक्षणार्थत्वात्तत्प्रतीतिः भ्रान्तिरिति भावः।। १३१ ।।

**जना—** इह लोके मर्त्यावतारः मर्त्येषु अवतारः अवतरणं केवलं रक्षो वधायैव न कृतः किन्तु मर्त्यशिक्षणं च कर्तुं कृतः। स्वे आत्मनि रमत ईश्वरस्यास्य सीताकृतानि सीतानिमित्तानि व्यसनानि कुतः स्युः न कुतोऽपीत्यर्थः। स्त्रीसङ्गिनामेतादृशं दुःखं भवतीति सङ्गः त्याज्य इति एतत्प्रदर्शितमिति भावः।। १३१ ।।

**ताम्र—** भागवतवाक्यं पठति । मर्त्यावतारं न केवलं रक्षोवधाय । किन्तु विषयासक्त्या महद्दुःखं स्यादतो न तत्र सज्जेतेति मर्त्यशिक्षणमुद्दिश्य 'यद्यदाचरति श्रेष्ठः' इत्युक्तदिशा मयापि यज्ञादिकं क्रियते अज्ञेन कार्यमिति किमुत । मर्त्यशिक्षणमुद्दिश्य मर्त्येष्ववतीर्णदेवानां लौकिकमनुष्यवत्प्रवृत्त्या भवितव्यमिति मर्त्यशिक्षण-मुद्दिश्यापीत्यर्थः। स्व आत्मनि स्वस्वरूपे ।। १३१ ।।

**[1]'न वै स आत्मात्मवतामधीश्वरो**
**भुङ्क्ते हि दुःखं भगवान् वासुदेवः ।**
**न स्त्रीकृतं कश्मलमश्नुवीत**
**न लक्ष्मणं चापि जहाति कर्हिचित्'।। १३२ ।।**

**वादि—** आत्मवतां वशीकृतमनसां योगीश्वराणामधीश्वरो भगवान् षड्गुणैश्वर्यपरिपूर्णः वासुदेवः सकलजगत्सु वसनात् क्रीडादिगुणविशिष्टत्वाच्च वासुदेवनामकः आत्मा परमात्मा स रामो दुःखं न भुङ्क्ते इति योजना । आनन्दपूर्णस्य कथं दुःखं सकलजगद्व्यापिनः कथं वियोग इति सूचनाय विशेषणद्वयम् । कृष्णावतारे बहुसहस्रस्त्रीभिः सह रममाणस्यापि न स्त्रीकृतकश्मलमिति सूचनाय वासुदेवग्रहणम्। हीत्यनेन 'निरनिष्टो निरवद्य' इति श्रुतिप्रसिद्धिं सूचयति ।। १३२ ।।

**वरद—** एतदेव विवृणोति— **न वा इति** ।। आत्मवतां धीराणां आत्मा स्वामी अधीश्वरो वासुदेवो भगवान् दुःखं न भुङ्क्ते हि यस्मात् तस्मात् स्त्रीकृतं सीताप्रकृतिवियोगजं कृतं कश्मलं नाश्नुवीत क्रोधादिदोषाभावादेव लक्ष्मणं च न जहात्यपि । अत्र दूर्वासाः द्वारि प्रवेशित इति कोपेन लक्ष्मणः परित्यक्त इति रामायणे कथास्ति सापि दुष्टमोहनार्थमेव प्रवृत्तेति भावः।। १३२ ।।

**जना—** स आत्मा परमात्मा दुःखं न भुङ्क्ते वै हि । आत्मवतां ज्ञानिनां अधीश्वर इत्यादिविशेषणत्रयं हेतुगर्भम् । तदेव स्फुटयति— **नेति** ।। १३२ ।।

**ताम्र—** आत्मवतां धीराणां सायुज्यभाजां वा । स्वरूपलाभवतां वा मुक्तेश्वरत्वोपपादनं वासुदेव इति ।। १३२ ।।

**यत्पादपङ्कजपरागनिषेवकाणां**
**दुःखानि सर्वाणि लयं प्रयान्ति ।**

---

१. भा. ५-१९-६ ।

**स ब्रह्मवन्द्यचरणो जनमोहनाय**
**स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ।। १३३ ।।**

**वरद—** इतोऽपि न रामस्य दुःखसम्भावनास्तीत्याह हनूमान्— **यत्पादपङ्कजेति** ।। यच्चरणपद्मरेणुसेवकानां प्राणिनां सर्वाणि दुःखानि नाशयन्ति तस्य कुतो दुःखसम्भावनापीत्यर्थः। तर्हि किमर्थं तथा प्रकाशितमित्यतः तथा प्रदर्शनस्य प्रयोजनद्वयमाह— **स ब्रह्मेति** ।। जनानां मोहनायेत्येकं प्रयोजनम् । स्त्रीसङ्गिनामिति रतिमित्युक्तप्रकारेण दुःखसाधनभूतां रतिं लोके प्रथयन्निति द्वितीयप्रयोजनमिति भावः ।। १३३ ।।

**जना—** पूर्वोक्तमर्थं हेतुपूर्वकमाह— **यदिति** ।। यत्पादसेवकानां दुःखानि नश्यन्ति । ब्रह्मवन्द्यचरणः स रामः जनमोहनाय स्त्रीसङ्गिनां रतिमित्यनेन प्रकारेणेति प्रथयन् चचार ।। १३३ ।।

**ताम्र—** अथ तत्पादपङ्कजेत्येतन्न हनुमद्वाक्यम् । नापि भागवतेऽन्यत्र प्रदृश्यते । किन्तु

[1]"रक्षोऽधमेन वृकवद्विपिने समक्षं वैदेहराजदुहितर्यपयापितायाम् ।
भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ।।'

इति नवमस्कन्धवाक्यस्य तात्पर्यकथनरूपमिति प्रतीयते ।। १३३ ।।

[2]**क्वचिच्छिवं क्वचिदृषीन् क्वचिद् देवान् क्वचिन्नरान्।**
**नमत्यर्चयति स्तौति वरानर्थयतेऽपि च ।। १३४ ।।**

**व्यास—** 'क्वचिच्छिवं' इति भारतवाक्यं भारतस्य भगवत्परत्वादिति ।। १३४ ।।

**सङ्क—** नन्वेवं शास्त्रान्तरवचनैरुक्तार्थनिर्णयकृतौ 'तथा प्रदर्शयिष्यामस्तद्वाक्यैः' इत्युक्तविरोध इति चेदुच्यते। प्रायिकत्वाभिप्रायेण तदुक्तिरिति न विरोध इति निरवद्यम् । व्यासवाक्यपर्यालोचनया श्रीविष्णोः सर्वोत्कर्ष एव

---

१. भा. ९-८-९३ । २. 'अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन । तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।। यद्यहं नार्चयेयं वै ईशानं वरदं वरम् । आत्मानं नार्चयेत्कश्चिदिति मे भावितात्मनः।। मया प्रमाणं हि कृतं लोकः समनुवर्तते । प्रामाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।। यस्तं वेत्ति स मां वेत्ति योऽनु तं सहि मामनु । रुद्रो नारायणश्चैव सत्वमेतं द्विधा कृतम् ।। न हि मे केनचिद्देयो वरः पाण्डवनन्दन । इति सञ्चिन्त्य मनसा पुराणं रुद्रमीश्वरम् ।। पुत्रार्थमाराधितवानहमात्मानमात्मना । न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च ।। ऋते आत्मानमेवेति ततो रुद्रं नमाम्यहम् । सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः।। अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ।। भविष्यतां वर्ततां च भूतानां चैव भारत। सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः। इति शान्तिपर्वणि (३५०अ/२३-३२) 'नास्ति मत्तोऽधिकः कश्चित्को वान्योऽर्च्यो मया स्वयम् ।' इति (शान्ति.३५५अ/२२)। तथैव 'देवतानां गुरूणाञ्च द्विजानाञ्च गुरुप्रियः। शास्त्रदृष्टेन विधिना भवत्याराधने रतः।। न च तस्यास्तिकर्तव्यं त्रिषु लोकेषु किञ्चन । नैवानाप्तमवाप्तव्यं वर्ततेऽथ च कर्मसु ।। सर्वज्ञः सर्वदर्शी च सर्वशक्तिरपि प्रभुः। तथाप्यधीते यजते तपस्तप्यति पार्थिव ।। मर्यादास्थापनार्थाय जगतो हितकाम्यया । करोति राजन्कर्माणि कीनाश इव दुर्बलः।। यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।। एतत्कारणमास्थाय सदा कर्मसु वर्तते । प्रादुर्भावकृतो विष्णुः यथान्यःप्राकृतस्तथा ।। देवेभ्यश्च ऋषिभ्यश्च वरान्प्रार्थयते सदा । वरांश्च वरदस्तेषां मानयत्यपि पाण्डव ।। प्रादुर्भावरतस्तस्मात्परोऽयमिति मानवाः। पुरुषं नाधिगच्छन्ति मोहितास्तस्य मायया । स्वतन्त्रता च सर्वत्र नात्र कार्या विचारणा ।।' इति विष्णुधर्मोत्तरे (१खं/१७२अ/१८-२३) ।

भारतस्य तात्पर्यमस्तीत्याह— **क्वचिदित्यादिना** ।। अस्मिन्वाक्ये सर्वशास्त्राणां विष्णुमहिमैकविषयत्त्वोक्त्या भारतस्यापि श्रीविष्णोः सर्वोत्कर्ष एव महातात्पर्यमस्तीति सिद्ध्यति । भारतस्यापि सर्वशास्त्रान्तर्गतत्वादिति भावः। विष्णोः सदोषत्वेन तन्महिम्नः कथं सर्वशास्त्रोदितत्वमिति शङ्कानिवृत्यर्थं क्वचिदित्यादिनिर्दोषकथनम् ।। १३४ ।।

**वरद—** एतत् भागवतोक्तमेव समाख्यावाक्येनापि द्रढयति— **क्वचिच्छिवमित्यादिना** ।। नमतीत्यादिकं क्वचिच्छिवमित्यादौ सर्वत्र प्रत्येकं सम्बध्यते ।। १३४ ।।

**जना—** क्वचिच्छिवमिति भारतवाक्यम् । वरानर्थयते प्रार्थयते शिवादिभ्यः।। १३४ ।।

**ताम्र—** क्वचिच्छिवमिति भारतवाक्यम् ।। १३४ ।।

**लिङ्गं प्रतिष्ठापयति वृणोत्यसुरतो वरान् ।**
**सर्वेश्वरः स्वतन्त्रोऽपि सर्वशक्तिश्च सर्वदा ।**
**सर्वज्ञोऽपि विमोहाय जनानां पुरुषोत्तमः'।। १३५ ।।**

**वादि—** मदान्धाभ्यां मधुकैटभाभ्यां वरं वृणीष्वेति पृष्टः कृष्णः युवयोर्हन्ताऽहं स्यामिति वरं जग्राह किल । दत्तस्यान्यथाभावे स्वमहिमान्यूनः स्यादिति भिया ताभ्यां तथैवास्त्वित्युक्तकथासङ्ग्रहाय 'वृणोत्यसुरतो वरान्' इत्युक्तम् ।। १३५ ।।

**वरद—** असुरतः असुराभ्यां मधुकैटभाभ्यां युद्धेन तुष्टाभ्यां वरान् युवयोः जेता हन्ता च भवामीति वरं अवृणोदिति च मार्कण्डेयपौरणिकी कथा अत्रानुसन्धेया । विमोहायेत्यत्र हेतुः सर्वेश्वर इत्यादि ।। १३५ ।।

**जना—** असुरतः असुराभ्यां मधुकैटभाभ्यां युद्धेन तुष्टाभ्यां वरान् युवयोर्जेता हन्ता भवामीत्यादिवरानवृणोदिति च मार्कण्डेयपौराणिकीकथानुसन्धेया । तदुक्तं देवीमाहात्म्ये

> [1]'तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ।
> विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ।।
> [2]तथा तावप्यतिबलोन्मत्तौ मायाविमोहितौ ।
> उक्तवन्तौ वरोन्मत्तौ व्रीयतामिति केशवम् ।।' इति ।

तथा

> [3]'भवतामद्य मे तुष्टौ मम वध्यावुभावपि ।
> किमन्येन वरेणात्र एतावद्धि वृतं मया ।।'

तथा

---

१. मा.पु. ७८-५० । २. मा.पु. ७८-७३ । ३. मा.पु. ७८-७४ ।

[1]"प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वन्मृत्युरावयोः।
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ।।' इति ।

भारते अरण्यपर्वणि च –

[2]"प्रतिगृह्णे वरं वीरावीप्सितं च वरो मम ।
युवां च वीर्यसम्पन्नौ न वामस्ति समः पुमान् ।।
वध्यत्वमुपगच्छेता मम सत्यपराक्रमौ ।।' (२०६/२७–२८) इति ।

अशक्तत्वादिदं करोतीत्याशङ्क्य सर्वैश्वर्यादिगुणयुक्तत्वान्नाशक्ततेत्युत्तरमभिप्रेत्य तदनुवादपूर्वकं नमनादिप्रयोजनमाह— **सर्वेश्वर इति** ।। जनानां विमोहनाय नमनादिकं करोतीति शेषः।। १३५ ।।

**ताम्र**— मधुकैटभाभ्यां युद्धे प्रसन्नाभ्यां वरस्वीकारात् 'वृणोत्यसुरतो वरान्' इत्युक्तम् । तदुक्तं सभापर्वणि –

[3]"अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ दैवं नारायणं परम् ।।
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युराहवे ।
आवां जहि न यत्रोर्वी जलेन समभिप्लुता ।।' इति ।

बलेर्भूप्रार्थनाद्वा वृणोत्यसुरत इत्युक्तम् ।। १३५ ।।

**भारतश्री**— असुरतः बल्यादिभिः । असुराः असुषु इन्द्रियेषु रताः प्रेरकत्वेन देवाः असुराः । असौ मुख्यप्राणे रताः इति वा । 'मद्वशानामसुरत्वमेवम्' इति श्रुतेः ।। १३५ ।।

**तस्माद् यो महिमा विष्णोः सर्वशास्त्रोदितः स हि ।**
**नान्यदित्येष शास्त्राणां निर्णयः समुदाहृतः ।। १३६ ।।**

**वादि**— यो विष्णोर्महिमा स एव सर्वशास्त्रोदितः अन्यत् नरविडम्बनायासुरमोहार्थं च कृतम् । यत्स्वमहिमविरोधिकैलासयात्रादिचरित्रं तत् शास्त्रतात्पर्यविषयतयोदितं न । हरिणा कृतत्वात् तदपि शास्त्रे क्वचित् क्वचित् शास्त्रकृतो वर्णयन्ति । तथाऽप्यसौ विष्णोर्महिमाविरोधित्वात् शास्त्रतात्पर्यविषयभूतो नेति भावः ।। १३६ ।।

**वरद**— एवं पृथक् ग्रन्थेषु विचार्यमाणेषु अयं निर्णयः सम्पन्न इत्याह— **तस्मादिति** ।। १३६ ।।

**जना**— उपसंहरति— **तस्मादिति** ।। यत एवं तस्माद्यः विष्णोर्यो महिमा । स हि स एव । सर्वशास्त्रोदितः अन्यद्दोषादि न इत्येषः शास्त्राणां निर्णयः निश्चयः सम्यगुक्तः।। १३६ ।।

**ताम्र**— भारतस्य भगवत्परत्वं प्रसाध्य सिद्धमर्थमाह— **तस्मादिति** ।। सकलशास्त्रनिर्णयात्मकभारतस्य भगवत्परत्वादित्यर्थः ।। १३६ ।।

---

१. मा.पु. ७८–७६ । २. म.भा. वनपर्वणि २०६–२७,२८ । ३. म.भा. सभापर्वणि ४४–२२,२३ ।

**भारतार्थस्त्रिधा प्रोक्तः स्वयं भगवतैव हि ।**
**मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथा परे ।**
**तथोपरिचराद्यन्ये भारतं परिचक्षते ।। १३७ ।।**

**व्यास**— मन्वादिप्रतीतेः कथं भगवत्परत्वमित्यतः तदर्थं वक्तुमनुवदति— **भारतार्थ इति** ।। १३७।।

**वादि**— प्रकारान्तरेणापि भारतार्थत्रैविध्यं वक्तुमुपक्रमते— **भारतार्थ इति** ।। 'मन्वादि केचिद् ब्रुवत' इति श्लोकस्यापाततः प्रतीयमाना मनव आस्तीकाख्यो ऋषिरुपरिचराख्यो वसुश्च नार्थः। मनूनां प्रसङ्गस्यैव भारतेऽभावात् । आस्तीकोपरिचरवस्वोश्च सर्पयागविघ्नकरणाय सत्यवत्युत्पत्तये चाादिपर्वण्यादिभागे एकैकाध्यायमात्रेण प्रसञ्जनेऽप्यादिपर्वण्यप्यन्ते प्रसञ्जनाभावेन सकलभारतप्रतिपाद्यत्वस्य सुतरामयोगात् । तस्मात्

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।।'

इति भारत एवोक्तत्वात्, उपरि सर्वेषामुपरि चरतीति उपरिचरः सर्वोत्तमो नारायणः। तस्यैव स्वरवर्णपद-वाक्यात्मकसकलभारतग्रन्थेन परममुख्यया वृत्त्या वाक्यात्मकसकलभारतग्रन्थेन परममुख्यया वृत्त्या प्रतिपादनमुचितम् ।

'चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यते' इति वचनात् वैष्णवाग्रेसराणां पाण्डवानां द्रौपद्याश्च कथापि तदनन्तरं कथनार्हा । दृश्यते च तेषामेवोत्पत्त्यादिकमपि सर्वत्र भारते 'विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुतेः 'भक्तिरेवैनं नयति', 'भक्त्या त्वनन्यया शक्यः', 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत, 'वेदा ह्येवैनं वेदयन्ति' इत्यादिवचनेभ्यः धर्माचरणस्य भक्तिवैराग्यादिगुणानां श्रवणादीनां गुरूपसत्यादिविनयानां वेदस्य च तेषामेव वैष्णवानां तस्यैव विष्णोः साक्षात्कारप्रसादादावङ्गत्वम् । तद्वन्दनमपि तेषामेवोपकाराय कर्तुमुचितम् । एवं मुख्यतो हरेस्तदनन्तरं पाण्डवानां तथा धर्मस्य भक्त्यादिगुणानां चोत्कीर्तनमेव न्यायप्राप्तम् । क्रियते च सभापर्वाश्वमेधिकपर्वादिषु राजसूयाश्वमेधिकपर्वादिषु राजसूयाश्वमेधादिधर्माणां प्रसङ्गः प्रशंसा । तत्रापि हरेरग्रपूजया कृष्णे निरुपचरिता भक्तिश्च श्रूयते । क्वचित्क्वचित् श्रवणमननादीनां कर्तव्यता चोच्यते । समृद्धराज्यपरित्यागेन वैराग्यं सत्यपरिपालनं मार्कण्डेयादिऋषिभ्यो भगवत्कथायाः सद्धर्माणां च श्रवणमननादिकमप्यारण्यकपर्वादौ श्रूयते । ज्येष्ठानुवृत्त्या विनयादिकमपि तत्र तत्रोच्यते । तस्मादेतस्य श्लोकस्यैवं योजना । मीयते प्रमीयते एभिः परमात्मेति मनवो धर्मा भक्त्यादिदशकं श्रुतादिः शीलविनयौ वेदाश्चेति मनुपदवाच्यं पञ्चकं यत्र यत्र प्रस्तूयते तस्मिंस्तस्मिन्नंशे धर्माभिमानित्वान्मनुपदवाच्यो धर्मराजः। भक्त्यादिदशगुणाभिमानित्वा-न्मनुपदवाच्यः श्रीभीमसेनः। श्रुताभिमानित्वान्मनुपदवाच्योऽर्जुनः। शीलविनयाभिमानित्वान्मनुपदवाच्यौ नकुलसहदेवौ । वेदाभिमानित्वान्मनुपदवाच्या द्रौपदी चेति पञ्च आदयस्तेन तेनांशेनादीयमानत्वादादयः प्रतिपाद्या यस्य तन्मन्वादि । अनया व्युत्पत्या भारतं मन्वादि केचिद् ब्रुवते । अभिमन्यमानकथनव्याजेन तदभिमानिनां पञ्चपाण्डवानां द्रौपद्याश्च स्तुत्यर्थं भारतं प्रवृत्तमिति वदन्तीति भावः।

आस्तीका अस्ति परदेवता, अस्ति परलोक इति सदा जानन्तः पाण्डवा द्रौपदी चास्तिका इत्युच्यन्ते । आस्तिका एव आस्तीका । आस्तिकेभ्यो मनुमुन्यादिभ्योऽप्यतिशयेनास्तिका इति सूचनाय दीर्घः। धर्मादिकमनन्तर्भाव्य केवलमास्तिकान् पाण्डवानेव पुरस्कृत्य तदुत्पत्तितच्चरित्रतत्कृतयुद्धादिकं च यत्र बहुशो वर्ण्यते तदास्तीकादि । उक्तविधयास्तीका द्रौपदीसहिताः पञ्चपाण्डवा आदयः प्रतिपाद्या यस्य तदास्तीकादि । धर्मादिकमनन्तर्भाव्य परमास्तिकशिरोमणित्वात् पुण्यश्लोकाः पाण्डवा एव बहुशो वर्णनीया इति ग्रन्थकर्तुर्ग्रन्थस्य च यत्राभिसन्धिस्तत्सर्वप्रकरणमास्तीकादीत्युच्यत इति भावः । सकलं भारतमन्यद्वारा वा स्वातन्त्र्येण वा परमवैष्णवपाण्डवप्रशंसार्थं प्रवृत्तमिति हृदयम् । सर्वोत्तमत्वादुपरिचरनामा महाविष्णुरेवादिमध्यावसानेषु आदिः प्रतिपाद्यो यस्य तदुपरिचरादीत्यर्थः । अत्र परममुख्यया वृत्त्या स्वरवर्णपदवाक्यात्मकसकलभारतेष्वपि विष्णुप्रतिपादकत्वस्याभिप्रेतत्वात्। 'पाठक्रमादर्थक्रमो ज्यायान्' इति न्यायेन चरमोक्तमपि विष्णुप्रतिपादकत्वमेव सर्वस्मादपि मुख्यतोऽभिमतम् । मध्योक्तं केवलपाण्डवप्रतिपादकत्वं मध्यमाभिमतम् । आदावुक्तमपि अन्यद्वारा क्वचिद्भागे प्रतिपादनं त्वमुख्यमिति विवेको ज्ञेयः ।। १३७ ।।

**सङ्क—** 'तस्माद्विष्णोर्महिमा' इत्यादिना योऽर्थस्समाहितः स कथमित्यत आह— **भारतार्थ इति** ।। केचिद् भारतं मन्वादीतिसंज्ञितार्थप्रतिपादकं व्याकुर्वन्ति । तथाऽन्ये औपरिचरादीतिसंज्ञितार्थप्रतिपादकं परिचक्षते व्याकुर्वन्तीत्यर्थः ।। १३७ ।।

**वरद—** तत्रापि भारतस्य भगवदेकनिष्ठत्वात् सर्वशास्त्रोत्तमत्वं यदुक्तं तदुपपादयितुं भारतप्रतिपाद्यमर्थत्रयमाह — **भारतार्थ इति** ।। तान्येव भारतवाक्यानि पठति— **मन्वादीति** ।। केचित् व्याख्यातारो भारतं मन्वादीति ब्रुवते मन्वादिसञ्ज्ञकार्थप्रतिपादकं व्याचक्षते । अपरे च भारतं आस्तीकादि ब्रुवते आस्तिकादिसञ्ज्ञकार्थप्रतिपादकं व्याकुर्वन्ति । अन्ये च भारतं उपरिचरादिति परिचक्षते । तत्सञ्ज्ञकार्थप्रतिपादकं व्याचक्षते इत्यर्थः।। १३७ ।।

**जना—** ननु भारतं विष्णुपरं चेत्तत्रैव मन्वादिपरत्वेन कथमुच्यते इत्यतस्तद्वाक्यार्थं वक्तुमनुवदति— **भारतार्थ इति** ।। यद्वा भारतं विष्णुपरं चेत्कथं धर्मादिपाण्डवादिप्रतिपादकमित्यत आह— **भारतार्थ इति** ।। अन्ये उपरिचरादिभारतं परिचक्षते इति स्वयं भगवता व्यासेन त्रिधा प्रोक्त अधिकारिभेदेन त्रिविधार्थवत्वमित्यर्थः। 'भारतं ननु दशार्थः' इत्यन्यत्र दशार्थस्य कथनात् ।। १३७ ।।

**ताम्र—** नन्वेवं भारतस्य भगवत्परत्वे तथा कुतो न प्रतीयते । यदि भाषात्रयात्मकत्वादप्रतिपत्तिः तर्हि कथं तत्प्रत्यय इत्यतस्तदर्थविभागपूर्वं तद्धानोपायं वदन्सर्वेषामप्यप्रतीतौ निमित्तमाह— **भारतार्थ इत्यादिना** ।। वक्तुर्याप्तिप्रदर्शनाय भगवतेत्युक्तम् । भगवत्प्रोक्तमपि शैवपुराणं न विश्वसनीयमित्यत उक्तम्— **स्वयमिति** ।। येन नष्टधर्मज्ञानलोककृपालुना तदुद्धारार्थं भारतं कृतं तेन स्वयं मूलकृतैव तदर्थविज्ञप्तयेऽर्थ उक्तः। न चैवं पुराणादेरर्थ उक्तस्ततो भगवत्कृतमपि न विश्वसनीयमिति भावः। भगवद्वचनानि पठति— **मन्वादीति** ।। केचिद्व्याख्यातारो भारतं मन्वाद्यर्थमुक्तं ब्रुवत इति योजना । मन्वादिसञ्ज्ञिकार्थयुक्तत्वेनैव व्याख्यानं कुर्वन्तीति

भावः। व्याख्यातृभेदकथनं तु न सर्वैरप्यर्थत्रयं ज्ञातं किन्तु एकैकोऽर्थः कैश्चित्कैश्चिदेव अर्थत्रयज्ञानस्य दुर्लभत्वादिति सूचयितुम् । ननु 'नारायणस्य नामानि' इत्यादिवक्ष्यमाणरीत्या पदसमन्वयलभ्योपरिचरार्थज्ञाने ऋजूना-मेवाधिकारित्वात् तैश्चेतरार्थद्वयस्य विज्ञानात् 'औपरिचराद्यन्ये' इति अन्यशब्दप्रयोगायोग इति चेत् तैरितरार्थज्ञानेऽपि इतरेषामौपरिचरार्थज्ञानाभावात् तद्विवक्षयान्य इत्युक्त्युपपत्तेः। यद्वा औपरिचरार्थेऽप्यमुख्यतया ऋज्वन्येषा-मप्यधिकारोऽस्त्येव ।

"[1]महासमन्वये तस्मिन्नधिकारोऽखिलस्य च ।
ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् ।।'

इति वचनात्। तथा च तादृशसर्वाधिकारिविवक्षयान्य इत्युक्तं न ऋजुमात्रविवक्षया । तथा मन्वाद्यर्थव्याख्यतृत्वेऽपि तथोपासनाद्यभावमादाय केचिदित्याद्युक्तिः। ननु मन्वादीत्यादौ मन्वाद्यास्तिकाद्यौपरिचरादीति सञ्ज्ञाविशेषः उत मनुरादिर्यस्येत्यादिशब्दस्य मुख्यार्थत्वम् । नाद्यः 'तमास्तीकं प्रचक्षते' 'तमौपरिचरं विदुः' इत्यत्रादिशब्दत्यागायोगात्। न द्वितीयः 'सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः' इत्येकमर्थमुक्त्वा आदिपदोक्तार्थानुक्त्ययोगादिति चेत् । 'मन्वादि' इत्यर्थविशेषसञ्ज्ञा 'तमास्तीकं प्रचक्षते' इत्यादौ नामैकदेशग्रहणम् । यद्वा आदिशब्दस्य प्रमुखार्थत्वमस्तु। सकृष्णान् पाण्डवान् गृह्य प्रवृत्तार्थ आस्तीकः। द्रोणद्रौणिकृपकर्णदुर्योधनादीन् प्रगृह्य शकुन्तलासावित्र्यादीन् प्रगृह्य योऽर्थः स आदिपदोक्तः। भीमादीनां भक्त्यादिरूपोऽर्थो मनुः। दुर्योधनादीनामज्ञानादिरूपोऽर्थः आदिपदोक्तः। अन्यथा 'अज्ञानादिस्वरूपस्तु कलिर्दुर्योधनस्स्मृतः' इत्याद्यसङ्गतेः। सर्ववचनानां नारायणनामार्थत्वादौपरिचरः। स्वरघोषादीनां भगवत्सामर्थ्यरूपोऽर्थ आदिपदोक्तः। अत एव भारतार्थस्त्रय इत्यनुक्त्वा त्रिधेत्युक्तमिति ।। १३७ ।।

**सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्तते ।**
**प्रातिलोम्यादिवैचित्र्यात् तमास्तीकं प्रचक्षते ।। १३८ ।।**

**व्यास**— अर्थमाह— **सकृष्णानिति** ।। १३८ ।।

**वादि**— एतदेवात्र विशदयति— **सकृष्णानित्यादिना** ।। प्रातिलोम्यादिवैचित्र्यात् उपरि वक्तव्यस्यापि प्रमेयस्य प्रसङ्गात् प्राक्कथनम् । क्वचिदादौ वक्तव्यस्यापि प्रमेयस्य वक्ष्यमाणप्रमेयसङ्गतत्वात्पश्चात्कथनं प्रातिलोम्यम् । क्वचिदर्जुनादिकृतस्यापि चरित्रस्य प्राधान्यात् भीमादिकृतत्ववर्णनं व्यत्यासः। इदमादिपदेन सङ्गृह्यते । एतदादिवैचित्र्यात् सकृष्णान् कृष्णया द्रौपद्या सहितान् पाण्डवान् गृह्यानन्योपाधिकतया परिगृह्येत्यर्थः ।। १३८ ।।

**सङ्क**— के ते मन्वाद्यास्तीकाद्यौपरिचरादिसञ्ज्ञितभारतार्था इत्याकाङ्क्षायां आस्तीकादिसञ्ज्ञमर्थं प्रथमतो दर्शयति— **सकृष्णानिति** ।। अनुलोमतो वक्तव्यार्थस्य पश्चात्कथनं पश्चात्कथनीयस्यार्थस्य प्रथमतः कथनं प्रातिलोम्यादिवैचित्र्यमित्यर्थः ।। १३८ ।।

---

१. अनु. ३-३-१२२९ सर्ववेदान्तप्रत्ययाधिकरणम् ।

**वरद**— 'के ते त्रयोऽर्था' इत्यतोऽनन्तरमुद्दिष्टस्याप्यास्तीकाद्यर्थस्य शब्दशक्त्या प्रथमप्रतीतेरितरयोरर्थयोः तदधीनप्रतीतत्वेन प्राधान्यात् प्रथमतस्तमाह— **सकृष्णानिति** ।। कृष्णेन सह वर्तमानान् पाण्डवान् गृह्य अधिकृत्य योऽयमर्थः प्रवर्तते शब्दशक्त्यैव सर्वसाधारण्येन प्रतीयते तत्रापि विशेषोऽस्तीत्याह— **प्रातिलोम्यादिवैचित्र्यादिति** ।। व्यत्यासप्रातिलोम्यादिगोमूत्र्यादिसप्तप्रकारभेदादित्यर्थः। तत्रापि पुरुषकालादिभेदेन व्यत्यासादेव बहुप्रकारत्वमत्रैव ग्रन्थे भगवत्पादैर्लेशतो दर्शितम्। प्रातिलोम्यादिभेदेनापाततः प्रतीयमानो योऽर्थस्तमास्तीकसञ्ज्ञकामाचक्षत इति भावः।। १३८ ।।

**जना**— तदर्थमाह— **सकृष्णानिति** ।। प्रातिलोम्यं पश्चात्कथनीयस्य पूर्वं कथनं प्रातिलोम्यम् । भीमेन हता इति वक्तव्येऽर्जुनेन हता इति पुरुषव्यत्यास इत्यादि विचित्रप्रकारेण योऽयमर्थः प्रवर्तते तमास्तीकं प्रचक्षते ।। १३८ ।।

**ताम्र**— के ते त्रयोऽर्था इत्यत आह— **सकृष्णानिति** ।। भारतार्थः सङ्क्षेपतो द्विविधः। वाक्यसमन्वयेन पदसमन्वयेन । तत्र पदसमन्वयलभ्यौपरिचरार्थस्य दुर्विज्ञेयत्वेन पश्चादुक्तिः। वाक्यसमन्वयलभ्योऽर्थोऽपि द्वेधा । बाह्याध्यात्मभेदात् । तत्रास्तिकार्थस्य बाह्यत्वात् अत एव सुज्ञेयत्वाच्च प्रथमं तत्स्वरूपोक्तिः अध्यात्ममन्वाद्यर्थस्याशक्यप्रतिपत्तिकस्य पश्चादुक्तिरिति ज्ञेयम् । उद्देश्यसमये प्रथमं मन्वाद्यर्थोद्देशस्तु आस्तिकात् प्राधान्यविवक्षयेति । प्रातिलोम्यादीति

'व्यत्यासः प्रातिलोम्यं च गोमूत्री प्रघसस्तथा ।
उक्षणस्सुधुरस्साधुः..........................।।'

इति च वक्ष्यमाणप्रातिलोम्यादिवैचित्र्यात् । प्रातिलोम्यं नाम अनुमतो वक्तव्यार्थस्य पश्चात् कथनीयार्थस्य प्रथमकथनम् ।। १३८ ।।

**भारतश्री**— त्रीनर्थानाह— **सकृष्णानित्यादिना** ।। प्रातिलोम्यादिवैचित्र्यात् 'व्यत्यासः प्रातिलोम्यं च' इत्याद्युक्तसप्तभेदादित्यर्थः ।। १३८ ।।

**धर्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ ।**
**सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः ।। १३९ ।।**

**व्यास**— ब्रह्म कृष्णः। यत्र सब्रह्मकास्तु प्रतिपाद्यन्ते तदा धर्म इत्यादि योजना । यदा युधिष्ठिर इति तदा धर्मः। यदा भीम इति तदा भक्त्यादिदशक इति । श्रुतं श्रवणं यदा तदार्जुन इति । यदा नकुलसहदेवाविति तदा शीलवैनयाविति । यदा कृष्ण इति तदा तद्ब्रह्मेति प्रतिपत्तव्यमित्यर्थः ।। १३९ ।।

**वादि**— **धर्मो भक्त्यादिदशक** इत्यत्र धर्माभिमानी युधिष्ठिरः। भक्त्यादिदशक इत्यनेन भक्तिज्ञानवैराग्यादि-शोभनगुणानामभिमानी परमभक्ताग्रेसरो भीमः कथ्यते । श्रुतादिः श्रीकृष्णमुखादेव सकलशास्त्रार्थनिर्णयरूप-

गीताश्रवणात् मननाच्च श्रुताभिमानी अर्जुनः। शीलवैनयौ शीलविनयाभिमानिनौ नकुलसहदेवौ । सब्रह्मकाः वेदाभिमानिद्रौपदीसहिता इत्यर्थः ।। १३९ ।।

**सङ्क**— मन्वादिसञ्ज्ञितमर्थमाह— **धर्म इति** ।। श्रुतादिरित्यनेन श्रवणमनननिदिध्यासनादिकमुच्यते ।। १३९ ।।

**वरद**— मन्वादिसञ्ज्ञार्थमाह— **धर्म इति** ।। धर्मो निवृत्तिधर्मः। भक्त्यादिदशको वक्ष्यमाणः। श्रुतं श्रवण-मादिर्यस्य मननादेः असौ तथोक्तः। शीलं स्वभावः। वैनयो विनयः। के ते धर्मादिपदार्था इत्यतस्तदभिमानिनो ब्रह्माद्या एवेत्याह— **सब्रह्मका इति** ।। एवमध्यात्मप्रतीयमानो योऽर्थस्तं मन्वादिसञ्ज्ञं बुधा ज्ञानिनो विदुरित्यर्थः ।। १३९ ।।

**जना**— भक्त्यादिदशकः भक्तिज्ञानवैराग्यमित्यादि । श्रुतादिः श्रवणमनननिदिध्यासनादयः। शीलः स्वभावः। वैनयः विनयता । यत्र भारते यस्मिन् प्रदेशे प्रतिपाद्यन्ते तं मन्वादिं विदुः ।। १३९ ।।

**ताम्र**— ।। **धर्म इति** ।। उपलक्षणमेतत् । विद्या चेति ग्राह्यम् । यत्र ते सकृष्णाः पाण्डवाः प्रतिपाद्यन्ते । तत्र सब्रह्मकाः धर्मः भक्त्यादिदशकः श्रवणमनननिदिध्यासनानि सौशील्यविनयौ विद्या चेति प्रतिपत्तव्याः इतीममर्थं मन्वादिं बुधा विदुरित्यर्थः । यदा कृष्ण इति तदा ब्रह्मेति यदा युधिष्ठिर इति तदा धर्म इति । युधिष्ठिरस्य यमत्वात्तस्य धर्माभिमानित्वात् । यदा भीम इति तदा भक्त्यादिरिति। यदार्जुन इति तदा श्रुतादिरिति । तस्येन्द्रत्वात् तस्य तदभिमानित्वात् । यदा नकुलसहदेवाविति तदा शीलविनयाविति । तयोरश्विनत्वात् तदभिमानित्वात् । यदा द्रौपदीति तदा विद्येति प्रतिपत्तव्यमिति भावः ।। १३९ ।।

**भारतश्री**— धर्मो निवृत्तः। भक्यादिदशको वक्ष्यमाणः । श्रुतं श्रवणं आदि मननम् । शीलं स्वभावः । वैनयो विनयः ।। १३९ ।।

**राम**— 'धर्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ । सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः' इत्यत्र भक्त्यादिदश के इत्यत आह— **भक्तीति** ।। अत्र वायोर्भक्त्यादिदशात्मकत्वात् भीमस्यापि तद्दशात्मकत्वं इत्युक्तम् । ननु बृहद्भाष्ये –

[१]''प्राणस्सूत्रं महान् ब्रह्म चित्तं वायुर्बलं धृतिः ।
स्थितिर्योगश्च च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ।।
मेधा मुक्तिर्विष्णुभक्तिः आदिगोपो महाप्रभुः ।
ऋजुः समानो विज्ञाता महाध्याता महागुरुः।।
हनूमान् भीम आनन्द इत्यादि बहुरूपिण ।।'

इति प्राणादित्रयोविंशत्यात्मकत्वं उच्यते । अत्र भक्त्यादिदशात्मकत्वमात्रं कथमिति चेत् उच्यते । प्राणादित्रयो-विंशत्यात्मकत्वे सत्यपि तन्मध्ये भक्त्यादिदशवाय्वंशैरेव भीमस्य उत्पत्तिरित्यङ्गीकारात् तद्दशात्मकत्वमिति । यद्वा दशशब्दो अत्र त्रयोविंशतिसङ्ख्यावाचकः । 'शब्दःशतं दशसहस्रं' इति 'शब्दो बहुत्ववचनः शतमित्यतश्च

१. बृ.भा. ३-५, अव्याकृतब्राह्मणम् ।

श्रुत्यन्तरेषु बहुधोक्तिविरुद्धता न' इत्युक्तेः । ननु अत्र भीमस्य अनेकांशसंश्लेषेण उत्पत्तिरुक्ता तत्कथमिति चेत् उच्यते । केषाञ्चित् कृष्णादिरूपाणां यथा अनेकांशसंश्लेषेण अभिव्यक्तिकथनं तथा भीमस्यापीति । तदुक्तम्–

'अतीतेन्द्रा एव ते विष्णुषष्ठाः पूर्वेन्द्रोऽसौ यज्ञनामा रमेशः ।
स वै कृष्णो वायुरथ द्वितीयः................................।।' इति।

'त्रिकोटिरूपसंयुक्तः त्रेतायां राक्षसान्तकः ।
हनूमान् इति विख्यातो रामकार्यधुरन्धरः ।।
स एव भीमसेनोऽभूत् द्वापरान्ते कुरूद्वहः ।
कृष्णं सम्पूजयामास हत्वा दुर्योधनादिकान् ।।
बादरायणसेवार्थं बदर्यां च कलौ युगे ।
यतिरूपधरो वायुः भविष्यति न संशयः।।' इति ।। १३९-१७७ ।।

इति श्रीमन्महाभारततात्पर्यभावविवृतौ
श्रीवासुदेवयतिपूर्वाश्रमतनुजरामकृतौ द्वितीयोऽध्यायः

**नारायणस्य नामानि सर्वाणि वचनानि तु ।**
**तत्सामर्थ्याभिधायीनि तमौपरिचरं विदुः ।। १४० ।।**

**वादि**— सर्वाणि वचनानीत्यत्र वचनानि भारतवचनानि ।। १४० ।।

**सङ्क**— औपरिचरादिसञ्ज्ञितमर्थमाह— **नारायणस्येति** ।। १४० ।।

**वरद**— औपरिचराद्यर्थं दर्शयति— **नारायणस्येति** ।। पदवर्णस्वरसमन्वयेन सर्वाणि वचनानि नारायणस्य नामानि सम्पाद्य तस्य नारायणस्य सामर्थ्याभिधायकानीति योऽयमर्थः तमौपरिचरं विदुरित्यर्थः ।। १४० ।।

**जना**— तत्सामर्थ्याभिधायीनि वचनानि यत्र यस्मिन् भारतप्रदेशे प्रतिपाद्यन्ते तमौपरिचरं विदुः।। १४० ।।

**ताम्र**— ।। **तत्सामर्थ्याभिधायीनीति** ।। यौगिकत्वादिति भावः ।। १४० ।।

**भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः ।**
**योगः प्राणो बलं चैव वृकोदर इति स्मृतः ।। १४१ ।।**

**व्यास**— भक्त्यादिदशकः कः यो वृकोदरपदेन प्रतिपत्तव्यः इत्यत आह— **भक्त्यादीति** ।। १४१ ।।

**वादि**— भक्त्यादिदशकं किमित्यत आह— **भक्तिरिति** ।। मेधा श्रुतस्य धारणम् ।। १४१ ।।

**सङ्क**— एवं त्रिधा अर्थत्वकथनेनामुख्यप्रसिद्धार्थपरत्वं निरस्य श्रीविष्णुपरत्वं समर्थितम् । अधुना भक्त्यादिदशक इत्युक्तं विवृण्वन् तमेव मुख्यार्थं प्रकटयन्नाह— **भक्तिरित्यादिना** ।। यथा वृकोदर उच्यते तथा तदध्यात्मनिष्ठभक्त्यादयो निरूपिता इति ज्ञातव्यमित्यर्थः।। १४१ ।।

**वरद**— तत्र आस्तिकाद्यर्थस्य मनुष्योत्तमसाधारणत्वेऽपि बोद्धुं शक्यत्वादौपचाराद्यर्थस्य सर्वाधिकारित्वात्। मन्वाद्यर्थस्य तु सर्वाधिकारित्वेन दुर्बोधत्वेन च तमेव लेशतः स्पष्टयितुमाह— **भक्तिर्ज्ञानमिति** ।। भक्त्यादिदशक इत्युक्तस्य इदं व्याख्यानम् । अत्रायमाशयः। यस्मिन् प्रकरणे वृकोदर उच्यते तत्र भक्त्यादिकं प्रतिपादितमिति ज्ञातव्यम् । वायोर्भक्त्यादिनियामकत्वेन तदात्मकत्वात् वृकोदरस्य च वायुरूपत्वात् । यदा द्रौपदीप्रसङ्गः तदा सर्वविद्या प्रतिपादितेति ज्ञातव्यम् । सरस्वत्याः सर्वनियामकत्वेन तदभिमानित्वात् द्रौपद्याश्च सर्वविद्याभिमानित्वेन सरस्वतीरूपत्वात् । एवं यदा युधिष्ठिरार्जुनादिप्रसङ्ग उच्यते तदा धर्मश्रवणमननादिकमुक्तमिति ज्ञातव्यम् । यमादीनां धर्मादिनियामकत्वात् युधिष्ठिरादीनां च तदवतारत्वात् । यदा तु दुर्योधनप्रसङ्गः तदा द्वेषाज्ञानवैषम्यादि-दशकमुक्तमिति ज्ञातव्यम् । कलेरज्ञानादिरूपत्वात् दुर्योधनस्य च कलिरूपत्वात् । यत्र दुःशासनप्रसङ्गः तत्र विपरीतं ज्ञानं उच्यत इति ज्ञातव्यम् । दुःशासनस्य विपरीतज्ञानात्मकत्वात् । यत्र तु शकुनेः प्रसङ्गः तदा नास्तिक्य-मुक्तमिति ज्ञातव्यम् । तस्य तदात्मकत्वात् यदा तु परेषां धार्तराष्ट्राणां विकर्णादीनां प्रसङ्गः तदा सर्वदोषा उच्यन्त इति ज्ञातव्यम् । तेषां सर्वदोषात्मकत्वात् यदा तु द्रौणिरुच्यते तदाहङ्कारतत्त्वमुक्तमिति ज्ञातव्यम् । रुद्रस्या-हङ्कारात्मकत्वात् । द्रौणेश्च तदवतारत्वात् । यदा तु द्रोणादीनां कथा तदाध्यात्मं इन्द्रियाण्युक्तानीति ज्ञातव्यम् । बृहस्पत्यादीनां इन्द्रियात्मकत्वात् द्रोणादीनां तदवतारत्वात् । यदा तु उक्तेभ्यो दुर्योधनादिभ्यो अन्ये सैनिकाः सेनासम्बन्धिन अभिधीयन्ते तदा पापान्युक्तानीति ज्ञातव्यं तेषां तदभिमानित्वात् । यदा तु पाण्डवेयाः पाण्डव-सम्बन्धिनो राजान उच्यन्ते तदा पुण्यादि उक्तानीति ज्ञातव्यम् । तेषां तदभिमानित्वात् । यदा तु तेषां पाण्डवानां नियन्ता कृष्णः उच्यते तदा ब्रह्मादिनियामको विष्णुरुक्त इति ज्ञातव्यम् । कृष्णस्य तदात्मकत्वात् ।। १४१ ।।

**जना**— मन्वादिशब्दव्याख्याने धर्म इत्याद्युक्तम् । धर्मादीनां विशेषतः प्रतिपादनाभावात्कथं मन्वादिमिति व्याख्यातमित्यतः धर्मादिशब्दैर्युधिष्ठिराद्याः वाच्यास्तत्प्रतिपादकं भारतमिति प्रसिद्धमिति समाधानं मनसि निधाय युधिष्ठिरस्य धर्माभिमानित्वं स्फुटमिति तदनभिधाय भक्त्यादीनामभिमानिन आह— **भक्तिरिति** ।। वैराग्येन सहितं ज्ञानम् । प्रज्ञां शीघ्रग्रहणसामर्थ्यम् । मेधा श्रुतधारणम् । एतद्दशकं वृकोदरः भीम इति स्मृतः ।। १४१ ।।

**ताम्र**— भक्त्यादिदशकं विवृण्वन् युधिष्ठिरादीनां मध्ये धर्मादिनाम्ना किं विवक्षितमित्यतो लेशेन दर्शयति— **भक्तिरिति** ।। ज्ञानं सामान्यम् । प्रज्ञा विज्ञानं प्रतिभा वा । धृतिः धैर्यम् । स्थितिः वैष्णवमतादचञ्चलता । योगो ध्यानयोगः उपायः भक्तिर्वा । प्राणः प्रकर्षेण जगच्चेष्टकत्वम् ।। १४१ ।।

**भारतश्री**— भक्त्यादिदशकमाह— **भक्तिज्ञानमित्यादिना** ।। १४१ ।।

**एतद्दशात्मको वायुस्तस्माद् भीमस्तदात्मकः ।**
**सर्वविद्या द्रौपदी तु यस्मात् सैव सरस्वती ।। १४२ ।।**

**व्यास**— वृकोदरस्य भक्त्यादिदशकात्मकत्वं कथमित्यत आह— **एतदिति** ।। यदा द्रौपदीति तदा सर्वविद्येति ज्ञातव्यम् । सर्वविद्यात्मिका सरस्वती अतः कथमेवं प्रतिपत्तव्यमित्यत आह— **यस्मादिति** ।। १४२ ।।

**वादि**— भारते पञ्चमप्रतिपाद्यमुक्त्वेदानीं हेयतया वध्यतया च प्रसङ्गादनादरेण कथितदुर्योधनादीनां तत्सेनायाश्चोपादेयतयावान्तरतात्पर्यविषयतया कथितानामुभयसेनास्थानां भीष्मद्रोणकर्णद्रुपदविराटादिशुभसेनायाश्च कथनं सदसत्सङ्ग्रहरूपदेहोपमया कथितमिति भावेन तत्कथाप्रकारमाह— **सर्वविद्येति** ।। मुखे विद्यमाना या वाक् तदुपमया द्रौपदी कथिता । यस्मात् द्रौपदी सर्वविद्या सर्वविद्याभिमानिनी तस्मात्सैव सरस्वती मुखे विद्यमाना वाणीत्यर्थः ।। १४२ ।।

**सङ्क**— ननु वृकोदरस्येतल्लक्षणं कथमुच्यत इत्यत आह— **एतद्दशात्मक इति** ।। यदा द्रौपदी कथ्यते तदा सर्वविद्या अध्यात्मनिष्ठा उच्यते इत्यवगम्यताम् । तत्र हेतुमाह— **यस्मादिति** ।। १४२ ।।

**जना**— एतच्छब्दवाच्यत्वं भीमस्य कुत इत्यत आह— **एतदिति** ।। यस्माद्वायुः भक्त्यादिदशकस्वरूपः तस्माद्वायुस्वरूपत्वात् भीमः भक्त्याद्यात्मकः। श्रुतादिगुणप्राचुर्याल्लोके तच्छब्दवाच्यः श्रुताद्यभिमानी अर्जुनः। नकुलसहदेवौ शीलविनयाभिमानिनावित्यनेन अभिधाय श्रवणं च विद्यायाः विद्या च केत्यत आह— **सर्वेति** ।। यस्मात्सा द्रौपदी एव सरस्वती तस्माद्द्रौपदी सर्वविद्याभिमानिनी प्रोक्ता ।। १४२ ।।

**ताम्र**— कथं भक्त्यादेर्विद्यायाश्च वृकोदरद्रौपदीशब्दवाच्यत्वमित्यत आह— **एतदिति** ।। यस्मादेतद्दशात्मको वायुर्यस्माच्च भीमो वाय्वात्मकस्तस्माद् भीम एव तद्दशात्मकः। तस्मादेतद्दशकं वृकोदर इतीरित इत्यर्थः। द्रौपद्येव सरस्वती यस्मात् सैव सरस्वत्येव सर्वविद्या । तस्माद् द्रौपदी सर्वविद्येत्यर्थः।। १४२ ।।

**भारतश्री**— यत्र वृकोदरः प्रतिपाद्यते तत्र धर्मादयः प्रतिपाद्या इति मन्तव्यम् । कुत इति चेत् निमित्तमाह — **एतदिति** ।। १४२ - १४३ ।।

**अज्ञानादिस्वरूपस्तु कलिर्दुर्योधनः स्मृतः ।**
**विपरीतं तु यज्ज्ञानं दुःशासन इतीरितः ।। १४३ ।।**

**व्यास**— यदा दुर्योधन इति तदाज्ञानादिस्वरूपः कलिरिति ज्ञातव्यम्। विपरीतं विपर्ययम् ।। १४३ ।।

**वादि**— अज्ञानादिस्वरूपोऽज्ञानभ्रमप्रमादाद्यभिमानी देहे विद्यमानो यः कलिः स दुर्योधनः स्मृत इत्यर्थः। देहे विपरीतं यज्ज्ञानं तन्मात्राभिमानी दैत्यो यः स दुःशासन इत्यर्थः।। १४३ ।।

**सङ्क**— एवं अर्जुनप्रसङ्गो यदा तदा श्रुतादि अध्यात्मनिष्ठ उच्यते । तथा युधिष्ठिरनकुलसहदेवप्रसङ्गे सति धर्मशीलवैनया अध्यात्मनिष्ठा उच्यन्ते । यदा दुर्योधनप्रसङ्गो भवति तदा अज्ञानावैराग्याभक्त्यादिदशक-मध्यात्मनिष्ठं कलिरूपं निरूप्यत इत्यवगम्यताम् । कल्यवतारत्वात् दुर्योधनस्य । यदा दुःशासनप्रसङ्गस्तदा विपरीतज्ञानम् । शकुनेः प्रसङ्गे द्वापरात्मकनास्तिक्यमुच्यते द्वापरात्मकत्वात् शकुनेः। यदान्ये धार्तराष्ट्रा उच्यन्ते तदा पूर्वनिर्दिष्टा विशिष्टाः दोषा उक्ताः। द्रौणेः प्रसङ्गे सति अहङ्कारोऽध्यात्मनिष्ठ उच्यते । अहङ्कारात्मक-रुद्रावतारत्वात् अश्वत्थाम्नः। एवं द्रोणादीनां कथने इन्द्रियाण्युच्यन्ते इन्द्रियाभिमानित्वात्तेषाम् । पाण्डवप्रतिपक्ष-

भूतसैनिकाः पापानि पापाभिमानित्वात्तेषाम् । पाण्डवेयाः पुण्यानि इत्युच्यन्ते पुण्याभिमानित्वात्तेषाम् । एवमुक्तप्रकारेण सर्वं भारतमध्यात्मनिष्ठमुच्यते । यस्मादतः सर्वैर्मन्वादिभिः सुरैरपि भारतं दुर्विज्ञेयमित्यर्थः ।। १४३ ।।

**जना**— प्रसङ्गादन्याभिमानिन आह— **अज्ञानेति** ।। आदिपदेन भ्रमप्रमादादिग्राह्यम् । विपरीतं विद्यमानप्रकारात् ।। १४३ ।।

**ताम्र**— एवमुत्तरत्रापि दुर्योधनादिशब्दानामज्ञानादिपरत्वं कल्यादीनामेव दुर्योधनादित्वात् कल्यादीनां चाज्ञानादिरूपत्वादिति योज्यम् ।। १४३ ।।

**नास्तिक्यं शकुनिर्नाम सर्वदोषात्मकाः परे ।**
**धार्तराष्ट्रास्त्वहङ्कारो द्रौणी रुद्रात्मको यतः ।। १४४ ।।**

**व्यास**— यदा द्रौणिरिति तदाहङ्कारः ।। १४४ ।।

**वादि**— पुरुषस्य देहे यन्नास्तिक्यं सज्जने चेत् दुःखाद्यनुभवसङ्कटात्, दुर्जने चेत् स्वभावत एव तिष्ठति । तदभिमानी यो दैत्यः स शकुनिः। पुरुषस्य देहे कामक्रोधमदमत्सरादयो ये दोषाः सन्ति तेषां सर्वदोषाणामात्मकाः नियामकाः ये दैत्यास्ते परे धार्तराष्ट्राः दुर्योधनदुःशासनव्यतिरिक्तधृतराष्ट्रपुत्रा इत्यर्थः। पुरुषस्य देहे योऽयमहङ्कारः स द्रौणिः। यतो रुद्रात्मकोऽहङ्ककाराभिमानिरुद्रात्मक इत्यर्थः।। १४४ ।।

**जना**— धार्तराष्ट्राः धृतराष्ट्रपुत्राः। परे दुर्योधनदुःशासनव्यतिरिक्ताः सर्वदोषाभिमानिनः। यतः रुद्रात्मकः अश्वत्थामा तस्मादहङ्कारः अहङ्काराभिमानी ।। १४४ ।।

**द्रोणाद्या इन्द्रियाण्येव पापान्यन्ये तु सैनिकाः ।**
**पाण्डवेयाश्च पुण्यानि तेषां विष्णुर्नियोजकः ।। १४५ ।।**

**व्यास**— यदा द्रोणकर्ण इत्यादि तदेदं पाणि इत्यादि । अन्ये दुर्योधनसैनिकाः। पाण्डवेयाः सैनिकाः यदोच्यन्ते तदा पुण्यानीति ।। १४५ ।।

**वादि**— देहे यानीन्द्रियाणि ते द्रोणाद्याः द्रोणकर्णभीष्माद्या द्रोणस्य श्रोत्राभिमानिबृहस्पतिरूपत्वात्, कर्णस्य च चक्षुरभिमानिसूर्यरूपत्वात्, भीष्मस्य वागभिमान्यग्निरूपत्वात्, अभिमन्योर्मनोऽभिमानिचन्द्ररूपत्वात्, नकुलसहदेवयोः घ्राणाभिमानिदस्त्ररूपत्वात्, अर्जुनस्य मनोऽभिमानीन्द्ररूपत्वादित्याद्यूह्यम् । सैनिका दुर्योधन–पक्षपातिनः पापानि परहिंसापरद्रव्यापहरणपरनिन्दापरनारीगमनादिरूपाणि, कामक्रोधादीनामौत्पत्तिकतया प्रबलदोषत्वाद्धार्तराष्ट्रोपमा । उक्तपापानां तु कादाचित्कत्वात् सेनोपमा । पुण्यानि पुण्याभिमानिदेवा इत्यर्थः। तेषां वाय्वादीनां द्रौपद्यादीनां च देहान्तर्विद्यमानानां बहिर्विद्यमानानां सर्वेषां नियामको नारायणः साक्षात् कृष्ण इत्यर्थः। तथा च परमात्मना स्वेनैव स्वजनापवर्गाय सृष्टेऽपि उत्तमजीवदेहे अपरोक्षज्ञानदशायां

तत्कृतदुष्कर्मसङ्ग्रहाय तत्कृताधिकपुण्यसङ्ग्रहाय च सदसतामपि सङ्ग्रहवत् व्यासोऽपि स्वकृतग्रन्थे परेषां परिभववर्णनाय स्वभक्तानां सकलकार्येषु दिग्विजयवर्णनाय च सदसतां सर्वेषामपि सङ्ग्रहं कृतवानिति भाव: ।। १४५ ।।

**जना**— द्रोणाद्या आदिपदेन कर्णाभिमन्युभीष्मादय उच्यन्ते । इन्द्रियाद्यभिमानिन: बहुवचनमुपमाद्यर्थे दुर्योधनस्यान्ये सैनिका: पापानि पापाभिमानिन:। पाण्डवेया: पाण्डवसम्बन्धिन: सैनिका: पुण्यानि पुण्याभि-मानिन:। तेषां पाण्डवेयानाम् ।। १४५ ।।

**ताम्र**— यदा तेषां पाण्डवानां नियामक: कृष्ण उच्यते। तदा तेषां भक्त्यादीनां नियामको विष्णुरित्याह— **तेषामिति** ।। १४५ ।।

**एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते ।**
**दुर्विज्ञेयमत: सर्वैर्भारतं तु सुरैरपि ।। १४६ ।।**

**वरद**— तस्मादुक्तरीत्याशेषभारतस्याध्यात्मनिष्ठत्वात् साकल्येन सुरैरपि ज्ञातुं न शक्यते किम्वितरैरित्याह — **एवमध्यात्मेति** ।। १४६ ।।

**जना**— भारतार्थस्य दुर्ज्ञेयत्वमुपसंहरति— **एवमिति** ।। एवमित्यादिप्रकारेणाध्यात्मनिष्ठं आत्मानं देहमधिकृत्य वर्तमानं देहाद्यन्तर्यामिप्रतिपादकं सर्वं भारतमुच्यते हि यत:। अत: सर्वैर्मनुष्यादिभि: सुरैर्देवैरपि ।। १४६ ।।

**ताम्र**— एवं भारतस्य दुर्विज्ञेयत्वे हेतुमुक्त्वा साध्यमाह— **दुर्विज्ञेयमिति** ।। १४६ ।।

**स्वयं व्यासो हि तद् वेद [१]ब्रह्मा वा तत्प्रसादत: ।**
**तथापि विष्णुपरता भारते सारसङ्ग्रह: ।। १४७ ।।**

**व्यास**— व्यासादीन् विना सर्वैर्दुर्ज्ञेयत्वात् मानुषैर्भारताध्ययनादौ प्रवृत्तिर्न कार्येत्यत आह— **तथापीति** ।। अवगम्यते भारत इति शेष: ।। १४७ ।।

**सङ्क**— दुर्विज्ञेयत्वं प्रकटयति— **स्वयमिति** ।। नन्वेवं सर्वैर्दुर्विज्ञेयत्वे तेषां भारतेन किं प्रयोजनमित्यत आह— **तथापीति** ।। तथापि विष्णूत्कर्ष एवार्थो भारतस्यावगन्तव्य इत्यर्थ:।। १४७ ।।

**वरद**— दुर्विज्ञेयत्वं प्रकटयति— **स्वयमिति** ।। तस्य व्यासस्य प्रसादतो ब्रह्मा वेदेत्यर्थ:। नन्वन्यैर्दुर्ज्ञेयं चेद्भारतं तर्हि तेषामेव किं प्रयोजनमित्यत आह— **तथापीति** ।। भारतस्य दुर्विज्ञेयत्वेपि विष्णावेव तात्पर्यमस्तीति सामान्यतो भारतसारसङ्ग्रहस्य ज्ञातुं शक्यत्वात् तेन तेषामपि प्रयोजनमस्त्येवेति भाव: ।। १४७ ।।

---

१. 'ब्रह्मणस्तु तत्प्रसादत:' इति जनार्दनीये पाठान्तरम् ।

**जना**— तदेव प्रकटयति— **स्वयमिति** ।। ब्रह्मा वा ब्रह्मापि । 'ब्रह्मणस्तु तत्प्रसादतः' इत्यधिकम् । सर्वैर्दुर्ज्ञेयं चेन्मनुष्याणां भारताध्ययनं व्यर्थमित्यत आह— **तथापीति** ।। यद्यपि दुर्ज्ञेयं तथापि मनुष्यैरपि भारते विष्णुपरता या सः सारस्यार्थसारस्य सङ्ग्रह एकीकरणम् ।। १४७ ।।

**ताम्र**— दुर्विज्ञेयत्वे व्यासेन वाक्यरचनायोगः। अर्थबोधाधीनत्वात् तस्येत्यत उक्तम्— **स्वयमिति** ।। स्वयं कर्तेत्यर्थः। तर्हि निरधिकारिकं स्यादित्यत उक्तम्— **ब्रह्मा वेति** ।। तर्हि स्त्रीशूद्रादिसर्वाधिकारिकत्वोक्तिविरोध इत्यत आह— **तथापीति** ।। यद्यपि भारतस्य दुर्विज्ञेयत्वं तथापि भारते सारसङ्ग्रहः भारतार्थसाराणां सङ्ग्रहो विष्णुपरतैव । तथा च भगवदुत्कर्षस्य भारतार्थस्य यथायोग्यं ज्ञातुं शक्यत्वात् सर्वाधिकृतत्वं दुर्विज्ञेयत्वं चोपपद्यते इति भावः। यथोक्तं [1]"सर्वप्राणिनामवगाह्यानवगाह्यरूपाम्' इति ।। १४७ ।।

**इत्यादिव्यासवाक्यैस्तु विष्णूत्कर्षोऽवगम्यते ।**
**वाय्वादीनां क्रमश्चैव तद्वाक्यैरेव चिन्त्यते ।। १४८ ।।**

**व्यास**— 'उक्तोऽर्थः सर्व एवायं' इत्यत्र विष्णोः सर्वोत्तमत्वादितारतम्यं च प्रतिज्ञातम् । तत्र विष्णोः सर्वोत्तमत्वादिकं प्रसाध्य वाय्वादीनां तारतम्यं प्रसाधयन् प्रस्तावयति— **वाय्वादीनामिति** ।। १४८ ।।

**सङ्क**— एवं श्रीविष्णोः सर्वोत्कर्ष एवास्य भारतस्य मुख्यार्थ इत्युक्तम् । अधुना 'तस्याङ्गं प्रथमं वायुः' इति यो वाय्वादीनां क्रमेण स्वरूपनिर्णय उक्तस्तमेव निर्णयं भारतादिवाक्यैरेव सप्रपञ्चं प्रकटयितुमाह— **वाय्वादीनामित्यादिना** ।। १४८ ।।

**वरद**— एवं 'भारतेऽपि यथा प्रोक्तं' इति प्रतिज्ञातं निर्णयं भारतवाक्यैस्तत्समाख्यां वाक्यैश्च कृत्वोपसंहरति— **इत्यादीनीति** ।। ननु तत्र प्रतिज्ञातवाक्ये माहात्म्यक्रमपूर्वक इति ब्रह्मादिदेवतातारतम्यनिर्णयस्यापि प्रतिज्ञातत्वात् स किमर्थं भारतवाक्योदाहरणेन तत्समाख्यावाक्योदाहरणेन च न कृत इत्यतः 'पक्वं भक्षय' इति न्यायमनुसृत्याह— **वाय्वादीनामिति** ।। १४८ ।।

**जना**— उक्तं विष्णूत्कर्षमुपसंहरति— **इतीति** ।। वक्तव्यमाह— **वाय्विति** ।। तद्वाक्यैः व्यासवाक्यैः क्रमस्तारतम्यक्रमः।। १४८ ।।

**ताम्र**— 'उक्तोऽर्थः सर्व एवायं' इति प्रतिज्ञातविष्णूत्कर्षदेवतातारतम्ययोर्मध्ये उत्कर्षं प्रसाध्योपसंहरति —**इत्यादीति** ।। तारतम्यं निर्णेतुं प्रस्तावयति— **वाय्वादीनामिति** ।। तद्वाक्यैर्व्यासवाक्यैर्भारतगैरितरशास्त्रगैश्च ।। १४८ ।।

**वायुर्हि ब्रह्मतामेति तस्माद् ब्रह्मैव स स्मृतः ।**
**न ब्रह्मसदृशः कश्चिच्छिवादिषु कथञ्चन ।। १४९ ।।**

---

१. गी.भा. उपोद्घातः ।

**व्यास**— ननु ब्रह्मादीनां तारतम्यक्रमश्चिन्त्यः न वाय्वादीनामित्यत आह— **वायुरिति** ।। अधिकारतारतम्य-पराकाष्ठाभूतस्य ब्रह्मणः सर्वाधिक्यप्रसाधनाय प्रतिजानीते— **नेति** ।। १४९ ।।

**सङ्क**— ननु ब्रह्मादीनां क्रम इति वक्तव्ये वाय्वादीनामित्युक्तौ किं कारणमित्यत आह— **वायुर्हीति** ।। ननु शिवादिषु ब्रह्मसदृशोऽन्योऽस्ति चेत् तदादित्वेन क्रमो वक्तव्यः कथं वाय्वादित्वेन क्रमोक्तिरित्यत आह — **न ब्रह्मेति** ।। ब्रह्मसदृशस्यान्यस्याभावत् तदादित्वेन क्रमोक्तिरुपपन्नेति भावः ।। १४९ ।।

**वरद**— ननु ब्रह्मादीनां क्रमेण वक्तव्ये वाय्वादीनां इति किमर्थमुक्तमित्यत आह— **वायुर्हीति** ।। सर्वत्र तारतम्यप्रकरणे वायुपदेन ब्रह्मणोऽपि ग्रहणम् । ब्रह्मपदेन च वायोरपि ग्रहणम्। एवं रुद्रादिष्वपीत्यनेन सूचयति। तत्राधिकारिषु सर्वाधिकार्युत्तमत्वं ब्रह्मण एवेति प्रमाणेन समर्थयितुं प्रतिजानीते— **न ब्रह्मेति** ।। १४९ ।।

**जना**— मुक्तिसाधारणत्वात् ब्रह्मादिक्रम इति वक्तव्यं वाय्वादीनामिति कथमुक्तमत आह— **वायुरिति** ।। सः वायुः। तं क्रममाह— **नेति** ।। कथञ्चन ज्ञानभक्त्यादिना ।। १४९ ।।

**ताम्र**— वाय्वादेरेव क्रमविचारे ब्रह्मणो न तारतम्यवत्संसारिवर्गनिवेश इत्यत आह— **वायुरिति** ।। ननु शिवादित्वेन तारतम्यं किं नोक्तमित्यत आह— **न ब्रह्मेति** ।। १४९ ।।

**'ज्ञाने विरागे हरिभक्तिभावे**
**धृतिस्थितिप्राणबलेषु योगे ।**
**बुद्धौ च नान्यो हनुमत्समानः**
**पुमान् कदाचित् क्वच कश्चनैव'।। १५० ।।**

**व्यास**— प्राणबले प्राणनं धारकशक्तिः।। १५० ।।

**अभिनव**— 'ज्ञाने विरागे' इति श्लोके हरिभक्तिभाव इत्यस्य हरिभक्तिविषये, आनन्दादिधर्मविषये इत्यर्थः । एतेन हरिभक्तावित्यनेन पूर्णत्वात् भाव इत्येतत् व्यर्थमिति दूषणं परास्तम् । अनुक्तानन्दादिसर्वधर्मग्रहणार्थं भाव इत्युक्तमित्यङ्गीकारात् ।। १५० ।।

**सङ्क**— अथ तावद्वायोः स्वरूपं निर्धर्तुमाह— **ज्ञान इत्यादिना** ।। १५० ।।

**वरद**— प्रतिज्ञातमर्थं साधयितुं भारतवाक्यं पठति— **ज्ञान इति** ।। विरागे वैराग्ये ज्ञानादिगुणेषु हनुमत्समानः पुमान् कदाचित् काले क्वच स्थाने कश्चन रुद्रादिषु पुरुषः समानो नास्तीत्यर्थः।। १५० ।।

**जना**— ब्रह्मणः वाय्वात्मकत्वाद्वायोश्च हनुमदात्मकत्वाद्धनुमत उत्तमत्वे सिद्धे ब्रह्मणः सुतरां सेत्स्यतीति हनूमत उत्तमत्वे प्रमाणमुदाहरति— **ज्ञान इति** ।। विषयसप्तमीयम् । विरागे वैराग्ये । हरिभक्तिभावे । हरि-भक्तिवत्वे अन्यः वायोरवतारादन्यः रुद्रादिः कश्चन पुमान् कदाचित्कस्मिंश्चित्काले क्वच कुत्रापि देशे ।। १५० ।।

**ताम्र**— अधिकारितारतम्यपराकाष्ठारूपस्य ब्रह्मणः सर्वाधिक्ये प्रमाणमाह— **ज्ञान इति** ।। हरिभक्तिभावो हरिभक्त्याख्यवृत्तिविशेषः। स्थितिः स्थैर्यं वैष्णवमते । प्राणनं धारणशक्तिः। बुद्धिः प्रतिभा ।। १५० ।।

**[१]बळित्था तद् वपुषे धायि दर्शतं**
**देवस्य भर्गः सहसो यतो जनि ।**
**यदीमुप ह्वरते साधते**
**मतिर्ऋतस्य धेना अनयन्त सस्रुतः ।। १५१ ।।**

**व्यास**— 'भारतव्यपदेशेन ह्याम्नायार्थाः प्रदर्शिताः' इत्युक्त्या भारतस्य वेदार्थात्मकत्वात् वेदवाक्यं च ब्रह्मणः सर्वोत्तमत्वे पृच्छति— **बळिति** ।। सहसः सह तस्य वायोर्देवस्य स्वरूपं स्वयं यतो यस्मादेवाजनि तेन विष्णुना इत्था इत्थं मूलरूपं यथा बलाद्युपेतं तथैव वपुषे अवताराय अधायि । कीदृशं तन्मूलरूपं भरणगमनयोगाद्भर्गः वायुशब्दवाच्यत्वं केन निमित्तत्वेनेत्यतो बलज्ञानरूपत्वादिति भावेनोक्तं बट् बलात्मकम्। दर्शतं ज्ञानरूपं चेति । वायोरवतारास्त्रयः प्रथमावतारस्य नाम व्यापारं चाह । यत्प्रथमं रूपं मतिर्हनुमान् हनुशब्दस्य ज्ञानवाचित्वात् । स्वामिनो रामस्योपह्वरते समीपे वर्तते । ईं एव । स्वामिनः कार्याणि साधत एव। कार्याणि लेशतो दर्शयति । ऋतस्य सत्यवचसो रामस्य ससृतोऽमृतस्राविण्यः धेना धेनवः वाचः येन सीतां प्रत्यनयन्त ।। १५१ ।।

**वादि**— हरेः सर्वोत्तमत्वे वायोः प्रधानाङ्गत्वे च स्मृतीरुक्त्वाधुना श्रुतिं च पठति— **बळित्थेति** ।। यतो यस्मान्नारायणात् अजनि स्वयमजनि तस्य देवस्य प्रीत्यर्थं तदाज्ञया च 'द्रविणं तरः सहो बलं शौर्याणि' इत्यनुशासनात् सहसो बलरूपस्यात एव 'सह मर्षण' इति धातोर्य एवायं मुख्यप्राणः [२]'तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वसुर्यथाश्मानमाखणमृत्वा विदध्वंसेत' इत्येवं छन्दोगोपनिषद्वाक्याच्च कल्याद्यसुरकृतो-पद्रवसहनशीलस्याशुगत्वात् वेगवतो वा मुख्यप्राणस्य, बट् बलात्मकं, दर्शतं ज्ञानेन ततम् । भर्गः भरति श्वासरूपेण जगत् बिभर्ति [३]'स एनान्ब्रह्म गमयति' इति श्रुतेः परं ब्रह्म गमयतीति चेति भर्गशब्दवाच्यम् [४]'अदिभूभ्यां डुतच्' इत्यादाविव धातुद्वयादौणादिकोऽसुन् प्रत्ययः। तद्वायोर्मूलरूपमनेन बट् बलात्मकं 'अय पय गतौ' इति धातोः, अय ज्ञानात्मकं चेति, वबयोरभेदात् विशेषणद्वयेन वायुशब्दार्थ उक्तो भवति । इत्था इत्थमेव मूलरूपे यथा बलज्ञानादिकं तथैव वपुषेऽवताराय, धायि अधायीत्यर्थः। तत्र प्रथमावतारस्य नाम व्यापारं चाह— **यदिति** ।। यत्प्रथमं वपुस्तत् मतिः मतिशब्दवाच्यम् । 'हन हिंसागत्योः' इति धातोर्गत्यर्थानां ज्ञानार्थत्वात् मतिशब्दवाच्यमिति भावः। हनवानिति वक्तव्ये सर्वदा ज्ञानशीलत्वद्योतनाय उद्वये कृते हनूमानिति भवति । ऋतस्य 'ऋ गतौ' इति धातोर्ज्ञानात्मकस्य रामस्य उप समीपे ह्वरते क्रीडते 'ह्वर कौटिल्ये' इति धातोर्ह्वरते भक्तिभरेण नम्रीभूय तिष्ठतीति वा । ईं इत्थमेव समीपे सेवाकरणवत् साधते दूरेऽपि रामकार्याणि साधयते । तत् कार्यं किमित्यतः लेशतः कार्याणि दर्शयति— **धेना इति** ।। स्रुत् अमृतस्रवणं तेन युताः सस्रुत ऋतस्य

---

१. ऋ.सं. १-१४१-१ । २. छा.उ. १-२ । ३. छा.उ. ५-३-१ । ४. उणादिसूत्रम्, पञ्चमः पादः ।

सत्यवचनस्य रामस्य धेनाः 'धिङ् पोषणे' इति धातोः सुरकार्यपोषकत्वात् धेनाशब्दवाच्याः वाचोऽनयन्त। येन हनूमता सेनां प्रत्यनयन्त सीतां प्रत्यनयन्त तत्प्रथमं वपुरिति पूर्वेणान्वयः ।। १५१ ।।

**सङ्क**— ननु वायोः स्वरूपनिर्णये वक्तव्ये हनूमतः स्वरूपनिर्णयः कथमुपयोगीत्याशङ्कायां वायोरेव स्वरूपं हनुमदाद्यवतारत्रयमतो हनूमतः स्वरूपनिर्णयं उपयोगीति श्रुत्या परिहरति— **बळित्थेति** ।। सहसो वायोः देवस्य यद्रूपं तत् बट् बलात्मकं दर्शतं दर्शेन ज्ञानेन ततम् । इत्था इत्थं वक्ष्यमाणप्रकारेण वपुषे मर्त्याद्यवताराय अधायि श्रीविष्णोराज्ञया । यतो यस्मादवतारत्रयात् भारूपत्वाद्रतिरूपत्वात् ज्ञानरूपत्वात् भर्गाख्यं परं ब्रह्म जनि अजनि अभिव्यक्तमभूत् । अथवा यतो विष्णुः स्वयमजनि तस्य विष्णोः भर्तृगन्तृ च भर्गाख्यं तद्वायोः रूपम् । तत्र प्रथमावतारं निरूपयति— **यदीमिति** ।। यदेव वायोरवताररूपं ऋतस्य शश्वदेकप्रकारस्य रामस्य उप समीपे ह्वरते क्रीडते साधते च तत्कार्यम् । ऋतस्य ज्ञानरूपस्य पुष्टत्वादिगुणयोगेन धेनाशब्दोदिता वाचः सस्रुतः सामृतस्रावाः सीतां प्रत्यनयन्त सीताया वाचश्च रामं प्रत्यनयन्त । तन्मतिशब्दोदितं हनुमदवताररूपं हनशब्दस्य ज्ञानवाचित्वेन तद्वान् हनूमानिनिति । तथाच सत्तत्त्ववचनम् –

'हनुशब्दो ज्ञानवाची हनुमान्मतिशब्दितः।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।।' इति ।। १५१ ।।

**वरद**— ननु 'न ब्रह्मसदृशः' इति प्रतिज्ञाय हनुमत्समानो नास्तीत्येतदर्थप्रतिपादकं वाक्यमुदाहृतमित्यतः किं केन सङ्गतमित्यतो हनुमदादिरूपत्रयस्य वाय्ववतारत्वात् वायोश्च भाविब्रह्मत्वात् हनुमत्समानो नास्तीत्युक्तौ वायोः समानो नास्तीत्याद्यर्थस्य लाभात्प्रकृतसङ्गतिरित्यभिप्रेत्य हनुमदादिरूपत्रयस्य वाय्ववतारत्वमेव प्रमाणयति— **बळित्थेत्यादिना** ।। तत्र प्रथमायामृचि पूर्वार्धेन वायोः स्वरूपमुक्त्वा द्वितीयार्धेन तदवतारभूतं हनुमद्रूपमुच्यते । तथाहि । सहसो वायोर्देवस्य यत् मूलरूपं तत् बट् बहुबलात्मकं न केवलं बलरूपं किंतु दर्शतं ज्ञानेन ततं ज्ञानरूपमित्यर्थः। पुनः कथंभूतं तन्मूलरूपं इत्यपेक्षायामाह— **भर्ग इति** ।। भर्ग इति पदेन च भरणगमनयोः कर्तृ । डुभृञ् धारणपोषणयोः गमऌ गताविति धातोः। आभ्यां आस प्रत्ययो डिच्च डित्वात् टिलोपे भर्ग इति सकारान्तनपुंसकरूपं सिद्ध्यति । अत्र बट्पददर्शतपदाभ्यां भर्ग इति पदेन च वायुशब्दस्यार्थद्वयमुक्तम् । तथाहि । बलज्ञानात्मकत्वात् वायुः। वशब्दस्य बलवाचित्वात् । 'अय पय गतौ' इति धातोः व्याख्यानादय इति धातुः गत्यर्थः। गत्यर्थधातवो ज्ञानार्थाः। तत उण् प्रत्यये आदिवृद्धौ च आयुरिति सिद्ध्यति । वश्चासौ आयुश्चेति वायुरिति । एवं वातेर्भरणार्थत्वात् पूर्ववदयतेरण् प्रत्यये भरणगमनकर्तृत्वं वायुशब्दार्थद्वयं द्रष्टव्यम् । एतादृशं यद्वायोर्मूलरूपं तदित्था इत्थं वक्ष्यमाणप्रकारेण वपुषे अवतारायावतारं कर्तुं इति यावत् । अधायि श्रीविष्णुना प्रेरितमित्यर्थः। यतो यस्मात् मूलरूपात् जनि अजनि जातं प्रथमावताररूपमित्यर्थः। तत्किमित्यपेक्षायामुच्यते यदीमुपह्वरत इति द्वितीयार्धेन यदेव मतिः हनुमदाख्यं 'हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः' इति वचनात्। उप समीपे रामस्येत्यर्थः। ह्वरते तिष्ठति साधते च रामकार्याणि साधयतीत्यर्थः। पुनः कथम्भूतं येन रूपेण ऋतस्य रामस्य स्रुतः अमृतस्रावयुक्ता धेनाः अर्थपुष्टिमत्यः वाचः अनयन्त । सीतां प्रति नीता इत्यर्थः। अथवा ऋतस्य रामस्य वाचः तत्सर्वोत्तमत्वप्रतिपादिका मूलरामायणादिरूपा वाचः शिष्यान् प्रत्यनयन्तेत्यर्थः।। १५१।।

**जना**— हनूमान् वायोरवतार इत्यत्र श्रुतिमुदाहरति— **बळित्थेति** ।। यतो यस्मान्नारायणाज्जनि जातं तेन नारायणेन सहसः बलरूपस्य द्रविणं रतेः 'सहो बलम्' इति निघण्टुः । देवस्य क्रीडादिगुणयुक्तस्य वायोस्तन्मूलरूपं इत्था एवं प्रकारेण । यथामूलरूपं बलाद्युपेतं तथा बलाद्युपेतत्वेन वपुषे अवताराय धायि अधायि। कथं भूतं तन्मूलरूपम् । बट् बलात्मकम् । दर्शतम् ज्ञानपूर्णम् । भर्गः पोषणगमनकर्ता । अथवा सहसो देवस्य तन्मूलरूपं बट् दर्शतं भर्गः इत्था वपुषे धायि यतो मूलरूपाज्जनि जातं च । यद्वा सहसो देवस्य वायोः यद्रूपं तत् बट् बलात्मकं ज्ञानेन ततं व्याप्तम् । इत्था वक्ष्यमाणप्रकारेण वपुषे मर्त्यावताराय धायि अधायि । यतो यस्मादवतारत्रयाद्भर्गः भाति प्रकाशत इति गच्छति जानातीति प्रकाशज्ञानरूपं ब्रह्म जनि अभिव्यक्तमभवत् । तत्र प्रथमावतारं निरूपयति— **यदिति** ।। यत्प्रथमं रूपं मतिर्हनूमन्नामकम् । हनुशब्दस्य ज्ञानवाचित्वात् । ऋतस्य ज्ञानरूपस्य रामस्य उपह्वरते समीपे वर्तते । ईं इत्थं । ईं एक एव ऋतस्य कार्याणि साधयते । तल्लेशतो दर्शयति । ऋतस्य तद्विषयाः धेनाः वाचः रामायणरूपाः अनयन्त तच्छिष्यान् प्रतीति शेषः। सस्रुतः अमृतस्राविणीः मोक्षदा इत्यर्थः। अथवा रामोक्ताः सुखदावाचः सीतां प्रति अनयन्तेति ।। १५१ ।।

**ताम्र**— वायुस्वरूपनिर्णये वाच्ये हनुमत्स्वरूपनिर्णयोऽनुपयोगीत्यतः हनुमदादीनां वाय्वंशत्वे श्रुतिमुदाहरति— **बडिति** ।। 'भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शित' इत्युक्त्या भारतस्य वेदार्थात्मकत्वात् । वेदवाक्योदाहरणं भारतोदाहरणमेवेति मत्वा वायोः सर्वोत्तमत्वे वेदवाक्योदाहरणं नासङ्गतम् । बलरूपस्य वायोर्देवस्य तन्मूलरूपम् । बट् बलात्मकम् । दर्शतं ज्ञानात्मकम् । इत्था इत्थम् । वपुषे अवताराय । [1]"भगवत्प्रेरणया स्वबुद्ध्या चाधायि । यतो भारतिज्ञानात्मकत्वात् भर्गाख्यं अजनि । अभिव्यक्तमभूत् । अथवा यतो देवात् स्वयमजनि । तस्य विष्णोर्देवस्य भर्गः भर्तृगन्तृ च' इति तत्त्वप्रदीपे । यद्वा सहसो वायोर्देवस्य तन्मूलरूपं यतो यस्माद्देवादजनि तेन विष्णुना इत्थं इत्थमेव मूलरूपे यादृशगुणपूर्तिस्तथैवावताराय अधायि । कीदृशं तन्मूलरूपं यद्गुणविशिष्टतया निधापितमित्यत उक्तम् । बट् बलात्मकम् । दर्शतं ज्ञानेन ततम् । भर्गः जगतो भगवतो वा भरणगमनयोः कर्तृ । के च ते अवतारा इत्यतस्तत्र प्रथमावतारस्य नामव्यपदेशश्चोच्यते— **यदीमिति** ।। यत् ईं यदीं यदेव । मतिः हनुशब्दस्य ज्ञानवाचित्वात् । हनुमदाख्यं तत्प्रथमम् । ऋतस्य ऋतरूपस्य यथार्थज्ञानरूपस्य । [2]'ऋतं यथार्थविज्ञानम्' इति वचनात् । शश्वदेकप्रकारस्य [3]'पूर्वावगतवत्सदा स्थितेर्ब्रह्मर्तम्' इति वचनात् रामस्योपसमीपे ह्वरते रमते कार्याणि साधते च । कार्याण्येव लेशत उच्यन्ते — **ऋतस्य धेना** इति । तेनेत्यध्याहार्यम् । ऋतस्य रामस्य प्रतिपादिकाः। धेनाः पुष्टाः ससृताः अमृतस्राविण्यः। मूलरामायणादिवाचस्तेन शिष्यान् प्रत्यनयन्त । रामस्य सन्देशरूपाः वाचः सीतां प्रत्यनयन्त । [4]'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त' इति वचनात् ।। १५१ ।।

**भारतश्री**— हनुमदादिरूपस्य वाय्ववतारत्वे श्रुतिं पठति— **बळित्थेति** ।। तत्र प्रथमायां ऋचि पूर्वार्धेन वायोः स्वरूपमुक्त्वा द्वितीयार्धेन तदवतारभूतं हनुमद्रूपमुच्यते । तथा हि । सहसः वायोः देवस्य यत् मूलरूपं तत् बट् बलात्मकम् । दर्शतम् ज्ञानेन ततम् । पुनः कथंभूतं इत्यपेक्षायामाह— **भर्ग इति** ।। भरणगमनयोः

१. तत्त्वप्रदीपः ४-४-२३ । २. तै.मा. शिक्षावल्ली । ३. तत्वोद्योतः । ४. तै.मा. भृगुवल्ली ।

कर्तृ । एतादृशं यद्वायोः मूलरूपं तत् । इत्था इत्थमेव । वक्ष्यमाणप्रकारेण वपुषे अवतारं कर्तुमिति यावत् । अधायि श्रीविष्णुना प्रेरितमित्यर्थः । यतः मूलरूपात् जनि अजनि जातं प्रथमावताररूपमित्यर्थः । तत्किमित्यपेक्षायां उच्यते— **यदीं उपह्वरते इति** ।। यदीं यदीयमेव मतिः हनुमदाख्यम् । 'हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः' इति वचनात् । उप समीपे रामस्येत्यर्थः । ह्वरते क्रीडते । साधते च रामकार्याणि साधयतीत्यर्थः । पुनः कथम्भूतं येन रूपेण ऋतस्य रामस्य अमृतस्रावयुक्ताः अर्थपुष्टिमत्यः वाचः अनयन्त सीतां प्रति नीता इत्यर्थः । अथ ताः ऋतस्य रामस्य वाचः तत्सर्वोत्तमत्वप्रतिपादिकाः मूलरामायणादिरूपाः वाचः शिष्यान् प्रति अनयन्त इति ।। १५१ ।।

**[1]पृक्षो वपुः पितुमान् नित्य आ शये**
**द्वितीयमा सप्तशिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे**
**दशप्रमतिं जनयन्त योषणः ।। १५२ ।।**

**व्यास—** द्वितीयं वपुः पृतनाक्षयकारित्वात् पृक्षः। पितुमान् अन्नवांश्च । यः आशये सुप्त इव बाह्यार्थानुसन्धानरहितः आशयते । शिवासु पवित्रासु अनाशङ्कितदोषासु सप्तसु मातृषु प्रमाणेषु । अनेन भीमशब्दो निरुक्तः। वृषभस्य देवश्रेष्ठस्यास्य वायोस्तृतीयं दशप्रमतिं पूर्णप्रज्ञरूपं योषणो योषितो दोहसे ज्ञानदोहनाय जनयन्त ई एव ।। १५२ ।।

**वाति—** द्वितीयं वपुर्निरूपयति— **पृक्ष इति** ।। द्वितीयं वपुः पृक्षः। पृत् पृतना तस्याः क्षयकारित्वात् पृक्षशब्दवाच्यं 'क्षीङ् क्षय' इति धातोः कर्त्रर्थे औणादिके डसन्प्रत्यये कृते पृक्ष इति सकारान्तशब्दनिष्पत्तिरिति भावः। पितुमान् 'पितुरित्यन्ननाम' इति ब्राह्मणवचनादन्नवान् । मतुपः प्राशस्त्यार्थकथनात् बह्वन्नभोक्तेत्यर्थः। नित्यः स्वच्छन्दमृत्युत्वान्नित्यशब्दवाच्यः स भीमः। सप्त च ताः शिवाश्चेति सप्तशिवास्तासु सप्तसङ्ख्याकासु शिवासु शोभनासु मातृषु मापयन्ति ज्ञापयन्ति परमात्मानमिति मातृशब्दवाच्यासु विद्यासु ऋग्यजुःसामाथर्वभारत-पञ्चरात्रमूलरामायणाख्यासु सप्तविद्यास्वित्यर्थः। आ समन्तात् सम्यक् च शये शिश्ये। यथा सुप्तःपुरुषो बहिरन्यन्न पश्यति तथा तासामर्थविचारे समाहितचित्तत्वात् शरकृद्वत् बहिर्व्यापारमजानानः सन् ता एव विचारयामासेत्यर्थः। अनेन भृता मा मापयन्तीति मा विद्या येन स इति व्युत्पत्त्या भीमशब्दार्थ उक्तो भवति । 'वर्णागमो वर्णविपर्ययश्च' इति वचनात् ऋकारस्य ईकारादेशः। योषणः श्रीभूदुर्गाख्याः वेदाभिमानिन्यो योषितः। दोहसे 'दुह प्रपूरणे' इति धातोः सर्वज्ञानपूरणाय । वृषभस्य देवश्रेष्ठस्य । अस्य वायोः तृतीयं तृतीयावताररूपम् । 'दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमितिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः' इति स्मृतेः 'दशादशतस्तच्छतं' इत्यादिश्रुतेश्च दश पूर्णा मतयो भगवद्विषयत्वात् प्रकृष्टा मतयो यस्य तं पूर्णप्रज्ञमिति यावत् । जनयन्त [2]"बहुलं च्छन्दस्यमाङ्योगेऽपि' इति वचनादजनयन्त । श्रीभूदुर्गाख्या ऋगादिवेदाभिमानिन्यो देव्यः स्वाभि-

१. ऋ.सं. १-१४१-२ । २. पा.सू. ६-४-७५ ।

मन्यमानवेदानामन्यैरन्यथा व्याख्यातत्वात् यथावद्व्याख्यानाय मध्यगेहाख्यविप्रपत्न्या उदरे स्थित्वाजनयन्तेति भावः ।। १५२ ।।

**सङ्क—** द्वितीयं वपुः पृक्षः सञ्ज्ञं अवतारभूतं शत्रुभूतपृतनाक्षयकारित्वात् । पितुमान् बह्वन्नभोक्तेत्यर्थः। ऋगादिचतुर्वेदेतिहासपुराणपञ्चरात्राख्यसप्तविद्यासु श्रीविष्णुकृतत्वाद्यर्थान् मापयन्ति अभिव्यञ्जयन्तीति मातृशब्दवाच्यासु ऋक्षु नित्यं आशये शिश्ये रेम इत्यर्थः। सप्त च ताः शिवाश्चेति सप्तशिवाः। अनेन भीमनाम सूचितं भवति । भृतानि माः प्रमाणानि अस्मिन्निति व्युत्पत्या इति । तथा च भाववृत्ते –(सद्भावे)

'भृतमो भीम इत्युक्तो वचो मा मातरः स्मृताः।
ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः।।' इति ।

अस्य वृषभस्य समर्थस्य वायोस्तृतीयं वपुरवतारं दशप्रमतिसञ्ज्ञं श्रीविष्णुतत्वज्ञानदोहनार्थं योषा जनयन्त । योषणः इति बहुवचनं तन्मातुर्नामादेरविवक्षितत्वं द्योतयति न बहुमातृतामात्रख्यापकम् ।। १५२ ।।

**वरद—** अथ भीमाख्यो द्वितीयावतार उच्यते— **पृक्ष इति** ।। द्वितीयं वपुः द्वितीयोऽवतारः पृक्षः पृक्षनामकः। पृतनां सेनां क्षिणोतीति पृक्षः । पृच्छब्दोपपदात् क्षि क्षये इत्यस्मात् डप्रत्यये डित्वादिलोपे च पृक्ष इति सिद्ध्यति । उपपदतकारलोपो निरुक्तत्वात् । अन्यदपि भीमसेनस्य ज्ञापकं लिङ्गमुच्यते— **पितुमानिति** ।। पितुरित्यन्ननाम 'असाधारण्येन व्यपदेशाः भवन्ति' इति न्यायेन बह्वन्नभोक्तृत्वात्तद्वानित्युच्यते । प्रसिद्धं च भीमे बह्वन्नभोक्तृत्वं बकासुरवधादौ । भीमशब्दप्रवृत्तिनिमित्तमप्यत्रोच्यते । सप्तशिवासु सप्त च ताः शिवा अपौरुषेयत्वादिना निर्दोषत्वेन मङ्गलरूपाश्चेति सप्तशिवास्तासु ऋगाद्याश्चत्वारः इतिहासपुराणं पञ्चरात्रञ्चेति सप्तत्वम् ।

'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः।।' इति ।

सत्तत्ववचनात् द्रष्टव्यम् । मातृषु मापयन्ति प्रमापयन्ति परमात्मानमिति मातरः। तत्र नित्यः नित्यं आसमन्तात् शये शेते रमत इति यावत् । अनेन माः प्रमाणानि भृता यस्मिन्निति भीमशब्दार्थ उक्तो भवति । तथा च सत्तत्ववचनं 'भृतमो भीम' इत्युक्तमिति । अथ पूर्णबोधाख्यतृतीयावतार उच्यते— **तृतीयमस्येति** ।। अस्य वृषभस्य वायोः तृतीयं वपुरित्यनुवर्तते तृतीयं रूपं इत्यर्थः। तत्किं नामकमित्यत उक्तं दशप्रमतिं पूर्णप्रज्ञ– नामकमित्यर्थः। तन्नामकं रूपं दोहसे विष्ण्वाख्यतत्वज्ञानदोहनार्थं योषणः स्त्रियः गुरुत्वात् बहुवचनं जनयन्त अजयन्त उत्पादितवत्यः अत्र सर्वत्र अडभावश्छान्दसः।। १५२ ।।

**जना—** द्वितीयं रूपमाह— **पृक्ष इति** ।। पृतनाक्षयकारित्वात् पृक्षः। पितुमान् बह्वन्नभोक्ता । 'पितुरित्यन्ननाम' इति श्रुतेः। द्वितीयं वपुः नित्यः प्रलयेऽप्यविलुप्तज्ञानः। भीमः सप्त शिवासु ऋगाद्याश्चत्वार इतिहासः पुराणं पञ्चरात्रकमिति सप्तसङ्ख्याकासु निर्दोषत्वाच्छिवासु मङ्गलरूपासु मङ्गलाख्यविष्णुप्रतिपादकासु वा नित्यः नित्यासु इति वा । अत्र केषाञ्चिदर्थतः नित्यत्वं ज्ञेयम् । मातृषु मापयन्ति ज्ञापयन्ति अर्थानिति मातरस्तासु प्रमाणरूपासु आसमन्तादासम्यक् शये । सुप्तो यथा बाह्यज्ञानेनान्त एवासक्तो भवति तथा तासु आसक्तो भवतीत्यर्थः। नित्यः नित्यं शये इति वा । तृतीयमवतारमाह— **तृतीयमिति** ।। अस्य वृषभस्य देवश्रेष्ठस्य वायोस्तृतीयं वपुः

दशप्रमतिं 'शतं दशसहस्रमित्यपरिमितनामानि' इति श्रुते:। पूर्णप्रज्ञं पूर्णप्रज्ञावस्थानभूतदेहम् । योषण: गुरुत्वाद्बहुवचनम् । 'निष्कासयन् परमसौ भगवान्विवेश' इति वचनात्। दोहसे ज्ञानदोहनाय जनयन्ताजनयन्त। अथवा योषण: योषितां सप्तमातृणां दोहसे ज्ञानप्रकटनाय जनयन्त जातमिति विद्यात् । यद्वा योषण: विद्याभिमानिन्यो श्रीभूदुर्गाख्या इति ।। १५२ ।।

**ताम्र—** पृक्षो वपु:। द्वितीयं वपु: पृक्ष:। पृक्षशब्द: पृतनावाची । कुरुपृतनाक्षयकारी । पितुमान् बह्वन्नभोक्ता। सप्त चैता: शिवा: अपौरुषेयत्वादिना निर्दोषश्च सप्तशिवा:। तासु सप्तशिवासु मातृषु मापयन्ति प्रमापयन्ति इति मातर: मातृवत्पोषका: वा तासु

'ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्तास्सप्तशिवास्तत्र शयो भीमस्तत: ...।।'

इत्युक्तविधासु । आ समन्ताच्छये शेते भीमनामक इत्युक्तं भवति । तृतीयमस्य वृषभस्य श्रेष्ठस्य वायोर्दशप्रमतिं पूर्णप्रज्ञनामकं तृतीयं वपु: दोहसे ज्ञानदोहाय योषण: स्त्रिय: अजनयन्त । धायि जनि जनयन्तेति पदेष्वलोप: छान्दस:। मध्यगेहस्त्रिय:। गुरुमातृत्वाद् बहुवचनम् ।। १५२ ।।

**भारतश्री—** अथ भीमाख्यद्वितीयावतार उच्यते— **पृक्ष इति** ।। द्वितीयं वपु: द्वितीयो अवतार: पृक्षनामक: पृतनां सेनां क्षिणोतीति । अन्यदपि भीमत्वज्ञापकमुच्यते— **पितुमानिति** ।। पितुरित्यन्ननाम । 'असाधारण्येन व्यपदेशा: भवन्ति' इति न्यायेन बह्वन्नभोक्तृत्वात् तद्वानित्युच्यते । प्रसिद्धं भीमे बह्वन्नभोक्तृत्वं बकासुरवधादौ । भीमशब्दप्रवृत्तिनिमित्तमुच्यते सप्तशिवासु अपौरुषेयत्वेन निर्दोषित्वेन शुभे वा । सप्त ऋगाद्या: चत्वार: इतिहासपुराणं पञ्चरात्रश्च इति ।

'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
प्रोक्तास्सप्त शिवास्तत्र शयो भीमस्तत: स्मृत: ।।'

इति वचनात् मातृषु मापयन्ति परमात्मानं इति मातर:। तासु नित्यं आ समन्तात् शये शेते रमत इति यावत् । अनेन मा: प्रमाणानि भृता: यस्मिन्निति भीमशब्दार्थ: उक्तो भवति । अथ पूर्णबोधख्यतृतीयावतार उच्यत— **तृतीयमस्येति** ।। अस्य वृषभस्य वायो: तृतीयं वपु: इत्यनुवर्तते । तृतीयं रूपमित्यर्थ: । तत् किं नामकमित्यत उक्तम्— **दशप्रमतिमिति** ।। पूर्णप्रज्ञनामकमित्यर्थ: । 'दशेति पूर्णं निखिलम्' इत्युक्ते: दोहसे विष्णुतत्वज्ञानदोहनार्थं योषण: स्त्रिय: । गुरुत्वात् बहुवचनम् । मध्यगेहभट्टारकाणां स्त्रिय: जनयन्त अजनयन्त उत्पादिवत्य: । सर्वत्राडभाव: छान्दस: ।। १५२ ।।

**[1]निर्यदीं बुध्नान्महिषस्य वर्पस**
**ईशानास: शवसा क्रन्त सूरय: ।**
**यदीमनु प्रदिवो मध्व आधवे**
**गुहा सन्तं मातरिश्वा मथायति ।। १५३ ।।**

---

१. ऋ.सं. १-१४१-३ ।

**व्यास**— यस्मादेव बुध्नात् मूलभूतात् महिषस्य पूज्यगुणस्य विष्णोः बलादिगुणानि ज्ञानाद्यास्तु सूरयो ज्ञानिनो निरक्रन्त निरजानन्त । बुध्नान् भगवतो बलादिगुणान् कथं व्यजानन्नित्यतस्तद्व्याख्यानादित्याह— **यदीमिति** ।। ईं एव प्रदिवः प्रदीप्तो मातरिश्वा मध्वः गुहासन्तं गूहितं सन्तं यत् यस्मादयमिति वा परमात्मानं आधवे सम्यक्पतित्व एव अनुमथायति । ऋगादिशास्त्रं सम्यग्व्याचकार ।। १५३ ।।

**वादि**— बुध्नात् 'बुध अवगमे' इति धातोर्बुध्नात् ज्ञानरूपात्, बुध्नान् पण्डितान् नयति सन्मार्गं इति वा बुध्नात्, वर्पसः वरयति सज्जनान् पालयतीति व्युत्पत्त्या वर्पशब्दवाच्यात्, पूर्ववद्धातुद्वयात् कर्त्रर्थे असुन्प्रत्यय इति भावः। महिषस्य देवश्रेष्ठस्य वायोर्यत् यस्मात् तृतीयरूपात् ईं इत्थं पूर्वोक्तरीत्या ज्ञानपूरणे कृते सति ईशानासः 'बहुवचनमाद्यार्थे' इति वचनादीशानाद्या देवाः शवसा सुखेन, सूरयः ज्ञानिनः निः नितरां, क्रन्त अक्रियन्त । मध्वः मध्वनामकः मातरिश्वा वायुः, प्रदिवः प्रकृष्टबुद्धिप्रकाशवतः, पूर्वोक्तानीशानादिदेवान् अनु अनुसृत्य, पुरस्कृत्येति यावत् । गुहा गुहायां सुलोपः हृदयगुहायामित्यर्थः। सन्तं विद्यमानं गुहागूहितं सन्तमिति वा आधवे 'धवः प्रियः पतिर्भर्ता' इत्यनुशासनात् भावप्रधानाच्च निर्देशस्याधव आ समन्तात्पतित्वे विषये यद्यस्मात्कारणात् मथायति वेदशास्त्रादीनां सम्यक् मथनं करोति । अनन्तवेदविषयत्वेन मथनस्य महत्तरत्वाद्दीर्घः। अपारवेदशास्त्रादि-विचारं कृत्वा हरेः सर्वोत्तमत्वं स्थापयतीत्यर्थः। तस्मात्कारणादीशानासः सूरय अक्रियन्तेति पूर्वेणान्वयः।। १५३ ।।

**सङ्क**— अत्र धायिजनिजनयन्तेति पदेषु अल्लोपश्छान्दसत्वादेव इत्यवगन्तव्यः। यतो यस्मात् बुध्नात् बोधरूपात् तृतीयावतारं महिषस्य महितज्ञानादिषड्गुणस्य विष्णोर्गुणान् वरणीयत्वेन पातृत्वेन च वर्पसञ्ज्ञान् ईशानासः लोके ईशानरूपरुद्रादयस्तदन्ये च सूरयः मनुष्योत्तमपर्यन्ताः शवसा सुखेन निराक्रन्त नितरां ज्ञातवन्तः। बुध्नात् स्वमूलभूतादिति वार्थः। रुद्रादीनां कारणभूतो हि भगवानाचार्यवर्य इति । सर्वस्य मूलभूताद्विष्णोः प्रसादान्निरजानन्तेति वार्थः। निर्णयज्ञानमूलभूतप्रमाणान्निरजानन्तेति वार्थः। बुध्नशब्दस्य मूलवाचित्वेन प्रसिद्धेरेवमवगन्तव्यमिति । यदीं य एव श्रीविष्णुं मातरिश्वा प्रदिवः प्रकृष्टद्युतिमत्यादिगुणो मध्व आनन्दतीर्थनामा भूत्वा निर्गुणनिराकारत्वादौ आग्रहेण अशुभैः कुतर्कजालेन गूहितं आच्छादितम् । आधवे आसमन्तात्पतित्वे । मथायति ज्ञानानन्दाद्यखिलगुणमूर्त्तिः सदा सर्वजीवेभ्योऽत्यन्तभिन्नः सर्वदोषविवर्जित इति प्रकाशयति । तस्य विष्णोः गुणाः निराक्रन्तेति पूर्वत्र सम्बन्धः।। १५३ ।।

**वरद**— तदवतारप्रयोजनमप्युच्यते— **निर्यदीमिति** ।। यत् यस्मात् ईं एव यस्मात् तृतीयादेव रूपात् कथं भूतात् बुध्नात् बोधकरूपात् पूर्णबोधाख्यादीशानासः लोकेशा रुद्राद्या इतरमनुष्योत्तमपर्यन्ताः सूरयश्च महिषस्य महितषड्गुणस्य हरेर्वर्पसः वरणीयत्वात् वर्पसंज्ञकान् गुणगणान् शवसा सुखेन निः आक्रन्त नितरां ज्ञातवन्त इत्यर्थः। यदीं यदेव अनु अनन्तरं प्रदिवः प्रकृष्टद्युतिकान्त्यादिरूपो मध्वः आनन्दतीर्थाख्यः। मधुशब्दः सुखवाची [१]"मधु द्यौरस्तु नः पिता' इति श्रुतेः। वशब्दश्चावगतिकरणवाची अवगत्यर्थात् धातोः करणार्थे कप्रत्ययः चत्रर्थे कविधानमिति वचनात् । ततश्च सुखसाधनं तीर्थशब्दापरपर्यायवशब्दवाच्यं शास्त्रमस्येति मध्व इत्युक्तं भवति । स्वरित्यत्रेव उकारलोपो निरुक्तत्वात् । स एव मातरिश्वा मातरि प्रमाणभूतऋगादौ श्वयति गच्छतीति

१. ऋ.सं. १-९०-७ ।

मातरिश्वा वायुस्तदवतारः । गुहासन्तं निर्गुणत्वाद्युक्तिभिर्गूहितं सन्तं परमात्मानं आधवे भावप्रधानो निर्देशः आसमन्तत्वात् पतित्वे सर्वस्वामित्वे तज्ज्ञापनार्थं इति यावत् । मथायति मथ्नाति शास्त्रेण विचार्य निश्चायतीति भावः।। १५३ ।।

**जना**— तत्प्रयोजनमाह— **निरिति** ।। यद्यस्मात् बुध्नात् बोधरूपात् तृतीयावतारात् । ईं एव महिषस्य पूज्यगुणस्य विष्णोर्वर्णीयत्वेन पेयत्वाद्वर्पसः तन्नामकान् ज्ञानबलादीन् गुणान् । सूरयः ज्ञानिनः ईशानासः रुद्राद्याः मनुष्योत्तमपर्यन्ताः लोकेशानाः वा शवसा सुखेन निः नितरां क्रन्त आक्रमितवन्तः ज्ञातवन्तः। बुध्ना– ज्ज्ञानोपदेशे मूलभूतादाचार्याद्वा । यद्वा बुध्नात् मूलभूतप्रमाणाद् ब्रह्मसूत्रभाष्यादिति । अथवा बुध्नात् मूलरूपनारायण– प्रसादादिति वायुप्रसादाद्वा । 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यभिधाने बुध्नशब्दस्य मूले प्रयोगादेतदर्थाः ज्ञेयाः। मातरिश्वा वाय्ववतारः प्रदिवः प्रकृष्टज्ञानवान् मध्वः यदीम् अयमेव परमात्मानं गुहासन्तं गूहितं आधवे आसमन्तात् धवे भावप्रधानो निर्देशः। विषयसप्तमी पतित्वार्थे अनु अनुकूलेन मथायति ऋगादिशास्त्रं विचारयति ।। १५३ ।।

**ताम्र**— निर्यदीं बुध्नात् बोधरूपात् ईं एव यस्मादेव तृतीयरूपात् महिषस्य पूज्यषड्गुणस्य विष्णोर्वर्पसः वरणीयत्वाद्वर्पाख्यान् गुणान् ईशानासः बहुवचनमाद्यर्थे ईशानप्रभृतयः सुरास्ततोऽन्ये सूरयश्च शवसा सुखेनैव निराक्रन्त ज्ञातवन्तः। यदीं य एव प्रदिवः कान्त्यादिमान् मातरिश्वा मातरि प्राणसमूहे शेत इति वा । वाय्ववतारत्वात् मातरिश्वा मध्वः 'मध्वित्यानन्द उद्दिष्टः वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थस्स्यात् तृतीया मारुती तनुः' इत्युक्तत्वेन । आधवे आसमन्तात् पतित्वेन असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् । वदद्भिर्मायिप्रभृतिभिः कलियुगे गूहितं सन्तं हरिं मथायति उपक्रमादिभिर्विचार्य निश्चाययतीत्यर्थः। 'आसमन्तात् पतित्वे तु गूढं कलियुगे हरिम्' इति प्रमाणानुसारेणायमर्थ उक्तः। आधवे आसमन्तात् पतित्वे विषय इति ।। १५३ ।।

**भारतश्री**— तदवतारप्रयोजनमाह— **निर्यदीमिति** ।। निः यत् ईमिति छेदः । यत् यस्मात् ईं एव । तृतीयादेव रूपात् । बुध्नात् बोधनरूपात् । बोधाख्यात् ईशानासः लोकेशाः रुद्राद्याः इतरे मनुष्योत्तमपर्यन्ताः सूरयश्च । महिषस्य महितषड्गुणस्य हरेः । वर्पसः वरणीयत्वादिना वर्पसञ्ज्ञकान् गुणान् । शवसा सुखेन । क्रन्त निराक्रन्त नितरां ज्ञातवन्त इत्यर्थः । यदीं य एव अनु अनन्तरं प्रदिवः प्रकृष्टकान्त्यादिरूपः मध्वः आनन्दतीर्थाख्यः । मधुशब्दः सुखवाची । वशब्दवाच्यं ज्ञानम् । द्वन्द्वसुखकरं शास्त्रमस्य इति मध्व इत्युक्तं भवति । स एव मातरि प्रमाणभूतर्गादौ श्वयति गच्छतीति मातरिश्वा । वायुस्तदवतारः गुहासन्तं निर्गुणवाद्युक्तिभिः गूहितं सन्तं परमात्मानम् । भावप्रधानो निर्देशः। आ समन्तात् पतित्वे स्वामित्वे तज्ज्ञापनार्थायेति यावत् । मथायति मथ्नाति । शास्त्रेण विचार्य निश्चाययति इति भावः ।। १५३ ।।

**[1]प्र यत् पितुः परमान्नीयते**
**पर्या पृक्षुधो वीरुधो दंसु रोहति ।**
**उभा यदस्य जनुषं यदिन्वत**
**आदिद्यविष्ठो अभवद् घृणा शुचिः ।। १५४ ।।**

---

१. ऋ.सं १-१४१-४ ।

**व्यास**— यद्रूपं परमात्पितुः परमेण पित्रा प्रतीयते । ततः तस्याः न काचिदनुपपत्तिः परि परितो भवन्तीः पृक्षुधः प्रश्नाख्याः वीरुधो दंसु रोहती प्रश्नपरिहारं सम्यक्करोतीत्यर्थः। यत् यस्मात्कारणात् उभावुभौ लक्ष्मीनारायणौ अस्य जनुषः जन्म इन्वतः प्रेरयतः । आदित् तस्मादेव कारणात् शुचिः वायुः घृणी सज्जनेषु कृपया यविष्ठो बालकोऽभवत् ।। १५४ ।।

**वादि**— यद्यस्मात्कारणात्परमात् उत्तमात् पितुः स्वजनकान्नारायणात्, आ समन्तात् परि परितः प्रणीयते प्रेर्यते । इदं कार्यं कुरु इदं कार्यं कुर्विति प्रेर्यत इत्यर्थः। पाजकक्षेत्रे उत्पद्यस्व, ब्रह्मसूत्रस्य दशोपनिषदां च भाष्याणि कुरु, रजतपीठपुरे कृष्णं प्रतिष्ठापय, सेतुदर्शनार्थं गच्छ, तत्रापि खलान्निर्जयस्व, सुजनेषु ज्ञानं दिश, बदरीं गच्छ, व्यासं पश्य, मध्ये मार्गे सुजनाननुगृहाणेत्यादिरूपेण प्रणीयत इत्यर्थः। पृक्षुधः पृतः प्रश्ना एव क्षुद्वत् परपीडकत्वात् क्षुधस्ता एव वीरुधः लताः । विशेषेण पुनः पुना रुहन्तीति हि लता वीरुधः। प्रश्नानामपि पुनः पुनरुत्पत्तेर्वीरुधां साम्यम् । ताः सर्वाः दंसु दन्तेषु रोहति आरोपयति । अन्तर्णीतो णिच् । यथा बलीवर्दो लताः दन्तेषु निक्षिप्य नाशयति तद्वत्परप्रश्नानपि नाशयतीति भावः। दत्स्विति वक्तव्ये दंस्विति वचनं पुंस्वितिवत् वर्णविकारादिना ज्ञेयम् । यद्यस्मात्कारणात् उभा उभौ लक्ष्मीनारायणौ अस्य मध्वस्य जनुषं जन्म 'जा प्रापणे' इति धातोर्गत्यर्थानां ज्ञानार्थकत्वात् यत् ज्ञानमुद्दिश्य इन्वतः प्रेरयतः युगे युगे प्रेरयतः, तत् तस्मात्कारणात् आत् अकारवाच्यान्नारायणात् यविष्ठः वायोरवतारेषु कनिष्ठो मध्वाचार्य इत् इत्थमिदानीं दृश्यमानप्रकारेण घृणा घृणावान् दुर्जनानपि भीमवत् हनूमद्वच्च हर्याज्ञाया अभावात् कुतो हन्मीति कृपावान् अत एव शुचिः स्वप्रतिवादितया प्रत्यवस्थितानामपि विप्ररूपाणां विदुषां वाचा दूषणेऽपि करेणाहिंसनात् विप्रहत्यानिमित्तजनापवादेनापि अस्पृष्टोऽभवदित्यर्थः ।। १५४ ।।

**सङ्क**— अस्मात्स्वपितुः परमाद्विष्णोः सर्वकार्येषु प्रकृष्टत्वेन प्रीत्या नीयते तस्मात् पृक्षुधो वीरुधः दंसु उपर्यारोहति । चर्वितवच्छकलीकरोति प्रश्ना एव क्षुत्साधर्म्यात् पृक्षुधः वीरुत्साधर्म्यात् वीरुधः तत्साधर्म्यं च तेषां पुनः पुनरभिव्यक्तत्वादिकम् । वीरुत्साधर्म्यं तु प्रश्नानां प्रायशो जनैः मुखेनाच्छाद्यत्वम् । यदस्य वायोर्जनुषं जननं यद्यस्मिन्काले यस्मिन् देशे अपेक्षितं तत्र तत्र जननं उभा उभौ लक्ष्मीनारायणौ ब्रह्मविष्णू इन्वतः प्रेरयतः। आत् अस्मादेव हेतोः वायुरिव शुद्धत्वात् शोधकत्वाच्च शुचिपदवाच्यः कृपारूपत्वात् घृणाशब्द.... [1]घव्यः मध्वतारेण यविष्ठोऽभवत् । अथवा यविष्ठो महान् शुचिः अवतारत्रयवान् अभवदिति ।। १५४ ।।

**वरद**— तस्यैवावतारस्य सामर्थ्यान्तरमुच्यते यत् तृतीयं रूपं पितुः स्वजनकात्परमात् सर्वोत्कृष्टात् विष्णोः सकाशात्प्रणीयते विष्णुना सर्वकार्येषु प्रेर्यते । अथ च पृक्षुधः प्रश्नरूपाः वीरुधः व्रततीः खण्डनार्थं दंसुषु दन्तेषु पर्यारोहयति स्थापयति । यथा कश्चित्पुरुषो वीरुधः खण्डयितुं दन्तेषु धारयति एवं प्रश्नान् खण्डयितुं अनूद्य चर्वितवच्छकलीकरोतीत्यर्थः। यद्यस्मात्कारणात् यस्यास्य वायोर्जनुषं जन्म अवतारं उभा उभौ लक्ष्मीनारायणौ इन्वतः प्रेरयतः तस्मात् कारणात् आत् इत् आभ्यामेव लक्ष्मीनारायणाभ्यामेव यविष्ठोऽवरोऽभवत्

---

१. अन्तरितो भागः त्रुटितः ।

तद्व्यतिरेकेणान्यस्य प्रेरकस्याभावात् तदनन्तरमयमेवेति भावः। तथा घृणाशुचिः कृपया शुद्धः अत एव मातृगर्भसम्बन्धात् दुःखलेशोऽपि नास्तीत्युच्यते ।। १५४ ।।

**जना**— यद्रूपं परमात्पितुः। हेतौ पञ्चमी । सर्वोत्तमेन पित्रा प्रनीयते प्रेर्यते। तद्रूपं पृक्षुधः प्रश्नरूपाः वीरुधः लताः दंसु दन्तेषु पर्यारोहति । वल्लीखण्डनवत् खण्डयतीत्यर्थः। यद्यस्मादुभौ लक्ष्मीनारायणौ । अस्य वायोः जनुषं जन्मावतारम् । यद्गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञानं प्रति इन्वतः प्रेरयतः। आदस्मात्कारणात् । आदित आभ्यामेव सकाशाद्यविष्ठः कनिष्ठः अभवत् । कथंभूतः विष्णुभक्तेषु घृणा दयावान् । शुचिः गर्भवासादिदोषरहितः ।। १५४ ।।

**ताम्र**— प्रयत् यत् तृतीयं रूपं पितुः स्वजनकात् परमात् सर्वोत्तमात् हरेः यत् यस्मात् प्रणीयते प्रकृष्टतया नीयते प्रेर्यते । तस्मात् वीरुधः वीरुवद् वक्रान् पृक्षुधः प्रश्नान् दंसु दन्तेषु पर्यारोहति । शकलीकरोतीति यावत् । रुद्रेन्द्राद्युपदेशकत्वमस्य कथं मध्यगेहपुत्रस्येत्यत उच्यत— **उभेति** ।। अस्य श्रीमध्वमुनेः यज्जनुषं यज्जन्ममध्यगेहगृहे ते उभौ लक्ष्मीनारायणावेव यत् यस्मात् इन्वतः प्रेरयतः आत् इत् तस्मादेव कारणात् आत् इत् आभ्यामेव यविष्ठोऽवरोऽभवत् । घृणा दयाशीलः । शुचिः शुद्धः। घृणा दयया शुद्ध इति वा । यद्वा यद्यस्मात् । उभौ लक्ष्मीनारायणौ देवी नारायणश्चेत्युभौ अस्य यज्जनुषं जन्म इन्वतः प्रेरयतः अप्रेरयतां आदित् तस्मादेव कारणात् शुचिर्वायुः। घृणा सज्जनेषु कृपयाविष्टो बालकोऽभवत् जात इति यावत् । यदस्येत्यत्र यस्यास्येत्यप्याहुः।। १५४ ।।

**भारतश्री**— तस्यैव सामर्थ्यान्तरमुच्यते— **यदिति** ।। अथ यत् तृतीयं रूपं पितुः स्वजनकात् परमात् सर्वोत्कृष्टात् विष्णोः सकाशात् प्रणीयते । विष्णुना सर्वेषु कार्येषु प्रेर्यते । अथ पृक्षुधः प्रश्नरूपाः वीरुधः व्रततीः खण्डनार्थं दंसु दन्तेषु पर्यारोहति स्थापयति यथा कथञ्चित् वीरुधः खण्डयितुं दन्तेषु धारयति एवं प्रश्नान् खण्डयितुं धारयतीत्यर्थः । अनूद्य वाचा शकलीकरोतीति यावत् । यत् यस्मात् कारणात् यत् यस्य अस्य वायोः जनुषं जन्म अवतारम् । उभा उभौ । लक्ष्मीनारायणौ । इन्वतः प्रेरयतः तस्मात् कारणात् आत् इत् लक्ष्मीनारायणाभ्यामेव यविष्ठो अवतारो अभवत् । तथा तद्व्यतिरेकेणान्यस्य प्रेरकस्याभावात् । तदनन्तरमयमेवेति भावः । तथा घृणा शुचिः कृपया शुद्धः । अत एव मातृगर्भसम्बन्धात् दुःखलेशोऽपि नास्तीत्युच्यते ।। १५४ ।।

**[1]आदिन्मातृराविशद् यास्वा शुचि-**
**रहिंस्यमान उर्विया वि वावृधे ।**
**अनु यत् पूर्वा अरुहत् सनाजुवो**
**नि नव्यासीष्ववरासु धावते ।। १५५ ।।**

**वादि**— आत् अकारशब्दवाच्याद्विष्णोराज्ञया इत् इत्थमवतारत्रयेऽपि मातृः अञ्जनाकुन्तीविप्रपत्नीरूपाः, आ त्रेतायुगं द्वापरयुगं कलियुगं च मर्यादीकृत्याविशत् । यासु मातृषूर्व्या उरुतरया स्वशक्त्या आ समन्तात्

१. ऋ.सं. १-१४१-५ ।

शुचिर्दुष्कर्मादिभिरस्पृष्टोऽत एवाहिंस्यमानः दुष्कर्मणोदरस्थजन्त्वादिना वाऽहिंस्यमानः सन् ववृध आप्रसवं ववृधे । सनाजुवः सनातनं परमात्मानं जुषन्ति प्रतिपादयन्तीति सनाजुवः 'जुषी प्रीतिसेवनयोः' इति धातोः सजूरित्यादाविव जूरित्युकारान्तः शब्दोऽयमिति ज्ञेयम् । पूर्वाः सप्तविद्यासु पूर्वा ऋग्यजुःसामाथर्वाख्या नित्यविद्याः। 'यत्तदोर्नित्यसम्बन्धः' इति वचनात् यत् यस्मात्कारणात् नित्यास्तस्मात्कारणात् अनु तदर्थबोधकशिक्षाकल्प–व्याकरणादिकमनुसृत्यारुहत् वृक्षारोहणकर्तृवत् शनैः शनैर्विचारयामासेति भावः। नि नितरां, नव्यसीषु नवीनास्ववरासु पौरुषेयत्वेन ततोऽवरासु पञ्चरात्रभारतमूलरामायणाख्यविद्यासु धावते तद्वत् काठिन्याभावत् शीघ्रं शीघ्रं व्याख्यातीत्यर्थः। आलोचने सर्वविषयं ऋजुयोगिज्ञानम् । अतः पूर्वविद्यास्वप्रसिद्धालौकिकबहुपदसद्भावात् स्वरसंहितापदादीनां नियतत्वेन स्वच्छन्दवृत्तेरनुचितत्वाच्च शनैः शनैर्व्याख्याति पौरुषेयग्रन्थेषु तथा काठिन्याद्य–भावात् शीघ्रं शीघ्रं व्याख्यातीति भावः।। १५५-१५७ ।।

**सङ्क—** अस्मादेवोक्तप्रेरणाख्यहेतोरेवायं अवतारत्रयेऽपि मातॄराविशत् न पुनरस्य गर्भवासादिकारणभूतं विकर्मास्ति यासु मातृषु आ समन्तात् शुचिः शुद्ध एव विवावृधे । मातृशरीरादिसम्बन्धादिप्राप्त्यै दोषैरस्पृष्ट इत्यर्थः। श्रीविष्णुभक्त्यादिगुणैः सह विशेषेण ववृधे इति यावत् । रोगादिभिः अहिंस्यमानो अबाध्यमानः। कुत एतदित्यत आह । उर्विया उरुत्वेन स्वेन महिम्नेत्यर्थः। ऋगादिसप्तमातॄणां मध्ये पूर्वं ऋगाद्याश्चतस्रो मातॄः नित्यज्ञानोऽपि विशेषपरिज्ञानाय उपक्रमोपसंहारादिपर्यालोचनात् आदित् अनुक्रम्य आरुहत् । कथम्भूताः ताः सनाजुवः। सनेति शब्दस्तु पुराणवाची । अतः पुराणं श्रीविष्णुं परममुख्यवृत्या अखिलशब्दैः वाच्यं महातात्पर्येण जुषन्त इति ताः सनाजुवः। पुराणैरेव ऋष्यादिभिः विशेषतो जुष्टत्वाच्च ताः सनाजुवः। यत् येभ्य एव अवरासु इतिहासपुराणपञ्चरात्राख्यासु मातृषु तिसृषु नव्यसीषु कृतत्वेन नूतनासु ऋगादिमूलप्रमाणापेक्षया अवरासु उपक्रमोपसंहारादिपर्यालोचनं विनैव नितरां धावते । तदर्थस्यापि पूर्वमेवावगतत्वात् सद्यो यथावदर्थप्रतीतिः उपपन्नेति धावत इत्युक्तम् । शीघ्रगमनं हि धावनमित्यर्थः। सनाजुव इति विशेषणं सप्तमातृष्वपि सम्बध्यते । अन्योऽर्थ उच्यते । ऋगाद्याः पूर्वाः सप्तमातॄः वायुः तत्तत्तात्पर्यानुसारिव्याख्यानादिरूपेण आरुहत् । तत एव लोके धर्मज्ञानयोः स्थापनाय वेदादिसप्तमात्रापेक्षया वरासु अञ्जनाद्यासु नव्यसीषु अञ्जनादिमातृषु तिर्यङ्मनुष्ययोनित्वेन नीचासु धावते श्रीनारायणाज्ञावश एव विलम्बेनावततारेति वर्गस्यार्थः ।। १५५ ।।

**वरद—** यस्मात् कारणात् वायुः आत् इत् प्रकृतात् लक्ष्मीनारायणप्रेरणादेव मातॄराविशत् न पुनरस्य गर्भवासनिमित्तं विकर्मास्तीति भावः । यासु मातृषु आसमन्ताच्छुचिः शुक्लशोणितसम्बन्धरहितः अत एव उर्विया उरुत्वेन महिमोत्कर्षेण अहिंस्यमानः गर्भवासनिमित्तदुःखेनाबाध्यमानः विवावृधे विशेषेणाभिवृद्धोऽभूदित्यर्थः। सप्तशिवासु मातृष्वित्युक्तं तत्र विशेषणमाह पूर्वाः ऋगाद्याः कथम्भूताः सनाजुवः सर्वदा विद्यमानं परमात्मानं महायोगवृत्या महारूढ्या च तात्पर्येण जुषन्ते प्रतिपादयन्तीति सनाजुवः। एवं भूतेषु ऋगादिषु यत् आरुहत् अनुक्रमादेवारुहत् उपक्रमादिलिङ्गैः क्रमेणैवार्थं विचारयामासेत्यर्थः। अवरासु त्रिषु इतिहासपुराणपञ्चरात्राख्यासु मातृषु कथम्भूतासु नव्यसीषु कृतत्वेन नूतनासु निधावते उपक्रमोपसंहारादिपर्यालोचनादिनैव नितरां धावते शीघ्रमेवार्थं विचारयतीत्यर्थः। तदर्थस्य पूर्वमेवावगतत्वात् सद्य एव यथावदर्थं प्रतीतिराविर्भवतीति भावः। शीघ्रगमनं हि धावनं लोके प्रसिद्धमिति ।। १५५ ।।

**जना—** यस्मादादित् अस्मान्नारायणादेव तत्प्रेरणयैव मातॄ: श्रीभूदुर्गाजयाशांत्याद्यञ्जनादिमातॄश्च अविशत् तस्मादेव यासु मातृषु आसमन्ताच्छुचिरुर्विया उत्कृष्टशक्त्या अहिंस्यमान: विवावृधे विशेषेण ववृधे। यद्वासु मातृषु पूर्वा श्री: आद्या । अनु अनुक्रमेण रुहत् जात: । तासु ज्येष्ठाद्यनुक्रमेण जात:। 'रुह जन्मनि प्रादुर्भावे' इति धातो:। 'स्वयम्भुप्राणात्मशेष' इत्युक्तत्वात् । कथंभूता सनाजुव: विष्णुसेवारता:। नव्यसीषु नूतनदेहवत्वान्नूतनासु अवतारासु स्वत: नीचासु निधावते व्युत्क्रमेण धर्मान्तरं शीघ्रं जननं प्राप्नोति । 'संस्पर्शमात्रादभवत्' इत्युक्तत्वात् । यद्वा आदिन्मातॄ: ऋगादिसप्तमातॄ आविशद्विचारयामास । उर्व्या उत्कृष्टज्ञानादिमच्छक्त्या अहिंस्यमान: अज्ञानादिदोषैरस्पृष्ट:। आसमन्ताच्छुचिर्यथा वास्ति तथा ज्ञानत्वाच्छुचिर्विवावृधे रुद्रादिभ्योऽधिकं ज्ञातवान् । ज्ञानसम्पादनप्रकारमाह— **अन्विति** ।। यद्वासु मध्ये पूर्वा ऋगाद्याश्चतस्र: ता अनुरूपक्रमाद्यनुकूलेनारुहत् ज्ञातवान् कथंभूता: सनं पुराणं सनातनं विष्णुं जुषन्ति प्रतिपादयन्तीति । सनं पुरातनं कालं जुषन्तीति । अपौरुषेया इति वा । नव्यसीषु पौरुषेयत्वेन नूतनासु अवतारासु वेदादनन्तरभूतासु इतिहासपुराणपञ्चरात्राख्यासु नितरां धावते वेदार्थज्ञानेनैतदर्थस्य जातत्वात् शीघ्रं जानाति ।। १५५ ।।

**ताम्र—** आदित् आत् इत् लक्ष्मीनारायणानुग्रहादेव मातॄ ऋगादिविद्या आविवासत् यासु प्रविश्यासमन्तात् शुचि: हेतुगर्भविशेषणं अज्ञानादिदोषरहितत्वादहिंस्यमान: वाक्यार्थाप्रतिभानादिना अपीड्यमान उर्विया उरुत्वेन विशेषाकारेण ववृधे अभिवृद्धोऽभवत् । [1]'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते' इति दैर्घ्याभाव:। व्याख्याप्रकार: प्रदर्श्यत— **अन्विति** ।। यत्तृतीयं रूपं पूर्वा अनादिभूता: सनाजुव: सनातना: नित्या: प्रकृतसप्तविद्या: मध्ये पूर्वा प्रथमत उक्त:। ऋगाद्यपौरुषेयविद्या:। अन्वारुहत् क्रमेणोपक्रमादिविचारपूर्वकमारुहत् व्याकरोत् । नव्यसीषु पौरुषेयेषु अत एवावरासु पश्चाद्गणितेषु भारतादिषु निधावति तात्पर्यतो व्याकरोतीति यावत् ।। १५५ ।।

**भारतश्री—** यस्मात् वायु: आत् प्रकृतात् लक्ष्मीनारायणादेव मातॄ: प्राविशत् । न पुन: अस्य गर्भवासनिमित्तं विकर्मास्तीति भाव: । यासु मातृषु आ समन्तात् शुचि: शुक्लशोणितसम्बन्धशून्य:। आत् इत् यासु आशुचि इति पदच्छेद: । अत एव अहिंस्यमान: उर्व्या उरुत्वेन महिम्ना विशेषेण अभिवृद्धोऽभूदित्यर्थ: । सप्त शिवासु मातृषु इत्युक्तं तत्र पूर्वा: ऋगाद्या: कथंभूता: सनाजुव: सर्वदा विद्यमानं परमात्मानं महायोगवृत्त्या तात्पर्येण जुषन्ते प्रतिपादयन्तीति सनाजुव: । एवं भूतेषु च ऋगादिषु यत् आरुहत् तदनुक्रमादिमत् उपक्रमादिलिङ्गै: क्रमेणैव आरुहत् । अर्थं विचारयामासेति यावत् । अवरासु त्रिषु इतिहासपुराणपञ्चरात्राख्यासु मातृषु कथंभूतासु नव्यसीषु कृतकत्वेन नूतनेषु एतासु निधावते उपक्रमादिपर्यालोचनया शीघ्रं अर्थं विचारयतीत्यर्थ: । तदर्थस्य पूर्वमेवावगतत्वात्। सद्य एव यथार्थप्रतीतिराविर्भवतीति भाव: । शीघ्रगमनं विधावनं लोके प्रसिद्धमिति ।। १५५ ।।

[2]**अश्वमेध: क्रतुश्रेष्ठो ज्योति:श्रेष्ठो: दिवाकर: ।**
**ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुत: ।। १५६ ।।**

**व्यास—** ब्रह्मण: सर्वोत्तमत्वे भारतवाक्यमुदाहरति— **अश्वमेध इति** ।। १५६-१५७ ।।

---

१. ऐ.भा. १-६ । २. म.भा. आदिपर्वणि १२९-४६ ।

**वादि—** विष्णोः सर्वोत्तमत्वे वायोस्तदितरदेवोत्तमत्वे देवतातारतम्ये च भारतादौ स्थितप्रमाणवाक्यानि पठति— **अश्वमेध इत्यादिना** ।। १५६-१५७ ।।

**सङ्क—** एवं तावत् हनूमतः स्वरूपनिर्णयेन मूलरूपस्य वायोः स्वरूपनिर्णयमाह— **अश्वमेधेत्यादिना** ।। १५६-१५७ ।।

**वरद—** एवं हनुमदादिरूपस्य वायोः सर्वाधिकार्युत्तमत्वं वेदेन प्रसाध्य प्रमाणान्तरेणापि साधयति— **अश्वमेध इत्यादिना** ।। मनुष्यदृश्येषु ज्योतिषु दिवाकरः श्रेष्ठ इत्यर्थः। स्पष्टमन्यत् ।। १५६-१५७ ।।

**जना—** वायोरुत्तमत्वे भारतवाक्यं पठति— **अश्वमेध इति** ।। तु शब्द एवार्थः।। १५६ ।।

**ताम्र—** वायोस्सर्वोत्तमत्वे भारतवाक्यान्तरमुदाहरति— **अश्वमेध इति** ।। १५६-१५७ ।।

**भारतश्री—** वायोः उत्तमत्वं स्मृत्यापि साधयति— **अश्वमेध** इति ।। १५६ ।।

**बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् ।**
**बलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः ।। १५७ ।।**

**जना—** इन्द्रादितारतम्ये प्रमाणं पठति— **बलमिति** ।। हरेरिन्द्रादेरपि बलत्वात् साक्षादित्युक्तम् । अन्यत अन्यस्माद्बलं न भवति अन्यमिति वा ।। १५७ ।।

**[१]वायुर्भीमो भीमनादो महौजाः**
**सर्वेषां च प्राणिनां प्राणभूतः ।**
**अनावृत्तिर्देहिनां देहपाते**
**तस्माद् वायुर्देवदेवो विशिष्टः ।। १५८ ।।**

**व्यास—** भीमो भयङ्करः।। १५८-१५९ ।।

**वादि— देहिनां देहपात** इत्यत्र देहिनां देहपाते सति अनस्य वायोरवृत्तिर्देहेऽवर्तनं तावद्दृश्यते । एवं च देहे प्राणाभावे सति देहस्य पतितत्वेन जीवनाभावस्याप्यावश्यकत्वात्प्राणाभावे जीवनामभाव इति व्यतिरेकः सिद्धः। इदं चोपलक्षणम् । इतरचक्षुराद्यभिमानिदेवानां देहेऽवर्तमानत्वस्यान्धबधिरमूकतादशायां दर्शनेऽपि प्राणस्य देह एव वृत्तावन्धीभूय बधिरीभूय मूकीभूय वा जीवनस्यैव दर्शनेनेतरदेवताभावे जीवनाभाव इति व्यतिरेकस्य भग्नत्वान्न तेषां व्यतिरेकसिद्धिः। देह एव प्राणे सति चेतरदेवानामभावदशायामप्यन्धीभूय बधिरीभूय मूकीभूय वा जीवनस्यैव दर्शनेन प्राणे सति जीवनमिति प्राणस्यान्वयोऽपि सिद्धः। अत एवेतरदेवानामभावेऽपि प्राणे सत्यन्धीभूय बधिरीभूय मूकीभूय वा जीवनस्यैव दर्शनेनेतरदेवेषु सत्स्वेव जीवनमित्यन्वयोऽपि न सिद्धः।

१. म.भा. शान्तिपर्वणि २६४-४१ ।

यद्वा [1]"वाक् प्राविशत् अशयदेव । चक्षुः प्राविशत् अशयदेव । श्रोत्रं प्राविशत् अशयदेव । मनःप्राविशत् अशयदेव ।' इति श्रुतेः प्राणाभावदशायां वागादिदेवानां प्रवेशेऽपि जीवनादर्शनेनेतरजीवेषु सत्सु जीवनमित्य–न्वयोऽपि तेषां भग्नः। तथा च यस्मात्प्राण एवोक्तविधया जीवनान्वयव्यतिरेकानुविधायित्वेन सकलजीवनहेतुर्नेतरस्तस्माद् देवदेवः देवेष्वप्यघटितमाहात्म्यवत्त्वाद्देवानामपि देवः। भीमः भयङ्करः। भीमनादः यमभटानामपि भयङ्करप्राणघोषाख्यनादवान् । महौजाः सर्वेषां च प्राणिनां प्राणभूतः श्वासाभिमानी वायुर्विशिष्टः देवादिसकलजीवेभ्योऽप्युत्तम इति श्लोकार्थः। तदुक्तमैतरेयोपनिषदि । [2]"प्राण उदक्रामत् तत्प्राण उत्क्रान्तेऽपद्यत तदशीर्यताशारीती । तच्छरीरमभवत्'। [3]"प्राणः प्राविशत् तत्प्राणे प्रपन्न उदतिष्ठत । तं देवा अब्रुवन् । त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मः त्वमस्माकमसि' इति । तच्छरीरं आ शारि आ अशीर्यत, आ शीर्णमभवत् । इति ईं हेतोः तच्छरीरमभवदित्यर्थः। त्वमुक्थमुत्तमं दैवतमसीति श्रुतेरर्थो ज्ञेयः। श्रुतेरपेक्षितांश एवोद्धृतःसमग्रश्रुति–रुपनिषद्येव द्रष्टव्या ।

यद्वा यस्माद्देहिनां देहपाते सत्यनावृत्तिः स्वमूलरूपं प्रत्येकेनाप्यंशेनावृत्तिरहितो मुख्यप्राणोऽन्ये देवा देहिनां मृतौ भागतस्तमनुव्रजन्ति । भागतः स्वमूलरूपं प्रति गच्छन्ति । मुख्यप्राणस्त्वेकेनाप्यंशेन स्वमूलरूपं प्रत्यगत्वा यथा पूर्वं स्थितः तथैव जीवं परमात्मानं चोढ्वा पूर्वदेहाद्देहान्तरं गच्छति । तस्मादपि देवदेवो विशिष्ट इति योजना ।। १५८ ।।

**अभिनव**— वायुर्भीमो इति श्लोके प्राणिनां प्राणभूत इत्यस्य प्राणिनां प्राणः चेष्टाभूतं भूतिः सत्ता इत्येते देयत्वेनास्य स्त इत्यर्थः । तेन प्राणिनां प्राण इत्येतावता पूर्णत्वात् भूत इत्येतद्व्यर्थमिति दूषणं निराकृतम् । प्राण–भूतशब्दः अर्श आद्यजन्तः । अतस्तेन प्राणिनां चेष्टाप्रदः, सत्ताप्रदश्चेत्यर्थो लभ्यते इत्यङ्गीकारात् ।। १५८ ।।

**सङ्क**— वायुर्भीम इत्यस्मिन् श्लोके पूर्वपादत्रयेण अन्त्यपादस्य हेतुहेतुमद्भावस्सम्बन्धः। देहिनां देहपाते देहापगमे अनस्य वायोः अवृत्तिः वर्तनाभावः एव कारणम् । वायोः स्वरूपप्राप्तिपरित्यागाभ्यां देहिनां उत्पत्तिमरणश्रवणात् । न विद्यते आ समन्तात् देहे वृत्तिर्वर्तनं अस्येत्यनावृत्तिर्वायुः इति वा योजनेत्यर्थः। देहिनां स्थूलसूक्ष्मदेहपाते सति मुक्त्यनन्तरं पुनरावृत्तिर्न भवत्यस्मादित्यनावृत्तिः वायुरिति वार्थः ।। १५८ ।।

**वरद**— वायुर्भीम इत्यस्मिन् भारतवाक्ये यस्मादित्युपस्कर्तव्यम् । यस्माद्वायुर्भीमः असुराणां भयङ्करः तत्र हेतुः— **भीमनाद इति** ।। भीमो भयङ्करो नादो ध्वनिर्यस्यासौ तथोक्तः। तथा महत् ओजो यस्यासौ महौजाः। सर्वेषां प्राणिनां जीवानां प्राणभूतश्चेष्टाप्रदः। तथा देहिनां प्राणिनां देहपाते कार्ये अनस्य वायोरावृत्तिः कारणमित्यर्थः। मुख्यप्राणेन देहे परित्यक्ते तत्पातो भवति नान्यथेति भावः। अथवा देहिनां मुमुक्षूणां देहपाते चरमदेहपाते अनावृत्तिर्यत्प्रसादात् भवतीत्यर्थः। यस्मादेतादृशो वायुस्तस्मात् देवानामपि देवोत्तम एव विशिष्टः सर्वोत्कृष्टश्चेत्यर्थः।। १५८ ।।

---

१. ऐ.उ. १-४-८ । २. ऐ.उ. १-४-८ । ३. ऐ.उ. १-४-८ ।

**जना**— पुनरपि वायोरुत्तमत्वे मानं पठति— **वायुरिति** ।। भीमः भयङ्करः। प्राणभूतः प्राणानां इन्द्रियाणां सत्त्वे कारणभूतः। यद्वा प्राणिनां जीवानां प्राणभूतः जीवनकारणभूतः। देहिनां देहपाते सति अनावृत्तिर्न विद्यते आ समन्तात् वृत्तिर्वर्तनं यस्येति । अनतीत्यनो जीवः तस्यासमन्ताद्वृत्तिरवस्थानं यस्मिन्निति वा ।

[1]"देहाद्देहान्तरगतौ प्रविशेत् प्राणमेव तु ।
जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम् ।।' इति हरिवंशवचनात् ।

अने चेष्टके हरौ आवृत्तिर्यस्येति वा । अथवा देहिनां चरमदेहपाते न विद्यते आवृत्तिर्देहान्तरमस्य यस्मात्सः। यद्वा मृतौ अनस्य प्राणस्यावृत्तिः कारणं यस्मात् [2]"कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि । कस्मिन्वहं प्रतिष्ठिते प्रतिष्ठास्यामि' इति श्रुतेः । मृतजीवानुगमने विशेषः ऐतरेयभाष्ये भारते –

[3]"म्रियमाणमिमं जीवं वासुदेवादिदेवताः।
त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ।।
गतैर्भागैरपि पुनः विशेयुर्भोगसिद्धये ।
भोग्यलोकमनुप्राप्तं तस्मात्स्वप्रवदन्तरा ।।' इति ।

तस्माद्देवदेवस्तत्त्वदेवानां देवः अधिपतिः अत एव विशिष्टः श्रेष्ठः।। १५८ ।।

**ताम्र**— भीमो भयङ्करः। प्राणभूतः प्रकर्षेण चेष्टकस्वरूपः। तत्र हेतुः अनावृत्तिरिति । देहिनां देहपाते अनस्य मुख्यप्राणस्यावृत्तिः कारणं तस्मात्प्राणभूतः तस्मात् वायुर्देवदेवः विशिष्ट इत्यर्थः। देहिना सूक्ष्मस्थूलदेहपाते सति मुक्त्यनन्तरं अनावृत्तिरपुनरावृत्तिर्भवत्यस्मादित्यनावृत्तिरित्यप्याहुः।। १५८ ।।

**भारतश्री**— अनावृत्तिः अनस्य मुख्यप्राणस्य । आवृत्तिः अवस्थानम् । देहिनां देहपाते कारणमिति शेषः ।। १५८ ।।

**तत्त्वज्ञाने विष्णुभक्तौ धैर्ये स्थैर्ये पराक्रमे ।**
**वेगे च लाघवे चैव प्रलापस्य च वर्जने ।। १५९ ।।**

**वादि**— [4]"प्रलापोऽनर्थकं वचः' इत्यभिधानात् प्रलापस्य व्यर्थवचनस्येत्यर्थः ।। १५९-१६० ।।

**सङ्क**— यथा हनुमतः स्वरूपनिर्णयेन वायोर्मूलरूपस्य निर्णयः कृतः तथा भीमसेनस्य स्वरूपनिर्णयेन मूलस्वरूपनिर्णयमाह— **तत्वज्ञान इत्यादिना** ।। १५९-१६० ।।

**वरद**— यथा अन्यतरस्थलान्तरेऽपि भारते भीमात्मकस्य वायोः सर्वाधिकार्युत्तमत्वमुक्तं अस्तीति तद्वाक्यमुदाहरति— **तत्वज्ञान इत्यादिना** ।। १५९ ।।

---

१. भा.ता. ११-३-३९ । २. ष.उ. २-१ । ३. ऐ.भा. २-१ । ४. अमरकोश. १-१९० ।

**जना**— वायोरवतारभूतभीमोत्कर्षप्रतिपादकवाक्यैः वायूत्कर्षं भारतवाक्यैः प्रतिपादयति— **तत्वज्ञान इति** ।। विषयसप्तमी । धैर्ये मनोऽचाञ्चल्ये । स्थैर्ये देहस्याचाञ्चल्ये । प्रलापस्यानर्थवचनस्य वर्जने च परित्यागे । 'प्रलापोऽनर्थकं वच' इत्यभिधानम् ।। १५९ ।।

**ताम्र**— पराक्रमे पराभिभवे । प्रलापस्य दैन्यवाक्यस्य ।। १५९ ।।

**भीमसेनसमो नास्ति सेनयोरुभयोरपि ।**
**पाण्डित्ये च पटुत्वे च शूरत्वे च बलेऽपि च ।। १६० ।।**

**व्यास**— पाण्डित्ये विद्वत्तायाम् ।। १६० ।।

**अभिनव**— भीमसेनसमो नास्ति इति श्लोके बलेऽपि चेति चशब्दः अवधारणार्थः । तस्य भीमसेनसमो न च नैवास्तीति सम्बन्धः। एतेन बलेऽपि चेति चशब्दो व्यर्थ इति दूषणं परास्तम् ।। १६० ।।

**वरद**— सेनयोरुभयोरपीति पाण्डवसेनायां कौरवसेनायां भीमसेनसमो नास्तीत्युक्त्या अश्वत्थामाद्युत्तमत्वलाभात् रुद्राद्युत्तमत्वमेव लभ्यत इति भावः। प्रलापस्य दुःखस्य पटुत्वे दृढत्वे सर्वलोकोत्तमत्वे भीमस्य ।। १६०-१६१ ।।

**जना**— उभयोः कुरुपाण्डवयोः ।। १६० ।।

**ताम्र**— पाण्डित्ये आगमार्थविज्ञाने। पटुत्वे युक्तिपाटवे । शूरत्वे अभीरुत्वे । 'शौर्यं तेजो धृतिः' इति न्यायदीपे[1] तथा व्याख्यातत्वात् । 'सेनयोरुभयोरपि । भीमसेनसमो नास्ति' इत्युक्त्या अश्वत्थामाद्युत्तमत्व–सिद्धिः ।। १६०-१६१ ।।

**तथा युधिष्ठिरेणापि भीमं प्रति समीरितम् ।**
**धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम् ।**
**[2]त्वय्यायत्तमिदं सर्वं सर्वलोकस्य भारत ।। १६१ ।।**

**व्यास**— युधिष्ठिरेणेति वाक्यं वक्तृश्रोतृप्रसिद्धार्थम् ।। १६१-१६६ ।।

**वरद**— प्रमाणान्तरमपि दर्शयितुमाह— **तथेति** ।। तद्वाक्यमुदाहरति— **धर्मश्चेति** ।। सर्वलोकस्य यदिदं सर्वधर्मादिकं तत् त्वय्यायत्तं त्वदधीनमित्यर्थः।। १६१ ।।

**जना**— तथा सर्वोत्कर्षप्रतिपादकवच अस्ति तदुदाहरति— **धर्म इति** ।। यश इतीदं सर्वं त्वयि आततं व्याप्तं त्वदधीनमित्यर्थः। त्वय्यायत्तमिति क्वचित् । आयत्तं स्वाधीनं कृतम् ।। १६१ ।।

---

१. न्यायदीपः १८-४३ । २. 'त्वय्याततं' इति जनार्दनीयाभिमतः पाठः, 'त्वय्यायत्तं' इति च पाठान्तरं तत्रैव ।

**विराटपर्वगं चापि वचो दुर्योधनस्य हि ।**
**[१]वीराणां शास्त्रविदुषां कृतीनां तत्त्वनिर्णये ।**
**सत्त्वे बाहुबले धैर्ये प्राणे शारीरसम्भवे ।। १६२ ।।**

**वादि**— '**वीराणां शास्त्रविदुषाम्**' इत्यत्र वीराणां यच्छास्त्रं शस्त्रं शास्त्रं तद्विदुषां मध्ये, शास्त्रविदुषां वेदपञ्चरात्रादिशास्त्रविदुषामिति वा । कीचकस्य शास्त्रेऽनधिकारेऽपि भीमादित्रयाणां शास्त्रेऽधिकारसद्भावादत एव 'भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान्' इति त्रीन्सहोक्त्वा 'चतुर्थः कीचकश्च' इति कीचकस्य पृथगुक्तिः। कृतीनां कर्तव्यकर्मणां तत्त्वनिर्णये । अत एव लाक्षागृहान्निर्गमननिर्णयं भीम एव कृतवान् नान्यः। 'अन चेष्टायां' इति धातोः प्राणे प्रकृष्टचेष्टायां शरीरसम्भवे शरीरसम्बन्धि शारीरमुद्गमनोत्पतनादिकं तस्य सम्भवे सम्भावनायाम् ।। १६२-१६६ ।।

**अभिनव**— 'वीराणां' इति श्लोकद्वयम् । तस्यार्थः वीराणां शास्त्रविदुषां वीराणां यानि शास्त्राणि तज्ज्ञानिनां साम्प्रतं इदानीं मानुषे लोके भूलोके विद्यमानानां सदैत्यनरराक्षसे दैत्यनरराक्षससहितानां मध्ये कृतीनां कर्तव्यकर्मणां तत्त्वनिर्णये, सत्त्वे प्रज्ञाबले, बाहुबले, धैर्ये, प्राणिचेष्टायां, पौरुषे इति यावत् । शारीरसम्भवे शरीर-सम्बन्धिकरचरणाद्यवयवानां सम्यक् सत्त्वे चत्वारः श्रेष्ठाः । तत्वनिर्णयादौ श्रेष्ठाः इत्युक्तं विवृणोति— **सम्पूर्णबलपौरुषा** इति ।। एतेन बाहुबले इत्येतत् सत्त्वे इत्यनेन पुनरुक्तमिति दूषणं परास्तम् । सत्त्वशब्देन बाहुबलं नोच्यते । किन्तु प्रज्ञाबलमुच्यत इत्यभ्युपगमात् । एतेनैव शारीरसम्भवे इत्येतद् व्यर्थमिति दूषणं परास्तम् । विद्यमानामित्याहृतेनान्वित इत्यङ्गीकारात् । एतेनैव प्राणिनामित्यस्य षष्ठी बहुवचनान्तत्वात् तदनुसारेण सदैत्यनरराक्षसानामिति वक्तव्यं सदैत्यनरराक्षसे इति कथनमयुक्तमिति दूषणं परास्तम् । सदैत्य-नरराक्षसे इति सप्तम्येकवचनं षष्ठीबहुवचनादेश इति स्वीकरणात् । एतेनैव सत्त्वे बाहुबले प्राणे श्रेष्ठाः इत्यनेन प्रज्ञाबलबाहुबलपौरुषाणामाधिक्यस्योक्तत्वात् सम्पूर्णबलपौरुषा इत्येतत् पुनरुक्तमिति दूषणस्यानवकाशः । तत्त्वनिर्णये इत्याद्युक्ततत्त्वनिर्णयादेराधिक्यं, सत्त्वे इत्याद्युक्तबलपौरुषयोरत्याधिक्यमिति ज्ञापनार्थं तत्त्वनिर्णयादौ श्रेष्ठा इत्यस्य विवरणं सम्पूर्णबलपौरुषा इत्यनेन क्रियत इत्यङ्गीकारात् । यद्यपि भीमसेननिष्ठानां तत्त्वनिर्णयादीनां सर्वेषामत्याधिक्यम् । तथापि दुर्योधनः स्वप्रतीत्यनुसारेण तत्त्वनिर्णयादेराधिक्यं बलपौरुषयो-रत्याधिक्यमुक्तवानिति तथा अनुवादः कृत इति द्रष्टव्यम् ।। १६२ ।।

**वरद**— ननु युधिष्ठिरादिवचनं स्नेहेनोक्तमिति न तेनोक्तार्थनिश्चय इत्यतो मुख्यद्वेषिणा दुर्योधनेनापि भीमसेनस्य स्वरूपस्थितिरुक्तास्तीति भावेन विराटपर्वस्थं दुर्योधनवचनं उदाहर्तुं आह— **विराटेति** ।। यद्वचनमुदाहरति — **वीराणामित्यादिना** ।। शारीरसम्भवे शरीरसम्बन्धिन्यामुत्पत्तौ ।। १६२-१६४ ।।

**जना**— दुर्योधनस्य च वचोऽप्यस्ति । हि प्रसिद्धम् । वीराणां शूराणां शास्त्रविदुषां तत्त्वशास्त्रविदुषां कृतीनां कुशलानां प्राणिनां मध्ये । सत्त्वे ज्ञानबलयोः । प्राणे प्रकृष्टचेष्टायाम् । साम्प्रतमिदानीं चत्वारः श्रेष्ठाः बाहुबले प्राण इत्यनेन बलपौरुषयोरुत्कर्षत्वेऽपि सम्पूर्णबलपौरुषा इति ।। १६२ ।।

---

१. म.भा. विराटपर्वणि ३२-१६ ।

**ताम्र**— युधिष्ठिरवचनस्यानुजख्यात्यर्थमुपपद्यत इत्यतो दुर्योधनवाक्यमस्तीत्याह— **विराटेति** ।। सत्त्वं साधुभावः। [1]''आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धना' इत्यत्र बलशब्दादपौनरुक्त्यै गीतातात्पर्ये तथा व्याख्यतत्वात्। शरीरसम्भवे शारीरसम्बधित्वेन जाते प्राणे बल इत्यर्थः। शारीरसम्भवबलवतामपि बाहुशालित्वाभावाद्वा बाहुबलं पृथक्। शारीरसम्भवे शरीरसम्बन्धिन्यामुत्पत्ताविति केचित् ।। १६२–१६५ ।।

**[2]साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ।**
**चत्वारः प्राणिनां श्रेष्ठाः सम्पूर्णबलपौरुषाः ।। १६३ ।।**

**जना**— पुनर्बलपौरुषयोः कथनं कीचकस्य तत्त्वनिर्णयज्ञानयोरभावात् ।। १६३-१६५ ।।

**[3]भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् ।**
**चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ।**
**[4]अन्योन्यानन्तरबलाः क्रमादेव प्रकीर्तिताः ।। १६४ ।।**

**अभिनव**— **'अन्योन्यानन्तरबलाः'** इत्यस्ति । तस्यार्थः भीमादयः चत्वारः क्रमादेव अन्योन्यानन्तरबलाः अन्योन्यनिरपेक्षाः अनन्तरबलाश्च प्रकीर्तिताः । क्रमादित्यस्य अनन्तरबला इत्यनेनैव सम्बन्ध इति । एतेन क्रमाद् अनन्तरबला इत्यनेनैव पूर्णत्वात् अन्योन्य इत्येतद् व्यर्थमिति दूषणं परास्तम् । मध्यमपदलोपिसमासमङ्गीकृत्य अन्यौन्यशब्देन बहुशत्रुपराभववेलायामपि अन्योन्यनिरपेक्षत्वं वक्तुं अन्योन्येत्युक्तमित्यङ्गीकारात् ।। १६४ ।।

**वरद**— अत्र अन्योन्यानन्तरबला इति बलभद्राद्यपेक्षया भीमस्याधिकत्वोक्त्या सर्वाधिकार्युत्तमत्वं लभ्यते ।। १६४ ।।

**जना**— तानुदाहरति— **भीम इति** ।। पञ्चमस्याप्रसिद्धिं सूचयितुं तेषां पञ्चमं पञ्चसङ्ख्यापूरकं नानुशुश्रुम इति। एतेऽपि समाः किं नेत्याह— **अन्योन्येति** ।। एते चत्वारः अन्योन्यं परस्परं अनन्तरं तारतम्योपेतं बलं येषां ते क्रमादेव भीमादिक्रमेणैव प्रकीर्तिताः। शेषादप्युत्तमत्वे इदं प्रमाणं ज्ञेयम् । तथा भीमोत्कर्षप्रतिपादकं एकवचनं जात्यभिप्रायेण ।। १६४ ।।

**वचनं वासुदेवस्य तथोद्योगगतं परम् ।**
**[5]यत् किञ्चात्मनि कल्याणं सम्भावयसि पाण्डव ।**
**सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहम् ।। १६५ ।।**

**वादि**— **आत्मनि कल्याणमित्यत्र** कल्याणं भक्तिविरक्त्यादिशोभनगुणम् ।। १६५ ।।

---

१. भ.गी. १७-८ । २. म.भा. विराटपर्वणि ३२-१७ । ३. म.भा. विराटपर्वणि ३२-१८ । ४. म.भा. विराटपर्वणि ३२-१९ ।
५. म.भा.उद्योगपर्वणि ७६-३ ।

**सङ्क—** हे भीमसेन आत्मनि स्वस्मिन् स्थितं कल्याणं मङ्गलाख्यं सामर्थ्यं यत्किञ्चित् अल्पं सम्भावयसि। निरूपयसि एतत्कल्याणमहं सहस्रगुणाधिकमपि त्वयि सम्भावयामि ।। १६५ ।।

**वरद—** तथोद्योगपर्वणि परमाप्तेन कृष्णेनापि भीमस्योत्कृष्टत्वमुक्तमस्तीति तद्वाक्यमुदाहर्तुमाह— **वचनानामिति** ।। तदेव वचनमुदहरति— **यत्किञ्चेति** ।। पाण्डवेति भीमसेनस्य सम्बोधनम् । यत्किञ्चित्कल्याणं महिमातिशयं आत्मनि सम्भावयसि मन्यसे ततोऽपि सहस्रगुणं कल्याणवत्वं अहं त्वयि सम्भावयामि मन्य इत्यर्थः ।। १६५ ।।

**जना—** तान्युदाहरति— **यदिति** ।। पाण्डव भीम आत्मनि यत्किञ्चित् । कल्याणं ज्ञानभक्तिबलादिकं सम्भावयसि अहं त्वयि यज्ज्ञानादिकं सहस्रगुणमपि ततोऽप्यधिकं सम्भावयामि ।। १६५ ।।

**ताम्र—** कल्याणं शुभगुणम् । सम्भावयसि मन्यसे ।। १६५ ।।

**[१]यादृशे च कुले जातः सर्वराजाभिपूजिते ।**
**यादृशानि च कर्माणि भीम त्वमसि तादृशः ।। १६६ ।।**

**व्यास—** कर्माणि जरासन्धवधादीनि ।। १६६-१६८ ।।

**वादि—** 'भीम त्वमसि तादृशः' इत्यत्र हे भीम त्वं सर्वराजाभिपूजिते यादृशाकुले जातस्त्वं तादृशः तत्कुलजननयोग्योऽसि । तत्कुलजातानां यादृशानि कर्माणि योग्यानि त्वं तादृशस्तादृशकर्मवांश्चासीति योजना ।। १६६-१६८ ।।

**सङ्क—** अतिशयगुणयुक्तत्वेन यादृशे कुले त्वं जातः सर्वातिशयित्वेन यादृशानि च कर्माणि करोषि हे भीम त्वं तादृशः तस्मिन् कुले जननार्थं तानि च कर्माणि कर्तुं योग्योऽसीत्यर्थः।। १६६ ।।

**वरद—** न केवलमेतावत् किं नाम हे भीम सर्वराजाभिपूजिते यादृशे कुले जातः यादृशानि च कर्माणि करोषि तादृशे कुले जननार्थं तादृशानि च कर्माणि कर्तुं त्वं तादृशस्तद्योग्योसीत्यर्थः।। १६६ ।।

**जना—** हे भीम सर्वराजाभिपूजिते यादृशे सर्वोत्कृष्टे कुले जातः। यादृशानि सर्वोत्कृष्टानि कर्माणि करोषि त्वमपि तादृशः सर्वोत्कृष्ट असि ।। १६६ ।।

**ताम्र—** यादृशे सर्वोत्तमे कुले जातः। कर्माणि जरासन्धवधादीनि तादृशानि रुद्राद्यसाध्यतयात्युत्तमानि । त्वमपि सर्वोत्तमः। तदसाध्यकृतिमत्वादिति भावः ।। १६६ ।।

**[२]अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः ।**
**धूरर्जुनेन वोढव्या वोढव्य इतरो जनः ।। १६७ ।।**

---

२. म.भा.उद्योगपर्वणि ७६-४ । २. म.भा. उद्योगपर्वणि ७६-१८ ।

**अभिनव**— अस्मिन् युद्धे इति श्लोकः । तस्यार्थः । हे भीमसेन अस्मिन् युद्धे त्वयि भारः समाहितः । कुत इत्यत आह **धूरिति** । धूः भारः त्वया वोढव्या वोढव्यः । त्वमेव भारग्रहणसमर्थ इति यावत् । यस्मात् तस्मात् भारः त्वयि समाहितः इति पूर्वेणान्वयः । ननु भारग्रहणसमर्थाः अर्जुनः, अर्जुनव्यतिरिक्ताः जनाश्च सन्ति । अतस्तेषु भारः स्थापनीय इत्यत आह— **अर्जुनेनेति** ।। अर्जुनेन समाहिता इतरशूरजनाः त्वया वोढव्याः । अतः त्वय्येव भारः स्थापनीयः इति । एतेन भीमसेनमाहात्म्यकथनावसरे अर्जुनेन धूः, इतरे जनाश्च वोढव्या इत्यर्जुनमाहात्म्यकथनमसङ्गतमिति दूषणं परास्तम् ।। १६७।।

**सङ्क**— धूः युगम् ।। १६७ ।।

**वरद**— हे भीमसेन अस्मिन् युद्धे सर्वोऽपि भारस्त्वयि समाहितः। अत्र धूर्युगमर्जुनेन वोढव्या नेतव्या इत्यर्थः। ते इतरजनाः वोढव्याः नेतव्याः तदशक्यः सर्वो भारस्त्वयि समाहित इति भावः।। १६७ ।।

**जना**— हे भीमसेन त्वयि भारः समाहितः अर्जुने स्थिते किं मां वदसीत्यत आह— **धूरिति** ।। धूर्युगन्धरः। त्वया इतरे जनाः वोढव्याः। अनेन रथिकस्त्वं त्वङ्गदभूतोऽर्जुनः। यथा युगन्धरः वाहकोऽश्वः तथेत्युक्तं भवति ।। १६७ ।।

**ताम्र**— भारः सर्वोऽपि भारः त्वयि समाहितः अर्जुनस्य सत्वात् त्वयीति विशिष्योच्यते तत्राह— **धूरिति** ।। अर्जुनेनापि धूर्भारो वोढव्य इत्यर्थः। 'धूः स्याद्यानमुखे भारे' इति यादवः। धूः तादृशः सेनेत्यप्याहुः। धूर्युगमित्यप्याहुः। तथा च युगन्धराश्ववदर्जुनः। रथिकवद्भवानिति भावः। धृष्टद्युम्नादीनां भावात्तैः शत्रुजयोपपत्तिरित्यत आह— **वोढव्या इति** ।। १६७ ।।

**उक्तं पुराणे ब्रह्माण्डे ब्रह्मणा नारदाय च ।**
**यस्याः प्रसादात् परमं विदन्ति**
**शेषः सुपर्णो गिरिशः सुरेन्द्रः ।**
**माता च येषां प्रथमैव भारती**
**सा द्रौपदी नाम बभूव भूमौ ।। १६८ ।।**

**व्यास**— एवं ब्रह्मणः सर्वोत्तमत्वं प्रसाध्य तारतम्यप्रसङ्गात् तदनन्तरदेवान् क्रमेणाह— **उक्तमित्यादिना** ।। १६८-१७० ।।

**वादि**— इदानीं भारत्याः स्वरूपमाह— **यस्या इति** ।। १६८-१७० ।।

**सङ्क**— अथ भारत्याः स्वरूपं वक्तुमाह— **उक्तमिति** ।। परमं विष्णुं विदन्ति जानन्तीत्यर्थः ।। १६८ ।।

**वरद**— वायोरनन्तरं भारत्याः स्वरूपं वक्तुमाह— **उक्तमिति** ।। तदेवं ब्रह्माण्डपुराणस्थवाक्यं उदाहरति — **यस्या इति** ।। यस्याः भारत्याः प्रसादात्परमं सर्वोत्तमं विष्णुं शेषः सुपर्णो गिरिशः सुरेन्द्रश्चेत्येते विदन्ति

जानन्ति या येषां शेषादीनां प्रथमा माता । सा भारती द्रौपदीति प्रसिद्धा भूमौ बभूवेति सम्बन्धः ॥ १६८ ॥

**जना**— द्रौपद्याः भारतीत्वे शेषाद्युत्तमत्वे च प्रमाणमाह— **उक्तमिति** ॥ तदुदाहरति— **यस्या इति** ॥ परमं परमात्मानं इत्येते वदन्ति जानन्ति । येषां शेषादीनां प्रथमा मातैव विनतादिषु पश्चाज्जननमिति ज्ञेयम्। सा भारती भूमौ द्रौपदीति नाम प्रसिद्धा बभूव । नाम नामवती वा ॥ १६८ ॥

**ताम्र**— परमं भगवन्तम् । विदन्ति जानन्ति परमं स्थानं प्राप्नुवन्ति । शेषादीनां कश्यपभार्योत्पन्नत्वस्यापि भावात् प्रथमेत्युक्तम् ॥ १६८-१७१ ॥

**या मारुताद् गर्भमधत्त पूर्वं**
**शेषं सुपर्णं गिरिशं सुरेन्द्रम् ।**
**चतुर्मुखाभांश्चतुरः कुमारान्**
**सा द्रौपदी नाम बभूव भूमौ' ॥ १६९ ॥**

**वरद**— या च भारती शेषादीन् चतुर्मुखसदृशांश्चतुरः कुमारान् गर्भत्वेन दधार सेति सम्बन्धः। अनेन सरस्वतीस्वरूपमप्युक्तं भवति ॥ १६९ ॥

**जना**— तमेवार्थं स्फुटं प्रमाणेनोपपादयति— **चतुर्मुखेति** ॥ चतुर्मुखाभान् भाविसञ्ज्ञया वायुश्चतुमुर्खस्तस्य पुत्रत्वे आभान् योग्यान् ॥ १६९ ॥

**यस्याधिको बले नास्ति [१]भीमसेनमृते क्वचित् ।**
**न विज्ञाने न च ज्ञान एष रामः स लाङ्गली ॥ १७० ॥**

**वादि**— इदानीं शेषस्य स्वरूपमाह— **यस्येति** ॥ १७० ॥

**सङ्क**— इदानीं भारत्यनन्तरभावित्वात् शेषस्य स्वरूपनिर्णयमाह— **यस्येति** ॥ १७० ॥

**वरद**— अथ भारत्यनन्तरत्वे शेषं निरूपयितुं तदवतारभूतबलभद्रस्वरूपं प्रमाणेन निर्धारयति— **यस्येति**॥ यस्य बलभद्रस्य बलादिविषये एकं भीमसेनमन्तरेणान्योऽधिको नास्ति स एष इति सम्बन्धः ॥ १७० ॥

**जना**— शेषस्येन्द्राधिक्ये भारतमुदाहरति— **यस्येति** ॥ विज्ञाने सामान्यज्ञाने च ॥ १७० ॥

**यस्य न प्रतियोद्धाऽस्ति भीममेकमृते क्वचित् ।**
**अन्विष्यापि त्रिलोकेषु स एष मुसलायुधः ॥ १७१ ॥**

---

१. 'भीममेकमृते' इति पाठान्तरम् ।

**व्यास**— यस्येत्यादि भारतवचनम् । प्रतियोद्धा नास्तीत्यत्र हेतुमाह— **अन्विष्येति** ।। न दृश्यते एव इति शेष: ।। १७१ ।।

**वरद**— यस्य बलरामस्य प्रतियोद्धा त्रिलोकेषु अन्विष्य मार्गयित्वा विचार्यमाणेपि एकं भीममृते क्वचिदपि नास्ति । स एष इति सम्बन्ध:।। १७१-१७४ ।।

**जना**— अन्विष्यापि अन्वेषणे कृतेऽपि अन्विष्य स्थितस्य यस्येति वा ।। १७१ ।।

**ताम्र**— प्रतियोद्धा नास्तीत्यत्र हेतुरन्विष्यते । न दृश्यते यत इति शेष:।। १७१ ।।

> **तथा युधिष्ठिरेणैव भीमाय समुदीरितम् ।**
> **अनुज्ञातो रौहिणेयात् त्वया चैवापराजित ।**
> **सर्वविद्यासु बीभत्सु: कृष्णेन च महात्मना ।। १७२ ।।**

**व्यास**— अनुज्ञातोऽनन्तरमनुज्ञात: । कृष्णेन च कृष्णादपि ।। १७२-१७६ ।।

**वादि**— अधुना इन्द्रावतारस्यार्जुनस्य स्वरूपमाह— **तथेति** ।। यस्मात्कारणात् बीभत्सू रौहिणेयात् त्वया च महात्मना कृष्णेन च सर्वविद्यास्वनुज्ञातोऽनुज्ञां प्राप्तवान् तस्मादपराजित इति योजना । अनेन कृष्णात् वार्यीर्बलरामाच्चानन्तरमर्जुन इत्युक्तं भवति 'व्यत्ययो बहुलं' इति वचनात् । त्वामनु त्वत्तोऽनु अनन्तरं रौहिणेयमनु रौहिणेयादनु अनन्तरमित्यर्थ: ।। १७२-१७६ ।।

**अभिनव**— अनुज्ञातो इति श्लोकद्वयम् । तस्यार्थ: हे भीम अपराजितं त्वां अनु अपराजितस्य तवानन्तरम् । अपराजितं रौहिणेयं अपराजितस्य रोहिणेयस्य अनु अनन्तरम् । सर्वविद्यासु अपराजित इति एष बीभत्सु: महात्मना कृष्णेन त्वया च रोहिणेयात् रोहिणेयेन च ज्ञात: । तस्मात् वीर्ये देहबले, शौर्ये देहबलकार्यवैरिनिग्रहे, बले अविद्याजयपराक्रमे, च फल्गुनात् ऋते तृतीय: नास्ति । फल्गुन एव तृतीय: । फल्गुनादन्य: कामावतार: प्रद्युम्न: चतुर्थ इति । अयं भाव: मुख्यत: सर्वविद्यासु अपराजितो भीम: । भीमस्यानन्तरं बलराम: । बलरामस्यानन्तरं फल्गुन इति कृष्णेन भीमेन रौहिणेयेन च ज्ञातत्वात् अपराजितानां मध्ये भीम: आद्य: । बलरामो द्वितीय: । अर्जुन: तृतीय: । प्रद्युम्न: चतुर्थ इति । एतेन अनुज्ञात इत्यत्र ज्ञात इत्यनेनैव पूर्णत्वात् अन्वित्येतत् व्यर्थमिति दूषणं निरस्तम् । अन्वित्यस्य त्वामित्यनेनैवान्वय: इत्यभ्युपगमात् । एतेनैव फल्गुनादृते तृतीयो नास्तीत्यनेन पूर्णत्वात् अन्य इत्येतत् व्यर्थमिति दूषणं परिहृतम् । अन्य इत्यस्य अध्याहृतेन चतुर्थ इत्यनेनान्वय इत्यभ्युपगमात् ।। १७२ ।।

**सङ्क**— अधुना तदनन्तरभावित्वेन इन्द्रावतारार्जुनस्वरूपनिर्णयं वक्तुमाह— **तथेति** ।। रौहिणेय त्वया च श्रीकृष्णेन च बीभत्सु: सर्वविद्यासु अनुज्ञात एव एभ्यो विद्योपदेशादिरूपेणानुज्ञां लब्धवानित्यर्थ:। एतेभ्योऽनन्तरं ज्ञातो बीभत्सुरित्यर्थ: ।। १७२ ।।

**वरद**— इदानीं शेषानन्तरत्वेन इन्द्रं वक्तुं तदवतारस्य अर्जुनस्य स्वरूपं वक्तुमाह— **तथैवेति** ।। तदेव वाक्यमुदाहरति— **अनुज्ञात इति** ।। हे भीम त्वया रौहिणेयात् बलभद्राच्च अनु अनन्तरं अपराजितो बीभत्सुः अर्जुनो महात्मना कृष्णेन च अनुज्ञात इत्यर्थः ।। १७२ ।।

**जना**— अनिरुद्धादिभ्यः अर्जुनस्य श्रैष्ठ्ये भारतवाक्यमुदाहरति— **तथेति** ।। महात्मना कृष्णेन बीभत्सुरर्जुनः। रौहिणेयं बलभद्रं त्वया त्वां चानु । अनन्तरं सर्वविद्यासु अपराजितो इति ज्ञातः।। १७२ ।।

**ताम्र**— ।। **अनुज्ञात इति** ।। हे भीम रौहिणेयात् त्वया कृष्णेन च बीभत्सुः सर्वविद्यास्वनुज्ञातः। विद्योपदेशादिरूपेण अनुज्ञां गतवान् । भवतां शिष्य इति यावत् । यद्वा रौहिणेयात् त्वया त्वत्तः कृष्णेन च कृष्णादप्यनु अनन्तरं बीभत्सुः सर्वविद्यासु कैरप्यपराजितो ज्ञायत इत्यर्थः। बीभत्सुः त्वया कृष्णेन च रौहिणेयादनन्तरमेव सर्वविद्यास्वपराजितो ज्ञात इति वा ।। १७२ ।।

**[१]अन्वेष रौहिणेयं च त्वां च भीमापराजितम् ।**
**वीर्ये शौर्येऽपि वा नान्यस्तृतीयः फल्गुनादृते ।। १७३ ।।**

**सङ्क**— न केवलं सर्वविद्यास्वनुज्ञातमात्रेण भीमरौहिणेयाभ्यां अनन्तरभाव्यर्जुनः किन्तु वीर्ये शौर्ये बले च ताभ्यामनन्तर एवेत्याह— **अन्वेषेति** ।। अनु पश्चादित्यर्थः ।। १७३-१७५ ।।

**वरद**— उक्तमेव स्पष्टमाह— **अनु इति** ।। अपराजितं त्वां च रौहिणेयं च अनु एषः फल्गुन इत्यर्थः। तस्मात् द्वितीयादिविषये फल्गुनादृते तृतीयो नास्तीत्यर्थः ।। १७३ ।।

**जना**— हे भीम रौहिणेयं त्वां चानु वीर्ये शौर्ये बले च एष अर्जुन अपराजितः ।। १७३ ।।

**ताम्र**— न केवलं विद्यासु किन्तु वीर्यादावपीत्याह— **अन्विति** ।। एषः फल्गुन एव वीर्यादौ रौहिणेयमपराजितं त्वां चानु पश्चादित्यर्थः। अवधारणव्यावर्त्यमाह— **नान्य इति** ।। १७३-१७५ ।।

**तथैव द्रौपदीवाक्यं वासुदेवं प्रतीरितम् ।**
**[२]अधिज्यमपि यत् कर्तुं शक्यते नैव गाण्डिवम् ।**
**अन्यत्र भीमपार्थाभ्यां भवतश्च जनार्दन ।। १७४ ।।**

**वरद**— एतस्मिन्नेवार्थे वाक्यान्तरमप्यस्तीत्याह— **तथैवेति** ।। तदेव वाक्यमुदाहरति— **अधिज्यमिति**।। भीमपार्थाभ्यां भवतश्च अन्यत्र अन्यैर्गाण्डीवं धनुरधिज्यं अध्यारोपितं ज्याकर्तुं न शक्यत इति सम्बन्धः। अनेन कृष्णभीमानन्तरं सर्वेभ्योऽधिकत्वं च पार्थस्योक्तं भवति ।। १७४ ।।

---

१. म.भा. वनपर्वणि १४३-२१ । 'सङ्कर्षणं महावीर्यं त्वां च भीमापराजितम् । अनुयातः स्ववीर्येण वासुदेवं च शत्रुहा ।।' २. म.भा. वनपर्वणि १२-८० । इदानीमुपलभ्यमानपाठस्तु 'नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् । अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ।।' इति ।

**जना**— तदेवं व्यक्तमाह— **नेति** ।। अर्जुनादृते तृतीयः त्रित्वसङ्ख्यापूरक अन्यो न । ज्याभधिवर्तमानमधिज्यं ज्यासहितमित्यर्थः ।। १७४ ।।

**तथैवान्यत्र वचनं कृष्णद्वैपायनेरितम् ।**
**द्वावेव पुरुषौ लोके वासुदेवादनन्तरौ ।**
**भीमस्तु प्रथमस्तत्र द्वितीयो द्रौणिरेव च ।। १७५ ।।**

**व्यास**— द्वावेवेति भीमस्य सर्वोत्तमत्वे मानान्तरम् ।। १७५ ।।

**वादि**— पूर्वं भीमादनन्तरं शेषरूपराम इत्युक्तम्। अधुना रुद्ररूपी द्रौणिस्तथेत्याह— **द्वावेवेति** ।। १७५।।

**सङ्क**— ननु फल्गुनस्य तृतीयत्वं कथं उपपद्यते बलभद्रादनन्तरं अश्वत्थाम्नो विद्यमानत्वादित्याशङ्क्य बलभद्रद्रौण्यौः साम्याभिप्रायेण फल्गुन एव तृतीय इति परिहर्तुमाह— **तथैवान्यत्रेति** ।। १७५ ।।

**वरद**— ननु बलभद्रानन्तरत्वेनाश्वत्थाम्नो वक्तव्यत्वेऽर्जुनस्य तृतीयत्वेन कथमुक्तिरित्यतो बलभद्र-निरूपणेनैवाश्वत्थामापि व्याख्यात इत्यभिप्रायेण सिंहावलोकन्यायेन तत्र प्रमाणं दर्शयितुमाह— **तथैवेति** ।। तदेव वचनमुदाहरति— **द्वावेवेति** ।। लक्ष्मीव्यावृत्त्यर्थं पुरुषाविति उक्तम् । तत्रापि साम्यं न मन्तव्यमित्याह— **भीमस्त्विति** ।। १७५ ।।

**जना**— द्रौणेः तृतीयस्य सत्वात् कथं नान्यस्तृतीय इत्युक्तमित्यतः द्रौणिर्द्वितीय एव न तृतीय इत्यत्र भारतगतं व्यासवाक्यमुदाहरति— **तथेति** ।। १७५ ।।

**ताम्र**— बलभद्रादनन्तरं अर्जुनोक्तिः कथं द्रौणेर्भावादित्यतः रौहिणेयद्रौण्योः साम्यादर्जुनस्य तृतीयत्वं सम्भवतीति भावेन द्रौणेर्द्वितीयत्वमाह— **द्वावेवेति** ।। श्रियो वासुदेवादपृथक्त्वान्न शङ्कावकाशः। पुरुषपदेन तद्व्यावृत्तिरित्यप्याहुः ।। १७५ ।।

**अक्षयाविषुधी दिव्ये ध्वजो वानरलक्षणः ।**
**गाण्डीवं धनुषां श्रेष्ठं तेन द्रौणेर्वरोऽर्जुनः ।। १७६ ।।**

**व्यास**— नन्वर्जुस्य द्रौणेरप्याधिकस्य विद्यमानत्वात् द्वितीयो द्रौणिः स्यादित्यतो वस्तुवृत्योक्तमित्याशयवानाह — **अक्षयाविति** ।। १७६ ।।

**वादि**— ननु क्वचिद्युद्धे द्रौणेरप्यधिकं सामर्थ्यमर्जुनस्य श्रूयते तद्घटनायाह— **अक्षयाविति** ।। अन्योपाधिकमेवार्जुनस्याधिक्यं न तु स्वरूपत इति भावः।। १७६-१८० ।।

**अभिनव**— 'अक्षयाविषुधी' इति श्लोके अक्षयाविषुधी इत्यस्य अक्षयबाणौ इषुधी इत्यर्थः । एतेन अक्षयबाणाविषुधी इति वक्तव्ये अक्षयाविषुधी इति कथनमयुक्तमिति दूषणस्यानवकाशः । न विद्यते क्षयो येषां

ते अक्षया इति व्युत्पत्या बाणवाचकाक्षयशब्दात् मत्वर्थे अच् प्रत्यये कृते अक्षयबाणावित्यर्थो लभ्यते इत्यभ्युपगमात् ।। १७६ ।।

**इति श्रीसत्यनाथतीर्थपूज्यपादशिष्येण श्रीसत्याभिनवतीर्थकृतायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां द्वितीयोऽध्यायः**

**सङ्क**— ननु यत्र क्वापि द्रौणेः वरोऽर्जुनः कथ्यते तत्र किं कारणमित्यत आह— **अक्षयाविति** ।। १७६ ।।

**वरद**— नन्वेवं तर्हि क्वचिदश्वत्थाम्नोऽप्यधिकोऽर्जुन इत्युक्तिरस्ति सा कथं घटत इत्यत आह— **अक्षयाविति** ।। इषुधिशब्दस्य पुल्लिङ्गत्वमाश्रित्याक्षयाविषुधीत्युक्तं स्त्रीलिङ्गत्वमाश्रित्य दिव्ये इति तयोरक्षयत्वं नामाक्षयबाणपूर्णत्वमिति द्रष्टव्यम् । वानरो हनुमान् लक्षणं चिह्नं यस्यासौ तथोक्तः। तेन पूर्वोक्तेन कारणत्रयेण कुत्रचिद्वरोऽर्जुनो भवति तदपेक्षयार्जुनोऽधिक इत्युक्तिः घटत इति भावः ।। १७६ ।।

**जना**— ननु द्रौणेरर्जुनो वर इत्युच्यते तत्कथमेतदित्यत आह— **अक्षयाविति** ।। इषुधिशब्दः उभयलिङ्ग इति ज्ञापनार्थं तादृशं विशेषणद्वयमुक्तम् । 'इषुधिर्द्वयोः' इत्यमरः। औपाधिकं श्रेष्ठ्यमर्जुनस्य न स्वाभाविकमित्यर्थः ।। १७६ ।।

**ताम्र**— तर्ह्यर्जुनस्य द्रौण्याधिक्योक्तेः का गतिरित्यत आह— **अक्षयाविति** ।। इषुधिशब्दस्य पुल्लिङ्गत्वेना-क्षयाविषुधीत्युक्तम् । स्त्रीलिङ्गत्वं चाश्रित्य दिव्य इत्युक्तम् । 'इषुधिर्द्वयोः' इत्यभिधानात् । तयोरक्षयत्व-मक्षयबाणपूर्णत्वम् ।। १७६-१७९ ।।

**भारतश्री**— इषुधिशब्दस्य स्त्रीलिङ्गत्वमप्यस्तीति ज्ञापयितुं— **दिव्ये** इति ।। १७६ ।।

**इति डम्बल अनन्ताचार्यशिष्यभारतश्रीनिवासाचार्यविरचितायां टिप्पण्यां द्वितीयोध्यायः**

**इत्याद्यनन्तवाक्यानि सन्त्येवार्थे विवक्षिते ।**
**कानिचिद् दर्शितान्यत्र दिङ्मात्रप्रतिपत्तये ।। १७७ ।।**

**व्यास**— '**विवक्षिते**' **इति** विष्णोः सर्वोत्तमत्वादौ ।। १७७ ।।

**सङ्क**— न केवलं श्रीविष्णोः सर्वोत्कर्षे वाय्वादीनां क्रमेणोत्कर्षे चोक्तवचनान्येव प्रमाणानि किन्त्वस्मिन् विवक्षितार्थे अनन्तवाक्यानि प्रमाणानि सन्त्येवेत्याह— **इत्याद्यनन्तेति** ।। ननु विवक्षितार्थे अनन्तवाक्यानि सन्तीति प्रथमत एवोच्यतां नाम कानिचन वाक्यानि किमर्थं दर्शितानीत्यतः आह— **कानिचिदिति** ।। अत्रेति विवक्षितार्थ इत्यर्थः।। १७७ ।।

**वरद**— एवं विष्णोः सर्वोत्तमत्वदेवतातारतम्यादौ प्रमाणवाक्यान्युदाहृत्योपसंहारे कारणं दर्शयन्नेव निगमयति — **इत्यादीति** ।। विवक्षिते तात्पर्यविषयीभूतविष्णोः सर्वोत्तमत्वादावर्थे । वाक्यानामनन्त्येन साकल्येनोदाहर्तु-मशक्यत्वादुपरम्यत इति भावः। अनन्तेषु वाक्येषु कानिचिदेव वाक्यानि मार्गमात्रप्रदर्शनार्थं उदाहृत्य दर्शितानीत्यर्थः।। १७७ ।।

**जना**— एवं विष्णुसर्वोत्तमत्वं देवतातारतम्यं चोपपाद्योपसंहर्तुं कारणमाह— **इतीति** ।। अनन्तत्वादुपरम्यत इति भावः। तर्हि एतावद्वाक्योदाहरणं किमर्थं कृतमित्यत आह— **कानिचिदिति** ।। अत्र तात्पर्यनिर्णयाख्ये ग्रन्थे दिङ्मात्रप्रतिपत्तये । दिगेव दिङ्मात्रं तस्य प्रतिपत्तये ज्ञानाय मार्गप्रदर्शनार्थं कानिचिद्वाक्यानि दर्शितानि ।। १७७ ।।

**तस्मादुक्तक्रमेणैव पुरुषोत्तमता हरेः ।**
**अनौपचारिकी सिद्धा ब्रह्मता च विनिर्णयात् ।। १७८ ।।**

**व्यास**— ब्रह्मादितारतम्ये च वाक्योदाहरणेन सिद्धमर्थमाह— **तस्मादिति** ।। १७८ ।।

**वादि**— **ब्रह्मता च विनिर्णयादित्यत्र** । ब्रह्मता परब्रह्मता ।। १७८ ।।

**सङ्क**— यमर्थं प्रतिपादयितुमयमध्यायः प्रारब्धः तमर्थमुपसंहरति— **तस्मादिति** ।। १७८ ।।

**वरद**— प्रमाणवाक्योदाहरणेन यमर्थं साधितवांस्तमर्थं पिण्डीकृत्योपसंहरति— **तस्मादिति** ।। उक्तक्रमेण उक्ततारतम्यक्रमेण पुरुषोत्तमता क्षराक्षरोत्तमता अनौपचारिकी मुख्यैव सिद्धा । तत्र हेतुः— **विनिर्णयादिति** ।। न केवलं पुरुषोत्तमत्वं किन्तु ब्रह्मता पूर्णता प्रसिद्धेत्यर्थः ।। १७८ ।।

**जना**— उपपादितं पुरुषोत्तमत्वमुपसंहरति— **तस्मादिति** ।। उपक्रमेण उक्ततारतम्यक्रमेण । पुरुषोत्तमतां ब्रह्मतां गुणपूर्णता च ।। १७८ ।।

**ताम्र**— विवक्षिततारतम्यान्तगत्वेन सर्वोत्तमत्वे च प्रमाणवाक्योदाहरणेन यमर्थं साधितवान् तमर्थं पिण्डीकृत्योपसंहरति— **तस्मादिति** ।। न अमात्यादिभ्यो राज्ञ इवेश्वरस्योत्तमत्वमपि तु तस्यैव निरवधिकगुण–पूर्णत्वात् अन्यगुणानामपि तत्प्रतिबिम्बत्वादस्यैव निरवधिकगुणपूर्णत्वात् मुख्यैवेत्याह— **अनौपचारिकीति**।। अनौपचारिकी उत्तमतेत्यर्थः। अनौपचारिकी ब्रह्मता पूर्णता सिद्धा । कुतः विनिर्णयात् । उपक्रमादितात्पर्यलिङ्गात् सर्वशब्दानां भगवत्परत्वनिर्णयादित्यर्थः। तदुक्तम्– 'अतोऽनन्तगुणो विष्णुर्यच्छब्दा योगवृत्तय' इति ।। १७८।।

**पूर्णप्रज्ञकृतेयं सङ्क्षेपादुद्धृतिः सुवाक्यानाम् ।**
**श्रीमद्भारतगानां विष्णोः पूर्णत्वनिर्णयायैव ।। १७९ ।।**

**व्यास**— स्वस्वरूपं ख्यापयन् अध्यायार्थमुपसंहरति— **पूर्णप्रज्ञेति** ।। १७९ ।।

**सङ्क**— यदर्थनिर्णयाय 'अथ भारतवाक्यान्येतैरेवाध्यवस्यन्ते' 'भारतेऽपि यथा प्रोक्त' इत्युपक्रमेण यथा प्रतिज्ञातं तथैव तमेवार्थं प्रकटयन् अध्यायं समापयति— **पूर्णप्रज्ञकृतेति** ।। भारतवाक्येतरवाक्यान्यपि श्रीविष्णोः पूर्णत्वनिर्णयायैवोक्तानि तथापि भारतवाक्यैरेव विशेषतः श्रीविष्णोः पूर्णत्वनिर्णयो भवतीत्यभिप्रायेण उपक्रमोपसंहारयोः श्रीभारतवाक्यग्रहणं कृतवानित्यर्थः। स्वज्ञानमप्यधिकारिणां मोक्षप्रदं भवतीति दर्शयितुमध्यायान्ते स्वनामग्रहणं कृतम् ।। १७९ ।।

**वरद—** इदानीं स्वग्रन्थस्य परमाप्तिमूलत्वेन प्रेक्षावदुपादित्सामुत्पादयन् स्वनामनिर्देशपूर्वकं अध्यायं समापयति— **पूर्णप्रज्ञेति** ।। अत्रान्येषामपि सुवाक्यानामुदाहरणेऽपि प्राधान्यापेक्षया श्रीमद्भारतगानामित्युक्तं अत एवोपक्रमेऽप्युक्तं भारतार्थानुसारत इत्यादि ।। १७९ ।।

**जना—** एवं प्रतिपादितमर्थं सङ्क्षेपेणाह— **पूर्णप्रज्ञेति** ।। विष्णोः पूर्णत्वनिर्णयायैव । श्रीमद्भारतगानां वाक्यानाम् । सङ्क्षेपादुद्धृतिरुद्धारः पूर्णप्रज्ञेन कृता ।। १७९ ।।

**ताम्र—** ग्रन्थस्य परमाप्तिमूलत्वेन प्रेक्षावदुपादित्सामुपपादयन् अध्यायार्थमुपसंहरति— **पूर्णप्रज्ञेति** ।। १७९ ।।

**स प्रीयतां परतमः परमादनन्तः**
**सन्तारकः सततसंसृतिदुस्तरार्णात् ।**
**यत्पादपद्ममकरन्दजुषो हि पार्थाः**
**स्वाराज्यमापुरुभयत्र सदा विनोदात् ।। १८० ।।**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये द्वितीयोऽध्यायः**

**व्यास—** विष्णोः सर्वोत्तमत्वनिर्णयेन किं प्रयोजनमित्यत आह— **सेति** ।। तत्प्रीत्या च किमित्यत उक्तम्— **तारक इति** ।। लिङ्गमाह— **यत्पादेति** ।। स्वाराज्यं स्वर्गराज्यम् । एतच्च राज्यं स्वर्गसदृशत्वात् स्वाराज्यम् ।। १८० ।।

**इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां**
**श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां सुवाक्योद्धारो नाम द्वितीयोऽध्यायः**

**वादि—** अध्यायद्वितयेन हरेः सर्वोत्तमत्वे तदितरदेवतातारतम्ये च बहूनि श्रुतीतिहासपञ्चरात्रपुराण-वाक्यान्युद्धृत्य स्वकृतसकलशास्त्रतात्पर्यनिर्णयाख्यहरिसेवाया ऋजुकुलोत्पन्नतया निरुपाधिकभक्तस्य मम विष्णुप्रसाद एव फलं नान्यदपेक्षितमिति भावेनाह— **स प्रीयतामिति** ।। अनन्तः देशतः कालतो गुणतश्चावधिशून्यः। अत एव परमादुत्तमत्वेन प्रसिद्धब्रह्मादिजगतोऽप्यतिशयेन परः परतमः। राजभटाद्राज्ञ इव न किञ्चिदाधिक्येन परत्वं किन्तु परमत्वमपि निरवधिकमिति भावेन परतम इत्युक्तम् । सन्तारक इत्यपि परमत्वे निमित्तान्तरम् । तारकत्वमपि समुद्रावान्तरद्वीपप्रापकनावां समुद्रोत्तारकत्ववन्न किन्तु सम्यगिति भावेनोक्तम्— **सन्तारक इति** ।। सुतरत्वे तत्तारकत्वमपि न महामहिमेत्यतो दुस्तरेत्युक्तम् । तत्रापि किं कारणमित्यतः सततेत्युक्तम् । सतता अनादिभूता संसृतिः। एकस्य मुक्तावपि पुनरन्यस्य संसारसद्भावात् सतता । सार्वकालिकी वा । सुतरत्वेऽनादि-कालमारभ्य संसारे मग्नाः स्वयमेव कुतो नावतरन्निति भावः। ननु किमर्थं संसारादुत्तरणमित्यत उक्तम्— **संसृतीति** ।। 'सृ गतौ' इति धातोः सम्यक् सदा सृतिः ऊर्ध्वाधोलोकेषु सरणं गमनं यस्यां सा तथोक्ता संसृतिः। ऊर्ध्वलोकगमने सुखं पुनरधोलोकगमने दुःखमिति सुखदुःखभरितत्वात् हेयः संसार इति भावः। कुत्रेदं दृष्टमित्यत

उक्तम्— **यत्पादेति** ।। यत्पादपद्ममकरन्दजुषो होति हेतुगर्भविशेषणम् । हरिपादपद्म–सेवयैव पुनर्न तु स्वशक्त्यैवेत्यर्थः। अस्यैवार्थस्य स्फोरणाय पार्था इत्युक्तम् । पृथायाः पुत्रा हि पार्थाः। तथा च कृष्णस्य पितृष्वसा अरण्य एव स्वभर्तुर्मरणादनाथा च तत्पुत्राणां राज्यं न स्वशक्त्या किन्तु स्वमातुलपुत्रकृष्णशक्त्यैवेति कथं न बुद्धिमतो मतम् । सर्वोऽपि साकारतया सगुणतया स्वस्वयोग्यया सेवया फलभागिति सूचनाय विशेषणत्रयम्। स्वयमेव राजत इति स्वराट् । स्वराजो भावः स्वाराज्यम् । भूमौ स्वर्गे च शत्रुभूतान् कल्यादीन्निहत्य स्वयमेव राजानोऽभवन्निति यत्तदिदमैहिकं साम्राज्यम् । परत्र मुक्तावपि ब्रह्मेन्द्रादिरूपत्वात्स्वयमेव राजानोऽभवन्नित्यामुष्मिकं साम्राज्यमित्युभयत्र स्वाराज्यम् । अत एव सदेत्युक्तम् । स्वर्गसाम्राज्यमात्रस्य सदातनत्वाभावादामुष्मिकं स्वाराज्यं मुक्तिरेवेति भावः। श्रीकृष्णकृपया उभयमपि लीलयैव प्राप्तमिति सूचनाय विनोदादित्युक्तम् ।। १८० ।।

**इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां**
**श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतश्रीमन्महाभारततात्पर्यनिर्णयटीकायां**
**भावप्रकाशिकायां द्वितीयोऽध्यायः**

**सङ्क**— यस्य श्रीविष्णोः सम्यक् स्तुत्यमध्यायं तत्प्रतिपादकमेव कृतवान् तमेव विष्णुमध्यायप्रतिपाद्य-मभीष्टसिद्ध्यर्थं अन्तेऽपि प्रार्थयति— **स प्रीयतामिति** ।। १८० ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां**
**श्रीसंकर्षणतीर्थभट्टारकविरचितायां शुभप्रकाशिकायां द्वितीयोऽध्यायः ।।**

**वरद**— एवमध्यायं परिसमाप्यान्तेऽपि यद्गुणविशिष्टतया एतदध्यायेन हरिं प्रतिपादितवांस्तद्गुणविशिष्टतया तं स्तुवन्नेव तन्निर्णयकरणफलत्वेन तत्प्रीतिमेव प्रार्थयते— **स प्रीयतामिति** ।। परमादुत्कृष्टात् पद्मापद्मभवादेः परतमः अतिशयेनोत्कृष्टः। तत्र हेतुः— **अनन्त इति** ।। सततं संसृतिरनादिप्रकृतिबन्ध एव दुस्तरार्णः महाप्रयत्नमन्तरेण तर्तुमयोग्यार्णवः तस्मात्सम्यगुत्तारयितुं समर्थ इत्यर्थः। मत्वर्थे तद्धितोः अयमतो अर्णशब्दस्योदकवाचित्वेऽपि तत्सम्बन्धलाभात्समुद्रे तात्पर्यं लक्ष्यते । अनेनैवाभिप्रायेणारम्भेपि निखिलगुणगणार्ण इत्युक्तमिति द्रष्टव्यम् । यत्पादपद्ममकरन्दजुषः यस्य विष्णोः पादाख्यपद्मयोर्मकरन्दं भक्त्याख्यपुष्परसं सेवमानाः पार्थाः पृथायाः कुन्त्या अपत्यानि पाण्डवा इतरे राजानश्चोभयत्र संसारे मुक्तौ सदा विनोदात् सर्वदा सन्तोषेणैव स्वाराज्यं स्वीयं राज्यं ऐहिकं आनन्दाविर्भावलक्षणं आमुष्मिकं च प्रापुः। सः प्रीयतामिति सम्बन्धः।। १८० ।।

श्रीमहाभारततात्पर्यनिर्णयाध्याय एव हि ।
द्वितीयो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां**
**वरदराजाचार्यविरचितायां मन्दसुबोधिन्यां द्वितीयोऽध्यायः**

**जना**— यं नत्वा यः निर्णयः कृतस्तस्यैव प्रीतिमाशास्त— **स इति** ।। यस्य सर्वोत्तमत्वं प्रतिपादितं सः परमादुत्तमाद्रमाब्रह्मादेर्जगतः परमः अतिशयेनोत्तमः प्रीयताम् । एतत्प्रीत्या किमित्यत आह— **सन्तारक इति** ।। सततः अनादिः संसृतिः संसारः स एव दुस्तरः अर्णः समुद्रस्तस्मात् । जलवाच्यर्णशब्दात् मत्वर्थे ड प्रत्यये कृते अर्णः समुद्र इति सिद्ध्यति । किमत्र ज्ञापकमित्यत आह— **यदिति** ।। उभयत्र इह लोके परलोके

च स्वर्गराज्यतुल्यत्वादिह स्वाराज्यं मुक्तौ तु स्वरूपानन्दाविर्भावात् स्वाराज्यमापुः। वनवासादिदुःखस्यानुभूतत्वात् कथमिह स्वाराज्यमित्युक्तमित्यत आह— **सदेति** ।। सदा सर्वदा विनोदात् तेन वनवासादिकं तीर्थाटनदैत्यहननादिना सुखकरमेवेति भावः।। १८० ।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधा–
त्पुत्रं प्राप जनार्दनं शमदमस्वाध्याय सम्पद्युतात् ।
पूर्तिस्तस्य कृतौ सतां सुखकरोऽध्यायो द्वितीयः शुभः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

**इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां जनार्दनभट्टविरचितायां द्वितीयोऽध्यायः**

**ताम्र**— पूर्णत्वनिर्णयेन किं प्रयोजनमित्यतोऽस्माकमेकान्तिनां भगवत्प्रीतिरेव तेषां संसारनिवृत्तिश्चेत्याह — **स इति** ।। तारकत्वे लिङ्गमाह— **यत्पादेति** ।। उभयत्र इहामुत्र । स्वाराज्यं भोगः स्वरञ्जनात् ।। १८० ।।

**इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां द्वितीयोऽध्यायः**

# अथ तृतीयोऽध्यायः

**जयत्यजोऽखण्डगुणोरुमण्डलः**
**सदोदितो ज्ञानमरीचिमाली ।**
**स्वभक्तहार्दोच्चतमोनिहन्ता**
**व्यासावतारो हरिरात्मभास्करः ।। १ ।।**

**व्यास**— एवं सर्वशास्त्रार्थनिर्णयं चाध्यायाभ्यां विधाय आख्यायिकास्वन्यथाप्रतीतिनिवारणाय तृतीयाध्यायमारभ्य समग्रप्रबन्धेन भगवत्कथां विवक्षुः ग्रन्थप्रतिपाद्यत्वादिष्टदेवतात्वाच्च मोहकदर्शनाच्च व्यासरामकृष्णान् त्रिभिः श्लोकैः स्तौति । जयत्युत्कृष्टो वर्तते । अखण्डाः निर्भेदाः। आत्मनो भाः आत्मभाः आत्मज्ञानं तां करोतीत्यात्मभास्करः ।। १ ।।

**वादि**— अधुना तृतीयाध्यायेन प्रागुक्तभगवत्कृतसृष्टिविशेषं भगवदवतारादिकथां च विस्तरेण यथावन्निर्णिनीषुर्भगवानानन्दतीर्थमुनिः परममङ्गलरूपतां स्वग्रन्थस्य निदर्शयन् स्वगुरोर्व्यासस्य स्वेष्टदेवस्य रामस्य कृष्णस्य च स्तुतिरूपमङ्गलत्रयं करोति— **जयतीति** ।। वेदविभजनेन, वेदार्थनिर्णायकब्रह्मसूत्रकरणेन, भारतपुराणादीनां रचनया च आत्मनः परमात्मनः भासं प्रकाशं ज्ञानमिति यावत् । करोति ब्रह्मरुद्रादिसज्जीवेषु गौतमशापप्रमोचनेन स्थिरीकरोतीत्यात्मभास्करः। अनेन लौकिकघटपटादिप्रकाशकभास्करात् व्यासभास्करस्या-त्यन्तमतिशयितमहिमोक्त्या असदृशभास्करत्वमुक्तं भवति । अत एवात्मभास्करः। व्यासावतारः व्यासात्मनावतार एव न तु जन्म यस्य स तथोक्तः। हरिर्दुष्टजनसंहरणसमर्थत्वात् हरिशब्दवाच्यः। जयति सर्वस्मादुत्कृष्टो वर्तते। एवं च व्यासावतारहरिशब्दाभ्यामपि काश्यपपुत्रात् स्ववैरिणा ग्रस्ताल्लौकिकभास्करात् अतिशयितः इति सूचितो भवति। अत एवाजो जननरहितः, अकारवाच्यात् स्वमूलरूपान्नारायणादेव जः प्रादुर्भूतः। 'जनि प्रादुर्भावे' इति धातुः। इदं च जननाभावस्यैव सूचकम् । प्रकारान्तरेणाप्यसदृशत्वमाह— **अखण्ड इति** ।। अखण्डाः देशतः कालतश्च खण्डनरहिता गुणाः सार्वज्ञ्यादिगुणा एव उरु उत्कृष्टं प्रकृष्टं मण्डलं मण्डलमिव मण्डलं विग्रहो यस्य स तथोक्तः। लौकिकसूर्यस्तु प्राकृतपरिमिततेजोमण्डलः। अयं तु अप्राकृतपरिपूर्णनित्यानन्तगुणमय-जगद्व्याप्तमण्डलः। एवं च व्यासाख्यसूर्यस्य लौकिकसूर्यस्य च मेरुसर्षपयोरिवात्यन्तवैलक्षण्यमुक्तं भवति । सदोदितः सदाऽनन्तकालेषु उदयवान् । लौकिकसूर्यस्त्वह्नि उदितः रात्रावस्तमितः। इतोऽपि व्यासभास्करस्य निरुपमत्वं ज्ञेयम् । इतोऽपि वैलक्षण्यमित्याह— **ज्ञानेति** ।। ज्ञानमयमरीचीनां किरणानां मालाऽस्य वर्तत इति स तथोक्तः। लौकिकसूर्यस्तु प्राकृतकिरणमालीति विवेकः । स्वयमपि गुणमयमरीचयोऽपि ज्ञानपदोपलक्षितानन्त-गुणात्मिका इति भावः। प्रकारान्तरेणापि वैलक्षण्यमाह— **स्वभक्तेति** ।। स्वभक्तानां हार्दं हृदि विद्यमानं यत्तमोऽनादिकालीनबन्धकाज्ञानाख्यं तमः तस्य निहन्ता । अत एवोच्चम् । तस्य नितरां हन्ता । लौकिकसूर्यस्तु भक्तानामभक्तानां च तमोहन्ता । तत्रापि बाह्यतमस एव न तु सर्वतमसः। तत्रापि गिरिगुहा-देहगेहाद्यन्तर्वर्ति-तमसोऽवशेषितत्वात् न नितरां हन्ता ।

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।।'

इति वचनात् भगवत्तेजसोपबृंहितत्वादेव तमो हन्ति न स्वस्वभावेन । व्यासस्तु हननशीलः स्वस्वभावेन हन्ति तमः। न त्वन्योपाधिना। तस्माद्व्यासस्य लौकिकसूर्यस्य च महदन्तरमिति भावः। एवं च जयति उत्कृष्टो वर्तते। लौकिकभास्करं चाभिभवतीत्यर्थद्वयं च सूचितं भवति ।। १ ।।

**सङ्क**— एवं तावच्छ्रीनारायणस्य नमस्कारस्तुतिभ्यां तत्प्रतिपादकमध्यायद्वयं कृतवानाचार्यः। अथेदानीं उत्तराध्यायजातं तत्प्रतिपादकमेव कर्तुं श्रीनारायणावतारत्रयं श्रीवेदव्यासरामकृष्णाख्यं विस्तरेणैतदवतारत्रयस्य एतच्छास्त्र-प्रतिपाद्यत्वात् क्रमेणादौ स्तौति— **जयतीत्यादिश्लोकत्रयेण** ।। आत्मभास्करः सर्वपतित्वेन स्वतन्त्रभास्कर इत्यर्थः ।। ननु स्वतन्त्रभास्करत्वे व्यासावतारस्य प्रसिद्धभास्करात् किं वैशिष्ट्यमस्तीत्यत आह— **अज इत्यादि** ।। अजत्वाद्यतिशयविशेषणविशिष्टत्वात् स्वतन्त्रभास्करत्वं व्यासावतारस्य युज्यत इत्यर्थः। एवमेव ईशचन्द्रमा एकसागर इत्याशङ्क्य परिहारो द्रष्टव्यः ।। १-३ ।।

**वरद**— एवं तावत्प्रथमाध्यायोक्तमेव 'इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव' इत्यादिवासुदेवाद्यवतारचतुष्टयं प्रसङ्गसङ्गत्या अशेषशास्त्रनिर्णयसुवाक्यो.द्वारौ यथाक्रममध्यायद्वये विधाय, इदानीं तामेव कथां भारतानुसारेण विस्तारयिष्यन् भारतस्य व्यासोपज्ञताप्रसिद्धेः भारताऽऽद्यकर्तृत्वेन श्रीवेदव्यासस्तुतिं तत्प्रतिपाद्यत्वेन रामकृष्णयोः स्तुतिं क्रमेण करोति भगवानाचार्यः— **जयतीत्यादिना** ।। व्यास इत्यवतारो यस्यासौ व्यासावतारो। हरिरात्मभास्करः स्वतन्त्रभास्करो । जयत्युत्कृष्टो वर्तत इति सम्बन्धः। आत्मभास्कर इत्यनेन प्रसिद्धभास्करापेक्षया महान् विशेषोऽस्तीत्युक्तम् । तं विशेषमाह— **अज इत्यादिना** ।। अखण्डाः परिपूर्णाः अनन्ताश्च गुणा एवोत्कृष्टं मण्डलं यस्यासौ तथोक्तः। प्रसिद्धभास्करस्तु नैवमित्यर्थः। सदोदितत्वमपि विशेषः। ज्ञानाख्यकिरणमाली च । स्वभक्तानां हार्दो हृदिस्थितं उच्चं उत्कृष्टं च तमोऽज्ञानलक्षणं तस्य निहन्ता संहारक इत्यर्थः। अतोऽत्यन्तवैलक्षण्यात् युक्तमात्मभास्करत्वमिति भावः ।। १ ।।

**जना**— एवं सर्वशास्त्रनिर्णयं तदर्थं भारतनिर्णयं अध्यायाभ्यां विधाय उत्तराध्यायैः कथाव्यत्यासादिपरिहाराय हरिकथां वक्तुं तत्र विशेषेण व्यासरामकृष्णकथाः क्रमेण विस्तरेण वदन् तान्नमति— **जयतीति** ।। आत्मना स्वेनैवान्यप्रेरणं विना भासं करोतीति आत्मनः परमात्मन इति वा आत्मभास्करः। व्यासाख्यो अवतारो यस्य स हरिर्नारायणः। जयति उत्कृष्टो वर्तते । अयं प्रसिद्धभास्करः पराधीनप्रकाशः व्यासस्तु स्वतन्त्रप्रकाशः इति प्रसिद्धाद्वैलक्षण्यं ज्ञातव्यम् । अन्यं विशेषमाह— **अज इति** ।। न जायत इत्यजः । सूर्यस्तु कश्यपादेः जायते । अखण्डाः अभिन्नाः गुणा एवोरु उत्कृष्टं मण्डलमिव मण्डलं विग्रहो यस्येति । अखण्डगुणानां उरुः विस्तृतः मण्डलः समूहो यस्येति वा । प्रसिद्धस्य खण्डतेजोगुणाल्पमण्डलवत्त्वाद् वैलक्षण्यम् । हरिः सदोदितः। ज्ञानमेव मरीचयः तैः मालते शोभते इति तेषां माला विद्यत इति वा । कदाचिदेवोदितत्वात् प्राकृतमरीचिमालित्वाच्च

---

१. भ.गी. १५-१२ ।

भास्करस्य वैलक्षण्यम् । स्वभक्तानां हार्दं हृदिभवं उच्चमुत्कृष्टं यत्तमः तस्य हन्ता । बाह्याल्पतमोहन्तृत्वा–द्वैलक्षण्यम् । व्यासस्य पूर्वं नमनं रामावतरात्पूर्वमपि व्यासावतारोऽस्तीति ज्ञापनार्थम् । रामावतारकथा कथनानन्तरं व्यासावतारकथाकथनं पश्चादपि व्यासावतारोऽस्तीति ज्ञापयितुम् । तदुक्तं भागवततात्पर्ये –

[1]'तृतीये सप्तमे चैव षोडशे पञ्चविंशके ।
अष्टाविंशयुगे कृष्णः सत्यवत्यामजायत ।।' इति ।

रामावतारस्तु—

[2]'चतुर्विंशे युगे चापि विश्वामित्रपुरःसरः।
जज्ञे दशरथस्याथ पुत्रः पद्मायतेक्षणः ।।' इति हरिवंशे ।
[3]'सप्तमस्य चतुर्विंशे राजन् त्रेतायुगे तदा ।
यदा रामेण समरे सगणो रावणो हतः।।
रामेणैव तदा राजन् कुम्भकर्णो निपातितः।
वर्तमानं तु यद्वृत्तं कल्पे कल्पे यदूद्वह ।।
रामस्य चरितं बद्धं तदा वाल्मीकिना शुभम् ।।' इति विष्णुधर्मोत्तरवचनाच्च ।

'चतुर्विंशे युगे राम' इति वा ब्रह्मवैवर्तवचानात् चतुर्विंशे ज्ञेयः। यत्तु 'त्रेतायुगे पञ्चमे तु राजा दशरथोऽभवत्' इति तदिदानीन्तनयुगाद्व्युत्क्रमेण पञ्चम इति व्याख्येयम् । चकारापिपदयोः सत्त्वादेकस्मिन्कल्पे अनेकवारं रामावतारो ज्ञेयः। अथवा शास्त्रकर्तृत्वतत्प्रतिपाद्यत्वरूपोपाधिद्वयसमावेशात् पूर्वं व्यासस्तवनं विस्तरेण प्रतिपाद्यत्वरूपकोपाधिमत्वात् रामकृष्णयोः पश्चात्तत्रापि पश्चात्तनत्वात्कृष्णस्य पश्चात् स्तवनं कृतमिति ज्ञेयम् । अज्ञाननाशनाय ज्ञानोपदेशार्थावतारत्वात्सूर्यदृष्टान्तेन व्यासस्तवनं कृतमिति भावः ।। १ ।।

ताम्र— व्यासं च विज्ञानसहस्रभानुं रामं स्वभक्तार्णवपूर्णचन्द्रम् ।
कृष्णं च सम्पूर्णगुणाम्बुराशिं नमामि मध्वार्यवरान् गुरूनपि ।। १ ।।

अथ भगवानाचार्यः सर्वशास्त्रनिर्णयेन अनन्तगुणपूर्णत्वं निर्दोषत्वं च भगवतः प्रतिपादयितुं प्रथमश्लोके परिपूर्ण–गुणार्णवायेति प्रस्ताव्य, तत्सम्भावनाय सृष्टिस्थित्यादिकर्तृत्वमुक्त्वा, तत्र सृष्टिकर्तृत्वं लेशतः उपपाद्य, सृष्टजगन्नियमनाय बहुत्वमुक्त्वा, निर्भेदस्य वासुदेवादिबहुभावः कथमित्याशङ्क्य 'एकः समोऽपि' इत्यादिना निरस्य, तत्सङ्गत्याऽशेषशास्त्रनिर्णयं कृत्वा, तत्र सुवाक्योद्धारं च द्वितीये निरूप्य, तृतीयाध्यायमारभ्य समग्रग्रन्थेनोपक्रान्तां सृष्टिस्थित्यादिविषयां कथां प्रपञ्चयिष्यन् मङ्गलमारचयति— **जयतीति** ।। कृष्णरामा–वतारयोरेव सर्वेषां योग्यतापूर्तेः व्यासावतारे योग्यताव्यञ्जकज्ञानप्रवर्तनात् भारते रामकृष्णयोः वाच्यत्वात् व्यासस्य वक्तृत्वाच्च अस्मिन् ग्रन्थे अवतारत्रयस्यैव विविच्य वर्णयिष्यमाणत्वाच्च अवतारत्रयं परममङ्गलम्। वक्ष्यति च 'वाच्यवक्तृस्वरूपक' इति । तत्र व्यासस्य गुरुत्वात् भारतकर्तृत्वेन अभ्यर्हितत्वात्

[4]'स्मृत्वा गुरुं पूर्वगुरुं आदिमूलगुरूंस्तथा ।
देवतां ..........................।।'

---

१. भा.ता.२-७-३६ । २. ह.वं. हरिवंशपर्वणि ४१-१२१ । ३. वि.ध.पु. १-८१-२४,२६ । ४. तं.सा. ४-१०६ ।

इत्यादौ गुरुनमस्कारस्यैव प्राक् कर्तव्यताप्रतीतेः "रामावतारात् पूर्वमपि व्यासावतारः।

'तृतीयं युगमारभ्य व्यासो बहुषु जज्ञिवान् ।'

'तृतीये सप्तमे चैव षोडशे पञ्चविंशके ।

अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत ।।'

इत्यादि भागवततात्पर्यवचनात् व्यासस्य रामात् पूर्वत्वात् प्रथमं व्यासपरं मङ्गलम् । दैवतयोः रामकृष्णयोः मध्ये रामस्य पूर्वत्वात् तत्पूर्वं रामपरं मङ्गलं तदनन्तरं कृष्णपरं मङ्गलमिति विवेकः। अखण्डाः निर्भेदाः परिपूर्णाः वा विनाशरहिता वा गुणाः एव उत्कृष्टमण्डलं यस्य स तथोक्तः। अखण्डेति मण्डलविशेषणं वा । आत्मभास्करः स्वयमेव भास्करः स्वतन्त्रभास्कर इति यावत् । आत्मनो जीवजातस्य स्वस्य वा भासं करोतीति आत्मभास्कर इति वा । प्रसिद्धभास्करादितो वैलक्षण्यज्ञापनाय अखण्डेत्यादिविशेषणानि । आत्मवैभवः स्वरूपैश्वर्यत्वात् । आदौ ज्ञानं अनन्तरं संसारतापनिवृत्तिः (लिङ्गभङ्गः) तदनन्तरं ईश्वरप्राप्तिश्चेति क्रमिकफलाभिप्रायेण प्रकाशसूर्यादिसाम्यं सन्तापनिवर्तकचन्द्रसाम्यं नदीप्राप्यसागरसाम्यं चोक्तम् ।। १-३ ।।

**भारतश्री**— एवं तावत् प्रथमाध्यायोपक्रमे 'इत्थं विचिन्त्य परमस्स तु वासुदेवनामा बभूव' इत्यादि वासुदेवाद्यवतारचतुष्टयं प्रसङ्गसङ्गत्या अशेषशास्त्रनिर्णयसुवाक्योद्धारौ यथाक्रमं अध्यायद्वये विधाय इदानीं तामेव कथां भारतानुसारेण विस्तारयिष्यन् व्यासस्य भारतकर्तृत्वेन तत्स्तुतिं तत्प्रतिपाद्यत्वेन रामकृष्णयोः स्तुतिं च क्रमेण करोति भगवानाचार्यः— **जयतीत्यादिना** ।। आत्मभास्करः स्वतन्त्रभास्करः । प्रसिद्धभास्करस्तु नैवम् । प्रसिद्धभास्करतेजोमण्डलस्य देशतः कालतश्च खण्डितत्वं वर्तते ।। १-३ ।।

**जयत्यजोऽक्षीणसुखात्मबिम्बः**
**स्वैश्वर्यकान्तिप्रततः सदोदितः।**
**स्वभक्तसन्तापदुरिष्टहन्ता**
**रामावतारो हरिरीशचन्द्रमाः ।। २ ।।**

**व्यास**— ईशश्चन्द्रमसः सदृक् ईशश्चन्द्रमाः।। २ ।।

**वादि**— रामावतारः ईशचन्द्रमा हरिर्जयति उत्कृष्टो वर्तते । प्रसिद्धचन्द्रं जयति च । अत्रापि रामावतार–हरिपदाभ्यां पूर्ववदेव वैलक्षण्यमूह्यम् । अयं तु सर्वजगतामीशचन्द्रमा लौकिकचन्द्रस्त्वनीश इति वैलक्षण्यम् । अक्षीणं सुखात्मकं व्याप्तत्वादात्मपदवाच्यं बिम्बं स्वरूपं यस्य स तथोक्तः। लौकिकचन्द्रमास्तु प्रतिपक्षं क्षीयमाणप्राकृतपरिच्छिन्नमण्डलः। ऐश्वर्यं सम्पत् कान्तिश्च ऐश्वर्यकान्ती । स्वस्वरूपभूते ऐश्वर्यकान्ती ताभ्यां प्रकर्षेण ततः। यद्वा अप्राकृतत्वात् सु शोभनैश्वर्यकान्ती ताभ्यां प्रततः। लौकिकचन्द्रमास्तु प्राकृतैश्वर्येण प्राकृतकान्त्या चाल्पततः। लौकिकचन्द्रस्तु निश्येवोदितः न तु सर्वदोदितः। स्वभक्तानां सम्यक् तापं तापत्रयाख्यं दुःखं दुरिष्टं

१. भा.ता.१-३-२१ ।

इष्टं न भवतीति दुरिष्टं संसारं शत्रून्वा हन्तीति स तथोक्तः। आत्यन्तिकदुःखनिवृत्तिरूपमोक्षप्रदानेन तापत्रयं संसारं शत्रूंश्च स्वभक्तानामेव सम्यग् हन्ति । पुनर्यथा स्पर्शो न भवति तथा हन्तीति यावत् । लौकिकचन्द्रस्तु भक्तानामभक्तानां च तापादिकं नाशयति। तत्रापि न सम्यक् नाशकत्वं तस्मात् रामचन्द्रस्य लौकिकचन्द्रस्य च महदन्तरं ज्ञेयम् । एवं च पूर्ववदेव द्वेधाऽपि जयतीति भावः ।। २ ।।

**वरद**— एवं श्रीवेदव्यासस्य स्तुतिं विधायेदानीं रामचन्द्रस्यापि स्वतन्त्रचन्द्रत्वेन स्तुतिं विधत्ते— **जयतीति** ।। अत्रापि प्रसिद्धान्महावैलक्षण्यमस्तीत्याह— **अज इत्यादिना** ।। नाशरहितसुखात्मकम्बिम्बः स्वरूपभूतैश्वर्य-रूपकान्तिमान् । प्रततः व्याप्तः। न प्रसिद्धचन्द्रवत् परिमितपरिमाणवान् . सदोदितः न प्रसिद्धचन्द्रवत् कदाचिदप्यस्तमेति । स्वभक्तानां सन्तापाः आध्यात्मिकादित्रिविधाः सन्तापाः एव दुरिष्टं अनिष्टं तस्य हन्ता। राम इत्यवतारो यस्य स हरिरीशचन्द्रमा जयत्युत्कृष्टो वर्तत इत्यर्थः ।। २ ।।

**जना**— रामं स्तौति— **जयतीति** ।। हरिः रामावतारः ईशचन्द्रमाः ईशश्चासौ चन्द्रमाश्च जयति । अक्षीणः क्षयरहितः सुखात्मा सुखरूपः बिम्बो देहो यस्येति । अस्य क्षीणदुःखवद्बिम्बत्वाद्वैलक्षण्यम् । स्वरूपभूतैश्वर्यतया कान्तिः स्वरूपभूतमैश्वर्यमेव वा कान्तिः तया प्रततः व्याप्तः। अत्र वैलक्षण्यं स्फुटम् । स्वभक्तानां सन्तापा आधिभौतिकादयः तेभ्यः दुरिष्टं दुःखं हन्तीति । सन्तापान्दुरिष्टं संसारं चेति वा । अत्र बाह्यतापहन्तृत्वाद्वैलक्षण्यम् । लोकदुःखशान्त्यर्थं अवतीर्णत्वात् चन्द्रदृष्टान्तेन स्तवनम् ।। २ ।।

**जयत्यसङ्ख्योरुबलाम्बुपूरो**
**गुणोच्चरत्नाकर आत्मवैभवः ।**
**सदा सदात्मज्ञनदीभिराप्यः**
**कृष्णावतारो हरिरेकसागरः ।। ३ ।।**

**व्यास**— एको मुख्यश्च सागरसदृशश्च एकसागरः ।। ३ ।।

**वादि**— एकसागरो मुख्यसागर एकप्रकारः सागरश्च कृष्णावतारो हरिर्जयति । उत्कृष्टो वर्तते । अत्रापि कृष्णावतार–हरिपदयोः पूर्ववदेव व्याख्यानम् । अयं तु सर्वोत्तमः सागरः। लौकिकसागरस्तु सूर्याचन्द्रमसोरप्यवरः। कृष्णाख्य–सागरस्तु सर्वकालेष्वेकप्रकारः। अन्यस्तु देशमर्यादया लवणादिरूपेण सप्तप्रकारः। कालमर्यादया च 'समुद्रं पर्वणि स्पृशेत्' इति वचनात् पर्वण्येव स्पृश्योऽन्यदा त्वस्पृश्यः। भगवांस्तु वृद्धिह्रासशून्यः। लौकिकसागरस्तु दिने दिने चन्द्रोदये वर्धते, पुनः ह्रसते चन्द्रास्तमये । पुनः पुनः वर्धते ह्रसते च । अतोऽनयो-र्महदन्तरमिति भावः। असङ्ख्यानि उरूणि उत्कृष्टानि पूर्णानीत्यर्थः। बलानि तान्येवाम्बूनि जलानि तेषां पूरः पूरणं यस्मिन् सः। रामावतारे रावणवधाय बलं प्रकाशितम् । न तु बहुधा । कृष्णावतारे तु शिशुदशामारभ्य पूतनाकेश्यन्तं बहुतरदैत्यवधाय, गोवर्धनगिर्युद्धरणाय, पुनर्मल्लकंसादिनां वधाय तदनन्तरमष्टादशवारं जरासन्धानीतचतुर्दशोत्तर–चतुश्शताक्षोहिणीसेनावधाय, नरकासुरवधाय च कृष्णावतारे बहुधा बलस्यैव प्रदर्शितत्वात् । ज्ञानादिकं विहाय

कृष्णाख्यसमुद्रस्य बलमेवाम्बुतया वर्णितम् । लौकिकसमुद्रस्त्वल्पसङ्ख्याकपूर्णाम्बुपूरवानिति भावः। गुणाः ज्ञानानन्दादय एवोच्चरत्नानि । उच्चरत्नानीति वदता गुणानामप्युच्चत्वं सूचितम् । तेषामाकरः। अन्यस्तु जडशिलारूपाल्परत्नानामाकरः। आत्मनैव स्वमहिम्नैव वैभवं यस्य स आत्मवैभवः। अन्यस्तु पश्चिमादि–दिक्पालकत्वेन हरिणा दत्तवैभवः। द्वारावत्यां समुद्रान्तः रत्नमयमण्डपकरणेन क्षीराम्बुधौ दिव्यरत्नमयमण्ड–पस्थितहरिणा दत्तवैभवः। 'सच्छब्द उत्तमं ब्रूयात्' इति वचनात् सन् सर्वोत्तमः आत्मा हरिः तं जानन्तीति सदात्मज्ञाः । न तु मायावादिवत् नीचजीवैक्येनात्मज्ञाः। त एव नद्यः ताभिः सदाप्यः। कृष्णस्तु ज्ञानिनदीभिराप्यः समुद्रस्तु जडजलरूपनदीभिराप्यः। ईदृशनदीभिः सदा सर्वदाप्यः। समुद्रस्तु वर्षाकाल एवाप्यः। उष्णकाले क्वचित् क्वचित् प्रवाहभङ्गे सति नाप्यः। अत्रापि पूर्ववदेव महदन्तरमनुसन्धेयम् ।। ३ ।।

**वरद—** इदानीं पूर्वसागरत्वेन श्रीकृष्णं स्तौति— **जयतीति** ।। असङ्ख्यं अनन्तं उरु उत्कृष्टं बलमेवाम्बु पूरो यत्रासौ तथोक्तः। गुण एवोच्चरत्नानि तेषामाकरः। आत्मवैभवः स्वरूपैश्वर्यवान् सदा सर्वदा सन्तश्च ते आत्मज्ञाः परमात्मापरोक्षज्ञानिनः त एव नद्यस्ताभिराप्यः। कृष्ण इत्यवतारो यस्य हरिरेकसागरो मुख्यसागरः प्रसिद्धसागरापेक्षया विलक्षणः सागरो जयतीत्यर्थः ।। ३ ।।

**जना—** कृष्णं स्तौति— **जयतीति** ।। कृष्णावतारो हरिः एकः मुख्यः केवलः शुद्धो विलक्षणो वा । सागरः. समुद्रः जयति । असङ्ख्यातानि उरूणि पूर्णानि बलान्येवाम्बूनि तैः पूरः पूरणं यस्मिन् सङ्ख्या–वदम्बुपूरत्वाद्वैलक्षण्यम् । गुणाः एवोच्चरत्नानि तेषामाकरः। आत्मवैभवः स्वरूपभूतैश्वर्यवान् । सदा ये आत्मज्ञाः परमात्माज्ञानिनस्त एव नद्यस्ताभिः प्राप्यः। कदाचिन्नदीप्राप्यत्वाद्वैलक्षण्यम् । बलकार्याद्यनेकचरित्र–प्रदर्शनज्ञानप्रदानरूपविचित्रार्थयापि अवतीर्णत्वात्समुद्रदृष्टान्तेन स्तवनम् ।। ३ ।।

**[1]नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरये ।। ४ ।।**

**व्यास—** भारताध्येतृभिः नम्यत्वेनोक्ताः एतदध्येतृभिश्च नम्याः इति भावेन नमनविधायकं तत्रत्यं वाक्यं पठति— **नारायणमिति** ।। ४ ।।

**वादि—** ग्रन्थादौ हरेरिव गुरूणामपि नमस्कारादिरूपमङ्गलमवश्यं कार्यम् । तदनन्तरमेव ग्रन्थश्चारम्भणीय इति शिष्टाचारं सूचयितुं तदर्थप्रतिपादकभारतवाक्यमेव पठति— **नारायणमिति** ।। ४ ।।

**सङ्क—** एवमाचार्यो भारततात्पर्यनिर्णयं कर्तुकामः देवं नत्वा श्रीभारतीं कथां वक्तुकामैर्वैशम्पायनाद्यैः यद्देवतादिनमस्कारः कृतः तन्नमस्कारानुवादकत्वेन यः श्लोकः श्रीवेदव्यासेन भारतादौ विरचितः तं श्लोकं पूर्वाध्यायोक्तप्रमेयशेषविचाररूपत्वेनोदाहरति— **नारायणमिति** ।। ४ ।।

---

१. म.भा. आदिपर्वणि १-१-१ ।

**वरद—** एवमवतारत्रयं स्तुत्वेदानीं वैशम्पायनानुष्ठितमङ्गलाचरणग्रथनात्मकभारताद्यश्लोकोदाहरणं अभीष्टसिद्धये सर्वग्रन्थारम्भे सर्वैः कर्तव्यमिति शिष्यान् ग्राहयितुं तं श्लोकमुदाहरति— **नारायणमिति** ।। ४ ।।

**जना—** एवं मङ्गलं विधायैतदध्येतृभिः एते वन्द्याः एतत्प्रवर्तकैः नतत्वादेतत्प्रतिपाद्यत्वाच्चेति वक्तुमेतत्प्रवर्तक कृतं मङ्गलाचरणपद्यमेव पठति— **नारायणमिति** ।। ४ ।।

**ताम्र—** भारताध्येतृभिः वैशम्पायनादिभिः नम्यत्वेनोक्ता ये तदध्येतृभिश्च ते नम्याः इति भावेन तत्र विचार्यस्य सत्वाच्च तत्रत्यं भारतवाक्यं पठित्वा अन्यथाप्रतीतिवारणाय व्याकुर्वन् तेषां नम्यत्वे च हेतुमाह— **नारायणमित्यादिना** ।। ४ ।।

**भारतश्री—** एवमवतारत्रयं स्तुत्वा वैशम्पायनानुष्ठितमङ्गलाचरणश्लोकोदाहरणं अभीष्टसिद्धये सर्वग्रन्थारम्भे सर्वैः कर्तव्यमिति शिष्यान् ग्राहयितुं तं श्लोकं पठति यथावद्व्याचष्टे च— **नारायणमिति** ।। ४ ।।

**[१]जयो नामेतिहासोऽयं कृष्णद्वैपायनेरितः ।**
**वायुर्नरोत्तमो नाम देवीति श्रीरुदीरिता ।। ५ ।।**

**व्यास—** अन्यथाप्रतीतेः तद्व्याचष्टे— **जय इति** ।। ५ ।।

**वादि—** नरपदस्य केवलमनुष्यपरतां नरोत्तमपदस्य राजाद्यर्थतां सरस्वतीं देवीमिति सामानाधिकरण्यप्रतीतिं पृथगुक्त्या व्यासनारायणयोर्भेदप्रतीतिं पौनरुक्त्यशङ्कां वा जयशब्दस्य शत्रुजयाद्यर्थतां च निवारयितुमेतेषामेव नम्यत्वे कारणं च वक्तुं व्याख्याति— **जयो नामेति** ।। तुलायामारोपणेऽपि स्वेतरग्रन्थान् जयतीति हेतोरयमितिहासो जयो नामेति भावः। शेषस्य नरत्वेन तदुत्तमता वायोरेव सम्भवतीति भावेन वायुर्नरोत्तम इत्युक्तम् । शेषादुत्तमस्य वायोर्नरोत्तमत्वकथनात् नरः शेष इत्यपि व्याख्यातप्रायम् । क्रीडादिगुणविशिष्टत्वान्नारायण एव देवः। अन्ये तु देवत्वजात्या देवाः। एवं च योगरूढिसद्भावात् नारायण एव मुख्यो देवः तस्येयमिति व्युत्पत्त्या लक्ष्मीरेव देवीति भावः ।। ५ ।।

**सङ्क—** अन्यथाप्रतीतिनिरासाय अस्य श्लोकस्यार्थमाह— **जय इत्यादिना** ।। ५ ।।

**वरद—** अत्राप्रतीत्यन्यथाप्रतीतिनिरासाय श्लोकं यथावद्व्याचष्ट— **जय इत्यादिना** ।। अयं भारताख्यः इतिहासो जयो नाम प्रसिद्धः। व्याचिख्यासितत्वेन बुद्धिसंनिहितत्वादयमित्युक्तम् । कृष्णद्वैपायनेरितं इत्यनेनेदं मङ्गलाचरणं वैशम्पायनकृतमेव नतु व्यासकृतमिति सूचयति । ननु सतीषु विशिष्टासु इष्टासु च देवतासु नरनरोत्तमयोर्नमस्कारः किमर्थं इत्यतस्तत्पदद्वयस्यापूर्वमर्थमाह— **वायुरिति** ।। नामेति प्रसिद्धिद्योतकनिपातेन यस्मान्नरादुत्तमो वायुः स नरः शेष एव भवितुमर्हतीति द्योतयति । ननु तथापि सरस्वतीमित्युक्तत्वात् देवीति पुनरुक्तमित्यतस्तयोरर्थभेदमाह— **देवीति** ।। ५ ।।

---

१. 'जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।' म.भा. आदिपर्वणि ६२-२२ ।

**जना**— दुर्गमार्थत्वात् व्याख्याति— **जयेति** ।। भारवत्त्वेन जितत्वात् जयतीति जयः ।। ५ ।।

**भारतश्री**— बुद्धिसन्निहितत्वात् अयं भारताख्यो इतिहासः जयो नाम प्रसिद्ध इत्यर्थः । सतीषु अन्यासु देवतासु एतेषां नमस्कारे को हेतुरित्यतः एतेषां नमस्कारे कारणमाह— **वायुरित्यादिना** ।। ५-७ ।।

**[1]नारायणो व्यास इति वाच्यवक्तृस्वरूपकः ।**
**एकः स भगवानुक्तः साधकेशो नरोत्तमः ।। ६ ।।**

**व्यास**— नारायणव्यासयोरेकत्वाद् व्यासः कस्मात् पृथङ्नम्यते इत्यत आह— **वाच्येति** ।। वाच्यवक्तृ-स्वरूपत्वादस्तु तयोर्नम्यत्वं नरोत्तमादयस्तु कस्मान्नम्या उक्ता इत्यत आह— **साधकेति** ।। ६ ।।

**वादि**— अर्थमुक्त्वा नम्यत्वे हेतुमाह— **नारायणो व्यास इति** ।। वाच्यवक्तृस्वरूपक इत्यनेन वाच्यतया नारायणग्रहणं, वक्तृतया व्यासग्रहणमित्येकस्यैव द्विर्ग्रहणे निमित्तं सूचितम् । अत एवोभयोर्नमनमिति भावः। साधकेशः साधकेषु व्यासमुखात् श्रुत्वा ये भारतार्थसाधकाः शुक्रादयस्तेषामीश इत्यर्थः। भारतार्थवेत्तृषूत्तमत्वात् तत्करुणाभावेऽन्यस्यार्थबोधो न स्यादिति तन्नमनमिति भावः ।। ६ ।।

**सङ्क**— ननु श्रीनारायणव्यासयोरेकत्वात् पृथङ्नमस्कारे किं कारणम् , इष्टदेवतानमस्कारव्यतिरेकेन नरादीनां च नमस्कारे किं कारणमित्याशङ्काद्वयं परिहरति— **नारायण इत्यादिना** ।। ६ ।।

**वरद**— ननु तथापि नारायणमित्युक्तत्वात् व्यासमिति पुनरुक्तमित्यत आह— **नारायण इति** ।। नारायणस्य भारतप्रतिपाद्यत्वेन तद्रूपस्यापि व्यासस्य भारतवक्तृत्वेन च पदद्वयेनापि भगवानेक एवोक्तः। नन्वत एव पुनरुक्तमित्यत उक्तम्— **वाच्यवक्तृस्वरूपक इति** ।। वाच्यत्वसम्बन्धेन वक्तृत्वसम्बन्धेन च निमित्तविशेषेण रूपद्वयस्यापि वन्द्यत्वात्पुनरुक्तिर्युक्तेत्यर्थः। ननु नरोत्तमशब्देन वायुग्रहणेऽपि वायुः ग्रन्थारम्भे केन निमित्तेन वन्द्य इत्यत आह— **साधकेश इति** ।। अभीष्टकार्यसाधकानामीशः स्वामी यत तस्मादित्युत्तरत्र सम्बन्धः ।। ६ ।।

**जना**— नारायणस्यैव व्यासत्वात् पुनरुक्तमित्यत आह— **नारायण इति** ।। एक एव स भगवान् वाच्यवक्तृस्वरूपः नारायणः व्यास इत्युक्तः। उपाधिभेदान्न पुनरुक्तिः। नरोत्तमनमनं किमर्थं इत्यत आह— **साधकेश इति** ।। ६ ।।

**ताम्र**— ननु नारायणव्यासयोरैक्ये पुनरुक्तिः भेदे प्रमाणविरोध इत्यत आह— **नारायण इति** ।। भारतकर्तृत्वेनैव तद्वाच्यत्वेनैक एव द्विवारमुक्त इत्यर्थः। साधकेशः साधनवतामुत्तमः। 'साधकेषु भारतसाधकेषु तदुपदेष्टृषु ईश इति वा' इति व्यासतीर्थीये ।। ६ ।।

**उपसाधको नरश्चोक्तो [2]देवी भाग्यात्मिका नृणाम् ।**
**सरस्वती वाक्यरूपा तस्मान्नम्या हि तेऽखिलाः ।। ७ ।।**

---

१. 'कीर्त्यते केशवस्तथा । भगवांश्चापि देवेशो .... म.भा. आदिपर्वणि ६३-३७ । २. ....यत्र देवी च कीर्त्यते ।' म.भा. आदिपर्वणि ६३-३७ ।

**व्यास**— शिष्यप्रशिष्येषु भारतसाधकेष्वीशः ।। ७ ।।

**वादि**— उपसाधकस्तु मुख्यसाधकाच्छास्त्रार्थज्ञप्तिसाधकः। साक्षाद्वायुमुखाच्छ्रोतुमशक्तानां तदुपासकोऽप्यपेक्षित इत्यतस्तस्यापि नमनमिति भावः। 'भाग्यात्मिका' इत्यनेन वक्तृश्रोत्रादीनामन्नपानाद्यभावे वचनस्यैवासम्भवात् श्रवणोचितभाग्यलाभाय देव्या नमनमिति भावः। सरस्वती वाक्यरूपा भारतवाक्याभिमानिना। कोशस्थधनलाभाय कोशपालानुसरणवत् सापि वन्द्येति भावः ।। ७ ।।

**वरद**— वायोरनन्तरं शेषस्यापि साधकत्वात्तस्यापि वन्दनं युक्तमित्याह— **उपेति** ।। ननु देव्याः वन्दने किं निमित्तमित्यत उक्तम्— **देवीति** ।। भाग्यात्मिका भाग्याभिमानिनी । सरस्वत्या अपि ग्रन्थारम्भे नमस्कार्यत्वे हेतुमाह— **सरस्वतीति** ।। वाक्यानामभिमानिनी । अतो वाक्यप्रयोगे तदर्थावधारणरूपे कार्ये तन्नियामक— देवतानमस्कारो युक्त इत्यर्थः। तस्मात्सर्वत्र निमित्तसद्भावात् ग्रन्थारम्भे अवश्यं नमस्कार्यत्वमित्युपसंहरति— **तस्मादिति** ।। तेन नारायणादयोऽखिलाः नम्या इत्यर्थः ।। ७ ।।

**जना**— नरनमने निमित्तमाह— **उपेति** ।। देवीनमने हेतुमाह— **देवीति** ।। सरस्वती वाक्यरूपा प्रतिपादकविद्याभि-मानिनी । उपसंहरति— **तस्मादिति** ।। ७ ।।

**ताम्र**— उपसाधको अवान्तरसाधकः ।। ७ ।।

**कृष्णौ सत्या भीमपार्थौ कृष्णेत्युक्ता हि भारते ।। ८ ।।**

**व्यास**— महाभारतप्रतिपाद्यत्वाच्च ते नम्या इत्याह— **कृष्णाविति** ।। ८ ।।

**वादि**— न केवलं मूलरूपनारायणस्य मूलरूपेणैव प्रतिपाद्यत्वान्नमनम् । किन्तु कृष्णाख्यावताररूपेण प्रतिपाद्यमानत्वाच्च नमनम् । व्यासस्यापि नमनं न केवलं वक्तृत्वेनैव किन्तु ग्रन्थप्रतिपाद्यत्वेनापि । देविनरोत्तम-सरस्वतिनरनारायणानां च न केवलमुक्तहेतुभिर्नम्यत्वं किन्त्ववान्तररूपेण ग्रन्थप्रतिपाद्यत्वाच्चेति भावेनाह— **कृष्णाविति** ।। कृष्णौ वासिष्ठयादवकृष्णौ । सत्या सत्यभामा । इदं चोपलक्षणम् । रुक्मिण्यपि ग्राह्या । वनवासे पाण्डवदुःखशमनाय सत्यभामाया आनीतत्त्वात्तस्या एव ग्रहणम् । भीमः पार्थः। पार्थ इत्युपलक्षणम् । पार्थाविष्टत्वेन पार्थसम्बन्धित्वान्नरो नरापरावतारो बलश्च गृह्यते। कृष्णा द्रौपदी चेति एते सर्वे भारते उक्ता हि । तदीयकथाप्रसङ्गनसमये तत्र तत्र प्रधानतयोक्ता हि । व्यासावतारसमये व्यासकथा सविस्तरं कथिता । अर्जुनसारथ्यादिकरणेन गीतावक्तृत्वेन च बहुशो विश्वरूपप्रदर्शनादिना कृष्णकथा सविस्तरं भारते कथिता । रुक्मिणीसत्यभामयोरपि राजसूयाश्वमेधादौ कथा निरूपिता । डम्भोद्भवगर्वशमनाय नरमुनेरपि कथा कथिता । बलरामकथापि तीर्थयात्रादौ गदायुद्धादौ च स्पष्टं निरूपिता । भीमपार्थद्रौपदीनां तु कथाकथनाय समस्तभारतं प्रवृत्तम् । एवं च कृष्णाख्यावताररूपेणोक्तविधया मूलरूपेण च प्रतिपाद्यमानत्वात् नारायणस्य नमनम् । व्यासस्य तूक्तविधया स्वस्यैव प्रतिपाद्यमानत्वात् प्रागुक्तरीत्या वक्तृत्वाच्च नमनम् । देव्याश्च सत्यादिरूपेण प्रतिपाद्यमानत्वात् प्रागुक्तरीत्या भाग्यदातृत्वाच्च नमनम् । वायोश्च भीमरूपेण सर्वत्र प्रतिपाद्यमानत्वान्मूलरूपेण

व्यासमुखत एव सकलभारतार्थसङ्ग्राहकतया साधकाग्रेसरत्वाच्च नमनम् । सरस्वत्यास्तु द्रौपदीरूपेण भारते प्रतिपाद्यमानत्वात् सकलभारतवाक्याभिमानित्वाच्च नमनम् । शेषस्य तु साक्षान्नरावतारेणार्जुनाविष्ट–प्रबलतमस्वांशरूपेण च प्रतिपाद्यमानत्वान्मूलरूपेण भारतार्थानामुपसाधकत्वाच्च नमनमिति समुदितग्रन्थस्या–भिसन्धिरिति ज्ञेयम् ।। ८ ।।

**सङ्क**— इतोऽपि श्रीनारायणादयः सर्वे नम्या इत्याह— **कृष्णाविति** ।। कृष्णौ नारायणावतारौ वसुदेवपुत्रद्वैपायनौ । श्रीदेवी सत्यभामा । नरोत्तमो वायुः भीमः। नरविशेषावेशी इन्द्रः पार्थः। सरस्वती कृष्णा द्रौपदीत्येतत्सञ्ज्ञया एते श्रीनारायणादयो भारते उक्ता यतोऽतश्च नम्या इत्यर्थः ।। ८ ।।

**वरद**— इतोऽपि भारतारम्भे ते नमस्कार्या इत्याह— **कृष्णाविति** ।। अत्र एकः कृष्णो नारायणावतारो देवकीनन्दनः द्वितीयः सत्यवतीनन्दनो व्यासः। सत्या सत्यभामा देवीस्वरूपा । भीमो भीमसेनो वायुस्वरूपो नरोत्तमशब्दवाच्यः। पार्थश्च नरावेशी नरशब्दवाच्यः। कृष्णा द्रौपदी सरस्वत्यात्मिकेत्येते भारते उक्ताः प्रतिपादिता हि यस्मात्तस्मादेते अखिलाः वन्द्या इति पूर्वेणान्वयः। नारायणादीनां भारतप्रतिपाद्यत्वेन तदारम्भे ते अवश्यं वन्द्या इति वैशम्पायनादिभिस्त एव नमस्कृता इति भावः ।। ८ ।।

**जना**— प्रतिपाद्यत्वात् एते नम्या इत्याह— **कृष्णाविति** ।। भारते कृष्णौ वासिष्ठयादवेशौ कृष्णावित्युक्तौ । देवी सत्येति । नरोत्तमो भीम इति । नरः पार्थः तदावेशवत्वात् । सरस्वती कृष्णाद्रौपदीत्येते उक्ताः । तस्मात्प्रतिपाद्यत्वान्नम्या इति भावः ।। ८ ।।

**ताम्र**— महाभारतप्रतिपाद्यत्वाच्च ते नम्या इत्याह— **कृष्णा इति** ।। कृष्णेत्येते कृष्णौ इत्यर्थः। पार्थे नरावेशात् पार्थ इति नरो विवक्षित इति भावः ।। ८ ।।

**भारतश्री**— कृष्णौ वासिष्ठयदवौ । इत्येते भारते उक्ताः। अतः त एव नम्याः ।। ८ ।।

**सर्वस्य निर्णयसुवाक्यसमुद्धृती तु**
**स्वध्याययोर्हरिपदस्मरणेन कृत्वा ।**
**आनन्दतीर्थवरनामवती तृतीया**
**[१]भैमीतनुर्मरुत आह कथाः परस्य ।। ९ ।।**

**व्यास**— अध्यायद्वयोक्तमनुवदन् उत्तरसमग्रप्रबन्धप्रतिपाद्यमाह— **सर्वस्येति** ।। निर्णयः प्रथमे,समुद्धृतिः द्वितीये ।। ९ ।।

**वादि**— अध्यायद्वयोक्तं अनुवदन्नुत्तरसमग्रप्रबन्धप्रतिपाद्यमाह— **सर्वस्येति** ।। स्वध्याययोः सु शोभनयोरध्याययोः। सर्वस्य निर्णयः प्रथमेऽध्याये । सुवाक्यसमुद्धृतिः द्वितीयेऽध्याये । भौमी भूमिसम्बन्धिनी भूमाववतीर्णेति यावत् ।। ९ ।।

१. 'भौमी' इति पाठान्तरम् ।

**सङ्क**— पूर्वोत्तराध्यायसङ्गतिं दर्शयत्याचार्यः— **सर्वस्येति** ।। ९ ।।

**वरद**— एवं प्रसङ्गसङ्गत्या प्राप्तं प्रमेयमध्यायद्वये प्रतिपादितम् । इदानीं प्रकृतमनुसरामीत्याह— **सर्वस्येति** ।। निर्णयपदस्य नित्यसापेक्षत्वात् समासः। सर्वशास्त्रनिर्णयसुवाक्योद्धारौ यथाक्रममध्यायद्वये विधायेत्यर्थः। तत्रेत्थं भावमाह— **हरिपदेति** ।। तेन निमित्तेनेत्यर्थः। मरुतो वायोः आनन्दतीर्थवरनामवती भौमी भूम्यां विद्यमाना तृतीया तनूस्तृतीयं रूपं मध्वापरनामकं परस्य सर्वोत्तमस्य हरेः कथा जगत्सर्जनादिचरितानि आह । वक्तीति सम्बन्धः । [1]"एष्यत्तु निश्चितं यत्स्यात् तदतीतत्वेन भण्यते' इति वचनादाहेत्युक्तम् ।। ९ ।।

**जना**— सङ्गतिपूर्वकं वक्तव्यमाह— **सर्वस्येति** ।। स्वाध्याययोः शोभनाध्याययोः। सर्वशास्त्रार्थस्य निर्णयः प्रथमे । द्वितीये सुवाक्यसमुद्धारः। यद्वा उभयत्रोभयम् । प्रथमेऽपि नारायणस्येति प्रमाणोद्धारस्य, द्वितीयेऽपि शास्त्रार्थस्योक्तत्वात् । भैमी भीमावतारभूता । 'जन्मास भीमस्य यदुक्तमत्र' इति । तथा 'विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्त्वमाह' इत्यत्रैव कथनात्— **यत्तु तृतीयमस्येति** ।। अत्रापि मरुतः तृतीयातनुरिति तदवतारत्वेन गणनं तत् । यथा महाभिषगाख्यस्यैव शन्तनुत्वेऽपि महाभिषक् शन्तनुश्चेति तारात्वेऽपि चित्राङ्गदायास्तारा चित्राङ्गदेत्यादिवद्युज्यते । अत एव भगवत्पादैरंशद्वयमेवोक्तं 'वायुत्वमाप्तः स हनूमदंश' इति । 'ब्राह्मं पदं प्राप्य वृकोदरश्च' इति । 'भौमी भूमौ विद्यमाना' इति क्वचित् ।। ९ ।।

**ताम्र**— एतद्ग्रन्थवक्तृत्वेनाधिकारिणां स्वस्वरूपज्ञानमप्यपेक्षितमिति भावेन स्वरूपं वदन् पूर्वाध्यायद्वयेन उत्तराध्यायान् सङ्गमयति— **सर्वस्येति** ।।**भैमी तनुरिति** ।। भीमसम्बन्धिनी भीमांशवती मरुतः तृतीया तनुरित्यर्थः। भीमावतार इति यावत् । 'विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्त्वमाह' इति वक्ष्यमाणत्वात् । 'वायुत्वमाप्तः स हनूमदंशः ब्राह्मं पदं प्राप्य वृकोदरश्च' । इत्यंशद्वयस्यैव भगवत्पादोक्तेश्च वायोरवतारत्रयकथनं देहविवक्षयैवोपपद्यते । अत एवात्र 'तृतीया तनुः' इति तन्वपेक्षया तृतीयत्वमाह । 'पूर्वभीमाज्ञया' इति वायुस्तुतावुक्तम् । अत एव चरमाध्याये 'जन्मास भीमस्य यदुक्तमत्र' इति वक्ष्यतीत्यलम् । 'भौमी तनुः' इति केचित् पठन्ति भूम्यां विद्यमाना मरुतः तनुरित्यर्थः ।

[2]"को नाम गतिसामान्यं अनन्तागमसम्पदः।
ज्ञानसूर्यमृते ब्रूयाद् तमेकं बादरायणम् ।।'

इत्युक्तेर्भवतां सर्वनिर्णयसामर्थ्यं कथं तत्राह— **हरिपदेति** ।। ९ ।।

**भारतश्री**— एवं प्रसङ्गसङ्गत्या प्राप्तं प्रमेयमध्यायद्वये प्रतिपादितमिदानीं प्रकृतकथामनुसरामीत्याह— **सर्वस्येति** ।। भैमीतनुः भीमांशतनुः इति केचित् । भीम इति मरुतो विशेषणम् । भृतमात्वात् तत्तनु इत्यपि केचन । भौमी तनुः इत्यपि पठन्ति । भौमी भूम्यां विद्यमानेति ।। ९-१३ ।।

**राम**— 'आनन्दतीर्थवरनामवती तृतीया भैमीतनुर्मरुत आह कथाः परस्य' इत्यत्र भैमी भीमांशयुक्ता आनन्दतीर्थवरनामवती मरुतो वायोः तृतीया तनुः भूम्यां अवतारापेक्षया तृतीया तनुः परस्य कथा आह इति ।

---
१. भा.ता. ३-४-२५ । २. अनु. ३-३-सर्ववेदान्ताधिकरणम् ।

'अंशेन वायुरवतीर्य स रौप्यपाठे विष्णुं प्रणम्य भवनं प्रययौ तदीयम्' इत्युक्तेः । भीमस्य वायोः अनेकांशसंश्लेषेण जननं तथा मध्वावतारस्यापि वाय्वंशेन स्वर्गस्थितभीमांशेन च जननं भवतीति भावः । अत एवोक्तं उत्तरत्र च 'विप्रतनुस्स भीमो दैत्यैर्निगूढं हरितत्त्वमाह' इति । 'पूर्वभीमाज्ञया' इति च ।। ९-२० ।।

**व्यूढश्चतुर्धा भगवान्स एको**
**मायां श्रियं सृष्टिविधित्सयाऽऽर ।**
**रूपेण पूर्वेण स वासुदेव**
**नाम्ना विरिञ्चं सुषुवे च साऽतः ।। १० ।।**

**व्यास—** उपक्रमे व्यूढ इत्यादिना स एक एव भगवांश्चतुर्धा व्यूढ इति सम्बन्धः। वासुदेवनाम्ना पूर्वेण प्रथमेन रूपेण श्रियमारेति द्वितीयः सम्बन्धः ।। १० ।।

**वादि— व्यूढश्चतुर्धेत्यत्र** चतुर्धा व्यूहं प्राप्तः स भगवान् वासुदेवनाम्ना पूर्वेण रूपेण श्रियमार प्राप ।। १० ।।

**सङ्क—** 'इत्थं विचिन्त्य परम' इत्यादिना यदुक्तं तत्प्रपञ्चयन्विवक्षिताः कथाः कथयितुमुपक्रमते— **व्यूढ इति** ।। स नारायणः पूर्वमेकमूर्तिः सन् पश्चाच्चतुर्धा व्यूढ इति पृथगन्वयः। व्यूढः उद्गत इत्यर्थः। नारायणः वासुदेवनाम्ना पूर्वरूपेण मायां श्रियमार प्राप । अतो वासुदेवात् सा माया विरिञ्चं सुषुवे ।। १० ।।

**वरद—** तत्रेत्थं विचिन्त्य इत्यादिना पूर्वाध्याये मूलरूपो भगवान् वासुदेवादिरूपेणाविर्भूत इत्युक्तं ततः किमकारीत्यतः सङ्क्षेपेणोक्तां मिश्रसृष्टिं प्रपञ्चयति— **व्यूढ इत्यादिना** ।। एक एव स भगवान् वासुदेवादिरूपेण चतुर्धा व्यूढो व्यूह्य वर्तमानस्सन् चतुर्षु रूपेषु पूर्वेणाद्येन वासुदेवनाम्ना वासुदेवनामकेन सृष्टिं विधित्सया सृष्टिं कर्तुमिच्छया मायां श्रियं मायारूपां श्रियं देवीं आर प्रापेत्यन्वयः। तत्र वासुदेवरूपो भगवान् सृष्टिं कर्तुं मायादेव्यां स्वभार्यायां वीर्यमाधत्तेति भावः । तदनन्तरं सा मायातो वासुदेवाद्विरिञ्चं पुत्रं सुषुवे इत्यन्वयः।। १० ।।

**जना—** प्रथमाध्याये सूक्ष्मतया सृष्टानां स्थूलतया सृष्टिं वक्तुं पूर्वोक्तसृष्ट्यनुवादपूर्वकं अनुक्तं त्रिभ्यः सृष्टिं चाह— **व्यूढ इत्यादिना** ।। स भगवान् ऐश्वर्यादिगुणसमुद्रः। एकः अवतारादिषु भेदरहितः। स नारायणः चतुर्धा व्यूढः व्यूहं प्राप्त अवतीर्ण इति यावत् । पूर्वं सृष्ट्यनुवादपूर्वां यां अनुक्तां सृष्टिं कथयति— **स इति** ।। स नारायणः सृष्टिविधित्सया सृष्टिविधानेच्छया वासुदेवनाम्ना पूर्वेण रूपेण पूर्वावतारेण मायाभिधां श्रियमार प्राप । सा माया अतो वासुदेवात् विरिञ्चं सुषुवे चेति प्रारब्धं सिद्धं चेत्याह ।। १० ।।

**ताम्र—** प्रथमाध्याये 'इत्थं विचिन्त्य' इत्यादिना वासुदेवादिविषयकतेजःसृष्ट्यपरनामकशुद्धसृष्टिमुक्त्वा 'प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात्' इति मिश्रसृष्टिः सङ्क्षेपतः उक्ता । इह तामेव सृष्टिं विस्तारयति— **व्यूढ इत्यादिना** ।। भगवान् समग्रैश्वर्यादिमान् । सः शून्यनामा नारायणः एकः निर्भेदतया एकरूपोऽपि ऐश्वर्यवशादेव

चतुर्धा व्यूढः विभक्तः इति सम्बन्धः। स भगवान् वासुदेवनाम्ना प्रथमावतारेण मायानामिकां श्रियमारेति द्वितीयसम्बन्धः।[1] अतो वासुदेवात् अतः वासुदेवसम्बन्धानन्तरमिति वा ।। १० ।।

**सङ्कर्षणाच्चापि जयातनूजो**
**बभूव साक्षाद्बलसंविदात्मा ।**
**वायुर्य एवाथ विरिञ्चनामा**
**भविष्य आद्यो न परस्ततो हि ।। ११ ।।**

**व्यास**— विरेचनाद्विरिञ्चः। वायूनां बहुत्वाद्वायुः क इत्यत आह— **य एवेति** ।। ११ ।।

**वादि**— वायूनां बहुत्वादत्र को वायुर्विवक्षित इत्यत उक्तम्— **य एवेति** ।। अथ कल्पान्तरे य एव वायुराद्यो भविष्यो भाविविरिञ्चनामा स एव वायुस्ततः परे न हि ।। ११ ।।

**सङ्क**— वायुः सङ्कर्षणात् जयादेवीतनूजः पुत्रो बभूव । य एव वायुः सर्वेषामाद्यः प्रथमः सन् विरिञ्चनामा भविष्यो भविष्यति इत्यर्थः ।। ११ ।।

**वरद**— अथ चतुर्मुखोत्पत्त्यनन्तरं सङ्कर्षणात् तद्भार्यायां जयायां वायूत्पत्तिमाह— **सङ्कर्षणादिति** ।। साक्षान्मुख्यतया बलसंविदात्मा बलसंविदोः आत्मा अभिमानी तदात्मश्च वायुः सङ्कर्षणात् बभूवेत्यन्वयः। वायोः स्वरूपं निर्धारयति— **य एवेति** ।। य एव वायुः अथ एतस्मात् ब्रह्मकल्पानन्तरं उत्तरकल्पे भविष्यो विरिञ्चो हि यस्मात्तस्मात्ततो विरिञ्चादन्यः परो नास्तीत्यर्थः ।। ११ ।।

**जना**— बलसंविदात्मा सः साक्षाद्वायुः मुख्यवायुः सङ्कर्षणाज्जयासुतः **बभूव** । य एव । **अथ** वायुपदप्राप्त्यनन्तरम् । आद्यः भविष्यद्ब्रह्मसु प्रथमो भविष्यः विरिञ्चो नाम । ततः वायोः परः अन्यः न, ब्रह्मपदभोक्ता न हि । कुत्रचित् बलं ज्ञानं जातमित्युक्तस्याभिप्राय उक्तो भवति ।। ११ ।।

**ताम्र**— साक्षात् मुख्यतया च बलज्ञानस्वरूपः साक्षात् सङ्कर्षणात् भगवत्स्वरूपांशभूतसङ्कर्षणात् न तु शेषादिति वा । साक्षाद् वायुः मुख्यवायुरिति वा । वायूनां बहुत्वात् मुख्यवायुः क इत्यत आह— **य एवेति** ।। अथ वायुत्वानन्तरं य एव वायुः विरिञ्चनामा भविष्यः स इत्यर्थः। अन्यवायोरपि विरिञ्चपदभावे सोऽपि मुख्यवायुः स्यात् किमित्यत आह— **आद्य इति** ।। आद्यो ब्रह्मा । [2]'इन्दिरापतिमाद्यादिवरदेशवरप्रदम्' इति प्रयोगात् । ततः परो वायोरन्यो (आद्यो न भविष्यः) न ब्रह्मा स एव तत्पदप्राप्तेति भावः। तदुक्तम् 'नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः' इति ग्रन्थान्तरे ।। ११ ।।

---

१. 'स पूर्वोक्तमहामाहात्म्यः एकोऽपि चतुर्धा व्यूढः व्यूहं प्राप्तो स भगवन् नारायणो वासुदेवनाम्ना पूर्वेण रूपेण सृष्टिविधित्सया मायां श्रियमापेति एकवाक्यतया वा योज्यम्' इति हो. पुस्तके पाठान्तरम् । २. द्वा.स्तोत्रम् १-१ ।

**सूत्रं स वायुः पुरुषो विरिञ्चः**
**प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे ।**
**प्रजज्ञतुर्यमले तत्र पूर्वा**
**प्रधानसञ्ज्ञा प्रकृतिर्जनित्री ।। १२ ।।**

**व्यास—** ग्रन्थान्तरे वासुदेवसङ्कर्षणाभ्यां पुंसूत्रोत्पत्त्युक्तिविरोधं परिहरन्नाह— **सूत्रमिति** ।। नामान्तरं प्रकृतिरिति प्रकृतित्वं दर्शयति— **जनित्रीति** ।। १२ ।।

**वादि—** ग्रन्थान्तरे वासुदेवात्पुरुषो जातः सङ्कर्षणात्सूत्रनामा पुत्रोऽभूदित्यस्ति । तद्विरोधपरिहारायाह— **सूत्रमिति**।। ग्रन्थान्तरे यत्सूत्रमित्युक्तं स वायुरेव । यः पुरुष इत्युक्तः स विरिञ्च एव । कृतौ कृतिनामकदेव्याम् ।। १२-१३ ।।

**सङ्क—** तयोर्विरिञ्चवाय्वोः विशेषनामानि दर्शयति— **सूत्रमित्यादिना** ।। अथ प्रद्युम्नतः कृतिस्वरूपायां द्वे स्त्रियौ यमले प्रजज्ञतुः । तत्र तयोरुत्पन्नयोः पूर्वा प्रधानसञ्ज्ञा प्रकृतिर्जनित्रीति संज्ञया सरस्वत्युच्यते ।। १२ ।।

**वरद—** नन्वन्यत्र ग्रन्थे वासुदेवसङ्कर्षणयोः सूत्रपुरुषावुत्पन्नावित्युच्यते ततस्तद्विरोध इत्यतस्तत्रापि तच्छब्दवाच्यौ ब्रह्मवायू एवेत्याह— **सूत्रमिति** ।। स वायुः यः सङ्कर्षणादुत्पन्नः स सूत्रमित्युच्यते । सर्वाधारत्वात् स विरिञ्चः यो वासुदेवादुत्पन्नः स पुरुष इत्युच्यते सर्वजीवाभिमानित्वात् 'सर्वजीवाभिमानी तु परः पुरुष उच्यत' इति वचनात् । अथ तृतीयरूपस्य प्रद्युम्नस्य कृत्यमाह— **प्रद्युम्नतश्चेति** ।। प्रद्युम्नभार्यायां कृतौ प्रद्युम्नात् द्वे स्त्रियौ जज्ञतुः उत्पन्ने इत्यर्थः। विलम्बेनोत्पत्तिं निवारयति— **यमले इति** ।। प्रद्युम्नादुत्पन्नयोः सरस्वतीभारत्योस्तद्रूपविशेषापेक्षया नामविशेषं क्रमेणाह— **तत्र पूर्वेति** ।। तत्र तयोर्मध्ये पूर्वा पूर्वमुत्पन्ना प्रधाना प्रधानाभिमानित्वात् प्रधानसञ्ज्ञा । एवं प्रकृतिः प्रकृतिसञ्ज्ञा यतः प्रकृतिद्वारा जनित्रीत्यर्थः ।। १२ ।।

**जना—** वासुदेवात्पुरुषः सङ्कर्षणात् सूत्रनामा जात इत्युक्तेरभिप्रायमाह— **सूत्रमिति** ।। स वायुः सूत्रं सूत्रनामा विरिञ्चः पुरुषः प्रकीर्तितः। इदानीं प्रद्युम्नात् सृष्टिमाह— **प्रद्युम्नत इति** ।। अथ ब्रह्मवायूत्पत्त्यनन्तरम् । प्रद्युम्नतः कृतौ यमले द्वे स्त्रियौ प्रजज्ञतुः। तत्र तयोर्मध्ये पूर्वा प्रधानसंज्ञा शिवादीनां जनित्री । अत एव प्रकृतिः ।। १२ ।।

**ताम्र—** वासुदेवसङ्कर्षणाभ्यां पुंसूत्रोत्पत्त्युक्तिविरोधं परिहरति— **सूत्रमिति** ।।

[1]"नारायणाख्यः पुरुषः शेते लक्ष्म्यान्वितो लये ।
स एव पुरुषाख्यन्तु द्वितीयं रूपमात्मनः ।।

१. भा.ता.११-६-१६ ।

कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् ।
प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः ।।'

इत्येकादशषष्ठाध्यायतात्पर्येषु पुरुषशब्देन वासुदेव एव विवक्षितः इत्यविरोधः। ननु कथं सूत्रस्य सङ्कर्षणादुत्पत्तिः। एकादशचतुर्विंशतितात्पर्ये— [1]'वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत' इत्युपक्रम्य 'स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः' इत्युक्तेरिति चेत् । रूपभेदेन तस्याप्यविरुद्धत्वादिति ।। **अथेति** ।। ब्रह्मवायूत्पत्त्यपेक्षया एकसंवत्सरात्पर इति । पश्चादित्यर्थः। उक्तमेवं तृतीयस्कन्धतात्पर्ये-

[2]'नियमात् वायुरेवैको ब्रह्मत्वं याति नापरः ।
तस्मात् समानता मुक्तौ वायुत्वे किञ्चिदूनता ।।
दशवर्षस्तु तत्पश्चाज्जननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः कालः संवत्सरात् परः।।' इति ।

प्रकृतिरिति नामान्तरम् । प्रकृतित्वं दर्शयति— **जनित्रीति** ।। ननु—

'स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः।
कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् ।
प्रधानाख्यां तु गायत्रीम्................।।'

इत्युदाहृतैकादशतात्पर्ये पुरुषनामकवासुदेवेन प्रधानसञ्ज्ञाया उत्पत्त्युक्तेः कथं प्रद्युम्नादुत्पत्तिरिति चेत् अत्र केचित् 'तत्र पुरुषः प्रधानाख्यां च गायत्रीम्' इत्यत्र प्रद्युम्नः कृतौ इति शेषः' इत्याहुः । वस्तुतस्तु रूपभेदेन प्रकृतिश्रद्धयोरुभयोः वासुदेवादुत्पत्त्युपपत्तेरविरोधः। तदुक्तं अनुव्याख्याने-

[3]'ततो जातः पुमान्नाम ब्रह्मास्यां वासुदेवतः।
सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ।।' इति ।

सूत्रस्य प्रकृतिश्रद्धयोश्च वासुदेवादुत्पत्त्युक्तौ एतद्ग्रन्थविरोधपरिहाराय प्राणनामा सङ्कर्षणादिति अध्याहारेण सुधायामेकं विरोधं परिहृत्य प्रद्युम्नात् देव्यामित्यध्याहारेण विरोधान्तरपरिहारात् वासुदेवादपि प्रकृतिश्रद्धोत्पत्त्यनुज्ञानावगमात् ।। १२ ।।[4]

---

१. भा.ता.११-२४-४ । २. भा.ता.३-१३-३ ३. अनु. २-३-अंशाधिकरणम् ।

४. 'स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः। कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां तु गायत्रीं' इत्युदाहृतैकादशतात्पर्ये पुरुषनामकवासुदेवेन प्रधानसञ्ज्ञाया उत्पत्त्युक्तेः कथं प्रद्युम्नादुत्पत्तिरिति चेत् अत्र केचिदाहुः 'तत्र पुरुषः प्रद्युम्नः' इति । तच्चिन्त्यम् । तस्य पुरुषनामकचतुर्मुखोत्पादकत्वायोगात् । अन्ये त्वाहुः 'प्रधानाख्यां तु गायत्रीम्' इत्यत्र प्रद्युम्नः कृतौ ससर्जेत्यत्र विरोधाभावात् । यथा 'ततो जातः पुमान्नामा ब्रह्मास्यां वासुदेवतः। सूत्रात्मा प्राणनामा च दैव्यौ प्रकृतिमानिनौ ।।' इति । अनुव्याख्याने आपाततः सूत्रस्य वासुदेवपुत्रत्वप्रतीतौ अपि सुधायां 'प्राणनामा सङ्कर्षण' इति अध्याहारेण व्याख्यातं तथा प्रकृतेऽपि उपपत्तेः। अस्य ग्रन्थस्य निर्णयाकत्वादिति । तदपि चिन्त्यम् । पठितानुव्याख्यानवचनस्य सङ्कर्षणाच्चापि जयातनूजः प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे' इति वाक्यद्वयविरोधे समानेऽपि सुधायां 'प्राणनामा सङ्कर्षणात्' इत्येकं विरोधं परिहृत्य अन्यपरिहारेण प्रकृतिश्रद्धयोः वासुदेवादपि उत्पत्त्यभ्यनुज्ञावगत्या अध्याहारकल्पकाभावादिति ।। १२ ।।' इति हो. पुस्तके अधिकः पाठः ।

**श्रद्धा द्वितीयाथ तयोश्च योगो**
**बभूव पुंसैव च सूत्रनाम्ना ।**
**हरेर्नियोगादथ सम्प्रसूतौ**
**शेषः सुपर्णश्च तयोः सहैव ।। १३ ।।**

**व्यास**— कामतो योगं वारयति— **हरेरिति** ।। सह एककालम् ।। १३ ।।

**सङ्क**— द्वितीया श्रद्धेति सञ्ज्ञया भारत्युच्यते इत्यर्थः। अथ हरेर्नियोगादाज्ञया तयोर्योगः सम्बन्धो बभूव ।। १३ ।।

**वरद**— द्वितीयास्त्री श्रद्धासंज्ञेत्यर्थः। अथ उत्पत्त्यनन्तरं तयोस्त्रियोर्यथाक्रमं पुंसा पुरुषेण विरिञ्चेन सूत्रनाम्ना वायुना च योगः सम्बन्धो बभूवेत्यर्थः। ननु हरिप्रेरणमन्तरेण कथं तयोः सम्बन्धो बभूवेत्यत उक्तम्— **हरेर्नियोगादिति** ।। अथ योगानन्तरमेव शेषः सुपर्णश्च तयोः सकाशात् यथाक्रमं प्रसूतावित्यन्वयः। सहैवेति कालभेदं निवारयति ।। १३ ।।

**जना**-द्वितीया श्रद्धा । अथोत्पत्त्यनन्तरं हरेर्नियोगात् तयोः श्रद्धाप्रधानयोः पुंसा सूत्रनाम्ना च योगो बभूव । पुरुषेण प्रधानायाः सूत्रेण श्रद्धायाः योगो जातः। तयोः पुरुषसूत्रयोः सहैवैकस्मिन् काले शेषः सुपर्णश्च जातः। तदुक्तमनुव्याख्याने–

'ततो जातः पुमान्नामा ब्रह्माऽस्यां वासुदेवतः।
सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ।।' इति ।

तद्व्याख्यातं जयतीर्थार्यैः। [1]''प्राणनामा सङ्कर्षणात् देव्यौ सरस्वतीभारत्यौ प्रकृतिमानिनी प्रकृतिमानिन्यौ । 'सुपां सुलुक्' इति 'पूर्वसवर्ण' इति पूर्वसवर्णः' इति । बृहद्भाष्ये आधारे–

[2]''सदा सर्वगुणापानादापो नारायणः स्मृतः।
द्वितीयरूपमसृजत् वासुदेवं स आत्मनः ।।
ब्रह्म सत्यमिति प्राहुर्वासुदेवाभिधं प्रभुम् ।
तस्मात् ब्रह्माजनि ततो देवाः सर्वेऽपि जज्ञिरे ।।' इति चोक्तम् ।

आथर्वणभाष्ये च –

[3]''वासुदेवः पुमान्नाम पूर्णत्वात्सः स्वयोषिति ।
रमायां गर्भमदधात्प्रजास्तस्मात्प्रजज्ञिरे ।।' इति ।

छान्दोग्ये च –

[4]''प्रथमावताररूपत्वाद्वासुदेवः परःपुमान् ।
प्रस्ताव..................................।।' इति ।

---

१. श्रीमन्न्यायसुधा. ४२५९ । २. बृ.भा. ७–५ ब्राह्मणम् । ३. आ.भा. ३–५ । ४. छा.भा. २–२ ।

ननु

'नारायणाख्यः पुरुषः शेते लक्ष्म्यान्वितो लये ।
स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः ।।
कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् ।
प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः ।।
चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः।
प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु ।।
श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽन्वजायत ।।'

इत्यनेन विरोधः। प्रमाणेषु पुरुषात् ब्रह्मप्रधानयोः पुरुषनामकब्रह्मण एव महत्तत्त्वाभिधस्य ब्रह्मणश्च सृष्टिकथनान्मूले च वासुदेवात् ब्रह्मणः प्रद्युम्नात्प्रधानायाः अनिरुद्धात् महत्तत्त्वाभिधस्य कथनादिति चेन्न । अत्र पुरुषशब्देन पुरु सूत इति स्रष्टुरूपमेवोच्यते । तेन वासुदेवादिचतुर्णामपि पुरुषपदवाच्यत्वं सृष्टिकर्तृत्वात् ।

[१]'यत्तस्य व्यापकं रूपं परं नारायणाभिधम् ।
शून्यं ब्रह्मेति तं प्राहुः द्वितीयं स्रष्टृ यत्ततः ।।
परमः पुरुषो नाम मितं तद्देशतो विभोः।।' इति

ब्रह्मतर्कवचने स्रष्टृरूपस्यैव पुरुषसञ्ज्ञाकरणात् । अत एव तज्ज्ञापनार्थं 'परमः स तु वासुदेवनामा बभूव' इति परमपदेन विशेषितः। यद्वा तृतीयतात्पर्ये कापिले –

[२]'प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम् ।
प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तमः।।
तदेव वासुदेवाख्यं महत्तत्त्वनियाकम् ।।'

इति तस्यैव वासुदेवत्वमहत्तत्त्वनियामकत्वकथनाच्च । बृहद्भाष्ये 'प्रद्युम्नः पुरुषेत्युक्तः पूरयेत्स्वजगद्यत' इति। अथवा पुरुषव्यूहस्थाः सर्वेऽपि छत्रिन्यायेन पुरुषपदवाच्याः। यद्वा रूपद्वयं ज्ञेयं तयोरैक्यं च । तदुक्तं स्कान्दे-

[३]'सृष्टिभेदाद्द्विरूपं तु कथा पञ्चोत्तरं शतम् ।
वैरूप्यमन्यद्विज्ञेयं तात्पर्यात् मोहनाय च ।।' इति ।
[४]'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः।
असृजत्स महत्तत्त्वं स एवाण्डं समाविशत् ।।' इति

पुरुषादपि महत्तत्त्वोत्पत्तिकथनाद्विरोध इति चेत् महत्तत्त्वोत्पत्तेः द्विवारं विद्यमानत्वात् । तदुक्तं व्योमसंहितायाम्

[५]'यः शेते प्रलये विष्णुः शून्यनामा महाकृतिः।
स तु नारायणो नाम नराणामयनत्वतः।।
रूपं द्वितीयं भवति दीपाद्दीपान्तरं यथा ।
सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जनाः ।।

१. भा.ता.३-१२-२ । २. भा.ता.३-२७-२० । ३. भा.ता.४-१-३३ । ४. भा.ता.३-७-९ । ५. भा.ता.२-६-४४ ।

स रमायां द्वितीये तु रूपे प्रकृतिसञ्ज्ञिते ।
वीर्यमाधत्त पुरुषो महांस्तस्मादजायत ।।
योऽसौ हिरण्यगर्भाख्यः पुरुषः सोऽपि भण्यते ।
श्रद्धेत्युक्ता हि तत्पत्नी साऽपि प्रकृतिरुच्यते ।।
प्रलये त्वशरीरौ तौ विभागेन व्यवस्थितौ ।
शरीरं प्राप्य पुरुषात् संयोगं तौ प्रचक्रतुः ।।
ततः पुनर्महत्तत्त्वं प्रजातं जगदङ्कुरम् ।
स्वस्यैव पुत्रतां यातमहङ्कारस्ततोऽजनि ।।' इति ।

'सूत्रात्मना महांश्चापि सह जातश्चतुर्मुखः' इति वचनं न विरुद्धम् । हिरण्यगर्भाख्यपुरुषात् उत्पन्नमहत्तत्वे सूत्रसहभावमात्रकथनात् महत्तत्त्वयोर्युगलं प्राप्तमिति चेन्न । नीलादेहयोरिव विदुरधर्मदेहयोरिवोत्पन्नयोः महत्तत्त्वयोः ऐक्यात् न युगलम् । उत्पन्नयोः द्वयोः ऐक्यमुक्तं [1]"अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति' इति गीताभाष्य-व्याख्यानावसरे 'द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यं आपद्यत इति सम्प्रदायविदः' इति जयतीर्थार्यैः ।। १३ ।।

**ताम्र**— कामतो योगं वारयति— **अथेति** ।। प्रकृतिश्रद्धयोरुत्पत्तिकालापेक्षया दिव्यसहस्रवत्सरानन्तरमित्यर्थः । [2]"शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः।।' इति तृतीयतात्पर्यवचनात् । सहैव युगपदेव शेषः पुंसः प्रकृत्यां सुपर्णः सूत्रात् श्रद्धायामित्यर्थः ।। १३ ।।

**शेषस्तयोरेव हि जीवनामा**
**कालात्मकः सोऽथ सुपर्ण आसीत् ।**
**तौ वाहनं शयनं चैव विष्णोः**
**काला जयाद्याश्च ततः प्रसूताः ।। १४ ।।**

**व्यास**— तयोर्मध्ये यः शेषः सः जीवनामा अथ यः सुपर्णः स कालनामक आसीत् । ततः शेषसुपर्णाभ्याम्। शेषः कः[3] । जयाद्याः सुपर्णतः ।। १४ ।।

**वादि**— **शेषस्तयोरित्यत्र** तयोः पुत्रयोर्मध्ये शेषो जीवनामा, यः सुपर्णः स कालात्मकः। इदमपि ग्रन्थान्तरविरोधपरिहारार्थम् ।। १४ ।।

**सङ्क**— अथ शेषसुपर्णौ तयोः सहैव जातौ । तयोर्विशेषनामानि दर्शयति— **शेष इत्यादिना** ।। तौ केन प्रकारेण विष्णोः सेवां कुरुत इत्यत आह— **ताविति** ।। कालाः कालाख्यश्रीविष्णुपार्षदाः जयविजयाद्याश्च ते ब्रह्मवायुभ्यां प्रसूता इत्यर्थः ।। १४ ।।

---

१. गी.भा.१०-६ । २. भा.ता. ३-१३-३ । ३. 'शेषात् कालाः' इत्युचितमिति भाति ।

**वरद—** शेषसुपर्णयोरपि तद्रूपविशेषापेक्षया नामविशेषमाह— **शेष इति** ।। तयोरेव मध्ये शेषो जीवनामा सुपर्णश्च कालात्मकः कालनामा आसीत् । तयोस्तदानीं सृष्टिरूपहरिसेवाभावेऽपि अन्यैव सेवा समजनीत्याह— **ताविति** ।। शेषः सुपर्णश्चेति निर्देशक्रममात्रं न तु तयोस्तारतम्यमस्तीति सूचयनाय वाहनं शयनञ्चेति क्रमोल्लङ्घनम् । अन्यथा शेषस्य प्रथमं निर्देशाच्छयनं वाहनमित्यवक्ष्यत् । सुपर्णो वाहनः शेषः शयनमिति भावः। शेषसुपर्णयोः पार्षदत्वात्तदुत्पत्तिप्रसङ्गेन कालादीनां उत्पत्तिरुक्तास्ति पुराणेषु तदनुवादपूर्वकं तामुक्तिं घटयितुं आह— **काला इति** ।। १४ ।।

**जना—** कुत्रचित्पुरुषसूत्रयोर्जीवकालौ जातौ इत्युक्तिस्तां घटयन्नाह— **शेष इति** ।। तयोः पूर्वजातयोः मध्ये शेष एव जीवनामा । अथ सः सुपर्णः गरुडः कालात्मकः आसीत् । तौ गरुडशेषौ वाहनं शयनं आस्तरणं विष्णोर्बभूवतुः। ततस्तदनन्तरं ततस्तयोर्गरुडशेषयोः। कालाः कालनामकाः। जयाद्याः जयविजयाद्याः। गरुडात् कालाः शेषाज्जयाद्या इति ज्ञेयम् । यद्वा मरुत आदित्या इव कालाः। ते के इत्यतः— **जयाद्या इति** ।। १४ ।।

**ताम्र—** पुरुषसूत्रयोः जीवकालौ उत्पन्नौ इति क्वचिदुक्तिपरिहारायाह— **तयोरिति** ।। तयोर्मध्ये यः शेषः स एव जीवनामा । अथान्यो यः सुपर्णः स कालनामासीदित्यर्थः। शेषः सुपर्णश्चेति निर्देशक्रममपहाय वाहनं शयनं चेत्युक्तिस्तु शेषः सुपर्णश्चेति निर्देशमात्रं न तयोस्तारतम्यमिति दर्शयितुमिति बोध्यम्। प्रासङ्गिकमुक्त्वा वक्तव्यसूक्ष्मसृष्टिशेषं 'पुंसः प्रकृत्यां च' इत्यनेन वक्ष्यन् पार्षदप्रसङ्गात् पार्षदान्तरसृष्टिमाह— **काला इति**।। ततः शेषसुपर्णाभ्याम् । कालाः शेषात् । जयाद्याः सुपर्णतः। ततः तदनन्तरं कालान्तर इति वा । 'ततो ब्रह्मवायुभ्याम्' इति केचित् ।। १४ ।।

**भारतश्री—** कालात्मकः कालमानी । कालाः कालाभिमानिनः । ततः पश्चात्प्रसूताः ।। १४– २६ ।।

**काला जयाद्या अपि विष्णुपार्षदा**
**यस्मादण्डात्परतः सम्प्रसूताः।**
**नीचास्सुरेभ्यस्तत एव तेऽखिला**
**[1]विष्वक्सेनो वायुजः [2]खेन तुल्यः ।। १५ ।।**

---

१. विष्वक्सेनस्य पूर्वजन्मवृत्तान्तं गरुडपुराणे प्रेतखण्डे ८अध्याये उक्त्वान्ते १०२श्लोके 'प्रेताः सङ्गवशेन नाकमवसन् सन्तप्तको ब्राह्मणो विष्वक्सेन इति प्रसिद्धविभवो नाम्ना गणे मेऽभवत् । एतत्ते सकलं मया निगदितं यश्चैतदुत्कीर्तयेद्यश्चेदं श्रुणुयात्र सोऽपि पुरुषः प्रेतत्वमाप्रोति हि।।' इत्युक्तम् । तेन तस्य नित्यमुक्तत्वं नास्तीति अर्थात् सिद्ध्यति । अस्य स्वरूपादिविषये पञ्चरात्रे 'विष्वक्सेनं चतुर्बाहुं श्यामवर्णं किरीटिनम् । लम्बोदरममुख्येन करेणाभयदायिनम् ।। दक्षिणेन प्रसव्येन समालम्ब्य कटिं स्थितम् । आसीनमपराभ्यां च हस्ताभ्यां शङ्खचक्रिणम् ।। अथवा पूर्वकरयोर्गदामेकत्र कल्पयेत् । अन्यत्र तर्जनीमुद्रां यद्वा दक्षिणहस्तयोः ।। मुख्येऽभीतिरमुख्ये तु चक्रमन्यत्र हस्तयोः। गदां मुख्ये जघन्ये तु शङ्खं च परिकल्पयेत् ।। शङ्खचक्रधरं यद्वा स्थितं मुख्ये करद्वये । बिभ्राणं क्षुरिकां वेत्रं कृताञ्जलिपुटं स्थितम् ।। देवीं च विश्वक्सेनस्य वामभागे प्रतिष्ठिताम् । नाम्ना पुष्पधरां कुर्यात् कमलामिव लक्षिताम् ।।' २. वराह.१७-३४. 'ततो गणपतिर्वाक्यमाकाशाख्योऽब्रवीत् तदा ।' इति तत्त्वाभिमानिदेवताकलहप्रसङ्गे उक्त्वा अस्मिन्नेव पुराणे २३ अध्याये गणपतेराकाशाभिमानित्वेनोत्पत्तिकथा वर्णिता ।

**व्यास**— एते कालाद्या क इत्यत आह— **काल इति** ।। एतेषां शेषाद्यनन्तरं सृष्ट्युक्त्या देवोत्तमत्वप्रतीतिं सनिमित्तं निवारयन्नाह— **यस्मादिति** ।। परतो बहिः। तत्रापवादमाह— **विष्वक्सेन इति** ।। १५ ।।

**वादि**— कालनामकाः हरिपार्षदास्ततः शेषात् । जयाद्याः जयविजयाद्याः । ततः सुपर्णादित्यर्थः। एते काला जयाद्याश्च क इत्यतस्तत्स्वरूपं निरूपयन् रुद्रादिदेवेभ्यः प्रथमोत्पन्नत्वात् तेभ्योऽप्यभ्यधिका इति शङ्कानिमित्तं वदन्निवारयति— **काला जयाद्या इति** ।। अण्डात्परतो बहिः अण्डसृष्टेः पूर्वमित्यर्थः। अण्डान्तर्या सृष्टिः सैव तारतम्योपयोगिनी न बाह्यसृष्टिः। ततो ब्रह्माण्डाद्बहिः सृष्टत्वात् पूर्वोत्पन्नत्वेऽपि सुरेभ्यो नीचा इत्यर्थः। तत्रापवादमाह— **विष्वक्सेन इति** ।। खेनाकाशाभिमानिना विनायकेन । ननु 'प्रद्युम्नसञ्ज्ञक इमांश्चरमात्मनेऽदात्' इति प्रद्युम्नः स्वोदरस्थजीवान् अनिरुद्धोदरे प्रावेशयदिति प्रागेवोक्तम् । इदानीं विष्णोस्तृतीयात् व्यूहात् प्रद्युम्नात्सङ्गृह्येति कथमुच्यत इति चेत् सत्यम् । प्रागेकवारमनिरुद्धकरे दत्वा सूक्ष्मतरदेहसहितान् कारयित्वा पुनश्च तान् सर्वान् प्रद्युम्न एव स्वोदरे प्रावेशयदिति कथा पुनः 'सङ्गृह्य' इति वदता ह्याचार्येण सूचिता । अतो न विरोध इति परिहारसम्भवात् । चतुर्वर्णगतान् ब्राह्मणक्षत्रियादीन् चतुर्वर्णगतान् । देवेष्वपि ब्राह्मणक्षत्रियादिवर्णभेदोऽस्ति । अत एव सूर्यात् सोमात् क्षत्रियवंशोत्पत्तिः। विरिञ्चाच्च भृग्वादिब्राह्मणवंशोत्पत्तिरिति भावः। यद्वाण्डादण्डसृष्टेः परतः पश्चात् प्रयोजनाय अण्डान्तर्वर्तिवैकुण्ठादिलोकद्वारपालनादिप्रयोजनाय प्रसूताः सृष्टाः। न तु ब्रह्मरुद्रादितत्त्वाभिमानिदेवतावदण्डसृष्ट्युपयोगितयैव सृष्टाः। तस्मात्कारणात् सुरेभ्यस्तत्त्वाभिमानिदेवेभ्यो नीचाः। स्वसेवायै प्राक् गृहीतदासजनेभ्योऽप्याधिपत्याय पश्चाद्गृहीताधिकारिपुरुषाणामेव श्रैष्ठ्यदर्शनात् । तत्त्वाभिमानि-ब्रह्मादिदेवेष्वण्डसृष्टेः पूर्वमपि क्रमिकतत्त्वपरिपालनाय यः पूर्वं पूर्वं सृष्टः स स प्रधानः। यः पश्चात्सृष्टः स तु नीच इति सृष्टिक्रमस्य न काप्यनुपपत्तिरिति भावः। बीजात्मतया रेतोरूपेण अत एव प्रागनिरुद्धोदरे देहसहितानित्युक्तम्। त्रिगुणात्मिकायां सत्त्वरजस्तमोभिमानिन्याम् । अनेन शान्तिदेव्या अपि रूपत्रयमस्तीति सूचितम् । 'ततो महत्तत्त्वतनुः' इत्यत्र ततः शान्तिदेव्या इत्यर्थः ।। १५-१६ ।।

**सङ्क**— ननु शेषगरुडोत्पत्तिप्रसङ्गे कालजयादीनामुत्पत्त्युक्तेः सुरेभ्योऽप्युत्तमत्वं स्यादित्य आह— **काला इति** ।। कालजयादिषु विष्वक्सेनस्य विशेषमाह— **विष्वक्सेन इति** ।। अनेन अन्ये जयाद्याः ब्रह्मप्रसूता तत्त्वाभिमानिदेवेभ्यो नीचा इत्युक्तम् । वायुजः प्रधानवायुपुत्रः खेन आकाशाभिमानिविनायकेन समः ।। १५ ।।

**वरद**— नन्वादिसृष्टौ पूर्वोत्पन्नानामाधिक्यमिति स्थितिः। तत्र इन्द्रादिभ्यः पूर्वमुत्पन्नत्वस्योक्तौ जयादीनां तदाधिक्यप्राप्तिरित्यत आह— **काल इति** ।। कालाः कालाख्याः जयाद्याश्च विष्णुपार्षदा अपि यस्मात्कारणा-दण्डात्परतः ब्रह्माण्डोत्पत्तेरनन्तरं तदन्तरभिव्यक्तौ विपर्ययेण प्रसूताः ततः कारणात् तेऽखिलाः कालाद्याः सुरेभ्यस्तत्त्वाभिमानिभ्यो देवेभ्यो नीचाः एवेत्यर्थः। पुराणेषु शेषाद्युत्पत्त्यनन्तरं जयादीनामुत्पत्तिकथनेऽपि सोत्पत्तिर्न सूक्ष्मा किन्तु ब्रह्माण्डोत्पत्त्यनन्तरोत्पत्तित्वात् स्थूलेति तदपेक्षया पुराणवचनानां प्रवृत्तत्वेऽपि न तावताधिक्यप्राप्तिरिति भावः। पार्षदेष्वपि विशेषोऽस्तीत्याह— **विष्वक्सेन इति** ।। वायुजः वायोः जातो विष्वक्सेनः पार्षदः खेनाकाशाभिमानिना गणपतिना तुल्यः समान इत्यर्थः। अनेन तदितरेषां पार्षदानां ब्रह्मजत्वं तत्त्वाभिमानिभ्यो नीचत्वं च उक्तं भवति ।। १५ ।।

**जना**— एषां शेषानन्तरं सृष्ट्युक्त्या प्राप्तां देवोत्तमत्वप्रतीतिं निवारयति— **काला इति** ।। अण्डात्परतः बहिः प्रसूताः तत एवाण्डाद्बहिः प्रसूतत्वादेव ते अखिलाः कालाद्याः सुरेभ्य इन्द्रादिभ्यो नीचाः। वासुदेवादित्रितयजात-सूक्ष्मसृष्टौ इन्द्रादेरनुत्पन्नत्वात् तेभ्य उत्तमत्वप्राप्तिरेव नेत्यर्थः। 'पारावारे तथैवारादुभयार्थाभिधायिनः' इति तात्पर्यात् । तत्रापवादमाह— **विष्वक्सेन इति** ।। तेषां मध्यस्थः विष्वक्सेनः वायुजः। शेषगरुडयोर्न स्वरूप-तारतम्यमाह ।। **खेनेति** ।। खेन गणेशेन तुल्यः समानः। अनेनेदमुक्तं भवति । ब्रह्माण्डाद्बहिस्तत्त्वसृष्टिः अण्डान्तः पाद्मसृष्टिश्चेति द्वे तारतम्यज्ञापिके । प्रथमाध्यायेऽनिरुद्धादुक्तां सूक्ष्मसृष्टिं विहाय अन्या सूक्ष्मसृष्ट्यन्याश्च स्थूलसृष्टयः न तारतम्यज्ञापिकाः। अत एव प्रथमाध्याये क्रमश इत्युक्तम् । एतेषां च सूक्ष्मसृष्टौ जातत्वान्न श्रैष्ठ्यमिति भावः। तदुक्तं वाराहे–

[1]"मरुतो ब्रह्मवायू च तद्भार्ये चाभिमानिनः।
अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतत्त्रियः ।।
मनसस्त्वनिरुद्धश्च चन्द्रश्चान्ये यथोदितम् ।
एवं क्रमो व्यत्ययस्तु सूक्ष्मस्थूलादिभेदतः।।
सृष्टौ गुणे च ज्ञानादौ मुक्तेष्वेवाप्ययं क्रमः।
नियमेनान्यथोक्तिस्तु मोहायासुरजन्मनाम् ।।' इति ।

तत्त्वसृष्टिस्तारतम्यज्ञापिकेत्यत्र

[2]"ततो रूपं महन्नाम ब्रह्मणोऽहंकृतिश्शिवः।
ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोभिधः।।
स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे ।
तत्र पूर्वतनः श्रेयान्गुणैः सर्वैः समस्तशः ।।
तेभ्यस्तु भगवान्विष्णुः तदधीना इमे सदा ।।' इत्यनुव्याख्यानं मानम् ।

पद्मसृष्टिस्तारतम्यज्ञापिकेत्यत्र 'उक्तक्रमात्पूर्वभवस्तु यो यः श्रेष्ठः स स ह्यासुरकानृते च' इति इदमेव मानम् । सृष्टिद्वयं च तारतम्यज्ञापकं इत्यत्र 'इत्यादिकल्पोत्थित' इत्यनेन सृष्टिद्वयमनूद्य अत्र 'पूर्वो यो यो गुणैः नित्यमसौ वरो हि' इति मानम् । यत्तु

[3]"आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वदा गुणैः।
अनाद्यनन्तकालेषु मुक्तावपि यथाक्रमम् ।।'

इति वचनं पाद्मसृष्टेरेव तारतम्यज्ञापकम् ।

[4]"रुद्रमिन्द्रं कुमारं च विनैवान्याग्रजो मनुः।
ब्रह्मपुत्रेष्वादिसृष्टौ अन्यथात्वं पुनर्जनिः।।' इति वचनसाहचर्यात् ।

इदं च 'मनवे पूर्वजा ये च' इत्यत्र तात्पर्यं मनुः पद्मकल्पे प्रथमोत्पन्नः। तस्मात्पाद्मसृष्टिरेव तारतम्यज्ञापकम्। अथवा अनिरुद्धाज्जातसूक्ष्मसृष्टेरादौ जातत्वात् तस्य तारतम्यज्ञापकत्वम् ।। १५।।

---

१. भा.ता.३-२२-१२ । २. अनु. २-३-अंशाधिकरण.९६१-९६३ । ३. भा.ता.११-१४-४ । ४. भा.ता.११-४-४ ।

**ताम्र—** एते कालाद्याः । ते के इत्यत आह— **काला इति** ।। ननु 'आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः' इति वचनात् इन्द्राद्यपेक्षया पूर्वमुत्पन्नानां तेषां तत उत्तमत्वं स्यादित्यत आह— **यस्मादिति** ।। अण्डात् परतः तदुत्पत्त्यनन्तरं काला जयाद्याश्चाण्डाद् बहिर्नोत्पन्नाः। किन्तु तदन्तरे गरुडानन्ताख्यपार्षदोत्पत्ति-कथनप्रसङ्गादिह कथिताविति भावः। 'परतो बहिः' इति **व्यासतीर्थीये** । तत्रापवादमाह— **विष्वक्सेन इति**।। वायुजः न तु शेषगरुडोत्पन्नः। खेनाकाशमानिविघ्नेशेन तुल्यः। न तु देवतानीचः इत्यर्थः ।। १५।।

**व्यूहात्तृतीयात्पुनरेव विष्णो-**
**र्देवां[१]श्चतुर्वर्णगतान् समस्तान् ।**
**सङ्गृह्य बीजात्मतयाऽनिरुद्धो**
**न्यधत्त शान्त्यां त्रिगुणात्मिकायाम् ।। १६ ।।**

**व्यास—** बीजात्मना रेतोरूपेण । त्रिगुणात्मिकामिति । शान्तिरपि त्रिरूपा जातेति कथयति ।। १६ ।।

**सङ्क—** एवं तावद्वासुदेवादिमूर्तित्रयात् सूक्ष्मरूपेण ब्राह्मणादिचतुर्वर्णभेदेन विरिञ्चादिदेवाः सृष्टा इत्युक्तम्। इदानीं अनिरुद्धस्वरूपात् तेषां स्थूलरूपेणोत्पत्तिप्रकारमाह— **व्यूहादिति** ।। प्रद्युम्नाख्याच्चतुवर्णगतान् समस्तदेवान् बीजात्मतया सङ्गृह्य अनिरुद्धः पुनः स्थूलात्मतया सृष्ट्यर्थं शान्त्यां सत्त्वरजस्तम इति त्रिगुणाभिमानित्वेन त्रिगुणात्मिकायां न्यधत्त प्रावेशयत् ।। १६-१७ ।।

**वरद—** एवं तावद्वासुदेवादिमूर्तित्रयात् सूक्ष्मरूपेण ब्राह्मणादिचतुर्वर्णभेदेन विरिञ्चादिदेवानां सृष्टिं वदता भगवता आचार्येण 'निर्देहकान्' इत्यादिना या पूर्वाध्यायोक्ता अनिरुद्धसृष्टिः सातिसूक्ष्मेत्युक्तं भवति । गत्यन्तरेण यत्प्रागुक्तं शरदां सहस्रं स्थित्वा स्वमूर्तिभिरिति तदनुकथनेन सम्यक्प्रपञ्चितं भवति । एवमतिसूक्ष्मसृष्टिमुक्त्वा पुनर्वासुदेवात् तत्त्वाभिमानित्वेन स्थूलसृष्टिं वक्तुमाह— **व्यूहादिति** ।। ग्रन्थान्तरे अथ यदुक्तं प्रद्युम्नरूपक इमानित्यादिना तदपि प्रपञ्चयति— **व्यूहादिति** ।। विष्णोः तृतीयात् व्यूहात् प्रद्युम्नाच्चतुर्वर्णगतान् समग्रान् बीजात्मतया सङ्गृह्य गृहीत्वा सत्त्वादिभेदेन त्रिगुणात्मिकायां शान्त्यां अनिरुद्धो न्यधत्त स्थापितवान् तानेव सूक्ष्मरूपेण सृष्टान् देवान् तत्त्वाभिमानित्वेन देहयोगेनोत्पादयितुं शान्त्यां स्थापयामासेत्यर्थः। अत्र त्रिगुणात्मिकाया-मित्यनेन सत्त्वादिगुणसृष्टिपूर्वकं तत्त्वसृष्टिमप्यभिप्रैति ।। १६ ।।

**जना—** अनिरुद्धात् स्थूलसृष्टिमाह— **व्यूहादिति** ।। अनिरुद्धः विष्णोस्तृतीयात् व्यूहात् प्रद्युम्नादेव समस्तान् चतुर्वर्णगतान् देवांश्चतुर्वर्णगतान् सङ्गृह्य त्रिगुणात्मिकायां शान्त्यां बीजात्मतया बीजरूपेण न्यधत्त ।। १६ ।।

---

१. बृहदारण्यक.३-अव्याकृतब्राह्मण. 'तच्छ्रेयोरूपमत्यसृजत् क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । ....स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ।... स शौद्रं वर्णमसृजत ।...(अग्निब्रह्मणोः ब्राह्मणत्वविषये) तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवत् । तथैव म.भा. शान्तिपर्वणि२०७/२५ 'आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा । अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ।। स्मृतास्त्वाङ्गीरसा देवाः ब्राह्मणा इति निश्चयः। इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् ।।'

**ताम्र**— प्रासङ्गिकमुक्त्वा वक्तव्यसूक्ष्मसृष्टिशेषं 'पुंसः प्रकृत्यां च' इत्यनेन वक्ष्यन् प्रद्युम्नकर्तृकाशेष-देवतासूक्ष्मसृष्टिं सूचयन् अनिरुद्धकर्तृकाशेषदेवतास्थूलसृष्टिमाह— **व्यूहादिति** ।। तृतीयाद् विष्णोः व्यूहात् विभागात् चतुर्वर्णगतान् चतुर्वर्णाभिमानितया विद्यमानान् समस्तान् देवाननिरुद्धः बीजात्मतया सङ्गृह्य बीजात्मतया रेतोरूपेण त्रिगुणात्मिकायां उत्पन्नसत्त्वरजस्तमोभिमानितया त्रिरूपायां शान्त्यां न्यधत्तेत्यर्थः ।। १६ ।।[1]

**ततो महत्तत्त्वतनुर्विरिञ्चः**
**स्थूलात्मनैवाजनि वाक्च देवी ।**
**तस्यामहङ्कारतनुं स रुद्रं**
**ससर्ज बुद्धिं च तदर्धदेहाम् ।। १७ ।।**

**व्यास**— ततः शान्तेः। स ब्रह्मा । बुद्धिं बुद्धितत्त्वञ्च ।। १७ ।।

**वरद**— तदनन्तरं ततो वासुदेवात् महत्तत्त्वतनुर्महत्तत्वं तनुर्देहो यस्यासौ तथोक्तः तथाभूतः । स्थूलात्मनैवाजनि न तु पूर्ववत् सूक्ष्मरूपेण । वाग्देवी सरस्वती वाग् वागभिमानितया स्थूलात्मना अजनीति चशब्दार्थः। एवं चतुर्मुखसरस्वत्योः स्थूलसृष्टिमुक्त्वा ताभ्यां रुद्रस्यापि स्थूलसृष्टिमाह— **तस्यामिति** ।। स महत्तत्त्वाभिमानी विरिञ्चः तस्यां वागभिमानिन्यां देव्यामहङ्कारतनुं अहङ्कारतत्त्वाभिमानिनं रुद्रम् । बुद्धिं च बुद्ध्यभिमानिनीं उमाम् । तदर्धदेहां तस्य रुद्रस्यार्धदेहां पत्नीं ससर्जेत्यर्थः ।। १७ ।।

**जना**— ततः शान्तेः वाग्देवी सरस्वती चाजनि । तस्यां वाग्देव्याम् । सः ब्रह्मा । तदर्धदेहां रुद्रं स्त्रियं बुद्धिं उमां ससर्ज ।। १७ ।।

**ताम्र**— ततः शान्तेः । ननु—

'यः शेते प्रलये विष्णुः शून्यनामा महाकृतिः ।
स तु नारायणो नाम नराणामयनत्वतः ।।
रूपं द्वितीयं भवति दीपाद्दीपान्तरं यथा ।

---

१. प्रद्युम्नकर्तृकाशेषदेवतासूक्ष्मसृष्टिं सूचयन् अनिरुद्धकर्तृकाशेषदेवतास्थूलसृष्टिमाह –व्यूहादिति ।। तृतीयाद् विष्णोः व्यूहात् विभागात् चतुर्वर्णगतान् समस्तान् देवानित्यनुवादेनैव प्रद्युम्नात् सर्वेऽपि देवा उत्पन्ना इति सूचितं भवति । अवशिष्टेन अनिरुद्धकर्तृकसृष्टिः। कथमनेन प्रद्युम्नकर्तृकसृष्टिः ज्ञायत इति चेत् चतुर्वर्णगतान् देवानित्यनुवादेन चतुर्वर्णाभिमानितया देवसृष्टेरुक्तप्रायत्वात् । अन्यथा चतुर्वर्णगतानिति व्यर्थं स्यादिति । स सृष्टिहेतोः प्रद्युम्नतामुपगत इति प्रद्युम्नरूपस्य स्रष्टृत्वोक्तेश्च । ननु प्रद्युम्नेन सर्वदेवसृष्टौ तेषां सदेहत्वेन 'निर्देहकान् स भगवान् अनिरुद्धनामा' इत्युक्त्ययोग इति चेत् सूक्ष्मशरीराणां शरीरत्वविवक्षाभावात् । ततश्चायमर्थः। प्रद्युम्नात् चतुर्वर्णाभिमानितया उत्पन्नान् समस्तान् देवाननिरुद्धः सङ्गृह्य बीजात्मतया रेतोरूपेण त्रिगुणात्मिकायां शान्त्यां न्यधत्तेति । अत्र त्रिगुणात्मिकायामित्यनेन गुणत्रयसृष्टिं तदभिमानितया शान्तित्वं चाभिप्रैति । न्यधत्तेत्यनेन साऽसूतेत्यपि लभ्यते । 'निर्देहकान् स भगवान् अनिरुद्धनामा जीवान् स्वकर्मसहितान् उदरे निवेश्य । चक्रेऽथ देहसहितान् क्रमशः स्वयम्भूप्राणात्मशेषगरुडेशमुखान् समग्रान् ।।' इत्येतत्समानार्थकप्रथमाध्यायश्लोके तथोक्तेः। इयं च सृष्टिः स्थूला गुणत्रयसृष्ट्यनन्तरभावित्वात् । निर्देहकान् स भगवानिति प्रद्युम्नसृष्टानां निर्देहत्वमुक्त्वा देहसहितान् चक्रे इति गुणत्रयोपादानकस्थूलदेहविशिष्टत्ववचनाच्च ।। १६ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जनाः ।।
स रमायां द्वितीये तु रूपे प्रकृतिसञ्ज्ञिते ।
वीर्यमाधत्त भगवान् महांस्तस्मादजायत ।।
योऽसौ हिरण्यगर्भाख्यः पुरुषः सोऽभिधीयते ।
श्रद्धेत्युक्ता तु तत्पत्नी सापि प्रकृतिरुच्यते ।।
प्रलये त्वशरीरौ तौ विभागेन व्यवस्थितौ ।
शरीरं प्राप्य पुरुषात् संयोगं तौ प्रचक्रतुः ।।
ततः पुनर्महत्तत्वं प्रजातं जगदङ्कुरम् ।
स्वस्यैव पुत्रतां यातमहङ्कारस्ततोऽजनि ।।' इति व्योमसंहितायाम् ।

'पुरुषः तस्यैवाद्योऽवतार' इति द्वितीयस्कन्धतात्पर्यवचनात् वासुदेवात् महत्तत्त्वसृष्टिः उच्यते । पुरुषशब्दस्य वासुदेवपरत्वात् । 'प्रथमावताररूपत्वाद्वावासुदेवः परः पुमान्' इति छान्दोग्यभाष्योक्तेः। तस्य हि एतल्लिङ्गम्।

[१]"प्रकृतौ महतः स्रष्टृ परमः पुरुषो मतः।
तदेव वासुदेवाख्यं ..............।।'

इति तृतीयस्कन्धतात्पर्ये स्पष्टं वासुदेवात् महत्तत्त्वसृष्ट्युक्तेश्च इति चेदत्रोच्यते । बहुप्रमाणानुसारेण वासुदेवादप्युत्पत्त्युपपत्तेः। न चैकस्यैव द्वित्रिवारमुत्पत्तिः कथमिति वाच्यम् । पूर्वमुत्पत्तिः पश्चादुपचय इति महत्तत्त्वागतवृत्तिभेदमादाय पुनः पुनरुत्पत्तिरिति वा समग्रस्यैव द्विस्त्रिवारमुत्पत्तिः पश्चादेकीभाव इति वोपपत्तेः। तस्यामिति वाग्देव्यां अहङ्काराभिमानिनं त्रिरूपं रुद्रं साक्षात्परम्परया ससर्जेत्यर्थः ।। **बुद्धिं चेति** ।। 'तैजसात्तु विकुर्वाणात् बुद्धितत्त्वमभूत् सती' इति तृतीयस्कन्धवचनं सृष्ट्यन्तरपरमित्यविरोधः ।। १७ ।।[२]

---

१. भा.ता.३-२७-२० । २. अथ तदपेक्षया स्थूलतत्त्वसृष्टिमाह–तत इति ।। ततोऽनन्तरं वासुदेवादिति शेषः। वाग्देवी विज्ञानाभिमानिनी सरस्वती च । विज्ञानतत्त्वस्य महत्तत्त्वान्तर्भावविवक्षया सहोत्पत्त्युक्तावपि 'विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्' इति वाक्यानुसारेण विशेषो ज्ञेयः। ननु प्रकृतानिरुद्धपत्नीपरामर्शमतिक्रम्याध्याहारे किं कारणमिति इति चेत् 'य शेते प्रलये विष्णुः शून्यनामा महाकृतिः। स तु नारायणो नाम नराणामयनत्वतः। रूपं द्वितीयं भवति दीपाद्दीपान्तरं यथा । सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जनाः। स रमायां द्वितीये तु रूपे प्रकृतिसञ्ज्ञिते । वीर्यमाधत्त भगवान् महांस्तस्मादजायत । योऽसौ हिरण्यगर्भाख्यः पुरुषः सोऽभिधीयते । श्रद्धेत्युक्ता तु तत्पत्नी सापि प्रकृतिरुच्यते । प्रलये त्वशरीरौ तौ विभागेन व्यवस्थितौ । शरीरं प्राप्य पुरुषात् संयोगं तौ प्रचक्रतुः। ततः पुनर्महत्तत्वं प्रजातं जगदङ्कुरम् । स्वस्यैव पुत्रतां यातमहङ्कारस्ततोऽजनि" इति व्योमसंहितायाम् (भा.ता २-६-४४)। पुरुषस्यैवाद्योऽवतार इति द्वितीयस्कन्धतात्पर्यवचनात् वासुदेवात् महत्तत्त्वसृष्टिप्रतीतेः। वासुदेवोऽत्र पुरुषपदोक्तः। 'प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तमः। तदेव वासुदेवाख्यम्' इति तृतीयसप्तविंशत्यध्यायतात्पर्यवचनात्। अन्यस्याद्यावतारत्वायोगात् वासुदेवो ह्याद्योऽवतारः। तदुक्तं छान्दोग्यभाष्ये–'प्रथमावताररूपत्वात् वासुदेवः परः पुमान् । प्रस्तावः' इति । 'कालवृत्त्यां तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ।।' इति । भा.ता.३-६-४। तृतीयस्कन्धे च वासुदेवात् महत्तत्वसृष्टिकथनात् । 'एष ह्यशेषसत्त्वानां आत्मांशः परमात्मनः। आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ।।'भा.ता.३-७-८ । इति महत्स्रष्टुः पुरुषस्यैवोत्तरत्र परामर्शेनाद्यवतारत्वकथनात् । तदुक्तं तात्पर्ये 'पुरुषेणात्मभूतेन' इति । योऽण्डमसृजत् । यद्वा महत्तत्त्वस्यानिरुद्धादुत्पत्तिरेवात्रोच्यते । उदाहृतवासुदेवादुत्पत्तिवाक्यानां पुनर्महत्तत्त्वोत्पत्तिपरता। न चैकस्य द्विवारमुत्पत्तिः कथमिति वाच्यम् । पूर्वमुत्पत्तिः पश्चादुपचयः इत्यङ्गीकारे बाधकाभावात् । यद्वा महत्तत्त्वेऽपि वृत्तिभेदसत्वात् तत्तद्वृत्तिविशिष्टानां पुनरुत्पत्तिः पश्चादेकीभाव इत्यङ्गीकारे बाधाकाभावः इति ।। **बुद्धिं चेति** ।। 'तैजसात्तु विकुर्वाणात् बुद्धितत्त्वमभूत् सती' इति तृतीयस्कन्धवचनं सृष्ट्यन्तरपरमित्यविरोधः ।। १७ ।। इति हो.पुस्तके अधिकः पाठः दृश्यते ।

**बुद्ध्यामुमायां स शिवस्त्रिरूपो**
**मनश्च वैकारिकदेवसङ्घान् ।**
**दशेन्द्रियाण्येव च तैजसानि**
**क्रमेण खादीन्विषयैश्च सार्धम् ।। १८ ।।**

**व्यास**— वैकारिकस्तैजसस्तामसश्चेति । मनो मनस्तत्त्वम् । क्रमेण आकाशाद्वायुरित्यादिक्रमेण प्रथममाकाश-मुत्पाद्याकाशादिक्रमेण वाय्वादीन् ससर्जेत्यर्थः। एवं शब्दस्य स्पर्शादीनामुत्पत्तिः ज्ञातव्या ।। १८ ।।

**वादि**— 'स शिवस्त्रिरूपः' इत्यत्र त्रिरूपः वैकारिकतैजसतामसाख्यत्रिविधाहङ्कारप्रेरणाय वक्ष्यमाणरूपद्वयेन सह त्रिरूपः। वैकारिकदेवा मनआद्येकादशेन्द्रियाभिमानिदेवास्तेषां सङ्घान् । मनो मनआख्येन्द्रियम् । 'दैवान् देहान् मनः खानि' इति पूर्वेषां वचनात् । एकादशेन्द्रियाभिमानिदेवदेहांश्च ससर्ज । जडाद्वैकारिकाहङ्कारात् देवसृष्टिर्नाम देवदेहसृष्टिरेवेति भावः। दशेन्द्रियाणि तैजसान्येव न तु भौतिकानि तैजसाहङ्काराद्विकृतानीत्यर्थः। खादीनाकाशादिपञ्चमहाभूतानि विषयैः सार्धं तामसाख्याहङ्कारात् ससर्ज । सहैव सृष्टिर्नेति सूचनाय क्रमेणेत्युक्तम्। शब्दात् स्पर्शः, स्पर्शाद्रूपं, रूपाद्रसः, रसाद्गन्ध इति भूतसूक्ष्मरूपपञ्चतन्मात्राः प्राक् सृष्टा पुनः 'आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी' इति पञ्चमहाभूतानि ससर्जेति भावः। 'मात्रा भूतानि पञ्च च' इति तत्त्वसङ्ख्याने आचार्यैरेवोक्तत्वात् मात्रासृष्टिः पूर्वमिति ज्ञेयम् । पुंसो विरिञ्चात् पुरुषनामकविरिञ्चात् प्रकृत्यां प्रकृतिनामकाव्यक्तावान्तराभिमानिन्यां सरस्वत्यां शिवो जात इत्यर्थः ।। १८ ।।

**सङ्क**— वैकारिकस्तैजसस्तामस इति त्रिरूपः शिवः तत्र वैकारिकस्वरूपात् मनआख्यमिन्द्रियं वैकारिकाख्ये-न्द्रियाभिमानिदेवसङ्घांश्च बुद्धिनाम्न्यां उमायां ससर्ज । यानि दशेन्द्रियाणि तैजसान्येव तैजसाख्यरूपात् जातानीत्यर्थः। तामसस्वरूपात् खादीन् आकाशादीन् शब्दादिविषयैः सह शिवः ससर्जेत्यर्थः ।। १८ ।।

**वरद**— एवं स्थूलात्मना सृष्टाद्रुद्रात् इन्द्रादीनामपि स्थूलत्मना सृष्टिमाह— **बुद्ध्यामिति** ।। बुद्ध्यां बुद्ध्यभिमानिन्यामुमायां स शिवः योऽहङ्काराभिमानित्वेन सृष्टः स इत्यर्थः । त्रिरूपाः वैकारिकतैजसतामसरूपवान् यथाक्रमेण रूपत्रयेण ससर्जेति सम्बन्धः। केन रूपेण किं ससर्जेत्यतो वैकारिकादिक्रमेणाह— **मनश्चेति** ।। मनस्तत्त्वं तदभिमानिदैवं च वैकारिकदेवसङ्घानीन्द्रियाणि विषयेषु प्रेरयित्वा देहिषु विकारजनकत्वेन तच्छब्दवाच्यान् इन्द्रियाभिमानिनो देवांश्च वैकारिकाहङ्कारात् रुद्ररूपात् ससर्जेत्यर्थः। तैजसाहङ्कारकार्यमाह— **दशेति** ।। तैजसानि तैजसाहङ्कारकार्याणि ज्ञानेन्द्रियकर्मेन्द्रियभेदेन विद्यमानानि घ्राणादीनि वागादीनि च तैजसाहङ्काररूपादुत्पादित-वानित्यर्थः। तामसाहङ्कारकार्यमाह— **क्रमेणेति** ।। विषयैस्तन्मात्राभिः सार्धं खादीन् आकाशादीनि भूतानि तामसाहङ्काररूपात् तृतीयादुत्पादितवानित्यर्थः। अत्र क्रमणेत्यनेनादौ शब्दतन्मात्राततः आकाशस्योत्पत्तिः ततः शब्दतन्मात्रासहितेनाकाशेन स्पर्शतन्मात्रोत्पत्तिः। ततः तैस्त्रिभिर्वायुभूतोत्पत्तिः ततश्चतुर्भिः रूपतन्मात्रोत्पत्तिः ततः पञ्चभिः तेजस उत्पत्तिः इत्येवं क्रमेण तन्मात्राभूतोत्पत्तिर्भवतीति सूचयति ।। १८ ।।

**जना**— स शिवस्त्रीरूपः। त्रीणि रूपाणि विशेषप्रमाणोक्तानि ज्ञेयानि । तथाहि प्राथम्ये –

[१]"ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः।
अर्थाभिमन्त्री प्रकृतिर्गायत्री सा प्रकीर्तिता ।।
तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता ।
वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ।।
त्रिगुणात्मा समुद्दिष्टः प्रायः सत्त्वात्मकस्तथा ।
गायत्री चैव सावित्री तथैव च सरस्वती ।।
एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदतः।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ।।
स सूत्रात्मा समुद्दिष्टः वायुर्लोकप्रणायकः।
तस्यापि सूत्रं भगवान् धारणात् विष्णुरव्ययः।।
सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः।
सूत्रात्मना महांश्चापि सहजातश्चतुर्मुखः।।
तस्यापि पुत्रोऽहङ्कारः स चानन्त उदाहृतः।
अनन्तादपि रुद्रोऽभूद्ब्रह्मणश्चेति स त्रिधा ।।
वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः।
तामसोऽनन्तजश्चैव स एको गुणभेदतः।।' इति ।

बुद्ध्यभिमानिन्यामुमायां मनः वैकारिकदेवसङ्घान् वैकारिकाहङ्कारजातात् तैजसानि तैजसाहङ्काकारजातानि इन्द्रियाणि तामसाहङ्कारजान् विषयैः शब्दादिभिः सार्धं सह खादीन् आकाशवाय्वादीन् । क्रमेण तामसाहङ्कारात् शब्दं, शब्दादाकाशं, आकाशात् स्पर्शं, स्पर्शात् वायुं, वायोः रूपं, रूपात् तेजः, तेजसः रसं, रसात् जलं, जलात् गन्धं, गन्धात् पृथिवीं इति क्रमेण ससर्ज । तदुक्तं तृतीये–

[२]"तामसाच्च विकुर्वाणात् भगवद्वीर्यचोदितात् ।
शब्दमात्रमभूत् तस्मान्नभः श्रोत्रं तु शब्दगम् ।।' इति ।

तथा—

[३]नभसः शब्दतन्मात्रात् कालगत्या विकुर्वतः।
स्पर्शोऽभवत्ततो वायुस्त्वक् च स्पर्शस्य सङ्ग्रहः।।

तथा—

[४]"वायोश्च स्पर्शतन्मात्रात् रूपं दैवेरितादभूत् ।' इत्यादि ।। १८ ।।

**ताम्र**— 'स शिवस्त्रिरूप' इत्यनेन वैकारिकस्तैजसस्तामसश्चेति भेदेन ब्रह्मवायुशेषेभ्यः त्रिरूपरुद्रोत्पत्तिं सूचयति। तदुक्तमेकादशचतुर्विंशतितात्पर्ये—

---

१. भा.ता.११-२४-७ । २. भा. ३-२७-३४ । ३. भा. ३-२७-३७ । ४. भा. ३-२७-४० ।

'वायुश्च ब्रह्मणः पुत्रः प्रकृतौ समजायत ।
त्रिगुणात्मा स उद्दिष्टः प्राय: सत्त्वात्मकस्तथा ।।
गायत्री चैव सावित्री तथैव च सरस्वती ।
एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदत: ।।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ।
स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायक: ।।
तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्यय: ।
सूत्रपुत्रस्त्वहङ्कार: स रुद्र: समुदाहृत: ।।
सूत्रात्मना महांश्चापि सह जातश्चतुर्मुख: ।
तस्यापि पुत्रोऽहङ्कार: स चानन्त उदाहृत: ।।
अनन्तादपि रुद्रोऽभूत् ब्रह्मणश्चेति स त्रिधा ।
वैकारिको ब्रह्मजस्तु तैजसो वायुज: स्मृत: ।।
तामसोऽनन्तजश्चैव स एको गुणभेदत: ।।' इति ।

ननु—

[१]"इन्द्रियाणि मनो बुद्धिस्सह वैकारिकैर्नृप ।
प्रविशन्तीत्यहङ्कारं स्वगुणैरहमात्मनि ।।'

इत्येकादशस्कन्धे तृतीयाध्याये त्रिविधाहङ्कारस्य बुद्धौ लय उच्यते । 'आत्मनि बुद्धौ' इति भगवत्पादैर्व्याख्यातत्वात् । लयस्थानस्योत्पत्तिस्थानत्वात् कथमहङ्कारस्य साक्षात्परम्परया वा ब्रह्मजातत्वमिति चेत् । 'कालात्मनाहृतगुणं नभ आत्मनि लीयत' इति तत्पूर्ववाक्यस्थात्मनीत्यस्य तत्तात्पर्यं व्याख्यानमित्यङ्गीकारेऽविरोधात् । मन इति मनोऽभिमानिनमिन्द्रं स्कन्दं च ।

[२]"ब्रह्मणो बुद्धिनाम्नोमा तस्यामिन्द्रो मनोऽभिध: ।
स्कन्दश्च........................।।'

इत्यनुव्याख्यानवचनात् । वैकारिकदेवसङ्घान् दश

[३]"वैकारिकान् मनो जज्ञे देवा वैकारिका दश ।
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रका: ।।'

इति द्वितीयस्कन्धवचनात् विषयै: तन्मात्रादिभि: सहितान् खादीन् आकाशादीन् क्रमेण ससर्ज ।

[४]"तामसो भूतसूक्ष्मादिर्यत: खं लिङ्गमात्मन: ।
कालमायांशयोगेन भगवद्वीक्षितं नभ: ।।
तामसानुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ।
अनिलोऽपि विकुर्वाणो नभसोरुबलान्वित: ।।'

१. भा. ११-३-१५ । २. अनु.२-३-अंशाधिकरण । ३. भा. २-५-३० । ४. भा. ३-६-१०,१२ ।

इत्यादितृतीयस्कन्धोक्तक्रमो ज्ञेयः। वैकारिकान् मनआदि तैजसादिन्द्रियाणि तामसात् खादीनि' इति क्रमेणापि ससर्जेत्यर्थः। ननु 'विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम्' इति वचनविरोधः इति चेत् । विज्ञानमनस्तत्त्वयोर्मनोभूतोपचायकत्वविवक्षया तद्वाक्यस्य प्रवृत्तत्वेनाविरोधात् । एवं [1]"प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे' इति श्रुतिरपि प्राणानां भूतोपचायकत्वविवक्षया प्रवृत्ता । तदुक्तं तत्त्वप्रकाशिकायाम्– 'अत्राहङ्कारकारणत्वस्याप्यनिषेधादविरोधः। अहङ्कारोत्पन्नभूतानां सूक्ष्मप्राणैरस्त्युपचयः इति तत्राप्यविरोधः' इति ।। १८ ।।[2]

**पुंसः प्रकृत्यां च पुनर्विरिञ्चा-**
**च्छिवोऽथ तस्मादखिलाः सुरेशाः ।**
**जाताः सशक्राः पुनरेव सूत्रा-**
**च्छ्रद्धा सुतानाप सुरप्रवीरान् ।**
**शेषं शिवं चेन्द्रमथेन्द्रतश्च**
**सर्वे सुरा यज्ञगणाश्च जाताः ।। १९ ।।**

**व्यास**— शिवो जात इति शेषः । यज्ञगणाः केचनदेवाः ।। १९ ।।

**वादि**— सूत्रात् सूत्रनामकवायोः श्रद्धा श्रद्धानाम्नी भारती । यज्ञगणा अश्वमेधज्योतिष्टोमाग्निष्टोमादियज्ञाभिमानिदेवगणाः ।। १९ ।।

**सङ्क**— एवं विरिञ्चिशिवादीनां देवानां स्थूलरूपेणोत्पत्तिप्रकारो दर्शितः। अथेदानीं शिवादीनां पुनरुत्पत्तिप्रकारमाह— **पुंस इति** ।। अथ शेषादीनां पुनरुत्पत्तिप्रकारमाह— **पुनरेवेत्यादिना** ।। यज्ञगणा यज्ञाभिमानिदेवगणा इत्यर्थः ।। १९ ।।

---

१. सू.भा. २-४-१, उदाहृतकाषायणश्रुतिः । २. यद्यप्युक्तप्रमाणबलात् महत्तत्त्वं हिरण्यगर्भाख्यपुरुषादप्युत्पन्नं तथाऽपि स शिवस्त्रिरूप इत्युक्त्या वैकारिकस्तैजसस्तामसश्चेति भेदेन ब्रह्मवायुशेषेभ्यः त्रिरूपशेषोत्पत्तिं द्योतयति। तदुक्तमेकादशचतुर्विंशतात्पर्ये। 'वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः। तामसोऽनन्तजश्चैव स एको गुणभेदतः' इति। मनः मनोऽभिमानिनमिन्द्रं स्कन्दं च। 'ब्रह्मणो बुद्धिनाम्नोमा तस्यामिन्द्रो मनोऽभिधः। स्कन्दश्च' इत्यनुव्याख्यानवचनात्। वैकारिकदेवसङ्घान् दश 'वैकारिकान् मनो जज्ञे देवा वैकारिका दश। दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः'(२/५/३०) इति द्वितीयस्कन्धवचनात्। विषयैः तन्मात्रादिभिः सहितान् खादीन् आकाशादीन् क्रमेण ससर्ज। 'तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः। कालमायांशयोगेन भगवद्वीक्षितं नभः। तमसानुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम्। अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः।' इत्यादितृतीयस्कन्धोक्तक्रमो ज्ञेयः। वैकारिकात् मनआदिः तैजसादिन्द्रियाणि तामसात् खादीनि' इति क्रमेणापि ससर्जेत्यर्थः। ननु 'ज्ञानतत्त्वात्तु मनो । मनस्तत्त्वाच्च खादिकम्' इत्यत्र विज्ञानतत्त्वात् मनसः मनसा च भूतसृष्ट्युक्तेर्विरोधः इति चेत् । विज्ञानमनस्तत्त्वयोर्मनोभूतोपचायकत्वविवक्षया तद्वाक्यस्य प्रवृत्तत्वेनाविरोधात् । एवं 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे' इति श्रुतिरपि प्राणानां भूतोपचायकत्वविवक्षया प्रवृत्ता । तदुक्तं तत्त्वप्रकाशिकायाम् । 'अत्राहङ्कारकारणत्वस्याप्यनिषेधादविरोधः। अहङ्कारोत्पन्नभूतानां सूक्ष्मप्राणैरप्युपचयः इति तत्राप्यविरोधः' इति ।। १८ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

**वरद**— तत्र रुद्रस्य वैकारिकादिभेदेन त्रिरूपत्वं सम्पादयितुं पुनः पुरुषनामकाद्विरिञ्चादुत्पत्तिमाह— **पुंस इति** ।। अत्र चशब्देन कश्चन विशेषः प्रमाणान्तरसिद्धः सूच्यते । तथाहि सत्त्वादिभेदेन त्रिविधायां प्रकृत्याभिमानित्वेन प्रकृतिशब्दवाच्यायां सरस्वत्यां पुरुषेण विरिञ्चेन महत्तत्त्वाभिमानिना वीर्यमुत्सृष्टम् । तत एकीभूतात् तस्माद्वीर्यात्सूत्रनामकस्य वायोः स्वस्य च सहैवोत्पत्तिः। तत उत्पन्नाद्वायोः उत्पन्नो रुद्रः तैजस उच्यते तस्माद्वीर्यादुत्पन्नात् चतुर्मुखादुत्पन्नो रुद्रो वैकारिक उच्यते । तस्मादेव चोत्पन्नात् शेषादुत्पन्नो रुद्रः तामस उच्यते । एवं रुद्रस्य त्रिरूपत्वं सम्पन्नम् । तदुक्तम् –

'वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ।
त्रिगुणात्मा समुद्दिष्टः प्रायःसत्त्वात्मकस्तथा ।।
गायत्री चैव सावित्री तथैव च सरस्वती ।
एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदतः ।।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ।
स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः ।।
तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्ययः।
सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः ।।
सूत्रात्मना महांश्चापि सह जातश्चतुर्मुखः।
तस्यापि पुत्रोऽहङ्कारः स चानन्त उदाहृतः ।।
अनन्तादपि रुद्रोऽभूत् ब्रह्मणश्चेति स त्रिधा ।
वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः ।।
तामसोऽनन्तजश्चैव स एको गुणभेदतः।।' इत्यादि ।

ततश्चात्र एवं योजना । पुंसः पुरुषात् प्रकृत्यां गायत्र्यादिभेदेन त्रिविधायां सरस्वत्यामभिव्यक्तात् स्वस्मात् शिव उत्पन्न इति वैकारिकाहङ्काररूपकथनम् । तथा विरिञ्चोत्पन्नाद्वायोः शिवो जात इति तैजसाहङ्कारकथनं तथा विरिञ्चोत्पन्नात् शेषात् शिवो उत्पन्न इति तामसाहङ्कारकथनम् । एवमुत्पन्नाच्छिवात् शक्राद्युत्पत्तिप्रकारमाह— **अथ तस्मादिति** ।। इदानीं रुद्रस्य तृतीयं रूपं वक्तुं पुनः सूत्ररूपाद्वायोः शेषाद्युत्पत्तिप्रकारमाह— **पुनरेवेति** ।। सूत्राद्वायोः श्रद्धानाम्नी भारती सुरप्रवीरान् सुरश्रेष्ठान् पुत्रानापेत्यन्वयः । तानेव सुतान्निर्दिशति— **शेषमिति** ।। अयं शिवस्तैजस इत्युक्तं भवति । अथ वायोरुत्पन्नादिन्द्रात् सृष्टिप्रकारमाह— **अथेन्द्रतश्चेति** ।। यज्ञगणास्तदभिमानिनो देवाश्चेत्यर्थः ।। १९ ।।

**जना**— पुरुषात् पुनः सृष्टिमाह— **पुंस इति** ।। प्रकृत्यां प्रधाननाम्न्यां पुंसः पुरुषनामकात् विरिञ्चाच्छिवो जज्ञे । अथ तस्माच्छिवात् सशक्रा आखिलाः सुरेशाः जाताः। सूत्रात् पुनः सृष्टिमाह— **पुनरिति** ।। **श्रद्धा सूत्रात्** पुनरेव सुरप्रवीरान् सुतानाप । तान् विशेषतो निर्दिशति— **शेषं शिवं चेन्द्रमिति** ।। इन्द्रात्सृष्टिमाह— **अथेति**।। अथ इन्द्रतः सर्वे सुराः यज्ञगणाः यज्ञाभिमानिनो देवाश्च जाता उत्पन्नाः ।। १९ ।।

**ताम्र**— प्रागुक्ताशेषसूक्ष्मसृष्टिं पुनः सिंहावलोकनन्यायेनाह— **पुंस इति** ।। नन्वयं सूक्ष्मसृष्टिरिति कथं ज्ञायते चेत् सूक्ष्मसृष्टेः पुरुषसूत्रमूलकत्वोक्त्या तदवगमात् । अत्रोच्यमानशिवादीनामभिमन्यमानानुक्तेश्च ।। **यज्ञगणा इति** ।। भाविवक्षया एवम् । 'जीवनामा' 'कालात्मकः' 'चतुर्वर्णगतान्' इत्यादौ पूर्वत्र चोत्तरत्रैतेषामेव तदभिमानित्वात् भाविसञ्ज्ञयैव तथा व्यवहाराः। सूक्ष्मसृष्टिदशायां अभिमन्यमानतत्त्वसृष्ट्यभावादिति ज्ञेयम् ।। १९ ।।

**पुनश्च माया त्रिविधा बभूव**
**सत्त्वादिरूपैरथ वासुदेवात् ।**
**सत्त्वात्मिकायां स बभूव तस्मात्**
**स विष्णुनामैव निरन्तरोऽपि ।**
**[१]रजस्तनौ चैव विरिञ्च आसीत्**
**तमस्तनौ शर्व इति त्रयोऽस्मात् ।। २० ।।**

**व्यास**— स विष्णुनामा भगवान् । तस्माद्वासुदेवात् । सत्त्वात्मिकायां सत्वांशभूतायां बभूव । जन्यजनकभावेन न भेदः। निरन्तरोऽपि स तस्मात् बभूव ।। २० ।।

**वादि**— 'सत्त्वात्मिकायां स बभूव' इत्यत्र सत्त्वात्मिकायां सत्त्वाभिमानिन्यां श्रीनाम्न्यां स वासुदेव एव रूपान्तरेण बभूव । किं तन्नाम इत्यत उक्तम्— **विष्णुनामेति** ।। ननु वासुदेवाद्विष्णोरुत्पत्तावन्योन्यं भेदः स्यादित्यत उक्तम— **निरन्तरोऽपीति** ।। निर्भेद एवापीत्यर्थः । रजस्तनौ भूदेव्यां स एव विरिञ्चो विरिञ्चनामासीत् यो विरिञ्चान्तर्यामी । तमस्तनौ दुर्गायां स एव शर्वः शर्वनामाऽऽसीत् यः शर्वान्तर्यामी इति त्रयो भगवदवताराः पृथक् स्थित्वा पालनार्थं 'सृजामि तन्नियुक्तोऽहं' इति वचनात् शर्वे स्थित्वा संहारार्थं चास्माद्वासुदेवादेव बभूवुः। अत एव 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' इति वदन्ति । 'शेषः सुपर्णश्च तयोः सहैव' इत्यत्रोक्तः शेषः 'तौ वाहनं शयनं चैव विष्णोः' इत्युक्तेः शयनार्थं सृष्टः। 'शेषं शिवं च' इत्यत्रोक्तशेषस्त्वहङ्कारावान्तराभिमानितया सृष्टः। इदं चोपलक्षणम् । अहङ्काराभिमानितया गरुडस्यापि पुनरुत्पत्तिरूह्या । शिवस्य तु रूपत्रयं त्रिविधाहङ्काराभिमानितया सृष्टम् । देवानां द्विवारं सृष्टिश्च स्वस्वतत्त्वाभिमानार्थं ब्रह्माण्डान्तः प्रवेष्टुं च । एवं शेषशर्वसुपर्णानां च ब्रह्माण्डान्तः प्रवेशाय रूपान्तराण्यूह्याणि । किञ्च देवाः स्वस्वभावलाभाय वेदशास्त्रादौ श्रद्धालाभाय च तदुभयवंशेऽपि द्विवारं जाताः। ब्रह्मा तु शान्त्याख्यगुणलाभाय शान्तौ पुनर्जातः। वायोस्तु जयातनूजत्वेनैव सकलकार्येषु जयसिद्धेर्न पुनर्जन्मोक्तम् । वस्तुतस्तु महत्तत्त्वाभिमानितया शान्त्यामपि पुनर्जन्मास्तीति ज्ञेयम् । अतो भगवद्रूपेभ्यः पुनः पुनर्जन्म, लक्ष्मीरूपेभ्यश्च पुनः पुनर्जन्म, पितृतो मातृतश्च शुभगुणलाभाय गुणलुब्धा देवाः प्रार्थयन्ते । अतो न कश्चित्क्षुद्रोपद्रव इति ज्ञेयम् ।। २० ।।

---

१. शान्ति/२०९/६४ 'मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः। ऐशानमास्थितः श्रीमान्हन्ति नित्यं हि पाति च । विष्णुः स्वरूपरूपोऽसौ कारणं स हरिर्मम ।।' इति ब्रह्मवचनम् । इदन्तु हरेःब्रह्मशिवरूपाणि ताभ्यां भिन्ने इत्यत्र प्रमाणम् ।

**सङ्क**— अथ वासुदेवात् पुनः सृष्टिप्रकारमाह— **पुनश्चेति** ।। पुनः सृष्ट्यर्थं तावन्माया त्रिविधा बभूवेत्यर्थः। इति त्रयोऽस्माद्वासुदेवादिति निगमनरूपेण पृथगन्वयः ।। २० ।।

**वरद**— ब्रह्माण्डोत्पत्तेः पूर्वं सृष्टिकथनप्रसङ्गसङ्गत्या प्राप्तं वासुदेवरूपादाविर्भूतं भगवदवतारत्रयं दर्शयति— **पुनश्चेति** ।। माया वासुदेवपत्नी । सत्त्वादिरूपैः सत्त्वादिगुणाभिमानित्वेन त्रिविधा बभूव । अथानन्तरं वासुदेवात् सत्त्वात्मिकायां सत्त्वाभिमानिन्यां श्रीसञ्ज्ञिकायाम् । निरन्तरोऽपि निर्भेदोऽपि । स नारायणो विष्णुनामा बभूवेत्यन्वयः। एवं रजस्तनौ रजोभिमानिन्यां भूसंज्ञिकायां विरिञ्चः विरिञ्चनामकं विरिञ्चान्तर्गतं रूपमासीत् प्रादुर्भूतमित्यर्थः। तथा तमस्तनौ तमोभिमानिन्यां दुर्गासंज्ञकायां शर्वः शर्वनामकं शर्वान्तर्गतं रूपमासीदिति उक्तप्रकारेण त्रयो विष्ण्वाद्या अस्मात् वासुदेवात् जाता इत्यर्थः। तदज्ञानादेव मूर्तित्रयैक्यभ्रान्तिः दुष्टानामिति ज्ञातव्यम् । तथा च सौकरायणश्रुतिः'अथ त्रयी वा व प्रकृतिः सत्त्वं रजस्तम इति । तां नारायणः पर्यपश्यत् अनन्यप्रतिष्ठः भुवः तं चैनमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानार्थं विष्णुः वा व सत्त्वस्य रजसो ब्रह्मेशानौ नाम तमसः आविवेश । ब्रह्मा ब्रह्माणं चतुर्मुखं ईशमीशानं पञ्चमुखं यो वा ईशानमाविवेश तं वा एतं काल इत्याचक्ष काल इत्याचक्षते' इति ।। २० ।।

**जना**— अथ वासुदेवात्पुनः सृष्टिमाह— **पुनश्चेति** ।। पुनरपि सृष्टिं कर्तुं माया सत्त्वादिरुपैः त्रिविधा बभूव । अथ सत्त्वात्मिकायां सत्त्वाभिमानिन्यां श्रीसञ्ज्ञायां वासुदेवात् सः नारायणः बभूव । स किन्नामक इत्यत आह— **स इति** ।। स जातोऽवतारः विष्णुनामैव । जन्यजनकत्वेन प्राप्तं भेदं निवारयति । निरन्तरः भेदरहितोऽपीति वासुदेवाद्रजस्तनौ रजोभिमानिन्यां भूसञ्ज्ञायां विरिञ्चनामा आसीत् । वासुदेवात्तमस्तनौ तमोभिमानिन्यां दुर्गासञ्ज्ञायां शर्वनामा स आसीत् इत्यनेनप्रकारेण अस्माद्वासुदेवात् त्रयः विष्णुविरिञ्चशर्वाः जाता इति पूर्वोक्तस्योपसंहारः ।। २० ।।

**ताम्र**— ।। **पुनश्चेति** ।। पुनश्च सृष्ट्यर्थमिति शेषः। यद्वा 'शान्त्यां त्रिगुणात्मिकायाम्' इति शान्तित्रित्वस्योक्तत्वात् । न केवलं शान्तिस्त्रिविधा माया च त्रिविधा बभूवेति चशब्दः। अप्यर्थे पुनशब्दः। यद्यपि मायात्रैविध्यं तत्रैव वक्तव्यम् । तत्त्वसृष्ट्यनन्तरं गुणत्रयसृष्ट्याभवात् । तथान्यत्र सूक्ष्मविशेषात् साक्षादनन्तरभावित्वात् तथा 'स विष्णुनामा श्रियमाप सृष्टये' इति सत्त्वात्मिकमायापुत्रविष्णोः परामर्शार्थं चेहोक्तमिति ध्येयम् । अत्र प्रकृतिक्षोभानन्तरं तस्याः सत्त्वाद्यात्मना त्रित्वोत्पत्तिरूपलक्षणवैषम्यावस्था भवति । तदा तेषां गुणानां श्रीभूदुर्गानामिका मायाभिमानिनी । यथाऽहुः—

"श्रीर्मूलसत्त्वं विज्ञेया भूमूलं रज उच्यते ।
मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका ।।' इति च ।

तदनन्तरं गुणत्रयस्यावरणत्वापत्तौ शान्तिरभिमानिनीति विवेकः।। **अथेति** ।। अथ त्रित्वानन्तरम् । तस्मात् वासुदेवात् सत्त्वात्मिकायां मायायां स एव वासुदेव एव निरन्तरोऽपि बभूव । ननु सत्त्वात्मिकमायापुत्रो

---

१. भा.ता.३-११-१४ ।

विष्णुरिति ग्रन्थान्तरे श्रूयते । तथा च विरोध इत्यत आह— **स विष्णुनामैवेति** ।। स एव विष्णुनामेत्यर्थः। वासुदेवसंस्थानविशेषविष्णुरिति भावः ।। २० ।।

**एते हि देवाः पुनरण्डसृष्टा-**
**वशक्नुवन्तो हरिमेत्य तुष्टुवुः ।**
**त्वन्नो जगच्चित्रविचित्रसर्ग-**
**निस्सीमशक्तिः कुरु सन्निकेतम् ।। २१ ।।**

**व्यास—** एते अण्डसृष्टौ हरिणा आज्ञप्ताः। पुनरवधारणार्थः। अशक्नुवन्त एवेति ।। २१ ।।

**वादि— कुरु सन्निकेतं** इत्यत्र सन्निकेतं समीचीनं मन्दिरम् ।। २१ ।।

**सङ्क—** एवं ब्रह्माण्डोत्पत्तेः प्राग्विरिञ्चादीनां सूक्ष्मरूपेण स्थूलरूपेण च तत्त्वाभिमानिनामुत्पत्तिप्रकारो दर्शितः। अथेदानीं ब्रह्माण्डसृष्टिप्रकारमाह— **एते हीत्यादिना** ।। जगच्चित्रसर्गः आश्चर्यरूपा सृष्टिः। विचित्रसर्गः नानाप्रकारसृष्टिः। तस्यां निःसीमा अपरिमिता शक्तिरस्येति सत्त्वमित्यर्थः। हेतुगर्भविशेषणमेतत् ।। २१ ।।

**वरद—** एवं ब्रह्माण्डोत्पत्तेः पूर्वं विरिञ्चादीनां पुरुषादित्वेन सूक्ष्मसृष्टिं पुनस्तत्त्वसृष्टिपूर्वकं तत्त्वाभिमानित्वेनानिरुद्धात् स्थूलसृष्टिमुक्त्वा पुनः पुरुषादिरूपेभ्यो विरिञ्चादिभ्यः शेषादीनां स्थूलसृष्टिञ्चोक्त्वा अथेदानीं ब्रह्मोत्पत्त्यनन्तरं तदन्तः ब्रह्मादीनां विष्णोः सकाशात् स्थूलसृष्टिं वक्तुं, ब्रह्माण्डसृष्टिं वदिष्यन्, तत्सृष्टौ ब्रह्मादीनां अशक्तिं तत एतन्निर्माणार्थं तेषामेव श्रीविष्णुप्रार्थनप्रकारं च दर्शयति— **एते हीत्यादिना** ।। एते पूर्वं सृष्टाः देवाः विरिञ्चाद्या अण्डसृष्टौ ब्रह्माण्डनिर्माणे स्वतोऽशक्नुवन्तो हरिमेत्य तुष्टुवुः स्तुतिं चक्रुरित्यर्थः । तामेव स्तुतिं दर्शयति— **त्वन्नो इति** ।। जगतः चित्रः सर्गः आश्चर्यरूपा सृष्टिः विचित्रः सर्गः नानाप्रकारसृष्टिः। तादृशसर्गे निःसीमा अपरिमिता शक्तिर्यस्यासौ तथोक्तः। तादृशः त्वं नोऽस्माकं संनिकेतं मार्गप्रदर्शनं ब्रह्माण्डाख्यं वा गृहं कुर्विति प्रार्थितवन्त इत्यर्थः। नन्वहमपि भवत्स्वेकः इति मत्प्रार्थने किं स्यादिति शङ्कानिरासार्थं जगच्चित्रविचित्रसर्गनिस्सीमशक्तिरिति हेतुगर्भविशेषणम् ।। २१ ।।

**जना—** इदानीं ब्रह्माण्डोत्पत्तिं वक्तुं तत्त्वदेवस्तुतिमाह— **एत इति** ।। एते देवाः तत्त्वाभिमानिनो देवाः अण्डसृष्टौ पुनरपि अशक्नुवन्तः। पुनः शब्दः एवार्थो वा । अशक्नुवन्त एवेति सम्बन्धः। हरिमेत्य प्राप्य तुष्टुवुः । स्तुतिं प्रदर्शयति— **त्वमिति** ।। त्वन्नः अस्माकं सन्निकेतनं समीचीनं गृहं कुरु । कथम्भूतः त्वम् । जगतश्चित्रा आश्चर्यरूपा विचित्रा नानाप्रकारा या सृष्टिः सर्जनं तस्यां निःसीमा अपरिमिता शक्तिरस्येति ।। २१ ।।

**ताम्र—** पुनः पुनः तुष्टुवुः ।। २१ ।।

**इति स्तुतस्तैः पुरुषोत्तमोऽसौ**
**स विष्णुनामा श्रियमाप सृष्टये ।**
**सुषाव सैवाण्डमधोक्षजस्य**
**शुष्मं हिरण्यात्मकमम्बुमध्ये ।। २२ ।।**

**व्यास**— तैः स्तुतः प्रार्थितश्च ।। २२ ।।

**वादि**— शुष्मं वीर्यम् ।। २२ ।।

**सङ्क**— असौ पुरुषोत्तमः तैरिति स्तुतः इति पृथगन्वयः। सत्त्वात्मिकायामाविर्भूतः सः विष्णुनामा श्रियमापेत्यर्थः ।। २२ ।।

**वरद**— एवं स्तुत्या आभिमुख्यस्य विष्णोर्ब्रह्माण्डनिर्माणप्रकारमाह— **इतीति** ।। योऽसौ सोऽयं पुरुषोत्तम इति । अनेकप्रकारेण स्तुतः प्रार्थितश्च विष्णुनामा विष्णुरूपः। सृष्टये सृष्ट्यर्थम् । श्रियमाप प्रापेत्यर्थः ।। २२ ।।

**जना**— तैर्देवैरिति स्तुतः सोऽसौ ।। २२ ।।

**ताम्र**— ।। **इतीति** ।। इत्यसौ पुरुषोत्तमः स्तुत इति सम्बन्धः। विष्णुनामा वासुदेवः श्रियमाप सृष्टये इति द्वितीयसम्बन्धः। सोऽसौ पुरुषोत्तम इति वा । [1]'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु' इत्यत्र [2]'योनिक्लृप्तिर्वासुदेवाद्रूपं सङ्कर्षणाद् भवेत्' इति छान्दोग्यभाष्ये विष्णुशब्दस्य वासुदेवपरत्वस्य व्याख्यातत्वात् । एतेन—

[3]'अगम्यत्वादसन्नामा ब्रह्म नारायणाभिधम् ।
प्रलये वासुदेवाख्यं गम्यं सदभवद्विदाम् ।
तत्प्रकृत्या समभवत्तत अण्डमजायत ।।' इति

छान्दोग्यभाष्ये वासुदेवादण्डसृष्ट्युक्तेरिह विष्णुरूपस्य तत्स्रष्टृत्वोक्तेर्विरोधः इत्यपास्तम् । यद्वा विष्णुरन्य एव वासुदेवात् ।

[4]'सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ।
प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ।
प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधिपूरुषम्।।' इति

तृतीयस्कन्धे भगवदनुप्रविष्टदेवानामेवाण्डस्रष्टृत्वोक्तेः विरोधः इति चेत् तेषामण्डोपादानतत्त्वाभिमानिनां उपादानत्व-शक्तिविरहिणां भगवदनुप्रवेशेन तत्सम्पादनद्वारा उपादानत्वशक्तिप्रेरकत्वरूपोपादानत्वेन तत्सृष्टिकारणत्वस्य तत्र विवक्षितत्वात् । इह तु पितृवन्निमित्तकर्तृत्वप्रतिपादनात् । ननु [5]'ते आण्डकपाले रजतं च सुवर्णं च'

१. ऋ.सं.१०-१८४-१ । २. छा.भा.२-२ । ३. छा.भा.३-५ । ४. भा.३-७-३,४ । ५. छा.उ. ३-५ ।

इत्यादौ रजतसुवर्णोभयात्मकत्वमण्डस्योच्यते अतो विरोधः इति चेत् रजतकपालेऽपि सुवर्णानुप्रवेशद्वारा रजतकपालस्य जलानुप्रविष्टत्वेन सुवर्णकपालस्योपरितनत्वेन प्रतीत्यपेक्षया वा सौवर्णत्वोक्त्युपपत्तेः। ननु अम्बुमध्ये इति कथं पृथिव्या एव ब्रह्माण्डाव्यवहितावरणत्वादिति चेत् । ब्रह्माण्डकटाहसंश्लिष्टतया बहिरावरणोदकस्य भावात् । अत एव '[1]त्रिविक्रमनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेण बाह्यजलधरान्तःप्रविष्टा विष्णुपदी' इत्याहुः ।। २२ ।।[2]

**राम—** 'शुभ्रं हिरण्यात्मकमम्बुमध्ये' इत्यत्र ब्रह्माण्डसृष्ट्यर्थं पृथिव्यावरणान्तःप्रदेशे भगवत्सृष्टोदकमध्ये इत्यर्थः। 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । शयानस्तासु भगवान् निर्ममेऽण्डं महत्तरं' इति । 'संसृष्टमण्डं तद्वं च समस्तं सम्प्रकीर्तितम्' इति । तद्वं तेन ब्रह्माण्डेन सह विद्यमानं सृष्टमिति चार्थसम्भवात् तथा च अण्डकटाह पृथिव्यावरणयोर्मध्ये किञ्चित्परिमितसंसृष्टोदकमस्ति तदेवोदकं त्रिविक्रमपादनखनिर्भिन्न–विवरेणान्तःप्रविशतीति ।। २२ ।।

**तस्मिन्प्रविष्टा हरिणैव सार्धं**
**सर्वे सुरास्तस्य बभूव नाभेः ।**
**लोकात्मकं पद्ममुष्य मध्ये**
**पुनर्विरिञ्चोऽजनि सद्गुणात्मा ।। २३ ।।**

**वादि—** देवानां प्राक् सृष्टसूक्ष्मतमदेहयोरपि पुनःपुनर्जन्मना कांस्यकारैः क्रियमाणमृत्तिकालेपवत् पौनःपुन्येन तस्यैव देहस्य क्रमिकदेहान्तरप्राप्तौ क्रमेणोपचयो भवति । इदमेव जन्म न तु मध्ये मध्ये पूर्वदेह–विनाशोऽप्याशङ्कनीयः । अत एव सूक्ष्मसृष्टिः स्थूलसृष्टिश्चेति पुराणेषूपरि पठन्तीत्यभिप्रेत्योक्तं 'तस्मात्पुनः

---

१. भा. ५-१७-१ । २. ।। इतीति।। इत्यसौ पुरुषोत्तमः स्तुत इति सम्बन्धः। विष्णुनामा वासुदेवः श्रियमाप सृष्टये इति द्वितीयसम्बन्धः। 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु' इत्यत्र छान्दोग्यभाष्ये विष्णुशब्दस्य वासुदेवपरत्वस्य व्याख्याततत्वात् । एतेन 'अगम्यत्वादसन्नामा ब्रह्म नारायणाभिधम् । प्रलये वासुदेवाख्यं गम्यं समभवद्विदाम् । तत्प्रकृत्या समभवत्तत अण्डमजायत ।।' इति छान्दोग्यभाष्ये वासुदेवादण्डसृष्ट्युक्तेरिह विष्णुरूपस्य तत्स्रष्टृत्वोक्तेर्विरोधः इत्यपास्तम् । यद्वा उपचयोत्पत्त्यपेक्षया विष्णुवासुदेवाभ्या–मप्यण्डजनिवचनं द्रष्टव्यम् । यद्वा वासुदेवस्य स्रष्टृत्वविवक्षयेति ज्ञेयम् । ननु 'प्रसुप्तलोकतन्त्राणां निशम्य गिरमीश्वरः। त्रयोविंशतितत्त्वानां गणं युगपदाविशत् । सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् । प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः। प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधिपूरुषम् ।।' इति तृतीयस्कन्धे भगवतानुप्रविष्टानां एवाण्डसृष्टत्वोक्तेः विरोधः इति चेन्न । विष्णुः श्रियमाप्य तत्त्वांशानेव वीर्यत्वेन निहितवान् तदभिमानिदेवाः श्रीदेवीगर्भं प्रविश्य स्वानुविष्टभगवत्प्रेरिताः। वीर्यभूतमन्द्रं अण्डाकारेण चक्रुस्तमण्डं सा सुषुवेति विवक्षितत्वेनाविरोधादिति । ननु अण्डस्य कथं हिरण्यात्मकत्वं 'उभे आण्डकपाले रजतं च सुवर्णं च' इत्यादौ द्व्यात्मकत्वोक्तेरिति चेत् । रजतकपालस्यापि सुवर्णप्रचुरत्वविवक्षया इह विशिष्टस्यापि हिरण्मयत्वोक्तेः। अत एव 'हिरण्यं कोशं रजसा परीवृतं ' 'तदण्डमभवद् हैमं सहस्रांशुसमप्रभम् ' इत्यादि बहुवाक्येषु सौवर्णत्वोक्तेरिति ज्ञेयम् । ननु अम्बुमध्ये इति कथं पृथिव्या इव ब्रह्माण्डावान्तरावरणत्वादिति चेत् । ब्रह्माण्ड–कटाहसंश्लिष्टतया बहिरावरणस्य भावात् । अत एव त्रिविक्रमनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा बाह्यजलधारा विष्णुपदीत्याहुः ।। २३ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

सर्वसुराः प्रसूताः' इति । यद्यपि ब्रह्मणो दिने दिने पुरुषसूक्तोक्तरीत्या पुरुषकृता सृष्टिरस्त्येव । तथाऽपि न सा तारतम्योपयोगिनी । 'मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत' इत्यादिरूपेण प्राणादप्यवरयोरिन्द्राग्न्योः प्रथमं सृष्ट्युक्तेः। पञ्चाशद्वर्षेभ्य उपरि या पद्मजातपाद्माख्यब्रह्मणा सृष्टिः क्रियत अस्यास्तारतम्योपयोगित्वात् तारतम्यप्रतिष्ठापनाचार्यो ग्रन्थकारः पद्मसृष्टिमेव स्वग्रन्थे निबबन्ध । एवं च पञ्चाशद्वर्षपर्यन्तं सृष्टिरेव नास्तीति न । पुरुषसूक्तविरोधात् द्वितीयस्कन्धविरोधाच्च । पद्मस्य तु भगवतो नाभेर्ब्रह्मणः प्रथमदिनेऽप्युत्पत्तिरस्ति । अन्यथा—

[1]"यदास्य नाभ्यान्नलिनादहमासं महात्मनः।
नाविन्दं यज्ञसम्भारान् पुरुषावयवान् ऋते ।।'

इति द्वितीयस्कन्धोक्तवाक्यविरोधात् । सृष्टौ तु न तदा तस्याधिकारः। 'नाविन्दं यज्ञसम्भारान्' इति तेनैवोक्तेः। किन्तु—

[2]"यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ।
ऊर्वादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः।।'

इति वचनात् भगवानेव सर्वं स्वावयवैर्लीलामात्रेण करोति । ब्रह्मा तु—

[3]"इति सम्भृतसम्भारः पुरुषावयवैरहम् ।
तमेव यज्ञपुरुषं तेनैवायजमीश्वरम् ।।'

इति वचनात् तदवयवनिर्मितयज्ञसम्भारैस्तत्पूजामेव करोतीति विवेको ज्ञेयः।। २३ ।।

**सङ्क**— शुष्मं वीर्यं अण्डं सुषावेत्यन्वयः। तस्मिन् ब्रह्माण्डे हरिणा सहैव सर्वे सुराः प्रविष्टा इति निष्ठान्तत्वेन पृथगन्वयः। पुनर्विरिञ्चादीनां ब्रह्माण्डान्तः सृष्टिप्रकारमाह— **तस्येति** ।। तस्य विष्णोः नाभेरित्यर्थः ।। २३ ।।

**वरद**— सा श्रीरेवाधोक्षजस्य सकाशात् हिरण्यात्मकं शुष्मं वीर्यं अण्डं यथा भवति तथा अम्बुमध्ये सुषावेत्यर्थः। तस्मिन् ब्रह्माण्डे हरिणा सार्धं सर्वे विरिञ्चाद्याः सुराः प्रविष्टा इत्यन्वयः । तत्र ब्रह्माण्डे विष्णोर्नाभेः सकाशात् लोकात्मकं लोकाधारभूतं पद्ममभूदित्यर्थः। अमुष्य पद्मस्य मध्ये सद्गुणात्मा विरिञ्चः पुनरजनि जात इत्यर्थः ।। २३ ।।

**जना**— शुष्मं वीर्यं हिरण्यात्मकमण्डं अम्बुमध्ये सुषाव । तस्मिन् ब्रह्माण्डे हरिणा सार्धं सहैव सर्वे सुराः प्रविष्टाः। अण्डान्तः सृष्टिमाह— **तस्येति** ।। तस्य हरेर्नाभेर्लोकात्मकं लोकाधारं पद्मं बभूव । अमुष्य पद्मस्य मध्ये पुनः सद्गुणानामात्मा स्वमी विरिञ्चोऽजनि ।। २३ ।।

**ताम्र**— ।। **तस्मिन् प्रविष्टा इति** ।। कपालद्वयमध्यगतसूक्ष्मविवरेण प्रविष्टा इति भावः। लोकात्मकं लोकोपादानभूतम् । अत्र केचित्—

[4]"पूर्वः परार्धोऽतिक्रान्तो द्वितीयोऽद्य प्रवर्तते ।
पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ।।

---

१. भा.ता. २-६-२२ । २. भा. २-५-३ । ३. भा. २-६- २७ । ४. भा. ३-१२- ३३-३५ ।

कल्पो यत्राभवद् ब्रह्मा शब्दब्रह्मेति यं विदुः।
तस्यैवान्ते ब्रह्मणोऽद्य यं पाद्ममभिचक्षते ।।
यद्धरेर्नामभिसरस आसील्लोकसरोरुहम् ।।'

इति तृतीयस्कन्धवचनात् पाद्मब्रह्मसृष्टिर्द्वितीयपरार्धे एव इत्याहुः। वस्तुतस्तु 'इत्यादिकल्पोत्थित एष सर्ग' इति वक्ष्यमाणत्वात् प्रथमपरार्धदिवस एव भागवतवचनम् पद्मस्य पुनरुपचयपरमिति भावः ।। २३ ।।

**राम**— 'तस्मिन्.....सद्गुणात्मा' इत्यत्र सर्वे सुराः असंसृष्टतत्त्वाभिनिनः एकैकांशेन हरिणा पुरुषरूपिणा सहैव तस्मिन् ब्रह्माण्डे प्रविविशुः । तदुक्तं दशमतात्पर्ये—

[1]"महद्रूपादिना ब्रह्मा देवाश्चैव प्रजज्ञिरे ।
अण्डे त्वेषामभिव्यक्तिर्जनिरित्यभिधीयत ।।'

इत्यादिना अण्डं प्रविष्टः पुरुषः सहस्रवत्सरं गर्भोदके शेषशायी बभूव तस्य शेषशायिनो नाभितः लोकात्मकं लोकोपचायकं पद्ममभूत् अमुष्य पद्मस्य मध्ये विरिञ्चः पुनरजनि । अण्डप्रविष्टविराण्णामकब्रह्मण एव रूपान्तरेण पद्मादुत्पत्तिरिति वक्तुं **पुनरिति** । तदेतदुक्तम् –

[2]"पुरुषोऽण्डं विनिर्भिद्य यदासौ सविनिर्गतः।
आत्मनोऽयनमन्विच्छन् अपोऽस्राक्षीत् शुचिः शुचीः।।
तास्तदा.......................... ।। इति द्वितीयस्कन्धे ।

तात्पर्ये च—

[3]"तस्मात् हरेरण्डमभूत् अण्डादपि चतुर्मुखः।
स विराण्णामकस्तस्मात् अधिको हरिरेव तु ।।' इति ।
'अण्डाज्जातस्य तस्यान्यद्रूपं पद्माद्धरेरभूत् ।
तथोभयात्मको जज्ञे ब्रह्मा लोकपितामहः।।' इति ।

अत्रायं विवेकः । शतसंवत्सरात्मकप्रलयकाले सार्धद्वादशवत्सरे उर्वरिते एव निद्रामुद्राविलसितस्य हरेः सिसृक्षेच्छा जायते ततो वासुदेवादिव्यूहाभिव्यक्तिः । ततो दिव्यवर्षसहस्रानन्तरं वासुदेवान्मायायां महत्तत्वस्य तदभिमानिनो विरिञ्चस्य च सूक्ष्मत्वेन सृष्टिः। ततो दशवर्षानन्तरं सङ्कर्षणात् वायोर्जनिः सरस्वतीभारत्योः वत्सरानन्तरं जनिः । ततो दिव्यसहस्रवर्षानन्तरं शेषरुद्रयोर्जनिः । एवं प्रकारेण तत्र देवानां अवशिष्टकालपर्यन्तं क्रमेण सूक्ष्मस्थूलभेदेन जनिः। तत्र दिव्यसहस्रवत्सरे उर्वरिते ब्रह्माण्डसृष्टिः तदण्डं सहस्रवत्सरपर्यन्तं उदके मग्नं सत् तत उदकोपरिस्थितं भवति । सिसृक्षाकालमारभ्य अण्डोद्बोधपर्यन्तं लयकालेऽवशिष्टसार्धद्वादशवत्सरं च पूर्णं भवति । अण्डोद्बोधमारभ्य अण्डलयपर्यन्तं विराण्णामकाण्डाभिमानिब्रह्मणः शतसंवत्सरात्मकमायुर्भवति इति स एव आद्यब्रह्मेत्युच्यते । यदा अण्डं उद्बुद्धं तदैवाण्डस्रष्टा विष्णुः पुरुषरूपेण ब्रह्मादितत्वाभिमानिभिः सह तत्त्वभागैश्च सहैवाण्डं प्रविशति । तदा हरिश्च ब्रह्मा च यावदण्डव्यापिनौ भवतः । उभावपि विराडित्युच्येते । तत्र विराण्णामको हरिः निमित्तकारणैः निजावयवैः संसृष्टतत्त्वान्युपादानीकृत्य चतुर्दशभुवनान्यसृजत् । स

---

१. भा.ता. १०-४-१६ । २. भा. २-१०-१० । ३. भा.ता.२-६-२१ ।

पद्मजो ब्रह्मा पद्मदलैर्लोकानां उपचयं चक्रे । 'ततो विरिञ्चो भुवनानि सप्त ससप्तकान्यशु चकार सोऽब्जात्' इत्युक्तेरप्ययमेवार्थः। यथा पूर्वं सृष्टानामेव समुद्राणां प्रियव्रतरथचरणपरिघातेन सप्तसिन्धवः आसन्नित्युक्तिः तथेयमपीति भावः । तदुक्तम्—

[१]"पूर्वसृष्टान् रथावृत्त्या स्थूलांश्चक्रे प्रियव्रतः ।
समुद्रांस्तेन तत्कर्तेत्याहुरेनं विपश्चितः।।' इति पञ्चमतात्पर्ये ।

प्रथमपरार्धप्रथमदिवस एव तत्पद्मोत्पत्तिः। एतत्पद्मोत्पन्न ब्रह्मणः प्रथमपरार्धपर्यन्तमेव अस्य ब्रह्मणो लोकानां तत्रत्यजनानां च प्रथपरार्धान्तिमदैनन्दिनप्रलये सङ्कर्षणमुखाग्निना नृसिंहरूपेण च नाशः । तदा भगवदवतारस्यानेकीभावः। 'कदाचिदीशस्सकलावतारान् एकं विधायाहिपतौ च शेते' इत्युक्तेरप्ययमेवार्थः। तदा भगवान् तत्प्रलयपर्यन्तं शेषशायी भवति । तदा चेतनानां भगवदुदरप्रवेशः । तत्प्रलयावसाने द्वितीयपरार्ध–प्रथमदिवसारम्भे शेषशायिभगवन्नाभितः पद्मोत्पत्तिः । तस्माच्चतुर्मुखब्रह्मणो जनिः । ततो द्वितीयपरार्धावसानपर्यन्तं यावज्जगद्व्यापार इति । न च वाच्यं द्वितीयपरार्ध एव पद्मोत्पत्तिः न प्रथमपरार्धेऽपीति । तत्रापि पद्मोत्पत्तिरस्तीति वक्तव्यम् । अन्यथा उदाहृतद्वितीयमूलतात्पर्यविरोधः स्यात् । एतदभिप्रायेणैव आचार्यैरण्डसृष्ट्यनन्तरमेव पद्मोत्पत्तिप्रकारं निरूपितमिति ध्येयम् । प्रथमपरार्धे लोकोत्पत्तिर्नास्तीति केचित् । तथा सति द्वितीयस्कन्धपञ्चमाध्याये तदवयवाल्लोकसृष्टिरित्युक्तिविरोधः स्यात् । किञ्च परार्धप्रलये 'उदप्लुतं विश्वमिदं तदासीत्' इति विश्वविलयोक्तेः

'......................निशा च तन्मानमितं शरच्छतम् ।
त्वदाज्ञया स्वाननुभूयभोगान् उपैति सोऽपि त्वरितस्त्वदन्तिकम् ।।'

इत्युक्त्या ब्रह्मणो वर्षशतं सत्यलोकभोगकथनविरोधश्च स्यात् । किञ्च तृतीयस्कन्धे द्वादशाध्याये—

[२]"पूर्वः परार्धः प्रक्रान्तो ह्यपरोऽद्य प्रवर्तते ।
पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ।।
कल्पो यत्राभवत् ब्रह्मा शब्दब्रह्मेति यं विदुः।
तस्यैव चान्ते कल्पोऽभूत् यं पाद्ममभिवीक्षते ।।
यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ।
अयं तु प्रथमः कल्पो द्वितीयस्यापि भारत ।।
वाराह इति विख्यातो यत्रासीत् सूकरो हरिः।।' इत्युक्तेः।
[३]"यत्र ब्रह्मान्तरोत्पत्तिः ब्रह्मकल्प उदाहृतः' । इति द्वितीयतात्पर्योक्तेः ।

अपि च—

[४]"मनोर्वैवस्वतस्यादौ अथर्वा ब्रह्मणोऽजनि ।
ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः।
सनकाद्यास्तु वाराहे ....................।।' इत्याथर्वणभाष्योक्तेः ।

'एवं कल्पास्त्वसङ्ख्याता ब्रह्मणोऽव्यक्त जन्मन' इति लिङ्गपुराणे । कूर्मपुराणे पञ्चाशीतितमेऽध्याये च 'पुरा

---

१. भा.ता.५-१-३१ । २. भा.३-१२-३३/३६ । ३. भा.ता.२-८-२८ । ४. आ.भा. उपोद्घातः ।

रथन्तरे कल्पे राजासीत् पुष्पवाहनः।' इति प्रथमपरार्धे राजाद्युक्तेः । अतः परार्धद्वयेऽपि पद्मोत्पत्तिरस्तीत्यवश्य-मङ्गीकर्तव्यम् ।। २३ ।।

**तस्मात्पुनः सर्वसुराः प्रसूताः**
**ते जानमाना अपि निर्णयाय ।**
**निसृत्य कायादुत पद्मयोनेः**
**सम्प्राविशन्क्रमशो मारुतान्ताः ।। २४ ।।**

**व्यास**— विराजः पद्मयोनेः कायात् ।। २४ ।।

**वादि**— निर्णयाय लोकस्य निर्णयाय । कायात् ब्रह्मणः शरीरात् । शरीरादुद्गमनमपि वायोः सर्वेभ्योऽन्ते । प्रवेशोऽपि सर्वेभ्योऽन्त इति सूचनाय मारुतान्ता इत्युक्तम् ।। २४-२५ ।।

**वरद**— तस्मात् पद्मादुत्पन्नाद्विरिञ्चात् पुनः सर्वसुराः रुद्राद्या जाता इत्यर्थः। ते रुद्राद्याः सुराः जानमानाः श्रीमुख्यप्राणस्य स्वोत्तमत्वम् जानन्तोऽपीत्यर्थः। तथाप्यन्वयव्यतिरेकाभ्यां मुख्यप्राणस्य सर्वदेवोत्तमत्वनिर्णयाय निर्णयार्थं पद्मयोनेः कायात् शरीरान्निस्सृत्य मारुतन्ताः क्रमशः पुनः पद्मयोनिदेहं सम्प्राविशन् सम्प्रविष्टा इत्यर्थः ।। २५ ।।

**जना**— तस्माद्ब्रह्मणः पुनर्ब्रह्माण्डान्तः सर्वे सुराः प्रसूताः इदानीं तं प्रपदाभ्यामित्युक्तप्रकारं दर्शयति— त इति ।। वायोः श्रैष्ठ्यं जानमाना अपि मारुतान्तास्ते देवाः लोकस्य निर्णयाय पद्मयोनेः पद्मादुत्पन्नस्य कायात् क्रमशः वागादिक्रमेण निसृत्य उतानन्तरं तेनैव क्रमेण सम्प्राविशन् ।। २४ ।।

**ताम्र**— निर्णयायान्वयव्यतिरेकाभ्यां वायोरुत्तमत्वावधारणाय— **क्रमश इति** ।। 'चक्षुरुदक्रामत् श्रोत्रमुदक्रामत्' इत्यादिक्रमेणैव निस्सृत्य 'चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव' इत्युक्तक्रमेण सम्प्राविशन्नित्यर्थः । प्राणसंवादस्य रूपभेदेन कालभेदेन प्रदत्तत्वाच्च ग्रन्थान्तराविरोधः ।। २४ ।।

**राम**— ।। **निसृत्य कायादुत पद्मयोने**रित्यत्र पद्मादुत्पन्नब्रह्मदेहान्निर्गम्य परीक्षाञ्चक्रुः ।। २४ ।।

**पपात वायोर्गमनाच्छरीरं**
**तस्यैव चावेशत उत्थितं पुनः।**
**तस्मात् स एको विबुधप्रधान**[१]
**इत्याश्रिता देवगणास्तमेव ।। २५ ।।**

---

१. वायोः सर्वदेवोत्तमत्वप्रतिपादिका इयं कथा स्कन्दपुराणे वैष्णवखण्डे वैशाखमासमाहात्म्ये एकोनविंशोऽध्याये तथा वराहपुराणेऽपि सप्तदशाध्याये दृश्यते ।

**सङ्क**— 'तं प्रपदाभ्यां प्रापद्यत' इत्याद्युपनिषत्खण्डोक्तप्रकारेण श्रीविष्णुवायुभ्यां सह ब्रह्मदेहं प्रविष्टास्ते मारुतान्ता देवाः पद्मयोनेर्ब्रह्मणः कायात् क्रमेण निस्सृत्य निर्गत्य पुनस्तेनैव क्रमेणैव सम्प्राविशन्नित्यर्थः । ननु मारुतान्तानां देवानां उत्क्रमणप्रवेशाभ्यां किमासीदित्यत आह— **पपातेति** ।। ननु पद्मयोनेः शरीरपातोत्थानानन्तरं देवगणाः किमकुर्वन्तेत्यत आह— **तस्मादिति** ।। यस्मात् वायोरुत्क्रमणप्रवेशाभ्यां शरीरपातोत्थाने अभूताम् । तस्मात् कारणात् स एकस्त्वं विबुधप्रधान इत्युक्त्वा देवगणास्तं वायुमेवाश्रिता इत्यर्थः ।। २५ ।।

**वरद**— ननु चतुर्मुखशरीरनिर्गमनप्रवेशाभ्यां कथं मारुतस्योत्तमत्वं निर्णीतमित्यत आह— **पपातेति** ।। तस्यैव वायोरावेशतः प्रवेशतः पुनरुत्थितं चेत्यर्थः। अनेन [1]'ता अहिंसन्त अहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रमाम' इत्यादि तथा 'ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवत् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्नः इदं शरीरमुत्थास्यति' इत्याद्युपनिषदाख्यायिकोक्ता भवति । एवं वायोर्निर्गमप्रवेशनिमित्तकशरीरपातोत्थानलिङ्गेन सर्वदेवोत्तमत्वे निर्णीते पुनर्देवाः किं कृतवन्त इत्यपेक्षायां 'त्वमुक्थ्यमसि त्वमिदं सर्वमसि तव वयं स्मः' इत्यादिखण्डशेषार्थानुवादरूपेण देवानां मुख्यप्राणाश्रयण–प्रकारमाह— **तस्मादिति** ।। स एक एव प्राणो विबुधप्रधानः सर्वदेवोत्तम इति निर्णीय सर्वदेवगणास्तं प्राणमेवाश्रिता इत्यर्थः ।। २५ ।।

**जना**— ततः किमभूदित्यत आह— **पपातेति** ।। तस्यैव च वायोरेवावेशतः प्रवेशात् पुनरुत्थितम् । तस्मात् पातनोत्थानकर्तृत्वात् सः वायुः एकः मुख्यः विबुधेषु प्रधान इति देवगणास्तमेवाश्रिताः ।। २५ ।।

**हरेर्विरिञ्चस्य च मध्यसंस्थितेः**
**तदन्यदेवाधिपतिः स मारुतः।**
**ततो विरिञ्चो भुवनानि सप्त**
**ससप्तकान्याशु चकार सोऽब्जात् ।। २६ ।।**

**व्यास**— भगवतोन्तर्यामित्वेन ब्रह्मणो अभिमानित्वेन तत्र शरीरे भावात् वायुनिष्क्रमणप्रवेशाभ्यां शरीरस्य पातादुत्थानाच्च वायोस्तदधिपतित्वमपि प्राप्तमत आह— **हरेरिति** ।। २६-२७ ।।

**सङ्क**— नन्वेवं चेद्विष्णुविरिञ्चाभ्यामपि वायोरुत्तमत्वं प्राप्तयोर्देहस्थितयोः सतोरपि देहपातोत्थान–सद्भावादित्यत आह—**हरेरिति** ।। मध्यसंस्थितेर्मध्यत्वेन स्थितेः परीक्षार्थमुदासीनत्वेन स्थितेरिति यावत् । अतस्ताभ्यां अन्यदेवाधिप इत्यर्थः। लोकात्मकं पद्मम् । 'तस्मात् पुनः सर्वसुराः प्रसूताः' इति यदुक्तं तद्विस्तरेणाह— **ततो विरिञ्च इत्यादिना** ।। २६ ।।

**वरद**— ननु [2]'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् पुरुषाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं' इत्युपक्रमे विष्णोरपि ब्रह्मपदोक्तस्य पुरुषपदोक्तचतुर्मुखस्याप्युक्तेः विष्णुचतुर्मुखयोः शरीरे सतोरपि देहपातस्य जातत्वात्

१. ऐ.उ. १-४ । २. ऐ.उ. १-३-७ ।

रथन्तरे कल्पे राजासीत् पुष्पवाहनः।' इति प्रथमपरार्धे राजाद्युक्तेः । अतः परार्धद्वयेऽपि पद्मोत्पत्तिरस्तीत्यवश्य-मङ्गीकर्तव्यम् ।। २३ ।।

**तस्मात्पुनः सर्वसुराः प्रसूताः**
**ते जानमाना अपि निर्णयाय ।**
**निसृत्य कायादुत पद्मयोनेः**
**सम्प्राविशन्क्रमशो मारुतान्ताः ।। २४ ।।**

**व्यास**— विराजः पद्मयोनेः कायात् ।। २४ ।।

**वादि**— निर्णयाय लोकस्य निर्णयाय । कायात् ब्रह्मणः शरीरात् । शरीरादुद्गमनमपि वायोः सर्वेभ्योऽन्ते । प्रवेशोऽपि सर्वेभ्योऽन्त इति सूचनाय मारुतान्ता इत्युक्तम् ।। २४-२५ ।।

**वरद**— तस्मात् पद्मादुत्पन्नाद्विरिञ्चात् पुनः सर्वसुराः रुद्राद्या जाता इत्यर्थः। ते रुद्राद्याः सुराः जानमानाः श्रीमुख्यप्राणस्य स्वोत्तमत्वम् जानन्तोऽपीत्यर्थः। तथाप्यन्वयव्यतिरेकाभ्यां मुख्यप्राणस्य सर्वदेवोत्तमत्वनिर्णयाय निर्णयार्थं पद्मयोनेः कायात् शरीरान्निस्सृत्य मारुतन्ताः क्रमशः पुनः पद्मयोनिदेहं सम्प्राविशन् सम्प्रविष्टा इत्यर्थः ।। २५ ।।

**जना**— तस्माद्ब्रह्मणः पुनर्ब्रह्माण्डान्तः सर्वे सुराः प्रसूताः इदानीं तं प्रपदाम्यामित्युक्तप्रकारं दर्शयति— **त इति** ।। वायोः श्रैष्ठ्यं जानमाना अपि मारुतान्तास्ते देवाः लोकस्य निर्णयाय पद्मयोनेः पद्मादुत्पन्नस्य कायात् क्रमशः वागादिक्रमेण निसृत्य उतानन्तरं तेनैव क्रमेण सम्प्राविशन् ।। २४ ।।

**ताम्र**— निर्णयायान्वयव्यतिरेकाभ्यां वायोरुत्तमत्वावधारणाय— **क्रमश इति** ।। 'चक्षुरुदक्रामत् श्रोत्रमुदक्रामत्' इत्यादिक्रमेणैव निस्सृत्य 'चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव' इत्युक्तक्रमेण सम्प्राविशन्नित्यर्थः । प्राणसंवादस्य रूपभेदेन कालभेदेन प्रदत्तत्वाच्च ग्रन्थान्तराविरोधः ।। २४ ।।

**राम**— ।। **निसृत्य कायादुत पद्मयोनेरित्यत्र** पद्मादुत्पन्नब्रह्मदेहान्निर्गम्य परीक्षाञ्चक्रुः ।। २४ ।।

**पपात वायोर्गमनाच्छरीरं**
**तस्यैव चावेशत उत्थितं पुनः।**
**तस्मात् स एको विबुधप्रधान[१]**
**इत्याश्रिता देवगणास्तमेव ।। २५ ।।**

---

१. वायोः सर्वदेवोत्तमत्वप्रतिपादिका इयं कथा स्कन्दपुराणे वैष्णवखण्डे वैशाखमासमाहात्म्ये एकोनविंशोऽध्याये तथा वराहपुराणेऽपि सप्तदशाध्याये दृश्यते ।

**सङ्क**— 'तं प्रपदाभ्यां प्रापद्यत' इत्याद्युपनिषत्खण्डोक्तप्रकारेण श्रीविष्णुवायुभ्यां सह ब्रह्मदेहं प्रविष्टास्ते मारुतान्ता देवाः पद्मयोनेर्ब्रह्मणः कायात् क्रमेण निस्सृत्य निर्गत्य पुनस्तेनैव क्रमेणैव सम्प्राविशन्नित्यर्थः । ननु मारुतान्तानां देवानां उत्क्रमणप्रवेशाभ्यां किमासीदित्यत आह— **पपातेति** ।। ननु पद्मयोनेः शरीरपातोत्थानानन्तरं देवगणाः किमकुर्वन्तेत्यत आह— **तस्मादिति** ।। यस्मात् वायोरुत्क्रमणप्रवेशाभ्यां शरीरपातोत्थाने अभूताम् । तस्मात् कारणात् स एकस्त्वं विबुधप्रधान इत्युक्त्वा देवगणास्तं वायुमेवाश्रिता इत्यर्थः ।। २५ ।।

**वरद**— ननु चतुर्मुखशरीरनिर्गमनप्रवेशाभ्यां कथं मारुतस्योत्तमत्वं निर्णीतमित्यत आह— **पपातेति** ।। तस्यैव वायोरावेशतः प्रवेशतः पुनरुत्थितं चेत्यर्थः। अनेन [1]'ता अहिंसन्त अहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रमाम' इत्यादि तथा 'ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवत् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्नः इदं शरीरमुत्थास्यति' इत्याद्युपनिषदाख्यायिकोक्ता भवति । एवं वायोनिर्गमप्रवेशनिमित्तकशरीरपातोत्थानलिङ्गेन सर्वदेवोत्तमत्वे निर्णीते पुनर्देवाः किं कृतवन्त इत्यपेक्षायां 'त्वमुक्थ्यमसि त्वमिदं सर्वमसि तव वयं स्मः' इत्यादिखण्डशेषार्थानुवादरूपेण देवानां मुख्यप्राणाश्रयण-प्रकारमाह— **तस्मादिति** ।। स एक एव प्राणो विबुधप्रधानः सर्वदेवोत्तम इति निर्णीय सर्वदेवगणास्तं प्राणमेवाश्रिता इत्यर्थः ।। २५ ।।

**जना**— ततः किमभूदित्यत आह— **पपातेति** ।। तस्यैव च वायोरेवावेशतः प्रवेशात् पुनरुत्थितम् । तस्मात् पातनोत्थानकर्तृत्वात् सः वायुः एकः मुख्यः विबुधेषु प्रधान इति देवगणास्तमेवाश्रिताः ।। २५ ।।

**हरेर्विरिञ्चस्य च मध्यसंस्थितेः**
**तदन्यदेवाधिपतिः स मारुतः।**
**ततो विरिञ्चो भुवनानि सप्त**
**ससप्तकान्याशु चकार सोऽब्जात् ।। २६ ।।**

**व्यास**— भगवतोन्तर्यामित्वेन ब्रह्मणो अभिमानित्वेन तत्र शरीरे भावात् वायुनिष्क्रमणप्रवेशाभ्यां शरीरस्य पातादुत्थानाच्च वायोस्तदधिपतित्वमपि प्राप्तमत आह— **हरेरिति** ।। २६-२७ ।।

**सङ्क**— नन्वेवं चेद्विष्णुविरिञ्चाभ्यामपि वायोरुत्तमत्वं प्राप्तयोर्देहस्थितयोः सतोरपि देहपातोत्थान-सद्भावादित्यत आह—**हरेरिति** ।। मध्यसंस्थितेर्मध्यत्वेन स्थितेः परीक्षार्थमुदासीनत्वेन स्थितेरिति यावत् । अतस्ताभ्यां अन्यदेवाधिप इत्यर्थः। लोकात्मकं पद्मम् । 'तस्मात् पुनः सर्वसुराः प्रसूताः' इति यदुक्तं तद्विस्तरेणाह— **ततो विरिञ्च इत्यादिना** ।। २६ ।।

**वरद**— ननु [2]'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् पुरुषाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं' इत्युपक्रमे विष्णोरपि ब्रह्मपदोक्तस्य पुरुषपदोक्तचतुर्मुखस्याप्युक्तेः विष्णुचतुर्मुखयोः शरीरे सतोरपि देहपातस्य जातत्वात्

१. ऐ.उ. १-४ । २. ऐ.उ. १-३-७ ।

तथा तयोः सतोरपि शरीरोत्थापने अप्रयोजकत्वात् वायोस्तदुभयोत्तमत्वमपि प्राप्तमित्यत आह— **हरेरिति** ।। हरिविरिञ्चयोर्मध्यसंस्थितेर्मध्यस्थत्वेन अवस्थितत्वाद्वायोः सर्वदेवोत्तमत्वप्रकटनाय शरीरपातादौ स्वयमुदासीनत्वेन स्थितत्वादित्यर्थः। [१]'चक्षुः श्रोत्रं मनो वाक्प्राणा' इति चक्षुरादिपदोक्तानां तदभिमानिनां रुद्रादीनां एव 'ता अहिंसत' इति तच्छब्देन परामर्शेन विवादोक्तेः विष्णुविरिञ्चयोः विवादबहिर्भूतत्वेनोदासीनवद्विद्यमानत्वात् तदतिरिक्त-सर्वदेवाधिपतिर्मारुत इति निर्णयो जात इति भावः। तथा च प्रमाणमत्र—

[२]'उदासीनवदस्तां तौ केशवश्चाब्जसम्भवः ।
तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः' इति ।

'लोकात्मकं पद्मं' इत्यनेन चतुर्दशभुवनानां पद्मादुत्पत्तिः सूचिता । तां विस्तारयत् 'तस्मात्पुनः सर्वसुरा' इत्यादि प्रपञ्चयति— **तत इत्यादिना** ।। ततोऽनन्तरं स पद्मादुत्पन्नो विरिञ्चः तदन्तर्यामी च ससप्तकानि सप्तभिरतलवितलादिभिः सहितानि सप्तपृथिव्यादिभुवनानि चतुर्दशभुवनानीति यावत् । अब्जात् चतुर्दशदलात्मकाच्चकारेत्यर्थः। आश्वित्यनेन विचित्रलोकनिर्माणे ब्रह्मणो अनायासं संसूचयति ।। २६ ।।

**जना**— हरिविरिञ्चादेः देहे सत्वेऽपि यदि वायोः गमनागमनाभ्यां देहपातोत्थाने भवतः तदा तयोरप्यधिपति-रित्यायातमित्यत आह— **हरेरिति** ।। सः मारुतः वायुः हरेः विरिञ्चस्य मध्यसंस्थितेः मध्यस्थत्वेन संस्थितेः परीक्षणार्थं उदासीनत्वेन स्थितेरिति यावत् । अतस्ताभ्यामन्येषां देवानां अधिपतिः स्वामी । उदासीनतया स्थितत्वं स्फुटमुक्तं ऐतरेयभाष्ये—

'उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः।
तेषां बलपरीक्षार्थम् ..................।। इति ।

तृतीयतात्पर्ये च—

[३]'यज्ञान्तस्थः स्वयं पादौ विषन्नोत्थापयद्धरिः ।
शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञाप्त्यै जनार्दनः।
तत्स्थ उत्थापयामास ब्रह्मदेहं विशन्विभुः।।' इति ।

तत्स्थः ब्रह्मवायुस्थः। ननु—

[४]'अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः।
अन्योन्यानुप्रविष्टौ तौ सर्वदेवेषु संस्थितौ ।।
वायुं विना ब्रह्मणोऽपि शरीरं पूतिमेष्यति ।
वायुश्च शोषमायाति विना ब्रह्माणमञ्जसा ।।' इति ।
[५]'प्राण उच्चिक्रमिषति स्थातुं नाशक्नुवन्परे ।
प्राणं विना न च ब्रह्मा तं विना प्राण एव तु ।।
अन्योन्यापाश्रयाच्छक्तौ स्थातुमन्ये कुतस्ततः।।'

---

१. ऐ.उ. १-४-२ । २. ऐ.भा.१-१-४ । ३. भा.ता.३-२७-६८ । ४. बृ.भा.७-१४ । ५. बृ.भा. ८-१ ।

इत्यनेन च सहवासनियमकथनात् 'देहेऽपि' इति वचनाच्च कथं इन्द्रियगणगतचित्तस्वरूपेण त्रयाणामपि गमनप्रवेशावंशेन ज्ञेयौ । तदुक्तम्—

[१]"चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा ।
विराट् तदैव पुरुषः सलिलादुदतिष्ठत ।।' इत्यस्य तात्पर्ये कापिले ।
'अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात्तथा ।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः।।
तमुत्थापयितुं देवास्तानृते त्रीन्महाबलाः ।
नाशक्नुवन्नेकसंस्थाश्च ततस्ते त्वविशंस्त्रयः।।
उदतिष्ठत् ब्रह्मदेहस्तदा तेषां प्रभावतः।
विशेषेण हरेरेव प्रभावेन श्रियः पतेः।।
चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञः तद्गतो हरिः।।' इति

एवकारेण हरेरेव निषेधः क्रियते न तु वायोः। अथ रूपान्तरेणोदासीनत्वं ज्ञापितं छान्दोग्यभाष्ये– 'उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः' इति । अत्र सुप्तिशब्देन मुद्रितनेत्रत्वं अथवा स्वप्नतुल्यावस्थावत्वं वा । ब्रह्मवाय्वोः स्वप्नतुल्यत्वं च बाह्याज्ञानवत्वे सति अन्तरेव ज्ञानवत्वेन । सुप्तिशब्दस्य स्वप्नवाचकत्वम्—

'सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च ।
अन्योन्यानामतो ज्ञेया मनोबुद्ध्योस्तथैव च ।।' इति

शब्दनिर्णयाज्ज्ञेयम् । 'तस्मात्पुनः सर्वसुराः प्रसूता' इत्युक्तां सृष्टिं प्रपञ्चयति— **तत इति** ।। ततः परीक्षान्तरं सः विरिञ्चः ब्रह्मा सप्तकैः सहितानि सप्तभुवनानि चतुर्दशभुवनानि । आशु अप्रयत्नेनाब्जाच्चकार । इतः पूर्वमपि लोकसृष्टिरस्ति । तदुक्तमैतरेयभाष्ये ब्रह्मवैवर्ते-

'भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः।
लोकभेदांश्च चक्रेऽत्र पश्चाद्ब्रह्मा विशेषतः।
सम्यक् चकार लोकांस्तान् लोककर्ता ततः स च ।।' इति ।

ऐतरेयशाखायां च—

'स ऐच्छत् भगवान्विष्णुः स्रष्टुं लोकाभिमानिनः।
लोकाभिधानवद्देवान् जडलोकांश्च शाश्वतः।।
स लोकेभ्यः पूर्वतनान् अबाख्यान्महदादिकान् ।
ब्रह्मशर्वादिकान् सृष्ट्वा जडैः सह जनार्दनः।।
दिवमाकाशमुर्वीं चससृजेऽथ द्विसप्तकान् ।

१. भा.ता. ३-२७-७१ ।

इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान् ।।
अण्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये ।।' इति ।। २६ ।।

**ताम्र**— विष्णोरन्तर्यामित्वेन विरिञ्चस्याभिमानित्वेन शरीरे वायुनिष्क्रमणवायुप्रवेशाभ्यां शरीरस्य भावादुत्थानाच्च वायोस्तदधिपतित्वमपि प्राप्तमित्यत आह— **हरेरिति** ।। मध्यसंस्थितेः उदासीनतया स्थितेरित्यर्थः।

'उदसीनवदास्तां तौ केशवश्चाब्जसम्भवः।
तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः ।।' इति ।

लोकात्मकमित्युक्तं विवृण्वन् 'तस्मात् पुनः सर्वसुराः' इत्युक्तमपि विवृणोति— **तत इति** ।। ततः अब्जादिति सम्बन्धः। प्राक् भवतः उत्पन्नत्वात् पुनरिति । आश्वित्यनेन निर्माणेऽनायासं सूचयति ।। २६-२७ ।।[१]

**भारतश्री**— मध्यसंस्थितेः मध्यस्थवत् स्थितेः ।। २६ ।।

**राम**— हरेर्विरिञ्चस्य च मध्यसंस्थितेः मध्यस्थवत्स्थितेर्निमित्तात् तद्देहपातोऽभूदित्यर्थः ।। **ससप्तकान्याशु चकार सोऽब्जादित्यत्र** पातालादिसप्तकसहितानि भूरादिसप्तभुवनानि अब्जादब्जदलैः उपचयं चकार ।। २६ ।।

## तस्माच्च देवा ऋषयः पुनश्च
## वैकारिकाद्याः सशिवा बभूवुः ।। २७ ।।

**सङ्क**— वैकारिकाहङ्कारजः वैकारिका इन्द्रियाभिमानिनः। आद्यशब्देन तैजसाहङ्कारजाः तामसाहङ्कारजा विवक्षिताः ।। २७ ।।

**वरद**— तस्मात् विरिञ्चादेव पुनर्ब्रह्माण्डान्तरमपि वैकारिकाद्या देवाः वैकारिकाहङ्कारोत्पन्ना इन्द्रियाभिमानिनो देवा आद्या एषां तैजसाहङ्कारोत्पन्नानामाहङ्कारिकप्राणादीनां ते तथा । पुनः कथम्भूताः । सशिवाः शिवेन सह वर्तमानाः । तथा ऋषयो मरीचिप्रमुखाश्च बभूवुरित्यर्थः ।। २७ ।।

**जना**— तस्मात् ब्रह्मणश्च वैकारिकाः वैकारिकाहङ्कारादुत्पन्ना इन्द्रियाभिमानिनो देवाः । आद्यशब्देन तैजसाः प्राणाद्यास्तामसाः गणेशाद्याः सशिवाः शिवेन सहिताः ऋषयश्च पुनर्बभूवुः ।। २७ ।।

**भारतश्री**— वैकारिकाः इन्द्रियाभिमानिदेवाः ।। २७-२८ ।।

---

१. निर्णयायान्वयव्यतिरेकाभ्यां वायोरुत्तमत्वावधारणायां पद्मयोनेर्ब्रह्मणः कायात्र तु विराड्रूपात् । भगवतोऽन्तर्यामित्वेन ब्रह्मणो अभिमानित्वेन शरीरे भावाद्वायुनिष्क्रमणप्रवेशाभ्यां शरीरस्य पातात् उत्थानाच्च वायोः तदधिपतित्वमपि प्राप्तमित्यत आह-**हरेरिति** ।। मध्यसंस्थितेः मध्यस्थस्थितया । स्थितेः उदासीनतया स्थितेरिति यावत् । 'उदसीनवदास्तां तौ केशवश्चाब्जसम्भवः। तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः' इति वचनात् ।। २७ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

**अग्रे शिवोऽहंभव एव बुद्धे-**
**रुमा मनोजौ सहशक्रकामौ ।**
**गुरुर्मनुर्दक्ष उतानिरुद्धः**
**सहैव शच्या मनसः प्रसूताः ।। २८ ।।**

**व्यास**— कस्मादङ्गात् क बभूवेत्यत आह— **अग्रे इति** ।। २८ ।।

**वादि**— कस्मात्कस्मात् कस्य कस्य सृष्टिरित्यत आह— **अग्र इति** ।। अहम्भवः 'अहमस्मि प्रथमजा ऋतस्य' इति यदा ब्रह्मा दासोऽहमिति अहंमतिमकरोत् तदा तदीयाहम्मतेर्भवतीत्यहम्भवः,अग्रे शिव एवाहम्भव इति सम्बन्धः। शिवपदेन शिवात्मकः शेषः शिवसमस्तार्क्ष्यश्च गृह्यते । 'मनोजौ सहशक्रकामौ' इत्यत्राग्रपद-मावर्तनीयम् । मनोजन्यगुर्वादिभ्योऽग्रे । क्रमशः नारदाद्युत्पत्तिक्रमेण । यो य इति प्रागुक्तत्वात् स स हीति वीप्सा ।। २८-२९ ।।

**सङ्क**— 'सशिवा वैकारिकाद्याः बभूवुः' इत्युक्तम् । तत्र कस्य प्रथमत उत्पत्तिः केन प्रकारेणोत्पत्ति-रित्याशङ्क्याह— **अग्र इति** ।। ब्रह्मणो मनस्त्रिधा वृत्तिभेदेन भिन्नम् । अहङ्कारबुद्धिमनःस्वरूपेण । तत्र शिवोऽहंभवः अहंवृत्तेर्भवो यस्यासावहंभवः। बुद्धिवृत्तेरुमा जाता । शक्रकामौ सह मनोजौ मनोजातौ । न केवलं शक्र-कामयोः ब्रह्मणो मनसो जातत्वं किन्तु गुर्वादीनामपि ब्रह्मणो मनसो जातत्वमस्तीत्याह— **गुरुरित्यादिना** ।। २८ ।।

**वरद**— उक्तनामेव शिवादीनां चतुर्मुखादुत्पत्तिं स्थानविवेचनेन विवेचयति— **अग्र इति** ।। ब्रह्मणोऽन्तःकरणं वृत्तिभेदेन त्रिधा भिन्नं अहंवृत्तिर्बुद्धिवृत्तिर्मनोवृत्तिरिति । तत्राग्रे पूर्वमेव शिवोऽहंभवः अहंवृत्तेः सकाशात् भव उत्पत्तिर्यस्यासौ तथोक्तः। अहंवृत्त्याख्यान्तःकरणेन शिव उत्पन्न इत्यर्थः। तथा उमा पार्वती बुद्धेः बुद्धिवृत्तेः सकाशादुत्पन्नेत्यर्थः। शक्रकामौ सह मनोवृत्त्या जातावित्यर्थः। सह इत्यनेन वक्ष्यमाणगुर्वादीनां मनोवृत्तिजातत्वा-विशेषात् किञ्चिदवान्तरतारतम्याभाववदत्रापि शक्रकामयोः स्वरूपतारतम्यं नास्तीति सूचयति । न केवलं शक्रकामावेव मनोजौ किं तर्हि अन्येऽपि मनोवृत्त्या जाता इत्याह— **गुरुरिति** ।। अत्र शक्रकामादीनां सर्वेषां मनोजातत्वेनापि न साम्यं मन्तव्यं किं तर्हि गुर्वादीनां शक्रकामावरत्वं ज्ञातव्यमिति ज्ञापयितुं योग-विभागः ।। २८ ।।

**जना**— उक्तामेव सृष्टिं स्थानकथनपूर्वकं कथयति— **अग्र इति** ।। अन्तःकरणं अहङ्कारबुद्धिमनश्चेतना-चित्तमित्यनेकभेदभिन्नम् । तत्र अग्रे आदौ अहङ्काकारात् भवतीत्यहंभवः शिवः। रुद्रोहङ्काराज्जात इत्यर्थः। बुद्धेरुमा जाता अग्रे गुर्वादिभ्यः आदौ शक्रकामौ सह यमलौ मनोजौ मनसः जातौ उत ततः मनसः गुर्वादयः पञ्च सहैव एकदैव प्रसूताः ।। २८ ।।

**ताम्र**— शिवाद्युत्पन्नत्वं स्थानविशेषेण दर्शयति— **अग्र इति** ।। अग्रे ब्रह्मणः प्रथमकल्पे अग्रे प्रथमतः।[1]"ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः' इत्युक्तेः। उमा जाता सह युगपत् । गुर्वादीनां मनोजत्वेऽपि न शक्रसाम्यं युगपदुत्पत्तिश्चेति दर्शयितुं योगविभागः ।। २८ ।।[2]

**चक्षुः श्रुतिभ्यां स्पर्शात्सहैव**
**रविः शशी धर्म इमे प्रसूताः ।**
**जिह्वाभवो वारिपतिर्नसोश्च**
**नासत्यदस्रौ क्रमशः प्रसूताः ।**
**ततः सनाद्याश्च मरीचिमुख्याः**
**देवाश्च सर्वे क्रमशः प्रसूताः ।। २९ ।।**

**व्यास**— सह एककालम् ।। २९ ।।

**सङ्क**— अथेदानीं सूर्यादीनां ब्रह्मणश्चक्षुरादीन्द्रियेभ्यः क्रमेणोत्पत्तिप्रकारमाह— **चक्षुरित्यादिना** ।। जिह्वाया भवोऽस्येति जिह्वाभवो वरुणः। सनाद्याः च मरीचिमुख्या देवाश्च ब्रह्मणोऽवयवविशेषेभ्यः क्रमशः प्रसूता इत्यर्थः ।। २९ ।।

**वरद**— अथ चतुर्मुखस्य चक्षुरादीन्द्रियैः सूर्यादीनामुत्पत्तिमाह— **चक्षुरित्यादिना** ।। चक्षुश्रुतिभ्यां चक्षुरिन्द्रिय–श्रोत्रेन्द्रियाभ्यां स्पर्शात् स्पर्शनेन्द्रियाच्च यथाक्रमं रविः शशी धर्म इति इमे त्रयो देवाः प्रसूता इत्यर्थः। तथा वारिपतिर्वरुणो जिह्वाभवो जिह्वाया जिह्वेन्द्रियात् उत्पत्तिर्यस्यासौ तथोक्तः। जिह्वाया वरुण उत्पन्न इत्यर्थः। तथा नासत्यदस्रौ अश्विनौ नसोः ब्रह्मणो नासापुटयोः सकाशात् उत्पन्नावित्यर्थः। क्रमश इत्यनेन गुर्वादिष्विव न सूर्यादिषु साम्यं मन्तव्यमिति सूचयति । ततश्चतुर्मुखात् सनाद्याः सनकाद्या तथा मरीचिमुख्याः मरीचिः मुख्यः येषां ते अत्र्यादीनां ते तथा सर्वे देवा उक्तेभ्योऽन्ये देवाश्च क्रमशः प्रसूता इत्यर्थः ।। २९ ।।

**जना**— चक्षुःश्रुतिभ्यां स्पर्शात्क्रमेण रविः शशी धर्म इतीमे सहैव एकस्मिन्काल एव प्रसूताः। चक्षुषः रविरित्यादि ज्ञेयम् । वारिपतिर्वरुणः जिह्वायाः भवतीति जिह्वाभवः। नसोर्नासत्यदस्रौ एको नासत्यः अपरो दस्रः । ननु च 'एतयोः नामभेदः क्वचिद्धि' इति 'तयोर्विशेषनामापि अविशेषितम् ' इति च कथं वक्ष्यतीति चेत्समाहितमिदं जयतीर्थार्यैः। [3]"अश्विनोरेको नासत्यः साहचर्यादुभावपि नासत्यावुच्येते । यथा दस्राविति । अत एवान्यत्र 'नासत्यदस्रौ ' इति आचार्याः" इति । तेन नामभेदेऽपि साहचर्याल्लक्षणया उभयोर्वाचकत्वात्

१. आ.भा. १ । २. शिवादीनामुत्पत्तिं स्थानविशेषेण विवेचयति–अग्र इति ।। ब्रह्मणः मनः त्रिधा वृत्तिभेदेन भिन्नं अहङ्कारमनोबुद्धिरूपेण । तत्राग्रे ब्रह्मणः प्रथमे कल्पे । शिवोऽहम्भवः अहंवृत्तेः भवः उत्पत्तिर्यस्य सोऽहम्भवः। यथाऽहुः। 'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः। सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः' इति । उमा जाता सह एककाले । गुर्वादीनामपि मनोजत्वेऽपि न शक्रादिसाम्यं युगपदुत्पत्तिश्चेति द्योतयितुं योगविभागः ।। २९ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते । ३. ऋ.भा.टी. १-२०-३ ।

शब्दभेदोन चेति । तयोर्विशेषनामापि विशेषतया वाचकमपि नामाविशेषितं साहचर्यादुभयोर्वाचकमित्युक्तं भवति । इत्येते देवाः क्रमशः तारतम्योपेताः प्रसूताः उत्पन्नाः । अनुक्तानाह— **तत इति** ।। ततः तस्मात्ततः तदनन्तरम्। सनाद्याः सनकाद्याः त्रयः। मरीच्याद्याः वसुपुत्राः सूर्यरश्मिसंस्थाः मरीच्याद्याः देवाः सर्वे अन्ये प्राणिनः क्रमशः क्रमेण प्रसूताः। मरीच्याद्याः उक्ताः छान्दोग्यभाष्ये [१]"तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः' इति। नन्वेतैः सह पठिताः सनकाद्याः ते सनकाद्याः [२]तृतीयतात्पर्ये इन्द्रादिभिः सह पठिताः। [३]बृहद्भाष्ये च नारदादिभिः सह पठिताः। अतः तारतम्यभङ्ग इति चेन्न । न उभयत्र समता कथनार्थः ग्रन्थः प्रवृत्तः। अपि तु तात्पर्ये उमावरत्वकथनार्थं बृहद्भाष्ये च इन्द्रावरत्वकथनार्थं प्रवृत्तः। तथाहि तात्पर्यम्-

> [४]"इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे ।
> ऋषयो मनवो देवा तद्वंश्या ये च केचन ।
> उमाया अवरा सर्वे गुणैः सर्वैर्न संशयः।।' इति ।

बृहद्भाष्यं च-

> [५]"सनत्कुमारस्तु यदा पुरन्दरसमो मतः ।
> सनकाद्याः नारदश्च दक्षभृग्वादयोऽपि च ।।
> देवावराः यथा तद्वन्मनवोऽपि प्रकीर्तिताः।।' इति ।

अत्र पुरन्दरस्य प्रकृतत्वाद्देवावरा इन्द्रावरा इति ज्ञेयम् ।। २९ ।।

**ताम्र**— ।। **नासत्यदस्रौ क्रमश इति** ।। वरुणानन्तरं नारदः ततोऽग्न्यादिः ततो मित्रः ततो नासत्यदस्रौ इति क्रमशः प्रसूता इत्यर्थः ।। २९ ।।[६]

## ततोऽसुराद्या ऋषयो मनुष्या
## जगद्विचित्रं च विरिञ्चतोऽभूत् ।। ३० ।।

**व्यास**— विचित्रं पशुपक्षिवृक्षतृणाद्यात्मकम् ।। ३० ।।

**सङ्क**— न केवलं देवानामेव ब्रह्मण उत्पत्तिः किञ्चासुराणामृषीणां च ब्रह्मणो जातत्वमप्यस्तीत्याह— **तत इति** ।। असुराद्याः इत्यादिशब्देन राक्षसादयो विवक्षिताः। किं बहुना चित्रं जगद्विरिञ्चतोऽभूदित्याह— **जगदिति** ।।३०।।

**वरद**— न केवलं देवर्ष्यादय एवोत्पन्नाः किन्तु असुरादयोऽपि तत एवोत्पन्ना इत्याह— **तत इति** ।। आसुराद्या एषां राक्षसात् यातुधानादीनां ते तथोक्ताः। तथान्ये ऋषयो मनुष्याश्च जाता इत्यर्थः। किं बहुना चित्रं विचित्रं जगद्विरिञ्चत एवोत्पन्नमित्याह— **जगदिति** ।। ३० ।।

---

१. छा.भा.३-१ । २. भा.ता. ३-१३-४ । ३. बृ.भा. ३-५, अव्याकृतब्राह्मणम् । ४. भा.ता. ३-१३-४ । ५. बृ.भा. ३-५, अव्याकृतब्राह्मणम् । ६. मरीचिमुख्याः मरीच्यादिब्रह्मपुत्राः विचित्रं पशुपक्षिवृक्षतृणा-द्यात्मकम् ।। २८-३०।। इति हो.पुस्तके अधिकः पाठः दृश्यते ।

**जना**— तत असुराद्याः असुरराक्षसाद्याः ऋषयः मनुष्याः जाताः विचित्रं गोगजाश्वपक्षिवृक्षादिनानाभेदयुतम् जगत् विरिञ्चतोऽभूत् ।। ३० ।।

**उत्तक्रमात् पूर्वभवस्तु यो यः**
**श्रेष्ठः स स ह्यासुकानृते च ।**
**पूर्वश्च पश्चात् पुनरेव जातो**
**नाश्रेष्ठतामेति कथञ्चिदस्य ।**
**गुणास्तु कालात् [१]पितृमातृदोषात्**
**स्वकर्मतो वाभिभवं प्रयान्ति ।। ३१ ।।**

**व्यास**— 'पूर्वतनो यः सः श्रेष्ठः' इत्युक्त्या असुराणामृषिभ्यः आधिक्यं प्राप्तमित्यत आह— **आसुरकानिति** ।। पाद्मे यः पूर्वजातः स कस्याञ्चित्सृष्टौ पश्चाद्यदि जायेत तदा कथमित्यत आह— **नेति** ।। गुणानामदर्शनात् पूर्वाज्जातो श्रेष्ठः किं न स्यादित्यत आह— **अस्येति** ।। ३१ ।।

**वादि**— पूर्वस्तु पश्चादित्यत्र अत्रोक्तः पूर्वः पुनः कस्माच्चिन्निमित्तात् पुनर्जन्मनि जातोऽप्यश्रेष्ठतां नैति यथा धर्मावरजो भीमः, द्रोणात्मजोऽश्वत्थामा, अविवक्षिततारतम्ये सृष्ट्यन्तरे पश्चाज्जातो वेत्यर्थः ।। ३१-३६ ।।

**सङ्क**— एवं विरिञ्चादीनां मनुष्यान्तानां क्रमेणोत्पत्तिरुक्ता । तेनैव क्रमेण तेषां विरिञ्चादीनां आसुरकानृते वैशिष्ट्यं चास्तीति ज्ञातव्यमित्याह— **उक्तक्रमादिति** ।। नन्वेषामुत्पत्तिक्रमेण वैशिष्ट्यं कथं निर्धार्यते । पूर्वमुत्पन्नानां पश्चादुत्पत्युक्तेरित्यत आह— **पूर्व इति** ।। उक्तक्रमेणादिसृष्टौ पूर्वमुत्पन्नो अवान्तरसृष्टौ पश्चात्पुनरेवोक्तक्रमादन्यथा जातः अश्रेष्ठतां कथञ्चिन्नैतीत्यन्वयः। नन्वेवं जातस्यापि पूर्वजेभ्यो वैशिष्ट्यमस्ति चेत्तथाविधगुणानामदर्शने किं कारणमित्यत आह— **अस्येति** ।। ३१ ।।

**वरद**— नन्वेवं देवादीनां क्रमेणोत्पत्तिकथने किं प्रयोजनमित्यपेक्षायां तेनैव क्रमेण तेषां स्वरूपतारतम्यज्ञापनं प्रयोजनमाह— **उक्तक्रमादिति** ।। उक्तेन क्रमेण यो यः पूर्वभवः पूर्वमुत्पन्नः स श्रेष्ठः उत्तम इति ज्ञातव्य इत्यर्थः। ननु हिरण्यमधुकैटभादीनामसुराणां देवर्ष्यादिभ्योऽपि पूर्वमुत्पत्तिश्रवणात् तत्र श्रेष्ठत्वं नास्ति । अथ च पूर्वमुत्पन्नत्वं विद्यत इति हेतोर्व्यभिचारोऽन्यथा तेषामपि देवर्ष्याद्युत्तमत्वं प्राप्तमित्यतो व्याप्तेरपवादमाह— **आसुरकानृत इति** ।। असुरव्यतिरिक्तो यः पूर्वमुत्पद्यते सः हि अनन्तरमुत्पन्नादुत्तम इति व्याप्तेः न कोऽपि दोषः। असुरस्य तु पूर्वमुत्पन्नस्यैव श्रैष्ठ्यमिति नियमो नास्तीति भावः। ननु तथापि व्यभिचारः रुद्राद्यपेक्षया सनकादीनां पूर्वमुत्पन्नत्वश्रवणात् तत्र हेतुसद्भावेऽपि साध्याभावादित्याह— **पूर्वस्त्विति** ।। आदिसृष्टौ पूर्वमुत्पन्नः

---

१. मातृदोषात् - भीष्मपर्वणि अन्तिमाध्याये 'धर्मलोपेन जातोऽसि अतस्ते मतिरीदृशी' इति कर्णं प्रति कर्णस्य बुद्धिकालुष्यविषये कुन्तिकृतधर्मलोपस्य निमित्तत्वकथनरूपं भीष्मवचनम् । कालात्तथा स्वकर्मतो गुणहानिः- 'कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः।' भा. १-१५-२ । अर्जुनः कालेन स्वकर्मणा च नष्टं ज्ञानं पुनः प्राप इति वचनेन कालेन स्वकर्मणा च गुणाभिभव इति सिद्धम्।

पुनरवान्तरसृष्टौ पश्चादुत्पन्नः इत्येतावतास्य स्वस्मात् पूर्वजातस्य स्वावरस्य सकाशात् अश्रेष्ठतां अवरतां कथञ्चित् केनापि प्रकारेण नैति । न प्राप्नोतीत्यर्थः। तथा च आदिसृष्टौ यो यः पूर्वमुत्पन्नः सः स्वोत्पत्यनन्तरं उत्पन्नादुत्तम इति व्याप्तेराश्रयणान्न कोऽपि दोष इति भावः। ननूक्तेषु देवर्ष्यादिषु मानुषत्वेनावृतेषु उत्तक्रमेणोत्तमेष्वपि ज्ञानादयो गुणा न दृश्यन्ते तत्र किं कारणमित्यत आह— **गुणास्त्विति** ।। गुणा ज्ञानादयः कालात् कलिकालसम्बन्धात् पितृमातृदोषात् मानुषान्नपरिणततद्रेतश्शोणितसम्बन्धात् स्वकर्मतो वा स्वार्जितप्रारब्धादिकर्मसम्बन्धाद्वा अभिभावमनभिव्यक्तिं प्रयान्ति गच्छन्तीत्यर्थः। पुनस्तद्दोषवियोगे ते गुणाः प्रादुर्भवन्तीति भावः ।। ३१ ।।

**जना**— तारतम्ये इयमेव सृष्टिज्ञापिकेत्याह— **उक्तेति** ।। उक्तक्रमात्पूर्वभवः पाद्मसृष्टौ यो यः पूर्वोत्पन्नः सः श्रेष्ठः। अस्यापवादमाह— **आसुरकानिति** ।। पाद्मसृष्टौ यः पूर्वजातः स कस्याञ्चित् सृष्टौ पश्चात् यदि जायेत तदा कथमित्यताह— **पूर्व इति** ।। पूर्वः पाद्मसृष्टौ पूर्वजातः पुनरवान्तरसृष्टौ पश्चाज्जातः। उक्तक्रमादन्यथा जातः कथञ्चिदश्रेष्ठतापूर्वजातो वरतः अनुत्तमतां नैतीत्यन्वयः। ननु पूर्वजाता वरतः पश्चाज्जातः श्रेष्ठस्य विशेषगुणा-दर्शनादश्रेष्ठः किं न स्यादित्यत आह— **अस्येति** ।। अस्यावान्तरसृष्टौ पश्चज्जातस्य गुणाः ज्ञानानन्दादयः कालात् द्वापरकलियुगादिकालबलात् पितृमातृदोषात् मनुष्यान्नपरिणतरेतोयोनिसम्बन्धादिदोषात् स्वकर्मतो वा स्वार्जितप्रारब्धकर्मसम्बन्धात् वा अभिभवं अनभिव्यक्तिं प्रयान्ति गच्छन्तीत्यर्थः। तस्मान्नाश्रेष्ठतेति भावः ।। ३१ ।।

**ताम्र**— अयं च सृष्टिक्रमः तारतम्यान्तर्गत्वेन भगवत्प्राधान्यज्ञापनायोच्यते । न तु व्यसनितयेति भावेनाह— **उक्तक्रमादिति** ।। उक्तस्यापवादमाह— **आसुरकानिति** ।। चोऽवधारणे । आसुरकानेव ऋते इत्यर्थः। न चैवं क्रमविवक्षायां 'मित्रतन्मध्ये ब्रह्मपुत्रका' इति अनुव्याख्यानविरोधः। 'मित्रतन्मध्ये मित्राग्न्योर्मध्ये' इति सुधानयचन्द्रिकयोर्व्याख्यातत्वात् । तथा चाश्विन्यनन्तरसनकाद्यानन्तर्ये मरीच्यादीनां अङ्गीक्रियमाणे विरोध एवेति चेदत्र केचिदाहुः 'मरीचिर्मरुतामस्मि' इति मरुत्सु मरीचेरुक्तेः 'मरीचिमुख्या' इत्यस्य मरीचिनामक-मरुन्मुख्या इत्यर्थः। तथा च मरीचिमुख्या इत्यस्य ब्रह्मपुत्रार्थकत्वाभावादविरोधः' इति । तदापातसुन्दरं [1]"प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः' इति गीतातात्पर्ये मरीचिशब्दस्य भूतवायुपरत्वेन व्यवस्थापितत्वेन तस्य च सनकाद्यानन्तर्यायोगात् । वस्तुतस्तु तत्र महान्तः प्रष्टव्याः। ननु तथाऽपि नादेवानान्तर्यं सनकादीनां युक्तम् । एकादशस्कन्धतात्पर्ये सनकादीनां ज्ञानयोगित्वं देवानां भक्तियोगित्वं चाभिधीय

[2]"तस्मात् तेभ्योऽधिका ह्येषु देवा एव विशेषतः।
ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव तु ।।
विरागोऽभ्यधिकं तेषां सदैव सनकादिनाम् ।
ज्ञानाधिक्यात् मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनाम् ।।
न तु ज्ञानाधिकास्ते वै देवेभ्यश्च कथञ्चन ।।'

इति सनकादीनां देवावरत्वकथनेन सर्वदेवावरपुष्करावरस्यैव स्वीकार्यत्वेन साक्षात् देवानन्तर्ययोगापातात् ।

---

१. गी.तात्पर्य.१३-१७ । २. भा.ता. ११-२०-७ ।

न हि भक्तिज्ञानकर्मयोगिप्रकरणे श्रुतः देवशब्दः अश्व्यन्तदेवपर इति शक्यते वक्तुम् । तथात्वे पर्जन्यादीनां ज्ञानयोग्यवरत्वेन कर्मयोगित्वान्तर्भावेन कर्मयोगित्वापातादिति चेत् । तत्र सनकादिशब्देन न सनकादयश्चत्वार एव विवक्षिताः। किन्तु तदन्ये बहवो ज्ञानयोगिनोऽपि । तथा चोत्सर्गतो ज्ञानयोगिसमुदायस्य देवावरत्वोक्तौ न विरोधः इति । ननु आसुरव्यतिरिक्ते सति यस्य पूर्वोत्पन्नत्वं तस्योत्तमत्वमिति न सम्भवति । रुद्राद्यपेक्षया सनकादीनां पूर्वोत्पन्नत्वेऽपि उत्तमत्वा–भावादित्यत आह— **पूर्वस्त्विति** ।। आदिसृष्टौ पूर्वमुत्पन्नः अवान्तरसृष्टौ पश्चादुत्पन्नश्चेति अवरतां न यातीत्यर्थः। ततश्च [1]"आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः' इति व्याप्तेर्विवक्षितत्वात् शिवादेश्चादिसृष्टौ सनकाद्यपेक्षया पूर्वमुत्पन्नत्वस्य

[2]"ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः।
सनकाद्यास्तु वाराहे......................।।'

इति वचनसिद्धत्वात् न दोष इति भावः। ननूक्तेषु देवादिषु भूमौ जातेषु देवेषूक्ततारतम्यव्यत्ययो दृश्यते । तत्र किं कारणमित्यत आह— **अस्येति** ।। स्वकर्मतः स्वप्रारब्धकर्मतः ।। ३१ ।।

**भारतश्री**— उत्तमेषु देवावतारेषु क्वचित् ज्ञानादयो गुणाः न दृश्यन्ते तत्र कारणमाह— **गुणा इति** ।। ३१ ।।

**लयो भवेद्व्युत्क्रमतो हि तेषां**
**ततो हरिः प्रलये श्रीसहायः ।**
**शेते निजानन्दममन्दसान्द्र -**
**सन्दोहमेकोऽनुभवन्ननन्तः ।। ३२ ।।**

**व्यास**— अस्त्वेवं सृष्टिक्रमः लयक्रमः यः मुमुक्षुणा ज्ञातव्य इत्यत आह—**लय इति** ।। शेत इत्युक्त्या सानावृत्तित्वप्रतीतिं निवारयन्नाह— **निजेति** ।। ३२ ।।

**सङ्क**— इतोऽपि विरिञ्चादीनां उत्पत्तिक्रमात् वैशिष्ट्यमङ्गीकर्तव्यमित्याह— **लय इति** ।। अयं भावः। पूर्वपूर्वमुत्पन्नानां सामर्थ्याधिक्यात् विष्णोः सन्निधानाधिक्याच्च उत्पत्तिक्रमवैपरीत्येन लयो भवेत् पश्चादेवपूर्वेषां लयश्च भवेत् अत उत्पत्तिक्रमेण वैशिष्ट्यमुपपन्नमिति । तथा च वामने—

[3]"पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ।
व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः।।' इति ।

एवं वासुदेवादिभ्यो वैशिष्ट्यतारतम्यक्रमेण उत्पत्तिप्रकारो दर्शितः व्युत्क्रमेण लयश्चोक्तः। तेषु सर्वेषु प्रलयकाले हरेः स्थितिप्रकारं दर्शयति— **ततो हरिरिति** ।। ३२-३४ ।।

---

१. भा.ता. ११-१४-४ । २. आ.भा. १ । ३. सू.भा.२-३-१४ ।

**वरद**— एवमादिसृष्टौ पूर्वोत्पन्नहेतुना पूर्वपूर्वस्य विरिञ्चादेराधिक्यक्रमं प्रसाध्येदानीं व्युत्क्रमेण लयान्यथानुपपत्त्यापि तेषां पूर्वपूर्वस्याधिक्यमाह— **लय इति** ।। हि यस्मात्तेषां व्युत्क्रमतः उत्पत्तिश्चापेक्षया विपरीतक्रमेण लयो भवेदतः तस्मादेव हरिः प्रलये श्रीसहायः शेत इत्यन्वयः। व्युत्क्रमेण लये हि उत्तरोत्तरेषां पूर्वपूर्वेषु लय इत्युक्तं स्यात्तथा च उत्तरोत्तरापेक्षया पूर्वपूर्वेषु विष्णुसन्निधानाधिक्यं स्वरूपसामर्थ्याधिक्यं व्याप्त्याधिक्यं च लभ्यते । अत एव व्युत्क्रमेण लये विरिञ्चपर्यन्तलयप्राप्तौ रमारमणमात्रावशेष उपपद्यते । अन्यथा स न स्यादिति भावः। [1]"हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितम्' इति वचनात् श्रीसहाय इत्युक्तम्। शेते इत्यनेनेतरशयनवच्छयनप्राप्तावाह— **निजेति** ।। अनन्ता मूर्तयोऽवतारा यस्यासौ तथोक्तः। तथा अनन्तः कालतः देशतो गुणतश्च परिच्छेदशून्यता । तथा अनन्तशीर्षास्यकरोरुपादः अनन्ता अपरिमिताः शिरोमुखहस्तोरुपादा यस्य स तथा एतादृशः स परमात्मा स्वस्य विद्यमानाननन्तान् गुणाननुभवन् साक्षात्कुर्वन् तथा अमन्द्रसान्द्रसन्दोहं निजानन्दं भुञ्जन् अनल्पनिरन्तरसमुदायरूपं स्वरूपानन्दं भुञ्जानः तथानन्ताः शक्तयो यस्य स तथा परिपूर्णभोगा यस्य स तथा अत्रानन्दसमुदायस्य समुदायिभ्यो भेदशङ्कानिरासाय सन्दोहस्य विशेषणम्— **निजानन्दमिति**।। तथा भुञ्जन्नित्यनेनापूर्णत्वशङ्काप्राप्तौ तन्निवृत्त्यर्थमुक्तम्— **परिपूर्णभोग इति** ।। प्रलय इत्युक्त्या कालविशेष एवायमानन्दभोग इति शङ्का तन्निवृत्त्यर्थमजस्रमित्युक्तं निजरूपो मूलरूपः एवं भूतः सन् आस्ते तिष्ठतीत्यनेन शेते इत्येतद्व्याख्यातं भवति ।। ३२-३५ ।।

**जना**—लयक्रम एवोत्पत्तिक्रमः कुतो न स्यादित्यत आह— **लय इति** ।। तस्य व्युत्क्रमतः सिद्धत्वात् नासौ क्रमनियामक इति भावः। यद्वा व्युत्क्रमेण लयस्य सिद्धत्वात् उत्पत्तिक्रम एव श्रैष्ठ्यक्रमनियामक इत्याह— **लय इति** ।। हि यतः येषां देवानां लयः संहारः व्युत्क्रमतः नीचमारभ्य स्यादत उत्पत्तिक्रम एव तारतम्यक्रमनियामक इति भावः। उक्तमेतत्पाद्मेऽपि –

> 'पूर्वे पूर्वे यतो विष्णुसन्निधानक्रमाधिकाः।
> सामर्थ्याधिक्यमेतषां पश्चादेव लयस्तथा ।
> व्याप्तिश्चाभ्यधिका तेषां अत एव न संशयः।।' इति ।

लयकथनप्रसङ्गाद्धरेः प्रलयेऽवस्थानप्रकारमाह— **शेतेति** ।। हरेः शयनं नाम चक्षुर्निमीलनम् । लक्ष्म्याश्चान्यत्रानास्था । तदुक्तं व्योमसंहितायां –

> [2]"सुप्तिस्तु प्रकृतेः प्रोक्ता अतीवभगवद्रतिः।
> अनास्थान्यत्र च प्रोक्ता विष्णोः चक्षुर्निमीलनम् ।।' इति ।

शेत इत्युक्त्या प्राप्ताज्ञानसम्बन्धं निवारयति— **निजेति** ।। अमन्दः पूर्णः सान्द्रः निबिडः सन्दोहः समुदायरूप— स्तन्निजानन्दं स्वरूपानन्दं अनुभवन् । ननु प्रलये कथमस्य सत्त्वं इत्यत आह— **अनन्त इति** ।। कालतोऽपि परिच्छेदशून्यः पूर्वं लक्ष्मीसहायेत्युक्तम् । इदानीं एक इत्युक्तत्वात् । 'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः' इत्येतद्रूपो लयो ज्ञेयः ।। ३२ ।।

---

१. भा.ता. ११-२४-२६ । २. भा.ता. ३-६-२ ।

न हि भक्तिज्ञानकर्मयोगिप्रकरणे श्रुतः देवशब्दः अश्व्यन्तदेवपर इति शक्यते वक्तुम् । तथात्वे पर्जन्यादीनां ज्ञानयोग्यवरत्वेन कर्मयोगित्वान्तर्भावेन कर्मयोगित्वापातादिति चेत् । तत्र सनकादिशब्देन न सनकादयश्चत्वार एव विवक्षिताः। किन्तु तदन्ये बहवो ज्ञानयोगिनोऽपि । तथा चोत्सर्गतो ज्ञानयोगिसमुदायस्य देवावरत्वोक्तौ न विरोधः इति । ननु आसुरव्यतिरिक्ते सति यस्य पूर्वोत्पन्नत्वं तस्योत्तमत्वमिति न सम्भवति । रुद्राद्यपेक्षया सनकादीनां पूर्वोत्पन्नत्वेऽपि उत्तमत्वा-भावादित्यत आह— **पूर्वस्त्विति** ।। आदिसृष्टौ पूर्वमुत्पन्नः अवान्तरसृष्टौ पश्चादुत्पन्नश्चेति अवरतां न यातीत्यर्थः। ततश्च [1]'आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः' इति व्याप्तेर्विवक्षितत्वात् शिवादेश्चादिसृष्टौ सनकाद्यपेक्षया पूर्वमुत्पन्नत्वस्य

[2]'ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः।
सनकाद्यास्तु वाराहे......................।।'

इति वचनसिद्धत्वात् न दोष इति भावः। ननूक्तेषु देवादिषु भूमौ जातेषु देवेषूक्ततारतम्यव्यत्ययो दृश्यते । तत्र किं कारणमित्यत आह— **अस्येति** ।। स्वकर्मतः स्वप्रारब्धकर्मतः ।। ३१ ।।

**भारतश्री**— उत्तमेषु देवावतारेषु क्वचित् ज्ञानादयो गुणाः न दृश्यन्ते तत्र कारणमाह— **गुणा इति** ।। ३१ ।।

**लयो भवेद्व्युत्क्रमतो हि तेषां**
**ततो हरिः प्रलये श्रीसहायः ।**
**शेते निजानन्दममन्दसान्द्र -**
**सन्दोहमेकोऽनुभवन्ननन्तः ।। ३२ ।।**

**व्यास**— अस्त्वेवं सृष्टिक्रमः लयक्रमः यः मुमुक्षुणा ज्ञातव्य इत्यत आह—**लय इति** ।। शेत इत्युक्त्या सानावृत्तित्वप्रतीतिं निवारयन्नाह— **निजेति** ।। ३२ ।।

**सङ्क**— इतोऽपि विरिञ्चादीनां उत्पत्तिक्रमात् वैशिष्ट्यमङ्गीकर्तव्यमित्याह— **लय इति** ।। अयं भावः। पूर्वपूर्वमुत्पन्नानां सामर्थ्याधिक्यात् विष्णोः सन्निधानाधिक्याच्च उत्पत्तिक्रमवैपरीत्येन लयो भवेत् पश्चादेवपूर्वेषां लयश्च भवेत् अत उत्पत्तिक्रमेण वैशिष्ट्यमुपपन्नमिति । तथा च वामने—

[3]'पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ।
व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः।।' इति ।

एवं वासुदेवादिभ्यो वैशिष्ट्यतारतम्यक्रमेण उत्पत्तिप्रकारो दर्शितः व्युत्क्रमेण लयश्चोक्तः। तेषु सर्वेषु प्रलयकाले हरेः स्थितिप्रकारं दर्शयति— **ततो हरिरिति** ।। ३२-३४ ।।

---

१. भा.ता. ११-१४-४ । २. आ.भा. १ । ३. सू.भा.२-३-१४ ।

**वरद**— एवमादिसृष्टौ पूर्वोत्पन्नहेतुना पूर्वपूर्वस्य विरिञ्चादेराधिक्यक्रमं प्रसाध्येदानीं व्युत्क्रमेण लयान्यथानुपपत्त्यापि तेषां पूर्वपूर्वस्याधिक्यमाह— **लय इति** ।। हि यस्मात्तेषां व्युत्क्रमतः उत्पत्तिश्चापेक्षया विपरीतक्रमेण लयो भवेदतः तस्मादेव हरिः प्रलये श्रीसहायः शेत इत्यन्वयः। व्युत्क्रमेण लये हि उत्तरोत्तरेषां पूर्वपूर्वेषु लय इत्युक्तं स्यात्तथा च उत्तरोत्तरापेक्षया पूर्वपूर्वेषु विष्णुसन्निधानाधिक्यं स्वरूपसामर्थ्याधिक्यं व्याप्त्याधिक्यं च लभ्यते । अत एव व्युत्क्रमेण लये विरिञ्चपर्यन्तलयप्राप्तौ रमारमणमात्रावशेष उपपद्यते । अन्यथा स न स्यादिति भावः। [1]'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितम्' इति वचनात् श्रीसहाय इत्युक्तम्। शेते इत्यनेनेतरशयनवच्छयनप्राप्तावाह— **निजेति** ।। अनन्ता मूर्तयोऽवतारा यस्यासौ तथोक्तः। तथा अनन्तः कालतः देशतो गुणतश्च परिच्छेदशून्यता । तथा अनन्तशीर्षास्यकरोरुपादः अनन्ता अपरिमिताः शिरोमुखहस्तोरुपादा यस्य स तथा एतादृशः स परमात्मा स्वस्य विद्यमानाननन्तान् गुणाननुभवन् साक्षात्कुर्वन् तथा अमन्द्रसान्द्रसन्दोहं निजानन्दं भुञ्जन् अनल्पनिरन्तरसमुदायरूपं स्वरूपानन्दं भुञ्जानः तथानन्ताः शक्तयो यस्य स तथा परिपूर्णभोगा यस्य स तथा अत्रानन्दसमुदायस्य समुदायिभ्यो भेदशङ्कानिरासाय सन्दोहस्य विशेषणम्— **निजानन्दमिति**।। तथा भुञ्जन्नित्यनेनापूर्णत्वशङ्काप्राप्तौ तन्निवृत्त्यर्थमुक्तम्— **परिपूर्णभोग इति** ।। प्रलय इत्युक्त्या कालविशेष एवायमानन्दभोग इति शङ्का तन्निवृत्त्यर्थमजस्रमित्युक्तं निजरूपो मूलरूपः एवं भूतः सन् आस्ते तिष्ठतीत्यनेन शेते इत्येतद्व्याख्यातं भवति ।। ३२-३५ ।।

**जना**—लयक्रम एवोत्पत्तिक्रमः कुतो न स्यादित्यत आह— **लय इति** ।। तस्य व्युत्क्रमतः सिद्धत्वात् नासौ क्रमनियामक इति भावः। यद्वा व्युत्क्रमेण लयस्य सिद्धत्वात् उत्पत्तिक्रम एव श्रैष्ठ्यक्रमनियामक इत्याह— **लय इति** ।। हि यतः येषां देवानां लयः संहारः व्युत्क्रमतः नीचमारभ्य स्यादत उत्पत्तिक्रम एव तारतम्यक्रमनियामक इति भावः। उक्तमेतत्पाद्मेऽपि –

> 'पूर्वे पूर्वे यतो विष्णुसन्निधानक्रमाधिकाः।
> सामर्थ्याधिक्यमेतषां पश्चादेव लयस्तथा ।
> व्याप्तिश्चाभ्यधिका तेषां अत एव न संशयः।।' इति ।

लयकथनप्रसङ्गाद्धरेः प्रलयेऽवस्थानप्रकारमाह— **शेतेति** ।। हरेः शयनं नाम चक्षुर्निमीलनम् । लक्ष्म्याश्चान्यत्रानास्था । तदुक्तं व्योमसंहितायां –

> [2]'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीवभगवद्रतिः।
> अनास्थान्यत्र च प्रोक्ता विष्णोः चक्षुर्निमीलनम् ।।' इति ।

शेत इत्युक्त्या प्राप्ताज्ञानसम्बन्धं निवारयति— **निजेति** ।। अमन्दः पूर्णः सान्द्रः निबिडः सन्दोहः समुदायरूप— स्तन्निजानन्दं स्वरूपानन्दं अनुभवन् । ननु प्रलये कथमस्य सत्त्वं इत्यत आह— **अनन्त इति** ।। कालतोऽपि परिच्छेदशून्यः पूर्वं लक्ष्मीसहायेत्युक्तम् । इदानीं एक इत्युक्तत्वात् । 'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः' इत्येतद्रूपो लयो ज्ञेयः ।। ३२ ।।

---

१. भा.ता. ११-२४-२६ । २. भा.ता. ३-६-२ ।

**ताम्र—** एवमादिसृष्टौ पूर्वोत्पन्नत्वेन हेतुना देवानामाधिक्यक्रमं प्रसाध्य इदानीं व्युत्क्रमेण तेषां लयोऽप्याधिक्यगमकः इति विश्वोदयस्थितिलयेति प्रतिज्ञातस्रष्टृत्वमुपपाद्य लयहेतुत्वमप्याह— **लय इति** ।। अयं भावः। पूर्वपूर्वोत्पन्नानां बिम्बत्वात् पश्चादुत्पन्नानां तेष्वेव लयात् पूर्वोत्पन्ना अधिका इति । लये हरेरवस्थानप्रकारमाह— **शेत इति** ।। **श्रीसहायः इति** ।। श्रीभूनामकलक्ष्मीसहितः। तेन '[1]श्रीभूमिरिति रूपाभ्यां शेते विष्णुः' इति भागवततात्पर्यमपि सङ्गृहीतमिति बोध्यम् । श्रीसहाय इत्युक्त्यैव तस्याऽपि लयं सूचयति । 'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः' इति वचनात् । शेत इत्युक्त्या तस्यापि ज्ञाननिवृत्तिप्राप्त्या लयः प्राप्त इत्यत आह— **निजेति** ।। अमन्दः सङ्ख्यापरिमाणाभ्यामनल्पः। सान्द्रः निबिडः। अंशतोऽनन्त इति यावत् । सन्दोहः मोदप्रमोदादिसमुदायः तद्रूपं निजानन्दमित्यर्थः। आनन्दस्य गुणत्वेऽपि फलरूपत्वेन पृथगनुभवन्नित्युक्तम् ।। ३२ ।।

**अनन्तशीर्षास्यकरोरुपादः**
**सोऽनन्तमूर्तिः स्वगुणाननन्तान्**
**अनन्तशक्तिः परिपूर्णभोगो**
**भुञ्जन्नजस्त्रं निजरूप आस्ते ।। ३३ ।।**

**व्यास—** लये भगवतस्थितिप्रकारमेव ज्ञापयन्नाह— **अनन्तेति** ।। ३३ ।।

**जना—** प्रलये कस्याप्यभावाद् आनन्दानुभवी अन्यदा तु नेत्याकाङ्क्षायामाह— **अनन्तेति** ।। अनन्तानि शीर्षाणि आस्यानि मुखानि अनन्तकराः उरवः पादा यस्येति । अनन्ताः मूर्तय अवताराः यस्येति । अनन्ता शक्तिर्यस्येति । परिपूर्णः भोगो यस्य स नारायणः अनन्तान् सगुणान् सुखज्ञानादीन् भुञ्जन्नजस्त्रं निजरूपेण स्वाश्रयेणास्ते ।। ३३ ।।

**ताम्र—** तदनुभवश्च न कादाचित्क इत्याह— **अजस्त्रमिति** ।। मुक्तानामपि लये स्वगुणानुभवेऽपि 'भोगानां तु विशेषेण वैचित्र्यं लभ्यते क्वचित्' इत्युक्त्या त्यागभोगभावाभावाभ्यां विशेषवत् नेश्वरस्यानन्दवैचित्र्यमित्याह— **परिपूर्णेति** ।। अनन्तशीर्षास्यकरोरुपादः अनन्तमूर्तिरिति मूर्त्यानन्त्योक्त्या भेदो न मन्तव्य इत्याह— **एक इति** ।। अखण्डैकरसस्यानन्त्यमयुक्तमित्यतः शक्तिवशादित्याह— **अनन्तशक्तिरिति** ।। स्वस्य गुणसद्भावे तद्भोगो युक्तः। स एव कुत इत्यत आह— **अनन्त इति** ।। देशतः कालतः गुणतश्चापरिच्छिन्नः इत्यर्थः। गुणसद्भावे हेतुमाह— **अनन्तशक्तिरिति** ।। तथा च वक्ष्यति । 'दोषास्पृष्टौ गुणपूर्तौ च यस्मान्निसीमत्वात् विद्यते तस्य शक्तिः' इति । एतादृशस्यापि स्वसत्तायां देशकालापेक्षायां अनन्तशक्तित्वं हन्येत इत्यत उक्तम्— **निजरूप इति** ।। 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' इति श्रुतेरिति भावः। ननु कथं लयेऽनन्तमूर्तित्वं सर्वरूपाणां मूलरूपसंश्लेषादिति चेत् । जगद्व्यापृतरूपाणां संश्लेषेऽपि तदन्यनित्यव्यक्तानन्तरूपाणां भावात् ।। ३३ ।।

---

१. भा.ता. १०-९४-१२ ।

**एवं पुनः सृजते सर्वमेत-**
**देनाद्यनन्तो हि जगत्प्रवाहः।**
**[1]नित्याश्च जीवाः प्रकृतिश्च नित्या**
**कालश्च नित्यः किमु देवदेवः ।। ३४ ।।**

**व्यास**— द्वित्रिवारं सृष्टोपरमते किमिति जिज्ञासायामाह— **एवमिति** ।। अनन्तो हि जगत्प्रवाहः। ननु सृज्यानां स्वस्य वा नित्यत्वे पुनः कथं जगत्प्रवाहप्रवृत्तिः स्यादित्यत आह— **नित्या इति** ।। हि शब्देन 'जीवो नित्यो धातुरस्य त्वनित्यः' इत्यादिश्रुतिं सूचयति ।। ३४ ।।

**सङ्क**— नन्वेवं प्रलयकाले सर्वेषु लीनेषु पुनः सृष्टिरस्ति वा न वेत्याशङ्कायामाह— **एवमिति** ।। तत्र हेतुमाह— **अनाद्यनन्त इति** ।। ननु उत्पाद्यानां जीवानां उपादानकारणस्य निमित्तकारणस्य च अभावात् पुनः सृष्टिः कथमुपपद्यत इत्यत आह— **नित्या हीति** ।। ३४ ।।

**वरद**— नन्वेवं प्रलये अवस्थितेन हरिणा पुनः किं कृतमित्यपेक्षायां आह— **एवं पुनरिति** ।। एवं पूर्वोक्तरीत्या सर्वमेतज्जगत्पुनः सृजते हि यस्मात्तस्मात् जगत्प्रवाहोऽनाद्यनन्त इत्यर्थः। ननु महाप्रलये सर्वपदार्थाना मपरिसमाप्तत्वात् कथं पुनः सृष्ट्युपपत्तिरित्यत आह— **नित्या हीति** ।। न तावत्सृज्यानां परिसमाप्तिः तेषां नित्यत्वात् अनन्तत्वाच्च । नाप्युपादानाभावात् देहविशिष्टत्वेन तदुत्पत्यनुपपत्तिः। प्रकृतेरपि नित्यत्वात् । नापि सृष्टिकालरूपनिमित्तकारणाभावात् । कालस्यापि नित्यत्वात् । यदेवं जीवादेः पराधीनस्यापि नित्यत्वं तदा देवदेवस्य हरेर्नित्यत्वं किमु वक्तव्यमतः कर्तुरभावादपि पुनः सृष्ट्यनुपपत्तिर्न सम्भवतीत्यर्थः ।। ३४ ।।

**जना**— नन्वेवं प्रलयकाले सर्वेषु लीनेषु पुनः सृष्टिः अस्ति न वेत्याकाङ्क्षायामाह— **एवमिति** ।। एवं. पूर्ववत्सर्वमेतत् जगत्। तत्र हेतुमाह— **अनादीति** ।। जगत्प्रवाहः अनाद्यनन्तो हि यः अतः सृजत इत्यन्वयः। उपादाननिमित्तकारणयोरुत्पाद्यमानस्य जीवस्य चाभावात्कथं पुनः सृष्टिरित्यत आह— **नित्येति** ।। कैमुत्यन्यायेन कर्तुर्नित्यत्वमाह— **किमिति** ।। ३४ ।।

**ताम्र**— विश्वप्रलयानन्तरं न जगदुत्पादक इति कस्यचिन्मतम् । तदपाकरोति— **एवमिति** ।। यथा एतत्कल्पे सृष्टवानेवमित्यर्थः। 'यथा पूर्वमकल्पयत्' इति श्रुतेरिति भावः। ननु [2]'नासदासीन्नो सदासीत्' इति श्रुतौ उत्पाद्य—जीवानां उपादानप्रकृतेः निमित्तयोर्देशकालयोः कर्तुर्भगवतश्च अभावमुक्त्वा शून्यस्यैकस्य सत्त्वोक्तेः कथं प्रलयानन्तरं सृष्टिरित्यत आह— **नित्या इति** ।। हिशब्देन 'जीवो नित्यो धातुरस्य त्वनित्यः' इति श्रुतिं सूचयति ।। ३४ ।।

१. ब्रह्मवैवर्त/प्रकृतिखं/१/५,६ 'नित्यात्मा नभो नित्यं कालो नित्यो दिशो यथा ।... तथैव प्रकृतिर्नित्या ब्रह्मलीना सनातनी ।।'
२. ऋ.सं. १०-१२९-१ ।

**यथा समुद्रात् सरितः प्रजाताः**
**पुनस्तमेव प्रविशन्ति शश्वत् ।**
**एवं हरेर्नित्यजगत्प्रवाह-**
**स्तमेव चासौ प्रविशत्यजस्रम् ।। ३५ ।।**

**व्यास**— बुद्ध्यारोहार्थं सृष्टिप्रवाहं सदृष्टान्तं सङ्कोच्याह— **यथेति** ।। ३५ ।।

**सङ्क**— उक्तार्थमेव सदृष्टान्तमुपपादयति— **यथेति** ।। ३५ ।।

**वरद**— नन्वेवं जीवादीनां नित्यत्वे तेषां प्रलयो नाम क इत्यपेक्षायां सदृष्टान्तं सृष्टिप्रलयावुपपादयति— **यथेति** ।। तमेव समुद्रमेव शश्वत् प्रविशन्ति तथा हरेः सकाशान्निस्सरन्ति । अयं जगत्प्रवाहः। तं हरिमेव । असौ नित्यजगत्प्रवाहोऽजस्रं प्रतिलयं प्रविशतीत्यर्थः ।। ३५ ।।

**जना**— सृष्टिलयौ दृष्टान्तेनोपपादयति— **यथेति** ।। तमेव समुद्रमेव शश्वत् प्रविशन्ति । एवमसौ नित्यः जगत्प्रवाहः नित्यश्चासौ जगतः प्रवाहश्च । प्रवाहरूपेण नित्यो लोकः। हरेर्निसृत्य तमेव हरिमेवाजस्रं प्रविशति ।। ३५ ।।

**ताम्र**— बुद्ध्यारोहार्थं सृष्टिप्रवाहं सदृष्टान्तमाह— **यथेति** ।। ३५ ।।

**एवं विदुर्ये परमामनन्ता-**
**मजस्य शक्तिं पुरुषोत्तमस्य ।**
**तस्य प्रसादादथ दग्धदोषा-**
**स्तमाप्नुवन्त्याशु परं सुरेशम् ।। ३६ ।।**

**व्यास**— किमर्थं सृष्ट्यादिरुक्ता इति जिज्ञासायामाह— **एवमिति** ।। ३६ ।।

**सङ्क**— नन्वेवं श्रीविष्णोर्निरतिशये सामर्थ्ये सिद्धे पुरुषैः किमनुष्ठेयं किञ्च तेषां फलमित्याकाङ्क्षाया-माह— **एवं विदुरिति** ।। विदुरित्यनेन वैराग्यभक्त्युपासाख्यसाधनान्यप्यनुष्ठेयानि इत्युपलक्षितानीति द्रष्टव्यम् ।। ३६ ।।

**वरद**— नेदं जगज्जन्मादिकर्तृत्वं मिथ्येति मन्तव्यं तज्ज्ञानमात्रेण सर्वपुरुषार्थोत्तममोक्षप्राप्तेः तर्हि मिथ्याभूतस्य ज्ञाने न किञ्चित्फलमित्याशयेनाह— **एवमिति** ।। एवमुक्तरीत्या पुरुषोत्तमस्य हरेः परमामुत्कृष्टां अनन्तां अपरमितां शक्तिं सृष्टिसंहारकर्तृत्वशक्तिं ये विदुः ते अनन्तस्य हरेः प्रसादात् दग्धदोषाः भस्मीभूतसर्वकर्माणः सन्तः, तं परेशं सर्वोत्तमं परं विलक्षणं हरिं प्राप्नुवन्तीत्यर्थः। अत्र विदुरित्यनेन वैराग्यभक्तिश्रवणमनन-निदिध्यासनजन्यापरोक्षज्ञानं भगवत्प्रसादजनकं विवक्षितमिति सूचयितुं तस्य प्रसादादित्युक्तम् ।। ३६ ।।

**जना**— सृष्टिप्रलययोः अवश्यज्ञेयत्वं ज्ञापयितुं ज्ञानफलमाह— **एवमिति** ।। अजस्य **पुरुषोत्तमस्य** । परमामनन्तां शक्तिमेव । सृष्टिलयादिकर्तृत्वेन ये विदुस्ते । अथ वैराग्यभक्त्यपरोक्षज्ञानानन्तरम् । तस्य हरेः प्रसादाद्दग्धदोषा आशु तमाप्नुवन्ति । आदौ देवान्प्राप्यान्ते तमाप्नोतीत्येतज्ज्ञापयति— **सुरेशमिति** ।। एतत्कुत इत्यत उक्तम्— **परमिति** ।। ३६ ।।

**ताम्र**— सृष्टिप्रलयकर्तृत्वमुक्त्वा मोक्षप्रदत्वमाह— **एवमिति** ।। यद्वा जन्मादिकर्तृत्वमपारमार्थिकमिति चेत् तदसत् तज्ज्ञानमात्रेण सर्वपुरुषार्थोत्तममोक्षप्राप्तेः। न हि मायिकज्ञानात् मायानिवृत्तिरिति भावेन भगवतो मोक्षप्रदत्वलक्षणमहिमानमाह— **एवमिति** ।। ३६ ।।

**देवानिमान् मुक्तसमस्तदोषान्**
**स्वसन्निधाने विनिवेश्य देवः ।**
**पुनस्तदन्यानधिकारयोग्यां-**
**स्तत्तद्गणानेव पदे नियुङ्क्ते ।। ३७ ।।**

**व्यास**— पूर्वं भगवान् यानस्राक्षीत् तानेव कल्पान्तरेऽपि सृजति किमिति जिज्ञासायामाह विशेषमाह— **देवानिति** ।। ३७ ।।

**सङ्क**— ननु एवं श्रीपुरुषोत्तमं ज्ञात्वा मुक्तिं गतानां देवानां पुनरावृत्त्यभावात् कथं अनाद्यनन्तो जगत्प्रवाहः सिद्ध्यति इत्यत आह— **देवानिति** ।। ३७ ।।

**वरद**— ननु 'एवं पुनः सृजते सर्वमेतत्' इत्युक्त्या संसारान्मुक्तानामपि पुनः सृष्टिः प्रतीयत इत्यत आह— **देवानिमानिति** ।। इमान् देवादीन् मनुष्योत्तमपर्यन्तान् सज्जीवान् स्वसन्निधाने यथायोग्यश्वेतद्वीपादौ विनिवेश्य स्थापयित्वा पुनस्तदन्यानधिकारयोग्यान् तत्तद्गणान् ऋज्वादितत्तद्गणसंस्थान् जीवान् पदे तत्तद्गणयोग्यपदे नियुङ्क्ते नियोजयतीत्यर्थः। विमुक्तसमस्तदोषानिति हेतुगर्भविशेषणं तेषां पुनः संसारप्रापककर्माद्यभावादन्यानेव विनियुङ्क्ते इति भावः ।। ३७ ।।

**जना**— देवानां मुक्त्यनन्तरं पुनस्तत्तत्पदाधिपत्यं कथं केन इत्यत आह— **देवानिमानिति** ।। तदन्यान् मुक्तेभ्योऽन्यान् तत्तत् गणान् ऋज्वादिगणान् । तत्रापि अधिकारयोग्यान् वायुरुद्रादीन् एव पदे ब्रह्मशेषादिपदे नियुङ्क्ते ।। ३७ ।।

**ताम्र**— नन्वेवं ज्ञानिनां न सर्वेषां मोक्षो युक्तः देवानां तदयोगात् तथात्वे कल्पान्तरे देवताभावेन वेदाप्रामाण्यं प्रसज्येत । वाच्यहीनाया वाचः प्रामाण्यायोगात् इत्यत आह— **देवानिति** ।। ननु तदन्येषां कल्पान्तरे पदनियोगेऽपि 'इन्द्रः सहस्राक्षः स्वर्गाधिपः' 'ब्रह्मा चतुर्मुखः पारमेष्ठ्याधिपः' इति नामरूपाधिकारपरश्रुत्यप्रामाण्यमित्यत आह— **अधिकारयोग्यानिति** ।। अत एव समाननामरूपानिति च ग्राह्यम् । यस्य कस्यापि तथाभावं वारयति— **तत्तद्गणानिति** ।। तत्तद्गणस्थान् । ननु कुत एवं गुरुतरकल्पना पूर्वपूर्वकल्पे मुक्ता एव पुनरावर्तिन इति वा

तेषां नित्यसंसारित्वं वा किं न स्यादित्यत आह— **मुक्तेति** ।। संसारापादककर्मलेशाभावात् । स्वर्गगतस्येव पुनरावृत्त्यापादककर्माभावाच्च न तदङ्गीकारार्हमित्यर्थः (स्वर्गगतस्येव पुनरावृत्त्यापादनविषयकमानाभावात्) ।। ३७ ।।

**पुनश्च मारीचत एव देवाः**
**जाता अदित्यामसुराश्च दित्याम् ।**
**गावो मृगाः पक्ष्युरगादिसत्त्वा**
**दाक्षायणीष्वेव समस्तशोऽपि ।। ३८ ।।**

**व्यास**— एवं सर्गमुक्त्वा अनुसर्गमाह— **पुनरिति** ।। मारीचतः मरीचिपुत्रात् काश्यपात् ।। ३८ ।।

**वादि**— पूर्वोक्तपुनर्जन्म क्वेत्यत आह— **मारीचतः** ।। मरीचिपुत्रो मारीचः कश्यपः। पश्चादुत्पन्नदेवानां पितृतया पूर्वोत्पन्नकश्यपान्नैच्याभावादिति भावः। पूर्वोक्ता सृष्टिः सर्गः। अयमनुसर्ग इति ज्ञेयम् ।। ३८ ।।

**सङ्क**— एवं प्रासङ्गिकीं कथां निर्वृत्य प्रकृतमेव सृष्टिप्रकारं प्रपञ्चयति— **पुनश्चेति** ।। मारीचात् कश्यपात् । अदित्यां देवाः पुनः जाताः । दक्षपुत्रीषु सुरभ्यादिषु कश्यपजायास्वेव गवादयो जाता इत्यर्थः ।। ३८ ।।

**वरद**— एवं प्रासङ्गिकं प्रलयादि निरूप्य प्रकृतां सृष्टिमेवाह— **पुनश्चेति** ।। चतुर्मुखादुत्पत्यनन्तरं पुनर्मारीचतः मरीचपुत्रात् कश्यपात् । अदित्यां दक्षपुत्र्यां तद्भार्यायां देवाः जाता इत्यर्थः। गावो मृगाः पक्ष्युरगादिसत्त्वाः प्राणिनो । दाक्षायणीष्वेव दक्षपुत्रीष्वेव सुरभिविनताकद्रु इत्यादिषु कश्यपभार्यादिषु । समस्तशः सर्वेऽपि जाता इत्यर्थः ।। ३८ ।।

**जना**— इदानीं कश्यपादनुसर्गमाह— **पुनश्चेति** ।। मारीचतः मरीचिपुत्रात्कश्यपाददित्यां देवाः तस्मादेव दित्यां आसुराः। दाक्षयणीषु विनतादिषु । एवकारः उक्तयोर्दित्यदित्योरपि दक्षकन्यात्वं सूचयति । समस्तशः सर्वे सत्त्वाः प्राणिनः 'सत्त्वमस्त्रीषु जन्तुषु' इत्यभिधानम् ।। ३८ ।।

**ताम्र**— एवं सर्गमुक्त्वा अवान्तरसर्गमाह— **पुनश्चेति** ।। नन्वियं सृष्टिः विरिञ्चसृष्ट्यनन्तरमेव वक्तव्या । सत्यम् । तारतम्यज्ञापकसृष्टिप्रसङ्गात् तज्ज्ञापकलयं तज्ज्ञानान्मोक्षं च निरूप्यावान्तरसृष्टिरनन्तरमुच्यते । अतः तारतम्यस्य दुर्ज्ञानत्वादिति ।। ३८ ।।

**ततः स मग्नामलयो लयोदधौ**
**महीं विलोक्याशु हरिर्वराहः।**
**भूत्वा विरिञ्चार्थमिमां सशैला-**
**मुद्धृत्य वारामुपरि न्यधात् स्थिरम् ।। ३९ ।।**

**व्यास**— साम्प्रतं हरेरवतारकथामाह— **तत इत्यादिना** ।। ३९ ।।

**वादि**— साम्प्रतं हरेरवतारकथामाह— **तत इति** ।। आलयो लयरहितो । वराहः आदिवराहो हरिः। दशावतारेभ्योऽपि पूर्वं सृष्टविरिञ्चस्योपकाराय श्वेतवराहतयावतीर्णो हरिरित्यर्थः। मत्स्यावतारस्तु षट्सप्तममन्वोरन्तरप्रलयोदके नानाविधौषधिवनस्पतीनां बीजसङ्ग्रहायाभिनवनौकारूपधरां शेषाख्यदाम्ना स्वशृङ्गाग्रे निबध्य चरति । अतोऽसाववतार आदिवराहात्पश्चात्तन एव । अतो न क्रमभङ्गः शङ्कनीयः। लयोदधौ लक्षयोजनघनीभूतभूमेरधस्तादुत्तरखर्परमारभ्य दक्षिणखर्परपर्यन्तं पूर्वखर्परमारभ्य पश्चिमखर्परपर्यन्तं कोटीनां पञ्चाशता विस्तीर्णे लक्षोनपञ्चविंशत्कोटिभिरधः खर्परपर्यन्तं खातवती घनोदकाख्यमहासमुद्रे । मग्नां भारेण स्वयमेव मग्नाम् । परितः स्थितान्धतमसो विगलितां विष्वक् किञ्चिदधिकसप्तकोटिविस्तारां महीमित्यर्थः। एवमल्पपरिमाणवत्या मह्या महापरिमाणे घनोदके मज्जनं किमपूर्वमिति भावः। वारामुपरि घनोदकवारामुपरि ।। ३९ ।।

**सङ्क**— एवं तावत् ब्रह्माण्डात् बहिरन्तश्च सृष्टिप्रकारो भगवतः श्रीनारायणस्य निरतिशयसामर्थ्यप्रदर्शकः प्रपञ्चितः। अथेदानीं ब्रह्माण्डान्तः दुर्जनसंहरणसज्जनसंरक्षणार्थं कृतान् हरेर्लीलावतारान् वक्तुं तं प्रसङ्गं प्रथमतो दर्शयति— **ततः स इत्यादिना** ।। ३९ ।।

**वरद**— एवं सृष्टिसंसारमोक्षकर्तृत्वरूपं श्रीविष्णोः महन्माहात्म्यं निरूप्य अन्यन्माहात्म्यं उपवर्णयितुं उपक्रमते — **तत इत्यादिना** ।। स्थितिर्नाम लोकोपद्रवकारिदुर्जनसंहरणपूर्वकसज्जनसंरक्षणम् । तच्च वराहादिलीलावतारैः भगवता कृतमित्यभिप्रेत्य प्रथमस्तावद्वराहप्रादुर्भावनिमित्तमाह— **तत इति** ।। ततः सर्वसृष्ट्यनन्तरं अलयः प्रलयरहितः स हरिः लयोदधौ प्रलयसमुद्रे मग्नां महीं भूमिं विलोक्याशु वराहो भूत्वा विरिञ्चार्थं सशैलामिमामहीं उद्धृत्य वारां लयजलानां उपरि स्थिरं यथा भवति तथा न्यधात् स्थापयामासेत्यर्थः। अत्र विरिञ्चार्थं इत्यनेन स्वायम्भुवमनुना प्रार्थितस्य चतुर्मुखस्य ध्यायमानस्य नासापुटाद्वराहतोको निरगादिति [1]भागवतीं कथां सूचयति । अत्र लयोदधौ मग्नामिति विशेषणेन द्विवारं मग्नां भूमिमुद्धरता वराहेण हिरण्याख्योऽसुरोऽपि द्विवारं हत इति विशेषणं सूचितवान् भगवानाचार्यः ।। ३९ ।।

**जना**— इदानीं वराहावतारमाह— **तत इति** ।। ततः अलयः प्रलयरहितः। लयरहितत्वादेव लयकाले वर्तमानः सः हरिः वराहो भूत्वा लयोदधौ प्रलयसमुद्रमग्नां स्वत एव मग्नां महीं विलोक्य इमां सशैलां पर्वतैः सहितां उद्धृत्य स्थिरं यथाभवति तथा । वारां जलानामुपरि विरिञ्चार्थे ब्रह्मणोऽर्थे न्यधात् स्थापयामास । अनेन ब्रह्मणा सृष्टिं कुर्विति आज्ञप्तः स्वायंभुवो मनुः भूम्यभावात् कथं स्रक्ष्ये इत्युक्ते ब्रह्मणि चिन्तयति तन्नासापुटात् अङ्गुष्ठमात्राभिव्यक्त इति कथां सूचयति । इदानीमपि हिरण्याक्षो हत इति ज्ञेयम् । इदं प्रथमं प्रयोजनम् ।। ३९ ।।

---

१. भा. ३-१४-२० ।

**ताम्र**— एवं भगवतः सृष्टिलयमोक्षकर्तृत्वमुपपाद्य व्याससहितदशावतारैः कृतां प्राप्तलोकोपद्रवपरिहारपूर्वक–संरक्षणरूपं स्थितिं समग्रग्रन्थेनोपपादयन् प्रथमस्कन्धतृतीयाध्याये [१]"द्वितीयं तु भवायास्य रसातलगतां महीम्' इति वराहस्यादित्वेनोक्तत्वात् प्रथमपरार्धप्रथमदिने प्रथमतः कृतत्वाच्च प्रथमतो वराहावतारमाह— **तत इति** ।। गर्भोदकस्यैवोत्तरत्र लयहेतुत्वात् लयोदधावित्युक्तम् । अत्र ससमुद्रामित्याद्यनुक्त्वा सशैलामित्युक्त्या जम्बूद्वीपमात्रं मग्नमुद्धृतं चेति केचिदाहुः । अन्ये तु 'दंष्ट्राग्रेणोद्धरन् पृथ्वीं सपर्वतवनार्णवाम्' इति वराहपुराणवचनात् –

[२]"उत्पाट्य बाहुसाहस्रैः पृथिवीं समहीधराम् ।
ससागरद्वीपयुतां सर्वप्राणिभिरावृताम् ।।'

इति पाद्मवचनाच्च शैलशब्दोऽन्योपलक्षण इत्याहुः ।। ३९ ।।

**अथाब्जनाभप्रतिहारपालौ**
**शापात् त्रिशो भूमितले प्रजातौ ।**
**दित्यां हिरण्यावथ राक्षसौ च**
**पैतृष्वसेयौ च हरेः परस्तात् ।। ४० ।।**

**व्यास**— पश्चाद्धरेः पैतृष्वसेयौ ।। ४० ।।

**वादि**— इदानीं वराहावतारप्रसङ्गात् क्रममुल्लङ्घ्य दशावतारेषु तृतीयावतारभूतनीलवराहस्यापि कथां प्रस्तावयति— **अथेति** ।। प्रतिहारपालौ गच्छतः आगच्छतश्च प्रति अन्तराहरति हरति चेति प्रतिहारो द्वारं, तस्य पालौ । दित्यां हिरण्यौ हिरण्याक्षहिरण्यकशिपू । अथ अनन्तरं विश्रवसः पुत्रत्वेन दितिजत्वाभावात् केवलं राक्षसौ रक्षोजातिमन्तौ रावणकुम्भकर्णौ । परस्तात् पश्चात् । हरेः कृष्णस्य । पैतृष्वसेयौ पितृष्वस्रोः पुत्रौ शिशुपालदन्तवक्रौ ।। ४० ।।

**सङ्क**— ननु भूम्युद्धरणसमये भगवता श्रीवराहेण किमाश्चर्यं कृतमित्याङ्काक्षायां तदाश्चर्यं दर्शयितुं वराहवतारप्रसङ्गं सविस्तारमाह— **अथेत्यादिना** ।। श्रीविष्णवनुमोदितानां सनकादीनां शापात् श्रीपद्मनाभद्वारपालौ भूमितले त्रिशो जाताविति पृथगन्वयः। हिरण्यौ हिरण्यकहिरण्याक्षौ । राक्षसौ रावणकुम्भकर्णौ । परस्तादुपरितने तृतीयजन्मनि । हरेः कृष्णस्य पैतृष्वसेयौ पितुर्वसुदेवस्य भगिनीपुत्रौ शिशुपालदन्तवक्रावित्यर्थः ।। ४० ।।

**वरद**— तत्र कथं भुवो द्विवारमग्नत्वं कथं च द्वौ हिरण्याक्षौ केन प्रकारेण च हतावित्याकाङ्क्षायां आह— **अथेत्यादिना** ।। अब्जनाभस्य पद्मनाभस्य । हरेः प्रतिहारपालौ द्वारपालकौ जयविजयाख्यौ । शापात् द्वारि निरुद्धानां सनकादीनां शापात् । त्रिशः त्रिवारम् । भूमितले प्रजज्ञौ इत्यर्थः। त्रिशः इत्युक्तं विवृणोति— **दित्यामिति**।। आदौ दित्यां हिरण्यौ हिरण्यकशिपुहिरण्याक्षनामानौ तन्नामकासुराविष्टौ जातावित्यर्थः। अथ तदनन्तरं राक्षसौ

१. भा.ता.१-३-७ । २. पद्मपुराण.उत्तरखण्ड.२३७-१३ ।

रावणकुम्भकर्णनामानौ जातावित्यर्थः। परस्तात् तृतीये जन्मनि । हरे: पैतृष्वसेयौ पितुर्वसुदेवस्य भगिन्याः पुत्रौ शिशुपालदन्तवक्रनामानौ जातावित्यर्थ: ।। ४० ।।

**जना**— द्वितीयं प्रयोजनं वक्तुं कथामाह— **अथेति** ।। अथ प्रयोजनान्तरमस्यावतारस्योच्यते । अब्जनाभस्य द्वारपालौ जयविजयौ शापाल्लक्ष्मीसनकादिविशापात् भूमितले त्रिश: प्रजातौ। तिस्रो विधाः दर्शयति— **दित्यामिति**।। दित्यां हिरण्यौ हिरण्याक्षहिरण्यकशिप्वाख्यौ जातौ । अथ राक्षसौ रावणकुम्भकर्णौ । परस्तात् अनन्तरम् । कृष्णावतारे हरे: कृष्णस्य पैतृष्वसेयौ च दन्तवक्रशिशुपालौ जातौ ।। ४० ।।

**ताम्र**— वराहावतारानन्तरं सोपस्करमाह— **अथेति** ।। ४० ।।

**[१]ततो हिरण्याक्ष उदारविक्रमो**
**दितेः सुतो योऽवरजः सुरार्थे ।**
**धात्रार्थितेनैव वराहरूपिणा**
**धरोद्धृतौ पूर्वहतोऽब्जजोद्भवः ।। ४१ ।।**

**व्यास**— पूर्वधरोद्धृतौ हिरण्याक्षस्य हतत्वात् पुन: कथं हत इत्यत आह— **धरोद्धृताविति** ।। ४१-४२ ।।

**वादि**— हिरण्याक्षस्यादिवराहेणैव हतत्वात्कथं पुनर्हत इत्यत उक्तम्— **धरोद्धृताविति** ।। धरोद्धृतौ स्वयमेव मग्नधरोद्धृतौ पूर्वहतोऽध्वनि निरोद्धुमागते सति पूर्वहतोऽब्जसम्भव: ब्रह्मण: पुत्रोऽसावादिहिरण्याक्षनामा। अयं तु कश्यपसुत: बलान् महीमम्बुनि निमज्जयामास तदा तामुद्धरता दशावतारपङ्क्तिस्थेन हरिणा हत:। उभावपि हिरण्याक्षनामानौ । हन्तारौ च वराहनामानौ अत एव सङ्कलय्य कथनमिति भाव: ।। ४१ ।।

**सङ्क**— एवं प्रकृते किमायातमित्यत आह— **तत इति** ।। दितेरवरज: सुतो हिरण्याक्षस्तेन चौर्याद्रसातले निक्षिप्ताया धराया उद्धृतौ सुराणां सुखार्थे ब्रह्मणा स्तुतिपूर्वकं प्रार्थितेन श्रीवराहस्वरूपेणैव हस्तेन कर्णताडनात् हत इत्यर्थः। ननु दितिसुतहिरण्याक्षवधात् पूर्वमेव वराहावतारेण हिरण्याक्षो हत इति पौराणिकी श्रुतिः। तत्कथं इत्यत आह— **पूर्वहत इति** ।। स्वभावत एव लयोदके मग्नाया धरायाः उद्धृतौ वराहस्य दंष्ट्राग्रेण पूर्वं हतो ब्रह्मज: अतो न विरोध इत्यर्थः। तथा च ब्रह्माण्डे—

[२]'ब्रह्मजस्तु हिरण्याक्षो प्रथमं दंष्ट्रया हत:।
स एव पार्षदाविष्टो द्वितीय: कर्णताडनात् ।।
पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् ।
भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना ।।' इति ।। ४१ ।।

---

१. 'हत' इति जनार्दनीये पाठान्तरम् । २. भा.ता.३-१५-३३ ।

**वरद**— ततः किमित्यत आह— **तत इति** ।। तत्र यो दितेः सुतो हिरण्याक्षो अवरजः स सुरार्थे देवाना-मर्थे धात्रा ब्रह्मणा अर्थितेन वराहरूपिणा हरिणा हत इत्यर्थः। तथा पूर्वं धरोद्धृतौ प्रलयोदके मग्नायाः धराया उद्धृतौ अब्जजात् ब्रह्मणः सकाशादुत्पन्नः आदिहिरण्याक्षः पूर्वं हत इत्यर्थः। अत्रायं भावः– 'पूर्वं स्वत एव लयोदके मग्नां भूमिं स्वायम्भुवमनोरर्थे ब्रह्मणा प्रार्थितेन हरिणा उद्धृतां आद्यब्रह्मजेन आदिहिरण्याक्षेण विरोधे कृते सति प्रथमं स हिरण्याक्षः दंष्ट्रया हतः। द्वितीयवारं तेनाविष्टेन द्वारपालेन तन्नाम्ना बलात् मज्जितां भूमिमुद्धर्तुं सुरैः प्रार्थितेन ब्रह्मणा स्तुतेन तेनैव वराहरूपेण हस्तेन कर्णताडनात् दितेः सुतः हिरण्याक्षः हत इति' । तथा चोक्तं ब्रह्माण्डे–

'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः।
स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् ।।
पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् ।
भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना ।।' इति ।। ४१ ।।

**जना**— ततः तयोर्मध्ये दित्यां उत्पत्त्यनन्तरं वा । उदारः उत्कृष्टः विक्रमः पराक्रमो यस्य सः। दितेः सुत अवरजः हिरण्याक्षः धात्रार्थितेन वराहरूपिणैव धरोद्धृतौ हिरण्याक्षमज्जितभूम्युद्धरणकाले हत इति शेषः। हत इति क्वचित्पाठः। इदं द्वितीयं प्रयोजनम् । ननु एकस्य द्विवारहननं कथमित्यत उक्तम्— **पूर्वेति** ।। अब्जोद्भवः ब्रह्मपुत्रः पूर्वं हतः। तेनैकस्य न द्विवारहननम् । तदुक्तं ब्रह्माण्डे–

'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः।
स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् ।।
पूर्वं लयोदधौ मग्नां द्वितीयं तेन मज्जिताम् ।
भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना ।।' इति ।

अत एव अन्यत्र धरोद्धृताविति सामान्योक्त्या देवतानयनं तदुद्धारशब्देन ज्ञायते । पूर्वं तु 'सशैलां' इत्युक्तं स्वतो मग्नामभिप्रेत्य । अत एव अन्यत्र 'सगिरिवरधरातलवह सुसूकर' इति । वाराहे च 'दंष्ट्राग्रेणोद्धरता पृथ्वीं सपर्वतवनार्णवाम्' इति ।। ४१ ।।

**ताम्र** ।। **तत इति** ।। दितेरवरजः सुत हिरण्याक्षनामा स स्वेन वीर्यात् । रसातले निक्षिप्ताया धरायाः उद्धृतौ विषये सुरार्थे धात्रर्थितेन वराहरूपिणा कर्णताडनाद्धत इत्यर्थः। ननु प्राथमिकवराहावतारेणैव हिरण्याक्षो हत इति पौराणिकीकथा, कथमेवमुच्यते इत्यत आह— **धरोद्धृताविति** ।। स्वत एव धराया लयोदके मग्नायाः उद्धृतौ क्रियमाणायाम् । दंष्ट्रया पूर्वहतस्तु ब्रह्मजो हिरण्याक्षः अतो न विरोध इत्यर्थः। यथाऽह –

'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः।
स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् ।।
पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् ।
भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना ।।' इति ।। ४१ ।।

**भारतश्री**— पूर्वं हतः हिरण्याक्षः पुनः दित्यां जातः । पूर्वं ब्रह्मोद्भवः ।। ४१– ५० ।।

**अथो विधातुर्मुखतो विनिःसृतान्**
**वेदान् हयास्यो जगृहेऽसुरेन्द्रः।**
**निहत्य तं मत्स्यवपुर्जुगोप**
**मनुं मुनींस्तांश्च ददौ विधातुः ।। ४२ ।।**

**वादि—** मनुं वैवस्वतमनुं जुगोप ।। ४२ ।।

**सङ्क—** अथ मत्स्यावतारस्य सङ्गतिं दर्शयति— **अथो विधातुरिति** ।। मनुं वैवस्वतमनुं तांश्च वेदानित्यर्थः ।। ४२ ।।

**वरद—** एवं वाराहकल्पमनुसृत्य आदौ वराहावतारं तत्कृतं प्रयोजनद्वयं चोक्त्वा अनन्तरं मत्स्यावतारं तत्कृतं प्रयोजनद्वयञ्चाह— **अथो इति** ।। तत्रादौ विधातुः ब्रह्मणः मुखतो मुखचतुष्टयात् विनिःसृतान् चतुरो वेदान् हयास्यनामा असुरेन्द्रो जगृहे गृहीतवान् । तदा मत्स्यवपुस्तं हयास्यं हत्वा तान् वेदान् विधातुः विधात्रे ददावित्यन्वयः। इदमेकं प्रयोजनम् । द्वितीयं च मत्स्यावतारप्रयोजनमाह— **मनुं मुनींश्च जुगोपेति** ।। मनुं वैवस्वतमनुं मुनीन् सप्तर्षीन् रक्षितवानित्यर्थः ।। ४२ ।।

**जना—** मत्स्यावतारमाह— **अथो इति** ।। हयास्यः हयग्रीवः असुरेन्द्रः दैत्यश्रेष्ठः विधातुर्मुखतः विनिस्सृतान् वेदान्, देहधारिणो वेदान् जगृहे । अत्र प्रमाणं च वक्ष्यते । मत्स्यवपुस्तं हयास्यं निहत्य मनुं मुनीन् सप्त ऋषीन् जुगोप । तान् वेदान् विधातुर्ददौ ।। ४२ ।।

**ताम्र—** [१]'रूपं स जगृहे मात्स्यं' इति वराहानन्तरं मत्स्यावतारोक्तेः मध्येऽवतारान्तरोक्तावपि तेषां दशावतारा-प्रविष्टत्वात् वराहानन्तरं मत्स्यावतारकथामाह— **अथो इति** ।। वेदान् वेदाभिमानिनो देवान् । व्याप्तानां जडानां ग्रहणायोगात् । उक्तं च (पुराणान्तरे) वराहपुराणे-

'जघान सोमकरक्षो व्याजहार त्रयीं ततः।
ततस्तु दत्तवान् देवः शोभते वेधसे पुनः।।
वेदास्तु सर्वे सम्भूय परस्परमचिन्तयन् ।
ब्रह्माऽयं परदण्डे तु न समर्थः कदाचन ।।
तपस्या मोचयन्नूनं यास्यामः सर्वधिष्णयान् ।।' इति ।

अत्रापहृतानां वेदानां चिन्तोक्तेः देवा इति ज्ञायते । नन्ववराभिमानिनामपहृतत्वेऽपि श्रीप्राणादीनां भावात् प्रवृत्त्युपपत्तिरिति चेत् अवराभिमानिमुखेनैव वेदान् प्रवर्तयिष्यामः इति तत्सङ्कल्पभावात्। यथा राज्ञः स्वतः सामर्थ्येऽपि अमात्ये उपद्रुते तदुपद्रवपरिहारमुखैनैव राज्यप्रवृत्तिर्दृष्टेति । मत्स्यवपुस्तं निहत्य तान् वेदान् विधातुर्ददावित्यन्वयः। मत्स्यावतारान्तरमाह— **मत्स्यवपुः मनुं मुनींश्च जुगोपेति** ।। ४२ ।।

---

१. भा. १-३-१५ ।

**मन्वन्तरप्रलये मत्स्यरूपो**
**विद्यामदात् मनवे देवदेवः ।**
**वैवस्वतायोत्तमसंविदात्मा**
**विष्णोः स्वरूपप्रतिपत्तिरूपाम् ।। ४३ ।।**

**व्यास**— ननु वैवस्वतं जुगोप मत्स्यः कथं विद्यादातृत्वमित्यत आह— **उत्तमेति** ।। ४३ ।।

**सङ्क**— 'मत्स्यवपुर्जुगोप मनुं' इति यदुक्तं तत्कथमित्यत आह— **मन्वन्तरेति** ।। उत्तमज्ञानमूर्तिः मत्स्यवपुर्विद्यामदादिति सामान्यत उक्तां विद्यां विशिनष्टि— **विष्णोः स्वरूपप्रतिपत्तिरूपामिति** ।। स्वरूपस्य याथार्थ्यप्रकारस्य सम्यज्ज्ञानरूपां विद्यामित्यर्थः ।। ४३ ।।

**वरद**— द्वितीयं प्रयोजनं सविस्तरमाह— **मन्वन्तरेति** ।। उत्तमसंविदात्मा मत्स्यरूपो देवदेवो हरिः वैवस्वताय मनवे विष्णोः स्वरूपप्रतिपत्तिरूपां हरेः यथा तत्स्वरूपज्ञानस्वरूपां विद्यां चाक्षुषमन्वन्तरप्रलये ददावित्यन्वयः ।। ४३ ।।

**जना**— मन्वादिगोपनं विशदयति— **मन्वन्तरेति** ।। मन्वन्तरप्रलये देवदेवः उत्तमसंविदात्मा उत्तमा सर्वोत्कृष्टा संविद् ज्ञानमेवात्मा देहः स्वरूपं वा यस्येत्यनेन ज्ञानदानसामर्थ्यं सूचितम् । मत्स्यरूपः वैवस्वताय मनवे विष्णोः स्वरूपस्य प्रतिपत्तिरूपाम् । नित्यसाकाङ्क्षत्वात् समासः। प्रतिपत्तिर्यथार्थज्ञानं तज्जनकां विद्यामदात् । अत्रापि वेददानं विद्यादानं इति प्रयोजनद्वयं ज्ञेयम् ।। ४३ ।।

**ताम्र**— तद्विवृणोति— **मन्वन्तरेति** ।। मत्स्यस्य कथं विद्यादातृत्वमित्यत उक्तम्— **उत्तमेति** ।। ४३ ।।

**अथो दितेर्[1]ज्येष्ठसुतेन शश्वत्**
**प्रपीडिता ब्रह्मवरात् सुरेशाः।**
**हरिं विरिञ्चेन सहोपजग्मु-**
**र्दौरात्म्यमस्यापि शशंसुरस्मै ।। ४४ ।।**

---

१. ब्रह्माण्ड.पु/उपो.पाद/५/४,५'सौत्येऽहन्यतिरात्रस्य कश्यपस्याश्वमेधिनः। हिरण्यकशिपुर्नाम प्रथितं पृथगासनम् ।। दित्या गर्भाद्विनिःसृत्य तत्रासीनः समन्ततः। हिरण्यकशिपुस्तस्मात् कर्मणा तेन च स्मृतः।।' वायुपुराणे उत्तरार्धे/६/५३-६० 'कश्यपस्याश्वमेधोऽभूत् पुण्यो वै पुष्करे पुरा । .... आसनान्युपक्लृप्तानि काञ्चनानि तु पञ्च वै ।। कुशपूतानि त्रीण्यत्र कूर्चाफलकमेव च । मुख्यर्त्विजश्च चत्वारस्तेषां तान्युपकल्पयेत् ।। शुभं तत्रासनं यत्तु होतुरर्थे प्रकल्पितम् । हिरण्मयं तथा दिव्यं दिव्यास्तरणसंस्तृतम् ।। अन्तर्वत्नी दितिश्चैव पत्नीत्वं समुपागता । दशवर्षसहस्राणि गर्भस्तस्या अवर्तत ।। स तु गर्भाद्विनिःसृत्य मातुर्वै उदरात्तदा । उपक्लृप्तासनं यत्तु होतुरर्थे हिरण्मयम् ।। निषसाद स गर्भोऽत्र तत्रासीनः शशंस च ।। आख्यानपञ्चमान् वेदान् महर्षिः काश्यपो यथा । तं दृष्ट्वा मुनयस्तस्य नामाकुर्वंस्तु तद्विधम् ।। हिरण्यकशिपुस्तस्मात् कर्मणा तेन विश्रुतः।।' अग्निपुराणेऽपि एवमेव कथा ।

**व्यास**— यथा हिरण्याक्षस्य दौरात्म्यं शशंसुः तथास्यापि दौरात्म्यं शशंसुः ।। ४४-४५ ।।

**वादि**— मत्स्यावतारादनन्तरं देवैरमृतमथने क्रियमाणे मन्दरगिर्युद्धरणाय हरिः कूर्मतयावततार । नृसिंहावतारादनन्तरं देवैरमृतमथने क्रियमाणे स एव कूर्मः मन्दरमुद्ददार ।

[1]"अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरे ।
अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोः।।'

इति वचनात् कूर्मावतारः रैवतमन्वन्तरेऽप्यस्ति । वैवस्वतमन्वन्तरे नृसिंहावतारादनन्तरमप्यस्ति । अतस्तयोः कथां सङ्कलय्य कथयिष्यन् नृसिंहावतारकथां कथयति— **अथो इति** ।। हरिमुपजग्मुः दौरात्म्यमपि शशंसुरिति अपिपदसम्बन्धः। यद्वा यथानुजस्य हिरण्याक्षस्य दौरात्म्यं शशंसुः। एवमस्यापीत्यपिपदसम्बन्धः ।। ४४ ।।

**सङ्क**— नरसिंहावतारसङ्गतिं दर्शयति— **अथो दितेरित्यादिना** ।। दौरात्म्यं दुष्टचरितम् ।। ४४ ।।

**वरद**— इदानीं श्रीनृसिंहावतारप्रसक्तिं दर्शयति— **अथो इति** ।। दितेर्ज्येष्ठसुतेन हिरण्यकशिपुना ब्रह्मवरात् निमित्तात् सुरेशा इन्द्राद्याः शश्वत् बहुवारं प्रपीडिताः सन्तो विरिञ्चेन सह हरिमुपाजग्मुः। गत्वा चास्य हिरण्यकशिपोर्दौरात्म्यं तत्कृतं दौर्जन्यमस्मै हरये शशंसुरपीत्यन्वयः ।। ४४।।

**जना**— नरसिंहावतारमाह— **अथो इति** ।। दितेः ज्येष्ठसुतेन ब्रह्मवरात् शश्वत् प्रपीडिताः सुरेशाः विरिञ्चेन सह हरिं शरणं उपजग्मुः। अस्य हिरण्यकशिपोः दौरात्म्यं दुष्टतामस्मै हरये शशंसुः ।। ४४ ।।

**ताम्र**— ।। **अथो इति** ।। मत्स्यानन्तरं [2]"सुरासुराणामुदधिं मथ्नताम्' इति कूर्मावतारोक्तेः कूर्मावतारो निरूपणीयः। नृसिंहावतारकथनमयुक्तं, तस्य [3]"चतुर्दशं नारसिंहं' इति कूर्मानन्तरत्वोक्तेः इति चेत् भागवतस्य कल्पभेदेन प्रवृत्त्युपपत्तेः ।। ४४ ।।[4]

**अभिष्टुतस्तैर्हरिरुग्रवीर्यो**
**नृसिंहरूपेण स आविरासीत् ।**
**हत्वा हिरण्यं च सुताय तस्य**
**दत्वाभयं देवगणानतोषयत् ।। ४५ ।।**

**वादि**— हिरण्यं हिरण्यकशिपुम् ।। ४५ ।।

**सङ्क**— तस्य हिरण्यकस्य सुताय प्रह्लादाय ।। ४५ ।।

**वरद**— अपीत्यनेन न केवलं शशंसुः किन्तु स्तुतिमपि चक्रुरित्यभिप्रैति । अत एवाह— **अभिष्टुत इति** ।। तैः देवैः अभिष्टुतः स हरिरुग्रवीर्यः सन् नृसिंहरूपेण आविरासीत् प्रादुर्बभूवेत्यन्वयः। तदवतारप्रयोजनमाह—

---

१. भा.ता.८-७-३९ । २. भा.१-३-१६ । ३. भा.१-३-१८ । ४. केचित्तु 'नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये' इत्युक्तेः मङ्गलाचरणरूपतया कूर्मात् पूर्वोक्तिरित्याहुः। इति हो.पुस्तके अधिकः पाठः दृश्यते ।

**हत्वेति** ।। हिरण्यं हिरण्यकशिपुं हत्वा हिरण्यकशिपोः सुताय प्रह्लादायाभयं दत्वा देवगणान् ब्रह्मादीन् अतोषयत् इत्यन्वयः ।। ४५ ।।

**जना**— तैरभिष्टुतः उग्रवीर्यः सः हरिः नरसिंहरूपेण आविः प्रादुर्भूतः आसीत् । हिरण्यं हिरण्यकशिपुं हत्वा । तस्य सुताय प्रह्लादाय अभयं दत्वा । देवगणानतोषयदिति सम्बन्धः ।। ४५ ।।

**सुरासुराणामुदधिं विमथ्नतां**
**दधार पृष्ठेन गिरिं स मन्दरम् ।**
**वरप्रदानादपरैरधार्यं**
**हरस्य कूर्मो [१]बृहदण्डवोढा ।। ४६ ।।**

**वादि**— हरस्य वरप्रदानात् कनकरूपमपि त्वामाशया कोऽपि नोद्धरत्विति वरप्रदानात् । अत एवाध्वन्यपि सर्वानपि सुरासुरांश्चूर्णयामास । बृहदण्डवोढा ब्रह्माण्डधारकः। मन्दरोद्धरणे कैमुत्यसूचनायेदं विशेषणम् ।। ४६ ।।

**सङ्क**— अथ कूर्मावतारप्रसक्तिं दर्शयति— **सुरासुराणामिति** ।। बृहदण्डस्य ब्रह्माण्डस्य वोढा वाहको धारक इत्यनेन हेतुगर्भविशेषणेन मन्दरगिरिधारणं नाश्चर्यमिति दर्शयति ।। ४६ ।।

**वरद**— अनन्तरं श्रीकूर्मावतारप्रयोजनमाह— **सुरासुराणामिति** ।। उदधिं समुद्रं विमथ्नतां मथनं कुर्वतां देवासुराणां अर्थे स हरिः कूर्मो भूत्वा पृष्ठेन मन्दरगिरिं दधारेत्यन्वयः। कीदृशं गिरिं हरस्य रुद्रस्य वरप्रदानात् निमित्तात् अपरैरधार्यं धारयितुं अशक्यमित्यर्थः। एतादृशं मन्दरधारणं हरेर्नाश्चर्यबुद्धिकरमित्यभिप्रायेण विशेषणम् — **बृहदण्डवोढेति** ।। बृहतो अतिस्थूलस्य अण्डस्य ब्रह्माण्डस्य वोढा वाहको धारक इति यावत् । पञ्चाशत्कोटि-योजनविस्तीर्णस्य मन्दराद्यनेकमहागिरियुक्तस्य ब्रह्माण्डस्य धारणे समर्थस्य तदेकदेशमन्दरगिरिधारणं किमाश्चर्यमिति भावः ।। ४६ ।।

**जना**— कूर्मावतारमाह— **सुरेति** ।। बृहदण्डवोढा ब्रह्माण्डधारकः सः कूर्मः हरस्य वरादपरैरधार्यं मन्दरं मन्दरगिरिं दधार । सुरासुराणां उदधिं विमथ्नतां सताम् ।। ४६ ।।

**ताम्र**— बृहदण्डस्य ब्रह्माण्डस्य वोढेत्यनेन कूर्मावतारान्तरं सूचयति । यद्वा बृहदण्डे स्थित्वा पृथिव्यादेर्वोढेत्यर्थः। अनेनाप्यवतारान्तरं सूचयति । यथाऽहुः–

---

१. अत्र आचार्यैः 'बृहदण्डवोढा' इति विशेषणेन यो पूर्वं अशेषब्रह्माण्डाधारः कूर्मः स एव मन्दरधारणार्थं अवततार इत्यसूचि । तत्र प्रमाणन्तु मात्स्ये (२४९अ-१६.) 'प्रार्थ्यतां कूर्मरूपश्च पाताले विष्णुरव्ययः।' इति । किञ्च पाद्मे (उ.खं.२३३अ/११-१५) 'ततस्सुरगणास्सर्वे कूर्मरूपं सनातनम् । भक्त्या सम्पूजयित्वाथ तुष्टुवुर्हृष्टमानसाः।।...वरं वृणीष्वं देवेशा यद्वो मनसि वर्तते । ततो देवगणास्सर्वे कूर्मरूपं जनार्दनम् ।। ऊचुः प्राञ्जलयस्सर्वे हर्षनिर्भरमानसाः। शेषस्य दिग्गजानाञ्च सहायार्थं महाबल ।। धर्तुमर्हसि देवेश सप्तद्वीपवतीं महीम् । एवमस्त्विति हृष्टात्मा भगवाँल्लोकभावनः । धारयामास धरणीं सप्तद्वीपसमावृताम् ।।' इति पाद्मे उक्तत्वात् य एव पातालादागतः स एव पुनः देवैः प्रार्थितः तत्रैव जगाम इति अवगम्यते।

"[1]बिभर्त्यण्डं हरिः कूर्मो अण्डे चाप्युदकं महत् ।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।।' इत्यादि ।

एतेन ईदृशस्य मन्दरधरत्वं नाश्चर्यमित्युक्तं भवति ।। ४६ ।।

**[2]वरादजेयत्वमवाप दैत्यराट्**
**चतुर्मुखस्यैव बलिर्यदा तदा।**
**अजायतेन्द्रावरजोऽदितेः सुतो**
**महानजोऽप्यब्जभवादिसंयुतः ।। ४७ ।।**

**व्यास**— महानपीन्द्रावरजः अजोऽप्यदितेः सुतः ।। ४७ ।।

**सङ्क**— अथ वामनावतारमाह— **वरादिति** ।। महान् सर्वोत्तमः सर्वपुरातनोऽपीन्द्रावरज अदितेः सुतोऽजायत प्रादुर्बभूव ।। ४७ ।।

**वरद**— अथ वामनावतारं सप्रयोजनमाह— **वरादित्यादिना** ।। दैत्यराट् दैत्यानां राजा बलिः चतुर्मुखस्य वरादेवा—जेयत्वं देवैर्जेतुमशक्यत्वं यदा अवाप तदा स हरिरब्जभवादिभिः संस्तुतः सन् अजोऽपि जननरहितोऽपि अदितेः सुतोऽजायत प्रादुर्भूतः तथा महानपि सर्वश्रेष्ठोऽपि इन्द्रावरज इन्द्रस्यावरजः अनुजोऽजायतेत्यर्थः ।। ४७ ।।

**जनां**— वामनावतारमाह— **वरादिति** ।। दैत्यराट् बलिः चतुर्मुखस्य वरादजेयत्वं यदा तदा ब्रह्मादिस्तुतः अजोऽपि अदितेः सुतो महान् श्रेष्ठोऽपीन्द्रावरजः अजायत ।। ४७ ।।

**ताम्र**— 'चतुर्दशं नारसिंहम्' इत्युक्त्वा [3]"पञ्चदशं वामनकं' इत्युक्तत्वादनन्तरं वामनावतारमाह—**वरादिति**।। महानपीन्द्रावरजः[4] ।। ४७ ।।

**स वामनात्मासुरभूभृतोऽध्वरं**
**जगाम गां संनयन् पदे पदे ।**
**जहार चास्माच्छलतस्त्रिविष्टपं**
**त्रिभिः क्रमैस्तच्च ददौ निजाग्रजे ।। ४८ ।।**

**व्यास**— छलतः छद्मना ।। ४८ ।।

---

१. बृ.भा.३-१, अश्वमेधब्राह्मणम् । २. पुरन्दर सुरश्रेष्ठ न जेष्यसि रणे बलिम् । तपसात्युत्तमो दैत्यो वरदानेन चाधिकः। स्वयंभूपरितोषाच्च सत्यधर्माच्च वासव । नैव शक्यस्त्वया जेतुं त्रिदशैर्वा सुरेश्वर । हरिवंश/भ.प/६४/२४ तथा 'प्रह्लादपौत्रो धर्मात्मा विरोचनसुतो बलिः । आराध्य तपसोग्रेण वरं लेभे पितामहात् ।। अवध्यत्वमजेयत्वं समरेषु सुरासुरैः।।' वि.ध.१.५५.३ । ३. भा.१-३-१९ । ४. अजोऽप्यदितेः सुतः इत्यस्वरसोद्धावनम् ।

**वादि—** असुरभूभृतोऽसुरधुरन्धरस्य बलेरित्यर्थः। गां भूमिं सन्नमयन् पदे पदे इत्यनेन य एवाणुः स एव महानिति सूचयति ।। ४८ ।।

**सङ्क—** छलतः त्रिपदं देहीति याञ्चया ।। ४८ ।।

**वरद—** वामनात्मा स हरिरसुरभूभृतो असुरयुक्तस्य भूभृतो बलेरध्वरं यज्ञं गां भूमिं पदे पदे सन्नमयन् नतां कुर्वन् जगाम प्रापेत्यन्वयः। तदनन्तरं किं कृतवान् इति तत्राह— **जहारेति** ।। अस्मात् बलेः सकाशात् छलतः त्रिपादभूमिं देहीति याञ्चया छद्मना त्रिविष्टपं स्वर्गं जहार अपहृतवानित्यर्थः। कथं जहारेत्यत उक्तम्— **त्रिभिः क्रमैरिति** ।। त्रिभिः पदक्रमणैरित्यर्थः। तच्चापहृतं त्रिविष्टपं निजाग्रजे इन्द्राय ददावित्यर्थः ।। ४८ ।।

**जना—** सः वामनस्वरूपः पदे पदे गां संनमयन् असुरभूभृतः बलेरध्वरं यज्ञं जगाम । अस्मात् **बलेस्त्रिभिः पदैः** च्छलतः त्रिविष्टपं स्वर्गं जहार । तत्त्रिविष्टपं निजाग्रजे इन्द्राय ।। ४८ ।।

**ताम्र—** छलतः छद्मना ।। ४८ ।।

**[१]पितामहेनास्य पुराभियाचितो**
**बलेः कृते केशव आह यद्वचः ।**
**नायाञ्चयाहं प्रतिहन्मि तं बलिं**
**शुभाननेत्येव ततोऽभ्ययाचत ।। ४९ ।।**

**व्यास—** बलतः कस्मात् त्रिविष्टपं न जहारेत्यत आह— **पितेति** ।। ४९ ।।

**वादि—** छलतः पदत्रयं देहीति स्थूलसूक्ष्मपदत्रयसाधारणवाक्यप्रयोगे सति स्वाभिप्रायमजानानस्य बलेरणुपदापेक्षया ददामीति आशाजनकात् द्व्यर्थकवाक्यात् स्वानभिप्रेतार्थबोधनात् छलाख्यनिग्रहस्थानेन बलिं पराभाव्येति यावत् । बलात्कारेण कस्मान्न जहारेत्यत आह— **पितामहेनेति** ।। अस्य बलेः पितामहेन प्रह्लादेन ।। **शुभाननेति** ।। हे शुभानन प्रह्लादेति सम्बुद्धिः। यद्वच आह । ततो वचनान्निमित्तात् ।। ४९ ।।

---

१. ब्रह्मवैवर्ते/कृ.ख/११९/६३'प्रह्लादाय वरो दत्तो भक्ताय च तपस्विने । ममावध्यश्च त्वद्वंशश्चेति प्रीतेन चेतसा ।।' किञ्च विष्णुधर्मोत्तरे (१खं/१२७अ/१८-३०) 'एवं वराहेण रणे हतान्दृष्ट्वा दितेस्सुतान् । हरिं विज्ञातवान् देवं प्रह्लादो दैत्यसत्तमः।। स प्रणम्य हरिं देवं तुष्टाव परवीरहा । तं जगाद महातेजा देवदेवो जनार्दनः।। अनुग्राह्योऽसि मे दैत्य भक्तोऽसि सततं यतः। तवाज्ञालङ्घका घोरा प्रायेण निहता मया ।। तवाज्ञाकारिणो दैत्या न मे वध्या दितेस्सुताः। शासनं पालय मह्यं पाताले त्वं सुखी भव ।। मार्गे स्थापय दैत्यांस्त्वं त्वदाज्ञपरिबृंहितान्। आभूतसम्प्लवं दैत्य जीव त्वं न विमोक्ष्यसे ।। मद्भक्त्या परया वत्स पुत्रस्तव विरोचनः। मार्गच्युतोऽपि न हतः कल्पायुश्च तथा कृतः।। बलिर्वैरोचनश्चैव मया बद्धः कृते तव । करिष्यति स शक्रत्वं प्राप्ते सावर्णिकेऽन्तरे ।। बाणं च तनयं तस्य मम विप्रियकारकम् । त्वत्कृते न हनिष्यामि तस्य छेत्स्यामि दोर्द्रुमान् ।। छिन्नबाहुर्मया युद्धे हरस्यानुचरो बली । महाकाल इति ख्यातो कल्पस्थायी भविष्यति ।। एकमेकं तु दैत्येन्द्र सन्ताने सततं तव । नाहं वधिष्ये धर्मज्ञ त्वत्कृते व्येतु ते भयम् ।। भवान्भक्तस्तथा मह्यं भक्तेष्वपि तथा मम । नास्त्यदेयं महाभाग तस्मात्त्वं गच्छ निर्वृतः।। एतावदुक्त्वा प्रह्लादं तत्रैवान्तरधीयत ।' एवं कथा दृश्यते।

**सङ्क**— छले किं कारणमित्यत आह— **पितामहेनेति** ।। अस्य बलेः पितामहेन प्रह्लादेन ।। ४९ ।।

**वरद**— ननु दितिजत्वाविशेषात् हिरण्यादीनिव बलिमपि हत्वा किमर्थं त्रिविष्टपं न जहारेत्यतस्तत्र कारणमाह— **पितामहेनेति** ।। अस्य बलेः पितामहेन प्रह्लादेन बलेः कृते बलेरर्थेऽभियाचितो बलिर्न हन्तव्य इति प्रार्थितः केशवो यद्यस्मात्कारणात् प्रह्लादं प्रति वचो वचनमाह । तत्किं वचनमित्यत आह— **नेति** ।। हे शुभानन प्रह्लाद अयाञ्चया याचनाव्यतिरेकेण तं बलिं न प्रतिहन्मीति वच आहेति पूर्वेण सम्बन्धः। यत एवमाह तत एव कारणादभ्ययाचत नत्वशक्त्या इत्यर्थः ।। ४९ ।।

**जना**— छलतो ग्रहणे कारणमाह— **पितामहेनेति** ।। अस्य बलेः पितामहेन प्रह्लादेन पुरा नृसिंहावतारे बलेः कृते बलिरक्षणार्थं याचितः केशवो यद्यस्मात् वच आह । वाक्यं वक्ति— **नेति** ।। हे शुभानन अहं तं बलिं अयाञ्चया याञ्चां विना न प्रतिहन्मि इति यस्मात् वच आह ततः अभ्ययाचत् ।। ४९ ।।

**ताम्र**— बलात् त्रिविष्टपं कस्मान्न जहारेत्यत आह— **पितामहेन प्रह्लादेनेति** ।। **नायाञ्चयेति** ।। याञ्चामेव करिष्ये । तद्व्यतिरेकेण तं न हन्मीत्यर्थः ।। ४९ ।।

**[१]बभूविरे चन्द्रललामतो वरात्**
**पुरा ह्यजेया असुराधरातले ।**
**तैरर्दिता वासवनायकाः सुराः पुरो**
**निधायाब्जजमस्तुवन् हरिम् ।। ५० ।।**

**वादि**— असुराः धरातले बभूविरे क्षत्रियरूपेण बभूविरे इत्यर्थः ।। ५० ।।

**सङ्क**— इदानीं परशुरामावतारसङ्गतिमाह— **बभूविर इति** ।। स त्वम् ।। ५० ।।

**वरद**— इदानीं भार्गवरामावतारं वक्तुं प्रसक्तिमाह— **बभूविर इति** ।। असुराः पुरा पूर्वजन्मनि चन्द्रललामतो रुद्रस्य वरादजेयाः सन्तो धरातले नृपरूपेण बभूविरे उत्पन्ना इत्यर्थः। तैरसुराः अर्दिताः पीडिताः वासवनायका इन्द्रमुख्याः सुरा अब्जजं श्रीब्रह्माणं पुरो निधाय पुरस्कृत्य हरिमस्तुवन् स्तुतवन्त इत्यर्थः ।। ५० ।।

**जना**— परशुरामावतारमाह— **बभूविरेति** ।। चन्द्रललामतः चन्द्रो ललामं भूषणं यस्य शिवस्य । वरादजेयाः असुराः धरातले बभूविरे । तैः पीडिताः वासवः इन्द्रोऽधिपतिर्येषां ते सुरा अब्जजं ब्रह्मणं पुरो निधाय हरिमस्तुवन् ।। ५० ।।

---

१. विष्णुधर्मोत्तर,१खं/२६अ/२०'ये हता दानवा युद्धे त्वया शक्र पुनःपुनः। त इमे नृषु सम्भूता कार्तवीर्यं समाश्रिताः।।' इति इन्द्रं प्रति भूमिवचनम् । तत्रैव २७अ/२० 'त्वत्तेजसा मया दैत्या ये युद्धे विनिपातिताः। ते क्षितौ क्षत्रिया जाता पीडयन्ति तथ क्षमाम् ।।' इति ब्रह्माणं प्रति इन्द्रवचनम् । पुनस्तत्रैव २९अ-२३ 'कार्तवीर्यार्जुनो नाम दानवास्तमुपाश्रिताः। सर्वे क्षत्रियतां प्राप्य तद्वधे यत्नवान् भव ।।' इति । तत्रैव ३०अ-२२)'अर्जुने नृपतौ वृद्धिः परा भास्कर शाखिनाम् । दैत्याः क्षत्रियतां प्राप्य पीडयन्ति च मेदिनीम् ।।' इति चन्द्रसूर्यान्तर्गतनारायणं प्रति रुद्रकृतप्रार्थना ।

**[1]विरिञ्चसृष्टैर्नितरामवध्यौ**
**वराद्विधातुर्दितिजौ हिरण्यकौ ।**
**तथा हयग्रीव उदारविक्रम-**
**स्त्वया हता ब्रह्मपुरातनेन ।। ५१ ।।**

**वादि**— ब्रह्मपुरातनेन चतुर्मुखब्रह्मणोऽप्यादिकालीनेन ।। ५१ ।।

**वरद**— स्तुतिप्रकारं दर्शयति— **विरिञ्चसृष्टैरिति** ।। विधातुर्वरान्नितरां विरिञ्चसृष्टैः प्राणिभिरवध्यौ दितिजौ हिरण्यकौ हिरण्याक्षहिरण्यकशिपुनामानौ तथा हयग्रीवो हयास्यनामासुर इत्येते त्रयो ब्रह्मपुरातनेन ब्रह्मणश्चतुर्मुखस्यापि पुरातनेन पूर्वं विद्यमानेन आदिपुरुषेण त्वया हता इत्यन्वयः। येन त्वया हताः स त्वं च रुद्रवरात्समस्तैरवध्यान् इमान् नृपरूपान् सर्वान् सुरान् निस्सीमशक्त्या निहत्यैव नः अस्माकं हृदम्बुजे हृदयपद्मे शश्वत् सर्वदा निवस निवासं कुर्वित्यर्थः। निस्सीमशक्तिसूचनार्थं देवदेवेति सम्बोधनम् ।। ५१ ।।

**जना**— स्तुतिमाह— **विरिञ्चेति** ।। विरिञ्चेन सृष्टा उत्पादितास्तैर्दैवमनुष्यासुरैर्बभूवतु इति शेषः। तथा हयग्रीव उदारविक्रमः बभूव । ब्रह्मणः पुरातनः पिता तेन । ब्रह्मा चासौ पुरातनश्चेति वा । तेन त्वया ते हताः ।। ५१ ।।

**ताम्र**— ।। **विरिञ्चसृष्टाविति** ।। विरिञ्चसृष्टौ ब्रह्मसृष्टप्राणिमध्ये विधातृवरात् नितरामवध्यावित्यर्थः। यद्वा विरिञ्चेन सृष्टौ विरिञ्चसृष्टौ । दितिजौ कश्यपाद् दित्यां जातौ च हिरण्यकौ विधातुर्वरात् कैरपि अवध्यौ । एवमपि ब्रह्मपुरातनेन ब्रह्मणोऽपि पुरातनेन हतावित्यर्थः। विरिञ्चसृष्टैरिति क्वचित् पाठः ।। ५१ ।।

**भारतश्री**— ब्रह्मपुरातनेन ब्रह्मणोऽपि पूर्वं विद्यमानेन रूपेण ।। ५१-५६ ।।

**स चासुरान् रुद्रवरादवध्या-**
**निमान् समस्तैरपि देवदेवः।**
**निःसीमशक्त्यैव निहत्य सर्वान्**
**हृदम्बुजे नो निवसाथ शश्वत् ।। ५२ ।।**

**व्यास**— **स चेत्यत्र** स त्वमिति योजनीयम् । ध्यानविघ्नभूतान्निहत्य नो हृदम्बुजे शश्वन्निवस ।। ५२ ।।

**अभिनव**— स चासुरान् इति श्लोके हृदम्बुजे नो निवसाथ शश्वत् इत्यस्य अथ मङ्गलार्थं नः हृदम्बुजे शश्वत् सर्वदा निवसेत्यर्थः । एतेन दैत्यान् निहत्य हृदम्बुजे निवसेत्यनेनैव हृदम्बुजनिवासस्य दैत्यहननानन्तर्यस्य लब्धत्वात् आनन्तर्यार्थकाथशब्दो व्यर्थ इति दूषणं निराकृतम् ।। ५२ ।।

---

१. 'विरिञ्चसृष्टौ' इति ताम्रपर्णीये ।

**जना**— हे देवदेव येन हताः स त्वं रुद्रवरात् समस्तैः अवध्यान् सर्वानिमानसुरान्निहत्य नः हृदाम्बुजे शश्वत् निवस ।। ५२ ।।

**ताम्र**— ध्यानविघ्नभूतान् निहत्य नो हृदम्बुजे शश्वन्निवस ।। ५२ ।।

**इत्यादरोक्तस्त्रिदशैरजेयः**
**स शार्ङ्गधन्वाथ भृगूद्वहोऽभूत् ।**
**रामो [१]निहत्यासुरपूगमुग्रं**
**[२]ह्रदाननादिर्विदधेऽसृजैव ।। ५३ ।।**

**वादि**— नोऽस्माकं हृदब्जे निवसेति भक्तिपूर्वकमुक्तत्वादादरोक्त इत्युक्तम् । अनादिर्नारायणोऽसृजैव पञ्चह्रदान् विदधे । कुरुक्षेत्रे पञ्चनदांश्चकार ।। ५३ ।।

**वरद**— अथानन्तरं इत्युक्तप्रकारेण त्रिदशैरादरोक्तः सादरं स्तुतः स हरिरजेयो जेतुमशक्यः शार्ङ्गधन्वा सन् भृगूद्वहो भृगुकुलोद्वहः परशुरामोऽभूदित्यर्थः। अनन्तरं किं कृतवानित्यत आह— **राम इति** ।। रामः परशुरामः उग्रं क्रूरम् । असुरपूगं दैत्यसमूहं निहत्य असृजा रुधिरेण ह्रदान् विदधेत्यन्वयः। अनेन बहुवारं बहवो हता इति सूचयति । अभूदित्यनेन उत्पत्तिशङ्का प्राप्ता तां निवारयत्यनादिरिति विशेषणेन ।। ५३ ।।

**जना**— त्रिदिशैः देवैः इत्यनेन प्रकारेण आदरेण भक्त्या उक्तः अजेयः स शार्ङ्गधन्वा नारायणः भृगूद्वहः भृगूणां रक्षकः अभूत् । अनादिः रामः परशुरामः उग्रं क्रूरमसुराणां पूगं समूहं हत्वा । असृजैव रक्तेनैव । ह्रदान्पञ्च विदधे चकार ।। ५३ ।।

**ताम्र**— आदरोक्तः भक्त्या स्तुतः ।। ५३ ।।

**ततः पुलस्त्यस्य कुले प्रसूतौ**
**तावादिदैत्यौ जगदेकशत्रू ।**
**परैरवध्यौ वरतः पुरा हरेः**
**सुरैरजेयौ च वराद्विधातुः ।। ५४ ।।**

---

१. 'असुरपूगं निहत्य' इत्यनेन मानुषरूपेण जातान् तथा मूलरूपेण स्थितानपि दैत्यान् सैंहिकेयनामकान् निहत्येत्यर्थ इति भाति । अत्र प्रमाणं तु कर्णपर्वणि २८अध्याये, तथा विष्णुधर्मोत्तरेऽपि १खं/३८ अध्याये द्रष्टव्यम् । २. 'त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियतां प्रभुः। स्यमन्तपञ्चके पञ्च चकार रुधिरह्रदान् ।।' इति वनपर्वणि ११८अ/९। स्यमन्तपञ्चकस्थानं तु 'तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत्कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते ।।' (वनपर्व,८१अ/२०७) इति वाक्यात् ज्ञेयम् ।

**व्यास**— आदिदैत्यौ दितेः साक्षादपत्यभूतौ ।। ५४ ।।

**वादि**— 'मयैव वध्यौ भवतं त्रिजन्मसु' इति हरेर्वरत इत्यर्थः ।। ५४ ।।

**सङ्क**— श्रीरामावतारचरितमाह— **तत इत्यादिना** ।। पुलस्त्यो ब्रह्मपुत्रः विश्रवाः। स एव सन्ततिः कुलं तस्मिन् कुले प्रसूतौ रावणकुम्भकर्णौ तावादिदैत्यौ इति । 'हिरण्यकहिरण्याक्षौ मयैव वध्यौ भवतं त्रिजन्मसु मदन्यैर्वध्यौ न भवतं ' इति पुरा हरेर्वरतः परैरवध्यावित्यर्थः ।। ५४ ।।

**वरद**— अथेदानीं श्रीरामावतारकथां सविस्तारं वक्तुकामः तदवतारप्रसक्तिं तावद्दर्शयति— **तत इति** ।। पुलस्त्यस्य ब्रह्मपुत्रस्य कुले सन्ततौ विश्रवसः सकाशात् प्रसूतौ जातौ कावित्यत आह— **ताविति** ।। यौ आदिदैत्यौ हिरण्यकशिपुहिरण्याक्षौ पुरा शापकाले 'मयैव वध्यौ भवतं त्रिजन्मसु' इत्येवं रूपाद् हरेर्वरतः परैरवध्यौ तौ रावणकुम्भकर्णत्वेन प्रसूतावित्यर्थः। कथम्भूतौ रावणकुम्भकर्णावित्यत आह— **सुरैरिति** ।। विधातुर्वरात् सुरैः अजेयौ जेतुमशक्यावित्यर्थः ।। ५४ ।।

**जना**— रामावतारकथां वक्तुं तत्प्रसक्तिमाह— **तत इति** ।। तावादिदैत्यौ हिरण्याक्षहिरण्यकशिपुनामानौ आदौ भवौ दितेः पुत्रौ पुरा शापकाले हरेर्वरतः 'मयैव वध्यौ' इति वरतः परैः हरेः अन्यैः अवध्यौ । विधातुः वरात्सुरैः अजेयौ ; पुलस्त्यस्य कुले विश्रवसः प्रसूतौ ।। ५४ ।।

**ताम्र**— [1]'ततः सप्तदशे जात' इति रामात् पूर्वं व्यासावतारोक्तावपि अष्टाविंशद्द्वापरयुगभाविन एव वेदविभागा-दिकर्तृत्वेन रामात् पूर्वस्य व्यासाचार्यत्वेनैव उपयोगात् [2]'चक्रे वेदतरोः शाखा' इत्यत्र कारयामासेति विवक्षितत्वात् तदविवक्षया रामावतारानन्तरमेव व्यासं विवक्षुः रामकथाप्रसङ्गकमाह— **तत इत्यादिना** ।। पुलस्त्यो ब्रह्मपुत्रः। तस्य कुलं सन्ततिः विश्रवाः। तस्मादिति निमित्तसप्तमी । कुले इति ज्ञेयम् । आदिदैत्यौ साक्षाद्दितेरपत्यभूतौ हिरण्याक्षहिरण्यकशिपू । यद्वा तौ पार्षदाविष्टौ वराहनृसिंहहतौ आदिदैत्यौ मूलासुरौ । एतच्च ब्रह्मपुत्रयोः हिरण्यकयोरेव अवतारत्रयेऽपि पार्षदाविष्टत्वज्ञापनाय इति ज्ञेयम् ।। ५४ ।।

> **सर्वैरजेयः स च कुम्भकर्णः**
> **पुरातने जन्मनि धातुरेव ।**
> **[3]वरान्नरादीनृत एव रावण-**
> **स्तदातनात्तौ त्रिदशानबाधताम् ।। ५५ ।।**

**व्यास**— रावणो नरादीनृते । तदातनात् वरात् स सर्वैरजेयः। अबाधतां अबाधेताम् ।। ५५ ।।

---

१. भा. १-३-२१ । २. भा. १-३-२१ । ३. शान्ति/२०८/१०'नियुतं वत्सराणां तु वायुभक्षोऽभवत्तदा । हिरण्याक्षो महारौद्रो लेभे देवात् पितामहात् । वरानचिन्त्या-नतुलाच्छतशोऽथ सहस्रशः।।' भा. ३-१९-२३. 'आगस्कृत् भयकृद्दुष्कृदस्म-ल्लब्धवरोऽसुरः।' इति ब्रह्मवचनम् ।

**वादि**— पुरातने जन्मनि हिरण्याक्षजन्मनि । तदातनात् रावणजन्मन्येव विद्यमानात् । कुम्भकर्णो नरवानरादिषूपेक्षया नरादीनृते सर्वैरजेय इति स्वपूर्वजन्मन्येव विधातुर्वरात् नरादीनृते सर्वैरजेयः। निद्रालोः कुम्भकर्णस्य इदानीन्तनवराभावादिति भावः। रावणस्तु तदातनाद्रावणजन्मन्येव विद्यमानात् तद्वदेव नरवानरादिषूपेक्षया नरादीनृते सर्वैरजेय इति वरात् नरादीनृत एव सर्वैरजेय इत्युभयत्रावृत्त्या योजना । ताभ्यामेव तथा वरस्वीकाराभावे धातुर्विरिञ्चस्येदृशवरदाने कारणाभावात् एतद् ब्रह्मणो वरदानकौशलं जानन्तो देवा वानराः बभूवुः। शेषशायिनौ तु रामलक्ष्मणात्मना नराकारौ बभूवतुरिति भावः ।। ५५ ।।

**सङ्क**— अजेयत्वे विशेषोऽस्तीति सुरैरजेयत्वेऽपि एतयोर्विशेषमाह— **सर्वैरिति** ।। एवं विधं वरं कुम्भकर्णः कस्मिन् जन्मनि लेभ इत्यत आह— **पुरातन इति** ।। हिरण्याक्षजन्मनीत्यर्थः। सुरैरजेयावित्युक्त्या अजेयत्वे कुम्भकर्णस्य विशेषो दर्शितः। सर्वैरजेय इति परिशेषाद्रावणस्यैव सुरैरजेयत्वमायातं तत्स्पष्टमाह— **नरादीनिति** ।। ननु रावणस्यायं वरः कदेत्यत आह— **तदातनादिति** ।। रावणजन्मनि लब्धवरादित्यर्थः ।। ५५ ।।

**वरद**— तत्रापि कुम्भकर्णे विशेषोऽस्तीत्याह— **सर्वैरिति** ।। पुरातने जन्मनि हिरण्याक्षजन्मनि तपसाराधितस्य धातुरेव वरात्सर्वैरजेयः कुम्भकर्णो जात इत्यर्थः। रावणस्तु नरादीनृत एव मनुष्यादीन् विनैव सर्वैरजेयो जात इत्याह— **नरादीनिति** ।। तदातनात् तस्मिन्नेव जन्मनि रावणजन्मनीति यावत् तत्र लब्धाद्वरादित्यर्थः। एवं सुरैरजेयत्वं उभयोरप्यस्तीत्युक्तं भवति । एवंभूतौ तौ त्रिदशान् देवानबाधतां बाधितवन्तावित्यर्थः ।। ५५ ।।

**जना**— विधातुर्वरादित्युक्तं विशदयति— **सर्वैरिति** ।। पुरातने जन्मनि हिरण्याक्षजन्मनि । धातुरेव वरात्कुम्भकर्णजन्मनि अजेयो भवेति वरात् । स कुम्भकर्णः सर्वैः अजेयः रावणस्तदातनात् रावणजन्मनि भवाद्वरात् नरवानरादीनृते सर्वैः अजेयौ तौ रावणकुम्भकर्णौ त्रिदशान् देवान् अबाधताम् । यत्तु—

> '[1]न देवानां प्रजापानां विजेता वरतो विना ।
> बलेन विद्यया वापि न समस्तत्पतीन् विना ।।
> वरोऽपि तादृशो यावत् शरीरं नान्य देहगः।।' इति वाक्यम् ।

तत् यच्छरीरं यद्देहमुद्दिश्य दत्तस्तद्देहपातपर्यन्तमिति व्याख्येयम् ।। ५५ ।।

**ताम्र**— वरतः मयैव वध्यौ भवता त्रिजन्मसु इति वरतः। तयोर्विधातृवरावाप्तिः न समकालीनेति वदन् सुरैरजेयत्वांशे समेऽपि विशेषमाह— **सर्वैरजेय इति** ।। पुरातने जन्मनि हिरण्यक्षजन्मनि प्राप्तादिति शेषः। रावणस्तदातनाद् रावणजन्मनि भवात् धातृवरतो नरादीन् ऋते एव सर्वैरजेयः इत्यर्थः। अबाधतां अबाधेताम्। ननु—

> 'न देवानां प्रजापानां विजेता वरतो विना ।
> बलैर्वा विद्यया वाऽपि न समस्तत्पतीन्विना ।
> वरोऽपि तादृशो यावच्छरीरं नान्यदेहगः।।'

---

१. भा.ता.३-१८-२२ ।

इति तृतीयस्कन्धतात्पर्योक्तेः कथं प्राग्भवीयवरस्यैतज्जन्मन्युपकारकत्वमिति चेत् यज्जन्मन्युपकारकाय यो वरः स्वीक्रियत तस्य तज्जन्मन्युपकारकत्वमिति विवक्षितत्वात् । प्रकृते च हिरण्याक्षेण कुम्भकर्णदेहे उपकारार्थमेव वरः स्वीकृतः इति न दोषः। अन्यथा सुराणकादीनां [1]प्राग्भवीयवरात् प्रवृत्तिर्न स्यात् ।। ५५ ।।

**तदाब्जजं शूलिनमेव चाग्रतो**
**निधाय देवाः पुरुहूतपूर्वकाः।**
**पयोम्बुधौ भोगिपभोगशायिनं**
**समेत्य योग्यां स्तुतिमभ्ययोजयन् ।। ५६ ।।**

**व्यास**— योग्यां भगवद्योग्याम् ।। ५६ ।।

**वरद**— ततः किमभूदित्यत आह— **तदेति** ।। यदा अबाधतां तदा पुरुहूतपूर्वका इन्द्राद्या देवा । अब्जजं ब्रह्माणम् । शूलिनं रुद्रं चाग्रतः पुरतो निधाय कृत्वा । पयोम्बुधौ क्षीराब्धौ विद्यमाने श्वेतद्वीपे वर्तमानं भोगिपभोगशायिनं शेषस्य शरीराख्यपर्यङ्के शयानं श्रीनारायणं समेत्य योग्यां स्तुतिं अभ्ययोजयन् कृतवन्त इत्यर्थः ।। ५६ ।।

**जना**— तदा बाधनकाले क्षीरसमुद्रे भोगिपः शेषस्तस्य भोगः शरीरं तत्र शायिनं हरिं समेत्य योग्यां भगवद्योग्यां प्रसङ्गानुगुणान् वा । स्तुतिमभ्ययोजयन् कुर्वन् ।। ५६ ।।

**ताम्र**— योग्यां भगवद्योग्यां प्रसङ्गानुगुणां वा स्वयोग्यां वा ।। ५६ ।।

**त्वमेक ईशः परमः स्वतन्त्र-**
**स्त्वमादिरन्तो जगतां नियोक्ता ।**
**त्वदाज्ञयैवाखिलमम्बुजोद्भवा**
**वितेनिरेऽग्र्याश्चरमाश्च येऽन्ये ।। ५७ ।।**

**वादि**— आदिः आदौ विद्यमानः। अन्तः अन्ते विद्यमान इत्यर्थः। अग्र्या अग्रेऽतीतकाले विद्यमानाम्बुजोद्भवा अखिलं वितेनिरे । अन्ये चरमा भविष्यन्तोऽम्बुजोद्भवा अखिलं वितनिष्यन्ति । आद्यन्तयोर्ग्रहणात् प्रत्याहारन्यायेनेदानीन्तनोऽयम्बुजोद्भवो वितनुत इति योजना ग्रन्थकृतैव सूचिता ।। ५७ ।।

**वरद**— तां स्तुतिमेव दर्शयति— **त्वमेक इत्यादिना** ।। जगतां भुवनानाम् । त्वमेक एव ईशः स्वामी । परम उत्तमः। स्वतन्त्रो अनन्याधीनः । नियोक्ता नियामकश्चेत्यर्थः। तथाग्र्याः पूर्वोत्पन्ना । अतीता इति यावत् । तथा चरमा अनागताः। चशब्देन वर्तमानाश्च । एते अम्बुजोद्भवाः ब्रह्माणः। तथाऽन्ये प्रजेशाः। ते सर्वे त्वदाज्ञयैवाखिलं भूतभविष्यद्वर्तमानं जगद्वितेनिरे निर्मितवन्त इत्यर्थः। येऽन्ये चरमा अम्बुजोद्भवाश्च तेऽपीति वा ।। ५७ ।।

---

१. 'अन्यथा मन्थरायाः प्राग्भवीयवरात् प्रवृत्तिर्न स्यात्' इति हो. पुस्तके पाठः ।

**जना—** स्तुतिमेव दर्शयति— **त्वमिति** ।। त्वमेक ईश: मुख्यस्वामी । जगतामादिरुत्पादक:। अन्त: नाशक:। नियोक्ता नियामक:। अग्र्या अग्रे भवा: पुरातना:। अम्बुजोद्भवा: ब्रह्माण: वितेनिरे निर्मितवन्त:। चशब्दात् अद्यतनो ब्रह्मा वितनुते । चरमा: भविष्यन्त:। ब्रह्माण: वितरिष्यन्ति ।। ५७ ।।

**ताम्र—** योग्यां स्तुतिमेव दर्शयति— **त्वमिति** ।। इतरपरित्यागेन तच्छरणगतौ निमित्तं त्वमेक एवाथ परम उत्तम इति । तत्र हेतुमाह— **त्वमादिरित्यादिना** ।। ईश: स्वामी पालक:। स्रष्टृत्वादिघटकगुणमाह— **स्वतन्त्र इति** ।। हिरण्यगर्भादे: स्रष्टृत्वश्रवणात् तवैकस्य तत्कथमित्यत आह— **त्वदाज्ञयेति** ।। अग्र्या: पुरातना: एव अम्बुजोद्भवा:। ये चान्ये प्रजेशा:। यश्च वर्तमान:। ये चरमा एष्यन्तस्ते सर्वे । त्वदाज्ञयैवाखिलं जगद् वितेनिरे वितानुते विस्तारयिष्यन्ति च इत्यर्थ:। हिरण्यगर्भस्यैव स्वातन्त्र्येण स्रष्टृत्वं किं न स्यादित्यत: तस्याप्युत्पत्त्यैश्वर्यादिदर्शनात् स्वातन्त्र्येण तदयोगादिति भावेनाग्र्याश्चरमा इत्युक्तम् ।। ५७ ।।

**मनुष्यमानात्त्रिशतं सषष्टिकं**
**दिवौकसामेकमुशन्ति वत्सरम् ।**
**द्विषट्सहस्रैरपि तैश्चतुर्युगं**
**त्रेतादिभि: पादश एव हीनै: ।। ५८ ।।**

**वादि—** पादश एव हीनैस्त्रेतादिभि: सह द्विषट्सहस्रैस्तै: देववर्षैश्चतुर्युगमुशन्ति । चतु:सहस्रीकृतयुगस्य । तत एकसहस्राख्यपादस्योनतायां त्रिसहस्री त्रेतायुगस्य । एवं च त्रेता त्रिपादी जाता । पूर्वन्यायेन ततोऽप्येकपादस्योनतायां द्विसहस्रो द्वापरोऽपि द्विपादो जातस्तत एकपादस्योनतायामेकसहस्रवर्ष: कलिरेकपात् । इत्थं दशसहस्री गता उर्वरिता द्विसहस्रस्यापि शतसङ्ख्याविभजने विंशतिशतानि जातानि । तेषामप्यादिपदोक्तसन्धिषु तद्वदेव विभजने कलिकृतयुगसन्धावष्टशतानि वर्षाणि । कृतत्रेतायुगसन्धौ षट्शतानि । त्रेताद्वापरसन्धौ चतु:शतानि । द्वापरकल्यो: सन्धौ द्विशतम् । एवं तैर्द्विषट्सहस्रैश्चतुर्युगमुशन्तीति भाव:। सहस्रवृत्तं सहस्रवारं प्रवृत्तं तच्चतुर्युगं स्वयम्भुव: अहरुशन्ति ।। ५८ ।।

**सङ्क—** अग्र्या: पुरातना चरमा: पश्चात्तना:। ननु भूतभविष्यदम्बुजोद्भवा: श्रीविष्णवाज्ञया अखिलं वितेनिरे इत्युक्तम् । तत्र तेषामेव कियत्कालं स्थितिस्तदनन्तरं तेषां कुत्र प्राप्तिरित्यपेक्षायां तेषां आयुष्यप्रमाणं वक्तुं तावन्मनुष्याणामायुष्यं परिगणयन्ति देवा इत्याह— **मनुष्यमानादिति** ।। अयमर्थ:। यस्य सांशत्वेऽपि अवयवविभाग: परस्परं न क्रियते स परमाण्वाख्य: कालो मनुष्यायुष्याणामादिरुच्यते तेन परमाणुद्वयेन द्व्यणुककाल उच्यते । द्व्यणुकत्रयेण त्रसरेणुकाल उच्यते । त्रसरेणुत्रयेण तृटिकाल:। तृटिकात्रयेण वेधाख्यकाल:। त्रिभिर्वेधैर्लव:। त्रिभिर्लवैर्निमेष:। निमेषत्रयेण क्षण:। पञ्चक्षणै: काष्ठाख्य:। पञ्चदशकाष्ठाभि: लघ्वाख्यकाल:। लघुभि: पञ्चदशभि: एका घटिकोच्यते। घटिकाद्वयं मुहूर्तमित्युच्यते । घटिकाषट्केन प्रहराख्यकाल:। सार्धसप्तघटिकाभिर्याम उच्यते । चत्वारो यामा अहरित्युच्यन्ते । पुनश्च चत्वारो यामा रात्रिरित्युच्यन्ते । पञ्चदशाहानि शुक्लपक्षसञ्ज्ञया कृष्णपक्षसञ्ज्ञया चोच्यन्ते । तयो: समुच्चयो मास: । मासद्वयमृतु:। मासषट्केन

दक्षिणायनम् । पुनर्मासषट्केनोत्तरायणम् । अयनद्वयं संवत्सरः। एवं मनुष्याणामायुष्यकालमानात् परिगणितानां संवत्सराणां त्रिशतं पुनर्वर्षषष्ठिसहितं देवानां संवत्सरमुशन्ति तज्ज्ञाः। तैर्दिव्यसंवत्सरैः द्विषट्सहस्रैश्चतुर्युगं भवतीत्याह— **त्रेतादिभिः पादश एव हीनैः**।। अयमर्थः। दिव्यसहस्रचतुष्टयेन संवत्सरेण कृतयुगम् । सहस्रत्रयेण त्रेतायुगम् । सहस्रद्वयेन द्वापरः। एकसहस्रेण कलियुगं पुनः सहस्रद्वयमुर्वरितमस्ति तदेव विभज्यताम् । युगानां सन्ध्यासु चतसृषु अष्टशतानि षट्शतानि चतुश्शतानि शतद्वयं यथासंङ्ख्यं योज्यानि । तच्चतर्युगं सहस्रसङ्ख्यया वृत्तं आवर्तितं स्वयम्भुवो अहर्भवति । निशा च तद्वत् । तन्मानमितं तादृशाहोरात्राभ्यां परिगणिताभ्यां मितं परिछित्रं शरच्छतं तावत्पर्यन्तं स्वान् भोगान् त्वदाज्ञया अनुभूय सर्वेभ्योऽधिकमाधिपत्ये स्थितोऽपि भीत्या त्वरितः सन् ब्रह्मा त्वदन्तिकं त्वत्समीपं उपैतीति देवा श्रीविष्णुं प्रति विज्ञापयन्तीत्यर्थः ।। ५८ ।।

**वरद**— अतीतवर्तमानानागतब्रह्मकल्पेषु विद्यमाना ब्रह्माणः त्वदाज्ञयैव तिष्ठन्तीति विज्ञापितं देवैः तत्र एकैकब्रह्मकल्पस्य कालप्रमाणं विज्ञापयितुमाहुर्देवा इत्याह— **मनुष्यमानादिति** ।। परमाणुकालमारभ्य द्व्यणुकत्रसरेणुतृटिवेधलवनिमेषक्षणकाष्ठालघुघटिकामुहूर्तप्रहरयामाहोरात्रपक्षद्वयमासर्तुअयनद्वयेत्येवंरूपः संवत्सरो मनुष्याणां वर्षमित्युच्यते । एवमुक्तरीत्या मनुष्यमानात् मानुषवर्षप्रमाणमपेक्ष्य मानुषवर्षाणां सषष्टिकं षष्ट्युत्तरं त्रिशतं शतत्रयं दिवौकसां देवानां एकं संवत्सरमुशन्ति इच्छन्तीत्यर्थः। तैर्देवानां वर्षैः द्विषट्सहस्रैः द्वादशसहस्रैः चतुर्युगं भवतीत्यर्थः। दिव्यैर्द्वादशसहस्रवर्षैः कथं चतुर्युगं भवतीत्यत आह— **त्रेतादिभिरिति** ।। दिव्यैश्चतुःसहस्रैः कृतयुगं त्रिभिः सहस्रैः त्रेतायुगं द्वाभ्यां द्वापरयुगमेकेन कलियुगं एवं मिलित्वा दशसहस्रं सम्पन्नम् । उर्वरितसहस्रद्वयस्य विंशतिशतानि भवन्ति । तत्र युगचतुष्टये सन्धिवर्षाणि पूर्वोत्तरसहस्रक्रमेण योज्यानि । तथा हि कृतयुगे पूर्वं शतचतुष्टयं पश्चाच्छतचतुष्टयमित्येवमष्टौ शतानि सम्पन्नानि एवं त्रेतायां पूर्वोत्तरं षट्शतानि एवं द्वापरे पूर्वोत्तरचतुःशतानि तथा कलियुगे पूर्वोत्तरं शतद्वयमिति विंशति शतानि सम्पन्नानीत्येवं त्रेतादिभिः पादशः एकैकपादेन हीनैः न्यूनैः त्रेतादिभिः चतुर्युगं भवतीत्यर्थः ।। ५८ ।।

**जना**— स्रष्टृणां ब्रह्मणां कियदायुरायुषान्ते किं कुर्वन्तीत्यत आयुःपरिमाणं वक्तुं देवमानं आह— **मनुष्यमानादिति** ।। मनुष्यमानाद्वर्षाणां त्रिशतं षष्टिकं देवानामेकं वत्सरमुशन्ति इच्छन्ति । तैर्देववर्षैद्विषट्सहस्रैश्चतुर्युगं भवति । चतुर्युगानां सङ्ख्या किं समेत्यत आह— **चतुर्युगमिति** ।। चतुर्युगमित्येदत्रापि सम्बध्यते पादशः एकैकपादेन हीनैः त्रेतादिभिर्युतं कृतं चर्तुयुगं भवति । तदेव चतुःसहस्रमष्टौशतानि कृते, त्रिसहस्रं षट्शतानि त्रेतायाम्, सहस्रद्वयं चतुःशतानि द्वापरे, एकसहस्रं शतद्वयं कलावेकमेवं द्वादशसहस्राणि भवन्ति ।। ५८ ।।

**ताम्र**— तत् तदायुःपरिगणनेन विशदयति— **मनुष्येति** ।।

"[1]स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयस्स्मृतः।।

१. भा. ३-१२- ४-१२ ।

त्रसरेणुस्त्रयं भुङ्क्ते य: कालस्स त्रुटि: स्मृता ।
तत्त्रिभागस्तु वेध: स्यात्तै: त्रिभिस्तु लव: स्मृत:।।
निमेषस्त्रिलवो ज्ञेय: आम्नातास्ते त्रय: क्षण:।
क्षणा: पञ्च विदु: काष्ठां लघु ता दशपञ्च च ।।
लघूनि वै समाख्याता: दशपञ्च च नाडिका:।
ते द्वे मुहूर्तं प्रहर: षड्यामस्सप्त वा नृणाम् ।।
यामाश्चत्वारचत्वार: मर्त्यानामहनी उभे ।
पक्ष: पञ्चदशाहानि शुक्ल: कृष्णश्च मानद ।।
तयोस्समुच्चयो मास: पितृणां तदहर्निशम् ।
द्वौ तावत् षडयनं दक्षिणं चोत्तरं दिवि ।।
अयने अहनी प्राहुर्वत्सरो द्वादशस्मृत:।
संवत्सरशतं नृणां परमायुर्निरूपितम् ।।'

इति भागवतोक्तरीत्या मनुष्यमानात् परिगणितानां संवत्सराणां सषष्टिकं शतं देवानामेकवत्सरं उशन्ति इच्छन्ति । तै: दिव्यवत्सरै: द्वादशसाहस्रै: चतुर्युगं भवतीत्युक्ते युगचतुष्टयस्य द्वादशसहस्रवत्सराणि साम्येन गणनीयानीति भाति । अत आह— **त्रेतादिभिरिति** ।। दिव्यैश्चतुस्सहस्रै: कृतयुग: त्रिभिस्त्रेतायुगं द्वाभ्यां द्वापरयुगं एकेन कलियुगमित्येवं मिलित्वा दशसहस्राणि सम्पन्नानि । उर्वरितद्विसहस्रस्य युगसन्धावुपयोग:। तत्र कृतस्याष्टशतम्, त्रेताया: षट्शतम्, द्वापरस्य चतुश्शतम्, कलेर्द्विशतमिति । तदुक्तं भागवते-

[1]"कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ।
दिव्यैर्द्वादशसाहस्रवर्षैस्साधु निरूपित:।।
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च ।।
सन्ध्यासन्ध्यांशयोरन्तर्युक्काल: शतसङ्ख्ययो:।
तमेवाहुर्युगं तज्ज्ञा:..........................।।' इति ।। ५८ ।।

**भारतश्री**— त्रिशतं संवत्सरमिति शेष: । कृतयुगस्य चतुस्सहस्रम् । त्रेताया: त्रिसहस्रम् । द्वापरे द्विसहस्रम् । कले: एकं सहस्रम् । एवं दशसहस्राणि । कृतसन्धिवर्षाणि अष्टशतानि । षट्शतानि चतु:शतानि द्विशतानि इति सन्धि.... एवं द्वादशसहस्राणि ज्ञेयानि ।। ५८ ।।

**राम**— 'द्विषट्सहस्रैरपितैश्चतुर्युगं त्रेतादिभि: पादश एव हीनै:' इत्यत्र कृतादिचतुर्णां युगानां दिव्यद्वादशसहस्रवत्सरं मानमुक्तम् । तत्र चतुर्णां कालसाम्यं नेत्याह— **त्रेतादिभिरिति** ।। अत्रैकसहस्रं पादशब्देन विवक्षितम् । पूर्वयुगापेक्षया उत्तरस्य एकैकसहस्रं न्यूनं भवति । तथा च कृतयुगस्य चतु:सहस्रं त्रेतायास्त्रिसहस्रं

---

१. भा. ३-१२- १८-२० ।

द्वापरस्य द्विसहस्रं कलेरेकसहस्रमिति दशसहस्रं भवति । अवशिष्टद्विसहस्रं सन्धिकाल इत्युच्यते । कृतयुगस्याष्टशतानि त्रेतायाः षट्शतानि कलेर्द्विशतानीति ।

'कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
दिव्यैर्द्वादशसाहस्रैर्वर्षैस्साधु निरूपितम् ।।
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
सङ्ख्यातानि सहस्राणि द्विगुणानि च तानि च ।।
सन्ध्यासन्ध्यांशयोरन्तर्यःकालः शतसङ्ख्ययोः ।
तमेवाहुर्युगं तद्ज्ञा यत्र धर्मो विधीयते ।।'

इति तृतीयस्कन्धे सहस्रसङ्ख्याविशिष्टो मध्यमः शतसङ्ख्याकस्तावत्पूर्वोत्तरभागे सन्ध्या सन्ध्यायामिति विभक्तो भवति । तथा च कृतयुगस्य मध्यकालः चतुःस्सहस्रसङ्ख्याकः पूर्वभागे सन्ध्याख्यकालः । चतुःशतं उत्तरभागे सन्ध्यांशाख्य चतुःशतं एवं अष्टशतम् । द्वापरस्य द्विसहस्रं मध्यकालः पूर्वोत्तरसन्धिसन्ध्यांशयोर्द्विशतं द्विशतम्। कलेरेकसहस्रं मध्यकालः पूर्वोत्तरसन्धिसन्ध्यंशयोः एकशतम् । एवं सति कृतत्रेतायुगयोर्मध्ये सप्तशतानि त्रेताद्वापरयोर्मध्ये पञ्चशतानि द्वापरकल्योर्मध्ये त्रिशतानि कलिकृतयोर्मध्ये पञ्चशतानि भवन्तीति । तर्हि पादश एव हीनत्वं कथमिति चेत् उच्यते । यथायुगानां मध्यकालः पूर्वयुगापेक्षया एकैकसहस्रेण हीनः । तथा चतुर्युगानां पूर्वपूर्वसन्ध्याख्यः कालः पूर्वस्मात् उत्तरोत्तरं एकैकशतेन हीन उत्तरसन्ध्यांशाख्यश्च पूर्वस्मादुत्तरोत्तरं एकैकशतेन हीन इति पादहीनत्वं सम्भवतीति ।। ५८-६१ ।।

**सहस्रवृत्तं तदहः स्वयम्भुवो**
**निशा च तन्मानमितं शरच्छतम् ।**
**त्वदाज्ञया स्वाननुभूय भोगा-**
**नुपैति सोऽपि त्वरितं त्वदन्तिकम् ।। ५९ ।।**

**वरद**— ततः किमित्यत आह— **सहस्रवृत्तमिति** ।। तच्चतुर्युगं सहस्रवृत्तं सहस्रवारमावृत्तं सत् स्वयम्भुवो ब्रह्मणः अह इत्युच्यते । सहस्रवृत्तं तदेव निशा रात्रिश्चोच्यत इत्यर्थः। तन्मानेन मितं परिगणितं पक्षमासादिक्रमेण परिच्छिन्नम् । शरच्छतं शरदां वर्षाणां शतं ब्रह्मणो भवतीत्यर्थः। तत्र विद्यमानो ब्रह्मा । त्वदाज्ञया स्वान् स्वस्य विद्यमानान् ऐहिकान् भोगान् सत्यलोके अनुभूय त्वदाज्ञयैव त्वरितस्त्वरावान् त्वदन्तिकं त्वत्समीपं उपैति प्राप्नोतीत्यर्थः। एतादृशस्यापि ब्रह्मणो भगवदाज्ञालङ्घनं न सम्भवनीयमिति सूचयति— **सोऽपि त्वरित इति** ।। ५९ ।।

**जना**— तद्युगचतुष्टयं सहस्रवारमावर्तितं स्वयंभुवो ब्रह्मणः अहः दिनं भवति । निशा च रात्रिरपि तावती । तन्मानेन पूर्वोक्ताहोरात्रिमानेन मितं परिमितम् । शरच्छतमत्यन्तसंयोगे द्वितीया । त्वदाज्ञया स्वान्भोगान् अनुभूय त्वरितः सः ब्रह्मा त्वदन्तिकमुपैति ।। ५९ ।।

**ताम्र**— तच्चतुर्युगं सहस्रवृत्तं सहस्रवारमावृत्तं स तु ब्रह्मणः अहर्निशा च भवति । तन्मानमितं परिगणितम् । पक्षमासादिक्रमेण परिच्छिन्नम् । शरच्छतं सोऽप्येवमेवमन्येभ्योऽधिककालमाधिपत्येन स्थितो ब्रह्मापि त्वदाज्ञया स्वयोग्यभोगाननुभूय त्वरितस्त्वदन्तिकमुपयातीत्यर्थः ।। ५९ ।।

**त्वया पुरा कर्णपुटाद्विनिर्मितौ[१]**
**महासुरौ तौ मधुकैटभाख्यौ ।**
**[२]प्रभञ्जनावेशवशात्त्वदाज्ञया**
**बलोद्धतावाशु जलेऽभ्यवर्धताम् ।। ६० ।।**

**व्यास**— प्रसङ्गानुगुणां स्तुतिं दर्शयति— **त्वया पुरेति** ।। ६० ।।

**सङ्क**— पुनरपि पुराकृतं भगवन्महिमानं स्वाभिलषितसिद्ध्यर्थं देवाः श्रीविष्णुं प्रति विज्ञापयन्तीत्याह— **त्वयेत्यादिना**।। त्वदाज्ञया प्रभञ्जनस्य वायोरावेशवशात् बलोद्धतौ । वायोस्तत्र विशेषावेशकारणं विष्णो–राज्ञेत्यर्थः ।। ६० ।।

**वरद**— तथान्यदपि महत्त्वं देवा विज्ञापयन्तीत्याह— **त्वयेति** ।। पुरा पूर्वं कर्णपुटात् कर्णशष्कुलीतो विनिस्सृता–वुत्पादितौ तौ कावित्यत उक्तम्— **महासुराविति** ।। यौ विनिस्सृतौ तौ मधुकैटभाख्यौ महासुरावित्यर्थः। त्वदाज्ञया प्रभञ्जनावेशवशात् त्वदाज्ञानिमित्तात् प्रभञ्जनस्य वायोरावेशात् बलोद्धतौ सन्तौ जले आशु वेगेनाभ्यवर्धतां ववृधाते इत्यर्थः ।। ६० ।।

**जना**— प्रसङ्गानुगुणां स्तुतिमाह— **त्वयेति** ।। पुरा देवसर्गात्पूर्वम् । त्वया कर्णपुटान् महासुरौ यौ विनिर्मितौ तौ मधुकैटभाख्यौ तवाज्ञया तयोः प्रवेशः कार्य इत्याज्ञया । प्रभञ्जनो वायुः । तदावेशबलाद्बलोद्धतौ आशु जले प्रलयजले अभ्यर्वधतामित्यन्वयः ।। ६० ।।

**ताम्र**— महासुरवधे मम शक्त्यभावात् मच्छरणागतिर्व्यर्थेति न मन्तव्यम् । तेषां निसर्गबलाभावाद्वराद्युपाधेश्च त्वदाज्ञायत्तत्वात् तद्बलादेस्त्वदायत्तत्वात् तादृशमहासुरवधस्य त्वया कृतत्वाच्चेति भावेन उपकारकथनं प्रसङ्गानुगुणां स्तुतिं कुर्वन्ति— **त्वयेति** ।। ६० ।।

**त्वदाज्ञया ब्रह्मवरादवध्यौ**
**चिक्रीडिषासम्भवया मुखोद्गतौ ।**
**स्वयम्भुवो [३]वेदगणानहार्षतां**
**तदाऽभवस्त्वं हयशीर्ष ईश्वरः ।। ६१ ।।**

---

१. 'विनिसृतौ' इति वरदराजीयः पाठः। २.'तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः। दिवं प्रच्छादयन्तौ तु ववृधाते महासुरौ ।।' सभा/४४/९; हरिवंश/हरिवंशपर्वणि/५२/२३ । ३. 'ततो विग्रहवन्तस्तान्वेदान् दृष्ट्वाऽसुरोत्तमौ । सहसा जगृहतुर्वेदान् ब्रह्मणः पश्यतस्तदा ।। अथ तौ दानवश्रेष्ठौ वेदान् गृह्य सनातनान् । रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ ।।' शान्ति/३५७/३०

**वादि**— चिक्रीडिषासम्भवया, क्रीडितुमिच्छा चिक्रीडिषा ततः सम्भवो यस्याः सा तया त्वदाज्ञयेत्यर्थः ।। ६१-६४।।

**सङ्क**— क्रीडितुमिच्छा चिक्रीडिषा तया सम्भूतया त्वदाज्ञया ब्रह्मवरादवध्यौ । एताभ्यां मम क्रीडेच्छा विद्यते ततस्तयोरवध्यत्वं देहीति त्वदाज्ञयेत्यर्थः ।। ६१ ।।

**वरद**— तथा चिक्रीडिषासम्भवया क्रीडेच्छया जातया त्वदाज्ञया 'अहमाभ्यां युद्धादिना क्रीडिष्ये अतोऽवध्यत्ववरं देहि' इति एवं रूपया त्वदाज्ञया दत्तात् ब्रह्मवरादवध्यौ जातावित्यर्थः। अनन्तरं किं कृतवन्तावित्यत आह— **मुखोद्गताविति** ।। स्वयम्भुवो मुखोद्गतान्निर्गतान् वेदानहार्षताम् अपहृतवन्तावित्यर्थः। यदाहार्षतां तदा ईश्वरस्त्वं हयशीर्षो हयग्रीवावतारः अभवो जात इत्यर्थः ।। ६१ ।।

**जना**— चिक्रीडिषासम्भवया क्रीडतुमिच्छया सम्भव उत्पत्तिर्यस्याःतया ताभ्यां क्रीडेच्छया दत्तया तवाज्ञया ब्रह्मवरात् अवध्यौ तौ । स्वयम्भुवः मुखात् बहिरागतान् वेदगणान् । देहधारिणः वेदावान्तराभिमानिदेवानहर्षताम्। तदा ईश्वरोऽपि त्वं हयशीर्षोऽभवः। एतदुक्तं हयशीर्षपञ्चरात्रे हयग्रीववचनम्–

'उपासाञ्चक्रिरे मह्यं वेदाः देहभृतस्तदा ।
वेदाभ्यासरतस्तत्र घर्मबिन्दुरजायत ।।
स पद्मपत्रमासाद्य द्विधा भूतो यतस्तदा ।
रजस्तमोमयौ तस्माज्जातौ दिव्यौ बलोत्कटौ ।।
मधुकैटभनामानौ महाबलपराक्रमौ ।
ततस्तौ मम वेदान्वै जहर्तुः पापनिश्चयौ ।।' इति ।

तथा । 'ततश्चाश्वशिराः गत्वा वेदानादाय शाश्वतान्' इति । मूले 'कर्णपुटात्' इति । मार्कण्डेये [1]"कर्णमलात्' इति । पञ्चरात्रे 'घर्मबिन्दुः' इति त्रयाणां एकवाक्यतायां कर्णसम्बद्धमलरूपजलबिन्दोर्जातावित्यर्थः ।। ६१ ।।

**ताम्र**— वायोस्तत्रावेशकारणमाह— **त्वदाज्ञयेति** ।। त्वदाज्ञया प्राप्तात् प्रभञ्जनावेशवशादिति योज्यम् । एवं त्वदाज्ञया ब्रह्मवरादित्यत्रापि प्राप्तादिति योज्यम् । क्रीडितुमिच्छा चिक्रीडिषा तया सम्भूतया त्वदाज्ञयेत्यर्थः। अहमनेन क्रीडिष्ये ततस्तमाविश वरं देहीत्येवं रूपया त्वदाज्ञयेत्यर्थः ।। ६१ ।।

**भारतश्री**— चिक्रीडिषासम्भवया क्रीडेच्छया जातया । **त्वदाज्ञया** इत्यत्र चकर्थ कृतवान् ।। ६१ ।।

इति श्रीडम्बल अनन्ताचार्यशिष्य–
भारतश्रीनिवासाचार्यविरचितायां टिप्पण्यां तृतीयोऽध्यायः

---

१. "योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते । आस्तीर्य शेषमभजत् कल्पान्ते भगवान् प्रभुः ।। तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ । विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ" ।। इति मार्कण्डेयपुराणे । ७८-४९,५० । ब्राह्मेऽपि— तदा कर्णमलोद्भूतौ दानवौ मधुकैटभौ । महाबलौ महावीर्यौ ब्रह्माणं हन्तुमुद्यतौ ।। ७२-३८ । कैटभशब्दव्युत्पत्तिरपि शान्तनवीटीकायामित्थं प्रदर्शिता— 'कीटस्य भा प्रभा यस्य तत् कीटभं मलम् । तत्र भवः कैटभः' इति ।

**आहृत्य वेदानखिलान्प्रदाय**
**स्वयम्भुवे तौ च [१]जघन्थ दस्यू ।**
**निष्पीड्य तावूरुतले कराभ्यां**
**तन्मेदसैवाशु चकर्थ मेदिनीम् ।। ६२ ।।**

**सङ्क**— मेदस् इति धातुविशेषः ।। ६२ ।।

**वरद**— ताभ्यामखिलान् वेदान् आहृत्यापहृत्य स्वयम्भुवे प्रदाय दत्वा तौ च दस्यू चोररूपिणौ वैरिणौ मधुकैटभौ जघन्थ हतवानसीत्यर्थः। तद्धननेन अन्यदपि प्रयोजनं सम्पन्नमित्याहुरित्याह— **निष्पीड्य ताविति** ।। ऊरुतले प्रदेशे कराभ्यां निष्पीडिताविति पृथगेवान्वयः। तन्मेदसा तस्मात् ऊरुतलात् उद्गतेन मेदसा रुधिरमज्जयोः मध्यवर्तिना मेदोनाम्ना धातुविशेषेण मेदिनीं भूमिं चकर्थ कृतवानसीत्यर्थः। अनेन ऊरुतलस्य सम्बन्धित्वात् उर्वी, मेदसा जातत्वात् मेदिनीति पृथिव्याः नामद्वयं निरुक्तं भवति ।। ६२ ।।

**जना**— त्वमखिलान्वेदानाहृत्य स्वयंभुवे वेदान् प्रदाय, दस्यू तौ मधुकैटभौ जघन्थ हतवान् । हननप्रकारमेव विशदयति । ऊरुतले प्रदेशे कराभ्यां निष्पीडिताविति । तेनान्यदपि सिद्धमित्याहुः— **तदिति** ।। तयोर्मेदसैव तन्नामकधातुविशेषेण मेदिनीं भूमिमाशु चकर्थ कृतवानसि ।। ६२ ।।

**ताम्र**— जघन्थ संहृतवानसि । मेदो धातुविशेषः। अत एव ऊरुतलसम्बन्धित्वादुर्वी, मेदसा जातत्वाच्च मेदिनीति नामद्वयसूचनाय मेदसेत्युक्तम् ।। ६२ ।।

**एवं सुराणां च निसर्गजं बलं**
**तथासुराणां वरदानसम्भवम् ।**
**वशे तवैतद्द्वयमाप्यतो वयं**
**निवेदयामः पितुरेव तेऽखिलम् ।। ६३ ।।**

**सङ्क**— न केवलं मधुकैटभयोरसुरयोरेवावध्यत्वबलोद्धतत्वे वरदानसंभूते किन्तु सर्वेषां इति वक्तुं तावद् देवानां बलस्वरूपं विज्ञापयन्ति देवा इत्याह— **एवमिति** ।। उक्तमेव भगवत्सामर्थ्यमुपसंहारमुखेन निवेदयन्तीत्याह— **वश इति** ।। एतदिति निसर्गानिसर्गत्वेन स्थितबलद्वयमपि तव वशे यतोऽतो वयं पितुः सर्वपालकस्य ते पुराकृतसामर्थ्यमखिलं ते त्वया कृतमखिलमनुग्रहं च निवेदयामो विज्ञापयामः ।। ६३ ।।

**वरद**— एवं हि त्वया हतेषु हिरण्यकादिमधुकैटभान्तेषु सर्वेष्वसुरेषु ब्रह्मादिवराद्वा प्रभञ्जनावेशाद्वा बलं न तु तेषां निसर्गतः किञ्चिदपि बलम् । देवानां तु नैसर्गिकमेव बलमिति निर्णीतमित्याहुरित्याह— **एवमिति** ।।

---

१. भगवान् हरिः हयग्रीवरूपेण वेदानाहृत्य ब्रह्मणे उपदिदेश । मधुकैटभौ तु पद्मनाभरूपेण जघान न तु हयग्रीवरूपेण इति नारदपुराणं विहाय सर्वत्र कथा । नारदपुराणे तु हयग्रीवरूपेण जघानेति । शान्ति.३५७, 'दैत्ययोर्मेदसा छन्ना सर्वा राजन् वसुन्धरा । तदा प्रभृति कौन्तेय मेदिनीति स्मृता मही ।। सभा.४४-२९ ।

निसर्गजं स्वाभाविकम् । वरदानसम्भवमित्युपलक्षणं आवेशसम्भवमित्यपि ग्राह्यम् । ततः किमित्यतः आहुरित्याह— **वश इति** ।। एतद्वयं बलद्वयमपि तवैव वशे त्वदधीनमेव यतो अतः पितुस्तेऽखिलं पुरा कृतं सामर्थ्यमनुग्रहं च निवेदयामो विज्ञापयाम इत्यर्थः ।। ६३ ।।

**जना**—एवं सुराणां निसर्गजं स्वाभाविकं बलम् । तथासुराणां वरदानेन सम्भवं उत्पतिर्यस्य तद्बलं इत्येतद् बलद्वयं तव वशे यतोऽतः वयं पितुस्तेऽखिलं निवेदयामः ।। ६३ ।।

**ताम्र**—देवतास्वरूपबलमपि भगवदायत्तं किमौपाधिकमासुरमिति सूचनाय मधुकैटभबलवद्देवासुरबलानां सर्वेषामीशायत्तत्वं वदन्तः स्तुतिमुपसंहरन्ति— **एवमिति** ।। अखिलं पुरा कृतं सामर्थ्यं अनुग्रहमितः परं कर्तव्यं च ।। ६३ ।।

**इमौ च रक्षोऽधिपती वरोद्धतौ**
**जहि स्ववीर्येण नृषु प्रभूतः।**
**इतीरिते तैरखिलैः सुरेश्वरै-**
**र्बभूव रामो जगतीपतिः प्रभुः ।। ६४ ।।**

**व्यास**— ब्रह्मवरमाननार्थं नृषु प्रभूतः ।। ६४ ।।

**सङ्क**— एवं तावद् भगवता पुराकृतानि अतिशयचरितानि विज्ञापितानि, इदानीं स्वाभिप्रेतकार्यं देवाः प्रार्थयन्ति— **इमौ चेति** ।। नन्वेवं सुरेश्वरैः संस्तुतो अनन्तरं किं चकारेत्यत आह— **इतीति** ।। जगतीपतिः भूपतिः ।। ६४ ।।

**वरद**— एवं पूर्वकृतमनुग्रहं विज्ञाप्य यदर्थमिदं विज्ञापितं तत्प्रार्थयन्ते देवा इत्याह— **इमौ चेति** ।। रक्षोधिपती रक्षसामधिपौ । ब्रह्मवरादुद्धतौ रावणकुम्भकर्णौ । त्वं नृषु प्रजातः प्रादुर्भूतः सन् स्ववीर्येण स्वपराक्रमेण जहीत्यर्थः। एवं विज्ञापितकार्यो भगवान् किमनुष्ठितवानित्यत आह— **इतीति** ।। तैरखिलैः सुरेश्वरैः ब्रह्मादिभिरित्युक्तप्रकारेणेरितः प्रार्थितः । जगतीपतिर्भूपतिः। प्रभुः समर्थः। रामो बभूवेत्यर्थः ।। ६४ ।।

**जना**— प्रकृतमूचुः— **इमाविति** ।। नृषु प्रजातः स्वीर्येण जहि । तैरखिलैः सुरैश्वरैः इतीरिते यतः जगतीपतिः प्रभुश्चातो रामो बभूव रामत्वेनावततार ।। ६४ ।।

**ताम्र**— ब्रह्मवरमाननार्थं नृषु प्रभूतः ।। ६४ ।।

**स कश्यपस्यादितिगर्भजन्मनो**
**विवस्वतस्तन्तुभवस्य भूभृतः।**

**गृहे [1]दशस्यन्दननामिनोऽभूत्**
**कौसल्यकानाम्नि [2]तदर्थितेष्टः ।। ६५ ।।**

**व्यास**— कश्यपसकाशात् जात इत्यतो वंशपूर्वमाह— **स इति** ।। विवस्वतः सूर्यस्य । गृहे भार्यायाम् ।। ६५ ।।

**वादि**—तदर्थितेष्ट इत्यत्र तदर्थितया रामाख्यपुत्रार्थितया इष्टः, यागेन पूजितः गृहे भार्यायां बभूवुः ।। ६५ ।।

**सङ्क**—एतदेव प्रकटयत्युत्तरश्लोकेन— **स कश्यपस्येति** ।। स विष्णुर्दशस्यन्दननामिनः गृहे भार्यायां कौसल्यायामभूत् । कथम्भूतस्य विवस्वतः सूर्यस्य तन्तुभवस्य सन्तत्युत्पन्नस्य । कथम्भूतस्य विवस्वतः कश्यपस्य सकाशाददित्यां जातस्य । कथम्भूतो विष्णुः हरिर्मम सुतः स्यादिति अर्थिना दशरथेन इष्टः आराधितः ।। ६५ ।।

**वरद**—कस्मात् कुत्र बभूवेत्यत आह— **स इति** ।। कश्यपस्य सकाशाददितिगर्भजन्मनो अदितेर्गर्भाज्जन्म यस्यासौ तथोक्तः । तादृशस्य विवस्वतः सूर्यस्य तन्तुभवस्येति व्यधिकरणे षष्ठी । सूर्यस्य यस्तन्तुः सन्ततिः। तत्र जातस्य । दशस्यन्दननामिनो दशदिक्षु स्यन्दनो रथो यस्य सः तस्य दशरथनाम्नो भूभृतो राज्ञः। कौसल्यकानाम्नि गृहे भार्यायाम् । तदर्थिना 'हरिः पुत्रो मे भूयात्' इति इच्छता इष्टः पूजितो रामोऽभूदित्यर्थः ।। ६५ ।।

**जना**— अवतरणमेव विशदयति— **स इति** ।। सः रामः कश्यपस्य सकाशाददितिगर्भाज्जन्म यस्य तस्य विवस्वतः सूर्यस्य तन्तौ वंशे भवस्य जातस्य दशस्यन्दननामिनः दशरथस्य भूभृतः राज्ञः कौसल्यकानाम्नि गृहे भार्यायामभूदाविर्भूतः। कथंभूतस्तदर्थिना पुत्रार्थिना इष्टः यागेन पूजितः। दशरथं वैवस्वतमनुमित्याहुः। तदुक्तं वामनपुराणे—

'भविष्यदन्तरे भूत्वा मनुर्वैवस्वतो भवान् ।
तव वंशे भवान्यङ्ग रामो दाशरथिः स्वयम् ।।

---

१. स्वायम्भुवो मनुःपूर्वं द्वादशार्णं महामनुम् । जजाप गोमतीतीरे नैमिषे विमले शुभे ।। तेन वर्षसहस्रेण पूजितः कमलापतिः। मत्तो वरं वृणीष्वेति तं प्राह भगवान् हरिः।। ततः प्रोवाच हर्षेण मनुः स्वायम्भुवो हरिम् । मनुरुवाच – पुत्रत्वं भज देवेश त्रीणि जन्मानि चाच्युत । त्वां पुत्रलालसत्वेन भजामि पुरुषोत्तमम् ।। रुद्र उवाच– इत्युक्तस्तेन लक्ष्मीशः प्रोवाच सुमहागिरा । विष्णुरुवाच – भविष्यति नृपश्रेष्ठ यत्ते मनसि काङ्क्षितम् । ममैव च महाप्रीतिस्तव पुत्रत्वहेतवे ।। .... अयाजद्वैष्णवेष्ट्या च पुत्रार्थी हरिमच्युतम् । तेन सम्पूजितःश्रीशो राजा सर्वगतो हरिः।। तस्मिन्नाविरभूदग्नौ यज्ञरूपो हरिस्तदा । ....सव्याङ्कस्थश्रिया सार्धं आविरासीद्रमेश्वरः।। वरदोऽस्मीति तं प्राह राजानं भक्तवत्सलः। ...प्राञ्जलिः प्रणतो भूत्वा हर्षगद्गदया गिरा ।। पुत्रत्वं मे भजेत्याह देवदेवं जनार्दनम् । ततः प्रसन्नो भगवान् प्राह राजानमच्युतः।। विष्णुरुवाच – उत्पत्स्येऽहं नृपश्रेष्ठ देवलोकहिताय वै । परित्राणाय साधूनां राक्षसानां वधाय च ।। मुक्तिं प्रदातुं लोकानां धर्मसंस्थापनाय च । इत्युक्त्वा पायसं दिव्यं हेमपात्रस्थितं शृतम् ।। लक्ष्म्या हस्तस्थितं शुभ्रं पार्थिवाय ददौ हरिः।' इति पाद्मे (उ.खं.२४२अ) दशरथकृततपःसन्तुष्टेन हरिणा 'अहं तव पुत्रो भवामि' इति वरो दत्तः। ततः यज्ञं कृतमिति भावः। इयं कथा स्कान्दपुराणान्तर्गतवैशाखमासमाहात्म्ये वराहपुराणान्तर्गत-वेङ्कटेशमाहात्म्येऽपि दृश्यते ।। २. 'तदर्थितेष्टः' इति वादिराजीये । 'तदर्थिनेष्टः' इति अन्यव्याख्यातृभिः स्वीकृतो पाठः।

पुनर्दशरथो भूत्वा त्वमेवासि पिता मम ।
मद्दत्तपिण्डदानेन मुक्तिस्ते भविता ध्रुवम् ।।' इति ।

यदुत्तरकाण्डे पद्मपुराणवचनम् । तद्वसुदेवसाहाचर्यात् आवेशपरमित्याहुः।

[1]'तस्याभूत् प्रथमं जन्म मनोस्स्वायम्भुवस्य च ।
रघूणामन्वये पूर्वं राजा दशरथो ह्यभूत् ।
द्वितीये वसुदेवोऽभूत् वृष्णीनामन्वये पुनः।।' इति ।। ६५ ।।

**ताम्र—**कौसल्यकानाम्नि गृहे भार्यायाम् । तदर्थिना 'हरिः मे पुत्रो भूयात्' इति इच्छता ।। ६५ ।।

**राम—।। गृहे दशस्यननामिनोऽभूदित्यत्र—** गृहे भार्यायाम् । स्वायम्भुवमन्वंशम्भवो दशरथः । तस्मिन् वैवस्वतमन्वंश इति ज्ञेयम् । तदुक्तं अंशावतरणे 'राजा दशरथः पूर्वं यतः स्वायम्भुवांशकः' इति । उक्तञ्च पद्मपुराणे उत्तरकाण्डे रामवैभवे ।

'यस्याभूत् प्रथमं जन्म मनोस्स्वायम्भुवस्य च ।
रघूणामन्वये पूर्वं राजा दशरथो ह्यभूत् ।।
द्वितीयो वसुदेवोऽभूत् वृष्णीनामन्वये पुनः ।
कलेर्दिव्यसहस्राब्दे प्रमाणस्यान्त्यपादके ।।
शंफलग्रामके मुख्ये ब्राह्मणश्च भविष्यति ।।' इति ।
'भविष्यदन्तरे भूप मनुर्वैवस्वतो भव ।
तव वंशे भवान्यङ्ग रामो दाशरथिस्त्वहम् ।।
पुनर्दशरथो भूत्वा त्वमेवासि पिता मम ।
मद्दत्तपिण्डदानेन मुक्तिस्ते भविता ध्रुवम् ।।' इति ।

वामनपुराणे श्रीमुष्णमाहात्म्ये दशरथस्य वैवस्वतमन्वंशत्वकथनात् अत्र आवेश एव अंशशब्दार्थ इति ज्ञेयम् । [2]यथा कश्यपस्य अंशसम्भवत्वसिद्धत्वात् स्वायम्भुवमन्वावेश इति वक्तव्यं तथा स्वायम्भुवमन्वंशस्य दशरथस्य वैवस्वतमन्वावेश इति ज्ञातव्यम् । अन्यथा [3]पण्डिताचार्योक्तिविरोधः स्यात् ।। ६५-७२ ।।

**तदाज्ञया देवगणा बभूविरे**
**पुरैव पश्चादपि तस्य भूम्नः ।**

---

१. पाद्मवचनं च- उ.का. २४२-८-९ । २. पाद्मे भूमिखण्डे (६अ/) 'विष्णुरुवाच- वरं वरय भद्र ते देवमातर्यशस्विनि । मनसा चेप्सितं सर्वं तत्ते दद्मि सुनिश्चितम् ।। ....अदितिरुवाच- सुतरां त्वञ्च गोविन्द सर्वकामसमृद्धिदः। मम गर्भे वसंश्चैव भवांश्च मम नन्दनः।। त्वया पुत्रेण नित्यं च यथा नन्दामि केशव । एवं महोदयं नाथ पूरयस्व मनोरथम् ।। वासुदेव उवाच- भवत्या देवकार्यार्थं गन्तव्यं मानुषं वपुः। तदाहं तव गर्भे वै वासं यास्यामि निश्चितम्।। युगे द्वादशके प्राप्ते भूभारहरणाय वै । जमदग्निसुतो देवि रामो नाम द्विजोत्तमः।। प्रतापी तेजसा युक्तः सर्वक्षत्रवधाय च । तव पुत्रो भविष्यामि सर्वशस्त्रभृतां वरः।। सप्तविंशतिके प्राप्ते त्रेताख्ये तु तथा युगे । रामो नाम भविष्यामि तव पुत्रः पतिव्रते ।। ...अष्टाविंशतिके प्राप्ते द्वापरान्ते युगे तदा । सर्वदैत्यविनाशार्थे भूभारहरणाय च ।। वासुदेवोऽथ ते पुत्रो भविष्यामि न संशयः।।' इत्युक्तेः दशरथस्य कश्यपत्वमपि सिद्ध्यति। ३. अंशावतरणवाक्यविरोधः इत्यर्थः ।

**निषेवणायोरुगुणस्य [1]वानरे-**
**ष्वथो नरेष्वेव च पश्चिमोद्भवाः ।। ६६ ।।**

**व्यास**—तस्य भूम्नः। अवताराः पूर्वं पश्चादपि बभूविरे । पश्चिमोद्भवः परेष्वेव ।। ६६ ।।

**वादि**— पुरैवेत्यत्र पुरैव वानरेषु बभूविरे । तस्यैव बाहुल्यसूचनाय एवशब्दः। मैन्दविविदजाम्बवदादीनां वालिसुग्रीवहनुमदादीनां प्रधानानां प्रथममेवोत्पन्नत्वात् द्वीपे द्वीपे केचनाङ्गदाद्याः भूम्नः पश्चादपि, अवतारात् पश्चादपि वानरेषु बभूविरे । नरेषु जाता लक्ष्मणाद्याः पश्चिमोद्भवाः पश्चादुत्पन्ना एव । असुरजातौ जातविभीषण-व्यावर्तनाय नरेष्वित्युक्तम् ।। ६६ ।।

**सङ्क**— न केवलं नारायण एव भूमाववततार किन्तु देवगणाश्च बभूविरे इत्याह— **तदाज्ञयेति** ।। कदा बभूवुरित्यपेक्षयामाह— **पुरेति** ।। ननु श्रीविष्ण्ववतारेणैव कार्यसिद्धौ किमर्थं देवानामवतार इत्यत आह— **निषेवणायेति** ।। ननु भूम्नः पूर्वं कस्यां जात्यां जाता इत्यत आह— **वानरेष्विति** ।। भगवतः पुरा वानरेषु जाता नरेष्वेव पश्चादुत्पन्ना देवाः ।। ६६ ।।

**वरद**— तदाज्ञया तस्य हरेराज्ञया भूम्नः पूर्णस्योरुगुणस्य तस्य हरेर्निषेवणाय सेवार्थं देवगणाः पूर्वमेवावतारात् पश्चाच्च बभूविरे इति सम्बन्धः। तत्र विशेषोऽस्तीत्याह— **वानरेष्विति** ।। पूर्वमिति शेषः। अवतारात्पूर्वं वानरेषु वानरजातौ उत्पन्नाः पश्चिमोद्भवाः रामावतारानन्तरमुत्पन्नाः नरेषु नृजातावेवोत्पन्नाः इत्यर्थः ।। ६६ ।।

**जना**— जातसृष्टिमाह— **तदाज्ञयेति** ।। तस्य भूम्नः रामस्य पुरैव केचन पूर्वं केचन पश्चादपि वानरेष्वथो नरेषु बभूविरे। रामेणैव कार्यसिद्धे देवानामवतरणं किमर्थमित्यत आह— **उरुगुणस्य रामस्य निषेवणायेति** ।। कुत्र पूर्वं कुत्र पश्चाज्जाता इत्याशङ्कायामाह— **वानरेष्वति** ।। नरेषु इत्यनुवर्तते । ये पश्चिमोद्भवाः ते नरेष्वेव इति तेन वानरेषु पूर्वोद्भवा इत्यर्थात्सिद्धम् ।। ६६ ।।

**ताम्र**— न देवादीनां शापादिना जनिरित्याह— **तदाज्ञयेति** ।। हरिणैव कार्यसिद्धौ किं तैरित्यत आह— **निषेवणायेति** ।। अवतारात् पूर्वं पश्चाज्जातिविशेषमाह— **वानरेष्विति** ।। पूर्वमिति शेषः।

---

१. भक्त्या निमित्तं लोकेषु रामस्यार्थे गुणाकरः। कपीनामवतारोऽयं सर्वपापविनाशनः।। (ब्रह्माण्ड.पु.३-७-२०३.) पद्म,उ.खं, २४२अ/३०; 'नन्दिशापाद्भवन्तोऽपि वानरत्वमुपागताः। कुरुध्वं मम साहाय्यं गन्धर्वाप्सरसोत्तमाः।।' रावणः कैलासे नन्दीश्वरं दृष्ट्वा कपिमुखोऽसि इति जहास । तेन रुष्टः सः कपयः तव संहारे कारणाः भविष्यन्ति इति अशपत् । तेन कारणेन देवाः वानरयोनौ अजायन्त इति तात्पर्यार्थः । श्रूयते रामायणादिष्वपि इयं कथा ।। तथा मोक्षधर्मेऽपि (३४८अ/१७-१८) 'त्रितोपघाताद्वैरूप्यं एकतोऽथ द्वितस्तथा । प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी । तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः। महाबला महावीर्या शक्रतुल्यपराक्रमाः । ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ।' इत्युक्तम् । एकतद्वितयोः स्वानुजात् त्रितात् शापप्राप्तिकथा तु शल्यपर्वणि सप्तत्रिंशोऽध्याये द्रष्टव्या । कपिषु नानाजातिरप्युक्ता । तथा हि (ब्र.पु.३-७-३१९/३२०) 'द्वीपिनः शरभाः सिंहा व्याघ्रा नीलाश्च शल्यकाः। ऋक्षा मार्जारलोहासा वानराः मायवस्तथा ।। एता एकादश मता वानराणां तु जातयः। एषां प्रणेता सर्वेषां वाली राजा प्रतापवान् ।।' इति ।।

प्रायिकत्वाज्जाम्बवत्प्रभृतीनां जात्यन्तरेऽपि न विरोधः। पश्चिमोद्भवाः अवतारानन्तरजाः। नरेष्वेवेत्यर्थः। यद्वा देवाः पुरा पश्चादपि वानरेषु नरेषु जाताः। तत्रापवादमाह— **नरेष्वेव पश्चिमोद्भवा इति** ।। न पूर्वपक्षेषु द्वैविध्यं किन्तु नरेष्वेव तेषां जनिरित्यर्थः ।। ६६ ।।

> **स देवतानां प्रथमो गुणाधिको**
> **बभूव नाम्ना हनुमान्प्रभञ्जनः ।**
> **स्वसम्भवः केसरिणो गृहे प्रभु-**
> **र्बभूव [१]वाली स्वत एव वासवः।। ६७ ।।**

**व्यास**— को देवः कुत्र बभूवेत्यत आह— **स इति** ।। प्रथमो न वयसेत्युक्तम्— **गुणाधिक इति** ।। ६७ ।।

**वादि**— को देवः कुत्र बभूवेत्यत आह— **स इत्यादिना** । कपियोनेर्दीनयोनित्वेन पापफलत्व-शङ्कापरिहारायाह— **स्वसम्भव इति** ।। स्वस्मादेव स्वेच्छयेति यावत् । सम्भव उत्पत्तिर्यस्य स तथोक्तः। यद्वा स्वस्मात् स्वतन्त्रतया स्वशब्दवाच्यात् परमात्मन एव । तदाज्ञयैवेति यावत् , सम्भवो यस्य स तथोक्तः। स्वत एव स्वेच्छयैव स्वतन्त्रहर्याज्ञया वा स्वात्मत एव स्वमनसैव स्वतन्त्रपरमात्माज्ञया वा । एवमन्यत्रापि ज्ञातव्यम् ।। ६७ ।।

**सङ्क**— ननु के देवाः वानरेषु जाता इत्यपेक्षायां सविस्तरमाह— **स इत्यादिना** ।। प्रथमो मुख्यः। ननु प्रभञ्जनः कथं जात इत्यत आह— **स्वसम्भव इति** ।। गृहे भार्यायामित्यर्थः। तथा वासवादिदेवानामपि स्वसंभवत्वमस्तीत्याह— **बभूव वालीति** ।। ६७ ।।

**वरद**— तत्रावतारात्पूर्वं के कुत्र वानरेषूत्पन्ना इत्यपेक्षायां प्राधान्यक्रमेण वाय्वादीनां हनुमदादित्वेन अवतारप्रकारमाह— **स इति** ।। देवतानां रुद्रादीनां प्रथमः आद्यो । न केवलं कालेनाद्यः किन्तु गुणाधिकोऽपि।

---

१.वालिजननप्रकारस्तु ब्रह्माण्ड.पु.३-७- 'ऋक्षो नाम महातेजा सर्ववानरयूथपः। हन्ता सदैव शत्रूणां सर्वास्त्रविधिपारगः।। तस्मै तादृग्विशिष्टाय सुतां गुणगणैर्युताम् । प्रजापतिरुपादाय कन्यां हेमविभूषिताम् ।। विरजो विरजां तस्मै प्रत्यपादयदञ्जसा । पाणिं जग्राह तस्यास्तु ऋक्षो वानरयूथपः।। दर्शनीयानवद्याङ्गी सा कन्या चारुहासिनी । चकमे तां महेन्द्रस्तु दृष्ट्वा वै प्रियदर्शनाम।। तेन तस्यां सुतो जातो वाली विक्रमपौरुषः। विरजायां महेन्द्रेण महेन्द्रसमविक्रमः।। तथा स्वांशो भानुना वै तस्यामेव यथाविधि। रहस्युत्पादिता पुत्रः सुग्रीवो हरियूथपः।।' तथा 'वाली चेन्द्रांशसम्भूतः' इति स्कान्दे (माहे.खं१-अ८-९८.) 'वानरेन्द्रं महेन्द्राभमिन्द्रो वालिनमात्मजम् । (वा.रा.बालकाण्ड.१७-१०) उत्तरत्र स्वर्गगमनसमये उ.का.११०-२०,२१ 'वानराश्च स्विकां योनिमृक्षाश्चैव तथा ययुः। येभ्यो विनिसृताः सर्वे सुरेभ्यः सुरसम्भवाः।। तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ।।' इत्युक्तत्वात् ये येभ्यो जाताः ते तदवतारा इति सिद्ध्यति । तथा रामायणे उत्तरकाण्डे प्रकारान्तरेण वालिसुग्रीवयोरुत्पत्तिरुदिता । तथा अवतीर्णदेवतानां स्वरूपादिविषये वायुपुराणे -उत्तरार्धे, ५-१३५. 'देवतानामिहांशेन जायन्ते यास्तु देवताः। तासां तास्तेजसा बुद्ध्या श्रुतेन च बलेन च ।। जायन्ते तत्समाश्चैव ता वै तेषामनुग्रहात् ।।

प्रभञ्जनो वायुः हनूमान्नाम्ना बभूवेत्यर्थः। कस्मात्कुत्र बभूवेत्यत आह— **स्वसम्भव इति** ।। स्वस्मात् सम्भवो यस्यासौ तथा । केसरिणो वानरस्य गृहे भार्यायां प्रादुर्बभूवेति पूर्वेणान्वयः। तदनन्तरं इन्द्रस्यावतारमाह— **बभूवेति** ।। वासवः स्वत एव स्वस्मादेव वाली वालीनामा बभूवेत्यर्थः ।। ६७ ।।

**जना**— के कुत्र जाता इत्यत आह— **स इति** ।। देवानां प्रथम आद्यः गुणाधिकः प्रभुः सः प्रभञ्जनो वायुः केसरिणः मरुत्प्रवरावतारभूतकपेर्गृहे भार्यायामञ्जनायाम् । स्वस्माद्वायोरेव सम्भवो यस्य सः हनुमानिति नाम्ना बभूव । अञ्जना अप्सरा इत्युक्तं सङ्ग्रहरामायणे 'अञ्जनात्वेन सञ्जाता मञ्जुला पुञ्जकस्थली' इति । स्वत एव स्वस्मादेव वासवः वाली बभूव ।। ६७ ।।

**ताम्र**— न वयोमात्रेण प्राधान्यमित्याह— **गुणाधिक इति** ।। गृहे भार्यायां अञ्जनायाम् ।। ६७ ।।

**[1]सुग्रीव आसीत्परमेष्ठितेजसा**
**युतो रविः स्वात्मत एव जाम्बवान् ।**
**य एव पूर्वं परमेष्ठिवक्षस-**
**स्त्वगुद्भवो धर्म इहास्यतोऽभवत् ।। ६८ ।।**

**व्यास**— रविः सुग्रीव आसीदिति सम्बन्धः। परमेष्ठितेजसा युतो जाम्बवांश्चासीत् । जाम्बवान् को देवः कुतो जात इति जिज्ञासायामाह— **य इति** ।। ६८ ।।

**वादि**— यः पूर्वं परमेष्ठिवक्षसस्त्वगुद्भवो धर्म स इह परमेष्ठितेजसा युतः सन् आस्यतो ब्रह्मणो मुखाज्जाम्बवानासीदिति योजना । सञ्ज्ञया सञ्ज्ञादेव्या । वालिसुग्रीवयोर्माताऽप्रसिद्धत्वान्नोक्ता । यो ब्रह्मोद्भवः पूर्वं ब्रह्मण पुत्रो ब्रह्मणः श्रोत्रोद्भवः सोमः पञ्चास्यब्रह्मणः सूनोरत्रेरप्यभूत् स एवाङ्गदो जात इति योजना । धर्म इति वैवस्वतो यम इति च रूपद्वयमस्ति । सोमस्यापि ब्रह्मणः श्रोत्रादुत्पत्तिरत्रिनेत्रादप्युत्पत्तिरस्तीति पौराणिकीं कथां सङ्ग्रहीतुमित्थमुदितमिति ज्ञेयम् ।। ६८-६९ ।।

**सङ्क**— परमेष्ठिनः तेजसा अंशाख्यतेजसा युक्तः। स धर्म इह जाम्बवान् परमेष्ठिनः आस्यतोऽभवत् । इहास्यतोऽ-भवदित्यनेन पुरा परमेष्ठिनोऽवयवान्तरादप्यस्योत्पत्तिरस्तीति सूच्यते । तत्स्पष्टयति— **य एवेति** ।। ६८ ।।

**वरद**— तथा रविः स्वात्मत एव स्वस्मादेव परमेष्ठितेजसा युतः ब्रह्मणोंशेन युतः सन् सुग्रीव आसीदित्यर्थः। तदनन्तरं यमस्यावतारमाह— **जाम्बवानिति** ।। य एव धर्मो यमः पूर्वं परमेष्ठिवक्षसः ब्रह्मणो वक्षस्थलस्य त्वगुद्भवः वक्षस्थलस्य त्वगिन्द्रियात् उद्भव उत्पत्तिर्यस्य स तथा तादृश हि जाम्बवजन्मनि आस्यतो मुखतः ब्रह्मण इति शेषः। अभवदुत्पन्न इत्यर्थः ।। ६८ ।।

---

१. सुग्रीवं जनयामास तपनस्तपतां वरः। वा.रा.बाल.१७-१० ।

**जना**— रविः परमेष्ठिनः ब्रह्मणस्तेजसा आवेशेन युतः स्वात्मतः स्वस्मादेव सुग्रीव आसीत्। जाम्बवानासीत् अत्रापि परमेष्ठितेजसा युत इत्येतत् अन्वेतव्यं इत्याहुः। जाम्बवान् पूर्वं कः कस्मात् कुत्र जात इत्यत आह— **य एवेति** ।। यः पूर्वं परमेष्ठिवक्षसः त्वगुद्भवः धर्मः स इह जाम्बवदवतारे आस्यतो मुखतोऽभवत् ।। ६८ ।।

**ताम्र**— स धर्मः इह जाम्बवान् परमेष्ठिन आस्यतोऽभवत् । इहास्यतोऽभवदिति विशिष्योक्तेः पूर्वमवयवान्तरोत्पत्तिः सूच्यते । तत्स्पष्टयति— **य एवेति** ।। ६८ ।।

**य एव सूर्यात्पुनरेव संज्ञया**
**नाम्ना [१]यमो दक्षिणदिक्प आसीत् ।**
**स जाम्बवान्दैवतकार्यदर्शिना**
**पुरैव सृष्टो मुखतः स्वयम्भुवा ।। ६९ ।।**

**व्यास**— धर्मस्यावतारान्तरमाह— **य इति** ।। ६९ ।।

**सङ्क**— न केवलं पुरा परमेष्ठिसकाशात् धर्मस्योत्पत्तिः किन्त्वन्यतोऽस्तीत्याह— **य एव सूर्यादिति** ।। जाम्बवतो जननस्य कालविशेषमाह— **स जाम्बवानिति** ।। **पुरैवेति** ।। सर्वेभ्यः पूर्वमित्यर्थः ।। ६९ ।।

**वरद**— तथा तस्य धर्मस्य यमाख्यं द्वितीयं रूपमस्तीति वक्तुं द्वितीयं जन्माप्याह— **य एवेति** ।। पुनरेव ब्रह्मणः सकाशादुत्पत्यनन्तरं धर्मनामा सूर्यात् संज्ञायां यमोनाम्रा दक्षिणदिक्पः दक्षिणदिगीशः आसीदुत्पन्न इत्यर्थः। इदानीं जाम्बवज्जन्म च तृतीयमित्याह— **स जाम्बवानिति** ।। दैवतकार्यदर्शनाद्भविष्यद्रामावतारकार्यं जानता स्वयम्भुवा ब्रह्मणा मुखतः पुरैव सृष्ट इत्यर्थः। पुरैवेत्यनेन वानरेषु प्रसक्तं जन्म परिहरति । देवानां वानरेषूत्पत्तेः पूर्वमेवेत्यर्थः ।। ६९ ।।

**जना**— उक्तमेवार्थविवरणपूर्वकमाह— **य इति** ।। यः सूर्यात्संज्ञायां पुनर्जातः। ब्रह्मणो जातत्वात्पुनरित्युक्तम् । नाम्ना यमः। दक्षिणदिक्पालक आसीत् । स जाम्बवान्दैवतकार्यदर्शिना स्वयंभुवा मुखतः पुरैव सृष्टः ।। ६९ ।।

**ताम्र**— धर्मस्यावतारान्तरमाह— **य इति** ।। जाम्बवज्जननकालमाह— **स इति** ।। **पुरैवेति** ।। सर्वेभ्यः पूर्वमित्यर्थः ।। ६९ ।।

---

१. हरिवंश/हरिवंशपर्व-९-७,८ 'त्रीण्यपत्यानि कौरव्य संज्ञायां तपतां वरः। आदित्यो जनयामास कन्यां द्वौ च प्रजापती ।। मनुर्वैवस्वतः पूर्वं श्राद्धदेवः प्रजापतिः। यमश्च यमुना चैव यमजौ सम्बभूवतुः ।। तत्रैव ५८,५९ 'यमस्तु कर्मणा तेन भृशं पीडितमानसः। धर्मेण रञ्जयामास धर्मराज इव प्रजाः। स लेभे कर्मणा तेन परमेण महाद्युतिः। पितृणामाधिपत्यं च लोकपालत्वमेव च ।।'

**[1]ब्रह्मोद्भवः सोम उतास्य सूना-**
**रत्रेरभूत्सोऽङ्गद एव जातः ।**
**[2]बृहस्पतिस्तार उतो शची च**
**शक्रस्य भार्यैव बभूव तारा ।। ७० ।।**

**वादि—** अथो इत्यव्ययवदुतो इत्यप्यस्तीति भावेन 'उतो शची' इत्युक्तम् । शक्रस्यैव भार्या शची चेत्येवकार–सम्बन्धः ।। ७० ।।

**सङ्क—** यथा धर्मस्य जननत्रयमस्ति तथा सोमस्यापि तदस्तीत्याह— **ब्रह्मोद्भव इति** ।। सोमः पुरा ब्रह्मोद्भवः पश्चादस्य ब्रह्मणः पुत्रस्यात्रेः पुत्रोऽभूत् । अनन्तरं स सोमो वालिसुतो अङ्गदो बभूव ।। ७० ।।

**वरद—** यमवच्चन्द्रस्यापि अङ्गदरूपेण जननं तृतीयमित्याह— **ब्रह्मोद्भव इति** ।। आदौ ब्रह्मणः सकाशादुद्भव उत्पत्तिर्यस्य स तथा अनन्तरमस्य ब्रह्मसूनोः अत्रेरत्रिनामकर्षेः अभूदिति द्वितीयं जन्म । असौ इहाङ्गदो जात इत्यर्थः। बृहस्पतिः तारो बभूव उत अनन्तरं शक्रस्येन्द्रस्य भार्या शच्यवतारा बभूवेत्यर्थः ।। ७० ।।

**जना—** ब्रह्मोद्भव उतानन्तरमस्य ब्रह्मणः सूनोरत्रेरभूत् सः सोम एवाङ्गदो जातः। बृहस्पतिस्तारः जातः। उत शक्रस्य भार्यैव शची तारा बभूव ।। ७० ।।

**बृहस्पतिर्ब्रह्मसुतोऽपि पूर्वं**
**सहैव शच्या मनसोऽभिजातः।**
**[3]ब्रह्मोद्भवस्याङ्गिरसः सुतोऽभू-**
**न्मारीचजस्यैव [4]शची पुलोम्नः ।। ७१ ।।**

**व्यास—** बृहस्पतेरवतारान्तरपूर्वकं विवृण्वन्नाह— **बृहस्पतिरिति** ।। ब्रह्मसुतत्वमेव दर्शयति— **पूर्वमिति**।। ब्रह्मणः इति शेषः। शची च मरीचजस्य मरीचिपुत्रकश्यपसुतस्य पुलोम्नः सुताभूत् ।। ७१ ।।

**वादि—** बृहस्पतेः शच्याश्च कथासङ्ग्रहाय जन्मद्वयं दर्शयति— **बृहस्पतिरिति** ।। बृहस्पतिः पूर्वं शच्या सह मनसोऽभिजात इति हेतोर्ब्रह्मसुतोऽपि ब्रह्मोद्भवस्याङ्गिरसः सुतोऽभूदिति सम्बन्धः। अस्यैव शची पुलोम्नःमारीचजस्य कश्यपजस्य पुलोमनाम्नः शच्येव पौलोमीति जाता ।। ७१ ।।

---

१. 'सहस्रशिरसः पुंसो नाभिह्रदसरोरुहम् । जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ।। तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल ।।' (भा.१०-१२-२,३.।) । २. 'बृहस्पतिस्त्वजनयत्तारं नाम महाकपिम् । वा.रा.बा-१७-१.। तथा । 'श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् ।' (वनपर्वणि २८४-२) इत्युक्तत्वात् तारः तारा च सुषेणनामककपेः जातौ । ३. भाग.४-१-३४, ३५'श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः। सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ।। तत्पुत्रावपरावास्तां ख्यातौ स्वरोचिषान्तरे । उचथ्यो भगवान् साक्षाद् ब्रह्मिष्ठश्च बृहस्पतिः ।।' ब्रह्माण्ड.पु.३-६-१,७,२३ । ४. 'अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः ।।.... वैश्वानरः पुलोमा च प्रापणोऽथ महाशिराः ।।..... स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ।।'

**सङ्क—** बृहस्पतिः पूर्वं ब्रह्मसुतोऽपि ब्रह्मोद्भवस्याङ्गिरसः सुतोऽभूत् । कथम् । ब्रह्मसुतः शच्या सह मनसो जातः। तथा द्वितीयजन्मनि सह जननं नास्तीत्याह— **मारीचजस्येति** ।। मरीचेः पुत्रो मारीचः कश्यपस्तस्माज्जातः तस्य पुलोम्नः शची जातेत्यर्थः ।। ७१ ।।

**वरद—** तयोरपीदं तृतीयं जन्मेति वक्तुमाद्यं जन्मद्वयमाह— **बृहस्पतिरिति** ।। पूर्वं शच्या सह बृहस्पतेर्ब्रह्मणो मनसो जातत्वात् । ब्रह्मसुतोऽपि अनन्तरं ब्रह्मोद्भवस्य अङ्गिरसः अङ्गिरसनाम्नो ऋषेः सुतोऽभूदित्यन्वयः। शची च मरीचजस्य मरीचिपुत्रात् कश्यपाज्जातस्य पुलोम्नः सुतोऽभूदित्यर्थः ।। ७१ ।।

**जना—** तयोः पूर्वोत्पत्तिकथनपूर्वकमिदानीन्तनोत्पत्तिमाह— **बृहस्पतिरिति** ।। ब्रह्मसुतोऽपि बृहस्पतिः ब्रह्मोद्भवस्याङ्गिरसऋषेः सुतोऽभवत् । ब्रह्मसुतत्वमेव तस्य कथमित्यत आह— **पूर्वमिति** ।। पूर्वं शच्या सहैव ब्रह्ममनसोऽभिजातः अतस्तत्सुत इति भावः। मरीचजः कश्यपस्तस्य पुलोम्नः पुत्री जाता ।। ७१ ।।

**ताम्र—** बृहस्पतिः पूर्वं ब्रह्मसुतोऽपि ब्रह्मोद्भवस्याङ्गिरसः सुतोऽभूदित्यन्वयः। कथम् । ब्रह्मसुतः शच्या सह मनसोऽभिजातः प्रथमजन्मनि । द्वितीयजन्मनि शच्या सह न जन्म इत्याह— **मारीचजस्येति** ।। कश्यपपुत्रस्य ।। ७१ ।।

**स एव शच्या सह वानरोऽभू-**
**त्स्वयम्भुवो देवगुरुर्बृहस्पतिः।**
**अभूत्सुषेणो[1] वरुणोऽश्विनौ[2] च**
**बभूवतुस्तौ विविदश्च मैन्दः ।। ७२ ।।**

**वादि—** बृहस्पतेः पूर्वं स्वेच्छया जन्मानुक्तेस्तद्वक्तुं पुनराह— **स एव शच्येति** ।। देवगुरुरिति अत्र युक्तिसूचनायोक्तम् ।। ७२ ।।

**सङ्क—** ।। **तावश्विनाविति** ।। ब्रह्मणो मनसोर्जातौ ब्रह्मोद्भवौ जातावित्यनुवादः ।। ७२ ।।

**वरद—** इदानीं इदं तृतीयं जन्मेत्याह— **स एवेति** ।। स एव देवगुरुर्बृहस्पतिः शच्या सहैव स्वसम्भवः स्वस्मात्सम्भवो यस्य स तथाभूतः सन् वानरोऽभूदित्यर्थः। वरुणश्च सुषेणस्तन्नामा वानरोऽभूत् । अश्विनौ च विविदमैन्दश्चेति वानरौ बभूवतुः ।। ७२ ।।

**जना—** स एव । देवगुरुर्बृहस्पतिः स्वसम्भवः स्वस्मादेव सम्भवो यस्य सः शच्या सह वानरोऽभूत् । वरुणः सुषेण अभूत् । तावश्विनौ मैन्दश्च विविदश्च बभूवतुः ।। ७२ ।।

**ताम्र—** द्वितीयजन्मवत्तृतीयजन्मनि असहजननं नेति भावेनोक्तं विवृणोति— **स एव इति** ।। **तावाश्विना- विति**।। ब्रह्मणो मनोजत्वेन प्रसिद्धावित्यर्थः ।। ७२ ।।

---

१. वरुणो जनयामास सुषेणं नाम वानरम् ।। १७-१४ ।।' २. 'रूपद्रविणसम्पन्नावाश्विनौ रूपसंमतौ । मैन्दं च विविदं चैव जनयामासतुः स्वयम् ।। १७-१५ ।। वाल्मीकिरामायणम्, बालकाण्डे ।

**ब्रह्मोद्भवौ तौ पुनरेव [१]सूर्या-**
**द्बभूवतुस्तत्र कनीयसस्तु ।**
**आवेश ऐन्द्रो वरदानतोऽभू-**
**त्ततो बलीयान्विविदो हि मैन्दात् ।। ७३ ।**

**वादि**— ब्रह्मोद्भवौ ब्रह्मणः नासापुटादुत्पन्नौ तावश्विनौ पुनरेव सूर्याद्वडवारूपिण्यां सूर्यपत्न्यां बभूवतुः। तत्र कनीयसो विविदस्यैन्द्रावेशो वरदानतोऽभूदिति सम्बन्धः। हीत्यनेन कृष्णावतारे नरकासुरसहायेन बहुसत्त्वकरणाद्बलीयस्त्वं प्रसिद्धमित्याह ।। ७३ ।।

**सङ्क**— अश्विनोः सदा समत्वेऽपि मैन्दविविदजन्मनि कारणतो विशेषोऽस्तीत्याह— **तत्रेति** ।। ७३ ।।

**वरद**— तयोरपि पूर्वजन्मद्वयमस्तीत्याह— **ब्रह्मोद्भवाविति** ।। पूर्वं ब्रह्मोद्भवौ पुनरेव सूर्यात् बभूवतुः । तत्र तयोर्मध्ये हि यस्मात् कनीयसोऽनुजस्य विविदस्य ऐन्द्रसम्बन्धी आवेशो वरदानत इन्द्रस्य वरदानतोऽभूत् ततः कारणात् मैन्दात् विविदो बलीयान् जात इत्यर्थः ।। ७३ ।।

**जना**— तयोः पूर्वजन्मकथनपूर्वकं विशेषमाह— **ब्रह्मेति** ।। ब्रह्मोद्भवौ पुनरेव सूर्यात् बभूवतुः। तत्र तयोर्मध्ये कनीयसः वरदानतः ऐन्द्र आवेश अभूत् । तत आवेशात्कारणात् मैन्दाद्विविदो बलवान् हि ।। ७३ ।।

**ताम्र**— ब्रह्मोद्भवौ तावित्यनुवादः। अश्विनोरेव विविदमैन्दतयावतारे विविदे बलाधिक्यमयुक्तं समत्वात्तयोरित्यत आह— **तत्रेति** ।। ७३ ।।

**[२]नीलोऽग्निरासीत्कमलोद्भवोत्थः**
**कामः पुनः [३]श्रीरमणाद्रमायाम् ।**
**[४]प्रद्युम्ननामाऽभवदेवमीशात्**
**स स्कन्दतामाप स चक्रतां च ।। ७४ ।।**

---

१. हरिवंश/हरिवंशपर्व.९/५३-५५ 'सोऽश्वरुपेण भगवांस्तां मुखे समभावयत् । मैथुनाय विचेष्टन्ती परपुंसोपशङ्कया ।। सा तन्निरवमच्छुक्रं नासिकायां विवस्वतः ।। देवौ तस्यामजायेतामश्विनौ भिषजां वरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।।'

२. पावकस्य सुतः श्रीमान् नीलोऽग्निसदृशप्रभः। तेजसा यशसा वीर्यादत्यरिच्यत वीर्यवान्' वा.रा.बाल.१७-१३ ।

३. 'देहहानिं प्रपेदेऽसौ पुत्रोऽपि परमात्मनः।' स्कान्दे,वैशाख.मा-९-२६ इति कामदहनप्रस्तावे कामस्य मूलरूपिविष्णुपुत्रत्वमुक्तम्। तेन 'श्रीरमणाद् रमायां' इति आचार्यवाक्यमपि तद्रीत्या योजयितुं शक्यते इति भाति ।

४. विष्णुधर्मोत्तरे प्र.खं/२०९/९,२१ 'तस्य कामाभवपुषः प्रवेशे भरतस्य तु ।' इति । तथा । 'प्रद्युम्नांशसमुत्पन्नः प्रद्युम्नसमदर्शनः।।' इति भरतस्य प्रद्युम्नांशसमुत्पन्नत्वं तथा प्रद्युम्नसादृश्यमुक्तम् । प्रद्युम्नः काम इति च पर्यायान्तरम् । स एव कृष्णपुत्रः प्रद्युम्नः 'तस्यां जज्ञे च प्रद्युम्नो मदनांशः स वीर्यवान्' (ब्रह्ममहापुराण.९१अ-१२) इत्युक्तेः। स च सनत्कुमार इत्युक्तः। स्वर्गारोहणपर्वणि ५-१३ 'सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।' इति । स एव स्कन्ध इति 'तं वै स्कन्द इत्याचक्षते तं वै स्कन्द इत्याचक्षते' इति छान्दोग्ये सप्तमाध्यायान्ते उक्तम् । तेन प्रद्युम्नकामसनत्कुमारस्कन्दानां ऐक्यं सिद्ध्यति ।

**वादि**— एवं वानरेषु जातान् देवानुक्त्वाऽधुना नरेषु जातान् वक्तुं तन्मूलरूपं विवेचयन् प्रसङ्गात्कथान्तरमप्याह— **काम इत्यादिना** ।। कमलोद्भवोत्थ इति पदं देहलीदीपन्यायेन पूर्वत्रोत्तरत्र च सम्बध्यते । तथा च कमलोद्भवोत्थः कमलोद्भवमुखादुत्पन्नोऽग्निर्नील आसीत् । कमलोद्भवमनसो जातः कामः पुनः श्रीरमणात् श्रीकृष्णात् रमायां रुक्मिण्यां प्रद्युम्ननामाभवत् । एवं यः स कामः ईशाद्रुद्रादपि स्कन्दतामाप । स एव कामः हरेश्चक्रतां चक्ररूपत्वं चाप ।। ७४ ।।

**सङ्क**— पूर्वं कमलोद्भवोत्थः अग्निः नीलः आसीत् । एवं वानरत्वेन जाता उक्ता । अथ नरेषु जातान् देवानाह— **काम इत्यादिना** ।। कामः पूर्वं ब्रह्मणो मनसो जातः पुनः श्रीरमणात् श्रीकृष्णात् रुक्मिण्यां प्रद्युम्ननामाभवत् । एवमीशाद्रुद्रादपि स्कन्दतामाप चक्रतां चाप ।। ७४ ।।

**वरद**— अग्निर्नीलो नीलनामावतार आसीत् । पूर्वं कमलोद्भवोत्थः कामः पुनः श्रीरमणात् कृष्णात् रमायां रुक्मिण्यां प्रद्युम्ननामा अभवत् । एवमीशात् रुद्रात् स कामः स्कन्दतामाप स्कन्दरूपोऽभवदिति । तथा स एव चक्रतां सुदर्शनचक्राभिमानिदेवतात्वमापेत्यर्थः ।। ७४ ।।

**जना**— कमलोद्भवो ब्रह्मा तस्मादुत्थः अग्निः नील आसीत् । कामावतारं तत्पूर्वोत्पत्तिकथनपूर्वकमाह— **काम इत्यादिना** ।। कमलोद्भवोत्थ इत्येतदावर्तनीयम् । कमलोद्भवोत्थः कामः पुनः श्रीरमणात् कृष्णाद्रमायां रुक्मिण्यां प्रद्युम्ननामाभवत् । एवमीशात् रुद्रात्सः कामः स्कन्दतामाप । सः कामश्चक्रतां चक्राभिमानित्वं चक्रशब्दवाच्यत्वं आप ।। ७४ ।।

**ताम्र**— एवं वानरेषु जातानुक्त्वा नरेषु जातानाह— **काम इत्यादिना** ।। ७४ ।।

**पूर्वं [१]हरेश्चक्रमभूद्धि दुर्गा**
**तमःस्थिता श्रीरिति यां वदन्ति ।**
**सत्त्वात्मिका शङ्खमथो रजस्था**
**भूर्नामिका पद्मम्भूद्धरेर्हि ।। ७५ ।।**

---

१. अत्र 'शङ्खचक्रगदापद्मश्चतुरात्मा प्रकीर्तितः। वासुदेवः स्मृतः शङ्खश्चक्रं सङ्कर्षणस्तथा । प्रद्युम्नश्च गदा पद्ममनिरुद्धो जगद्गुरुः' इति विष्णुधर्मोत्तरवचनात् (३खं/१४८अ/१-२) अप्राकृतानि अनादिनित्यानि भगवत्स्वरूपभूतानि शङ्खचक्राद्यायुधानि सन्तीति ज्ञायते । यत्तु पुराणादिषु चक्रादीनामुत्पत्तिकथनं तथा दुर्गादीनां चक्राद्यभिमानित्वकथनं तत् भगवत्स्वरूपातिरिक्तप्राकृत-चक्रादिपरमित्यवगन्तव्यम् । चक्रोत्पत्तिकथा तु 'तेजसश्शमनं चास्य विश्वकर्मा चकार ह । भ्रममारोप्य सूर्यं तु तस्य तेजोनिशातनम् । कृतवानष्टमं भागं स व्यशातयदव्ययम् । यत्तस्माद्वैष्णवं तेजश्शातितं विश्वकर्मणा । जाज्वल्यमानमपतत् तद्भूमौ मुनिसत्तम । त्वष्टैव तेजसा तेन विष्णोश्चक्रमकल्पयत् । त्रिशूलं चैव शर्वस्य शिबिकां धनदस्य च । शक्तिं गुहस्य देवानामन्येषां च यदायुधम् । तत्सर्वं तेजसा तेन विश्वकर्मा व्यवर्धयत् । इति विष्णुपुराणे ३अं/२अ/८-१२ तथा भागवतादिष्वपि द्रष्टव्यम् ।

**व्यास**— कामश्चक्रतामापेत्युक्तं तत्र हरेश्चक्रं पूर्वं देवतानधिष्ठितमिति जिज्ञासायामाह**पूर्वमिति** ।। प्रसङ्गाच्छङ्खादिदेवता आह— **सत्त्वात्मिकेति** ।। रजस्था रजस्तत्वाभिमानिनी ।। ७५ ।।

**वादि**— तर्हि कामस्य चक्रात्मकत्वे ब्रह्मप्रलये चक्रं न स्यादित्यत आह— **पूर्वमिति** ।। तमःस्थिता तमोऽभिमानिनी दुर्गा हरेश्चक्रमभूत् । यां श्रीरिति वदन्ति । सा सत्त्वात्मिका सती शङ्खमभूत् । अथो रजस्था भूर्नामिका देवी हरेः पद्ममभूदिति सम्बन्धः। चक्रस्य लौकिकाय चक्रसादृश्याय सूर्यबिम्बवत् अन्तर्नीलत्वान्नीलवर्णतमोऽभिमानिदुर्गात्मकत्वमुक्तम् । शङ्खस्य शुक्लवर्णत्वेन शुक्लसत्त्वत्वगुणाभिमानि-श्रीरूपत्वमुक्तम् । पद्मस्य तु रक्तवर्णत्वेन रक्तवर्णरजोऽभिमानिभूरूपत्वमिति ज्ञेयम् ।। ७५ ।।

**सङ्क**— ननु हरेश्चक्रं कामश्चेत्तदुत्पत्तेः पुरा हरेः चक्राभावः स्यादित्यत आह— **पूर्वमिति** ।। ननु हरेश्चक्रं तमोभिमानिनी श्रीरिति पुराणादिषूक्तिरस्त्यतः कथं दुर्गायाश्चक्रत्वमित्यत तदुक्तेर्गतिमाह— **तमः स्थितेति** ।। दुर्गामेव तमःस्थितां श्रीरिति वदन्ति । तथा अनिरुद्धोत्पत्तेः पूर्वं सत्त्वात्मिका शङ्खम् । रजःस्थिता रजोगुणाभिमानिनी श्रीः पद्मम् । ननु रजोऽभिमानिन्याः श्रियः पद्मत्वे भुवः पद्मत्वोक्तिविरोध इत्यत आह— **भूर्नामिकेति** ।। सैव भूर्नामिकेति न तदुक्तिविरोध इत्यर्थः ।। ७५ ।।

**वरद**— ननु दुर्गायाश्चक्राभिमानित्वं

[1]'तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गापि तस्य तु ।
सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी ।।' इति प्रमाणप्रसिद्धम् ।

अतः कामस्य कथं चक्राभिमानित्वं इत्यतो अवान्तराभिमानित्वं वरेणाप्तं कामेनेति वक्तुं पूर्वस्थितिमाह— **पूर्वमिति** ।। तमस्थिता तमोगुणप्रवर्तकत्वेन स्थिता तमोऽभिमानिनी दुर्गा हरेश्चक्रमभूदिति प्रसिद्धमित्यर्थः। तथा सत्त्वात्मिका सत्त्वगुणप्रवर्तकत्वेन तदभिमानिनी शङ्खमभूदित्यन्वयः। तस्या नामधेयमाह— **श्रीरिति** ।। यां सत्त्वात्मिकां श्रीरिति वदन्ति सा सत्त्वात्मिका श्रीः हरेः शङ्खाभिमानिनीत्यर्थः। अथो अनन्तरं रजस्था रजोगुण—प्रवर्तकत्वेन विद्यमाना रजोगुणाभिमानिनी भूर्नामिका रमा हरेः पद्ममभूत् पद्माभिमानिनी स्थितेत्यर्थः ।। ७५ ।।

**जना**— चक्राभिमानिप्रस्ङ्गादायुधाभिमानिन आह— **पूर्वमिति** ।। तमस्थिता तमोभिमानिनी दुर्गा पूर्वं हरेश्चक्रमभूत् । चक्राभिमानिनी चक्रनाम्नी चाभूत् । एवं सर्वत्र ज्ञेयम् । यां श्रीरिति वदन्ति सा सत्त्वात्मिका शङ्खमभवत् । अथो रजस्था रजोभिमानिनी भूर्नामिका हरेः पद्ममभूद्धि ।। ७५ ।।

**ताम्र**— ननु हरेश्चक्रं कामश्चेत् तदुत्पत्तेः प्राक्चक्राभावः स्यादित्यत आह— **पूर्वमिति** ।। हीत्यनेन

'तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गापि तस्य तु ।
सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी ।।'

इति प्रमाणं सूचयति । तमस्था तमोभिमानिनी । एतच्च तमसश्चक्रत्वोक्तिपरिहाराय । एवमुत्तरत्र बलज्ञानयोः गदात्वोक्तिविरोधपरिहाराय वायुशब्दव्याख्यानाय बलसंविदात्मेत्युक्तम् । शार्ङ्गं च विद्येत्युदिता रमैवेत्यर्थः।

---

१. भा.ता.३-१२-३८ ।

**रमैव खड्ग** इति तन्त्रेण योज्यम् । केचित्तु शार्ङ्गं च वायुरित्यन्वयः। यत्र क्वचिद्विद्या खड्ग इत्युच्यते तद्विरोधपरिहारपूर्वमाह— **विद्येति** ।। रमैव खड्ग इति व्याचक्षते । अन्ये तु विद्येति प्रसिद्धा सरस्वती शार्ङ्गमभूदित्यर्थमाहुः[1] ।। ७५ ।।

> [2]**गदा तु वायुर्बलसंविदात्मा**
> **शार्ङ्गं च विद्येति रमैव खड्गः ।**
> **दुर्गात्मिका सैव च चर्मनाम्नी**
> **पञ्चात्मको मारुत एव बाणः ।। ७६ ।।**

**वादि**— 'या देवी सर्वभूतेषु विद्यारूपेण संस्थिता' इति वचनात् विद्येति या रमा सैव शार्ङ्गः शार्ङ्गाख्यश्चापः। **पञ्चात्मकः** प्राणादिपञ्चात्मकः ।। ७६ ।।

**सङ्क**— यत्र क्वचिद्विद्या खड्ग इति तत्रापि श्रीरित्याह— **रमेति** ।। ७६ ।।

**वरद**— बलसंविदात्मा बलज्ञानप्रवर्तकः तदात्मकश्च वायुः तु हरेर्गदा अभूदित्यर्थः। तथा विद्येति प्रसिद्धा सरस्वती शार्ङ्गश्च अभूदित्यर्थः। रमैव मूलरूपेण खड्गाभिमानिनी स्थितेत्यर्थः। दुर्गात्मिका सैव रमैव चर्मनाम्नी चर्माख्यायुधाभिमानिनीत्यर्थः। पञ्चात्मकः प्राणापानादिपञ्चवृत्तिर्मारुत एव बाणो बाणाभिमानीत्यर्थः ।। ७६ ।।

**जना**— बलसंविदात्मा बलज्ञानात्मा वायुः गदाभूत् । शार्ङ्गश्च वायुरभूत् । या विद्येति विद्याभिमानिनीति प्रसिद्धा या रमा सैव खड्गः खड्गशब्दवाच्या तदभिमानिनीति च । यद्वा विद्या सरस्वती शार्ङ्गश्च रमा खड्गः दुर्गास्वरूपिणी सैव रमा चर्माभूत् । पञ्चात्मकः प्राणोपानव्यानोदानसमानात्मकः मारुतः वायुर्बाणः ।। ७६ ।।

**ताम्र**— पञ्चात्मकः प्राणादिरूपेण ।। ७६ ।।

---

१. यत्तु 'शार्ङ्गश्चैव सरवती' इति तत् अवान्तराभिमानिपरं इति वक्तुं शक्यते । २. भा.१२/१०/१४ 'ओजस्सहोबलयुतं मुख्यतत्त्वं गदां दधत्' इत्यत्र मुख्यतत्त्वशब्दो मुख्यप्राणमेव वक्ति । तथाहि । तत्रैव भागवते अष्टमस्कन्धे (५अ-३७)'प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः' इति समाख्यानात् । "मुख्यतत्त्वं प्राणतत्त्वम् । 'प्राणो वै मुख्यः' इति श्रुतेः" इति श्रीधरादयः। सुबोधिनीकारा अपि 'चतुर्भुजं शङ्खगदाद्युदायुधं' इत्यत्र (भाग.१०स्कं-३अ/९) 'प्राणात्मको वायुर्गदा' इति व्याचक्षाणाः अमुमेवार्थमुररीचक्रुः। अतः मूले बलसंविदात्मकस्य वायोः गदात्मकत्वोक्तिः सुश्लिष्टा । भा.१२-१०-१५.'चर्म तमोमयम्' अत्र चर्मणः तमोगुणात्मकत्वोक्तेः तमोगुणस्य च दुर्गाभिमन्यमानत्वस्य पुराणादिषु प्रसिद्धत्वात् दुर्गात्मिका सैव च चर्मनाम्नीत्युक्तिः सङ्गच्छते । वायुपुराणे (४७अ.१-४) गयामाहात्म्ये गदोत्पत्तिप्रकारः। 'गदो नामासुरो ह्यासीत् वज्राद् वज्रतरो दृढः। प्रार्थितो ब्रह्मणे प्रादात् स्वशरीरास्थि दुस्त्यजम् । ब्रह्मोक्तो विश्वकर्मापि गदां चक्रेऽद्भुतां तदा । तां विष्णवे प्रादात् ।' इति । तथा विष्णुसहस्रनामशाङ्करभाष्ये। 'मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयन् लोकरक्षार्थमुक्तश्चक्रगदाधरः।' तथा 'बुद्धिरप्यास्ते गदारूपण माधवे' (विष्णुपुराण १अं-२२अ-६९) इत्यत्र विष्णुसहस्रनामशाङ्करभाष्यविवृतौ तथा श्रीधरस्वामिकृतविष्णुपुराणव्याख्याने 'बुद्धिर्महत्तत्वं गदारूपेण अध्यास्ते' इत्युक्तम् ।

**राम— 'पञ्चात्मको मारुत एव बाणः'** इत्यत्र पञ्चरूपी मुख्यप्राणो बाणाभिमानी । अवराभिमानिनस्तु प्रवहविनायकाग्निसूर्याः। तथा च प्रवहः बाणपुङ्खाभिमानी । तस्मिन् व्यानाख्यमुख्यप्राणः । बाणमध्यभागयष्ट्यभिमानी विनायकः। तस्मिन् समाननामा मुख्यप्राणः। रविवह्नी उभौ बाणाग्रभागधाराभिमानिनौ । तयोर्मध्ये सूर्ये प्राणरूपेण वह्नौ उदानरूपेण तिष्ठति । अपानरूपेण बाणभागत्रयस्याभिमानीति ज्ञेयम् । तदेतदुक्तं सङ्ग्रहरामायणे –

'तं वायुबीजं रविवह्निधारप्रकाशमानस्वशरीरयष्टिम् ।
शरं महामेरुगुरुम्..........................॥' इति ।

षट्प्रश्नोपनिषदि च 'आदित्यो ह वै बाह्यप्राणः यदन्तराकाशः स समानः वायुर्व्यानः तेजो ह वा उदानः' इति ॥७६-८१ ॥

इति श्रीमन्महाभारततात्पर्यभावप्रकाशिकायां
श्रीवासुदेवयतिपूर्वाश्रमतनुजरामकृतौ तृतीयोऽध्यायः

**एवं स्थितेष्वेव पुरातनेषु**
**वराद्रथाङ्गत्वमवाप कामः।**
**तत्सूनुतामाप च सोऽनिरुद्धो[१]**
**ब्रह्मोद्भवः शङ्खतनुः पुमात्मा ॥ ७७ ॥**

**वादि—** ब्रह्मोद्भवो योऽनिरुद्धोऽनिरुद्धनामको देवः सः तत्सूनुतां कृष्णावतारे प्रद्युम्नसूनुतामाप च । पुमात्मा पुरुषाकाररूपी सोऽनिरुद्धः शङ्खतनुश्चाभूत् । 'रामतोऽनु' इत्यत्र रामतोऽनु कैकेय्यां भरतो जातः। शत्रुघ्नो लक्ष्मणश्च सुमित्रायां रघूत्तमादनन्तरं जातौ । रामतो अनन्तरजातात् भरतादनन्तरमुत्पन्नयोः लक्ष्मण–शत्रुघ्नयोरपि सुतरां रामानन्तरजातत्वाद्रघूत्तमादन्वित्युक्तम् । भरतः साक्षादनुज इमौ तु परम्परया रामानुजाविति भावः। कथमन्यथा रामस्य वनवासे भरतस्यैव राज्यं भविष्यतीत्याशा कैकेय्याः। अत एवोक्तं महानाटके । 'चतुर्णां त्वमवरजतया यस्य जातः' इति ॥ ७७ ॥

**सङ्क—** नन्वेवं चक्रादिषु पुरा सत्सु कामस्य चक्रत्वं कथमभूदित्यत आह— **वरादिति** ॥ एवमनिरुद्धो शङ्खात्मकः यो ब्रह्मसुतः सोऽनिरुद्धः कामसुततामाप । अनिरुद्धः पुमात्मापि रूपान्तरेण शङ्खतनुः ॥ ७७ ॥

**वरद—** एवं स्थितौ विद्यमानायामेव कामो वरात् हरेर्वराद्रथाङ्गत्वं चक्रत्वमवाप अतो न प्रमाणविरोध इति भावः। अनिरुद्धेनाप्येवमेव शङ्खता प्राप्तेति वक्तुमाह— **तदिति** ॥ यः पूर्वं ब्रह्मोद्भवः सोऽनिरुद्धः तत्सूनुतां तस्य कामस्य सूनुतामवाप । अनन्तरं कामादुत्पन्न इत्यर्थः। स एव पुमात्मा पुरुषजीवाभिमानी अनिरुद्धो वराच्छङ्खतनुः शङ्खाभिमानी बभूवेत्यर्थः ॥ ७७ ॥

---

१. ग.पु,ब्र.का.३०-१,२.'कामपुत्रोऽनिरुद्धोऽपि हरेरन्यः प्रकीर्तितः। स एवाभूत् हरेः सेवां कर्तुं रामानुजो भुवि । शत्रुघ्न इति विख्यातः शत्रून् सूदयते यतः ॥

**जना**— एवं पूर्वोक्तप्रकारेण पुरातनेषु अभिमानिषु स्थितेषु एव कामो वरात् चक्रत्वं तच्छब्दवाच्यत्वं तदाभिमानित्वं चाप । ब्रह्मोद्भवः सोऽनिरुद्धस्तत्सूनुतां तस्य कृष्णपुत्रस्य प्रद्युम्नस्य सूनुतां आप । पुमात्मा पुरुषजीवाभिमानी अनिरुद्धः शङ्खतनुः। शङ्खाभिमानी शङ्खनामा च जातः ।। ७७ ।।

**ताम्र**— ।। **एवमिति** ।। तथा च न पूर्वं चक्राभावः शङ्ख्य इति भावः। यः पूर्वं ब्रह्मसुतः सोऽनिरुद्धः कामसूनुतामाप । अनिरुद्धः स पुमात्मा रूपान्तरेण शङ्खतनुरित्यर्थः। 'यः पूर्वं ब्रह्मोद्भवः अनिरुद्धः अनन्तरं कामपुत्रत्वं स एव पुमात्मा पुरुषजीवाभिमानी अनिरुद्धः वराच्छङ्खतनुर्बभूव' इति केचित् । योऽनिरुद्धो ब्रह्मोद्भवः स एव शङ्खतनुः शङ्खरूपी सन् तस्य कामस्य सूनुतामापेत्यन्ये ।। ७७ ।।

**तावेव जातौ [१]भरतश्च नाम्ना**
**शत्रुघ्न इत्येष च रामतोऽनु ।**
**पूर्वं सुमित्रातनयश्च शेषः[२]**
**स लक्ष्मणो नाम रघूत्तमादनु ।। ७८ ।**

**व्यास**— सः शङ्खतनुश्च जातः पूर्वं कमलोद्भवोत्थ इत्यादिपदार्थं निरूपितं तदाह— **तावेवेति** ।। **शेषश्च** पूर्वं सुमित्रातनयो जात इत्युक्त्या भगवतोऽपि पूर्वोत्पत्तिप्रतीतिं निवारयति— **रघूत्तमादन्विति** ।। ७८ ।।

**अभिनव**— तावेव जातौ इति श्लोकः । तस्यार्थः तावेव प्रद्युम्नानिरुद्धावेव रामतः अनु रामात् अनन्तरं जातौ । तयोर्मध्ये प्रद्युम्नः भरत इति च भरत इत्येव नाम्ना विशिष्टः जातः । अनिरुद्धः शत्रुघ्न इत्येव नाम्ना विशिष्टो जातः । लक्ष्मणोत्पत्तेः पूर्वं भरतशत्रुघ्नावुत्पन्नाविति भ्रमं वारयति— **पूर्वमिति** ।। शेषः शेषावतारः सुमित्रातनयः सः रामभक्तत्वेन प्रसिद्धः लक्ष्मणः रघूत्तमात् अनु रघूत्तमादनन्तरं भरतशत्रुघ्नाभ्यां पूर्वं च पूर्वमेव जातः । इत्येतत् नाम प्रसिद्धमिति । अनेन रामात् अनन्तरं लक्ष्मणः । लक्ष्मणादनन्तरं भरतः । भरतादनन्तरं शत्रुघ्नो जात इत्युक्तं भवति ।। ७८ ।।

**सङ्क**— तौ कामानिरुद्धावित्यर्थः। भरतशत्रुघ्नयोः पूर्वं स शेषो लक्ष्मणः सन् सुमित्रातनयश्च रघूत्तमादनु जातः। एवं त्रिभ्यो ज्यैष्ठ्यं श्रीरामस्येत्युक्तम् ।। ७८ ।।

**वरद**— एवं प्रासङ्गिकं समाप्य तयोः कामानिरुद्धयोः अवतारमाह— **तावेवेति** ।। तावेव कामावनिरुद्धावेव रामतोऽनु रामावतारानन्तरं कामो भरतनाम्ना जातः। अनिरुद्धश्च शत्रुघ्न इति नाम्ना जातः। अथ **शेषावतारमाह**—

---

१. 'सुदर्शनश्च भरतो हरेः शङ्खस्ततोऽनुजः। ...प्रद्युम्नो भरतो ज्ञेयोऽनिरुद्धः शत्रुहा प्रभुः।' इति भविष्योत्तरपुराणे /प्रतिसर्गपर्व-१५अ-६०,६१। यत्तु पद्मपुराणादिषु (उत्तरखण्डे-२४२अ-९४,९५ ) 'कैकेय्यां भरतो जज्ञे पाञ्चजन्यांश चोदितः। सुदर्शनांशाच्छत्रुघ्नः सञ्जज्ञेऽमितविक्रमः' इति भरतशत्रुघ्नयोः आचार्योक्तक्रमवैपरीत्येन शङ्खचक्रात् जनिरुच्यते । यच्च लिङ्गादिपुराणेषु (उत्तरभाग-५अ-१४७.)'तत्र मे दक्षिणो बाहुर्भरतो नाम वै भवेत्। शत्रुघ्नो नाम सव्यश्च शेषोऽसौ लक्ष्मणस्स्मृतः' इति आचार्यैरनुक्तं दक्षिणसव्यबाहुजन्यत्वं उच्यते तत् पुंव्यत्यासेन सङ्गमनीयम् । २. 'अनन्तांशेन सम्भूतो लक्ष्मणःपरवीरहा।' पद्म-उ.खं-२४२अ-९५.। 'ततः शेषात्मतां यातं लक्ष्मणं सत्यसङ्गरम् ।' स्कन्द.वैष्णवखण्ड-अयोध्यामाहात्म्यम् ।

**पूर्वमिति** ।। भरतशत्रुघ्नोत्पत्तेः पूर्वं शेषः सुमित्रातनयः सुमित्राख्यायाः दशरथभार्यायास्तनयः सन् लक्ष्मणो नाम रघूत्तमादनु जात इत्यर्थः। अनेनादौ रामः प्रसूतः ततो लक्ष्मणस्ततो भरतः ततः शत्रुघ्न इत्येवमवतारक्रमोक्त्या श्रीरामस्य लक्ष्मणादिसर्वापेक्षया ज्येष्ठत्वमुक्तं भवति ।। ७८ ।।

**जना**— तावेव प्रद्युम्नानिरुद्धावेव नाम्ना भरत इति नाम्ना शत्रुघ्न इति नामत अनुजातौ । सः शेषः रघूत्तमादनु अनन्तरं पूर्वं भरतशत्रुघ्नाभ्यां पूर्वं सुमित्रातनयः लक्ष्मणः बभूव । लक्ष्मणस्य भरतोत्तमत्वं उक्तं सङ्ग्रहे [१]''सीतायाः लक्ष्मणस्यापि ववन्दे चरणावसौ' इति । तथोत्तरकाण्डे—

'शत्रुघ्नः प्राञ्जलिः प्रोचे प्रसीद पुरुषोत्तम ।
आर्यो मे मध्यमो धन्यस्त्वच्छुश्रूषां वनेऽकरोत् ।।
भरतेन ममार्येण ह्यधिजीवति किङ्करे ।
चतुर्दशसमास्तप्तं त्वत्प्रीत्यै भूमिशायिना ।।
ब्रह्मघ्नं लवणं हत्वा त्वत्प्रसादेन केवलम् ।
सार्थाः शत्रुघ्नता स्यान्मे प्रोच्येति प्रणनाम स ।।' इति ।

तथार्षे लङ्काकाण्डे—

[२]''ततो लक्ष्मणमासाद्य वैदेहीं च परन्तप ।
अभ्यवन्दत सुप्रीतो भरतो नाम चाब्रवीत् ।।' इति ।

केचित् 'पूर्वं यः शेषः सः लक्ष्मणः सन् रघूत्तमादनु सुमित्रातनयो बभूव । तदुक्तं आर्षे बालकाण्डे—

[३]''भरतो नाम कैकेय्यां जातः सत्यपराक्रमः।
अथ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।।' इति वचनादित्याहुः।

क्वचिच्छुषुवे शुभाविति पाठः ।। ७८ ।।

**ताम्र**— पूर्वं भरतशत्रुघ्नयोः पूर्वं रघूत्तमादनन्तरं स शेषो लक्ष्मणः सुमित्रातनयो जात इति शेषः ।। ७८ ।।

> **कौसल्यकापुत्र उरुक्रमोऽसा-**
> **वेकस्तथैको भरतस्य मातुः ।**
> **उभौ सुमित्रातनयौ नृपस्य**
> **चत्वार एते ह्यमरोत्तमाः सुताः ।। ७९ ।।**

**व्यास**— कः कस्या पुत्र इत्यत आह— **कौसल्यकेति** ।। अस्य भरतस्य ।। ७९ ।।

**सङ्क**— ननु तत्र चतृषु मातृषु विवेकः कथमित्यत आह— **कौसल्यकेति** ।। ७९ ।।

---

१. सं.रा. १५-५२, युद्धकाण्डे । २. वा.रा. १२७-४१, युद्धकाण्डे । ३. वा.रा. १८-१३, युद्धकाण्डे ।

**वरद**— सुमित्रातनय इत्यनेन लक्ष्मण एक एव सुमित्रातनय इति प्रतीयते । तन्निरासार्थं सर्वत्र विवेचयन्नाह— **कौसल्यकेति** ।। असौ उरुक्रमः हरिरेक एव कौसल्यकापुत्रो जात इत्यर्थः। तथा भरतस्य मातुः कैकेय्या एक एव च भरतो जात इत्यर्थः। उभौ लक्ष्मणशत्रुघ्नौ सुमित्रातनयौ सोदरौ जातावित्यर्थः। मातृभेदेन पितृभेदे प्राप्ते सत्याह— **नृपस्येति** ।। एते अमरोत्तमाश्चत्वारः सुताः नृपस्य दशरथस्य सुता इत्यर्थः। अनेन कौसल्यकादितिसृणां दशरथभार्यात्वं इत्युक्तं भवति ।। ७९ ।।

**जना**— सामान्यतश्चतुर्णामुत्पत्तिमुक्त्वा मातृविवेकमाह— **कौसल्यकापुत्रक इति** ।। असौ उरुक्रमः रामः एकः कौसल्यापुत्रः। तथा भरतस्य मातुः कैकेय्या एको भरत इति । सुमित्रातनयौ उभौ लक्ष्मणशत्रुघ्नौ सुतौ । मातृविवेक एषामुक्तः पितर्यपि कश्चन विशेषः किमस्तीत्यतः नेत्याह— **नृपस्येति** ।। एते अमरोत्तमाः देवोत्तमाः नृपस्य चत्वारः सुताः ।। ७९ ।।

**ताम्र**— ......[१] [२]'अनन्तोऽनन्तपर्यङ्कः परिचर्यार्थमीशितुः ।
सर्पभेऽजनि सौमित्रिः कुलीरेऽभ्युदिते रवौ ।।'

इति लक्ष्मणस्याश्लेषायाः।

[३]'चक्रायुधस्य यच्चक्रं दैत्यचक्रविदारणम् ।
तत्कामरूपं कैकेय्यां पुष्ये पुत्रत्वमाययौ ।।'

इति भरतस्य पुष्यजनिरुच्यते । अतः भरतानन्तर्यमेव लक्ष्मणस्य वाच्यम् । कथं ततः पूर्वमुत्पत्तिरिति चेत् चैत्रमास एव पुनर्वसुपुष्याश्लेषानक्षत्रेषु न ते क्रमेण जाताः। किन्तु चैत्रे पुनर्वसौ रामः। आषाढे आश्लेषायां लक्ष्मणः। तदनन्तरं मासान्तरे पुष्ये भरत इति सङ्ग्रहरामायणवाक्यार्थः । अतो लक्ष्मणज्यैष्ठ्यमविरुद्धम्। अत एव 'कुलीरेऽभ्युदिते रवौ' इत्युक्तम् । रवौ कुलीरे कर्कटकराशावभ्युदिते सति आषाढमासे इति हि तदर्थः। ननु कर्कटलग्ने सूर्योदयसमये उत्पन्न इत्यर्थः किं न स्यादिति वाच्यम्। मेषमासे सूर्योदयकाले कर्कटकलग्नाभावात् । अतः कर्कटकराशिं सूर्ये प्राप्ते इत्येवार्थः। उक्तं च टिप्पणे 'रवौ कर्कटकराशावभ्युदिते सति आषाढमासे हि तदर्थः' इति ।। ७९ ।।

**सङ्कर्षणाद्यैस्त्रिभिरेव रूपै-**
**राविष्ट आसीत् त्रिषु तेषु विष्णुः ।**
**[४]इन्द्रोऽङ्गदे चैव ततोऽङ्गदो हि**
**बली नितान्तं स बभूव शश्वत् ।। ८० ।।**

**व्यास**— शेषाद्या लक्ष्मणाद्या जाता इत्युक्तिश्चतुर्मूर्तिभिः भगवान् रामादिजात इत्युक्त्या विरुद्ध इत्यत आह— **सङ्कर्षणाद्यैरिति** ।। अङ्गदस्येन्द्रावतारोत्वोक्तिं घटयन् आह— **इन्द्र इति** ।। ८० ।।

---

१. 'भरतस्य मातुः पुत्र इति शेषः ।। ८० ।।' इति हो. पुस्तके अधिकः पाठः । २. सं.रा. ३-३२, बालकाण्डे । ३. सं.रा. ३-३३, बालकाण्डे । ४. 'रामावतारे योऽङ्गदो वालिपुत्र इन्द्राविष्टो रामभक्तो महात्मा ।' ग.पु-उ.काण्डे-३१ ।

**सङ्क**— ननु श्रीविष्णुर्वासुदेवमूर्तिः रामलक्ष्मणादिचतुर्धावतीर्ण इति पुराणेतिहासप्रसिद्धेर्लक्ष्मणादीनां शेषावतारत्वं विरुद्धमित्यत आह— **सङ्कर्षणाद्यैरिति** ।। श्रीविष्णुः त्रिष्वाविष्ट एतेषु अत एव स्वयं श्रीवासुदेव इत्यवसीयते । अन्ये श्रीविष्णोर्विशेषावेशिनस्तदवतारा अतो न विरोधः। यथा विविदस्येन्द्रावेशतो वैशिष्ट्यं तद्वदङ्गदे इन्द्रावेशतो वैशिष्ट्यं सिंहावलोकनन्यायेनाह— **इन्द्र इति** ।। आविष्ट आसीदिति शेषः ।। ८० ।।

**वरद**— ननु लक्ष्मणादीनां त्रयाणां सङ्कर्षणादिमूर्तित्रयावतारत्वमुक्तं पुराणे तत्कथं घटत इत्यत आह— **सङ्कर्षणाद्यैरिति** ।। शेषकामानिरुद्धेषु मूलरूपेषु यथाक्रमं सङ्कर्षणप्रद्युम्नानिरुद्धानां अन्तर्यामिरूपत्वेन तदवतारेष्वपि लक्ष्मणादिषु तद्रूपविशेषसन्निधानसद्भावात् पुराणेषु तदपेक्षया तदवतारत्वोक्तिरिति भावः। एवमिन्द्रावेशस्य अङ्गदेऽपि विद्यमानत्वात् स्वसमानादपि सुग्रीवात् बलाधिकत्वं ज्ञातव्यमित्याह— **इन्द्र इति** ।। न केवलं विविदे इन्द्र आविष्टः किन्तु अङ्गदे चेत्यर्थः। हि यस्मात्तत इति सम्बन्धः ।। ८० ।।

**जना**— चतुर्मूर्तिर्हरिरेव जात इति ।

[1]"दुष्टानां निग्रहार्थाय चतुर्मूर्तिर्जनार्दनः।
जातो रघुकुले राजन् पुत्रो दशरथस्य तु ।।
अंशेन वासुदेवस्य जातो रामो महायशाः।
सङ्कर्षणस्य चांशेन लक्ष्मणः परवीरहा ।।
प्रद्युम्नस्य तथांशेण भरतो धर्मवत्सलः।
अनिरुद्धस्य चांशेन शत्रुघ्नस्तु महाबलः।।'

इत्यनेन चतुर्मूर्तिर्हरिः रामादिर्जात इति विष्णुधर्मोत्तरोक्तेरभिप्रायमाह— **सङ्कर्षणेति** ।। तेषु लक्ष्मणभरतशत्रुघ्नेषु आवेशं आदाय तदुक्तिर्घटते इति भावः। आवेशप्रसङ्गादनुक्तं आवेशं आह— **इन्द्र इति** ।। इन्द्र अङ्गदे आविष्टः ततः इन्द्रावेशात् सः अङ्गदः शश्वन्नितान्तं बली बभूव ।। ८० ।।

**ताम्र**— ननु गुणादित्रयाणां सङ्कर्षणादिमूर्तित्रयावतारत्वमुक्तं पुराणे तत्कथं घटते इत्यत आह— **सङ्कर्षणाद्यैरिति** ।। शेषकामानिरुद्धमूलरूपेषु यथाक्रमं सङ्कर्षणप्रद्युम्नानिरुद्धानां अन्तर्यामिरूपत्वेन तदवतारेष्वपि लक्ष्मणादिषु तद्रूपविशेषसन्निधानसद्भावात् पुराणे तदवतारत्वोक्तिरिति भावः। एवमिन्द्रावेशस्याङ्गदादेरपि भावात्स्वसमानादपि सुग्रीव[2].....वेकत्वं ज्ञातव्यमित्याह— **इन्द्रमिति** ।। न केवलं विविदे इन्द्र आविष्टः किन्त्वङ्गदे चेत्यर्थः। हि यस्मात् तत एवेति सम्बन्धः ।। ८० ।।

**येऽन्ये च भूपाः कृतवीर्यजाद्याः**
**बलाधिकाः सन्ति सहस्रशोऽपि ।**
**सर्वे हरेः सन्निधिभावयुक्ताः**
**धर्मप्रधानाश्च गुणप्रधानाः ।। ८१ ।।**

---
१. वि.ध.पु. १-२१२- २०-२२ । २. अन्तरितो भागः त्रुटितः ।

**व्यास**— प्रसङ्गाद्राज्ञां भगवदवतारत्वोक्तेर्गतिमाह— **येऽन्ये इति** ।। ८१ ।।

**वादि**— आवेशकथनप्रसङ्गात् हरेर्विशेषावेशिनः सर्वनिकयोक्त्या सनिमित्तमाह— **येऽन्य इति** ।। कृतवीर्यजः कार्तवीर्यः। सन्निधिभावयुक्ता हरेः सन्निधिना भावयुक्ता भक्तियुक्ताः। सन्निधिज्ञापनाय हरेर्भक्तिरेव मुख्यं लिङ्गमिति सूचनाय भक्तेः सन्निधिना सहोक्तिः ।। ८१ ।।

**अभिनव**— येऽन्ये इति श्लोके हरेः सन्निधिभावयुक्ताः इत्यस्य हरिसन्निधिभक्तिभ्यां युक्ता इत्यर्थः । एतेन भावशब्दो व्यर्थ इति दूषणं परास्तम् । अन्यत्राविद्यमानं हरिसन्निधानं कार्तवीर्यादिषु कुत इत्याशङ्कापरिहारार्थं हरिभक्तियुक्तं वक्तुं भावशब्दः प्रयुक्तः इत्यभ्युपगमात् ।। ८१ ।।

**इति श्रीसत्यनाथतीर्थपूज्यपादशिष्येण श्रीसत्याभिनवयतिना कृतायां**
**श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां तृतीयोऽध्यायः**

**सङ्क**— ननु लक्ष्मणादीनां यथा विष्णोर्विशेषावेशतो विष्ण्ववतारत्वोक्तिरित्युक्तं तत्कथं तर्हि कार्तवीर्यार्जुनादिरूपेषु विष्ण्ववतारत्वोक्तिरित्यत आह— **येऽन्ये चेति** ।। ८१ ।।

**वरद**— एवं सर्वत्रापि स्वरूपापेक्षया यत्र बलाधिक्यं प्रतीयते तत्र सर्वत्र विष्णुसान्निध्यप्रयुक्तमेव तद्बलाधिक्यमाह— **य इति** ।। कृतवीर्यजः कार्तवीर्यार्जुनः आद्यो येषां भरतादीनां ते तथा । सन्निधेर्भावः सान्निध्यम् । तेन युक्ता इति हेतुगर्भविशेषणम् । न केवलं बलाधिक्यं ज्ञातव्यं किं तर्हि अन्येऽपि गुणास्तत एव ज्ञातव्या इत्याह— **धर्मेति** ।। धर्मप्रधाना धर्माधिका एवं गुणाधिकाश्चेत्यर्थः ।। ८१ ।।

**जना**— आवेशप्रसङ्गात् एकोक्त्या विशेषावेशिन आह— **य इति** ।। येऽन्ये सहस्रशः बलाधिकाः धर्मप्रधानाः गुणप्रधानाः कृतवीर्यजाद्याः सहस्रार्जुनाद्याः सन्ति । ते सर्वे हरेः सन्निधिभावः सन्निधानं तेन युक्ताः ।। ८१ ।।

**ताम्र**— सानिध्यम् । गुणाः प्रधानाः ज्ञानभक्त्यादिगुणप्रधानाः ।। ८१ ।।[1]

**स्वयं रमा सीरत एव जाता**
**[2]सीतेति रामार्थमनूपमा या ।**
**विदेहराजस्य हि यज्ञभूमौ**
**सुतेति तस्यैव ततस्तु साभूत् ।। ८२ ।।**

---

१. एवं सर्वत्रापि स्वरूपापेक्षया यत्र बलाधिक्यं प्रतीयते तत्र सर्वत्र विष्णुसान्निध्यप्रयुक्तमेव बलाधिक्यमित्याह **–य इति** ।। कृतवीर्यजः कार्तवीयार्जुनः आद्यो येषां भरतादीनां ते तथा सन्निधिभावः। सान्निध्यं तेन युक्त इति हेतुगर्भविशेषणम् । न केवलं बलाधिक्यं किन्त्वन्ये .... तत एव ज्ञातव्या इत्याह**–धर्मेति** ।। धर्मप्रधानाः धर्माधिकाः एव गुणाधिकाश्चेत्यर्थः ।। ८२ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते । २. त्वं हि नारायणः श्रीमान् सीता लक्ष्मीः सनातनी । प.पु/उ.का/३४२/३३७ ।। 'सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा । राज्ञो हलमुखोत्सृष्टा पुनरप्युत्थिता सती ।' वा.रा,उ.काण्डे-१७-३९. ।

**वादि—** रामस्य जन्मोक्त्वा तदविनाभूतलक्ष्म्या अपि जन्म सनिमित्तमाह— **स्वयं रमेति** ।। स्वयं स्वतन्त्रेण परमात्मना स्वयं स्वयमेव सदा रमत इति स्वयंरमा एतादृशी श्रीः। अत एवाविनाभूतत्वादेव रामार्थं सीतेति जाता । अनूपमा, उत्कर्षेणोपमा न विद्यत उपमा यस्याः सा अनूपमा । स्त्रीत्वादिना किञ्चित्साम्यसद्भावेऽपि सौन्दर्यादिदिव्यगुणोत्कर्षस्य न क्वाप्युपमेति भावः ।। ८२ ।।

**सङ्क—** एवं तावत् श्रीविष्णुवाय्वादीनां देवानामवतारत्वोक्तेः प्रकारो दर्शितः अथेदानीं रमाया सीतात्वेनावतारमाह— **स्वयं रमेति** ।। ८२ ।।

**वरद—** तत्र रामावतारे रमाया अपि सीतात्वेनावतारप्रकारमाह— **स्वयमिति** ।। या अनुपमा असदृशी स्वयं साक्षात् रमैव सीरतो लाङ्गलाज्जाता अतो नाम्ना सीतेति जातेत्यर्थः। रामार्थं तत्सेवनार्थम् । ननु सीरतो जातत्वे कथं जानकीवैदेहीत्यादिनाम तस्या इत्यतस्तन्निमित्तमाह— **विदेहराजस्येति** ।। हि यस्माद्विदेहराजस्य जनकराजस्य यज्ञभूमौ यज्ञार्थं लाङ्गलेन भूशोधने क्रियमाणे तत्राविर्भूतत्वात् तत एव कारणात् तस्य जनकस्य सुतेति सा सीता जानकीति प्रसिद्धाभूदित्यर्थः ।। ८२ ।।

**जना—** रमावतारमाह— **स्वयमिति** ।। अनूपमा असदृशा या रमा सा विदेहराजस्य जनकस्य यज्ञभूमौ सीरत एव रामार्थं सीतेति जाता । ततः सा सीता तस्यैव जनकस्यैव सुतेति प्रसिद्धाभूत् ।। ८२ ।।

**ताम्र—** अनूपमा भगवद्भार्यतायोग्या । अनुरूपिणी रामावतारानन्तरं जातेत्यर्थः ।। ८२ ।।

**इत्यादिकल्पोत्थित एष सर्गो**
**मया समस्तागमनिर्णयात्मकः ।**
**सहानुसर्गः कथितोऽत्र पूर्वो**
**यो यो गुणैर्नित्यमसौ वरो हि ।। ८३ ।।**

**व्यास—** अध्यायार्थमुपसंहरन् यदादिसृष्टौ यो यः पूर्वभवः स स श्रेष्ठ इत्युक्तं तन्मुमुक्षुभिः सर्वथा ज्ञेयमिति भावेनाह— **आदिकल्पोत्थः** ।। आदिकल्पे भवः । अत्र पाद्मकल्पे ।। ८३ ।।

**वादि—** अनुसर्गेण सहितः सर्गः सहानुसर्गः। ब्रह्माण्डाद्बहिः परमात्मना कृतः सर्ग आदिसर्ग इत्युच्यते । ब्रह्माण्डान्तर्ब्रह्मणा कृतः सर्गोऽनुसर्ग इत्युच्यते । अत्र सर्गे यो यः पूर्वः असौ गुणैर्नित्यं वरो हीति योजना ।। ८३ ।।

**सङ्क—** ननु 'व्यूढश्चतुर्धा' इत्यादिना विरिञ्चादीनां यः सर्गोऽभिहितः स कदेत्यत आह— **इत्यादीति** ।। सहानुसर्गः मया कथितः 'उक्तक्रमात् पूर्वभवः' इत्यादिना यदुक्तं तदुपसंहरति— **अत्र पूर्व इति** ।। ८३ ।।

**वरद—** एवं 'व्यूढश्चतुर्धा' इत्यादिना सविस्तरमादिसर्गावान्तरसर्गावभिधायोपसंहरति भगवानाचार्यः— **इतीति** ।। इति उक्तप्रकारेण आदिकल्पोत्थित आदिकल्पे जात एषः उक्तत्वेन सन्निहित एव सहानुसर्गो

**व्यास**— प्रसङ्गाद्राज्ञां भगवदवतारत्वोक्तेर्गतिमाह— **येऽन्ये इति** ।। ८१ ।।

**वादि**— आवेशकथनप्रसङ्गात् हरेर्विशेषावेशिनः सर्वानिकयोक्त्या सनिमित्तमाह— **येऽन्य इति** ।। कृतवीर्यजः कार्तवीर्यः। सन्निधिभावयुक्ता हरेः सन्निधिना भावयुक्ता भक्तियुक्ताः। सन्निधिज्ञापनाय हरेर्भक्तिरेव मुख्यं लिङ्गमिति सूचनाय भक्तेः सन्निधिना सहोक्तिः ।। ८१ ।।

**अभिनव**— येऽन्ये इति श्लोके हरेः सन्निधिभावयुक्ताः इत्यस्य हरिसन्निधिभक्तिभ्यां युक्ता इत्यर्थः । एतेन भावशब्दो व्यर्थ इति दूषणं परास्तम् । अन्यत्राविद्यमानं हरिसन्निधानं कार्तवीर्यादिषु कुत इत्याशङ्कापरिहारार्थं हरिभक्तियुक्तं वक्तुं भावशब्दः प्रयुक्तः इत्यभ्युपगमात् ।। ८१ ।।

**इति श्रीसत्यनाथतीर्थपूज्यपादशिष्येण श्रीसत्याभिनवयतिना कृतायां**
**श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां तृतीयोऽध्यायः**

**सङ्क**— ननु लक्ष्मणादीनां यथा विष्णोर्विशेषावेशतो विष्ण्ववतारत्वोक्तिरित्युक्तं तत्कथं तर्हि कार्तवीर्यार्जुनादिरूपेषु विष्ण्ववतारत्वोक्तिरित्यत आह— **येऽन्ये चेति** ।। ८१ ।।

**वरद**— एवं सर्वत्रापि स्वरूपापेक्षया यत्र बलाधिक्यं प्रतीयते तत्र सर्वत्र विष्णुसान्निध्यप्रयुक्तमेव तद्बलाधिक्यमाह— **य इति** ।। कृतवीर्यजः कार्तवीर्यार्जुनः आद्यो येषां भरतादीनां ते तथा । सन्निधेर्भावः सान्निध्यम् । तेन युक्ता इति हेतुगर्भविशेषणम् । न केवलं बलाधिक्यं ज्ञातव्यं किं तर्हि अन्येऽपि गुणास्तत एव ज्ञातव्या इत्याह— **धर्मेति** ।। धर्मप्रधाना धर्माधिका एवं गुणाधिकाश्चेत्यर्थः ।। ८१ ।।

**जना**— आवेशप्रसङ्गात् एकोक्त्या विशेषावेशिन आह— **य इति** ।। येऽन्ये सहस्रशः बलाधिकाः धर्मप्रधानाः गुणप्रधानाः कृतवीर्यजाद्याः सहस्रार्जुनाद्याः सन्ति । ते सर्वे हरेः सन्निधिभावः सन्निधानं तेन युक्ताः ।। ८१ ।।

**ताप्र**— सानिध्यम् । गुणाः प्रधानाः ज्ञानभक्त्यादिगुणप्रधानाः ।। ८१ ।।[1]

**स्वयं रमा सीरत एव जाता**
**[2]सीतेति रामार्थमनूपमा या ।**
**विदेहराजस्य हि यज्ञभूमौ**
**सुतेति तस्यैव ततस्तु साभूत् ।। ८२ ।।**

---

१. एवं सर्वत्रापि स्वरूपापेक्षया यत्र बलाधिक्यं प्रतीयते तत्र सर्वत्र विष्णुसान्निध्यप्रयुक्तमेव बलाधिक्यमित्याह –**य इति** ।। कृतवीर्यजः कार्तवीर्यार्जुनः आद्यो येषां भरतादीनां ते तथा सन्निधिभावः। सान्निध्यं तेन युक्त इति हेतुगर्भविशेषणम् । न केवलं बलाधिक्यं किन्त्वन्ये .... तत एव ज्ञातव्या इत्याह–**धर्मेति** ।। धर्मप्रधानाः धर्माधिकाः एव गुणाधिकाश्चेत्यर्थः ।। ८२ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते । २. त्वं हि नारायणः श्रीमान् सीता लक्ष्मीः सनातनी । प.पु/उ.का/३४२/३३७ ।। 'सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा । राज्ञो हलमुखोत्सृष्टा पुनरप्युत्थिता सती ।' वा.रा,उ.काण्डे-१७-३९. ।

**वादि**— रामस्य जन्मोक्त्वा तदविनाभूतलक्ष्म्या अपि जन्म सनिमित्तमाह— **स्वयं रमेति** ।। स्वयं स्वतन्त्रेण परमात्मना स्वयं स्वयमेव सदा रमत इति स्वयंरमा एतादृशी श्रीः। अत एवाविनाभूतत्वादेव रामार्थं सीतेति जाता । अनूपमा, उत्कर्षेणोपमा न विद्यत उपमा यस्याः सा अनूपमा । स्त्रीत्वादिना किञ्चित्साम्यसद्भावेऽपि सौन्दर्यादिदिव्यगुणोत्कर्षस्य न क्वाप्युपमेति भावः ।। ८२ ।।

**सङ्क**— एवं तावत् श्रीविष्णुवाय्वादीनां देवानामवतारत्वोक्तेः प्रकारो दर्शितः अथेदानीं रमाया सीतात्वेनावतारमाह— **स्वयं रमेति** ।। ८२ ।।

**वरद**— तत्र रामावतारे रमाया अपि सीतात्वेनावतारप्रकारमाह— **स्वयमिति** ।। या अनुपमा असदृशी स्वयं साक्षात् रमैव सीरतो लाङ्गलाज्जाता अतो नाम्ना सीतेति जातेत्यर्थः। रामार्थं तत्सेवनार्थम् । ननु सीरतो जातत्वे कथं जानकीवैदेहीत्यादिनाम तस्या इत्यतस्तन्निमित्तमाह— **विदेहराजस्येति** ।। हि यस्माद्विदेहराजस्य जनकराजस्य यज्ञभूमौ यज्ञार्थं लाङ्गलेन भूशोधने क्रियमाणे तत्राविर्भूतत्वात् तत एव कारणात् तस्य जनकस्य सुतेति सा सीता जानकीति प्रसिद्धाभूदित्यर्थः ।। ८२ ।।

**जना**— रमावतारमाह— **स्वयमिति** ।। अनूपमा असदृशा या रमा सा विदेहराजस्य जनकस्य यज्ञभूमौ सीरत एव रामार्थं सीतेति जाता । ततः सा सीता तस्यैव जनकस्यैव सुतेति प्रसिद्धाभूत् ।। ८२ ।।

**ताम्र**— अनूपमा भगवद्भार्यतायोग्या । अनुरूपिणी रामावतारानन्तरं जातेत्यर्थः ।। ८२ ।।

**इत्यादिकल्पोत्थित एष सर्गो**
**मया समस्तागमनिर्णयात्मकः ।**
**सहानुसर्गः कथितोऽत्र पूर्वो**
**यो यो गुणैर्नित्यमसौ वरो हि ।। ८३ ।।**

**व्यास**— अध्यायार्थमुपसंहरन् यदादिसृष्टौ यो यः पूर्वभवः स स श्रेष्ठ इत्युक्तं तन्मुमुक्षुभिः सर्वथा ज्ञेयमिति भावेनाह— **आदिकल्पोत्थः** ।। आदिकल्पे भवः । अत्र पाद्मकल्पे ।। ८३ ।।

**वादि**— अनुसर्गेण सहितः सर्गः सहानुसर्गः। ब्रह्माण्डाद्बहिः परमात्मना कृतः सर्ग आदिसर्ग इत्युच्यते । ब्रह्माण्डान्तर्ब्रह्मणा कृतः सर्गोऽनुसर्ग इत्युच्यते । अत्र सर्गे यो यः पूर्वः असौ गुणैर्नित्यं वरो हीति योजना ।। ८३ ।।

**सङ्क**— ननु 'व्यूढश्चतुर्धा' इत्यादिना विरिञ्चादीनां यः सर्गोऽभिहितः स कदेत्यत आह— **इत्यादीति** ।। सहानुसर्गः मया कथितः 'उक्तक्रमात् पूर्वभवः' इत्यादिना यदुक्तं तदुपसंहरति— **अत्र पूर्व इति** ।। ८३ ।।

**वरद**— एवं 'व्यूढश्चतुर्धा' इत्यादिना सविस्तरमादिसर्गावान्तरसर्गावभिधायोपसंहरति भगवानाचार्यः— **इतीति** ।। इति उक्तप्रकारेण आदिकल्पोत्थित आदिकल्पे जात एषः उक्तत्वेन सन्निहित एव सहानुसर्गो

अवान्तरसर्गसहितो मया कथित इत्यर्थः। किमर्थं कथित इत्यत उक्तम्— **समस्तेति** ।। सर्गानुसर्गवर्णनव्याजेन समस्तागमनिर्णयः कृत इति भावः। कथं तेन निर्णय इत्यतो लेशेन दर्शयति— **अत्रेति** ।। अत्रादिसर्गे यो यः पूर्वः पूर्वं समुत्पन्नः स सर्वगुणैर्ज्ञानानन्दादिभिर्वरः उत्तमो हि इत्यर्थः ।। ८३ ।।

**जना**— उपसंहारव्याजेन इयं सृष्टिः तारतम्यज्ञापिकेत्याह— **इत्यादीति** ।। आदिकल्पे उत्थितः जातः समस्तागमानां निर्णयेन निर्णयहेतुना निर्णयकरणार्थमिति भावः। निर्णयात्मक इति क्वचित् । तत्र न चैकेन छन्दोभङ्गः निर्णयात्मकः निर्णयजनकः। सर्गस्तत्त्वसर्गः ब्रह्माण्डान्तर्गतानुसर्गेणाण्डान्तःसृष्ट्या सहितः मया इत्येवं कथितः अत्र तत्त्वसृष्टिपाद्यसृष्ट्योः यः पूर्वः पूर्वोत्पन्नः असावसौ गुणैः नित्यं वरो हि । अण्डान्तःसर्गोऽनुसर्ग इत्यत्र

"[1]महदाद्यण्डपर्यन्तः सर्गोऽण्डे ब्रह्मणो हि यः।
अनुसर्ग इति प्रोक्तः.....................।।' इति वचनं चात्र मानम् ।। ८३ ।।

**ताम्र**— आदिकल्पो नामास्मिन् प्रथमो दिनकल्पः। समस्तागमनिर्णयात्मकः समस्तागमानां उपक्रमो-पसंहारेणावगतस्वरूप इत्यर्थः। सर्गानुसर्गशब्दार्थस्तु

'महदाद्यण्डपर्यन्तः सर्गोऽण्डे ब्रह्मणस्तु यः।
अनुसर्ग इति प्रोक्त.........................।।'

इति भागवततात्पर्यनिर्णयतोऽवगन्तव्यम्। अत्रानुसर्गे च पूर्वमुत्पन्नः ।। ८३ ।।[2]

**पाश्चात्यकल्पेष्वपि सर्गभेदाः**
**श्रुतौ पुराणेष्वपि चान्यथोक्ताः।**
**नोत्कर्षहेतुः प्रथमत्वमेषु**
**विशेषवाक्यैरवगम्यमेतत् ।। ८४ ।।**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णये तृतीयोऽध्यायः

**व्यास**— यो यः पूर्वजातः असावसौ गुणैः वर इति विशेष्यं किमुच्यते पाश्चात्यकल्पेष्वेवमेवास्त्वित्यत आह— **पाश्चत्येति** ।। चोऽवधारणे ।। **अन्यथैवेति** ।। प्रथममुत्पन्नत्वं अत्र येषु कल्पेषु पाश्चात्यकल्पेषु प्रथमत्वं नोत्कर्षहेतुमिति कुतोऽवगतमित्यत उक्तम्— **विशेषेति** ।। ८४ ।।

इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां
सर्गानुसर्गप्रलयप्रादुर्भावनिर्णयो नाम तृतीयोऽध्यायः

---

१. भा. २-१०-३ । २. एवं 'व्यूढश्चतुर्धा' इत्यादिना सविस्तरमादिसर्गावन्तरावभिधायोपसंहरति भगवानाचार्यः-**इतीति** ।। इत्युक्तप्रकारेण आदिकल्पोत्थित एषः बुद्धिसन्निहितः उक्तत्वादनुसर्गसहितो मया कथित इत्यर्थः। किमर्थं कथित इत्यत उक्तम्- **समस्तेति** ।। सर्गानुसर्गवर्णनव्याजेन समस्तागमनिर्णयः कृतः इति भावः। कथं निर्णयः इत्यतो दर्शयति-**अत्रेति** ।। अत्रादिसृष्टौ यः पूर्वमुत्पन्नः सोऽसौ गुणैर्ज्ञानादिभिर्वरः उत्तमो हीत्यर्थः ।। ८४ ।। इति हो. पुस्तके अधिकः पाठः दृश्यते ।

**वादि—** पाश्चात्यकल्पेषु पाद्मकल्पात्पश्चिमकल्पा अपि पाश्चात्यकल्पा इत्युच्यन्ते । 'पश्चात्पुरस्तादभयं नो अस्तु' इति श्रुतेः। पाद्मकल्पात्पृष्ठतः पुरतश्च विद्यमानाः सर्वे कल्पाः पाश्चात्यकल्पा इत्युच्यन्ते ॥ ८४ ॥

**इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां**
**श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतश्रीमन्महाभारततात्पर्यनिर्णयटीकायां**
**भावप्रकाशिकायां तृतीयोऽध्यायः**

**सङ्क—** 'पूर्वस्तु पश्चात्' इत्यादिना यदुक्तं तदुपसंहरति— **पाश्चात्यकल्पेष्वित्यादिना** ॥ पाश्चात्यकल्पेष्व–वान्तरकल्पेष्वपि सर्गभेदाः श्रुतिपुराणेषु आदिकल्पस्थितवैपरीत्येनोक्ताः। एषु सर्गभेदेषु आदिसृष्टाववरस्य प्रथमत्वमुत्तमत्वहेतुर्नेत्यर्थः। नन्वेवं निर्णयः कथमवसीयत इत्यत आह— **विशेषेति** ॥ ८४ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां**
**श्रीसङ्कर्षणतीर्थभट्टारकविरचितायां शुभप्रकाशिकायां तृतीयोऽध्यायः**

**वरद—** अत्रेत्यस्य व्यावर्त्यमाह— **पाश्चात्येति** ॥ यद्यपि पाश्चात्यकल्पेषु वाराहपाद्मकल्पेषु सर्गभेदाः विचित्रसर्गाः पुराणेष्वप्युक्ताः सन्ति तथापि ते अन्यथा आदिकल्पापेक्षया व्यत्यासेन कृताः सन्ति अतस्तेष्ववान्तरसर्गेषु प्रथमत्वं प्रथमोत्पन्नत्वं नोत्कर्षहेतुः। गुणाधिक्यज्ञापकं न भवति। यथा सनकादीनां रुद्रात्प्रथमोत्पन्नत्व–मवान्तरसर्गेऽस्ति न तस्मादुत्कर्षज्ञापकं इत्यादि द्रष्टव्यम्। नैवमादिसर्गे व्यत्यास इति भावः। ननु कथमेतज्ज्ञातव्य–मित्यत आह— **विशेषेति** ॥ एतदुत्कर्षज्ञापकं प्राथम्यं विशेषवाक्यैरवगम्यमवगन्तव्यमित्यर्थः। सर्गभेदप्रतिपादकैः प्रमाणविशेषैरादिसर्गे प्राथम्यमुत्कर्षज्ञापकं न त्ववान्तरसर्गे प्राथम्यमिति विशेषो ज्ञातव्य इति भावः। इत्यशेषमतिमङ्गलम् ॥ ८४ ॥

इति श्रीमद्भारततात्पर्यनिर्णयाध्याय एव हि ।
तृतीयो व्याकृतस्तावत् प्रीत्यै माधवमध्वयोः ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां**
**वरदराजाचार्यविरचितायां मन्दसुबोधिन्यां तृतीयोऽध्यायः**

**जना—** 'पूर्वश्च पश्चात्' इत्यादिना यदुक्तं तदप्युपसंहरति— **पाश्चात्येति** ॥ पाश्चात्यकल्पेषु पाद्मकल्पा–तिरिक्तावान्तरकल्पेषु। श्रुतौ श्रुतिपुराणेष्वपि सर्गभेदाः। अन्यथा आदिकल्पोदितत्रिसर्गवैपरीत्येन उक्ताः कथिताः। एषु पाश्चात्यकल्पेषु प्रथमत्वं आदौ जननमुत्कर्षहेतुरुत्तमत्वकारणम्। नन्वेवं चेन्निर्णयः कथमित्यत आह— **विशेषेति** ॥ विशेषवाक्यैः विशेषप्रमाणैः। एतत्प्रमेयं तारतम्यादि। अवगम्यत ज्ञायते ॥ ८४ ॥

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधा–
त्पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिस्तस्य कृतौ सतां सुखकरोऽध्यायो तृतीयः शुभः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥

**इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां**
**जनार्दनभट्टविरचितायां तृतीयोऽध्यायः**

**ताम्र—** प्रथमत्वं प्रथमोत्पन्नत्वम्। एतत्। इदमादिकल्पसम्बन्धि इदं पाश्चात्यकल्पसम्बन्धीत्येतदिति अशेषमतिमङ्गलम् ॥ ८४ ॥[१]

**इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां तृतीयोऽध्यायः**

१. अत्रेत्यस्य व्यावर्त्यमाह–**पाश्चात्येति**।। यद्यपि पाश्चात्यकल्पेषु वाराहपाद्मकल्पेषु सर्गभेदाः विचित्राः सर्गाः श्रुतौ पुराणेष्वप्युक्ताः। तथाऽपि तेऽन्यथा आदिकल्पापेक्षया व्यत्यासेन कृताः। सन्तत्यः तेषु अवान्तरसर्गेषु प्रथमत्वं प्रथमत उत्पन्नत्वं नोत्कर्षहेतुः गुणाधिक्यज्ञापकं न भवति। यथा सनकादीनां रुद्रात् प्रथमोत्पन्नत्वं अवान्तरसर्गेऽस्ति। तस्मान्नोत्कर्षज्ञापकमित्यादि ज्ञातव्यम् । ननु कथमेतज्ज्ञातव्यमित्यत आह–**विशेषेति** । एतदुत्कर्षज्ञानं विशेषवाक्यैरवगन्तव्यमित्यर्थः। सर्गभेदप्रतिपादकैः प्रमाणविशेषैः आद्यसर्गप्राथम्यमुत्कर्षज्ञापकं न त्ववान्तरसर्गे प्राथम्यमित्यादिविशेषो ज्ञातव्य इत्यशेषमतिमङ्गळम् ॥ ८५॥

# ससङ्केतं आधारग्रन्थपरिचयः

| | | |
|---|---|---|
| अनु. | अनुव्याख्यानम् | Dvaita Vedanta Studies and Research Foundation, Edited by K.T.Pandurangi. 1988. |
| अणुभाष्यम् | अणुभाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| अंशावतरणम् | अंशावतरणम् | |
| आथर्व.भा | आथर्वणोपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| आदित्य.पु. वें.मा. | आदित्यपुराणान्तर्गतवेङ्कटेशमाहात्म्यम् | |
| आदि. | आदिपर्व (महाभारत) | Nirnayasagar press,mumbai.1906. |
| ई.भा. | ईशावास्योपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| उणादिसूत्रम् | उणादिसूत्रम् | |
| उ.भा. | उपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| ऋ.भा. | ऋग्भाष्यम् | Dvaita Vedanta Studies and Research Foundation Edited by K.T.Pandurangi. 1999. |
| ऋ.भा.टी. | ऋग्भाष्यटीका | Dvaita Vedanta Studies and Research Foundation Edited by K.T.Pandurangi. 1999. |
| ऋ.सं. | ऋग्वेदः | Chowkamba Sanskrit Prathishthana, New Delhi. |
| ऐ.उ. | ऐतरेयोपनिषत् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| ऐ.भा. | ऐतरेयोपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| का.उ. | काठकोपनिषत् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| का.भा. | काठकोनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| का.भा.वे. | काठकवेदेशीय | Nirnaya sagar press,mumbai.1905. |
| कूर्मपुराणम् | कूर्मपुराणम् | Nag Publications, New Delhi. |
| कृष्णलीलामृत-प्रकाशिका | कृष्णलीलामृतप्रकाशिका (यमकभारतटीका नरहरितीर्थविरचिता) | Edited by Guttal Hayagrivachar, Published by Satyadhyana Vidyapeeta,mumbai. |
| ग.पु. | गरुडपुराणम् | Nag Publications, New Delhi.1984. |

| | | |
|---|---|---|
| गी.ता. | गीतातात्पर्यनिर्णयः | Poorna Prajna Vidyapeeta, Bangalore.1987. |
| गी.भा. | गीताभाष्यम् | Poorna Prajna Vidyapeeta, Bangalore.1981. |
| तत्त्वप्रदीपः | तत्त्वप्रदीपः | |
| तत्त्वमञ्जरी | तत्त्वमञ्जरी (तत्त्वनिर्णयटीका नारायणपण्डिताचार्यविरचिता) | Poorna Prajna Samsodhanamandira, Bangalore. 2000. |
| त.प्रका. | तत्त्वप्रकाशिका | Published by Raghavendra Pratishtana. Karnataka Historical Research Society. |
| तं.सा. | तन्त्रसारसङ्ग्रहः | Shrimanmadhwa Radhdnta samvardhakasabha, ShriBhandarkereMath,Udupi.1977. |
| द्वा.स्तोत्रम् | द्वादशस्तोत्रम् | Akhila Bharatha Madhva Mahamandala, Udupi. |
| | नारदपुराणम् | Sri Venkateshwara Press, Mumbai. |
| न्यायसुधा श्रीमन्न्यायसुधा. | श्रीमन्न्यायसुधा | श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभा. उत्तरादिमठ. १९८२. |
| पञ्चरात्रम् | पञ्चरात्रम् | |
| प.पु. | पद्मपुराणम् | Nag Publications, New Delhi.1884. |
| पाद्मसंहिता | पाद्मसंहिता | Pancaratra Parishodhana Parishat, Chennai.1974 |
| ब्रह्मपुराणम् | ब्रह्मपुराणम् | Nag Publications, New Delhi.1985. |
| ब्रह्माण्ड.पु. ब्र.पु. | ब्रह्माण्डपुराणम् | Krishna Das Academy. Varanasi.1983. |
| ब्रह्मवैवर्तपुराणम् | ब्रह्मवैवर्तपुराणम् | Motilal Banarasi Das. New Delhi.2004. |
| ब्र.सू. | ब्रह्मसूत्राणि | |
| बृहद्ब्रह्मसंहिता | बृहद्ब्रह्मसंहिता | Anandashrama Mudranalaya, Poona. 1893. |
| बृ.उ. | बृहदारण्यकोपनिषत् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| बृ.भा. | बृहदारण्यकोपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| भ.गी. | भगवद्गीता | |
| भारद्वाजसंहिता | भारद्वाजसंहिता | Sri Venkateshwara Press, Mumbai. |
| भविष्योत्तरपुराणम् | भविष्योत्तरपुराणम् | Nag Publications, New Delhi.1984. |

| | | |
|---|---|---|
| भा. | भागवतम् | Poorna Prajna Samshodhana Mandiram Bangalore .2001. |
| भागवतम् (एकादशटिप्पणीसंवलितम्) | भागवतम् | Ed. Krishnashankar Shastri.1975. |
| भा.ता. | भागवततात्पर्यनिर्णय: | Akhila Bharatha Madhva Mahamandala, Udupi. 1956. |
| मत्स्यपुराणम् | मत्स्यपुराणम् | Meharchand Lachhmandas, New Delhi.1984. |
| मा.भा. | महाभारतम् | Nirnaya sagar press, mumbai.1906. |
| मा.उ. | माण्डूक्योपनिषत् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| मा.उ.भा. | माण्डूक्योपनिषद्भाष्यम् | Akhila Bharatha Madhva Mahamandala, Udupi.1969. |
| मा.पु. | मार्कण्डेयपुराणम् | Sri Venkateshwara Press, Mumbai. |
| मा.खं.टी | मायावादखण्डनटीका | |
| यतिप्रणवकल्प: | यतिप्रणवकल्प: | Akhila Bharatha Madhva Mahamandala, Udupi. |
| योगदीपिका | योगदीपिका | Satyadhyana Vidyapeetha, mumbai. |
| लक्ष्मीतन्त्र | लक्ष्मीतन्त्र | Adyar Library, Chennai.1975. |
| लिङ्गपुराणम् | लिङ्गपुराणम् | Motilal Banarasi Das, New Delhi. |
| वामनपुराणम् | वामनपुराणम् | Nag Publications, New Delhi. |
| वायुपुराणम् | वायुपुराणम् | Nag Publications, New Delhi. |
| वायुस्तुति: | वायुस्तुति: | |
| वायुपुराणम् | वायुपुराणम् | Nag Publications,New Delhi.1995 |
| वराह.व.पु. | वराहपुराणम् | Nag Publications,New Delhi. |
| वा.रा. | वाल्मीकिरामायणम् | Geeta Press, Gorakhpur. |
| वि.पु. | विष्णुपुराणम् | Nag Publications, New Delhi.1985 |
| वि.ध.पु. | विष्णुधर्मोत्तरपुराणम् | Nag Publications, New Delhi. |
| वि.त.नि. | विष्णुतत्त्वनिर्णय: | Akhila Bharatha Madhva Mahamandala, Udupi. |
| श्रीप्रश्नसंहिता | श्रीप्रश्नसंहिता | Kendriya Sanskrit Vidyapeeta, Tirupati. |
| ष.उ.टी. | षट्प्रश्नोपनिषद्भाष्यटीका | Poorna Prajna Samsodhanamandira 1997. |

| | | |
|---|---|---|
| सत्तर्कदीपावली | सत्तर्कदीपावली | श्रीमदानन्दतीर्थीयग्रन्थप्रकाशनम्, बेङ्गळूरु. |
| स्कन्दपुराणम् | स्कन्दपुराणम् | Nag Publications, New Delhi.1986. |
| सात्वतसंहिता | सात्वतसंहिता | |
| सूतसंहिता | सूतसंहिता | Anandashrama Mudranalaya, Poona.1893. |
| सू.भा. | ब्रह्मसूत्रभाष्यम् | |
| सन्न्यायरत्नावली | सन्न्यायरत्नावली | |
| सं.रा. | सङ्ग्रहरामायणम् | |
| ह.वं. | हरिवंशः | Nag Publications, New Delhi. |

## टिप्पणीकारोद्धृतग्रन्थाः

१. अनुव्याख्यानम् २. भागवततात्पर्यनिर्णयः ३. गीतातात्पर्यनिर्णयः ४. महाभारतम् ५. गीताभाष्यम् ६. सूत्रभाष्यम् ७. तत्त्वप्रदीपः ८. ऋग्भाष्यम् ९. ऋग्भाष्यटीका १०. श्रीमन्न्यायसुधा ११. उपनिषद्भाष्यम् १२.कृष्णलीलामृतप्रकाशिका (यमकभारतटीका) १३. सन्न्यायरत्नावली १४. तत्त्वमञ्जरी (तत्त्वनिर्णयटीका) १५. काठकवेदेशीय १६. यतिप्रणवकल्पः १७. मायावादखण्डनटीका १८. योगदीपिका १९. वायुस्तुतिः २०. सङ्ग्रहरामायणम् २१. विष्णुपुराणम् २२. वायुपुराणम् २३. गीता २४. विष्णुधर्मोत्तरपुराणम् २५. षट्प्रश्नोपनिषद्भाष्यटीका २६. ब्रह्माण्डपुराणम् २७. लिङ्गपुराणम् २८. कूर्मपुराणम् २९. अंशावतरणम् ३०. पद्मपुराणम् ३१. पञ्चरात्रम् ३२. सत्तर्कदीपावली ३३. तत्त्वप्रकाशिका

## टिप्पणीकारोदाहृतामुद्रितग्रन्थाः

१. कुम्भकोणमाहात्म्यम् २. न्यायरत्नावली (श्रीपद्मनाभतीर्थविरचिता तत्त्वनिर्णयटीका) ३. भावचन्द्रिका (श्रीनिवासाचार्यविरचिता तात्पर्यनिर्णयटिप्पणी) ४. वामनपुराणान्तर्गतश्रीमुष्णमाहात्म्यम् ५. जयद्रथयामलम् (ग्रन्थोऽयं तन्त्रशास्त्रसम्बन्धी । २४०००श्लोकात्मकस्यास्य मातृका नेपालदेशे समुपलब्धा इति न्यू. कैटलगस् केटगोरम् भाग-७, पुट १७८ इत्यत्र दृश्यते ।) ६. कावेरीमाहात्म्यम्

# श्लोकानुक्रमणिका

## अ



## आ



## इ

ಜೀವನ ಮುಕ್ತಿಗೆ ಸಾಧನ ಹರಿಭಕ್ತಿ. ಭಕ್ತಿಗೆ ಜ್ಞಾನ. ಜ್ಞಾನಕ್ಕೆ ನಿಷ್ಕಾಮಪುಣ್ಯ. ಜ್ಞಾನ ಮತ್ತು ನಿಷ್ಕಾಮ ಪುಣ್ಯಗಳಿಗೆ ಶಾಸ್ತ್ರದ ತಿಳಿವು. ಶಾಸ್ತ್ರದಲ್ಲಿ ಹಿರಿದಾದುದು ಶ್ರೀಮನ್ಮಹಾಭಾರತ ಮತ್ತು ಮೂಲರಾಮಾಯಣ.

ಅವುಗಳ ತಾತ್ಪರ್ಯದ ಅರಿವು ಭಗವತ್ಪಾದರ ಈ ಕೃತಿಯಿಂದ. ಶ್ರೀಮನ್ಮಹಾಭಾರತತಾತ್ಪರ್ಯನಿರ್ಣಯ ಪುರುಷಾರ್ಥಪ್ರದಾನದಲ್ಲಿ ಮಂತ್ರತುಲ್ಯ. ಅತಿಗಂಭೀರ ತತ್ತ್ವಜ್ಞಾನಕ್ಕೆ ಹಿರಿದಾದ ಸಾಧನ. ವೇದ, ಮಹಾಭಾರತ, ರಾಮಾಯಣ, ಪಂಚರಾತ್ರ ಹಾಗೂ ಸಕಲ ಪುರಾಣಗಳ ಮರ್ಮವನ್ನು ತಿಳಿಸಲು ಮಾನವರ ಕೈಗಿಟ್ಟ ದಿವ್ಯ ಕನ್ನಡಿ. ದೇವತೆಗಳೂ ತಲೆದೂಗಿ ಓಲೈಸುವ ಪಾವನ ಗ್ರಂಥವಿದು.

ಪ್ರತ್ಯಕ್ಷರದಲ್ಲೂ ಭಗವಂತನ ರೂಪಗಳನ್ನು ಹೊತ್ತ, ಪ್ರತಿ ಶಬ್ದದಲ್ಲೂ ನೂತನ ತತ್ತ್ವಗಳನ್ನು ಮಂಡಿಸುವ, ಪ್ರತಿ ವಾಕ್ಯದಲ್ಲೂ ನಿಗೂಢ ಕಥಾ, ನಿರ್ಣಯಗಳನ್ನು ಹೊರತರುವ, ಹೆಚ್ಚೇನು—ಇಡಿಯ ವಿಶ್ವವನ್ನೇ ಹಾಗೂ ವಿಶ್ವನಾಥನನ್ನೇ ಹೊತ್ತ ಕಿರುಕೃತಿ, ಆದರೆ ಮೇರು ಕೃತಿ ಇದು. ಭಗವಾನ್ ವ್ಯಾಸರಿಗೆ ಅಚ್ಚುಮೆಚ್ಚಿನ ಕೃತಿ. ತನ್ ಮಮತೆಯ ಮಗನಿಂದ ಬರೆಸಿದ ಕೃತಿ.

ಇದನ್ನೋದಿದವನ ಹೃದಯದಲ್ಲಿ ಶ್ರೀಮದ್ವಿಷ್ಣ್ವಂಘ್ರಿನಿಷ್ಠೆ ಮೂಡುವಲ್ಲಿ, ಜಾಗೃತವಾಗುವಲ್ಲಿ, ಅಚ್ಚಳಿಯದೆ ಉಳಿಯುವಲ್ಲಿ, ಆಗಸದ ಎತ್ತರಕ್ಕೆ ಬೆಳೆಯುವಲ್ಲಿ ಸಂದೇಹವಿಲ್ಲ.

ಶ್ರೀತತ್ತ್ವ, ಮುಖ್ಯಪ್ರಾಣ, ಸಕಲ ದೇವತೆಗಳು, ಎಲ್ಲ ಋಷಿಮುನಿಗಳ ಬಗೆಗಿರುವ ನಮ್ಮ ತಲೆಕೆಡಿಸುವ ಸಂಶಯ, ಭ್ರಾಂತಿಗಳು ಇದನ್ನಭ್ಯಸಿಸಿದಾಗ ಮಾಯವಾಗುವದು ನಿಶ್ಚಿತ. ಅತಿಸೂಕ್ಷ್ಮ ಧರ್ಮಗಳ, ಪರಮರಹಸ್ಯ ತತ್ತ್ವಗಳ ಕುರಿತಾಗಿರುವ ಮನದ ಸಂದೇಹ ಹೊಯ್ದಾಟಗಳನ್ನು ಇಲ್ಲವಾಗಿಸುವದು ಈ ಗ್ರಂಥದ ನಿರಂತರ ಚಿಂತನ.

ಮಾಹುಲಿಆಚಾರ್ಯಪಾದಪದ್ಮಾರಾಧಕ

ಬ್ರಹ್ಮಾತ್ಮದಾಸ ಪಂ. ವಿದ್ಯಾಸಿಂಹಾಚಾರ್ಯ ಮಾಹುಲಿ